# श्रीमद्भागवतमहापुराणम्

## 'गूढार्थदीपिनी' संस्कृतटीकायुतम्



सततचिन्तनवीतभयामया हरिदयाऽऽगतया सुधिया मया ।
इयमनन्तगले ग्रथिताऽर्पिताऽमुकुलिता स्रगिवात्र विराजताम् ॥

टीकाकारः
आचार्य श्रीराममूर्तिशास्त्री पौराणिकः

विद्याभवन प्राच्यविद्या ग्रन्थमाला—६६

# श्रीमद्भागवत-महापुराणम्

गूढार्थदीपिनीटीकासहितम्

## द्वितीय–भागः

[ दशमस्कन्धतो-द्वादशस्कन्ध–पर्यन्तः ]



टीकाकारः सम्पादकश्च

आचार्य पं० श्रीराममूर्तिशास्त्री पौराणिकः

लब्धावकाश-पुराणविभागाध्यक्षः

काशीस्थ गोयनका संस्कृत महाविद्यालयस्य



प्रकाशक :—

चौखम्बा विद्याभवन

वाराणसी २२१००१

प्रकाशक
चौखम्बा विद्याभवन
( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
चौक ( बनारस स्टेट बैंक भवन के पीछे )
पो० बा० नं० १०६९, वाराणसी २२१००१
दूरभाष : ३२०४०४

द्वितीय संस्करण १९९३
१-२ भाग सम्पूर्ण ५००-००

अन्य प्राप्तिस्थान
चौखम्बा सुरभारती प्रकाशन
के० ३७/११७, गोपालमन्दिर लेन
पो० बा० नं० ११२९, वाराणसी २२१००१
दूरभाष : ३३३४३१

*

चौखम्बा संस्कृत प्रतिष्ठान
३८ यू. ए., बंगलो रोड, जवाहरनगर
पो० बा० नं० २११३
दिल्ली ११०००७
दूरभाष : २३६३९१

मुद्रक
श्रीजी मुद्रणालय
वाराणसी

# प्रस्तावना

श्रीमद्भागवतस्य 'दशमस्कन्धोऽयं सर्वाधिकमहत्त्वपूर्णोऽस्ति भगवल्लीलाप्रधानत्वात्। ''अथ ते भगवल्लीला वर्णयाम्यनुपूर्वशः'' इत्युपक्रम्य ''लीलाकथारसनिषेवणमन्तरेण'' इत्युपसंहारवाक्येनैवमेव' निश्चीयते यत् लीलाप्रधानमेवेदं श्रीमद्भागवतमस्ति। 'लीलार्थं कुरुते सृष्टिमिति'' वचनेन ''लोकवत्तु लीला कैवल्यम्'' इति ब्रह्मसूत्रेणापीदमेव दृढ़ीक्रियते। प्रसङ्गात् पौराणिकमतेनेदं सूत्रं व्याख्यायते। तथाहि—भगवतो लीला लोकवत् भवति। लोका जना यथा लीलां कुर्वन्ति तथा भगवानपि। यथोक्तं दशमस्कन्धे—

हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथम्।
कृष्णसंघट्टिनः केचिदासन् रामस्य चापरे॥
आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः।
यत्रारोहन्ति जेतारो वहन्ति च पराजिताः॥ इति अ॰ १८।१९।२०

तु वैलक्षण्ये भिन्नोपक्रमे च। किन्तु भगवतो लीला लोकतो विलक्षणा भिन्ना च भवति। कुतः। कैवल्यं मोक्षदायिनी। इति पृथक् पदम्। लोकलीला च बन्धनभूता। कैवल्यमिति' मत्वर्थीयाच्प्रत्ययान्तेन लीलाया व्याधिकरणविशेषणम्। न चेदमर्थान्तरत्वाद्विरुद्धमाशंकनीयं शब्दशास्त्रे प्रकृतिप्रत्ययनिष्पन्नानां शब्दानामनन्तार्थबोधकत्वाभ्युपगमात्। अत एव भागवतटीकाकर्त्रा आचार्यश्रीवंशीधरशर्मणा जन्माद्यस्येति पद्यस्य व्याख्याशतकं कृतम्।

किञ्च व्यासस्यापरितोषकारणं वर्णयता देवर्षिनारदेनापि 'समाधिनाऽनुस्मर तद्विचेष्टितम्' इति पद्यांशेन लीलाया एव निर्देशः कृतः। दृश्यते चैतत् यथा लोके जनैः नदीतरणाय नौकाया आश्रयणं क्रियते एवं संसारसिन्धुमुत्तितीर्षोः पुंसोऽपि भगवल्लीलाश्रवणादन्यः प्लवो-नास्तीति सर्वसम्मतं ध्रुवं चैतत्। भागवतसमाप्तौ एतद्विषयकमेकं 'पद्यमायाति तत्र ध्यानं देयम्।

संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य।
लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद्विविधदुःखदवार्दितस्य॥

अतीवदुर्लभमिदं 'मानवजीवनम्। नानायोनिषु कर्मवशात् भ्रमन्नयं जीवः कथञ्चित् भगवत्कृपाबलेन मानुष्यं प्राप्नोति न स्वीयपुरुषार्थबलेन अतो नेदं विषयभोगार्थमपि तु तीव्रतमतपस्यया भगवत्प्रसन्नतासम्पादनपूर्वकं तत्सान्निध्यप्राप्त्यर्थम्। अन्याः कूकरसूकरादियो-

नय एव विषयभोगार्थं सन्त्येव इदमपि तथैव चेत् किमत्र वैशिष्टयं मानवीयशरीरस्य, "पश्वादिभिश्चाविशेषात्" इति तत्तुल्यत्वेन निर्देशात् ।

किञ्चेदं शरीरं तु साधनशब्देनोच्यर्ते न तथाविधमन्यच्छरीरमस्तीति । अतो ब्रह्मणा आत्मोद्धारार्थमेव विशेषरूपेणास्य निर्माणं कृतम् । नान्ययोनिभिरस्य तुलना भवितुं मर्हतीति निर्विवादम् । किं बहुना सृष्टिकर्ता ब्रह्मापि स्वोयमायाशक्त्या वृक्षान् सरीसृपपशून् खगदंशमत्स्यान् नानाविधजीवसमूहान् सृष्ट्वा तैस्तैरतुष्टहृदयः सन् ब्रह्मावलोकधिषणं मानवीयशरीर निर्माय मुदमवापेति श्रीमद्भागवते स्पष्टरूपेण प्रतिपादितम् । तत्र मानवशरीरस्य विशेषणं दत्तं "ब्रह्मावलोकधिषणमिति" । ब्रह्मणः अवलोकाय साक्षात्काराय धिषणा बुद्धिर्यस्मिस्तत् तथाभूतंमस्ति नान्यच्छरीरेषु तथाभूता धिषणाऽस्तीति ध्रुवमेतत् । अतः साधनद्वारा भगवत्प्राप्तिरेव मानवजीवनस्य चरमं लक्ष्यं फलं चास्ति ।

तत्र भगवत्प्राप्तये ज्ञानवैराग्यादीनि बहूनि साधनानि शास्त्रेषु वर्णितानि सन्ति किन्तु तानि सर्वाण्यपि अकिञ्चित्कराणि सन्ति भक्तितुलनायाम् । गीतायां स्वयं भगवता श्रीमुखेन प्रतिपादितम् "भक्त्या मामभिजानाति" माहात्म्ये सनत्कुमारेणापि "भक्त्या कृष्णः पुरः स्थित इत्युक्तम् । तत्र पुराणेषु नवविधा भक्तिर्वर्णिता, यथा प्राकृतो जनः प्रासादारोहणे क्रमेण निःश्रेण्या आश्रयं करोति मण्डूकप्लुत्या तु अधःपतनसंभावना जायते । अतः प्रथमं सर्वैः श्रवणभक्तिरेवाश्रयणीया उपयुक्ता च सा भवति अन्या कीर्तनाद्या भक्तयस्तु तत्साध्या एवेति ।

"श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्यापि श्रवणभक्तेरेव वैशिष्टयं दृढीकृतम् । एवं सति कस्य श्रवणमिति जिज्ञासायां लीलापरपर्यायभगवच्चरित्रस्यैव श्रवणमायाति । तत्र सामान्यतो भगवतो लीला त्रिविधा भवति । सर्गलीला, पोषणलीला, निरोधलीला चेति । "विश्वस्थित्युद्भवान्तार्थाः" इत्युक्तेः । ताश्च लीलाः पुराणेषु तत्तत्स्थाने नानाविधदृष्टान्तगर्भिता वर्णिताः सन्ति । सर्गनिरोधलीलयोरपेक्षया पोषणलीलाया एव सर्वाधिक महत्त्वमस्ति । भगवतो बालपौगण्डकिशोरावस्थासु कृतलीलानां पोषणलीलायामेव समावेशोऽस्ति । दशमस्कन्धस्तु एतादृशनानाविधमाधुर्यलीलानां मुख्यतयोद्गमस्थानमस्ति । तासां श्रवणेन योगादिना विनापि हठात् मनस आकर्षण भवति । स्वीयं चाञ्चल्यं मनः परित्यजति भगवद्रसानुभूति च प्रतिपदं लभते सांसारिकप्रपञ्चजालाच्च विरज्यते ।

अस्मिन्नेव स्कन्धे भूभारभूतानां दैत्यानां निरोधद्वारा मुक्तिप्रदानेन भगवतो दयालुता व्यक्ता भवति । विषदानार्थमागतायाः पूतनाया मातृगतिप्रदानेनादर्शरूपा भगवतो दयालुता नान्यत्र कुत्रापि देवतान्तरे दृष्टचरा । चीरहरणलीलारासलीलाकुब्जादिप्रसङ्गोपरि भगवन्तमा-

क्षिपन्ति कटाक्षयन्ति आधुनिकास्तद्रहस्यानभिज्ञाः पामरजनाः। किं बहुना विद्वांसोऽप्यत्र मुह्यन्ति तथ्यं ज्ञातुं निर्णेतु च न शक्नुवन्ति केवलं परस्परं विवदन्ते प्रलपन्ति च तेषां सर्वेषां कृतेऽस्मत्कृतसाप्ताहिककथायां "रासलीलारहस्ये" एतद्विषयकशंकानां युक्तियुक्तं सप्रमाणं समाधानं कृतम्। तत एव स्वसन्देहो निराकरणीयः। सन्तोषार्थं किञ्चिदत्रापि लिख्यते।

श्रीमद्भागवतस्य प्रसिद्धटीकाकर्त्रा आचार्यश्रीवंशीधरशर्मणा चीरहरणप्रसंगोपरि यत् लिखितं तन्मननीयम्। "ननु नग्नां नेक्षेत्परस्त्रियम्" इति स्मृतेर्भगवताऽपि अन्याय्यं कुतः कृतमिति चेत् छृणु नहि ताः परस्त्रियः ताभिर्भगवते समर्पितदेहत्वात् पूर्वावतारेषु तथैव भगवता प्रतिज्ञातत्वाच्च। एतद्गर्गसंहितानुसारेणेति द्रष्टव्यम्।

रासलीलाविषयेऽपि —

परस्परानुरोधेन कन्यायाश्च वरस्य च।
गान्धर्व इति संप्रोक्तो विवाहः सङ्गमे सति॥

इति स्मृते र्भगवति व्यभिचारदोषो नायाति परकीयासङ्गतेरेव व्यभिचारत्वात्। न हि ताः परस्त्रियः सर्वाः स्वीया एव गान्धर्वविवाहेन तासां परिणीतत्वात्। रासमण्डले या गोप्य आगतास्ताः काश्चन जनकपुरवासिन्यः कन्याः। काश्चन श्वेतद्वीपवासिन्यः। काश्चन दण्डकारण्यवासिनो मुनयश्च। यथोक्तम् —

पुरा महर्षयः सर्वे दण्डकारण्यवासिनः।
रामं दृष्ट्वा हरिं तत्र भोक्तुमैच्छन् सुविग्रहम्॥
ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले।
हरिं संप्राप्य कामेन ततो मुक्ता भवार्णवात्। इति॥
काश्चन गोप्यो हर्षोल्लासेन राधारोमोद्भवाः॥

सहचर्यस्तथा गोप्यो राधारोमोद्भवा नृप॥ (ग. स.) इत्थं प्रमाणपुञ्जे वर्तमाने सर्वाः स्वीया एव न कापि परकीया अतो भगवति न कोऽपि दोषलेशोपीति सर्वं समञ्जसम्।

केचिदाधुनिकव्यासास्तु गम्भीराध्ययनाभावात् समाधातुमशक्ता आध्यात्मिकरीत्या दोषं परिहर्तुं कथञ्चन प्रयतन्ते असम्बद्धं प्रलपन्ति च तत्तु सर्वथा प्रकरणविरुद्धमसङ्गतं चेति। तथा सति भगवतो लीला एव लुप्येरन् न चेदं भगवतोऽभिप्रेतमस्ति।

अत्र विषयेऽध्यापनसमये गुरुचरणैरेका स्वानुभूता आख्यायिका श्राविता तां यथातथं पाठकानां कृते सकलमविकलमुद्धरामि तत्र ध्यानं देयम्। अद्वैतवेदान्ते पूर्णनिष्ठावान्

कश्चन संन्यासी महात्मा काशीमधिवसन्ननवरतं वेदान्तशास्त्राण्यालोचयन् यथासमयं छात्रानध्यायन् जिज्ञासूनुपदिशन् श्रीविश्वनाथमाराधयन् स्वीयममूल्यजीवनं सफलयति स्म । स च सर्वदा मनसा पञ्चाक्षरं महामन्त्रं जपन् भगवतो विश्वनाथस्य ध्यानमग्नः सन्नास्ते स्म । चिरकालतपस्यया मन्त्रप्रभावाच्च शिवकृपया तस्य हृदये विष्णुभक्तिरङ्कुरिताऽभूत् । शिवप्रसादादेव विष्णौ भक्तिस्तत्प्रसादश्च जायते इति प्रचेतसामुपाख्यानेनानुभवनीयम् । रुद्रगीतोपदेशेनैव तेषां भगवत्प्राप्तिः सर्वार्थसिद्धिश्च जातेति चतुर्थस्कन्धोक्तं न विस्मरणीयम् ।

एकदा तस्य हृदि तीव्रा बृन्दावनजिगमिषा जाता स चाऽल्पीयसा कालेनैव सोत्साहं वृन्दावनं गतवान् । तत्रैकान्ते पर्णकुटीं निर्माय अष्टाक्षरमन्त्रेण विष्णोराराधनां कर्तुं प्रवृत्तः ।

मन्त्रप्रभावात् लीलाभूमिवृन्दावनसंयोगाच्च तस्य श्रीमद्भागवते विशिष्टा रुचिर्जाता । अनवरतं तस्यैवाध्ययनं चिन्तनं मननं कुर्वन्नानन्दनिमग्नोऽभूत् । न्यायवेदान्तादिसकलशास्त्रेषु पारङ्गतत्वात् प्रौढपाण्डित्यात् प्रवचनकार्ये च कुशलत्वाच्च विद्वज्जनप्रेरणया श्रीमद्भागवते टीकां कर्तुं प्रवृत्तोऽभूत् ।

एकदा महात्मनां विदुषां च पञ्चशतीसमाजे प्रवचनं कुर्वता तेन स्वरचितटीकाया प्रथमस्कन्धीयमेकं पद्यं श्रावितम् तस्य तृतीयचरणमित्थम् ।

"नन्दगोपकुमाराय" इति स्वामिना अस्य पद्यस्य यत् व्याख्यानं कृतं तत्र ध्यानं देयम् । नन्दयतीति नन्दः गां पातीति गोपः कु कुत्सितं कामं मारयतीति कुमारः इति । वृन्दावनीयभूमौ कणकणं प्रति प्रतीयमानो भगवानिदं व्याख्यानमसहमानो लीलाशक्त्या धूलिधूसरितः पञ्चवर्षीयो दिव्यबालको भूत्वा त्वरया तत्रागत्य तद्विशालसमाजं विदार्य स्वामिनः समीपमगमत् ।

तत्र स दिव्यबालकः स्वामिनः स्कन्धयोरुपरि हस्तौ निधाय किञ्चित्कोपावेशेनेदमूचे । रे स्वामिन् । अस्य पद्यस्यायमेवार्थो भवति किम् । कीदृशस्ते सिद्धान्तस्तमपि त्वं नावलोकयसि प्रत्युत अपलापयसि । अद्वैतवेदान्ते तु यदा एकमेव तत्त्वमस्ति तदा कः कमानन्दयति कः कं गोपायति कः कं मारयतीति तत्र कर्तृकर्मभावः कथं युज्यते ? उच्चतां युक्तिश्चेत् दीयताम् । निराकार ब्राह्मणः साकारतासम्पादनार्थं भक्तावलम्बनार्थं च समये समये चाहमवतीर्णो भवामि । त्वं तु मदीयं नामैव लोपयसि । नाहं नन्दकुमारः किम् । स्थिरबुद्धया विचार्यताम् । "संभवामि युगे युगे" इति विस्मृतं किम् ? मदीयेयं लीलाभूमिः । इतः परं नेदृग्विधं व्याख्यानमत्र कर्तव्यम् इत्येवं निर्भयं भर्त्सनां कृत्वा स दिव्यबालकः सर्वेषां पश्यतां सतां तत्रैवान्तर्हितोऽभूत् । एतन्निरीक्ष्य तत्रत्या सा विशालसभा आश्चर्यचकिताऽभूत् ।

स्वामी तु बालस्य शब्दावलिं श्रुत्वा तारस्वरेण रुरोद । उत्थायोत्थाय भूमौ शिरो निधाय मुहुर्मुहुः बालं प्राणमत् प्रालपत् व्यलपच्च क्षमायाचनां चाकरोत् । नायं बालः साक्षात् भगवानेवा-

गत्य मां बोधितवान् तथाप्यहं तं न ज्ञातवान् धिङ् मामित्येवमात्मानमाक्रोशन् अहो भगवान् कुपितो जातः। किं किरोमि क्व गच्छामीति विह्वलः सन्ननवरतं दिव्यबालकमेव चिन्तयन् जीवनं यापयामासेति टीकातो निवृत्तश्च। इत्थमल्सीयसा कालेनैव स सशीरम दृश्योऽभूत्।

गुरुचरणैः श्राविता परम्पराप्राप्ता सत्यघटनेयम्। तत एतन्निर्णीयते यत् भगवल्लीला-नामाध्यमिकव्याख्यानं सर्वथा प्रकरणविरुद्धमनुचितं भगवतोऽनभिप्रेतं च। आधुनिकव्यासैर्भग-वल्लीलाविलोपकरमेतादृग् व्याख्यानं कथमपि न कर्तव्यमिति।

अन्ते पुनरपि "श्रीकृष्णमाप नियतं दशमस्य पाठात्" इति माहात्म्यवचनेनेदं स्मर्यतेऽनु-भूयते च यत् दशमस्कन्धस्य लीलाप्रधानत्वात्सर्वाधिकमहत्त्वं वर्णितमस्ति। अतः सर्वपाठा-करणेऽसमर्थैर्यथासमयं, यथासाध्यं, यथाश्रद्धं प्रतिदिनमवश्यमेवास्य पाठः कर्तव्यो लीलानुरागिभि-र्भगवत्कृपापीयूषपिपासुभिः परमभागवतैः सुजनैः स्वजनैरिति सादरं सस्नेहं प्रार्थये।

किञ्च देहाध्यासवतो जीवस्याल्पज्ञत्वात्कर्णाषाटवादिदोषेनिचयेन स्खलनस्य यथा कथञ्चित् संभवात् "गुणगृह्या वचने विपश्चितः" समादधति साधव इत्यादिवचनात् शब्दशास्त्रे तीक्ष्णबुद्धयो मनीषिणः स्वप्रतिभातिरेकादशुद्धमपि शुद्धं कर्तुं शक्नुवन्ति।

तद्यथा कस्मिंश्चित् प्राक्तने काले एकदा राजसभायां निर्गुणब्रह्मविचारे वर्तमाने श्रीहर्ष-पितुर्मुखात् ज्ञानो नास्तीति प्रयोगो निःसृतः तदा सर्वे सभास्था विद्वांसो जहसुः। परस्परं समा-लोचनां च चक्रुः श्रीहर्षपिता किञ्चित्सङ्कुचितोऽभूत्। यदा स उत्तरं दातुं प्रवृत्तः। तदैव दैवात् श्रीहर्षोऽपि समायातः। कर्णाकर्णिकया ज्ञातवृत्तान्तः स मध्येसभमुत्थाय सर्वान् संबोध्य तारस्वरेण घोषितवान्।

"ज्ञानो नास्ति" इत्यत्र का अशुद्धिः सर्वेऽपि भवन्तो मत्पितृचरणानां तात्पर्यानभिज्ञा एव। प्रतीयन्ते। निर्गुणब्रह्मणः शब्दातीतत्वेन मनोवाङ् बुद्धयगोचरत्वात् "अविज्ञातं विजानतां विज्ञात-मविजानताम्" इति श्रुतिबलात् तज्ज्ञाने नोऽस्माकं ज्ञा प्रज्ञा नास्तीति सुष्ठूक्तं पितृचरणैः। इत्येवं युक्तियुक्तं समाधानं निशम्य सर्वेऽपि विद्वांसो मूकायिताः सन्तः क्षमायाचनामकुर्वन्।

अतोऽहं सूक्ष्मेक्षिकया निरीक्षमाणान् विद्वज्जनानभिमुखीकृत्य तान् सम्प्रार्थ्य च विस्तरभयात् विरमामि।

रामपूर्तिशास्त्री पौराणिकः

वाराणसी
गुरुपूर्णिमा
२०४७

॥ श्रीमङ्गलमूर्तये नमः ॥

# श्रीमद्भागवतस्य विषयानुक्रमणिका

## [ दशमस्कन्धतो द्वादशस्कन्धपर्यन्ता ]

### दशम-स्कन्धे

**अध्याये** **विषयाः**

१ श्रीकृष्णावतारोपक्रमे राज्ञः परीक्षितो भगवच्चरित्रसम्बन्धिनो नानाविधाः प्रश्नाः। भारपीडितायाः पृथिव्या ब्रह्मणः समीपे गमनं तदाश्वासनं च। वसुदेवविवाहसम्पन्ने सति प्रयाणसमये आकाशवाण्या देवकीवधोद्योग पुत्रार्पणप्रतिज्ञया तन्निवृत्तिः नारदपरामर्शेन कंसद्वारा देवक्या षट्पुत्राणां वधः।

२ योगमायाद्वारा गर्भाकर्षणं, भगवतो देवकीगर्भे प्रवेशः। ब्रह्मादिद्वारा गर्भगतस्य भगवतः स्तुतिः। देवक्याः सान्त्वनाप्रदानं च।

३ भगवतः श्रीकृष्णस्य प्रादुर्भावः, वसुदेवदेवकीद्वारा भगवतः स्तुतिः। कृष्णस्य गोकुलं प्रति नयनं, यशोदासुताया आनयनं च।

४ कन्याया मारणोद्योगः। सा च कंसहस्तान्मुक्ता सती आकाशे देवीरूपेण प्रकटिता। तद्द्वारा कृष्णावतारसूचना। दुर्मन्त्रिणां बालकमारणे परामर्शः।

५ गोकुले भगवतो जातकर्मसंस्कारे विशिष्टो महोत्सवः। सप्ततिलपर्वतादीनां दानम्। गोपीनां महान् समारोहः बालकाय आशीर्वादप्रदानम् सोल्लासं गोपानां परस्परं दधिक्षीरप्रक्षेपः नवनीतैश्च मुखविलेपनम्। करदानाय नन्दस्य मथुरागमनम्। तत्र वसुदेवेन सह तस्य साश्लेषं मधुरसंवादः।

६ लक्ष्मीरूपधारिण्या पूतनाराक्षस्या गोकुले आगमनम् बालकं क्रोडीकृत्य दुग्धपानमिषेण तस्मै विषपानोद्योगः रोषावेषेण बालेन तस्य प्राणाकर्षणं तेन तद्वधश्च। उत्प्लुत्य उत्प्लुत्य गच्छता तद्देहेन गोकुलाद्बहिः स्थितं षट्क्रोशवर्ति कंसस्य क्रीडावनं चूर्णीकृतम् सर्वे गोपा आश्चर्यचकिता बभूवुः।

७ शकटस्याधःशायिनो बालस्य मारणार्थं शकटे असुरप्रवेशात् शकटोऽपि शकटासुरोऽभूत्। रुदता बालेन स्वपादाघातात्स भग्नो मृतश्च, पुनः तृणावर्तवधः। जृम्भमाणस्य बालस्य मुखे यशोदाया ब्रह्माण्ड दर्शनम्।

८ नन्दभवने गर्गाचार्यस्य आगमनम्। स्वस्तिवाचनपूर्वकं बालस्य नामकरणसंस्कारः। मृद्भक्षणाभियोगे बालस्य प्रसारितमुखे मृत्तिकाभावे यशोदाया विश्वरूपप्रदर्शनम्।

९ दधिमन्थनलीलायां दधिभाण्डस्फोटनं कृतवतः कृष्णस्य कृपाशक्तिसाहाय्येन उलूखले बन्धनम्।

१० नारदशापेन यमलार्जुनवृक्षभावं प्राप्तियो र्नलकूबरमणिग्रीवयोः स्थावरयोनेरुद्धारः। तयोरुत्तरदिशातः स्वस्थाने गमनं च।

११ रत्नपूरितभाण्डेन फलविक्रयिण्या उपरि भगवत्कृपा। असुराणामुपद्रवाधिक्यात् गोकुलं परित्यज्य गोपानां वृन्दावनगमनम्। तत्र बालक्रीडायां प्रविष्टस्य वत्सासुरस्य कृष्णं ग्रसमानस्य बकासुरस्य च वधः।

## उत्तरार्द्धः

८२ कुरुक्षेत्रे सूर्यग्रहणपर्वणि यदुवंशीयैः सह कुरूणां नन्दादिगोपानां च परस्परं सम्मेलनं कुशलवार्ता-प्रश्नाश्च । अध्यात्मशिक्षया गोपीनामपि भगवता वियोगजन्यशोकापनोदनम् ।

८३ द्रौपद्या विवाहसम्बन्धिप्रश्ने कृते सति कृष्णपत्नीनां सोत्साहं स्वस्वविवाहघटनावर्णनम् ।

८४ तत्समाजे मुनीनामप्यागमनम् । परस्परं मुनिगणकृष्णयोः प्रशंसापूर्वकं महत्त्ववर्णनम् । तदैव बन्धनभूत-कर्मणः मोचकत्वसम्बन्धिवसुदेवप्रश्ने यज्ञादिद्वारा निष्कामभावनया भगवदर्चनादिकमेव साधनं मुख्यतया प्रतिपादितम् तदनुसारेण मुनिभिर्वसुदेवयज्ञोत्सवः तत्समाप्तौ मुनीनां बन्धूनां च स्वस्वस्थाने प्रस्थानम् ।

८५ मुनीनां वचसा भगवति कृष्णे ब्रह्मत्वभावनया वसुदेवद्वारा तत्वग्रामनिरूपणेन भगवत्सत्ताया वर्णनम् । भगवता तत्प्रशंसनम् । देवकीप्रार्थनया कंसमारितानां षट्पुत्राणां सुतललोकादानयनम् । देवक्या स्तन्यपानं कृत्वा पितरौ प्रणम्य तेषां दिव्यलोकगमनम् ।

८६ पित्रोः कृष्णस्य चानुमत्या अर्जुनद्वारा सुभद्राहरणम् । भक्तानुग्रहार्थम् ऋषिभिः सह भगवतो मिथिला-गमनम् । बहुलाश्वश्रुतदेवयोरुपर्यनुग्रहः । मुनिभिः सह तयोर्गृहे गमनम् आतिथ्यग्रहणं च ।

८७ नारायणनारदसंवादे सर्ववेदान्तनिष्कर्षभूता गम्भीरतया पद्यानुपादसहिता वेदस्तुतिः ।

८८ विष्णुशिवयोरभेदेऽपि लीलासौकर्यार्थं स्वभावे वैलक्षण्यम् । तत्र शिवस्य सद्यः प्रसादे वृकासुरोपाख्यानम् । वटुकरूपधारिणा विष्णुना वरप्रदातुः शिवस्य वृकासुराद्रक्षणम् ।

८९ त्रिदेवानां श्रेष्ठत्वविषयकप्रश्ने भृगुणा परीक्ष्य विष्णोः श्रेष्ठत्वं दृढीकृतम् । अर्जुनेन सह महाकालपुरे गत्वा ततो भगवता ब्राह्मणस्य मृतपुत्राणामानयनं च ।

९० श्रीकृष्णस्य पत्नीभिः सह जलविहारः । रेचकयन्त्रद्वारा परस्परं जलप्रक्षेपः । भगवत्सान्निध्येऽपि अनुरागाधिक्यात् पत्नीभिर्भगवति वियोगोपालम्भः । यदुवंशप्रसूतानां पुंसां संख्याधिक्यादनन्तत्व-व्यवहारश्च ।

## एकादशस्कन्धे

अध्याये विषयाः

१ स्त्रीवेषिणं साम्बं निमित्तीकृत्य ऋषीणामुपहासात् यदुकुलविनाशाय तेषां शापः ।

२ संसारात् यथा मुच्येमहि तथा नः शाधीति वसुदेवप्रश्ने नारदद्वारा निमिसिद्धेश्वरसंवादरूपेण भागवत-धर्मस्य भागवतलक्षणस्य च वर्णनम् ।

३ माया-तत्तरणोपाय नारायण-कर्मविषयक प्रश्नानाम् अन्तरिक्ष प्रबुद्ध पिप्पलायन-आविर्होत्रसंज्ञकसिद्धेश्वरैः क्रमेण सविवेचनमुत्तराणि दत्तानि ।

४ अवतारसम्बन्धिप्रश्ने द्रुमिलद्वारा भगवतः कतिपयावताराणां निरूपणम् । तत्र नारायणावतारे तत्तपस्यया शंकितेनेन्द्रेण तपोभङ्गार्थं तदाश्रमे कामादीनां प्रेषणम् । नारायणद्वारा तेषां स्वागतम् । उपायनरूपेणेन्द्राय उर्वशीप्रेषणं च ।

५ भगवद्भक्तिहीनानां यज्ञीयहिंसासक्तमनसां कुपात्राणां का निष्ठा किं फलं किं वा प्राप्यं भवतीति निमिप्रश्ने यजोयसत्पात्रचमससंज्ञकसिद्धेश्वरद्वारा तेषामधोगतिनिरूपणम् । भगवतो युगानुसारिवर्णनामाकृति सम्बन्धिप्रश्ने करभाजनद्वारा तेषां यथातथमुत्तरदानम् ।

## द्वादश-स्कन्धे



॥ समाप्तेयं विषयानुक्रमणिका ॥

ॐ श्री परमात्मने नमः

# श्रीमद्भागवतम्

❀

# दशमः स्कन्धः

❀

## पूर्वार्धः

❀

### अथ प्रथमोऽध्यायः

राजोवाच

कथितो वंशविस्तारो भवता [1]सोमसूर्ययोः । राज्ञां चोभयवंश्यानां चरितं परमाद्भुतम् ॥१॥
यदोश्च धर्मशीलस्य[2] नितरां मुनिसत्तम । तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः ॥२॥

---

[ अत्र निरोधवर्णनम् ]

यदङ्घ्रिस्मरणात्सद्यो लीयन्ते विघ्नवार्द्धयः ।
ऋद्धिसिद्धियुतं तं श्रीविघ्नराजमुपास्महे ॥ १ ॥
दशमे भगवल्लीलामाधुर्यं बोधयन् सताम् ।
नवत्या प्रोच्यतेऽध्यायैर्निरोधो दैत्यभूभृताम् ॥ २ ॥
प्रथमे देवकीगर्भान्मृत्युमाकर्ण्य विह्वलः ।
षड् बालानवधीत् कंसो नारदोक्तेरितीर्यते ॥ ३ ॥

❀

कथित इति सार्द्धम् । कथितो नवमस्कन्ध इति शेषः । उभयवंश्यानां सोमसूर्यवंशोद्भवानां परमाद्भुतं सुद्युम्नस्य स्त्रीत्वपुरुषत्वोभयविधवर्णनेनात्याश्चर्यंकरं चरितं च कथितमिति लिङ्गव्यत्ययेनान्वयः । नितरामतिशयेन धर्मत्यत्रान्वेति । नितरां धर्मशीलस्य यदोश्च वंशस्तच्चरितं च कथितमित्यन्वयः । तत्रेत्यर्द्धम् । तत्र यदुकुले । अंशेन बलदेवेन सह । यद्वा अंशानां मत्स्यादीनामिनः स्वामी । अंशेषु इनः सूर्य इव प्रकाशको वा

---

१—यद्यपि 'सूर्याचन्द्रमसौ धाता' इत्यादिश्रुत्या सूर्यवंशस्य प्रथमवर्णनेन चाभ्यर्हितत्वात्सूर्यशब्दस्य पूर्वनिपात उचितस्तथापि सूर्यस्य रसशोषकत्वेन सोमस्य च रसवर्धनत्वेन किञ्च सूर्यस्य ब्रह्मप्रपौत्रत्वेन सोमस्य च ब्रह्मपौत्रत्वेन सोमवंशे कृष्णावतारत्वेन चाभ्यर्हितत्वात् सोमशब्दस्य पूर्वनिपातः । उत्पत्तिक्रमश्च यथा—ब्रह्मणो मरीचिस्ततः कश्यपस्ततो रविरिति । ब्रह्मणोऽत्रिस्ततश्चन्द्र इति । २—मद्यौवनावस्थयाऽसौ मन्मातरं भोक्ष्यतीति मम मातृगामित्वदोषः स्यादित्यतो न दास्यामि वय इति पित्राज्ञोल्लङ्घितत्वेऽपि धर्मशीलत्वं तदनस्यमेवेति ज्ञेयमत्र । धर्मे विष्णौ शीलं समाधिर्यस्येति वा ।

अवतीर्य यदोर्वंशे भगवान् भूतभावनः । कृतवान् यानि विश्वात्मा तानि नो वद विस्तरात् ॥३॥

निवृत्ततर्षैरुपगीयमानाद् भवौषधाच्छ्रोत्रमनोऽभिरामात् ।
क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नात् ॥ ४ ॥

पितामहा मे समरेऽमरञ्जयैर्देवव्रताद्यातिरथैस्तिमिङ्गिलैः ।
दुरत्ययं कौरवसैन्यसागरं कृत्वातरन् वत्सपदं स्म यत्प्लवाः ॥ ५ ॥

द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं संतानबीजं कुरुपाण्डवानाम् ।
जुगोप कुक्षिं गत आत्तचक्रो मातुश्च मे यः शरणं गतायाः ॥ ६ ॥

वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः ।
प्रयच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन् ॥ ७ ॥

रोहिण्यास्तनयः प्रोक्तो रामः संकर्षणस्त्वया । देवक्या गर्भसम्बन्धः कुतो देहान्तरं विना ॥८॥

---

अंशेनः स चासौ अवतीर्णश्च तस्येत्येकपदम् । सामस्त्येन वक्तुमशक्यत्वादंशेन एकदेशेन शंसेत्यन्वयो वा । 'अंशः स्यादेकदेशेऽपि इति धरणिः । एतेन कृष्णस्तु भगवान् स्वयम्' इत्यनेन न विरोधः । वीर्याणि चरितानि नोऽस्मभ्यं शंस कथय । बहुत्वमन्याभिप्रायेण ॥२॥ भूतभावनः भूतानि भावयति पालयतीति तथा । अत्र हेतुः विश्वात्मा । अतति व्याप्नोतीति आत्मा । यदोर्वंशे । उर्वोरंशः उर्वंशस्तस्मिन् उर्वंशे वैश्ये नन्दगोकुले इत्यर्थः । अवतीर्य गत्वा यानि चरितानि कृतवान् तानि विस्तरात् वदेत्यन्वयः ॥३॥ पशुघ्नात् पशुघातिनो विना उत्तमश्लोकगुणानुवादात् कः पुमान् विरज्येत विरक्तो भवेत् न कोऽपीत्यन्वयः । कथंभूतात् । निवृत्ततर्षैः जीवन्मुक्तैः शुकसनकादिभिः उप आधिक्येन गीयमानात् । तर्षो वासना । मुमुक्षूणां भवरोगस्य औषधात् । विषयिणामपि तदनुकूलकथाप्रसङ्गेन श्रोतृमनसोः अभिरामात् सुखप्रदात् । यद्वा । अपगता शुक् शोको यस्मात् सोऽपशुक् आत्मा तं हन्तीति तस्मात् आत्मघातिन इति वा । अत्र 'अनचि च' इति द्वित्वे जश्त्वे च गकारघटितः पाठः अपशुग्घ्नात् इति ॥४॥ मे पितामहा युधिष्ठिराद्यो यत्प्लवाः सन्तः दुस्तरं सैन्यमेव सागरं वत्सपदमिव अतितुच्छं कृत्वा अतरन् स्म तस्य वीर्याणि वदस्वेति तृतीयेनान्वयः । स्म इवार्थे । कैर्दुरत्ययम् । देवव्रतो भीष्मस्तदाद्या येऽतिरथास्तैः । तिमिङ्गिलैः तत्तुल्यविशालकायैः । कथंभूतैः । युद्धे अमरान् जयन्तीति तैः संज्ञाभावेऽपि बाहुलकात् खच् । यः श्रीकृष्ण एव प्लवः नौकारूपं तरणसाधनं येषां ते ॥५॥ किञ्च यः शरणं गताया मे मातुः उत्तरायाः कुक्षिं गतः सन् इदं मदङ्गं जुगोप चकारात् मातुरङ्गं च जुगोष तस्य वीर्याणीति योज्यम् । देवानां विश्वदेवानामिव व्रतं सन्ततेरनुत्पादनरूपं यस्य सः । द्रौणिः अश्वत्थामा तस्य ब्रह्मास्त्रेण विप्लुष्टं दग्धम् । सन्तानस्य वंशस्य बीजं वृद्धिकारणम् । पाण्डवानां कुरुत्वेऽपि ब्राह्मणपरिवाजकवद्विशेषापेक्षया पृथगुक्तिः । आत्त गृहीतं चक्रं भ्रामणेन चक्रवद्वर्तुलाकारं गदारूपमस्त्रं येन सः । अतो 'भ्रामयन्तं गदां मुहुः' इति प्रथमस्कन्धोक्तेर्नविरोधः ॥६॥ अन्तः पुरुषरूपेण कालरूपेण यो बहिः इत्युक्तेः अखिलप्राणिनां मध्ये ये बहिर्दृष्टयस्तेषां कालरूपेण मृत्युं संसारं जन्ममरणलक्षणम् ये चान्तर्दृष्टयस्तेषामुत अपि मोक्षं च प्रयच्छतः ददतः । पुरुषेण अन्तर्यामिरूपेण । यद्वा अन्तः अन्तरङ्गा भक्ताः बहिः बहिरङ्गा अभक्ताः शेषं यथावत् । यद्वा । अन्तः बहिश्च स्थितस्य तस्येत्यन्वयो वा । माया कृपा । वदस्व प्रकाशय । 'भासनोपसंभाषा' इत्यात्मनेपदम् । यद्वा । स्वेति पृथक् पदं हे स्व मदेकबन्धो हे मदेकधन वा । स्वम् आत्मस्वरूपं वेत्तीति तत्सबुद्धौ हे स्वविद्वन्नित्येकपदं वा ॥ ७ ॥ देहान्तरम् अन्यदेहं विना कथं घटते इति

कस्मान्मुकुन्दो भगवान् पितुर्गेहाद् व्रजं गतः। क्व वासं ज्ञातिभिः सार्धं कृतवान् सात्वतां पतिः॥९॥
व्रजे वसन् किमकरोन्मधुपुर्यां च केशवः। भ्रातरं चावधीत् कंसं मातुरद्धाऽतदर्हणम् ॥१०॥
देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः। यदुपुर्यां सहावात्सीत् पत्न्यः कत्यभवन् प्रभोः॥११॥
एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम्। वक्तुमर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतम् ॥१२॥
नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते। पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम् ॥१३॥

सूत उवाच

एवं निशम्य भृगुनन्दन साधुवादं वैयासकिः स भगवानथ विष्णुरातम्।
प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्तुमारभत भागवतप्रधानः ॥१४॥

श्रीशुक उवाच

सम्यग्व्यवसिता बुद्धिस्तव राजर्षिसत्तम। वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः॥१५॥
वासुदेवकथाप्रश्नः पुरुषांस्त्रीन् पुनाति हि। वक्तारं पृच्छकं श्रोतॄंस्तत्पादसलिलं यथा॥१६॥
भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः। आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥१७॥
गौर्भूत्वाश्रुमुखी खिन्ना क्रन्दन्ती करुणं विभोः। उपस्थितान्तिके तस्मै व्यसनं स्वमवोचत॥१८॥
ब्रह्मा तदुपधार्याथ सह देवैस्तया सह। जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः॥१९॥
तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम्। पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ॥२०॥

---

योज्यम् ॥८॥ पितुर्गेहात् मथुरान्तर्गतात्। व्रजं गोकुलम्। गत्वा च क्व वासम्। सार्धं सह। सात्वतां यदूनां भक्तानां वा पतिः पालकः। मधुपुरी मथुरा द्वारकां च। मातुः भ्रातरं मातुलं कंसं च अद्धा साक्षात् कस्मात् अवधीत्। यतोऽतदर्हणं वधानर्हम् ॥१०॥ कति वर्षाणि मनुष्यमानेन। वृष्णिभिः यदुवंशीयैः सह प्रभोः श्रीकृष्णस्य ॥ ११ ॥ एतत् पृष्टम्। अन्यत् अपृष्टम्। विचेष्टितं विविधं चरित्रम्। मे मह्यम् ॥१२॥ एषा क्षुत् बुभुक्षाऽपि न बाधते। तत्र हेतुः। त्वन्मुखचन्द्रनिःसृतं कथामृतं पिबन्तं माम्। त्यक्तोदं तच्चाचमनं विनेति न व्याख्येयम्। अन्यथा सन्ध्यादिषु विहिताचमनाकरणादशुचित्वेन श्रवणाधिकार एव नोपपद्यते। संज्ञां विनापि बाहुलकादुदकस्योदादेशः। अथवा। उदशब्दोऽप्युदकवाची। १३। हे भृगुनन्दन! शौनक! वैयासकिः स भगवान् भगवत्तत्त्वज्ञः शुकः एवं साधुवादं समीचीनप्रश्नं निशम्य अथ च विष्णुरातं परीक्षितं प्रत्यर्च्य संश्लाघ्य कृष्णचरितं वक्तुमारभतेत्यन्वयः। भागवतेषु भगवद्भक्तेषु प्रधानः। अर्द्धर्चादित्वात्पुंस्त्वम्। यद्वा भागवतं भागवता वा प्रधानानि यस्य सः। १४। सम्यक् व्यवसितं निश्चयो यस्याः सा। यत् यतो बुद्धेः। नैष्ठिकी रतिः निश्चला प्रीतिः। १५। तस्य भगवतः पादसलिलं श्रीगङ्गा यथा द्रष्टारं स्नातारं पातॄंश्च त्रीन् लोकान् वा। मन्दाकिनीति दिवि 'भोगवतीति चाधो गङ्गेति चेह चरणाम्बु पुनाति विश्वम् इत्युक्तेः। १६। दृप्ता गर्विता नृपव्याजा वस्तुतस्तु दैत्या एव तेशामनीकशतानामयुतैरनन्तैर्यो भूरिभारस्तेनाक्रान्ता पीडिता भूमिः ब्रह्माणं मेरुमूर्धस्थं न तु सत्यलोकस्थम्। शरणं रक्षकं प्रति। दितिवंशजत्वाभावेऽपि कर्मणैव दैत्यत्वं बोध्यम्। १७ ॥ क्रन्दन्ती विलपन्ती। विभोः ब्रह्मणः अन्तिके उपस्थिता सती तस्मै ब्रह्मणे स्वं व्यसनं स्वकीयं कष्टम्। १८। तत् भूमेः कष्टम्। उपधार्य ज्ञात्वा। तया भूम्या। सत्रिनयन इति दैत्यसंहारार्थ गमनम्। १९। तत्र क्षीरसागरे। समाहितः एकाग्रचित्तः सन् पुरुषं श्रीविष्णुम् उपतस्थे तुष्टाव। वृषाकपिम् वर्षति कामानिति वृषः आकम्पयति दुष्टानित्याकपिः स चासौ स च। यद्वा। वृषा इन्द्रः तम् अकात् ब्रह्महत्या लक्षणात् दुःखात् पातीति। वृषा इन्द्रः आकम्पतेऽस्माद्वा। राजादिवारणाय देवदेवम्। इन्द्रादिवारणाय

गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह ।
गां पौरुषीं मे शृणुताऽमराः पुनर्विधीयतामाशु तथैव मा चिरम् ॥२१॥
पुरैव पुंसाऽवधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम् ।
स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद् भुवि ॥२२॥

वसुदेवगृहे साक्षाद् भगवान् पुरुषः परः । जनिष्यते तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः ॥२३॥
वासुदेवकलानन्तः सहस्रवदनः स्वराट् । अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥२४॥
विष्णोर्माया भगवती यया सम्मोहितं जगत् । आदिष्टा प्रभुणांशेन कार्यार्थे सम्भविष्यति ॥२५॥

श्रीशुक उवाच

इत्यादिश्यामरगणान् प्रजापतिपतिर्विभुः । आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥२६॥
शूरसेनो यदुपतिर्मथुरामावसन् पुरीम् । माथुराञ्छूरसेनांश्च विषयान् बुभुजे पुरा ॥२७॥
राजधानी ततः साभूत् सर्वयादवभूभुजाम् । मथुरा भगवान् यत्र नित्यं संनिहितो हरिः ॥२८॥
तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः । देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत् ॥२९॥
उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया । रश्मीन् हयानां जग्राह रौक्मैः रथशतैर्वृतः ॥३०॥
चतुःशतं पारिबर्हं गजानां हेममालिनाम् । अश्वानामयुतं सार्धं रथानां च त्रिषट्शतम् ॥३१॥
दासीनां सुकुमारीणां द्वे शते समलंकृते । दुहित्रे देवकः प्रादाद् याने दुहितृवत्सलः ॥३२॥

---

वृषाकपिमिति । २० । समाधाविति तादर्थ्ये सप्तमी देवकार्यसमर्थनार्थम् । गगने हृदयाकाशे वा समीरिताम् उच्चारिताम् गिरं निशम्य ब्रह्मा ह हर्षेण देवानुवाच । हे अमराः । मे मत्तः सकाशात् पौरुषीं वैष्णवीं वाचं शृणुत । श्रुत्वा च तथैवाशु विधीयतां चिरं विलम्बं मा कुरुत । २१ । पुंसा भगवता पुरैव अस्मज्ज्ञापनात्पूर्वमेव पृथ्वीसन्तापः अवधृतो ज्ञातः । ज्वर । सन्तापे धातुः । अतः ईश्वराणां ब्रह्मादीनामपि ईश्वरः श्रीकृष्णः स्वशक्तया उर्व्या भरं क्षपयन् हरन् यावत् भुवि विचरेत् तावत् भवद्भिः अंशैः सह यदुषु उपजन्यतामित्यन्वयः । २२ । वसुदेवस्य गृहे भार्यायाम् । यद्वा वसुना गोधनेन दीव्यति द्योतते इति वसुदेवो नन्दः । वसुदेवो गृह्यते निरुद्धयतेऽत्रेति वसुदेवगृहं कंसकारागारं तत्र वा । २३ । वासुदेवाय कं सुखं शय्यारूपत्वेन लाति ददातीति वासुदेवकला तच्छय्याभूतोऽनन्तः शेषः । २४ । मायाऽत्र योगमाया । कार्यार्थे गर्भसंकर्षणादिरूपकार्यसम्पादनार्थम् । । २५ । प्रजापतीनां मरीच्यादीनां पतिः ब्रह्मा । आश्वाश्य सान्त्वयित्वा । २६ । शूरसेनः[2] कार्तवीर्यपुत्रः । मथुरां मथुरायाम् । 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् । माथुरान् मथुरायाः प्रान्ते वर्तमानान् । शूरसेनेनाधिष्ठितान् विषयान् देशान् । बुभुजे पालयामास ॥ २७ ॥ ततः शूरसेनादारभ्य । सा मथुरा । राजधानी तु ययातिशापेऽपि 'शूरसेनादीनां महाप्रभावत्वेन । सन्निहितः स्थितः ॥ २८ ॥ तस्यां मथुरायाम् । कृतोद्वहः कृतविवाहः । सूर्यया नवोढया सह प्रयाणे स्वगृहगमनार्थम् आरुहत् । कृमृदृरुहिभ्यः इति बाहुलकाच्च्लेरङ् ॥ २९ ॥ स्वसुः भगिन्याः । रौक्मैः सौवर्णैः । जग्राह स्वयं सारथिरभूत् । एतेन तस्य सद्य एव स्नेहत्यागः सूच्यते ॥ ३० ॥ चतुःशतमिति द्वयम् । परिबर्हं कन्यादेय द्रव्यम् । दहेज इति प्रसिद्धम् । सार्द्धमयुतं पञ्चदशसहस्राणि । त्रयश्च षट् च त्रिषट् नव तानि शतानि यस्मिन् यद्वा । त्रिगुणितानि षट् त्रिषट् तानि शतानि यस्मिन् । नवशतानि अष्टादशशतानि वा निश्चीयते । याने

---

१—गृहीणीगृहमित्याहुः'इति वचनात् ।

२—तस्य पुत्रसहस्रेषु पञ्चैवोर्वरिता मृधे ।
जयध्वजः शूरसेनो वृषभो मधुरूर्जितः ॥ इति नवमस्कन्धे ।

शङ्खतूर्यमृदङ्गाश्च नेदुर्दुन्दुभयः समम् । प्रयाणप्रक्रमे तावद् वरवध्वोः सुमङ्गलम् ॥३३॥
पथि प्रग्रहिणं कंसमाभाष्याहाऽशरीरवाक् । अस्यास्त्वामष्टमो गर्भो हन्ता यां वहसेऽबुध ॥३४॥
इत्युक्तः स खलः पापो भोजानां कुलपांसनः । भगिनीं हन्तुमारब्धः खड्गपाणिः कचेऽग्रहीत् ॥३५॥
तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम् । वसुदेवो महाभाग उवाच परिसान्त्वयन् ॥३६॥

वसुदेव उवाच

श्लाघनीयगुणः शूरैर्भवान् भोजयशस्करः । स कथं भगिनीं हन्यात् स्त्रियमुद्वाहपर्वणि ॥३७॥
मृत्युर्जन्मवतां वीर देहेन सह जायते । अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥३८॥
देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः । देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥३९॥
व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति । यथा तृणजलूकैवं देही कर्मगतिं गतः ॥४०॥
स्वप्ने तथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः ।
दृष्टश्रुताभ्यां मनसानुचिन्तयन् प्रपद्यते तत् किमपि ह्यपस्मृतिः ॥४१॥

---

कन्यागमनसमये देवकः कंसपितृव्यः ॥३२॥ प्रयाणप्रक्रमे गमनारम्भे तावत् आदौ उभयोः सुमंगलं यथा भवति तथा शंखाद्याः समम् एकदैव नेदुः ॥३३॥ प्रग्रहिणं गृहीतहयरश्मिम् आभाष्य रे रे कंसेति संबोध्य अशरीरवाक आकाशवाणी जाता । यद्वा । न लक्षितं शरीरं येषां ते अशरीरा देवास्तेषां वाणी । वहसे नयसि । हन्ता हनिष्यति ॥ ३४ ॥ कुलस्य पांसुं धूलिं करोतीति कुलपांसनः कुलदूषणः । पांसुशब्दाद् तत्करोतीति णिच् ल्युश्च । यद्वा । कुलं पंसति नाशयतीति कुलपांसनः । 'पसि नाशने कर्तरि ल्युट् निपातनात् दीर्घः । पंसतीति पंसनः स एव पांसन इति वा । आरब्धः प्रवृत्तः । आदिकर्मणि कर्तरि क्तः । कचे केशपाशे । पापः पापी । अर्श आद्यजन्तः ॥ ३५ ॥ नृशंसं क्रूरम् । निरपत्रपं निर्लज्जम् । तं कंसं सान्त्वयन् साममार्गेण प्रबोधयन् ॥ ३६ ॥ तदेव पञ्चविधं साम[1] दर्शयति—श्लाघनीयेति गुणकीर्तनम् । भोजेति सम्बन्धः । भगिनीमित्यभेदः । स्त्रिया अवधेन यशोलाभः भार्यादानेन परोपकारश्च । वास्तवार्थस्तु श्लाघनीयेषु 'मध्ये' गुण[2] शून्यः । भोजाः कलहप्रियाः भुजो कौटिल्ये इत्यस्मात् । तेषां यशः कलहाधिक्यं तस्य कारकः । स कथं भागिनीं हन्यादपि तु सर्वं कुलमेवेति योज्यम् । हे वीर । कंस ! जन्मवतां प्राणिनाम् । वै प्रसिद्धार्थे ॥३८॥ पञ्चत्वं मृत्युं प्राप्ते सति । अवशः परतन्त्रो देही जीवः भगवद्वशो वा । त्यजते बाहुलकात्तङ् । यथा व्रजन् गन्ता पुरुषः एकेन अग्रतो निहितेन पदा भूतलमाश्रित्य स्थितः पश्चात् एकेन अग्रतो निहितेन द्वितीयचरणेन गच्छति । नतु युगपत् यथा तृणजलूका कीटविशेषः अन्यत्तृणं गृहीत्वा पूर्वतृणं त्यजति एवं जीवोऽपि अन्यदेहं प्राप्य प्राक्तनं पूर्वं वपुस्त्यजते इत्यन्वयः । कर्मगतिं कर्ममार्गं संसारं प्राप्तः ॥४०॥ स्वप्ने मनोरथे च अभिनिविष्टबुद्धिः ना पुरुषः स्वप्नद्रष्टा मनोरथकर्ता चेत्यर्थः यत् दृष्टं यच्च श्रुतं ताभ्यां निरूढसंस्कारेण मनसा तदेवानुचिन्तयन् किमपि ईदृशं राजादिरूपं देहं पश्यति क्षणान्तरे च तदेवाहमिति प्रपद्यते मन्यते ततश्च जाग्रद्देहात् विरतमनोरथाच्च अपगतस्मृतिः तद्द्रयावेशरहितो भवति एवं जीवोऽपि देहं प्राप्यैव प्राक्तनं वपुस्त्यजतीत्यर्थः । दृष्टं राजादि श्रुतमिन्द्रादि ॥४१॥ दैवेन फलोन्मुखेन कर्मणा प्रेरितं मनः गुणजन्यदेहेषु यतो यतो यं यं देहं देवा-

---

१. सम्बन्धलाभाभेदाश्च गुणकीर्तनमेव च ।
उपकारश्च पञ्चैव सामभेदा इहोदिताः ॥

२. 'गुणः शून्ये च शब्दादौ' इति कोशात् ।

यतो यतो धावति दैवचोदितं मनो विकारात्मकमाप पञ्चसु ।
गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥४२॥
ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुगतं विभाव्यते ।
एवं स्वमायारचितेष्वसौ पुमान् गुणेषु रागानुगतो विमुह्यति ॥४३॥

तस्मान्न कस्यचिद् द्रोहमाचरेत् स तथाविधः। आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम्॥४४॥
एषा तवानुजा बाला कृपणा पुत्रिकोपमा । हन्तुं नार्हसि कल्याणीमिमां त्वं दीनवत्सलः ॥४५॥

श्रीशुक उवाच

एवं स सामभिर्भेदैर्बोध्यमानोऽपि दारुणः । न न्यवर्तत कौरव्य पुरुषादाननुव्रतः ॥४६॥
निर्बन्धं तस्य तं ज्ञात्वा विचिन्त्यानकदुन्दुभिः । प्राप्तं कालं प्रतिव्योढुमिदं तत्रान्वपद्यत ॥४७॥
मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् । यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥४८॥
प्रदाय मृत्यवे पुत्रान् मोचये कृपणामिमाम् । सुता मे यदि जायेरन् मृत्युर्वा न म्रियेत चेत् ॥४९॥
विपर्ययो वा किं न स्याद् गतिर्धातुर्दुरत्यया । उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ॥५०॥

अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यन्न निमित्तमस्ति ।
एवं हि जन्तोरपि दुर्विभाव्यः शरीरसंयोगवियोगहेतुः ॥५१॥

एवं विमृश्य तं पापं यावदात्मनिदर्शनम् । पूजयामास वै शौरिर्बहुमानपुरःसरम् ॥५२॥

---

विरूपं प्रति धावति धावच्च सत् मनः यमाप प्राप्तं भवति तत्र तत्र असौ देही तेनैव मनसा सहैव जायते । कुतः । प्रपद्यमानः मन एवाहम् इत्यभिमानं कुर्वाणः मनोऽध्यासेनैव जीवस्य जन्म न वस्तुत इत्यर्थः ॥४२॥ उदकपूर्णेषु पार्थिवेषु घटादिषु प्रतिबिम्बितम् अदः चन्द्रादिकं ज्योतिः वायुवेगेन कम्पितं सत् यथा प्रतीयते एवमसौ जीवः गुणेषु देहेषु रागासक्तः सन् मोहं प्राप्नोति न तु तं त्यक्तुं शक्नोति । उक्तं च तृतीयस्कन्धे नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छाति । उदकेषु पार्थिवेषु तैलादिषु वा ॥४३॥ तस्मात् मृत्योरवश्यंभावित्वात् तथाविधः मृत्युनिराकरणाशक्तः अन्विच्छन् अभिलषन् । हेतौ शतृप्रत्ययः । क्षेमार्थमित्यर्थः । परतः यत्र द्रोहः कृतस्तस्मात् । यमाद्वा । इति भेदो दर्शितः ॥४४॥ बाला दयार्हा । यतः पुत्रिकोपमा पुत्रीसमा । काष्ठपुत्तलिकेव वा । कल्याणीं निरपराधाम् । इमामित्यनुवादरूपत्वान्न एनादेशः । श्लेषेण दीनादपि वत्सं करत्वेन लाति गृह्णातीति दीनवत्सलः निर्दयस्त्वं हन्तुं नार्हसि अपितु अर्हस्येवेति काक्वा निन्दैव ॥४५॥ न न्यवर्तत देवकीवधात् । स कंसः । कुतः । दारुणः क्रूरः । तत्कुतः । पुरुषादान् राक्षसान् अनुसृतः अनुगतः तत्स्वभावं प्राप्त इत्यर्थः ॥४६॥ तस्य कंसस्य निर्बन्धं हठम् । 'निर्बन्धो हठमुक्तयोः' इति धरणिः । प्रतिव्योढुं वञ्चयितुम् । तत्र वसुदेवमनसि । इदं पुत्रार्पणमेव । अन्वपद्यत निश्चितवान् ॥४७॥ अपोह्यो निराकरणीयः । बुद्धिश्च बलं च उदयश्च ते यावद्बुद्धिबलोदया ज्ञानसामर्थ्यवैभवा यावन्तो बुद्धिबलोदयास्तावन्तो मृत्युप्रतीकारा इति यावद्बुद्धिबलोदयम् । 'यावदवधारणे' इत्यव्ययीभावः । असौ मृत्युः ॥४८॥ मृत्यवे कंसाय । यदि सुता जायेरन् यदि च तावत्पर्यन्तं मृत्युः कंसो न म्रियेत् तदा पुत्रान् प्रदायेत्यावृत्त्या योज्यम् ॥ ४९ ॥ विपर्ययो वैपरीत्यम् । धातुर्ब्रह्मणः । उपस्थितो देवकीमृत्युः । निवृत्तः कंसमृत्युः ॥ ५० ॥ सन्निहितस्य दारुणः काष्ठस्य वियोगः । दूरस्थस्य कदाचित् योगः । अदृष्टतो भाग्यात् अन्यत्कारणं नास्ति । संयोगवियोगयोर्जन्ममरणयोः । दुर्विभाव्योऽचिन्त्यः ॥ ५१ ॥ आत्मनिदर्शनं स्वबुद्ध्यनुसारं विचार्य । तं पापं कंसं पूजयामासेत्यन्वयः । वै उपेक्षार्थे । बाह्यदृष्ट्येत्यर्थः ॥ ५२ ॥ तस्य विश्वासाय प्रसन्नेति बहिः । दूयमानेन सन्तप्यमानेनान्तः

प्रसन्नबदनाम्भोजो नृशंसं निरपत्रपम् । मनसा दूयमानेन विहसन्निदमब्रवीत् ॥५३॥

वसुदेव उवाच

न ह्यस्यास्ते भयं सौम्य यद् वागाहाऽशरीरिणी । पुत्रान् समर्पयिष्येऽस्या यतस्ते भयमुत्थितम्॥५४॥

श्रीशुक उवाच

स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित् । वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद् गृहम् ॥५५॥
अथ काल उपावृत्ते देवकी सर्वदेवता । पुत्रान् प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥५६॥
कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः । अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ॥५७॥
किं दुःसहं नु साधूनां विदुषां किमपेक्षितम् । किमकार्यं कदर्याणां दुस्त्यजं किं धृतात्मनाम् ॥५८॥
दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम् । कंसस्तुष्टमना राजन् प्रहसन्निदमब्रवीत् ॥५९॥
प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम् । अष्टमाद् युवयोर्गर्भान्मृत्युर्मे विहितः किल ॥६०॥
तथेति सुतमादाय ययावानकदुन्दुभिः । नाभ्यनन्दत तद्वाक्यमसतोऽविजितात्मनः ॥६१॥
नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः । वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः॥६२॥
सर्वे वै देवताप्राया उभयोरपि भारत । ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः ॥६३॥
एतत् कंसाय भगवाञ्छशंसाभ्येत्य नारदः । भूमेर्भारायमाणानां दैत्यानां च वधोद्यमम् ॥६४॥
ऋषेर्विनिर्गमे कंसो यदून् मत्वा सुरानिति । देवक्या गर्भसम्भूतं विष्णुं च स्ववधं प्रति ॥६५॥
देवकीं वसुदेवं च निगृह्य निगडैर्गृहे । जातं जातमहन् पुत्रं तयोरजनशङ्कया ॥६६॥
मातरं पितरं भ्रातॄन् सर्वंश्च सुहृदस्तथा । घ्नन्ति ह्य सुतृपो लुब्धा राजनःप्रायशो भुवि ॥६७
आत्मानमिह संजातं जानन् प्राग् विष्णुना हतम् । महासुरं कालनेमिं यदुभिः स व्यरुध्यत ॥६८

---

दूङ् परितापे धातुः ॥ ५३ ॥ यत् यथा आकाशवाणी आह वै तथा हि अस्याः सकाशात् । यतः येभ्यः पुत्रेभ्यः वस्तुतोऽकारप्रश्लेषात् येभ्योऽभयं तानेव न तु भयप्रदं कृष्णमित्यर्थः ॥ ५४ ॥ तद्वाक्ये वसुदेववाक्ये सारः सत्यता ॥ ५५ ॥ काले प्रसवकाले प्राप्ते सर्वेषां देवता यूज्या । सर्वः सर्वात्मा भगवान् वा देवता यस्यामिति वा । अनुवत्सरं वत्सरे वत्सरे एकैकम् । अष्टसु वर्षेष्वित्यर्थः । विभक्त्यर्थेऽव्ययीभावः । कन्यां सुभद्रां च ॥ ५६ ॥ कीर्तिमदादीनि नामानि भावीनि कल्पान्तरीयाणि वा अनुस्मृत्योक्तानि । अर्पयामास नामकरणानन्तरं वा ॥ ५७ ॥ साधूनां सत्यप्रतिज्ञानाम् । शेषे षष्ठी । अपेक्षितमिति वसुदेवमुद्दिश्य । अकार्यमिति कंसमुद्दिश्य । दुस्त्यजमिति देवकीमुद्दिश्य । चित्ते धृत आत्मा हरिर्यैस्तेषाम् । कदर्याः कुसङ्गिनः ॥५८॥ शौरेर्वसुदेवस्य । समत्वं पुत्रार्पणेन हर्षविषादराहित्यम् ॥ ५९ ॥ प्रतियातु स्वगृहमिति शेषः ॥ ६० ॥ असतः कंसस्य । नाभ्यनन्दत सत्यं न मेने । कुतः । अविजितात्मनोऽस्थिरचित्तस्य । बाहुलकात्तङ् ॥ ६१ ॥ अमीषां नन्दादीनां । योषितो यशोदाद्याः ॥ ६२ ॥ उभयोः नन्दवसुदेवकुलयोः । ये चाक्रूराद्याः । कंसादीनां दैत्यरूपत्वात्प्रायग्रहणम् ॥ ६३ ॥ शशंस कथयामास । वधोद्यमं ब्रह्माद्यैः कृतम् ॥ ६४ ॥ युग्ममम् । संभूतमिति सामीप्यात् भविष्यत्यपि क्तः । गर्भे संभूतं संभवो यस्येति बहुव्रीहीर्वा । स्ववधं प्रति मत्वेति योज्यम् । ६५ ॥ निगडैः शृंखलैः । निगृह्य निरुध्य । जातं जातं नामजातानन्तरम् । अजनो विष्णुः ॥ ६६ ॥ असुतृपः परप्राणैः स्वप्राणतर्पकाः ॥ ६७ ॥ प्राग् पूर्वजन्मनि विष्णुना हत पुनरिह जन्मनि जातं कालनेमिम्

उग्रसेनं च पितरं यदुभोजान्धकाधिपम् । स्वयं निगृह्य बुभुजे शूरसेनान् महाबलः ॥६९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां।
दशमस्कन्धे पूर्वार्धे श्रीकृष्णावतारोपक्रमे प्रथमोऽध्यायः ॥ १ ॥

## अथ द्वितीयोऽध्यायः

प्रलम्बबकचाणूरतृणावर्तमहाशनैः । मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥ १ ॥
अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः । यदूनां कदनं चक्रे बली मागधसंश्रयः ॥२॥
ते पीडिता निविविशुः कुरुपञ्चालकेकयान् । शाल्वान् विदर्भान् निषधान् विदेहान् कोसलान्॥३॥
एके तमनुरुन्धाना ज्ञातयः पर्युपासते । हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ॥४॥
सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते । गर्भो बभूव देवक्या हर्षशोकविवर्धनः ॥५॥
भगवानपि विश्वात्मा विदित्वा कंसजं भयम् । यदूनां निजनाथानां योगमायां समादिशत् ॥६
गच्छ देवि व्रजं भद्रे गोपगोभिरलंकृतम् । रोहिणी वसुदेवस्य भार्याऽऽस्ते नन्दगोकुले ॥
अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि ॥७॥
देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् । तत् संनिकृष्य रोहिण्या उदरे संनिवेशय ॥८॥
अथाहमंशभागेन देवक्याः पुत्रतां शुभे । प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि॥९॥
अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम् । धूपोपहारबलिभिः सर्वकामवरप्रदाम् ॥१०॥
नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि । दुर्गेति भद्रकालीति विजया वैष्णवीति च॥११॥
कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च । माया नारायणीशानी शारदेत्यम्बिकेति च ॥१२॥

---

आत्मानं जानन् नारदादिति शेषः । व्यरुध्यत विरोधं कृतवान् ॥ ६८ ॥ निगृह्य वशीकृत्य । स्वयं बुभुजे न केनाप्यभिषिक्त इत्यर्थः । शूरसेनान् देशान् ॥ ६९ ॥

इति श्रीमद्भागवते महापुराणे दशयस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां प्रथमोध्यायः ।

**द्वितीये कंसघाताय देवकीगर्भमागतः कृष्ण देवैः स्तुतो भक्त्या देवकी चापि सान्त्विता ।**

प्रलम्बेति द्वयम् । बली कंसः प्रलम्बादिभिः युतः यदूनां कदनं मर्दनं चक्रे इत्यन्वयः । 'कदनं मर्दपापयोः' इति कोशात् । चाणूरमुष्टिकौ मल्लौ । महाशनोऽघासुर । अरिष्टो वृषभासुरः । द्विविदो वानरः । मागधो जरासन्धः । ते यदवः । निविविशुः 'नेविंशः' इति बाहुलकात् तङभावः॥३॥एके इत्यर्द्धम् । एकेकेचित् अक्रूरादयः । तं कंसमनुरुन्धाना अनुवर्तमानाः ॥४॥ हतेष्विति सार्द्धम् । औग्रसेनिना कंसेन । यमनन्तं चक्षते तदेव वैष्णवं धाम तेजः देवक्या सप्तमो गर्भो बभूवेत्यन्वयः । हर्षो भगवतोऽवतारात् शोकः पुत्रसमर्पणाच्च ॥५॥ भयं विदित्वा इत्यत्र हेतुः विश्वात्मेति । निजो ऽहमेव नाथो येषाम् ॥६॥ नन्दगोकुले बृहद्वने ॥७॥ अन्या इति सार्द्धम् । संविग्ना भीता । हि यतः विवरेषु अलक्ष्यस्था नेषु । तत् ततो जठरात् । सन्निवेशय संस्थापय ॥८॥ अथ अनन्तरम् । अंशैः शक्तिभिर्भजतेऽधितिष्ठति सर्वान् ब्रह्मादीनित्यंशभागस्तेन परिपूर्णेन रूपेणेत्यर्थः । अंशानां ब्रह्मादीनां भागेन भाग्येन हेतुनां वा । भविष्यसि कन्यारूपेण ॥९॥ सर्वकामा ये नराः तेषा वरां श्रेष्ठामीश्वरीं स्वामिनीम् । अत एव सर्वाद कामवरान् अभीष्टवरान् प्रददातीति तथा ताम् । बलिभिः पूजाद्रव्यैः ॥१०॥ नामेति द्वयम् । कुर्वन्ति करिष्यन्ति । चकारोऽनुक्तसमुच्चयार्थः ॥११-१२॥ लोकस्य रमणात् प्रीत्युत्पादनात् । रामेति सुष्पुपेति

गर्भसंकर्षणात् तं वै प्राहुः संकर्षणं भुवि । रामेति लोकरमणाद् बलं बलवदुच्छ्रयात् ॥१३॥
संदिष्टैवं भगवता तथेत्योमिति तद्वचः । प्रतिगृह्य परिक्रम्य गां गता तत् तथाकरोत् ॥१४॥
गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया । अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः ॥१५॥
भगवानपि विश्वात्मा भक्तानामभयंकरः । आविवेशांशभागेन मन आनकदुन्दुभेः ॥१६॥
स बिभ्रत् पौरुषं धाम भ्राजमानो यथा रविः । दुरासदोऽतिदुर्धर्षो भूतानां सम्बभूव ह ॥१७॥

ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी ।
दधार सर्वात्मकमात्मभूतं काष्ठा यथाऽऽनन्दकरं मनस्तः ॥१८॥
सा देवकी सर्वजगन्निवासनिवासभूता नितरां न रेजे ।
भोजेन्द्रगेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती ॥१९॥
तां वीक्ष्य कंसः प्रभयाऽजतान्तरां विरोचयन्तीं भवनं शुचिस्मिताम् ।
आहैष मे प्राणहरो हरिर्गुहां ध्रुवं श्रितोथन्न पुरेयमीदृशी ॥२०॥
किमद्य तस्मिन् करणीयमाशु मे यदर्थतन्त्रो न विहन्ति विक्रमम् ।
स्त्रियाः स्वसुर्गुरुमत्या वधोऽयं यशः श्रियं हन्त्यनुकालमायुः ॥२१॥

---

समासः । संबोधनं वा । बलावत्सु उच्छ्रयात् बलधिक्यात् तं बालं बलं च प्राहुः वदिष्यन्ति । 'वर्तमानसामीप्ये' लट् । वै चकारार्थे । बलमित्यत्र मत्वर्थीयोऽच्प्रत्ययः ॥१३॥ एवं संदिष्टा आज्ञता योगमाया तथास्तु ओमित्यादरेण तं परिक्रम्य प्रदक्षिणीकृत्य गां भूमिम् गता यथा आदिष्टं तत्तथैवाकरोत् ॥१४॥ रोहिणीं प्रति प्रणीते प्रापिते सति । विस्रंसितः गलितः औषधादिना पातितो वा विचुक्रुशुः विलेपुः न तु तद्रहस्यं विविविदुः ॥१५॥ वासुदेवस्य मनः कर्म आविवेश मनस्याविर्बभूव । एतेन जीवानामिव धातुसंबन्धो वारितः । अंश इव अंशः भाग इव भागः न वस्तुतोंऽशो भागश्च पूर्णरूपेणेत्यर्थः ॥१६॥ पौरुषं विष्णुसम्बन्धि धाम तेजः । दुरासदः दुष्प्रापः अतिदुर्धर्षः परिभवितुमशक्यः हेति निश्चितम् ॥१७॥ ततः प्रवेशानन्तरं देवकी वसुदेवेन समाहित मर्पितम् अच्युतांशं दधार । यथा काष्ठा पूर्वा दिक् मनसा आनन्दकरं स्वतः सिद्धं चन्द्रं धत्ते । तृतीयार्थे तसिः । अच्युताः च्युतिरहिता अंशा ऐश्वर्यादयो यस्य तम् । कीदृशम् । जगतो मूर्तिमन्मङ्गलम् । पुनः सर्वस्य आत्मानम् अन्तर्यामिणम् । पुनः । आत्मनैव भूतं स्वयमाविर्भूतम् ॥ १८ ॥ जगन्निवासो भगवान् तस्याधारभूता देवकी रेजे किन्तु नितरां न रेजे । कुतः । भोजेन्द्रगृहे कंसकारागारे रुद्धा । यथा घटादिषु रुद्धा दीपशिखा यथा च ज्ञानवञ्चके रुद्धा सरस्वती उपदेशाभावान्न राजते तथा सापि । यथा प्रबला अग्निशिखा गृह दहति यथा वा अनुपदिष्टा सरस्वती ज्ञानखलं तथेयमपि कंसं कंसवैभवं च धक्ष्यतीति उपमाद्वयेन व्यञ्जितम् ॥१९॥ कंसः तां देवकी वीक्ष्य स्वमनसि आह विचारितवानित्यन्वयः । कीदृशीम् । प्रभया स्वदेहकान्त्या भवनं प्रकाशयन्तीम् । स्वयं च शुचिस्मितां मन्दहास्ययुक्ताम् । उभयत्र हेतुः । अजितान्तराम् । अजितः श्रीकृष्णः अन्तरा कुक्षिमध्ये[1] यस्यास्ताम् । मे मम गजस्येव प्राणहरः एष हरि[2] ध्रुवं गुहां गर्भं प्रविष्टः यत् यस्मात् इयं देवकी पुरा ईदृशी न । हरिः सिंहो यथा गुहामिति श्लेषोऽपि व्याख्येयः ॥२०॥ तस्मिन् मद्वैरिणि हरौ मे मया किं करणीयम् । कर्तरि षष्ठी । यत् यस्मात् अर्थो देवकार्यं तन्त्रं प्रधानं यस्य सः हरिः स्वविक्रमं न

---

१. कुष्यते निष्कृष्यते शुभाशुभं विचार्यतेऽनेनेति कुक्षि मनस्तन्मध्ये अतो मनस्तः इत्यनेन न विरोधः । कंसदृष्ट्या तु यथाश्रुतमेव ।

२. सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ; इत्यमरः ।

स एष जीवन् खलु सम्परेतो वर्तेत योऽत्यन्तनृशंसितेन।
देहे मृते तं मनुजाः शपन्ति गन्ता तमोऽन्धं तनुमानिनो ध्रुवम् ॥२२॥

इति घोरतमाद् भावात् सन्निवृत्तः स्वयं प्रभुः। आस्ते प्रतीक्षंस्तज्जन्म हरेर्वैरानुबन्धकृत्॥ ॥२३॥
आसीनःसंविशंस्तिष्ठन् भुञ्जानः पर्यटन् महीम्। चिन्तयानो हृषीकेशमपश्यत् तन्मयं जगत्॥२४॥
ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः। देवैः सानुचरैः साकं गीर्भिर्वृषणमैडयन् ॥२५॥

सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये।
सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥२६॥

एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा।
सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः ॥२७॥

---

निहन्ति न नाशयति मद्वधे पराक्रमं करिष्यत्येव। तर्हीयं हन्यतां नेत्याह-स्त्रियाः तत्रापि स्वसुः तत्रापि गर्भिण्याः अयं वधः अनुक्षणं शीघ्रमेव यश आदीनि हन्ति ॥२१॥ किञ्च यः अत्यन्तं नृशंसितेन क्रौर्येण वर्तेत जीवेत् स एष जीवन्संपरेतः जीवन्मृतकः तं च जीवन्तमेव मनुजाः शपन्ति निन्दन्ति। तनुमानिनो देहाभिमानिनोऽस्य देहे मृते सति स च अन्धतामिस्रं नाम नरकं गन्ता गमिष्यति ॥२२॥ इत्येवं विचार्य घोरतमात् भावात् क्रूरकर्मणः स्वयमेव निवृत्तः। यतः प्रभुः स्वरक्षणसमर्थः स कंसः वैरस्य अनुबन्ध दार्ढ्यं करोतीति निरन्तरवैरकृत् हरेः तत् अष्टमं जन्म प्रतीक्षमाण आस्ते स्थितः। बाहुलकात् शतृप्रत्ययः। घोरभावः सामान्यस्त्रीहिंसा। घोरतरभावः भगिनीहिंसा। घोरतमभावः गर्भिणीहिंसेति तृतीयकोटौ तमप्घटितः प्रयोगः ॥२३॥ आसीनः आसने। संविशन् शयानः। स्वप्नः संवेश इत्यादि इत्यमरात्। चिन्तयानः बाहुलकान्मुगभावः। तन्मयं हरिरूपम् ॥२४॥ तत्र कंसकारागारे एत्य गुप्तरूपेण आगत्य ब्रह्मा भवः सा पृथ्वी च एवं त्रयोऽप्यैडयम् तुष्टुवुरिति व्याख्येयमन्यथा बहुवचनानुपपत्तेः। अनुचरैरिति देवविशेषणम्। अनु पश्चाच्चरन्तीति व्युत्पत्तेः तैः सह। वृषणं कामवर्षिणम्। ईडेः प्रयोजकणिजन्ताल्लङ्। सकर्मकत्वात् प्रयोज्यकर्तरि तृतीया देवैरिति ॥ २५ ॥ स्वावतारविषये यत्प्रतिज्ञातं तत्सत्यं कृतमिति हृष्टाः सन्तः प्रथमं सत्यत्वेनैव स्तुवन्ति सत्यव्रतमिति। वयं त्वां शरणं प्रपन्नाः। कथंभूतम्। सत्यात्मकं सत्य आत्मा श्रीविग्रहो यस्य सत्यस्वरूपम्। पुनः सत्यव्रतम्। सत्यं व्रतं संकल्पो यस्य। सत्यमेव परं श्रेष्ठं प्राप्तिसाधनं यस्य। त्रिष्वपि कालेषु सत्यम्। तदेवाह-सत्यस्य सत्पदेन पृथिव्य प्तेजांसि त्यत्पदेन वाय्वाकाशौ एवं सच्च त्यच्च सत्यं भूतपञ्चकं तस्य योनिं कारणम्। किञ्च सत्ये तस्मिन्नैव पाञ्चभौतिके देहे निहितम् अन्तर्यामिरूपेण स्थितम्। पुनः सत्यस्य भूतपञ्चकस्य नाशेऽपि सत्यमवशिष्यमाणरूपम्। एतेन क्रमशः भूतवर्तमानभविष्यत्कालेषु सत्यत्वं साधितम्। किञ्च ऋतं मधुरवाणी सत्यं समदर्शनं च तयोर्नेत्रं प्रवर्तकम्। 'णीञ्' प्रापणे इत्यस्मात् 'दाम्नी—इत्यादिना ष्ट्रन् प्रत्ययः ॥२६॥ असौ प्रपञ्चः समष्टिव्यष्टिदेहरूपः आदिवृक्षोऽस्ति। प्रवाहापन्नत्वात् आदि ! सनातनश्चासौ वृक्षः। आदिना ज्ञानेन वृश्च्यते इति वा। कथंभूतः। एका प्रकृतिरयनमाश्रयो यस्य। द्वे सुखदुःखे फले यस्य। त्रयो गुणा मूलानि यस्य। चत्वारो धर्मार्थकाममोक्षाख्या रसा यस्य। पञ्च इन्द्रियाणि विधा ज्ञानप्रकारा यस्य। षट् आत्मानः स्वभावाः विकाराः जायते अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यति इत्येवंरूपा यस्य। षट्[1] ऊर्मयो वा। सप्त रसादयो धातवस्त्वचो यस्य। पञ्चभूतानि मनोबुद्ध्यहङ्काराश्चेत्यष्टौ विटपाः शाखा यस्य।

---

१. क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः।

त्वमेक एवास्य सतः प्रसूतिस्त्वं संनिधानं त्वमनुग्रहश्च ।
त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये ॥२८॥

बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य ।
सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानाम् ॥२९॥

त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि समाधिनाऽऽवेशितचेतसैके ।
त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥३०॥

स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः ।
भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥ ३१ ॥

येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ ३२ ॥

तथा न ते माधव तावकाः क्वचिद् भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः ।
त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ॥ ३३ ॥

सत्त्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेयउपायनं वपुः ।
वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते ॥ ३४ ॥

---

नव द्वाराणि अक्षाश्छिद्राणि यस्य ।[1] दश प्राणाः छदाः पत्राणि यस्य । द्वौ खगौ जीवेश्वरौ यस्मिन् ॥२७॥ सतः कार्यस्य अस्य संसारवृक्षस्य त्वमेक एव प्रसूतिः प्रधानं कारणम् । सन्निधानं लयस्थानम् । अनुग्रहः पालकश्च त्वमेव । नन्वेवंभूता ब्रह्मादयः प्रसिद्धास्तत्राहुः न संवृतमाच्छादितं चेतो ज्ञानं येषान्ते त्वां नाना पश्यन्ति विपश्चितस्तु नाना न पश्यन्ति । अकारप्रश्लेषेण असंवृतचेतसः विपश्चित इत्येकं वाक्यं वा ॥२८॥ अवबोधः ज्ञानस्वरूपः आत्मा त्वमेव । क्षेमाय परित्राणाय ।सत्त्वोपपन्नानि शुद्धसत्त्वात्मकानि सतां धर्मात्मनां सुखावहानि सुखप्रापकाणि । अभद्राणि नाशकानि ॥२९॥ हे अम्बुजाक्ष । अखिलसत्त्वानां जीवानां धाम्नि आधारभूते शुद्धसत्त्वमूर्तौ वा त्वयि समाधिना योगेन स्थिरचेतसा हेतुभूतेन एके विवेकिनः भवाब्धि गोवत्सपदमिव तुच्छं कुर्वन्ति सुखेन तरन्तीत्यर्थः । केन । महत्कृतेन ध्रुवादिभिर्निर्मितेन त्वत्पादपोतेन । पोतो महानौका ।३०। हे द्युमन् तेजोमय ! अदभ्रसौहृदाःभूतेषु कृपालवः भक्ताः स्वयं त्वत्कृपयैव भवार्णवं समुत्तीर्य नावमत्रैव निधायसंस्थाप्य भक्तिमार्गं प्रवर्त्येत्यर्थः पारं याताः । यतो भवान् सदनुग्रहः भक्तपरिपालकः ॥३१॥ये च त्वत्तोऽन्येऽहङ्कारिणः ज्ञानेनैव वयं मुक्ता किं भक्त्येति प्रलपन्तः त्वयि अस्तभावात् भक्तेरभावात् विकृतबुद्धयः क्लेशेन कथंचित् परं पदं मोक्षसन्निहितं सत्कुलजन्मतपःशास्त्रादि आरुह्य प्राप्यापि अधः पतन्ति न च मुच्यन्ते । कुतः । अनादृतयुष्मदङ्घ्रयः । न आदृतौ युष्मदङ्घ्री यैस्ते तथाभूताः । यद्वा त्वयि अस्ता नष्टा भा प्रतिभा बुद्धिर्येषान्ते वादे शास्त्रार्थे एव विशुद्धा बुद्धिर्येषान्ते इति श्लेषोऽपि व्याख्येयः ॥३२॥ यथा पतन्ति तथा तावकाः त्वद्भक्ताः ते मार्गात् भक्तिलक्षणात् क्वचिदपि न भ्रश्यन्ति । कुतः । त्वयीति योज्यम् । किञ्च ते विनायकानां विघ्नकारिणां ये सेनापतयस्तेषां मूर्धसु विचरन्ति विघ्नान् जयन्तीत्यर्थः ॥३३॥ स्थितौ पालने शुद्धसत्वात्मकं वपुः श्रयते बिभर्ति । कीदृशं । श्रेयसः चतुर्वर्गस्य उपायनं दातृ प्रापकं वा । येन वपुषा हेतुभूतेन अयं जनः तव अर्हणं पूजनं करोति । कैः । वेदादिभिश्चतुराश्रमधर्मैः ॥३४॥ हे धातः ! चेत् यदि इदं सत्वं शुद्धसत्त्वात्मकं तव वपुर्न भवेत्तर्हि विज्ञानं स्वरूपानुभूतिरपि न भवेत् । कथंभूतम् । अज्ञानं देहाध्यासस्तत्कृता भिदा भेदबुद्धिश्च तयोरपमार्जनं निवर्तकम् ।

---

१. प्राणापानौ समानश्चोदानव्यानौ च वायवः । नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः ।
उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः । कृकलः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे ॥
न जहाति मृतं चापि सर्वव्यापी धनञ्जयः ।

सत्त्वं न चेद् धातरिदं निजं भवेद् विज्ञानमज्ञानभिदापमार्जनम् ।
गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः ॥ ३५ ॥
न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः ।
मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि ॥ ३६ ॥
शृण्वन् गृणन् संस्मरयंश्च चिन्तयन् नामानि रूपाणि च मङ्गलानि ते ।
क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते ॥ ३७ ॥
दिष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः ।
दिष्ट्याङ्कितां त्वत्पदकैः सुशोभनैर्द्रक्ष्याम गां द्यां च तवानुकम्पिताम् ॥ ३८ ॥
न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे ।
भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ॥ ३९ ॥
मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः ।
त्वं पासि नस्त्रिभुवनं च यथाधुनेश भारं भुवो हर यदूत्तम वन्दनं ते ॥ ४० ॥
दिष्ट्याम्ब ते कुक्षिगतः परःपुमानंशेन साक्षाद् भगवान् भवाय नः ।
मा भूद् भयं भोजपतेर्मुमूर्षोर्गोप्ता यदूनां भविता तवात्मजः ॥ ४१ ॥

श्रीशुक उवाच

इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा । ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे गर्भगतविष्णोर्ब्रह्मादिकृतस्तुतिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

---

यद्वा । अज्ञानभित् विज्ञानं । मार्जनम् नाशमापेति श्लेषः-भवतु अनुमानं कुर्मः तदेवाह-गुणानां गुणकार्याणां जडानां देहेन्द्रियाणां प्रकाशैः चित्प्रकाशत्वात्कार्यक्षमैः अनुमीयते इति कल्प्यत एव न तु साक्षात्क्रियते इत्यर्थः । यस्य जीवस्य सम्बन्धी गुणः देहेन्द्रियादिः येन त्वयाऽधिष्ठात्रा प्रकाशते सक्रियो भवति । जडानामेषामस्ति कश्चिच्चेतयितेति । अनुमानं च यथा—बुद्ध्यादयः प्रकाशकसापेक्षा जडत्वात् घटादिवत् इति ॥३५॥ तस्य मन आदेः साक्षिणस्तव गुणादिभिर्नामरूपे न निरूपणयोग्ये[1] भवतः । कुतः । अनुमेयमनुमातुं योग्यं न तु अनुभाव्यं वर्त्म यस्य । अथापि हे देव ! क्रियायामुपासनायां भक्तास्त्वां प्रतियन्ति साक्षात्पश्यन्ति । हीति प्रसिद्धमेतत् ॥३६॥ मङ्गलानि पुण्यजनकानि । चकारात्कर्माणि च गृणन् उपदिशन् स्वयं स्मरन् अन्यांश्च संस्मारयन् योऽनुरक्तचित्तो भवति स भवाय संसाराय न कल्पते योग्यो न भवति मुच्यते इत्यर्थः । क्रियासु सर्वविधक्रियासु । चिन्तनं ध्यानं स्मरणं तु तज्जन्यमिति विशेषः ॥३७॥ हे हरे ! ईशितुः ईश्वरस्य तव जन्मना भवतः पदः पादभूताया अस्या भुव भारोऽपनीतः दूरीकृत एतत् दिष्ट्या भद्रं जातम् । किञ्च तव त्वया अनुकम्पितां पदैरङ्कितां च गां पृथ्वी द्यां स्वर्गं च द्रक्ष्याम एतदपि दिष्ट्या ॥३८॥ बत सम्बुद्धौ । हे ईश ! अभवस्य असंसारिणस्ते जन्मनः कारणं विनोदं लीलां विना न तर्कयामहे । लीलार्थमेव जन्म न वस्तुतः । यतः आत्मनि जीवात्मन्यपि जन्ममरणादयः त्वयि या अविद्या तयैव कृता न परमार्थतः । हे अभयाश्रय नित्यमुक्त ॥३९॥ अश्वो हयग्रीवः राजन्यो रामः । विप्रः परशुरामः विबुधो वामनः । नोऽस्मान् त्रिभुवनं च अन्यदा यथा पासि तथा अधुनापि पाहि । कथम् भुवः भारं हरेति । ते वन्दनमिति सर्वे प्रणमन्ति ॥४०॥ अंशेन बलदेवेन सह । यद्वा । यदूनामंशेनापि भोजपतेः कंसाद्भयं मा भूत् किमुत हर्यवतारेण । मुमूर्षोः आसन्नमृत्योः ॥४१॥ अनिदम् इदन्तया वक्तुमशक्यं यद्रूपं तत् यथावत् यथाशक्ति स्तुत्वा । पुरोधाय अग्रे कृत्वा दिवं ययुः । पुरोऽव्ययमिति गतित्वात्समासे क्त्वो ल्यप् ॥४२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां द्वितीयोऽध्यायः ॥२॥

---

१. निरूपितव्ये अनित्यण्यन्ताश्चुरादयः णिजभावे रूपम् ।

## अथ तृतीयोऽध्यायः

### श्रीशुक उवाच

अथ सर्वगुणोपेतः कालः परमशोभनः । यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम् ॥ १ ॥
दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् । मही मङ्गलभूयिष्ठपुरग्रामव्रजाकरा ॥२॥
नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः । द्विजालिकुलसंनादस्तबका वनराजयः ॥३॥
ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः । अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत ॥४॥
मनांस्यासन् प्रसन्नानि साधूनामसुरद्रुहाम् । जायमानेऽजने तस्मिन् नेदुर्दुन्दुभयो दिवि ॥५॥
जगुः किन्नरगन्धर्वास्तुष्टुवुः सिद्धचारणाः । विद्याधर्यश्च ननृतुरप्सरोभिः समं तदा ॥६॥
मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः । मन्दं मन्दं जलधरा जगर्जुरनुसागरम् ॥७॥
निशीथे तमउद्भूते जायमाने जनार्दने । देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः ।
आविरासीद् यथा प्राच्यां दिशीन्दुरिव पुष्कलः ॥८॥

तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदार्युदायुधम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् ॥९॥

---

तृतीये दिव्यरूपेण प्रादुर्भूतः स्वयं हरिः ।
पितृभ्यां संस्तुतो भीत्या पित्रा नीतश्च गोकुलम् ॥१॥

यर्हि सर्वगुणोपेतः कालो बभूव तदा विष्णुराविरासीत् इत्यष्टमश्लोकेनान्वयः । यर्हीति प्रत्येकम् सम्बध्यते । यर्हि अजनात् नारायणात् जन्म यस्य तस्य अजनजन्मनो ब्रह्मणः नक्षत्रं रोहिणी अभूत् तदैव । ऋक्षाणि अश्विन्यादि शान्तानि यस्मिन् तत् । ग्रहः सूर्यादयः । तारकाः सप्तर्ष्यादयः ॥१॥ प्रसेदुरिति वर्षास्वपि शरद्गुणः उक्तः । निर्मलेति ऊर्ध्वस्थप्रसादः । महीति अधस्थप्रसादः । निर्मलानां नक्षत्रगणानामुदयो यस्मिन् । मङ्गलभूयिष्ठाः येषु ते तथाभूताः पुरादयो यस्याम् । आकरो रत्नाद्युत्पत्तिस्थानम् ॥२॥ जलेति रात्रावपि दिवसगुणः । द्विजानां पक्षिणाम् अलीनां भ्रमराणां च यत्कुलम् समूहः तस्य सन्नादो मधुरशब्दो येषु ते तथाभूताः स्तबकाः पुष्पगुच्छा यासु ताः वनराजयः । वर्षसु वसन्तगुणः एतत्सर्वं भगवन्महिम्नैव ॥३॥ सुखेत्यनेन शैत्यम् । गन्धेत्यनेन सौरभ्यम् । शुचि मान्द्यं । समैन्धत दीप्ता बभूवुरिति द्वापरेऽपि त्रेतागुण उक्तः । ॥४॥ असुरा द्रुहो द्रोहकर्तारो येषाम् । असुरेभ्यो द्रुह्यन्ति ये तेषां देवानां वा । अजने श्रीकृष्णे जायमाने आसन्नकाले ॥५॥ समं सह । तदा आविर्भावबेलायाम् ॥६॥ सुमनांसि पुष्पाणि । आर्षत्वात्क्लैव्यम् । अनुसागरं सागरनादमनुलक्ष्य । अनुकृतः अनुकरणीकृतः सागरो यस्मिन्निति क्रियाविशेषणं वा ॥७॥ निशीथे इति सार्द्धम् । तमसा उत् उत्कर्षेण भूते व्याप्ते तमोव्याप्ते निशीथेऽर्द्धरात्रे । यद्वा । अतिशयेन निशीथे निशीथेतमे उद्भूते जाते सति । अत्र तमप् 'घकालतनेषु' इति सप्तम्या अलुक् । एतेनाष्टमी तिथिः । यद्वा । न विद्यते तमो यस्मात्सोऽतमाश्चन्द्रः तस्मादुद्भूते उत्पन्ने बुधे बुधदिने इत्यर्थः । जनान् विरहिणोऽर्दयति पीडयतीति जनार्दने चन्द्रे । गुहा अन्तःकरणम् । यथा यथावत् पूर्णरूपेण । पुष्कलः पूर्णः ॥८॥ तमिति द्वयम् । वसुदेवः तम् अद्भुतं बालकम् ऐक्षतेति द्वयोरन्वयः । बालः को ब्रह्माऽस्येति । बालेषु रोमविवरेषु कानि ब्रह्माण्डानि यस्य । वा वक्रा अलकाः केशा यस्येति वा । अम्बुजायां लक्ष्म्यामीक्षणं यस्य । षष्ठ्यन्तं वा ईक्षणं यत्र । अम्बुजौ चन्द्रसूर्यौ इक्षणे यस्येति वा । अरि चक्रम् एतानि उद्यतानि दैत्यार्थमायुधानि यस्य ।

महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् ।
उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥१०॥
स विस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा ।
कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् ॥११॥
अथैनमस्तौदवधार्य पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः ।
स्वरोचिषा भारत सूतिकागृहं विरोचयन्तं गतभीः प्रभाववित् ॥१२॥

वसुदेव उवाच

विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः । केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् ॥१३॥
स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम् । तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥१४॥
यथेमेऽविकृता भावास्तथा ते विकृतैः सह । नानावीर्याः पृथग्भूता विराजं जनयन्ति हि ॥१५॥
संनिपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव । प्रागेव विद्यमानत्वान्न तेषामिह सम्भवः ॥१६॥
एवं भवान् बुद्ध्यनुमेयलक्षणैः ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः ।
अनावृतत्वाद् बहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः ॥१७॥

---

यद्वा । उदकमायुर्यस्य उदायुः कमलं तद्धातीति । लक्ष्म चिह्नम् । श्रीर्वसत्यस्मिन्निति श्रीवत्सः[1] गलेन शोभते इति गलशोभी कौस्तुभो यस्य । सान्द्रपयोदः सजलमेघस्तद्वत्सुन्दरम् । पुनः कथंभूतम् । महार्हं बहुमूल्यं यत् वैदूर्यं मणिः तज्जटितकिरीटकुण्डलानां त्विषा अलङ्कृता अपरिमिताः केशा यस्य । उद्दामैरत्युत्कृष्टैः काञ्च्यादिभिः । अङ्गदं बाहुभूषणम् । त्विषेत्याबन्तं वा ॥९॥१०॥ तदा जन्मकाले स वसुदेवः हरिं सुतं विलोक्य मुदा हर्षेण आप्लुतः पूर्णः सन् गवामयुतमस्पृशत् मनसा दत्तवानित्यन्वयः । स्पृशिर्दानेऽपि । 'वितरणं स्पर्शनम्' इत्यमरात् । संभ्रमस्त्वरा । अयुतं दश सहस्रम् ॥११॥ अवधार्य निश्चित्य । नताङ्गः कृताञ्जलिः इत्यत्र हेतुः कृतधीः शुद्धबुद्धिः । भगवतः प्रभावं वेत्तीति अत एव गतभीः निर्भयः । हे भारत ॥१२॥१३॥ इदं विश्वम् । अग्रे सर्गारम्भे । भाव्यसे लक्ष्यसे ॥१४॥ अत्र दृष्टान्तः यथेति युग्मेन यथा इमेऽविकृतो[2] भावा महदादयः विराडादिकार्येषु अप्रविष्टा अपि प्रविष्टा इव दृश्यन्ते तथा त्वम् अप्रविष्टोऽपि प्रविष्ट इव भाव्यसे इति योजना कार्या । एतदेव स्पष्टयति—महदादयः हि यतः पृथग्भूताः सन्तो नानावीर्याः कार्यजननेऽसमर्था भवन्ति अतः विकृतैःषोडशविकारैः[3] सह सन्निपत्य मिलित्वा ब्रह्माण्डं जनयन्ति । एवं विराजं समुत्पाद्य अनुगताः प्रविष्टा इव दृश्यन्ते न पुनः प्रविष्टाः उत्पत्तेः प्रागेव कारणतया विद्यमानत्वात् तेषां महदादीनामिह सृष्टे कार्ये संभवः प्रवेशो नास्ति ॥ १५-१६ ॥ दार्ष्टान्तिके योजयति एवं भवानपि प्रविष्ट इव । बुद्ध्या रूपादिज्ञानेन अनुमेयं लक्षणं स्वरूपं येणां तैः गुणैरिन्द्रियैः ग्राह्या ये गुणा विषयास्तैः सह सन्नपि वर्तमानोऽपि तैर्गुणैः । विषयैः सह न गृह्यते इति तद्गुणाग्रहः कुतः । अनावृतत्वात् अपरिच्छिन्नत्वात्ते बहिरन्तर्भेदो नास्ति । नहि सर्वरूपस्य सर्वात्मनो व्यापकस्य चावरणं घटत नापि भेदः कुतः प्रवेश इत्यर्थः । अतः आनन्दस्वरूप एव त्वं विदितोऽसीत्यहो भाग्यम् ॥१७॥ यः पुमान् दृश्यगुणेषु देहादिषु स्वव्यतिरेकत आत्मभेदेन पृथक्

---

१. दक्षिणावर्तरोमालिः श्रीवत्सं दक्षभागगम् ।
वक्षसि भृगुपादाङ्कं कैश्चिच्छ्रीवत्समुच्यते ॥
२. महदहङ्कारपञ्चतन्मात्रा सप्त ।
३. एकादशेन्द्रियैः सह पञ्चमहाभूतानि षोडश ।

य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः ।
विनानुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददत् पुमान् ॥१८॥
त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो वदन्त्यनीहादगुणादविक्रियात् ।
त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणैः ॥१९॥
स त्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः ।
सर्गाय रक्तं रजसोपबृंहितं कृष्णं च वर्णं तमसा जनात्यये ॥२०॥
त्वमस्य लोकस्य विभो रिरक्षिषुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर ।
राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमाना निहनिष्यसे चमूः ॥२१॥
अयं त्वसभ्यस्तव जन्म नौ गृहे श्रुत्वाग्रजांस्ते न्यवधीत् सुरेश्वर ।
स तेऽवतारं पुरुषैः समर्पितं श्रुत्वाधुनैवाभिसरत्युदायुधः ॥२२॥

श्रीशुक उवाच

अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम् । देवकी तमुपाधावत् कंसाद् भीता शुचिस्मिता ॥२३॥

देवक्युवाच

रूपं यत्तत् प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् ।
सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद् विष्णुरध्यात्मदीपः ॥२४॥
नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु ।
व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसंज्ञः ॥२५॥

---

सन्नय देहादिरिति निश्चिनोति सोऽबुधः । यतो मनीषितं विचारितं तद् देहादि घटपटादि वा सर्वमपि अनुवादं वाचारम्भणं विना सम्यक् न भवति । अतोऽवस्तुत्वेन बाधितमेव पक्षं वस्तुबुद्धया य उपादत्ते स पुमानबुध एवेत्यर्थः ॥१८॥ अस्य विश्वस्य जन्मादीन् त्वत्तो वदन्ति । कथंभूतात् । अनीहात् चेष्टारहितात् । कुतः । निर्विकारात् । तत्कुतः निर्गुणात् । ब्रह्मत्वादविकारित्वम् ईश्वरत्वात्कर्तृत्वमतो न विरोधः । गुणैः कुर्वद्भिः सृष्टयादिकर्तृत्वं त्वयि उपचर्यते आरोप्यते व्यवह्रियते गुणानामाश्रयत्वात् । यथा भृत्यकृत्यं जयादिकं राजनि आरोप्यते तद्वत् ॥१९॥ शुक्लवर्णं सात्त्विकं रूपं विष्णुरूपम् । 'वर्णो रूपे द्विजादौ च' इति हैमः । रजसा उपबृंहितं वर्धितं रक्तं रागयुक्तं वर्णं ब्रह्मरूपं च । अत्यये संहारनिमित्तं तमसोपबृंहितं कृष्णं वर्णं रुद्ररूपम् ॥२०॥ अस्य लोकस्य साधुजनस्य । शेषे षष्ठी । राजन्यसंज्ञा ये असुरकोटिसेनापतयः तैः निर्व्यूह्यमाना इतस्ततश्चाल्यमानाः चमूः संहरिष्यसि ॥२१॥ अयं कंसः नौ आवयोः गृहे । समर्पितं सूचितम् । उदायुधः गृहीतखड्गः सन् अभिसरति आगमिष्यति अत एतद्रूपमुपसंहरेति योजना कार्या ॥२२॥ उपाधावत् अस्तौत् । शुचि मन्दम् ॥२३॥ वेदा यत्तत् किमपि रूपम् अनिर्वचनीयं वस्तु प्राहुः तत्साक्षात् त्वमेव । कथंभूतम् । अध्यात्मं देहादिसंघातं दीपयति प्रकाशति चेतयतीति तथा । अव्यक्तमतीन्द्रियम् । सत्तामात्रं सदैकरसम् निर्विशेषं निष्प्रपञ्चम् ॥२४॥ द्विपरार्द्धं ब्रह्मायुस्तस्यान्ते लोके नष्टे सति आदिभूतं भूतसूक्ष्मं तन्मात्रम् अहङ्कारं वा । तद् आदिभूतं व्यक्ते महत्तत्त्वे लीने सति । महत्तत्त्वे च अव्यक्तं प्रधानं प्रति याते लीने प्रधाने च त्वयि लीने सति भवान् एकः शिष्यते इति शेषः । यद्वा । अकारप्रश्लेषेण अशेषात्मके प्रधाने इदं सर्वं लीनमिति सम्यग् ज्ञानं यस्य सः ॥२५॥ हे अव्यक्तबन्धो ! प्रकृतिप्रवर्तक ! योऽयं महीयान् कालः येन विश्वं

योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम् ।
निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये ।।२६।।
मर्त्यो मृत्युव्यालभीतः पलायन् लोकान् सर्वान् निर्भयं नाध्यगच्छत् ।
त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य स्वस्थः शेते मृत्युरस्मादपैति ।।२७।।
स त्वं घोरादुग्रसेनात्मजान्नस्त्राहि त्रस्तान् भृत्यवित्रासहासि ।
रूपं चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ।।२८।।
जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन । समुद्विजे भवद्धेतोः कंसादहमधीरधीः ।।२९।।
उपसंहर विश्वात्मन्नदो रूपमलौकिकम् । शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ।।३०।।
विश्वं यदेतत् स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान् ।
बिभर्ति सोऽयं मम गर्भगोऽभूदहो नृलोकस्य विडम्बनं हि तत् ।।३१।।

श्रीभगवानुवाच

त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति । तदायं सुतपा नाम प्रजापतिरकल्मषः ।।३२।।
युवां वै ब्रह्मणाऽदिष्टौ प्रजासर्गे यदा ततः । संनियम्येन्द्रियग्रामं तेपाथे परमं तपः ।।३३।।
वर्षवातातपहिमधर्मकालगुणाननु । सहमानौ श्वासरोधविनिर्धूतमनोमलौ ।।३४।।
शीर्णपर्णानिलाहारावुपशान्तेन चेतसा । मत्तः कामानभीप्सन्तौ मदाराधनमीहतुः ।।३५।।
एवं वां तप्यतोस्तीव्रं तपः परमदुष्करम् । दिव्यवर्षसहस्राणि द्वादशेयुर्मदात्मनोः ।।३६।।
तदा वां परितुष्टोऽहममुना वपुषानघे । तपसा श्रद्धया नित्यं भक्त्या च हृदि भावित ।३७।
प्रादुरासं वरदराड् युवयोः कामदित्सया । व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः ।।३८।।
अजुष्टग्राम्यविषयावनपत्यौ च दम्पती । न वव्राथेऽपवर्गं मे मोहितौ मम मायया ।।३९।।
गते मयि युवां लब्ध्वा वरंमत्सदृशं सुतम् । ग्राम्यान् भोगानभुञ्जाथां युवां प्राप्तमनोरथौ।।४०।।

---

चेष्टते तस्य ते तव चेष्टामाहुः । तं त्वा त्वां प्रपद्ये शरणं व्रजामि ।।२६।। व्यालो महासर्पः । पलायन् बाहुलकाच्छतृप्रत्ययः । यदृच्छया केनापि पुण्योदयेन । अपैति पलायते ।।२७।। उग्रसेनस्य आत्मजात् कंसात् त्रस्तात् नोऽस्मान् त्राहि यतः त्वं भृत्यानां वित्रासं भयं हन्तीति । यद्वा । भृत्यविदिति पदच्छेदो वा त्रासहा असि । धिष्ण्यं योग्यम् । मांसदृशां चर्मचक्षुषाम् अज्ञानाम् प्रत्यक्षं मा कृषीष्ठा मा कुरु ।।२८।। ते जन्म मयि मा विद्यादित्यन्वयः । भवत एव हेतोः कंसात् समुद्विजे बिभेमि अधीरा धैर्यरहिता धीर्यस्याः सा ।।२९।। निशायां प्रलये तदन्ते सृष्टयादिसमये च सर्वदैव यदेतत् विश्वं स्वतनौ बिभर्ति स मम गर्भगोऽभूत । तत् गर्भगत्वम् अहो बिडम्बनम् उपहासास्पदं भविष्यति ।। ३१ ।। पूर्वसर्गे पूर्वजन्मनि प्रश्निर्नाम्नी स्वायम्भुवे मन्वन्तरे । अयं वसुदेवः ।। ३२ ।। यदा आदिष्टौ ततः तदा । ग्रामं समूहम् । तपः कर्म तेपाथे कृतवन्तौ । वै निश्चये ।। ३३ ।। वर्षेति द्वयम् । अनु क्रमेण निरन्तरं वा सहमानौ श्वासरोधः प्राणायामः । निवृत्ताः मनोमलाः कामक्रोधादयः ययोस्तौ ।। ३४ ।। ईहतुः चक्रतुः । बाहुलकादामृतङोरभावः ।। ३५ ।। वां युयोः । तप्यतोः कुर्वतोः । ईयुर्व्यतीतानि ।।३६।। तदेति सार्द्धम् । वां युवाभ्यां कामदित्सया वरं दातुमिच्छया अमुना वपुषा प्रादुरासभित्यन्वयः । हे अनघे । भावितः चिन्तितः ।। ३७ ।। व्रियतामित्यर्द्धम् । वां युवाभ्याम् । कर्तरि षष्ठी ।। ३८ ।। न जुष्टा न सेविता ग्राम्यविषया गार्हस्थ्यसुखानि याभ्यां तौ । मे मत्तः ।। ३९ ।। गते मयि वरं दत्त्वेति शेषः सुतं पुत्रप्राप्तिरूपम् ।।४०।। अन्यतमं कमपि

अदृष्ट्वान्यतमं लोके शीलौदार्यगुणैः समम् । अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥४१॥
तयोर्वां पुनरेवाहमदित्यामास कश्यपात् । उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥४२॥
तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाथ वाम् । जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ॥४३॥
एतद् वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे । नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते ॥४४॥
युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् । चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥४५॥

श्रीशुक उवाच

इत्युक्त्वाऽऽसीद्धरिस्तूष्णीं भगवानात्ममायया । पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशु ४६

ततश्च शौरिर्भगवत्प्रचोदितः सुतं समादाय स सूतिकागृहात् ।
यदा बहिर्गन्तुमियेष तर्ह्यजा या योगमायाऽजनि नन्दजायया ॥ ४७ ॥
तया हृतप्रत्ययसर्ववृत्तिषु द्वाःस्थेषु पौरेष्वपि शायितेष्वथ ।
द्वारस्तु सर्वाः पिहिता दुरत्यया बृहत्कपाटायसकीलशृङ्खलैः ॥ ४८ ॥
ताः कृष्णवाहे वसुदेव आगते स्वयं व्यवर्यन्त यथा तमो रवेः ।
ववर्ष पर्जन्य उपांशुगर्जितः शेषोऽन्वगाद् वारि निवारयन् फणैः ॥ ४९ ॥
मघोनि वर्षत्यसकृद् यमानुजा गम्भीरतोयौघजवोर्मिफेनिला ।
भयानकाऽऽवर्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः ॥ ५० ॥
नन्दव्रजं शौरिरुपेत्य तत्र तान् गोपान् प्रसुप्तानुपलभ्य निद्रया ।
सुतं यशोदाशयने निधाय तत्सुतामुपादाय पुनर्गृहानगात् ॥ ५१ ॥

देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् । प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥ ५२ ॥
यशोदा नन्दपत्नी च जातं परमबुध्यत । न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृतिः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे कृष्णजन्मनि तृतीयोऽध्यायः ॥ ३ ॥

---

अदृष्ट्वा । वां युवयोः शीलं सच्चरित्रम् । श्रुतः विख्यातः ॥ ४१ ॥ वां युवयोः आस जातः । वामनत्वात् ह्रस्वावयवत्वात् सुन्दरत्वाच्च ॥ ४२ ॥ वां युवयोः । हे सति मातः । व्याहृतं कथितम् ॥ ४३ ॥ वां युवयोः मद्भवं मद्विषयकं । लिंगेन देहेन ॥ ४४ ॥ असकृत् निरन्तरम् । परां गतिं मोक्षम् ॥ ४५ ॥ मायया लीलया । प्रकर्षेणाकृतः प्राकृतः स्वतः सिद्धः । यद्वा । प्रकृतेः प्रवर्तकोऽपि शिशुबद्बभूवेत्यर्थः ॥ ४६ ॥ शौरिः वसुदेवः यदा बहिर्गन्तुमियेष ऐच्छत् तदा या अजा माया सा नन्दजायया यशोदया अजनि जाता ॥४७॥ तयेति द्वयम् । तया मायया प्रतीयन्ते पदार्था यैस्ते प्रत्यया हृताः प्रत्ययानां चक्षुरादीनां वृत्तयो येषान्तेषु द्वाःस्थेषु द्वारपालेषु बृहत्कपाटादिभिः पिहिताः आच्छादिता अत एव दुरत्यया दुर्भेद्यास्ता द्वारः स्वयं भगवदिच्छयैव व्यव्रियन्त विवृताः जाताः । वसुदेवे आगते सति । मूले बाहुलकाद् गुणः । कर्मकर्तरि लङ् । उपांशु मन्दं मन्दं गर्जितं गर्जनं यस्य । भावे क्तः । फणैः छत्राकारैः वारि निवारयन् शेषोऽन्वगात् ॥ ४७ ॥ मघोनि इन्द्रे । गम्भीरः अगाधो यो जलप्रवाहस्तस्य वेगेन ये तरंगा स्तैः फेनवती । श्रियः पतेः सीतापतेर्यथा सिन्धुः तथा यमुना वसुदेवाय मार्गं ददौ सा जानुमात्रजला जातेत्यर्थः । आवर्ता जलभ्रमाः तेषां शतैः व्याप्ता ॥ ५० ॥ शौरिः वसुदेवः । व्रजं गोकुलम् । उपलभ्य दृष्ट्वा ॥५१॥ शयने शय्यायाम् । दारिकां कन्यां न्यस्य निधाय । लोहं निगडं प्रतिमुच्य बद्ध्वा ॥ ५२ ॥ परं केवलं मयि किञ्चित् जातमित्येव न तस्य चिन्हं कन्या पुत्रो वेति । यद्वा तस्य लिङ्गं परमेश्वरोऽमिति विशेषम् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां तृतीयोऽध्यायः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः

श्रीशुक उवाच

बहिरन्तः पुरद्वारः सर्वाः पूर्ववदावृताः । ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥ १ ॥
ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत् । आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥ २ ॥
स तल्पात्तूर्णमुत्थाय कालोऽयमिति विह्वलः । सूतीगृहमगात् तूर्णं प्रस्खलन् मुक्तमूर्धजः ॥ ३ ॥
तमाह भ्रातरं देवी कृपणा करुणं सती । स्नुषेयं तव कल्याण स्त्रियं मा हन्तुमर्हसि ॥ ४ ॥
बहवो हिंसिता भ्रातः शिशवः पावकोपमाः । त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥ ५ ॥
नन्वहं ते ह्यवरजा दीना हतसुता प्रभो । दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम् ॥ ६ ॥

श्रीशुक उवाच

उपगुह्यात्मजामेवं रुदत्या दीनदीनवत् । याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ॥ ७ ॥
तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सुताम् । अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥८॥
सा तद्धस्तात् समुत्पत्य सद्यो देव्यम्बरं गता । अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥९॥
दिव्यस्रगम्बरालेपरत्नाभरणभूषिता । धनुःशूलेषुचर्मासिशङ्खचक्रगदाधरा ॥१०॥
सिद्धचारणगन्धर्वैरप्सरः किन्नरोरगैः । उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥११॥
किं मया हतया मन्द जातः खलु तवान्तकृत् । यत्र क्व वा पूर्वशत्रुर्मा हिंसीः कृपणान् वृथा॥१२॥
इति प्रभाष्य तं देवी माया भगवती भुवि । बहुनामनिकेतेषु बहुनामा बभूव ह ॥१३॥
तयाऽभिहितमाकर्ण्य कंसः परमविस्मितः । देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥१४॥

---

चतुर्थे त्वष्टमं जन्म श्रुत्वा कंसोतिविह्वलः ।
सम्मन्त्र्य मन्त्रिभिर्दैत्यान् बालघातार्थमादिशत् ॥

बहिरिति द्वयम् । बालध्वनिं रोदनशब्दम् । गृहपालाः श्लेषेण श्वान इव ॥ १ ॥ तूर्णं शीघ्रम् । तत् अष्टमम् भोजराजाय कंसाय यज्जन्म तत् ॥२॥ प्रस्खलन् निपतन्निवेत्यपशकुनं जातम् तत एव तन्मृत्युं सूचयति तल्पात् शयनात् प्रस्खलन्नित्यत्र हेतुः मुक्ता मूर्धजाः कंशा यस्य ॥ ३ ॥ देवी देवकी । स्नुषा पुत्रवधूरिव इयं परिपाल्येत्यर्थः । लुप्तोपमा । वस्तुतस्तु स्नुषेवेति इवघटितपाठः समीचीनः । स्त्रियं कन्याम् । 'कन्या-कुमारिकानार्योः' इति मेदिनी ॥ ४॥ निसृष्टेन प्रेरितेन ॥ ५ ॥ अङ्ग हे भ्रातः । अवरजा कनिष्ठा भगिनी । चरमाम् अन्तिमाम् । मन्दाया मन्दभाग्यायै ॥ ६ । उपगुह्य उरसि कृत्वा । दीनदीनवत् अतिदीनवत् । 'प्रकारे गुणवचनस्य' इति द्वित्वम् । आचिच्छिदे आचकर्ष ॥ ७ ॥ अपोथयत् चिक्षेप । पृष्ठे उपरि । उन्मूलितं त्यक्तं सोहृदं येन । जातमात्रां गर्भनिर्गताम् ॥८॥ देवी भूत्वा । अम्बरमाकाशम् आयुधैः सहिता अष्टौ महाभुजा यस्याः सा ॥ ९ ॥ आलेपश्चन्दनादिः चर्म ढाल इति । उपाहृताः समर्पिता उरवोऽधिका बलयः पूजा-सामग्र्यो यैः ॥११॥ हे मन्द मन्दबुद्धे यत्र क्व वा अनिर्दिष्टस्थाने । निर्देशे च वसुदेववधे तात्कालिकी प्रवृत्तिः स्यादिति । कृपणान् अन्यान् बालकान् ॥ १२ ॥ निकेतेषु विन्ध्याचलादिस्थानेषु । हेति प्रसिद्धे ॥ १३ ॥ अभिहितं कथितम् । प्रश्रितो नम्रः सन् ॥ १४ ॥ हे भाम[1] भगिनीभर्तः । पाप्मना पापमूर्तिना मया । वां

---

१—भामस्तु भगिनीभर्ता इत्यमरः ।

अहो भगिन्यहो भाम मया वां बत पाप्मना । पुरुषाद इवापत्यं बहवो हिंसिताः सुताः ॥१५॥
स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः । काँल्लोकान् वै गमिष्यामि ब्रह्महेव मृतः श्वसन्॥१६
दैवमप्यनृतं वक्ति न मर्त्या एव केवलम् । यद्विस्रम्भादहं पापः स्वसुर्निहतवाञ्छिशून् ॥१७॥
मा शोचतं महाभागावात्मजान् स्वकृतम्भुजः । जन्तवो नस दैकत्र दैवाधीनास्तदाऽऽसते ॥१८॥
भुवि भौमानि भूतानि यथा यान्त्यपयान्ति च । नायमात्मा तथैतेषु विपर्येति यथैव भूः ॥१९॥
यथानेवंविदो भेदो यत आत्मविपर्ययः । देहयोगवियोगौ च संसृतिर्न निवर्तते ॥२०॥
तस्माद् भद्रे स्वतनयान् मया व्यापादितानपि । मानुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः॥२१॥
यावद्धतोऽस्मि हन्तास्मीत्यात्मानं मन्यतेऽस्वदृक् । तावत् तदभिमान्यज्ञो बाध्यबाधकतामियात्१२
क्षमध्वं मम दौरात्म्यं साधवो दीनवत्सलाः । इत्युक्त्वाश्रुमुखः पादौ श्यालः स्वस्रोरथाग्रहीत्२३
मोचयामास निगडाद् विस्रब्धः कन्यकागिरा । देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम् ॥२४॥
भ्रातुः समनुतप्तस्य क्षान्त्वा रोषं च देवकी । व्यसृजद् वसुदेवश्च प्रहस्य तमुवाच ह ॥ २५ ॥
एवमेतन्महाभाग यथा वदसि देहिनाम् । अज्ञानप्रभवाऽहंधीः स्वपरेति भिदा यतः ॥ २६ ॥
शोकहर्षभयद्वेषलोभमोहमदान्विताः । मिथो घ्नन्तं न पश्यन्ति भावैर्भावं पृथग्दृशः ॥ २७ ॥

श्रीशुक उवाच

कंस एवं प्रसन्नाभ्यां विशुद्धं प्रतिभाषितः । देवकीवसुदेवाभ्यामनुज्ञातोऽविशद् गृहम् ॥ २८ ॥
तस्यां रात्र्यांव्यतीतायां कंस आहूय मन्त्रिणः । तेभ्य आचष्ट तत् सर्वं यदुक्तं योगनिद्रया ॥२९॥
आकर्ण्य भर्तुर्गदितं तमूचुर्देवशत्रवः । देवान् प्रति कृतामर्षा दैतेया नातिकोविदाः ॥३०॥
एवं चेत्तर्हि भोजेन्द्र पुरग्रामव्रजादिषु । अनिर्दशान् निर्दशांश्च हनिष्यामोऽद्य शिशून् ।३१।

---

युवयोः । पुरुषादो राक्षसः । बत खेदे ॥१५॥ ब्रह्महा यथा जीवन्मृतस्तद्वदहम् ॥१६॥ यस्य विस्रम्भात् विश्वासात् ॥१७॥ हे महाभागौ । युवां मा शोचतम् । स्वकृतं प्रारब्धफलं भुजः भोक्तॄन् । भुज इति क्विबन्तम् । स्वकृतमिति कृद्योगे बाहुलकात् षष्ठ्यभावः । तदर्हमिति ज्ञापकाद्वा । एकत्र नासते यतो दैवाधीनाः ॥ १८ ॥ भुवि आधारभूतायां भौमानि घटादीनि यथा उत्पद्यन्ते नश्यन्ति तथा आत्मनि आधारे भूतानि देहा एव जायन्ते नश्यन्ति च यथा च एतेषु घटादिषु विक्रियमाणेषु उत्पन्नविनष्टेषु सत्सु भूर्न विक्रियते तथाऽयमात्मापि विकारं न प्राप्नोतीत्यर्थः ॥ १९ ॥ यथा यथावत् एवमजानतः पुंसो विपर्ययः देहात्मबुद्धिः भवति यतो विपर्ययात् भेदः । भेदाच्च देहेत्यादि योज्यम् ॥ २० ॥ व्यापादितान् मारितानपि । अवशो विवशः सन् । स्वकृतं स्वकर्मफलम् ॥ २१ ॥ अस्वदृक् देहाभिमानी केनचिद् बाध्यो भवति कस्यचिद् बाधको भवति एवं च बाध्यबाधकतां तज्जनितपापफलं प्राप्नुयादित्यर्थः ॥ २२ ॥ दौरात्म्यं दौर्जन्यम् । श्यालः कंसः । स्वस्रोः स्वसृतत्पत्योः ॥ २३ ॥ विस्रब्धः विश्वस्तः । निगडात् लोहशृङ्खलातः ॥ २४ ॥ भ्रातुः दौरात्म्यमपराधं क्षान्त्वा क्षमां कृत्वा रोष च व्यसृजत् तत्याज । ह हर्षेण ॥ २५ ॥ यतो ययाऽहंधिया स्वपरेति भिदा भेददृष्टिः । स्वपरेति सुप्सुपेति समासः ॥ २६ ॥ भावैर्निमित्तभूतैः प्राणिभिः भावान् प्राणिनो मिथो घ्नन्तं भावमीश्वरं न पश्यन्ति यतः पृथग्दृष्टयः किन्त्वहमेव हन्ता हतो वा इति मन्यन्ते इत्यर्थः ॥ २७ ॥ विशुद्धं निष्कपटं यथा स्यात्तथेति क्रियाविशेषणम् । अनुज्ञातो दत्ताज्ञश्च ॥ २८ ॥ तेभ्यो मन्त्रिभ्य ॥ २९ ॥ गदितं कथनम् । भावे क्तः । अमर्षः क्रोधः । नातिकोविदाः परिणामादर्शिनः ॥ ३० ॥ हे भोजेन्द्र कंस । अनिर्गतदशदिनान् निर्गतदशदिनांश्च शिशून् अद्य वै अद्यैव हनिष्यामः ॥ ३२ ॥ अस्यतो वाणान् क्षिपतस्ते तव

किमुद्यमः करिष्यन्ति देवाः समरभीरवः । नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥३२॥
अस्यतस्ते शरव्रातैर्हन्यमानाः समन्ततः । जिजीविषव उत्सृज्य पलायनपरा ययुः ॥३३॥
केचित् प्राञ्जलयो दीना न्यस्तशस्त्रा दिवौकसः । मुक्तकच्छशिखाः केचिद् भीताः स्म इतिवादिनः॥
न त्वं विस्मृतशस्त्रास्त्रान् विरथान् भयसंवृतान् । हंस्यन्यासक्तविमुखान् भग्नचापानयुध्यतः॥३५॥
किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः । रहोजुषा किं हरिणा शम्भुना वा वनौकसा ।
किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ॥३६॥
तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे । ततस्तन्मूलखनने नियुङ्क्ष्वास्माननुव्रतान् ॥३७॥
यथाऽऽमयोऽङ्गे समुपेक्षितो नृभिर्न शक्यते रूढपदश्चिकित्सितुम् ।
यथेन्द्रियग्राम उपेक्षितस्तथा रिपुर्महान् बद्धबलो न चाल्यते ॥३८॥
मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः । तस्य च ब्रह्मगोविप्रास्तपो यज्ञाः सदक्षिणाः ॥३९॥
तस्मात् सर्वात्मना राजन् ब्राह्मणान् ब्रह्मवादिनः । तपस्विनो यज्ञशीलान् गाश्च हन्मो हविर्दुघाः॥४०
विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः । श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः ॥४१॥
स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाशयः । तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ।
अयं वै तद्वधोपायो यदृषीणां विहिंसनम् ॥४२॥

श्रीशुक उवाच

एवं दुर्मन्त्रिभिः कंसः सह सम्मन्त्र्य दुर्मतिः । ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥४३॥
संदिश्य साधुलोकस्य कदने कदनप्रियान् । कामरूपधरान् दिक्षु दानवान् गृहमाविशत् ॥४४॥
ते वै रजःप्रकृतयस्तमसा मूढचेतसः । सतां विद्वेषमाचेरुरारादागतमृत्यवः ॥४५॥
आयुः श्रियं यशो धर्मं लोकानाशिष एव च । हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ४६
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे चतुर्थोऽध्यायः ॥४॥

---

शरसमूहैः । उत्सृज्य रणं त्यक्त्वा समन्ततः इतस्ततः ययुः पलायिताः ॥३३॥ मुक्ते कच्छशिखे यैः ॥३४॥ एवं भूतान् त्वं न हंसीत्यन्वयः । अस्त्रमभिमन्त्रितम् । अयुध्यतः न युद्धमिच्छन्तीति क्यच् । अन्यस्मिन् आसक्तान् ॥ ३५ ॥ किं क्षेमेति सार्द्धम् । क्षेमे निर्भयस्थाने । संयुगात् संग्रामादन्यत्र विकत्थनं श्लाघा येषान्तैः । रहोजुषा लक्ष्म्या सह एकान्तवासिना हरिणा किम् । वनम् इलावृतं कैलासो वा ओकः स्थानं यस्य तेन समाधिस्थेनेत्यर्थः ॥ ३६ ॥ सापत्न्यात् शत्रुत्वाद् हेतोः । अनुव्रतान् अनुचरान् । नियुङ्क्ष्व आज्ञापय ॥ ३७ ॥ यथाऽङ्गे समुपेक्षितो रोगः निवर्तयितुं यथा च समुपेक्षित इन्द्रियग्रामः निरोद्धुं न शक्यते तथा साधारणो रिपुरपि उपेक्षितश्चेत् स बद्धबलो भूत्वा महान् सन् नृभिः चालयितुं न शक्यते इत्यन्वयः । रूढपदः बद्धमूलः ॥ ३८ ॥ हि एवार्थे विष्णुरेव । तस्य धर्मस्य ब्रह्म वेदस्तदादयो मूलम् ॥ ३९ ॥ ब्रह्मवादिनः वेदपाठिनः । हविर्दुघा घृतादिदात्र्यः गाः ॥ ४० ॥ तपः स्वधर्मः । तनूः शरीरम् ॥ ४१ ॥ सहीति सार्द्धम् । तन्मूला विष्णुमूलाः । सेश्वराः सशिवाः ॥ ४२ ॥ हितं हितकरम् । आवृतः[1] आसन्नमृत्युः ॥४३॥ कदने मर्दनार्थम् । कदनप्रियान् पापप्रियान् । कदनं मर्दपापयो इति मेदिनी । संदिश्य आज्ञाप्य ॥ ४४ ॥ आचेरुः कृतवन्तः । आरात् समीपे ॥ ४५ ॥ महतामपराधः आशिषो धनपुत्राऽभिलाषान् । किं बहुना सर्वाण्यपि हन्ति इति ॥४६॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां चतुर्थोऽध्यायः ॥४॥

---

१—गतश्रीर्गणकान् द्वेष्टि गतायुश्च चिकित्सकान् । गतश्रीश्च गतायुश्च ब्राह्मणान् द्वेष्टि भारत ॥

## अथ पञ्चमोऽध्यायः

श्रीशुक उवाच

नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः । आहूय विप्रान् वेदज्ञान् स्नातःशुचिरलंकृतः ॥१॥
वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै । कारयामास विधिवत् पितृदेवार्चनं तथा ॥२॥
धेनूनां नियुते प्रादाद् विप्रेभ्यः समलंकृते । तिलाद्रीन् सप्त रत्नौघशातकौम्भाम्बरावृतान् ॥३॥
कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया । शुध्यन्ति दानैः संतुष्टया द्रव्याण्यात्माऽऽत्मविद्यया४
सौमङ्गल्यगिरो विप्राः सूतमागधवन्दिनः । गायकाश्च जगुर्नेदुर्भेर्यो दुन्दुभयो मुहुः ॥५॥
व्रजः सम्मृष्टसंसिक्तद्वाराजिरगृहान्तरः । चित्रध्वजपताकास्रक्चैलपल्लवतोरणैः ॥६॥
गावो वृषा वत्सतरा हरिद्रातैलरूषिताः । विचित्रधातुबर्हस्रग्वस्त्रकाञ्चनमालिनः ॥७॥
महार्हवस्त्राभरणकञ्चुकोष्णीषभूषिताः । गोपाः समाययू राजन् नानोपायनपाणयः ॥८॥
गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम् । आत्मानं भूषयाञ्चक्रुर्वस्त्राकल्पाञ्जनादिभिः॥९
नवकुंकुमकिञ्जल्कमुखपङ्कजभूतयः । बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः ॥१०॥
गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठ्यश्चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः ।
नन्दालयं सवलया व्रजतीर्विरेजुर्व्यालोलकुण्डलपयोधरहारशोभाः ॥ ११ ॥
ता आशिषः प्रयुञ्जानाश्चिरं पाहीति बालके । हरिद्राचूर्णतैलाद्भिः सिञ्चन्त्यो जनमुज्जगुः॥१२

---

पञ्चमे जातकं सूनोः कृत्वा नन्दः पुरीं गतः ।
तत्राऽस्य शौरिणा सार्द्धं मिथः संवाद उच्यते ॥

नन्दस्त्विति द्वयम् । महामना उदारचित्तः । स्वस्त्ययनं स्वस्तिवाचनं कारयित्वा । जातकर्म संस्कारं तथा पितृदेवार्चनं च कारयामासेत्यन्वयः ॥१॥२॥ नियुते द्वेलक्षे । विप्रेभ्यः । रत्नादिभिः अवृतान् सप्त तिलाद्रींश्च[1] प्रादादित्यन्वयः । शतकौम्भैः स्वर्णरसाक्तैर्वस्त्रैर्वा ॥३॥ कालेन भूम्यादि स्नानेन देहादि । शौचेन प्रक्षालनेन वस्त्रादि । संस्कारैर्गर्भादि । तपसा इन्द्रयादि । इज्यया ब्राह्मणादि । दानैर्धनधान्यादि । सन्तुष्ट्या मनो द्रव्यम् च शुद्धयति एवमेतानि द्रव्याणि एतैः कालादिभिः शुद्धयन्ति । आत्मा जीवस्तु आत्मविद्ययैव शुद्धयति ॥४॥ सूताः पौराणिकाः प्रोक्ताः मागधा वंशशंसका वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः । सुमङ्गलमेव सौमङ्गल्यं मङ्गलबोधिकां गिरो येषां ते । स्वार्थे ष्यञ् ॥५॥ पूर्वं सम्मार्जितानि पश्चात् सिञ्चितानि द्वारादीनि यस्य । अन्तराणि अन्तर्भागाः । तोरणं द्वारबहिर्भागः ।॥६॥ रूषिता लिप्ताः । धातवो गैरिकादयः मयूरपिच्छमाला वस्त्राणि काञ्चन मालाश्च विद्यते येषां ते तथाभूता वभूवुरित्यर्थः ॥७॥ महार्हं बहुमूल्यं । कचुकं चोलकम् । शिरो विहाय सर्वांगावर कावस्त्रं चोलकम् ॥८॥ आकल्पा अलङ्काराः ॥९॥ नवकुंकुमकिञ्जल्का नूतनकेशरपत्राणि तैर्मुखकमले भूतिः शोभा यासां ताः गोप्यः बलिभिः उपहारैः सह । श्रोण्यः बाहुलकात्रत् कबभावः ॥१०॥ नन्दालयम् व्रजन्त्यः गोप्यः पथिविरेजुरित्यन्वयः । सुमृष्टानि उज्ज्वलितानि । निष्कं वक्षोऽलङ्करणम् व्यालोलेति पयोधरहारस्य विशेषणं कार्यमन्यथा चलत्कुचा इत्यनेन पुनरुक्तिः स्यात् । सवलयाः सकङ्कणाः । सुमृष्टानि मणिमयानि कुण्डलानि यासां निष्कं कण्ठे यासां चित्राणि अम्बराणि यासां ताश्च ताश्च ताः ॥११॥ हे भगवन् एनं चिरम् पाहि युवराजो भूत्वा अस्मांश्च चिरं पाहीति आशीर्वादं ददानाः ता गोप्यः जनं सिञ्चन्त्यः अजनं श्रीकृष्णम् उच्चैर्जगुः रित्यन्वयः

---

१–उत्तमो दशभिर्द्रोणैः मध्यमः पञ्चभिर्मितः त्रिभिः कनिष्ठो राजेन्द्र तिलशैलः प्रकीर्तितः । तिलाद्रिप्रमाणं भविष्ये ।

अवाद्यन्त विचित्राणि वादित्राणि महोत्सवे । कृष्णे विश्वेश्वरेऽनन्ते नन्दस्य व्रजमागते ॥१३॥
गोपाः परस्परं हृष्टा दधिक्षीरघृताम्बुभिः । आसिञ्चन्तो विलिम्पन्तो नवनीतैश्च चिक्षिपुः १४
नन्दो महामनास्तेभ्यो वासोऽलंकारगोधनम् । सूतमागधवन्दिभ्यो येऽन्ये विद्योपजीविनः ॥१५॥
तैस्तैः कामैरदीनात्मा यथोचितमपूजयत् । विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च ॥ १६ ॥
रोहिणी च महाभागा नन्दगोपाभिनन्दिता । व्यचरद् दिव्यवासःस्रक्कण्ठाभरणभूषिता ॥१७॥
तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान् । हरेर्निवासात्मगुणै रमाक्रीडमभून्नृप ॥१८॥
गोपान् गोकुलरक्षायां निरूप्य मथुरां गतः । नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह ॥१९॥
वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम् । ज्ञात्वा दत्तकरं राज्ञे ययौ तदवमोचनम् ॥२०॥
तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् । प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः ॥२१॥
पूजितः सुखमासीनः पृष्ट्वाऽनामयमादृतः । प्रसक्तधीः स्वात्मजयोरिदमाह विशाम्पते ॥२२॥
दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते । प्रजाशाया निवृत्तस्य प्रजा यत् समपद्यत ॥२३॥
दिष्ट्या संसारचक्रेऽस्मिन् वर्तमानः पुनर्भवः । उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम् ॥२४॥
नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् । ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा ॥२५॥
कच्चित् पशव्यं निरुजं भूर्यम्बुतृणवीरुधम् । बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः ॥२६॥
भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे । तातं भवन्तं मन्वानो भवद्भ्यामुपलालितः ॥२७॥
पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः । न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते ॥२८॥

---

॥१२॥ व्रजं प्रत्यागते अवतीर्णे सति यो महानुत्सवस्तस्मिन् ॥१३॥ गोपाः क्षीरादिभिः आसिञ्चन्तः नवनीतैश्च मुखं विलिम्पन्तो दधि परस्पर चिक्षिपुरित्यन्वयः । नीतैर्गृहीतैर्दध्यादिभिर्नव नन्दान् चिक्षिपुरिति वा ॥१४॥ नन्द इति द्वयम् । तेभ्यो गोपेभ्यो दत्तवानिति शेषः ये च अन्ये तानपि तैः तैः तत्तदभीष्टपदार्थैरपूजयदित्यन्वयः ॥१५॥१६॥१७॥ ततः कृष्णजन्मनः । हरे र्निवासेन हेतुना आत्मनः आत्मांशभूतस्य व्रजस्य ये स्वाभाविका गुणा मोहकत्वादयस्तैश्च लक्ष्म्याः क्रीडास्थानमभूत् ॥१८॥ निरूप्य नियुज्य । हे कुरूद्वह परीक्षित् ॥१९॥ तस्य नन्दस्य अवमोचनं वसतिस्थानम् अवमुच्यते शकटादि यत्र तत् । 'मार्गवासोऽवमोचनम्' इति कोशात् । डेरामित्यर्थः । भ्रातरम् । वैश्यकन्यायां शुरपत्नीभ्रातृजातत्वेन मातुलपुत्रत्वात् । 'भ्राता सहोदरे मित्रे' इति धरणिश्च ॥२०॥ तं प्रियतमं वसुदेवं प्रीतो नन्दः सस्वजे आलिङ्गितवान् मूर्छितो देहो यथोत्तिष्ठति तथा ॥ २१ ॥ अनामयं कुशलम् । नन्देन आहृतः वसुदेव इदं वक्ष्यमाणम् । आह हे निशापते प्रजापते ॥२२॥ हे भ्रातः नन्द । प्रकृष्टमधिकं गतं वयो यस्य तस्य प्रववसो वृद्धस्य ते यत् प्रजा सन्ततिः जाता एतद्दिष्ट्या मङ्गलम् ॥२३॥ अस्मिन् वर्तमानो भवान् पुनर्भव इव उपलब्धो दृष्टः । भवो जन्म ॥२४॥ प्रियेति संबोधनं वा । स्रोतस ओघेन नदीप्रवाहेण नीयमानानां काष्ठादीनां यथैकत्र स्थितिर्न भवति तद्वत् ॥२५॥ यत्र त्वम् आस्से तत् महावनं कच्चिदिति प्रश्ने पशव्यं पशुभ्यो हितकरम् । निरुजम् निर्गता रुक् गोगोपीभ्यो यत्र तत् । समासान्तोऽच् । भागुरिमते टावन्तोऽपि व्याख्येयः । भूरयोऽधिका अम्बुतृणादयो यत्र । वनस्य पशव्यादिरूपत्वे च गोदुग्धादेर्निर्दोषत्वात्पुत्रस्यैव कुशलं पृष्टमिति गूढाभिसन्धिः ॥२६॥ मात्रा रोहिण्या सह तातं पितरं पिवन्तं मन्वानः कच्चित्कुशलमास्ते इत्यन्वयः ॥२७॥ हि यस्मात् सुहृदः बन्धून् प्रति अनुभावितः सम्पादितः त्रिवर्गः धर्मार्थकामरूपः विहित उचितो भवति शास्त्रविहितत्वादित्यर्थः । अर्थाय सुखाय न ॥२८॥ अहो

नन्द उवाच

अहो ते देवकीपुत्राः कंसेन बहवो हताः । एकावशिष्टावरजा कन्या सापि दिवं गता ॥२९॥
नूनं ह्यदृष्टनिष्ठोऽयमदृष्टपरमो जनः । अदृष्टमात्मनस्तत्त्वं यो वेद न स मुह्यति ॥३०॥

वसुदेव उवाच

करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः । नेह स्थेयं बहुतिथं सन्त्युत्पाताश्च गोकुले॥३१॥

श्रीशुक उवाच

इति नन्दादयो गोपाः प्रोक्तास्ते शौरिणा ययुः । अनोभिरनडुद्युक्तैस्तमनुज्ञाप्य गोकुलम् ॥३२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे नन्दवसुदेवसङ्गमो नाम पञ्चमोऽध्यायः॥५॥

## अथ षष्ठोऽध्यायः

श्रीशुक उवाच

नन्दः पथि वचः शौरेर्न मृषेति विचिन्तयन् । हरिं जगाम शरणमुत्पातागमशङ्कितः ॥ १ ॥
कंसेन प्रहिता घोरा पूतना बालघातिनी । शिशूंश्चचार निघ्नन्ती पुरग्रामव्रजादिषु ॥२॥
न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु । कुर्वन्ति सात्वतां भर्तुर्यातुधान्यश्च तत्र हि ॥३॥
सा खेचर्येकदोपेत्य पूतना नन्दगोकुलम् । योषित्वा माययाऽऽत्मानं प्राविशत् कामचारिणी ।४।

---

इति खेदे । ते स्त्री या देवकी तस्याः पुत्राः । अवरजा पश्चाज्जाता ॥२९॥ अदृष्टं प्राचीनं कर्म तत एव निष्ठा दुःखस्थितिर्यस्य । अदृष्टमे च परमं सुखप्रापकं च यस्य । अदृष्टाधीन इत्यर्थः । अतः आत्मनः स्वस्य तत्त्वं सुख दुःखयोरव्यभिचारिकारणं यो वेद न स मुह्यति ॥३०॥ दत्तो वै दत्त एव । वो युष्माकं युष्माभिः । शेषे षष्ठी । इह मथुरायाम् । बहुतिथं बहुकालम् । अप्यर्थे चकारः यतो गोकुलेऽपि ॥३१॥ शौरिणा वसुदेवेन प्रोक्ता बोधिताः वृषयुक्तैरनोभिः शकटैः तं वसुदेवम् अनुज्ञाप्य पृष्ट्वा ययुः ॥३२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां पञ्चमोऽध्यायः ।

षष्ठे जिघांसया कृष्णं विषं दत्त्वापि पूतना ।
मुक्तिमापेति तस्यैवं दयालुत्वमुदीर्यते ॥६॥

शौरेर्वसुदेवस्य वचो मृषा नेति पथि विचिन्तयन् सन् हरिमुद्दिश्य शरणं गृहम् । शरणं रक्षकं हरिं वा । शरणं गृहरक्षित्रोः इति कोशात् ॥ १ ॥ प्रहिता प्रेषिता । निघ्नन्ती मारयन्ती । बाहुलकान्नुम् ॥ यत्र हरेः श्रवणकीर्तनादीनि जना न कुर्वन्ति तत्रैव यातुधान्यो राक्षस्योऽन्ये विघ्नकर्तारश्च सन्ति । यत्र साक्षात् भगवान् तत्र का चिन्तेति । कथंभूतस्य । सात्वता भक्तानां भर्तुः पालकस्य ॥ ३ ॥ खेचरी आकाशचारिणी राक्षसी । योषयित्वा वरस्त्रियं विधाय गोकुलमुपेत्य गृहं प्राविशदित्वयः । योषिच्छब्दात् योषाशब्दाद्वा तत्करोतीति णिजन्तात् क्त्वा इट् बाहुलकात् णिलोपः। तामिति द्वयम् । तां वनितां पूतनां पतिं द्रष्टुमागतां श्रियमिव गोप्योऽमंसतेत्यन्वयः । केशपाशे व्यतिषक्ता गुम्फिता

तां केशबन्धव्यतिषक्तमल्लिकां बृहन्नितम्बस्तनकृच्छ्रमध्यमाम् ।
सुवाससं कम्पितकर्णभूषणत्विषोल्लसत्कुन्तलमण्डिताननाम् ॥५॥

वल्गुस्मितापाङ्गविसर्गवीक्षितैर्मनो हरन्तीं वनितां व्रजौकसाम् ।
अमंसताम्भोजकरेण रूपिणीं गोप्यः श्रियं द्रष्टुमिवागतां पतिम् ॥६॥

बालग्रहस्तत्र विचिन्वती शिशून् यदृच्छया नन्दगृहेऽसदन्तकम् ।
बालं प्रतिच्छन्ननिजोरुतेजसं ददर्श तल्पेऽग्निमिवाहितं भसि ॥७॥

विबुध्य तां बालकमारिकाग्रहं चराचरात्माऽऽस निमीलितेक्षणः ।
अनन्तमारोपयदङ्कमन्तकं यथोरगं सुप्तमबुद्धिरज्जुधीः ॥८॥

तां तीक्ष्णचित्तामतिवामचेष्टितां वीक्ष्यान्तरा कोशपरिच्छदासिवत् ।
वरस्त्रियं तत्प्रभया च धर्षिते निरीक्षमाणे जननी ह्यतिष्ठताम् ॥९॥

तस्मिन् स्तनं दुर्जरवीर्यमुल्वणं घोराङ्कमादाय शिशोर्ददावथ ।
गाढं कराभ्यां भगवान् प्रपीड्य तत्प्राणैः समं रोषमन्वितोऽपिबत् ॥१०॥

सा मुञ्च मुञ्चालमिति प्रभाषिणी निष्पीड्यमानाऽखिलजीवमर्मणि ।
विवृत्य नेत्रे चरणौ भुजौ मुहुः प्रस्विन्नगात्रा क्षिपती रुरोद ह ॥११॥

---

मल्लिका तत्कुसुमानि यस्याः । बृहद्भ्यां नितम्बस्तनाभ्याम् कृच्छ्रं कृशं मध्यमम् उदरं यस्याः । सुन्दरे वाससी यस्याः । कम्पितयोः कर्णभूषणयो स्त्विषाउल्लसन्तो येऽलकास्तैर्मण्डितमाननं यस्याः । वल्गु रम्यं स्मितं येषु तथाभूताः ये[1]कटाक्षपातास्तत्पूर्वकनिरीक्षणैर्मनो हरन्तीम् ॥५।६॥ बालग्रहः सा पूतना । अजहल्लिङ्गत्वात्पुंस्त्वम् । तत्र नन्दगृहे तल्पे शयानं बालं ददर्श । असतां दुष्टानामन्तकं नाशकम् । पुनः बाल्यनाट्येन प्रतिच्छन्नं तिरोहितं स्वकीयमुरु अधिकं तेजो येन । भसि भस्मनि आहितं स्थापितं भस्याच्छन्नमग्निमिव ॥७॥ तां पूतनां विबुद्ध्य स निमीलितेक्षणः सन् आस । अबुद्धिश्चासौ रज्जुधीश्च स यथा ऽज्ञानतो रज्जुबुद्ध्या सुप्तमुरगं गृह्णाति तद्वत् । अन्तकं कालरूपम् अनन्तमपरिच्छिन्नमपि अङ्कमारोपयदिति शाब्दो विरोधस्तेनाद्भुतरसो व्यञ्जितः ॥८॥ तां वरस्त्रियं पूतनाम् अन्तरा गृहमध्ये वीक्ष्य तया धर्षिते अभिभूते जनन्यौ केवलम् अतिष्ठतां न तु निवारितवत्यौ । अतिवामम् अतिमनोहरम् । वामः क्रूरे मनोहर इति यादवः । अन्तस्तैक्ष्ण्ये बहिर्मार्दवे च दृष्टान्तः कोशेति । परिच्छद आवरणम् । जननीति प्रथमाद्विवचम् । 'कृदिकारादक्तिनः' इतिङीवभावपक्षेऽय प्रयोगः रात्रिः । रात्रीतिवत्॥९॥ तस्मिन् स्थाने सा घोरा पूतना श्रीकृष्णमङ्कमादाय तस्य मुखे स्तनं ददावित्यन्वयः । अथानन्तरमेव तत् तं स्तनमपिबत् । प्राणैः सह—दुर्जरं जरयितुमशक्यं विषरूपम् । उल्वणं प्राणहरम् ॥१०॥नेत्रे विवृत्य प्रसार्य चरणादीन् क्षिपन्ती इतस्ततश्चालयन्ती । प्रस्विन्नं स्वेदयुक्तं गात्रं यस्या सा रुरोद। हेति दुःखे ।११। रंहसा महावेगवता

---

१. नेत्रनिमीलनं बालनाट्येन स्वस्य भीरुत्वज्ञापनाय । मद्दृष्टिरेतद्विधानां स्वभावतो भयजनिकाऽतो भीता सती मा निवर्ततामिति विचार्य । गर्हितोऽपि स्त्रीवध आवश्यकत्वान्नेत्रे निमील्यैव कार्य इति हेतुर्वा । शिव इव मय्यपि विषप्रभावो माभूदिति नेत्रनिमीलनेन शिवं दध्यौ । मातृभावदर्शिकायास्तस्याः स्वकर्तृकवधे लज्जानुत्पत्त्यै इति विश्वनाथः । इति समासेन भावप्रदर्शनम् ।

तस्याः स्वनेनातिगभीररंहसा साद्रिर्मही द्यौश्च चचाल सग्रहा ।
रसा दिशश्च प्रतिनेदिरे जनाः पेतुः क्षितौ वज्रनिपातशङ्कया ॥१२॥

निशाचरीत्थं व्यथितस्तना व्यसुर्व्यादाय केशांश्चरणौ भुजावपि ।
प्रसार्य गोष्ठे निजरूपमास्थिता वज्राहतो वृत्र इवापतन्नृप ॥१३॥

पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरद्रुमान् । चूर्णयामास राजेन्द्र महदासीत् तदद्भुतम् ॥१४॥
ईषामात्रोग्रदंष्ट्रास्यं गिरिकन्दरनासिकम् । गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ॥१५॥
अन्धकूपगभीराक्षं पुलिनारोहभीषणम् । बद्धसेतुभुजोर्वङ्घ्रि शून्यतोयह्रदोदरम् ॥१६॥
संतत्रसुः स्म तद् वीक्ष्य गोपा गोप्यः कलेवरम् । पूर्वं तु तन्निःस्वनितभिन्नहृत्कर्णमस्तकाः ॥१७॥
बालं च तस्या उरसि क्रीडन्तमकुतोभयम् । गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसम्भ्रमाः ॥१८॥
यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः । रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः ॥१९॥
गोमूत्रेण स्नापयित्वा पुनर्गोरजसार्भकम् । रक्षां चक्रुश्च शकृता द्वादशाङ्गेषु नामभिः ॥२०॥
गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः पृथक् । न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत ॥२१॥

---

स्वनेन शब्देन । रसा रसातलानि अधोलोकाश्च । प्रतिनेदिरे । कर्मव्यतिहारे तङ् ॥१२॥ इत्थं सा निशाचरी व्यसुर्निष्प्राणा सती मुखं व्यादाय गोष्ठे लक्षणया व्रजसमीपवर्तिनि कंसारामे एवापतत् । पीडाधिक्यादुत्प्लुत्यो-त्प्लुत्य ग्राममप्युल्लङ्घ्य तत्रैव पतिता न तु जनवासे इति व्याख्येयमन्यथा बहुजनसंहारापत्तेः । किञ्च वृक्षाणामेव चूर्णितत्वेनोक्तत्वात् अद्भुतमित्युक्तेश्च तथैव प्रतीयते ॥१३॥ तद्देहः पूतनादेहः । द्रुमान् षट्क्रोशमध्य-वर्तिनः वृक्षान् चूर्णयामास कंसारामोऽपि तत्प्रमाणक एव ज्ञेयोऽतो नासङ्गतिः । पतमान इत्यत्र बाहुलकात् शानच् ॥१४॥ ईषेति त्रयम् । गोपा गोप्यश्च तत् रौद्रं कलेवरं वीक्ष्य संतत्रसुरित्यन्वयः । कथंभूतम् । ईषा-लाङ्गलदण्डस्तत्प्रमाणा उग्रा दंष्ट्रा यस्मिन् तत् आस्यं च यस्मिन् । गण्डशैलौ स्थूलपाषाणखण्डाविव स्तनौ यस्मिन् । प्रकीर्णा इतस्ततो विकीर्णाः केशा यस्मिन् । अन्धकूपाविव गभीरे अक्षिणी यस्मिन् । पुलिनवत् आरोहौ जघने ताभ्याम् भीषणम् । बद्धसेतव इव भुजादयो यस्मिन् । जलशून्यह्रद इव उदरं यस्मिन् । तस्याः निःस्वनितेन पूतनाशब्देन भिन्नानि विदीर्णानि हृदादीनि येषां ते तथाभूता गोपाः । स्मेत्याश्चर्ये ॥१५।१६।१७॥ संभ्रमो भयावेशः ॥१८॥ ता गोप्यः ताभ्यां समं सह । सर्वतः सर्वाङ्गेषु रक्षां चक्रुः ॥१९॥ पुनश्च अर्भकं बालं गोशकृता गोमयेन । द्वादशाङ्गेषु ललाटादिषु केशवादिद्वादशनामभिः । केशवादिनामानि पद्मपुराणे यथा ॥२०॥

ललाटे केशवं ध्यायेन्नारायणमथोदरे ।
वक्षःस्थले माधवं तु गोविन्दं कण्ठकूबरे ॥१॥
विष्णुं च दक्षिणे कुक्षौ बाहौ च मधुसूदनम् ।
त्रिविक्रमं कन्धरे तु वामनं वामपार्श्वके ॥२॥
श्रीधरं वामबाहौ तु हृषीकेशं तु कन्धरे ।
पृष्ठे च पद्मनाभं च कट्यां दामोदरं न्यसेत् ॥३॥

संस्पृष्टसलिलाः कृताचमनाः । आत्मनीति षष्ठ्यर्थे सप्तमी । आत्मनः स्वस्य अङ्गेषु करयोश्च पृथक्-पृथक् न्यस्य बीजन्यासं वक्ष्यमाणम् ॥ २१ ॥ अजो भगवान् तव अङ्घ्रि अङ्घ्री अव्यात् रक्षेत् । जानु जानुनी

अव्यादजोऽङ्घ्रि मणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः ।
हृत् केशवस्त्वदुर ईश इनस्तु कण्ठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥२२॥
चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च ।
कोणेषु शङ्ख उरुगाय उपर्युपेन्द्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात् ॥२३॥

इन्द्रियाणि हृषीकेशः प्राणान् नारायणोऽवतु । श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥२४॥
पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान् परः । क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः॥२५॥
व्रजन्तमव्याद् वैकुण्ठ आसीनं त्वां श्रियः पतिः । भुञ्जानं यज्ञभुक् पातु सर्वग्रहभयङ्करः ॥२६॥
डाकिन्यो यातुधान्यश्च कूष्माण्डा येऽर्भकग्रहाः । भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥२७॥
कोटरा रेवती ज्येष्ठा पूतना मातृकादयः । उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः ॥२८॥
स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये । सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः ॥२९॥

श्रीशुक उवाच

इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम् । पाययित्वा स्तनं माता संन्यवेशयदात्मजम् ॥३०॥
तावन्नन्दादयो गोपा मथुराया व्रजं गताः । विलोक्य पूतनादेहं बभूवुरतिविस्मिताः ॥३१॥
नूनं बतर्षिः संजातो योगेशो वा समास सः । स एव दृष्टो ह्युत्पातो यदाहाऽऽनकदुन्दुभिः॥३२॥
कलेवरं परशुभिश्छित्त्वा तत्ते व्रजौकसः । दूरे क्षिप्त्वाऽवयवशो न्यदहन् काष्ठधिष्ठितम्॥३३।
दह्यमानस्य देहस्य धूमश्चागुरुसौरभः । उत्थितः कृष्णनिर्भुक्तसपद्याहतपाप्मनः ॥३४॥
पूतना लोकबालघ्नी राक्षसी रुधिराशना । जिघांसयापि हरये स्तनं दत्त्वाऽऽप सद्गतिम्॥३५॥
किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने । यच्छन् प्रियतमं किं नु रक्तास्तन्मातरो यथा॥३६॥
पद्भ्यां भक्तहृदिस्थाभ्यां वन्द्याभ्यां लोकवन्दितैः । अङ्गं यस्याः समाक्रम्य भगवानपिबत् स्तनम्३७

---

सुपो लुक् । मणिमान् कौस्तुभधरः । हयास्यो हयग्रीवः । त्वदुरः तव वक्षः । इनः सूर्यः । भुजं भुजौ । 'सुपां सुप्' इत्यौङः अम् इति तोषणी । उरुक्रमो वामनः । कं शिरः ॥ २२ ॥ धनुरसी बिभ्रदिति शेषः । तेन धनुर्धरः मधुहा असिधरश्च अजन इत्यत्रान्वेति । उरु बहुधा गीयते इति उरुगायः । शंखः शंखधरः चतुष्कोणेषु । शखोऽस्यास्तीति शंखः मत्वर्थीयोऽच्प्रत्ययः । तार्क्ष्यो गरुडवाहनः क्षितौ अधस्तात् समन्तात् सर्वतः ॥ २३ ॥ प्राणान् पञ्च । श्वेतद्वीपपतिः वासुदेवः । योगेश्वरोऽनिरुद्धः ॥२४॥ प्रश्निगर्भः प्रद्युम्नः । प्रकृतेः परः संकर्षणः । आत्मानम् अहङ्कारम् ॥२५।२६॥ डाकिन्य इति त्रयम् । अर्भकरूपेण प्राणिनो गृह्णन्ति ये ते पिशाच भेदाः । अपस्मारा मूर्च्छाप्रदग्रहाः । पूतना मृतापि तत्सहचारिण्यः जातिगता अन्या ग्राह्याः । वृद्धा ये बालग्रहा वृद्धा बालाश्च विद्यन्ते ग्राह्यत्वेन येषां ते मत्वर्थीयोऽच् । कासश्वासादयः ॥२७।२८।२९॥ प्रणयः प्रेम । स्तनं स्तन्यम् । संन्यवेशयत् शायितवती । यावन्माता तावदित्यग्रिमेण संबन्धः ॥ ३० ॥ ॥३१॥ बत आश्चर्यें । पूर्वजन्मनि ऋषिः सन्निह संजातः । सम्यक् आस दीप्यते स्म । यत् यम् आह स एव दृष्टः ॥३२॥ तत् षड्योजनगम् । अवयवशः पृथक् पृथक् अवयवम् । वेष्टितमिति पाठः ॥३३॥ कृष्णेन निर्भुक्तः पानविषयीकृत अत एव तत्क्षणमेव हतः पाप्मा पापं यस्य । सुगन्धिस्तु भगवतो दिव्यस्पर्शात् ॥३४।३५॥ यथा रक्ताः अनुरक्ताः कृष्णस्य मातरः यच्छन्ति तथा अन्योऽपि कश्चित् भगवते किन्नु किमपि प्रियतमं पायसादि यच्छन् ददत् सद्गतिमाप्नुयादिति किं पुनर्वक्तव्यम् । मातर इति बहुवचनं तु वत्साहरणलीलाभिप्रायेण ॥३६॥ लोकवन्दितैः ब्रह्मादिभिः ॥३७॥ यातुधानी राक्षसी पूतना स्वर्गं वैकुण्ठम् । गावो मातरश्च तां गतिमवाप्नुयुरिति किमुत वक्तव्यम् ।

यातुधान्यपि सा स्वर्गमवाप जननीगतिम् । कृष्णभुक्तस्तनक्षीराः किमु गावो नु मातरः ॥३८॥
पयांसि यासामपिबत् पुत्रस्नेहस्नुतान्यलम् । भगवान् देवकीपुत्रः कैवल्याद्यखिलप्रदः ॥३९॥
तासामविरतं कृष्णे कुर्वतीनां सुतेक्षणम् । न पुनः कल्पते राजन् संसारोऽज्ञानसम्भवः ॥४०॥
कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः । किमिदं कुत एवेति वदन्तो व्रजमाययुः ॥४१॥
ते तत्र वर्णितं गोपैः पूतनागमनादिकम् । श्रुत्वा तन्निधनं स्वस्ति शिशोश्चासन् सुविस्मिताः ४२
नन्दः स्वपुत्रमादाय प्रेत्यागतमुदारधीः । मूर्घ्न्युपाघ्राय परमां मुदं लेभे कुरूद्वह ॥४३॥
य एतत् पूतनामोक्षं कृष्णस्यार्भकमद्भुतम् । शृणुयाच्छ्रद्धया मर्त्यो गोविन्दे लभते रतिम् ॥४४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे षष्ठोऽध्यायः ॥६॥

## अथ सप्तमोऽध्यायः

### राजोवाच

येन येनावतारेण भगवान् हरिरीश्वरः । करोति कर्णरम्याणि मनोज्ञानि च नः प्रभो ॥ १ ॥
यच्छृण्वतोऽपैत्यरतिर्वितृष्णा सत्त्वं च शुद्ध्यत्यचिरेण पुंसः ।
भक्तिर्हरौ तत्पुरुषे च सख्यं तदेव हारं वद मन्यसे चेत् ॥ २ ॥
अथान्यदपि कृष्णस्य तोकाचरितमद्भुतम् । मानुषं लोकमासाद्य तज्जातिमनुरुन्धतः ॥ ३ ॥

### श्रीशुक उवाच

कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम् ।
वादित्रगीतद्विजमन्त्रवाचकैश्चकार सूनोरभिषेचनं सती ॥ ४ ॥

---

॥३८॥ अलं तृप्तिपूर्वकम् यासामपिबत् तासामित्युत्तरेणान्वयः ॥३९॥ अविरतं निरन्तरम् सुतेक्षणं पुत्रदृष्टिम् ॥४०॥ कटधूमस्य शवधूमस्य । 'कटः श्रोणी शवे' इति शाश्वतः ॥४१॥ ते नन्दादयः । तत्र व्रजे ॥४२॥ प्रेत्य मृत्वा पुनरागतमिवेति व्याख्येयम् । कुरूद्वह हे परीक्षित् ॥४३॥ मोक्ष मोक्षरूपम् आर्भकं बालचरितम् । रतिं प्रीतिम् ॥४४॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां षष्ठोऽध्यायः ॥ ६ ॥

सप्तमे शकटं चोर्ध्वं तृणावर्तमधः क्षिपन् ।
जृम्भमाणो हरिर्मात्रे मुखे विश्वमदर्शयत् ॥७॥

येनेति द्वयम् । यानि कर्माणि तानि नोऽस्माकं मनोज्ञानि मनःप्रीतिकराणि च भवन्ति अतस्तदेव हारं हरिचरितं वद चेत् यदि उचितं मन्यसे इति द्वयोरन्वयः । यच्चरितं शृण्वतः पुंसः अरतिर्मनोग्लानिः विविधा तृष्णा च अपैति नश्यति । सत्त्वमन्तःकरणम् च शुध्यति । हारवत् हृदये धार्यं वा ।१।२। तोकाचरितं बालचरितं वदेत्यनुषङ्गः । तज्जातिं मनुष्यजातिमनुकुर्वतः ॥ ३ ॥ योषितां मध्ये सती यशोदा सूनोरभिषेचनं चकारेत्यन्वयः । कैः । वादित्रैः वाद्यैः सह गीतैः द्विजेषु ये मन्त्रवाचकास्तैः[1] सह । कदाचित् मासत्रयवयसि उत्थानमङ्ग-

---

१. मन्त्रान् ब्रुवन्तीति मन्त्रवाचकाः वैदिकाः । 'ब्रुवो वचिः' ।

नन्दस्य पत्नी कृतमज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः ।
अन्नाद्यवासःस्रगभीष्टधेनुभिः संजातनिद्राक्षमशीशयच्छनैः ॥ ५ ॥
औत्थानिकौत्सुक्यमना मनस्विनी समागतान् पूजयती व्रजौकसः ।
नैवाश्टृणोद् वै रुदितं सुतस्य सा रुदन् स्तनार्थी चरणावुदक्षिपत् ॥ ६ ॥
अधःशयानस्य शिशोरनोऽल्पकप्रवालमृद्वङ्घ्रिहतं व्यवर्तत ।
विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम् ॥ ७ ॥
दृष्ट्वा यशोदाप्रमुखा व्रजस्त्रिय औत्थानिके कर्मणि याः समागताः ।
नन्दादयश्चाद्भुतदर्शनाकुलाः कथं स्वयं वै शकटं विपर्यगात् ॥ ८ ॥

ऊचुरव्यवसितमतीन् गोपान् गोपीश्च बालकाः । रुदतानेन पादेन क्षिप्तमेतन्न संशयः ॥ ९ ॥
न ते श्रद्दधिरे गोपा बालभाषितमित्युत । अप्रमेयं बलं तस्य बालकस्य न ते विदुः ॥१०॥
रुदन्तं सुतमादाय यशोदा ग्रहशङ्किता । कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ॥११॥
पूर्ववत् स्थापितं गोपैर्बलिभिः सपरिच्छदम् । विप्रा हुत्वार्चयांचक्रुर्दध्यक्षतकुशाम्बुभिः ॥१२॥
येऽसूयानृतदम्भेर्ष्याहिंसामानविवर्जिताः । न तेषां सत्यशीलानामाशिषो विफलाः कृताः ॥१३॥
इति बालकमादाय सामर्ग्यजुरुपाकृतैः । जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः ॥१४॥
वाचयित्वा स्वस्त्ययनं नन्दगोपः समाहितः । हुत्वा चाग्निं द्विजातिभ्यः प्रादादन्नं महागुणम् ॥१५॥
गावः सर्वगुणोपेता वासःस्रग्रुक्ममालिनीः । आत्मजाभ्युदयार्थाय प्रादात्ते चान्वयुञ्जत ॥१६॥
विप्रा मन्त्रविदो युक्तास्तैर्याः प्रोक्तास्तथाऽऽशिषः । ता निष्फला भविष्यन्ति न कदाचिदपि स्फुटम्

---

परिवर्तनं बहिर्निष्क्रमणं वा तत्र करणीये कौतुकाप्लवे उत्सवाभिषेके तद्दिने च रोहिणीनक्षत्रस्यापि योगे सति ॥४॥ अन्नादिभिः सुपूजितैः विप्रैः कृतं स्वस्तिवाचनं यस्य तं श्रीकृष्णं शनैः अशीशयत् शायितवती शकटस्याधस्तात् दोलायन्त्रे । अन्नं भक्ष्यम् आद्यं भोज्यम् । यद्वा । अन्नैर्धान्यादिभि सम्पाद्यम् अत्तुं योग्यं पायसादि । संजाता निद्रा ययोस्ते तथाभूते अक्षिणी यस्य तम् ॥५॥ व्रजौकसो गोपान् पूजयन्ती । स्तनार्थी स्तन्यार्थी । उदक्षिपत् ऊर्ध्वं चालितवान् । पूजयती बाहुलकान्नुमभावः ॥६॥ शिशोः अल्पप्रमाणः प्रवालवन्मृदुश्च योऽङ्घ्रिस्तेन ताडितं सत् अनः शकटं तदाविष्टोऽसुरः व्यवर्तत विपरीतमपतत् । विध्वस्तानि कुप्यभाजनानि कांस्यादिपात्राणि यथा भवन्तिः तथा । अक्षः चक्रप्रोतो लोहादिरचितो दण्डः । कूबरो युगन्धरः । व्यत्यस्ताः भग्नाः चक्राक्षा यस्य विभिन्नः कूबरश्च यस्य तच्च तच्च तथा ॥७॥ दृष्ट्वेति सार्द्धम् । आर्तवत् परिबब्रुः वेष्टितवन्तः ॥८॥ अव्यवसिता अनिश्चिताः । एतत् शकटम् ॥९॥ श्रद्दधिरे विश्वासं चक्रुः । उत वितर्के ॥१०॥ विप्रैः कर्तृभिः सूक्तैः रक्षोघ्नैः मन्त्रैः । कृणुष्वपाज इत्यादिभिः ॥११॥ बलिभिः बलवद्भिः । सपरिच्छदं ससामग्रीकम् । हुत्वा ग्रहहोमं कृत्वा शकटमर्चयाञ्चक्रुः । धनाश्रयत्वेन लक्ष्म्याः अधिष्ठानत्वात् ॥१२॥ तथाभूताः ये ब्राह्मणास्तेषां कृतास्तैः प्रयुक्ताः आशीर्वादाः । शेषे षष्ठी । निष्फला न भवन्ति । असूया गुणेषु दोषारोपः ॥१३॥ इतीति द्वयम् । उपाकृतैरभिःमन्त्रितैः सामादिमन्त्रैः । अभिषिच्य अभिषेकं कारयित्वा । हुत्वा ह्वावयित्वा तर्पयित्वेत्यर्थः । अन्तर्भावितण्यर्थौ । द्विजोत्तमैः कर्तृभिः । महागुणं षड्रसोपेतम् ॥१४।१५॥ या गावस्ताः प्रादात् । तद्विशेषणं मालिनीः द्वितीयान्तमतो न दोषः । रुक्ममय्यः स्वर्णमय्यः माला विद्यन्ते यासां ताः । येभ्यः प्रादात् ते ब्राह्मणा अन्वयुञ्जत आशीर्वादं दत्तवन्तः । गुणाश्च अल्पभोजनबहुदुग्धप्रदानादिरूपाः ॥१६॥ युक्ता

एकदाऽऽरोहमारूढं लालयन्ती सुतं सती । गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत् ॥१८॥
भूमौ निधाय तं गोपी विस्मिता भारपीडिता । महापुरुषमादध्यौ जगतामास कर्मसु ॥१९॥
दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रणोदितः । चक्रवातस्वरूपेण जहारासीनमर्भकम् ॥२०॥
गोकुलं सर्वमावृण्वन् मुष्णंश्चक्षूंषि रेणुभिः । ईरयन् सुमहाघोरशब्देन प्रदिशो दिशः ॥२१॥
मुहूर्त्तमभवद् गोष्ठं रजसा तमसाऽऽवृतम् । सुतं यशोदा नापश्यत्तस्मिन् न्यस्तवती यतः ॥२२॥
नापश्यत् कश्चनात्मानं परं चापि विमोहितः । तृणावर्तनिसृष्टाभिः शर्कराभिरुपद्रुतः ॥२३॥

इति खरपवनचक्रपांसुवर्षे सुतपदवीमबलाऽविलक्ष्य माता ।
अतिकरुणमनुस्मरन्त्यशोचद् भुवि पतिता मृतवत्सका यथा गौः ॥२४॥

रुदितमनुनिशम्य तत्र गोप्यो भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः ।
रुरुदुरनुपलभ्य नन्दसूनुं पवन उपारतपांसुवर्षवेगे ॥२५॥

तृणावर्तः शान्तरयो वात्यारूपधरो हरन् । कृष्णं नभोगतो गन्तुं नाशक्नोद् भूरिभारभृत् ॥२६॥
तमश्मानं मन्यमान आत्मनो गुरुमत्तया । गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम् ॥२७॥
गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः । अव्यक्तरावो न्यपतत् सहबालो व्यसुर्व्रजे ॥२८॥

तमन्तरिक्षात् पतितं शिलायां विशीर्णसर्वावयवं करालम् ।
पुरं यथा रुद्रशरेण विद्धं स्त्रियो रुदत्यो ददृशुः समेताः ॥२९॥

प्रादाय मात्रे प्रतिहृत्य विस्मिताः कृष्णं च तस्योरसि लम्बमानम् ।

---

जितेन्द्रियाः । या यथा प्रोक्तास्तास्तथैव न निष्फलाः ॥१७॥ आरोहमुत्सङ्गम् । सती यशोदा गरिमाणं भारम् । कूटवत् शिखरवत् ॥१८॥ जगतां संसारिणां मध्ये कर्मसु आस संल्लग्ना बभूव । यद्वा । जगतां लोकानां महापुरुषं पितामहम् । जगतां भारेण वा ॥१९॥ प्रणोदितः कंसेन प्रेषितः । चक्राकारवायुः । जहार उत्थाय जगाम । हरणकाले भगवान् लघुर्जातोऽन्यथा सोऽपि हर्तुं न शक्नुयात् ॥२०॥ मुष्णन् अपहरन् पिहितानि कुर्वन् नृणामिति शेषः । ईरयन् ध्वनिताः कुर्वन् । विदिशः आग्नेय्यादयः ॥२१॥ यतो यत्र स्थापितवती तस्मिन् स्थाने ॥२२॥ निसृष्टाभिः प्रक्षिप्ताभिः शर्कराभिः वालुकाभिः उपद्रुत आक्रान्तः अत एव तृणवत् सकलं-विश्वमावर्तयति नर्तयतीति व्युत्पत्तिरपि विज्ञेया ॥२३॥ खरपवनः प्रचण्डवायुस्तस्य चक्रात् पांसुवर्षे सति । अतिकरुणं यथा स्यात्तथा अनुस्मरन्ती पुत्रं चिन्तयन्ती । शत्रन्तम् । अशोचत् शोकाकुलाऽभूत् भुवि पतिता च ॥२४॥ निवृत्तः पांसुवर्षस्य वेगो यस्मिन् तथाभूते पवने सति यशोदाया रुदितं निशम्य अनु पश्चात् नन्दगृहे आगत्य अन्याश्चापि गोप्यो रुरुदुः सूनुमनुपलभ्य अदृष्ट्वा । पद्यद्वये पुष्पिताग्रावृत्तम् ॥२५॥ वात्या चक्रवातस्तद्रूपधरः तृणावर्तः कथञ्चित् नभोगतः ततः परमुपरि कंससमीपं वा गन्तुं नाशक्नोत् यतो भूरीति योज्यम् अतः शान्तेति ॥२६॥ अतिगुरुतया तम् अश्मवन्तं पर्वतप्रायं मन्वानः आत्मनः कृष्णस्य करेण तेनात्मना श्रीकृष्णेन वा गृहीतः धृतश्च दैत्यः तं त्यक्तुमिच्छन्नपि नाशक्नोत् यतोऽद्भुतः लोकविलक्षणः । आत्मन इति कर्तरि षष्ठी । यद्वा आत्मनः श्रीकृष्णस्य गुरुमत्तया तम् ॥२७॥ अव्यक्तरावोऽस्पष्टशब्दः । व्यसुः निष्प्राणः सन् पुरं त्रिपुरसंज्ञं विमानं मयेन रचितम् । समेता मिलिताः ॥२९॥ आदायेति सार्द्धम् । कृष्णमादाय मात्रे प्रतिहृत्य समर्प्य विस्मिता बभूवुः । पुनः मृत्युमुखादिव प्रमुक्तं तं लब्ध्वा अतिमोदं च प्रापुरित्यन्वयः । अतीवेत्यत्र इवशब्दः

तं स्वस्तिमन्तं पुरुषादनीतं विहायसा मृत्युमुखात् प्रमुक्तम् ।
गोप्यश्च गोपाः किल नन्दमुख्या लब्ध्वा पुनः प्रापुरतीव मोदम् ॥३०॥

अहो बतात्यद्भुतमेष रक्षसा बालो निवृत्तिं गमितोऽभ्यगात् पुनः ।
हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भयाद् विमुच्यते ॥३१॥

किं नस्तपश्चीर्णमधोक्षजार्चनं पूर्तेष्टदत्तमुत भूतसौहृदम् ।
यत् सम्परेतः पुनरेव बालको दिष्टया स्वबन्धून् प्रणयन्नुपस्थितः ॥३२॥

दृष्ट्वाद्भुतानि बहुशो नन्दगोपो बृहद्वने । वसुदेववचो भूयो मानयामास विस्मितः ॥३३॥
एकदार्भकमादाय स्वाङ्कमारोप्य भामिनी । प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥३४॥
पीतप्रायस्य जननी सा तस्य रुचिरस्मितम् । मुखं लालयती राजञ्जृम्भतो ददृशे इदम् ॥३५॥

खं रोदसी ज्योतिरनीकमाशाः सूर्येन्दुवह्निश्वसनाम्बुधींश्च ।
द्वीपान् नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजङ्गमानि ॥३६॥

सा वीक्ष्य विश्वं सहसा राजन् संजातवेपथुः । सम्मील्य मृगशावाक्षी नेत्रे आसीत् सुविस्मिता ३७

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे तृणावर्तमोक्षो नाम सप्तमोऽध्यायः ॥७॥

## अथाष्टमोऽध्यायः

### श्रीशुक उवाच

गर्गः पुरोहितो राजन् यदूनां सुमहातपाः । व्रजं जगाम नन्दस्य वसुदेवप्रचोदितः ॥१॥
तं दृष्ट्वा परमप्रीतः प्रत्युत्थाय कृताञ्जलिः । आनर्चाधोक्षजधिया प्रणिपातपुरःसरम् ॥२॥

---

मुखादित्यत्रान्वेति । अत्र ल्यब्लोपे पञ्चमी । अतिशब्दः मोदमित्यत्रान्वेति । पुरुषादो राक्षसः ॥३०॥ अहो आश्चर्ये । बत हर्षे । निवृत्तिं गतः मृत्युं प्रापितोऽपि अभ्यगात् संमुखं प्राप्तः । यद्वा । अभि निर्भयं यथा स्यात्तथा । हिंस्रो दैत्यः ॥३१॥ नोऽस्माभिः किं तप आदि चीर्णं कृतम् । यत् यस्मात् संपरेतः मृतोऽपि इत्यज्ञदृष्टया प्रणयन् हर्षयन् उपस्थित एतद् दिष्टया भद्रं जातम् । पूर्तं वाप्यादिनिर्माणम् । इष्टं यागादि । दत्तं दानम् ॥३२॥ बृहद्वने महावने ॥३३॥ भामिनी सुन्दरी । प्रस्नुतं स्रवद्दुग्धम् ॥३४॥ प्रायेण पीत इति पीतप्रायः । कर्मविवक्षया कर्तरि क्तः । आहिताग्न्यादित्वात्पीतशब्दस्य पूर्वनिपातः । लालयती बाहुलकान्नुमभावः । इदं विश्वम् ॥३५॥ रोदसी द्यावाभूमी । ज्योतिषामनीकं नक्षत्रगणम् । आशा दिशः । श्वसनो वायुः । नगान् पर्वतान् । तेषां दुहितॄः नदीः किं बहुना यानि भूतानि तानि च सर्वाणि ददृशे इत्यनुषङ्गः ॥३६॥ सहसा अकस्मात् । संजातवेपथुः उत्पन्नकम्पा । मृगशावस्येव त्रस्ते अक्षिणी यस्याः सा ॥३७॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे गूढार्थदीपिन्यां सप्तमोऽध्यायः ॥७॥

गर्गाचार्यो व्रजं गत्वा चक्रे नामामि बालयोः ।
मृद्भक्षणात्तदैश्वर्यं प्रोच्यते स्पष्टमष्टमे ॥ ८ ॥

यदूनां पुरोहित इति योज्यम् । सुशब्देन मुख्यत्वम् ॥१॥ तं गर्गाचार्यम् ॥२॥ सुष्ठु आसने । आतिथ्यम्

सूपविष्टं कृतातिथ्यं गिरा सूनृतया मुनिम् । नन्दयित्वाऽब्रवीद् ब्रह्मन् पूर्णस्य करवाम् किम् ॥३॥
महद्विचलनं नृणां गृहिणां दीनचेतसाम् । निःश्रेयसाय भगवन् कल्पते नान्यथा क्वचित्॥४॥
ज्योतिषामयनं साक्षाद् यत्तज्ज्ञानमतीन्द्रियम् । प्रणीतं भवता येन पुमान् वेद परावरम् ॥५॥
त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान् कर्तुमर्हसि । बालयोरनयोर्नृणां जन्मना ब्राह्मणो गुरुः ॥६॥

गर्ग उवाच

यदूनामहमाचार्यः ख्यातश्च भुवि सर्वतः । सुतं मया संस्कृतं ते मन्यते देवकीसुतम् ॥७॥
कंसः पापमतिः सख्यं तव चानकदुन्दुभेः । देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति ॥८॥
इति संचिन्तयञ्छ्रुत्वा देवक्या दारिकावचः । अपि हन्ताऽऽगताशङ्कस्तर्हि तन्नोऽनयो भवेत्॥९॥

नन्द उवाच

अलक्षितोऽस्मिन् रहसि मामकैरपि गोव्रजे । कुरु द्विजातिसंस्कारं स्वस्तिवाचनपूर्वकम् ॥१०॥

श्रीशुक उवाच

एवं सम्प्रार्थितो विप्रः स्वचिकीर्षितमेव तत् । चकार नामकरणं गूढो रहसि बालयोः ॥११॥

गर्ग उवाच

अयं हि रोहिणीपुत्रो रमयन् सुहृदो गुणैः । आख्यास्यते राम इति बलाधिक्याद् बलं विदुः ॥
यदूनामपृथग्भावात् संकर्षणमुशन्त्युत ॥ १२ ॥
आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः॥१३॥
प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः । वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते ॥१४॥
बहूनि सन्ति नामानि रूपाणि च सुतस्य ते । गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥१५॥

---

अतिथिसत्कारः । सूनृतया मधुरया । नन्दयित्वा श्लाघयित्वा ॥३।४॥ यत् इन्द्रियातीतं ज्ञानं तत्प्रतिपादकं ज्योतिषामयनं ज्योतिःशास्त्रम् । येन परं भूतम् अवरं भविष्यच्च वेद अतोऽनयोरपि जन्मफलं वदेत्यर्थः ॥५।६॥ मन्यते मंस्यते ॥७॥ कंस इति द्वयम् । दारिका कन्यका । अपि हन्ता यदि हनिष्यति तत् संस्कारकरणं नोऽस्माकं महान् अनयः अनर्थः स्यात् ॥९।१०॥ तत् रहसि संस्कारकरणम् स्वचिकीर्षितं कर्तुमिष्टमेव अतः ॥११॥ अयमिति सार्द्धम् । बलाधिक्यात् बलिष्ठत्वात् बलमधिकमस्येति बलः । मत्वर्थीयोऽच्प्रत्ययः । अपृथग्भावात् एकीकरणात् । सम्यक् कर्षति एकीकरोतीति संकर्षणम् । उत अपि उशन्ति मन्यन्ते वक्ष्यन्तीत्यर्थः ॥१२॥ अनुयुगं युगे युगे । तनू मूर्तीः । शुक्लः सत्ययुगे । कृते शुक्लश्चतुर्बाहुः इत्येकादशोक्तेः । पीतरक्तः हिरण्यवन्मनोहर इत्यर्थः त्रेतायाम् । 'त्रेतायां रक्तवर्णोऽसौ हिरण्य केशः' इत्युक्तेः । इदानीं द्वापरे तु कृष्णतां श्यामत्वं प्राप्तः । द्वापरे भगवान् श्यामः इत्युक्तेः । कलौ तु छन्नः अतस्त्रियुगत्वमेव सिद्धमिति संक्षेपः । कृष्णतामित्युक्तेरस्य कृष्ण इत्येकं नामापि भविष्यतीति सूचितम् ॥१३॥ श्रीमान् तव आत्मजः । क्वचिदिति जन्मान्तरे इति गोपनार्थम् । अभिज्ञा वैयाकरणाः । वसौ अन्तः करणे दीव्यतीति स एव वासुदेवः ॥१४॥ तानि सर्वाणि अहं गर्गाचार्योपि न वेद अन्ये जना न विदुरिति किमुत वक्तव्यम् ॥१५॥ एष कृष्णः । श्रेयः

एष वः श्रेय आधास्यद् गोपगोकुलनन्दनः। अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥१६॥
पुरानेन व्रजपते साधवो दस्युपीडिताः। अराजके रक्ष्यमाणा जिग्युर्दस्यून् समेधिताः ॥१७॥
य एतस्मिन् महाभागाः प्रीतिं कुर्वन्ति मानवाः। नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः १८
तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः। श्रिया कीर्त्यानुभावेन गोपायस्व समाहितः ॥१९॥
इत्यात्मानं समादिश्य गर्गे च स्वगृहं गते। नन्दः प्रमुदितो मेने आत्मानं पूर्णमाशिषाम् ॥२०॥
कालेन व्रजताल्पेन गोकुले रामकेशवौ। जानुभ्यां सह पाणिभ्यां रिङ्गमाणौ विजह्रतुः ॥२१॥

तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोषरुचिरं व्रजकर्दमेषु।
तन्नादहृष्टमनसावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरन्ति मात्रोः ॥२२॥
तन्मातरौ निजसुतौ घृणया स्नुवन्त्यौ पङ्काङ्गरागरुचिरावुपगुह्य दोर्भ्याम्।
दत्त्वा स्तनं प्रपिबतोः स्म मुखं निरीक्ष्य मुग्धस्मिताल्पदशनं ययतुः प्रमोदम् ॥२३॥
यर्ह्यङ्गनादर्शनीयकुमारलीलावन्तर्व्रजे तदबलाः प्रगृहीतपुच्छैः।
वत्सैरितस्त उभावनुकृष्यमाणौ प्रेक्षन्त्य उज्झितगृहा जहृषुर्हसन्त्यः ॥२४॥
शृङ्ग्यग्निदंष्ट्र्यसिजलद्विजकण्टकेभ्यः क्रीडापरावतिचलौ स्वसुतौ निषेद्धुम्।
गृह्याणि कर्तुमपि यत्र न तज्जनन्यौ शेकात आपतुरलं मनसोऽनवस्थाम् ॥२५॥

कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले। अघृष्टजानुभिः पद्भिर्विचक्रमतुरञ्जसा ॥२६॥
ततस्तु भगवान् कृष्णो वयस्यैर्व्रजबालकैः। सहरामो व्रजस्त्रीणां चिक्रीडे जनयन् मुदम् ॥२७॥
कृष्णस्य गोप्यो रुचिरं वीक्ष्य कौमारचापलम्। शृण्वत्याः किल तन्मातुरिति होचुः समागताः २८

---

कल्याणम्। आधास्यत् करिष्यति। इलोप आर्षः। सर्वदुर्गाणि सर्वदुःखानि अतिक्रमिष्यथ। अञ्जसाऽनायासेन ॥१६॥ पुरा पृथ्ववतारे। हे व्रजपते नन्द! अनेन रक्ष्यमाणा समेधिताश्च साधवो दस्यून् चौरान् जिग्युः ॥१७॥ एतान् अरयो न तिरस्कुर्वन्ति। विष्णुपक्षान् देवान् यथाऽसुराः ॥१८॥ यस्मादेवं तस्मात् हे नन्द! गुणादिभिः नारायणः समो येन बहुव्रीहिः नतु षष्ठीतत्पुरुषः। स्वेनैव समाहितः सावधानः सुरक्षितः अथापि लीलासौन्दर्याय त्वमपि गोपाय रक्ष। नन्द आनन्दं च कुरु इति क्रियाश्लेषोऽपि व्याख्येयः। अनुभावेन प्रभावेण। यद्वा। गोपानामये शुभावहविधौ स्वेनैव समाहितः। अयः शुभावहो विधिः इत्यमरः ॥१९॥ आत्मानं नन्दं कृष्णं प्रति वा। आशिषामाशीर्भिः सर्वार्थैरित्यर्थः। शेषे षष्ठी ॥२०॥ व्रजता गच्छता रिङ्गमाणौ गच्छन्तौ इगि रिगि लिगि गत्यर्थाः। विजह्रतुः क्रीडां चक्रतुः ॥२१॥ दधिकर्दमेषु सरीसृपन्तौ अतिशयेन चलन्तौ। घोषाः क्षुद्रघण्टिका ( घुंघरू ) लोकं मार्गे गच्छन्तं कञ्चिदन्यं जनम् अनुसृत्य क्षणान्तरे च परकीयोऽयमिति ज्ञात्वा मुग्धवत् अज्ञवत् मात्रोः समीपमाजग्मतुः ॥२२॥ तयोः मातरौ निजसुतौ दोर्भ्यामुपगुह्य पुनः प्रपिबतोः तयोर्मुखं निरीक्ष्य प्रकृष्टं मोदं प्रापतुरित्यन्वयः। घृणया कृपया दुग्धं स्रवन्त्यौ। मातृविशेषणम्। पङ्कोदध्यादिपङ्कः स एवाङ्गरागस्तेन रुचिरौ। कथंभूतं मुखम्। मुग्धं मोहकं स्मितं यस्मिन् अल्पाः सूक्ष्मा दन्ताश्च यस्मिन् तच्च तच्च ॥२३॥ यर्हि एतादृशौ जातौ तदा अन्तर्व्रजे वत्सैरनुकृष्यमाणौ उभौ रामकृष्णौ प्रेक्षमाणास्तदबला व्रजाङ्गनाः उज्झितगृहाः त्यक्तगृहकार्याः सत्यः जहृषुः हृष्टा बभूवुः ॥२४॥ शृङ्ग्यादिभिः क्रीडापरौ स्वसुतौ निषेद्धुं यत्र यदा गृहकृत्यान्यपि कर्तुं न शेकाते तदा मनसोऽलमवस्थामतिचञ्चलदशां गेहीयमुखस्य पराकाष्ठामित्यर्थः प्रापतुः। शृङ्गिणो गवादयः। दंष्ट्रिणः श्वादयः। द्विजाः शुकादयः ॥२५॥ जानुभिरिति बहुत्वमुभयापेक्षम्। अञ्जसाऽनायासेन विचेलतुः ॥२६॥ ततः पद्भिश्चलनानन्तरम् चिक्रीडे कर्मव्यतिहारे तङ् ॥२७॥ ह स्पष्टम्। शृण्वन्त्याः। बाहुलकान्नुम्। मुञ्चन् मुञ्चति। जनैराक्रोशे आक्षेपे कृते सति

**वत्सान् मुञ्चन् क्वचिदसमये क्रोशसंजातहासः । स्तेयंस्वाद्वत्त्यथ दधि पयः कल्पितैः स्तेययोगैः । मर्कान् मोक्ष्यन् विभजति स चेन्नात्ति भाण्डंभिनत्ति द्रव्यालाभे स गृहकुपितो यात्युपक्रोश्य तोकान् हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यैश्छिद्रं ह्यन्तर्निहितवयुनः शिक्यभाण्डेषु तद्वित् । ध्वान्तागारे घृतमणिगणं स्वाङ्गमर्थप्रदीपं काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः ॥३०॥ एव धार्ष्टर्यान्युशति कुरुते मेहनादीनि वास्तौ स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथाऽऽस्ते । इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभिर्व्याख्यातार्थाप्रहसितमुखो न ह्युपालब्धुमैच्छत् ।३१। एकदा क्रीडमानास्ते रामाद्या गोपदारकाः । कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन् ॥३२॥ सा गृहित्वा करे कृष्णमुपालभ्य हितैषिणी । यशोदा भयसम्भ्रान्तप्रेक्षणाक्षमभाषत ॥३३॥ कस्मान्मृदमदान्तात्मन् भवान् भक्षितवान् रहः । वदन्ति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययम्**

**श्रीकृष्ण उवाच**

**नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः । यदि सत्यगिरस्तर्हि समक्षं पश्य मे मुखम् ॥३५॥**

---

सति हसति न तु बिभेतीत्यर्थः । अथ लीलान्तरे । स्तेयं चौर्यार्जितमेव स्वादु दध्यादि अत्ति न तु दत्तं यतस्तत् अस्वादु । यौगैरुपायैः । मर्कान् बालमार्जारवानरादीन् मोक्ष्यन् भोजयिष्यन् विभज्य ददाति यदि तृप्ततया कश्चिन्नात्ति तर्हि भाण्डं भिनत्ति । स कृष्णः धक्ष्यामीति गृहाय कुपितो भवति । सगृहा गृहिणो वा तोकान् बालान् उपक्रोश्य नखैश्छित्वा रोदयित्वेत्यर्थः ॥। २९ ॥ विधिं प्राप्त्युपायं रचयति करोति तदपि अप्राप्ते छिद्रं च रचयति यतस्तद्वित् छिद्ररचनावित् । कथंभूतः । शिक्यस्थभाण्डेषु अन्तर्निहितं दध्यादि तस्य वयुनं ज्ञानं यस्य सः । 'वयुनं गमने ज्ञाने' इति धरणिः । स्वाङ्गमेव अर्थस्य दध्यादिपदार्थस्य प्रदीपं प्रकाशकं करोति । कदा-यर्हीति योज्यम् ॥३०॥ हे उशति कमनीये यशोदे । रे चौर इत्याक्षिप्तः सन् त्वमेव चौर इत्यादीनि बहूनि । यद्वा । उशति वास्तौ सुलिप्ते गृहे मेहनं मूत्रपुरीषादि तच्च गवां कपोतानां मयूरादीनां वा शुष्ककमभिप्रेतं न तु स्वोदरमलम् अन्यथा मलमूत्रादिरहिताः इति पुराणोक्तिर्व्याकुप्येत । यद्वा । मे मम उशति वास्तौ गृहे ह स्पष्टं नादीनि नादयुक्तानि धाष्टर्यानीत्यर्थं इति संक्षेपः । सुप्रतीकः साधुरिव नत्वयं साधुः महानुपद्रवीत्यर्थः सुष्ठु प्रतीकोऽवयवसंघो यस्य [1]श्रीमुखं कृष्णमुखम् । उपालब्धुं वाचाऽपि ताडयितुं नैच्छत् ॥ ३१ ॥ दारका बालकाः । क्रीडमानाः कर्मव्यतिहारे शानच् ॥ ३२ ॥ उपालभ्य निर्भत्स्य । भयेन संभ्रान्ते चञ्चले प्रेक्षणं ययोस्ते तथाभूते अक्षिणी यस्य । हे अदान्तात्मन् चपलगात्र । रहः एकान्ते । तेऽग्रजोऽप्येवं वदतीति वचनव्यत्ययेनान्वयः । मत्कुक्षौ आदावेव सर्वमस्तीति अतो बाह्यभक्षणाभावान्नाहमिति सुष्ठूक्तम् । यद्वा । नह्यति बध्नाति जीवमिति नहा माया तस्या इदं कार्यं नाहं जगत् । यद्वा । नह्यते बध्यतेऽज्ञानेनेति नहः प्रपञ्चः स एव नाहस्तं प्रलये भक्षितवानस्मि तर्हि । ततः सर्वेऽमिथ्याभिशेसिनः सत्यवचनाः हे सति मातः । यदि एतेऽगिरो भक्षकास्तर्हि मयैव मुखं पश्य । कीदृशम् । सम्यक् अक्षं ज्ञानं यत्र तत् समक्षम् । यद्वा । अहं ना पुरुषः भक्षितवान् इत्थमन्वयेन सर्वथा श्रीकृष्णस्य सत्यवक्तृत्वमन्यथा न मयोदितपूर्वं वा अनृतं तदिमे विदुः इत्यनेन विरोधः स्यात् ॥ ३५ ॥ यद्येवं सत्यवक्तासि तर्हि व्यादेहि मुखं प्रसारय । व्यादत्त प्रसारितवान् क्रीडया

---

१. अङ्गं प्रतीकोऽवयवः इत्यमरः ।

यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान् हरिः । व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबालकः ॥३६॥
सा तत्र ददृशे विश्वं जगत् स्थास्नु च खं दिशः । साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नीन्दुतारकम् ।३७।
ज्योतिश्चक्रं जलं तेजो नभस्वान् वियदेव च । वैकारिकाणीन्द्रियाणि मनो मात्रा गुणास्त्रयः ।३८।

एतद् विचित्रं सहजीवकालस्वभावकर्माशयलिङ्गभेदम् ।
सूनोस्तनौ वीक्ष्य विदारितास्ये व्रजं सहात्मानमवाप शङ्काम् ॥३९॥
किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः ।
अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः ॥ ४० ॥
अथो यथावन्न वितर्कगोचरं चेतोमनःकर्मवचोभिरञ्जसा ।
यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणतास्मि तत्पदम् ॥ ४१ ॥
अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती ।
गोप्यश्च गोपाः सहगोधनाश्च मे यन्माययेत्थं कुमतिः स मे गतिः ॥ ४२ ॥

इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः । वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः ॥४३॥
सद्यो नष्टस्मृतिर्गोपी साऽऽरोप्यारोहमात्मजम् । प्रवृद्धस्नेहकलिलहृदयाऽऽसीद् यथा पुरा ॥४४॥
त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः । उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम्।४५।

राजोवाच

नन्दः किमकरोद् ब्रह्मन् श्रेय एवं महोदयम् । यशोदा च महाभागा पपौ यस्याः स्तनं हरिः॥४६

---

मनुजेति । वस्तुनोऽव्याहतेति ॥ ३६ ॥ सा यशोदा तत्र मुखे जगत् जंगमं स्थास्नु स्थावरम् खमन्तरिक्षलोकम् भूगोलं भूलोकम् । वायुः प्रवहः येन प्रेरितं ज्योतिश्चक्रं भ्रमति । अग्निस्तडिद्रूपः । अतस्तेजो नभस्वान् इत्याभ्यां न पौनरुक्त्यम् ॥ ३७ ॥ ज्योतिश्चक्रं स्वर्लोकम् नक्षत्र मण्डलम् । नभस्वान् वायुः वियत् आकाशम् । वैकारिकाणि सात्त्विकानि इन्द्रियाणि इन्द्रियाधिष्ठातृदेवता इत्यर्थः । इन्द्रियाणि तु राजसानि । मात्राः शब्दादयस्तामसा । मनोऽपि वैकारिकं वैलक्षण्यात्पुनरुक्तम् ॥ ३८ ॥ जीवादिभिर्लिङ्गानां चराचरशरीराणां भेदो यस्मिन् तदेतद्विश्वं सूनोस्तनौ तत्रापि विदारितास्ये सह एकदैव वीक्ष्य शंकामवापेत्यन्वयाः कालः गुण-क्षोभकः । आशयो वासनां । सहात्मानं कृष्णयशोदासहितम् ॥ ३९ ॥ यत् दृष्टं तदेतत् किम् । उत अपि । बत आश्चर्यं । अथो अथवा । औत्पत्तिकः स्वाभाविकः । आत्मयोगो निजैश्वर्यम् ॥ ४० ॥ अथो अतः चेत आदिभिरञ्जसा साक्षात् यत् न वितर्कगोचरं नानुमानगम्यम् इदं जगत् सृष्टौ यतः प्रतीयते उत्पद्यते स्थितौ येन जीवति प्रलये च यदाश्रयं सत् यल्लीनं भवति तत् अचिन्त्यं पदं स्वरूपं प्रणतास्मि । यथावत् यथार्थरूपेण ॥ ४१ ॥ यन्मायया इत्थं कुमतिर्भेदमतिर्भवति स भगवान् मे गतिः रक्षको भवतु । तदेव दर्शयति—अहं यशोदा पतिर्नन्दः एष कृष्णः । वित्तपा धनाधिष्ठात्री ॥ ४२ ॥ ४३ ॥ आरोहम् अङ्कम् । स्नेहेन कलिलं व्याप्तं हृदयं यस्या सा ॥४४॥ सात्वतैः भक्तैः ॥ ४५ ॥ श्रेयः पुण्यम् । महान् भागो भाग्यं यस्याः सा महाभागा । 'भागा भाग्यांशतुर्यांशाः' इति यादवः ॥४६॥ कृष्णस्य उदारमाकर्षकम् अर्भकस्य इदम् आर्भकम् ईहित बालचरितम् । पितरौ देवकीवसुदेवौ । नान्वविन्देतां नानुभूतवन्तौ । यच्च कवयो गायन्ति तत् यो या च अविन्दत् स नन्दः सा च

पितरौ नान्वविन्देतां कृष्णोदारार्भकेहितम् । गायन्त्यद्यापि कवयो यल्लोकशमलापहम् ॥४७॥

श्रीशुक उवाच

द्रोणो वसूनां प्रवरो धरया सह भार्यया । करिष्यमाण आदेशान् ब्रह्मणस्तमुवाच ह ॥४८॥

जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ । भक्तिः स्यात् परमा लोके ययाञ्जो दुर्गतिं तरेत्॥४९।

अस्त्वित्युक्तः स भगवान् व्रजे द्रोणो महायशाः । जज्ञे नन्द इति ख्यातो यशोदा सा धराऽभवत्॥५०

ततो भक्तिर्भगवति पुत्रीभूते जनार्दने । दम्पत्योर्नितरामासीद् गोपगोपीषु भारत ॥५१॥

कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः । सहरामो वसश्चक्रे तेषां प्रीतिं स्वलीलया ॥५२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे विश्वरूपदर्शनेऽष्टमोऽध्यायः ॥ ८ ॥

## अथ नवमोऽध्यायः

श्रीशुक उवाच

एकदा गृहदासीषु यशोदा नन्दगोहिनी । कर्मान्तरनियुक्तासु निर्ममन्थ स्वयं दधि ॥ १ ॥

यानि यानीह गीतानि तद्बालचरितानि च । दधिनिर्मन्थने काले स्मरन्ती तान्यगायत॥ २ ॥

क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं
पुत्रस्नेहस्नुतकुचयुगं जातकम्पं च सुभ्रूः ।
रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ कुण्डले च
स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममन्थ ॥ ३ ॥

---

किं श्रेयः अकरोत् इति द्वयोरन्वयः । शमलं पातकम् ॥ ४७ ॥ ब्रह्मण आदेशान् गोपालनादीन् । तं ब्राह्मणमुवाच वक्ष्यमाणवाक्यमिति शेषः । ह हर्षे ॥ ४८ ॥ नौ आवयोः । अञ्जो विनैव प्रयासम् । दुर्गतिं संसृतिम् । विशेषणद्वयेन शंकरप्रसक्तिरतो हराविवत्युक्तम् । वस्तुतस्तु महान् अचिन्त्यः देवः क्रीडा यस्य । विश्वे सर्वेऽपि ईश्वरा ब्रह्मादयो यत्र तस्मिन् ॥ ४९ ॥ द्रोणो नन्द इति धरा यशोदेति ॥ ५ ॥ गोपगोपीषु मध्ये दम्पत्योर्नन्द यशोदयोः ॥५१॥ तेषां गोगोपीनन्दयशोदानाम् ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे गूढार्थदीपिन्यामष्टमोऽध्यायः ।

नवमे कृष्णमुत्सृज्य दुग्धोत्ताराय सा गता ।
कोपात् भग्ने च तद्भाण्डे बबन्धोलूखले च तम् ॥ ९ ॥

एकदा दीपमालिकोत्सवे । गेहिनी नन्द पत्नी । कर्मान्तरेषु अन्यकर्मसु । यदा स्वयं दधि ममन्थ तदाऽगायत चेति चकारान्वयः । गीतानि कविभिरिति शेषः ॥१॥२॥ यशोदा दधि निर्ममन्थ । किं कुर्वती सती । सूत्रनद्धं काञ्चीबद्धम् क्षौमं कौशेयं वस्त्रं बिभ्रती । जातकम्पं कुचयुगं च । सर्वत्र द्वितीयान्तानां बिभ्रतीपदेनान्वयः । यद्वा । कं जलं कं घृतं शिरः' इति कोशात् जातं कं घृतं यस्मात् तत् जातकं दधि निर्ममन्थ । कथंभूता ।

तां स्तन्यकाम आसाद्य मथ्नन्तीं जननीं हरिः । गृहीत्वा दधिमन्थानं न्यषेधत् प्रीतिमावहन्॥४॥

तमङ्कमारूढमपाययत् स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम् ।
अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रिते ॥ ५ ॥
संजातकोपः स्फुरितारुणाधरं संदश्य दद्भिर्दधिमन्थभाजनम् ।
भित्त्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयङ्गवमन्तरं गतः ॥ ६ ॥
उत्तार्य गोपी सुश्रृतं पयः पुनः प्रविश्य संदृश्य च दध्यमत्रकम् ।
भग्नं विलोक्य स्वसुतस्य कर्म तज्जहास तं चापि न तत्र पश्यती ॥ ७ ॥
उलूखलाङ्घ्रेरुपरि व्यवस्थितं मर्काय कामं ददतं शिचि स्थितम् ।
हैयङ्गवं चौर्यविशङ्कितेक्षणं निरीक्ष्य पश्चात् सुतमागमच्छनैः ॥ ८ ॥
तामात्तयष्टिं प्रसमीक्ष्य सत्वरस्ततोऽवरुह्यापससार भीतवत् ।
गोप्यन्वधावन्न यमाप योगिनां क्षमं प्रवेष्टुं तपसेरितं मनः ॥ ९ ॥
अन्वञ्चमाना जननी बृहच्चलच्छ्रोणीभराक्रान्तगतिः सुमध्यमा ।
जवेन विस्रंसितकेशबन्धनच्युतप्रसूनानुगतिः परामृशत् ॥ १० ॥
कृतागसं तं प्ररुदन्तमक्षिणी कषन्तमञ्जन्मषिणी स्वपाणिना ।
उद्वीक्षमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयन्त्यवागुरत् ॥ ११ ॥

---

पञ्च वस्तूनि बिभ्रती । वासः कुचयुगं कङ्कणौ कुण्डले स्वेदयुक्तं वक्त्रं चेति पञ्च । रज्जोराकर्षणेन श्रमो ययोस्तयोर्भुजयोश्चलन्तौ कङ्कणौ ।[1]कबरात् केशपाशात् विगलन्त्यो मालत्यो जातिपुष्पाणि यस्याः । क्षुमा अतसी तत्संभवं क्षौमम् । स्नुतं दुग्धस्रावि ॥३॥ स्तन्यं दुग्धम् । मन्थानं मन्थनदण्डम् । आवहन् उत्पादयन् । न्यषेधत मा मथानेति ॥४४॥ अङ्कमारुढं तं स्तनमपाययत् मुखं च ईक्षती सती तमुत्सृज्य जनेन यया वित्यन्वयः । कदा । अधिश्रिते चुल्ल्यामारोपिते दुग्धे उत्सिच्यमाने बहिर्निःस्रियमाणे सति ॥५॥ दद्भिः दन्तैः अधरं संदश्य । दृण-दशमना कुट्टनपाषाणेन भाजनं भित्त्वा अन्तरं गृहमध्यं गतः सन् रह एकान्ते जघास नवनीतमभक्षयत् ॥६॥ सुश्रृतं परिपक्वम् । प्रविश्य मन्थनस्थानम् । दध्यमत्रकं दधिभाजनं भग्नं संदृश्य दृष्ट्वा तच्च स्वसुतस्यैव कर्म विलोक्य ज्ञात्वा तं चापि न पश्यन्ती सती अन्वेषयामासेति शेषः ॥ ७ ॥ परिवर्तितस्य उलूखलस्योपरि स्थितं शिक्यस्थं नवनीतं कामं यथेच्छं मर्कटाय ददतं तं दूरतो निरीक्ष्य शनैः पृष्ठत आगमत् । चौर्येण विशंकिते चञ्चले नेत्रे यस्य ॥८॥ तत उलूखलात् अवरुह्य भीतवत् अपससार पलायनं चकार । तपसा प्राणायामेन प्रेरितं निरुद्धम् अत एव प्रवेष्टुं क्षमं समर्थं योगिनां मनोऽपि यं न प्राप तं ग्रहीतुं गोपी यशोदा अन्वधावत् ॥९॥ अन्वञ्चमाना[2] कृष्ण मनुगच्छन्ती जननी जवेन वेगेन तं परामृशत् पृष्ठतः धृतवती । बृहत्योश्चलन्त्योः श्रेण्योर्भरेण भारेण आक्रान्ता मन्दा गतिर्यस्याः सा । विस्रंसितात् शिथिलात् केशबन्धाच्चुतैः प्रसूनैरनु पश्चात् गतिर्यस्याःसा ॥१०॥ कृतागसं कृतापराधम् । अञ्जती सर्वतः प्रसरन्ती मषी कज्जलं ययोस्ते तथाभूते अक्षिणी नेत्रे कषन्तं संमर्दयन्तम् ।

---

१. 'कबरः केशसंघाते वर्णभेदे सुखाधिके' इति धरणिः ।

२. अञ्चु गतिपूजनयोः धातुः ।

त्यक्त्वा यष्टिं सुतं भीतं विज्ञायाऽर्भकवत्सला । इयेष किल तं बद्धुं दाम्नाऽतद्वीर्यकोविदा ॥१२॥
न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् । पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः ॥१३॥
तं मत्वाऽऽत्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम् । गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा ॥१४॥
तद् दाम बध्यमानस्य स्वार्भकस्य कृतागसः । द्व्यङ्गुलोनमभूत्तेन संदधेऽन्यच्च गोपिका ॥१५॥
यदाऽऽसीत्तदपि न्यूनं तेनान्यदपि संदधे । तदपि द्व्यङ्गुलं न्यूनं यद् यदादत्त बन्धनम् ॥१६॥
एवं स्वगेहदामानि यशोदा संदधत्यपि । गोपीनां सुस्मयन्तीनां स्मयन्ती विस्मिताऽभवत् ॥१७॥
स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः । दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत् स्वबन्धने॥१८
एवं संदर्शिता ह्यङ्ग हरिणा भृत्यवश्यता । स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥१९॥
नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया । प्रसादं लेभिरे गोपी यत्तत् प्राप विमुक्तिदात् ॥२०॥
नायं सुखापो भगवान् देहिनां गोपिकासुतः । ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह ॥२१॥
कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः । अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ ॥२२॥
पुरा नारदशापेन वृक्षतां प्रापितौ मदात् । नलकुबरमणिग्रीवाविति ख्यातौ श्रियान्वितौ ॥२३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे गोपीप्रसादो नाम नवमोध्यायः ॥९॥

---

अवागुरत् अभर्त्सयत् । गुरी उद्यमने' इत्यस्मात् ताडनोद्यमं चकार न तु तताडेत्यर्थः ॥ ११ ॥ इयेष ऐच्छत् । दाम्ना कोमलरज्ज्वा । बद्धुं बन्धुम् । न तस्य वीर्यं कोविदा प्रभावानभिज्ञा ॥१२॥ न चेति द्वयम् । यो जगतः पूर्वापरम् अन्तर्बहिश्च वर्तते यश्च जगत् जगद्रूपश्च । यद्वा । जगतां ब्रह्माण्डानां चयः समूहो यस्मिन्नित्येकं पदं वा । यद्वा । यो बन्धः स जगतः यश्च अजगत् जगद्भिन्नश्च तदीश्वरत्वात् । अक्षेभ्यो जातमक्षजम् अधःकृतमक्षजम् इन्द्रियजन्यं ज्ञानं येन यस्माद्वा अधोक्षजस्तम् अत एव अव्यक्तम् बबन्ध बन्धुमारभत ॥ १३ ॥१४॥ द्वाभ्यामंगुलाभ्याम् ऊनं न्यूनम् । तेन दाम्ना सह अन्यदपि दाम रज्जुं सन्दधे ग्रथितवति ॥ १५ ॥ यत् सन्धितम् । तेन सन्धितेन यत् यत् बन्धनमादत्त तत्तत्सर्वम् द्व्यङ्गुलोनमभूत् । द्वैतनिवृत्तिं विना कदापि नाहं वश्यो भवामि इत्यभिप्रायेण द्व्यंगुलन्यूनता । यद्वा । भक्तिवैराग्यावेव मे बन्धनहेतू इति द्योतनार्थं तस्य न्यूनतेति ॥ १६ ॥ सन्दधती श्रान्तम् । सुस्मयन्तीनां मन्दं मन्दं हसन्तीनां मध्ये स्वयमपि चकिताऽभवत् ॥ १७ ॥ स्विन्नं स्वेदयुक्तन् । विस्रस्ता गलिताः केशबन्धा स्रजो यस्याः स्तस्याः एतेन वैराग्यम् ॥ १८ ॥ अङ्ग हे राजन् स्ववशेन स्वतन्त्रेणापि । सेश्वरं सलोकपालम् इदं जगत् यस्य वशे वर्तते ॥ १९ ॥ विमुक्तिदात् श्रीकृष्णात् गोपी यशोदा यत् यं प्रसादं प्राप तत् तमिमं प्रसादं पुत्रोऽपि न लेभे पौत्रोऽपि न लेभे श्रीर्जायाऽपि न लेभे एवं त्रयोऽपि न लेभिरे इत्यन्वयः । यद्वा । लेभिरे उलूखले इति सप्तम्यन्तं यं प्रसादं प्राप तं विरिञ्चो नेमं न अर्धमपि न प्राप । भवोऽपि नेमं न अनः माता देवकी अपि न । श्रीरपि नेमं न । एवं नकारत्रयस्यापौनरुक्त्यं ज्ञेयम् । नेम इत्यर्द्धे 'लेभिरं धान्यकुट्टनम्' इति निघण्टुः ॥ २० ॥ देहिनां मध्ये यथा भक्तिमता सुखापः भगवान् सुलभः स्तथा ज्ञानिनां नेत्यन्वयः । सुखंनाप्यते इति ॥ २१ ॥ कृष्ण इति द्वयम् । व्यग्रायां लग्नायाम् । अर्जुनौ तन्नामकवृक्षौ नलेति पूर्वजन्मनि कुबेरपुत्रौ यक्षौ किन्तु मदात् यः शापस्तेन वृक्षतां प्रापितौ अर्जुननामक वृक्षौ जाताविंत्यन्वयः ॥ २२ ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे गूढार्थदीपिन्यां नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः

### राजोवाच

कथ्यतां भगवन्नेतत्तयोः शापस्य कारणम् । यत्तद् विगर्हितं कर्म देवर्षेर्येन वा तमः ॥१॥

### श्रीशुक उवाच

रुद्रस्यानुचरौ भूत्वा सुदृप्तौ धनदात्मजौ । कैलासोपवने रम्ये मन्दाकिन्यां मदोत्कटौ ॥२॥

वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ । स्त्रीजनैरनुगायद्भिश्चेरतुः पुष्पिते वने ॥३॥

अन्तः प्रविश्य गङ्गायामम्भोजवनराजिनि । चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः ॥४॥

यदृच्छया च देवर्षिर्भगवांस्तत्र कौरव । अपश्यन्नारदो देवौ क्षीबाणौ समबुध्यत ॥५॥

तं दृष्टवा व्रीडिता देव्यो विवस्त्राःशापशङ्किताः । वासांसि पर्यधुःशीघ्रं विवस्त्रौ नैव गुह्यकौ॥६॥

तौ दृष्टवा मदिरामत्तौ श्रीमदान्धौ सुरात्मजौ । तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ ॥७॥

### नारद उवाच

न ह्यन्यो जुषतो जोष्यान् बुद्धिभ्रंशो रजोगुणः । श्रीमदादाभिजात्यादिर्यत्र स्त्री द्यूतमासवः ।८।

हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः । मन्यमानैरिमं देहमजरामृत्यु नश्वरम् ॥ ९ ॥

---

दशमे रिङ्गताऽनेन पातितौ यमलार्जुनौ ।

तद्विनिर्गतदेवाभ्यां स्तुतिश्चास्य निरूप्यते ॥ १० ॥

तयोर्यद्विगर्हितं कर्म येन देवर्षेः नारदस्यापि तमः क्रोधोऽभूत् किं च यत् शापस्य कारणं जातं तदेतत्सर्वं कथ्यतामित्यन्वयः । वाऽप्यर्थे ॥१॥ रुद्रेति द्वयम् । रम्ये उपवने प्रवहन्ती या मन्दाकिनी तस्यां तत्समीपे वने । सुदृप्तौ गर्वितौ । वरुणदेवताकं यदन्नं तन्मयो सुरा वारुणी[1] उत्कटौ उच्छृङ्खलौ । मदेन आघूर्णिते चञ्चले लोचने ययोः ॥३॥ अन्तर्मध्ये । कथंभूते । अम्भोजानां कमलानां राजयः पङ्क्तयो विद्यन्ते यस्मिन् । व्रीह्यादित्वादिनिः । वनैः राजते इति ताच्छील्ये णिनिर्वा । करेणुभिर्गजीभिः ॥ ४ ॥ तत्र गंगातटे । यदृच्छया अकस्मादेव आगतः[2] क्षीबाणौ च । अश्लीलभाषिणौ वा ॥५॥ तं नारदम् । वासांसि पर्यधुः वेष्टितवत्यः । गुह्यकौ च नैव पर्यधाताम् । एव शब्देन देवीभिः प्रेरितावपि ॥ ६ ॥ अनुग्रहो मदनाशः अर्थः कृष्णदर्शनं च तयोः समाहारद्वन्द्वः ॥ ७ ॥ जोष्यान् प्रियान् विषयान् जुषतः सेवमानस्य पुंसः श्रीमदान्यः आभिजात्यादिः सत्कुलजन्मादिः अन्यो रजोगुणो वा हास्यहर्षादिरूपस्तथा बुद्धिभ्रंशकरो न भवति यथा श्रीमदः । यत्र श्रीमदे स्त्री परस्त्री । आसवः मदिरापानं च ॥ ८ ॥ यत्र येषु स्त्र्यादिषु सत्सु पशवो मनुष्या[2] अपि । हननमपि तेषां मारणधनापहरणापमानादिभेदात् बहुविधं ज्ञेयम् । नश्वरमपि देहम् जरामृत्युरहितं च यथा भवति तथा मन्यमानैः निर्दयैः पुरुषैः ॥९॥ नरदेवभूदेवादिसंज्ञितमपि शरीरं अन्ते असंस्कृतं भक्षितं दग्धं सत् त्रिविध संज्ञतं भवति तत्कृते तत्सुखार्थ

---

१. 'वारुणी वरुणाज्जाता कदम्बादिसमुद्भवा' 'वारुणी वृक्षकोटरात्' इति वक्ष्यमाणत्वात् । यद्वा । ततोऽभूत् वारुणी देवी इति समुद्रमथनाख्यानं च । २. क्षीबृ मदे धातुः ।

२. पशुर्वै देवानाम्' इति श्रुतेः ।

देवसंज्ञितमप्यन्ते कृमिविड्भस्मसंज्ञितम् । भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥१०॥
देहः किमन्नदातुः स्वं निषेक्तुर्मातुरेव च । मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा ॥११॥
एवं साधारणं देहमव्यक्तप्रभवाप्ययम् । को विद्वानात्मसात् कृत्वा हन्ति जन्तूनृतेऽसतः ॥१२॥
असतः श्रीमदान्धस्य दारिद्र्यं परमञ्जनम् । आत्मौपम्येन भूतानि दरिद्रः परमीक्षते ॥१३॥
यथा कण्टकविद्धाङ्गो जन्तोर्नेच्छति तां व्यथाम् । जीवसाम्यं गतो लिङ्गैर्न तथाऽविद्धकण्टकः॥१४॥
दरिद्रो निरहंस्तम्भो मुक्तः सर्वमदैरिह । कृच्छ्रं यदृच्छयाऽऽप्नोति तद्धि तस्य परं तपः ॥१५॥
नित्यं क्षुत्क्षामदेहस्य दरिद्रस्यान्नकाङ्क्षिणः । इन्द्रियाण्यनुशुष्यन्ति हिंसापि विनिवर्तते ॥१६॥
दरिद्रस्यैव युज्यन्ते साधवः समदर्शिनः । सद्भिः क्षिणोति तं तर्षं तत आराद् विशुद्ध्यति ॥१७॥
साधूनां समचित्तानां मुकुन्दचरणैषिणाम् । उपेक्ष्यैः किं धनस्तम्भैरसद्भिरसदाश्रयैः ॥१८॥
तदहं मत्तयोर्माध्व्या वारुण्या श्रीमदान्धयोः । तमोमदं हरिष्यामि स्त्रैणयोरजितात्मनोः ॥१९॥
यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ । न विवाससमात्मानं विजानीतः सुदुर्मदौ ॥२०॥
अतोऽर्हतः स्थावरतां स्यातां नैवं यथा पुनः । स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ॥२१॥
वासुदेवस्य सांनिध्यं लब्ध्वा दिव्यशरच्छते । वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यतः ॥२२॥

श्रीशुक उवाच

एवमुक्त्वा स देवर्षिर्गतो नारायणाश्रमम् । नलकूबरमणिग्रीवावासतुर्यमलार्जुनौ ॥२३॥
ऋषेर्भागवतमुख्यस्य सत्यं कर्तुं वचो हरिः । जगाम शनकैस्तत्र यत्रास्तां यमलार्जुनौ ॥२४॥

---

यो भूतेभ्यः प्राणिभ्यो द्रुह्यति स स्वार्थं स्वहितं किं वेद नैवेत्यर्थः यतो भूतद्रोहात् नरको भवति ॥ १० ॥ स्वं वस्त्विति शेषः धनं वा । निषेक्तुर्गर्भाधानकर्तुः पितुः । मातुः पिता मातामहस्तस्य वा तत्कन्यापुत्रत्वात् । बलिनो राजादेः । क्रेतुर्मौल्येन ग्रहीतुः अग्नेः मृतस्य दाहकरणात् । तदभावे शुनः । अपिना गृध्रादीनां ग्रहणम् । एवं सर्वस्यापि वस्तुतो न कस्यापीति योज्यम् ॥ ११ ॥ एवं निर्धारयितुमशक्यत्वात् साधारणम् अनेकस्वत्वास्पदम् देहम् अव्यक्तात्प्रकृतेः प्रभवस्तस्मिन्नेवाप्ययो लयश्च यस्य तथाभूतम् । आत्मसात्कृत्वा अनात्मानमात्मेति मत्वा को विवेकी जन्तून् हन्ति न कोऽपीत्यर्थः । असतोऽविवेकिनो विना॥१२॥असतोऽजितेन्द्रियस्य अत एव । श्रीमदान्धस्य परंकेवलं अञ्जनं निवर्तकम् । आत्मौपम्येन स्वसादृश्येन परं केवलमीक्षते ततो न द्रुह्यतीति भावः । स्वार्थे ष्यञ्॥१३॥तां कण्टकजन्याम् । प्रत्युत लिङ्गैः मुखम्लान्यादिदुःखचेष्टाभिः ।१४॥ स्तम्भोऽहंकाररूपः 'गर्वरोधनयोः स्तम्भः'इति हलायुधः । यदृच्छया दैवेच्छया । कृच्छ्रं कष्टपूर्वकं भोजनादि तस्य दरिद्रस्य परंतपः कष्टसहनात्॥१५॥क्षुधा क्षामो दुर्बलो देहो यस्य शुष्यन्ति विषयादुपरमन्ति ।१६।दरिद्रस्यैव दरिद्रेणैव । तृतीयार्थे षष्ठी । सद्भिःहेतुभूतैःतर्षं तृष्णां त्यजति।ततः तृष्णाक्षयात् आरात् शीघ्रम् सिध्यति युक्तो भवति॥१७॥किं प्रयोजनं न किमपि । असतो विषयानाश्रयन्ति ये तैः ॥ १८ ॥ तत् तस्मात् । माध्व्या मदिरया । तमोऽज्ञानकृतम् । स्त्रैणयोः स्त्रीलम्पटयोः॥१९॥यत् यस्मात् । तमसा अज्ञानेन प्लुतौ व्याप्तौ । विवाससं नग्नम् । तत्र हेतुः । सुदुर्मदौ मदिरामत्तौ ॥ २० ॥ यतः सुदुर्मदौ अतः स्थावरतां वृक्षताम् अर्हतः । एवं विवाससौ । तत्रापि स्थावरत्वेऽपि॥२१॥दिव्यशरदां दैविकवर्षाणां शते वृत्तेऽतीते सति । स्वर्लोकतां पुनर्देवत्वं स्वस्वरूपं लब्ध्वा । यद्वा लब्धभक्तो सन्तौ स्वर्लोकतां भविष्यथः प्राप्स्यथः । भू प्राप्तौ' इत्यस्मात् ॥२२।२३।२४॥

देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ । तत्तथा साधयिष्यामि यद् गीतं तन्महात्मना ॥२५॥
इत्यन्तरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ । आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम् ॥२६॥

बालेन निष्कर्षयतान्वगुलूखलं तद् दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ ।
निष्पेततुः परमविक्रमितातिवेपस्कन्धप्रवालविटपौ कृतचण्डशब्दौ ॥२७॥
तत्र श्रिया परमया ककुभः स्फुरन्तौ सिद्धावुपेत्य कुजयोरिव जातवेदाः ।
कृष्णं प्रणम्य शिरसाऽखिललोकनाथं बद्धाञ्जली विरजसाविदमूचतुः स्म ॥२८॥

कृष्ण कृष्ण महायोगिंस्त्वमाद्यः पुरुषः परः । व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ॥२९॥
त्वमेकः सर्वभूतानां देहास्वात्मेन्द्रियेश्वरः । त्वमेव कालो भगवान् विष्णुरव्यय ईश्वरः ॥३०॥
त्वं महान् प्रकृतिः सूक्ष्मा रजःसत्त्वतमोमयी । त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ॥३१॥
गृह्यमाणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः । को न्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंवृतः ॥३२॥
तस्मै तुभ्यं भगवते वासुदेवाय वेधसे । आत्मद्योतगुणैश्छन्नमहिम्ने ब्रह्मणे नमः ॥३३॥
यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः । तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसङ्गतैः ॥३४॥
स भवान् सर्वलोकस्य भवाय विभवाय च । अवतीर्णोऽशभागेन साम्प्रतं पतिराशिषाम् ॥३५॥

---

यत् यस्मात् प्रियतमः तत् तस्मात् तेन नारदेन यद्गीतं तत्तथैवेत्यन्वयः ॥ २५ ॥ इत्येवं निश्चित्य । अन्तरेण मध्ये । सप्तम्यर्थे एनप् । तिर्यग्गतं उलूखलं तिरश्चीनं जातम् आत्मनः श्रीकृष्णस्य प्रवेशमात्रेण ॥२६॥ अन्वक्-पृष्ठगामि तत् उलूखेल अनुरत्र पश्चादर्थे अनु अञ्चतीति अन्वक् उलूखलम् आकर्षता बालेन तरसा वेगेन उत्कलित उत्पाटितो मूलबन्धो ययोस्तौ वृक्षौ भुवि निष्पेततुः । कथंभूतौ । परमस्य श्रीकृष्णस्य विक्रमितं पराक्रमस्तेन वेपः कम्पो येषु ते तथाभूताः स्कन्धादयो ययोस्तौ । स्कन्धो महाशाखा । विटपोऽल्पशाखा । दाम रज्जुरुदरे यस्य । चण्डो भयंकरः ॥२७॥ तत्र तदा पतनानन्तरम् । ककुभः सर्वा दिशः प्रति स्फुरन्तौ देदीप्यमानौ अध्याहृतप्रतियोगे कर्मप्रवचनीयत्वेन द्वितीया । यद्वा । अन्तर्भावितण्यर्थतया दिशः प्रकाशयन्तौ । कुजयोर्वृक्षयोः स्थितो जातवेदाः अग्निः यथा मूर्तिमानुपैति तथोपैत्य । विरजसौ नष्टगर्वौ स्मेत्याश्चर्ये ॥२८॥ व्यक्ताव्यक्तं स्थूलसूक्ष्मात्मकमिदं विश्वं ते रूपम् विदुः ॥ २९ ॥ असवः प्राणाः आत्मा अहङ्कारः तेषाम् ईश्वरो नियन्ता त्वमेव ॥ ३० ॥ महान् महत्तत्त्वम् । क्षेत्रं शरीरम् विकारा जन्मादयः षट्[1] ॥ ३१ ॥ प्रकृतैर्गुणैः प्रकृतिगुणकार्यैः गृह्यमाणैर्दृश्यैर्विकारैः बुद्धीन्द्रियादिभि द्रष्टा त्वं न गृह्यसे न ज्ञायसे । गुणसंवृतो देहाद्यावृतः को नु जीवः प्राग्वर्तमानं त्वां विज्ञातु-मर्हति न कोऽपीत्यर्थः ॥३२॥ तस्मै एवं गुणविशिष्टाय । आत्मनस्त्वत्तो द्योतः प्रकाशो येषान्तै गुणैः सत्त्वादि भिश्छन्नो महिमा स्वरूपं यस्य तस्मै ॥ ३३ ॥ यस्यावतारा शरीरेषु देवतीर्यगादिषु । ज्ञायन्ते स भवानित्यु-त्तरेणान्वयः । अशरीरिणः प्राकृतशरीररहितस्य । नास्ति तुल्यमाधिक्यं च येभ्यस्तैः । देहिषु प्राकृतेषु असङ्गतैरसंभावितैः । तैस्तैः वीर्यैर्गोवर्धनधारणादिभिः पराक्रमैः ॥ ३४ ॥ भवाय अभ्युदयाय । विगतो भवः संसारो यस्मात् तस्मै विभवाय मोक्षाय च । अंशावंताराणां भागः प्रादुर्भावो यस्मात्तेन परिपूर्णेन रूपेणेत्यर्थः ।

---

१. जायते अस्तिवर्धते विपरिणमते अपक्षीयते विनश्यति ।

नमः परमकल्याण नमः परममङ्गल । वासुदेवाय शान्ताय यदूनां पतये नमः ॥३६॥

अनुजानीहि नौ भूमंस्तवानुचरकिङ्करौ । दर्शनं नौ भगवत ऋषेरासीदनुग्रहात् ॥३७॥

वाणी गुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः ।

स्मृत्यां शिरस्तव निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥३८॥

श्रीशुक उवाच

इत्थं संकीर्तितस्ताभ्यां भगवान् गोकुलेश्वरः । दाम्ना चोलूखले बद्धः प्रहसन्नाह गुह्यकौ ॥३९॥

श्रीभगवानुवाच

ज्ञातं मम पुरैवैतदृषिणा करुणात्मना । यच्छ्रीमदान्धयोर्वाग्भिर्विभ्रंशोऽनुग्रहः कृतः ॥४०॥

साधूनां समचित्तानां सुतरां मत्कृतात्मनाम् । दर्शनान्नो भवेत् बन्धः पुंसोऽक्ष्णोः सवितुर्यथा ।४१

तद् गच्छतं मत्परमौ नलकूबर सादनम् । संजातो मयि भावो वामीप्सितः परमोऽभवः ॥४२॥

श्रीशुक उवाच

इत्युक्तौ तौ परिक्रम्य प्रणम्य च पुनः पुनः । बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥४३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे नारदशापो नाम दशमोऽध्यायः ॥ १० ॥

---

अरशिषां मनोरथानां पतिर्दाता । त्वमवतीर्णोऽसि ॥३५ ॥ कल्याणेत्यनेन मोक्षप्रदत्वं मङ्गलेत्यनेन ऐहिकामुष्मिकप्रत्यूहनिवारकत्वं च द्योतितम् । पतये षष्ठीयुक्तश्छन्दसि वा इति धिसंज्ञा ॥ ३६ ॥ हे भूमन् सर्वसमर्थ । नौ आवाम् अनुजानीहि गन्तुमाज्ञां देहि । अनुचरः कुबेरः नारदो वा । नौ आवयोर्भगवतस्तव दर्शनम् ॥ ३७ ॥ नोऽस्माकं मनस्तव पादयोः स्मृत्यामित्यन्वयः । न इति बहुवचनन् 'अस्मदो द्वयोश्च' इति सूत्रेण । यद्वा । नोऽस्मत्सम्बधिनां सर्वेषामपि किमुतावयोरित्यर्थः । तव निवासभूतं यज्जगत् तस्य प्रणामे शिरः । यद्वा । त्वन्निवासभूतानां जगतां जंगमभक्तानां नारदादीनाम् भवत्तनूनां भवन्मूर्तीनाम् सतां दर्शने अस्तु ॥ ३८ ॥ संकीर्तितः संस्तुतः ॥ ३९ ॥ ममेति कर्तरि षष्ठी । श्रीविभ्रंशरूपः । तथा सति भगवत्स्मृत्यादिसंभवात् ॥ ४० ॥ मयि कृत आत्मा चित्तं यैस्तेषांम् । यथा सूर्यदर्शनात् अक्ष्णोर्न बन्धः ॥४१॥ सदनमेव सादनं स्वस्थानम् स्वार्थेऽण् । नलेति प्राधान्यादेकस्य संबोधनम् । अहमेव परमः सेव्यः ययोस्तौ तथाभूतौ सन्तौ युवाम् । वां युवयोरपेक्षितो भावः प्रेमा संजातः । कीदृशोऽभवः संसारनिवर्तकः ॥ १२ ॥ उलूखले बद्धः बद्धोलूखलः । अहिताग्न्यादित्वात्परनिपातः । आमन्त्र्य पृष्ट्वा । उत्तरां दिशं तत्तत्र्यामलकाम् ॥४३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे दशमोऽध्यायः ॥ १० ॥

## अथैकादशोऽध्यायः

### श्रीशुक उवाच

गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो रवम् । तत्राजग्मुः कुरुश्रेष्ठ निर्घातभयशङ्किताः ॥१॥
भूम्यां निपतितौ तत्र ददृशुर्यमलार्जुनौ । बभ्रमुस्तदविज्ञाय लक्ष्यं पतनकारणम् ॥२॥
उलूखलं विकर्षन्तं दाम्ना बद्धं च बालकम् । कस्येदं कुत आश्चर्यमुत्पात इति कातराः ॥३॥
बाला ऊचुरनेनेति तिर्यग्गतमुलूखलम् । विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ॥४॥
न ते तदुक्तं जगृहुर्न घटेतेति तस्य तत् । बालस्योत्पाटनं तर्वोः केचित् संदिग्धचेतसः॥५॥
उलूखलं विकर्षन्तं दाम्ना बद्धं स्वमात्मजम् । विलोक्य नन्दः प्रहसद्वदनो विमुमोच ह ॥६॥
गोपीभिः स्तोभितोऽनृत्यद् भगवान् बालवत् क्वचित् । उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयन्त्रवत्
बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम् । बाहुक्षेपं च कुरुते स्वानां च प्रीतिमावहन् ॥८॥
दर्शयंस्तद्विदां लोक आत्मनो भृत्यवश्यताम् । व्रजस्योवाह वै हर्षं भगवान् बालचेष्टितैः ॥९॥
क्रीणीहि भोः फलानीति श्रुत्वा सत्वरमच्युतः । फलार्थी धान्यमादाय ययौ सर्वफलप्रदः ॥१०॥
फलविक्रयिणी तस्य च्युतधान्यं करद्वयम् । फलैरपूरयद् रत्नैः फलभाण्डमपूरि च ॥११॥
सरित्तीरगतं कृष्णं भग्नार्जुनमथाह्वयत् । रामं च रोहिणी देवी क्रीडन्तं बालकैर्भृशम्॥१२॥
नोपेयातां यदाऽऽहूतौ क्रीडासङ्गेन पुत्रकौ । यशोदां प्रेषयामास रोहिणी पुत्रवत्सलाम् ॥१३॥
क्रीडन्तं सा सुतं बालैरतिवेलं सहाग्रजम् । यशोदाऽऽजोहवीत् कृष्णं पुत्रस्नेहस्नुतस्तनी ।१४।
कृष्ण कृष्णारविन्दाक्ष तात एहि स्तनं पिब । अलं विहारैः क्षुत्क्षान्तः क्रीडाश्रान्तोऽसि पुत्रक ।
हे रामागच्छ ताताशु सानुजः कुलनन्दन । प्रातरेव कृताहारस्तद् भवान् भोक्तुमर्हति ॥१६॥

---

एकादशेऽर्भकैः सार्धं कृष्णो वृन्दावनं गतः ।
तत्र संचारयन् वत्सानहन् वत्सबकासुरौ ॥ १ ॥

रवं शब्दम् । तत्र पतनस्थले । निर्घातो निरभ्रवज्रपातस्तस्मात् यद्भयं तेन ॥ १ ॥ भूम्यामित्यर्द्धम् ॥ २ ॥ तत् पुरोवर्ति लक्ष्यं दृश्यमानं पतनकारणं बालकमविज्ञाय बभ्रमुः कथं पेततुरिति भ्रान्तिं जग्मुः । इदं कर्म । कुतः कारणात् । कातरा भीताः सन्तः ॥ ३ ॥ वृक्षयोर्मध्यगतेन विकर्षता अनेन बालेन पातितौ ताभ्यां निर्गतौ दिव्यपुरुषावपि अचक्ष्महि दृष्टवन्तो वयम् ॥ ४ ॥ ये तार्किकाः ते गोपा तदुक्तं बालोक्तं न जगृहुः । केचित् तार्किकेतरे ॥ ५ ॥ ह हर्षे ॥ ६ ॥ स्तोभितः करतालादिना प्रोत्साहितः । मुग्ध इव सुन्दरो वा । तद्वशः गोपीवशः सन् दारुयन्त्रं काष्ठपुत्तलिका तद्वत् ॥ ७ ॥ पीठकं काष्ठपीठम् । उन्मानं प्रस्थम् । पादुकं पादपीठम् । समाहारद्वन्द्वोऽयम् । बिभर्ति गृहीत्वैव निषीदति । क्षेपं चालनम् । आवहन् सम्पादयितुं हेतौ शतृप्रत्ययः ॥ ८ ॥ तद्विदामैश्वर्यविदां नारदादीनां च । उवाह प्राप ॥९॥१०॥ सा फलविक्रयिणी फलैः । तेन कृष्णेन च रत्नैः अपूरि पूरितम् ॥ ११ ॥ अथ लीलान्तरे ॥ १२ ॥ धूसरितं मलिनम् । आवह कुरु । जन्मर्क्षं जन्मनक्षत्रम् ॥ १३ ॥ मृष्टान् उद्वर्तनादिर्भिर्निर्मलीकृतान् ॥ १४ ॥ १५ ॥ अतिवेलं भोजनबेलामतिक्रान्तम् । आजोहवीत् पुनः

प्रतीक्षते त्वां दाशार्ह भोक्ष्यमाणो व्रजाधिपः। एह्यावयोः प्रियं धेहि स्वगृहान् यात बालकाः१७
धूलिधूसरिताङ्गस्त्वं पुत्र मज्जनमावह। जन्मर्क्षमद्य भवतो विप्रेभ्यो देहि गाः शुचिः१८॥
पश्य पश्य वयस्यांस्ते मातृमृष्टान् स्वलंकृतान्। त्वं च स्नातः कृताहारो विहरस्व स्वलंकृतः१९॥

इत्थं यशोदा तमशेषशेखरं मत्वा सुतं स्नेहनिबद्धधीर्नृप।
हस्ते गृहीत्वा सहराममच्युतं नीत्वा स्ववाटं कृतवत्यथोदयम् ॥२०॥

गोपवृद्धा महोत्पाताननुभूय बृहद्वने। नन्दादयः समागम्य व्रजकार्यममन्त्रयन् ॥२१॥
तत्रोपनन्दनामाऽऽह गोपो ज्ञानवयोऽधिकः। देशकालार्थतत्त्वज्ञः प्रियकृद् रामकृष्णयोः॥२२॥
उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः। आयान्त्यत्र महोत्पाता बालानां नाशहेतवः॥२३॥
मुक्तः कथंचिद् राक्षस्या बालघ्न्या बालको ह्यसौ। हरेरनुग्रहान्नूनमनश्चोपरि नापतत् ॥२४॥
चक्रवातेन नीतोऽयं दैत्येन विपदं वियत्। शिलायां पतितस्तत्र परित्रातः सुरेश्वरैः॥२५॥
यन्न म्रियेत द्रुमयोरन्तरं प्राप्य बालकः। असावन्यतमो वापि तदप्यच्युतरक्षणम् ॥२६॥
यावदौत्पातिकोऽरिष्टो व्रजं नाभिभवेदितः। तावद् बालानुपादाय यास्यामोऽन्यत्र सानुगाः २७
वनं वृन्दावनं नाम पशव्यं नवकाननम्। गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम् ॥२८॥
तत्तत्राद्यैव यास्यामः शकटान् युङ्क्त मा चिरम्। गोधनान्यग्रतो यान्तु भवतां यदि रोचते ॥२९॥
तच्छ्रुत्वैकधियो गोपाः साधु साध्विति वादिनः। व्रजान् स्वान् स्वान् समायुज्य ययू रूढपरिच्छदाः
वृद्धान् बालान् स्त्रियो राजन् सर्वोपकरणानि च। अनःस्वारोप्य गोपाला यत्ता आत्तशरासनाः३१

---

पुनराह्वयत्। आङ्पूर्वकात् ह्वेञः यङ्लुगन्ताल्लङ्। 'अभ्यस्तस्य च' इति सम्प्रसारणम् ॥१६॥ स्तनं स्तन्यं। पुत्रक। अनुकम्पायां कन्। क्षुत्क्षान्तः बुभुक्षितः॥ १७ ॥१८॥ हे दाशार्ह यदुवंशोद्भव। धेहि कुरु॥ १९॥ अशेषाणां ब्रह्मादीनां शेखरं चूडामणिं तमच्युतं सहरामं स्ववाटं स्वगृहमार्गं स्वस्थानं वा नीत्वा। 'वाटो मार्गवृतिस्थाने' इति मेदिनी। अथ साकल्येन। आभ्युदयिकं माङ्गलिकं स्नानादि कृतवती॥ २०॥ समागम्य मिलित्वा। व्रजकार्यं गोकुलहितम् अमन्त्रयन् विचारितवन्तः॥ २१॥ उपनन्दो नन्दस्य ज्येष्ठभ्राता। यस्मिन् देशे काले च यथा प्रयोजनं सिध्यति तद्रहस्यवेत्ता॥ २२॥ इतो बृहद्वनात् उत्थातव्यम् अन्यत्र गन्तव्यम् ॥ २३॥ अनः शकटम् ॥ २४॥ चक्रवातेन तृणावर्तेन। विपदं वीनां पक्षिणां पदं विहारस्थानं वियत् आकाशं प्रति नीतः। तत्र तदा ॥२५॥ असौ कृष्णः। अच्युतेनैव॥२६॥ औत्पातिक उत्पातजनितः। अरिष्टोऽशुभसूचकोऽनर्थः। इतः स्थानात् ॥२७॥ पशव्यं पशुभ्यो हितकरम्। नवकाननम्। नवानि काननानि अवान्तरवनानि निधुवनबिल्ववनादीनि यत्र। यद्वा। कः ककारः आनने आदौ येषां ते काननाः कदम्बकेशरादयस्ते नवा नित्यनूतना यत्र। यद्वा। नवा नवसंख्याकाः कादिवृक्षाः कमलकर्णिकारादयो यत्र। यद्वा। नूयते स्तूयते इति नवं स्तुतं जलं यस्याः सा नवका कालिन्दी सा आनने अग्रे यस्य। यद्वा। न बकस्याननं मुखं यत्र तत्तथा। बकमुखस्यात्रैवोत्पाटनात् अत्रनञर्थेन नशब्देन समासः। पुण्या अद्रितृणवीरुधो यत्र तत् 'ससासान्तोऽच्। पुण्याद्रयः गोवर्धनादयः। तृणा उशीरादयः। वीरुधो लता माधव्याद्याः॥२८॥ यतः सर्वसुखावहं तत् तस्मात्। तत्र गमनं रोचते चेत् तर्हि शकटान् युङ्क्त बलीवर्दयुक्तान् कुरुत। भवतां भवद्भ्यः शेषे षष्ठी॥ २९॥ व्रजान् शकटयूथान्। रूढाः शकटेषु आरोपिताः परिच्छदाः गेहीयसामग्र्यो यैस्ते॥ ३०॥ अनःसु शकटेषु।

गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः । तूर्यघोषेण महता ययुः सहपुरोहिताः ॥३२॥
गोप्यो रूढरथा नूत्नकुचकुङ्कुमकान्तयः । कृष्णलीला जगुः प्रीता निष्ककण्ठ्यः सुवाससः ॥३३॥
तथा यशोदारोहिण्यावेकं शकटमास्थिते । रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके ॥३४॥
वृन्दावनं सम्प्रविश्य सर्वकालसुखावहम् । तत्र चक्रुर्व्रजावासं शकटैरर्धचन्द्रवत् ॥३५॥
वृन्दावनं गोवर्धनं यमुनापुलिनानि च । वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृप ॥३६॥
एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः । कलवाक्यैः स्वकालेन वत्सपालौ बभूवतुः ॥३७॥
अविदूरे व्रजभुवः सह गोपालदारकैः । चारयामासतुर्वत्सान् नानाक्रीडापरिच्छदौ ॥३८॥
क्वचिद् वादयतो वेणुं क्षेपणैःक्षिपतःक्वचित्।क्वचित् पादैःकिङ्किणीभिःक्वचित् कृत्रिमगोवृषैः ॥
वृषायमाणौ नर्दन्तौ युयुधाते परस्परम् । अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा ॥४०॥
कदाचिद् यमुनातीरे वत्सांश्चारयतोः स्वकैः । वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत् ॥४१॥
तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः । दर्शयन् बलदेवाय शनैर्मुग्ध इवाऽऽसदत् ॥४२॥
गृहीत्वाऽपरपादाभ्यां सहलाङ्गूलमच्युतः । भ्रामयित्वा कपित्थाग्रे प्राहिणोद् गतजीवितम् ।
स कपित्थैर्महाकायः पात्यमानैः पपात ह ॥४३॥

तं वीक्ष्य विस्मिता बालाः शशंसुः साधु साध्विति । देवाश्च परिसंतुष्टा बभूवुः पुष्पवर्षिणः ॥४४॥
तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ । सप्रातराशौ गोवत्सांश्चारयन्तौ विचेरतुः ॥४५॥
स्वं स्वं वत्सकुलं सर्वे पाययिष्यन्त एकदा । गत्वा जलाशयाभ्याशं पाययित्वा पपुर्जलम् ॥४६॥
ते तत्र ददृशुर्बाला महासत्त्वमवस्थितम् । तत्रसुर्वज्रनिर्भिन्नं गिरेः शृङ्गमिव च्युतम् ॥४७॥
स वै बको नाम महानसुरो बकरूपधृक् । आगत्य सहसा कृष्णं तीक्ष्णतुण्डोऽग्रसद् बली ४८
कृष्णं महाबकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः । बभूवुरिन्द्रियाणीव विना प्राणं विचेतसः ॥४९॥

---

आत्तशरासना गृहीतधनुष्काः ॥ ३१ ॥ शृङ्गाणि मृगशृङ्गाकारवाद्यानि ॥ ३२ ॥ रूढरथा रथान् आरूढाः । नूत्नैः कुचगतकुङ्कुमैः कान्तिर्यासां ता । निष्कं दीनारहारः ॥ ३३ ॥ ३२ ॥ व्रजावासं गोकुलवसतिम् । अर्धचन्द्रवत् धनुराकारम् ॥ ३५ ॥ उत्तमा अत्यन्ता ॥ ३६ ॥ यच्छतौ सम्पादयन्तौ । कलवाक्यैः अस्फुटमधुर वचनैः स्वेन पालनयोग्येन । कौमारे वयसीत्यर्थः । अपवर्गे तृतीया ॥ ३७ ॥ अविदूरे समीपे । परिच्छदाः सामग्र्यः ॥ ३८ ॥ क्वचिदिति सार्द्धम् । वादयतः सामीप्ये भूते लट् । क्षिपतः बिल्वादीनि । तद्युक्तपादैः नृत्यत इति शेष । वृषैर्मृन्निर्मितैर्वा ॥३९॥ अनुकृत्येत्यर्द्धम् । रुतैः शब्दैः । जन्तून् मयूरकोकिलादीन् ॥४०॥४१॥ मुग्धोऽज्ञात इव आसदत् तत्समीपं प्राप ॥ ४२ ॥ अपरपादाभ्यां पश्चिमपादाभ्याम् प्राहिणोत् चिक्षेप ॥४३॥ स इति सार्द्धम् हेत्याश्चर्ये ॥ ४४ ॥ प्रातराशः प्रातःभोज्यान्नं तत्सहितौ ॥ ४५ ॥ अभ्याशं समीपम् ॥४६॥ तत्र जलाशयतीरे । महत् सत्त्वं पराक्रमो यस्य तं महासत्त्वम् असुरम् । तत्रसुः उद्विग्ना बभूवुः ॥ ४७ ॥ वै प्रसिद्धे । तुण्डं चञ्चुः ॥ ४८ ॥ राम आदिर्येषां ते एव न तु राम इत्यतद्गुणसंविज्ञानो बहुव्रीहिः दृष्टसागरमानयेतिवत् । विचेतसो मूर्च्छिताः ॥४९॥ लीलया सूनुं वस्तुतः जगद्गुरोः ब्रह्मणोऽपि पितरम् । अक्षतं कृष्णम् ।

स तालुमूलं प्रदहन्तमग्निवद् गोपालसूनुं पितरं जगद्गुरोः।
चच्छर्द सद्योऽतिरुषाऽक्षतं बकस्तुण्डेन हन्तुं पुनरभ्यपद्यत ॥५०॥
तमापतन्तं स निगृह्य तुण्डयोर्दोर्भ्यां बकं कंससखं सतां गतिः।
पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद् दिवौकसाम् ॥५१॥
तदा बकारिं सुरलोकवासिनः समाकिरन् नन्दनमल्लिकादिभिः।
समीडिरे चानकशंखसंस्तवैस्तद् वीक्ष्य गोपालसुता विसिस्मिरे ॥ ५२ ॥
मुक्तं बकास्यादुपलभ्य बालका रामादयः प्राणमिवेन्द्रियो गणः।
स्थानागतं तं परिरभ्य निर्वृताः प्रणीय वत्सान् व्रजमेत्य तज्जगुः ॥ ५३ ॥

श्रुत्वा तद् विस्मिता गोपा गोप्यश्चातिप्रियादृताः। प्रेत्यागतमिवौत्सुक्यादैक्षन्त तृषितेक्षणाः॥५४
अहो बतास्य बालस्य बहवो मृत्यवोऽभवन्। अप्यासीद् विप्रियं तेषां कृतं पूर्वं यतो भयम् ॥५५॥
अथाप्यभिभवन्त्येनं नैव ते घोरदर्शनाः। जिघांसयैनमासाद्य नश्यन्त्यग्नौ पतङ्गवत् ॥५६॥
अहो ब्रह्मविदां वाचो नासत्याःसन्ति कर्हिचित्। गर्गो यदाह भगवानन्वभावि तथैव तत् ॥५७॥
इति नन्दादयो गोपाः कृष्णरामकथां मुदा। कुर्वन्तो रममाणाश्च नाविन्दन् भववेदनाम्॥५८॥
एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे। निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥५९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्द्धे वत्सबकवधो नामैकादशोऽध्यायः ॥११॥

## अथ द्वादशोऽध्यायः

### श्रीशुक उवाच

क्वचिद् वनाशाय मनो दधद् व्रजात् प्रातः समुत्थाय वयस्यवत्सपान्।
प्रबोधयञ्छृङ्गरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः ॥ १ ॥

---

अभ्यपद्यत संमुखमाजगाम ॥ ५० ॥ वीरणं निग्रन्थितृणं कटोपादानभूतम् ॥ ५१ ॥ तत् पुष्पवृष्ट्यादि विसिस्मिरे विस्मयं प्रापुः। इरे चेति इलोपः आर्षः ॥५२॥ स्वस्थानमागतम् प्रणीय एकत्र कृत्वा। तत् बकहिंसनम्। निर्वृताः सुखिनः ॥५३॥ अतिप्रियेण अतिप्रीत्या आदृताः सादराः। प्रेत्य मृत्वा पुनरागतमिव कृष्णम् ॥५४॥ अहो आश्चर्ये। बत खेदे। मृत्यवो मृत्युहेतवः। यद्यपि अपि तथापि। यतो यैस्तेषामेव पूतनादीनाम्। विप्रियं अनिष्टम् ॥ ५५ ॥ यद्यपि घोर दर्शना अथापि नाभिभवन्ति न तिरस्कुर्वन्ति ॥ ५६ ॥ अन्वभावि अनुभूतम्। रममाणाः साह्लादाः। भववेदनां संसारदुःखम् ॥५७॥ निलायनं निलीय स्थितस्यान्येनान्वेषणम् ॥ १८ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे गूढार्थदीपिन्यामेकादशोऽध्यायः ॥ १२ ॥

द्वादशेऽजगरो मार्गे जग्रसे वत्सवत्सपान्।
जघान तं प्रविश्यास्ये वर्धयन्नागलं हरिः ॥ १२ ॥

वनाशाय वने भोजनं कर्तुं मनो दधत् इच्छां कुर्वन् हरिः प्रातः समुत्थाय व्रजात् विनिर्गत इत्यन्वयः। किं कुर्वन्। शृङ्गाकारवाद्यध्वनिना वयस्यादीन् प्रबोधयन् ॥ १ ॥ तेनैव शृङ्गारवेण श्रीकृष्णेन वा सह सहस्रशः

तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः ।
स्वान् स्वान् सहस्रोपरिसंख्ययान्वितान् वत्सान् पुरस्कृत्य विनिर्ययुर्मुदा ॥ २ ॥

कृष्णवत्सैरसंख्यातैर्यूथीकृत्य स्ववत्सकान् । चारयन्तोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह ॥ ३ ॥
फलप्रवालस्तबकसुमनःपिच्छधातुभिः । काचगुञ्जामणिस्वर्णभूषिता अप्यभूषयन् ॥ ४ ॥
मुष्णन्तोऽन्योन्यशिक्यादीन् ज्ञातानाराच्च चिक्षिपुः । तत्रत्याश्च पुनर्दूराद्धसन्तश्च पुनर्ददुः ॥५॥
यदि दूरं गतः कृष्णो बनशोभेक्षणाय तम् । अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे ॥ ६ ॥
केचिद् वेणून् वादयन्तो ध्मान्तः शृङ्गाणि केचन । केचिद् भृङ्गैः प्रगायन्तः कूजन्तः कोकिलैःपरे॥७
विच्छायाभिः प्रधावन्तो गच्छन्तः साधु हंसकैः । बकैरुपविशन्तश्च नृत्यन्तश्च कलापिभिः ॥८॥
विकर्षन्तः कीशबालानारोहन्तश्च तैर्द्रुमान् । विकुर्वन्तश्च तैः साकं प्लवन्तश्च पलाशिषु ॥ ९ ॥
साकं भेकैर्विलङ्घन्तः सरित्प्रस्रवसम्प्लुताः । विहसन्तः प्रतिच्छायाःशपन्तश्च प्रतिस्वनान्॥१०॥

इत्थं सतां ब्रह्मसुखानुभूत्या दास्यं गतानां परदैवतेन ।
मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुञ्जाः ॥ ११ ॥
यत्पादपांसुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यलभ्यः ।
स एव यद्दृग्विषयः स्वयं स्थितः किं वर्ण्यते दिष्टमतो व्रजौकसाम् ॥ १२ ॥
अथाघनामाभ्यपतन्महासुरस्तेषां सुखक्रीडनवीक्षणाक्षमः ।
नित्यं यदन्तर्निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते ॥ १३ ॥

---

पृथुका[1] बाला वत्सान् पुरस्कृत्य मुदा विनिर्ययुः । सहस्रोपरि संख्या अयुतादिः तयाऽन्वितान् । शिक् शिक्यम् । विषाणं शृङ्गवाद्यम् ॥ २ ॥ असंख्यातैः परार्द्धादप्यधिकैः । यूथीकृत्य एकीकृत्य । अर्भः बालः । ह हर्षेण ॥३॥ काचादिभिर्भूषिता अपि ते बालाः फलादिभिरात्मानम् अभूषयन् । प्रवाला नवपल्लवाः । स्तबकाः पुष्पगुच्छाः । सुमनांसि पुष्पाणि । धातवो गैरिकादयः । स्वर्णपदेन स्वर्णभूषणानि ॥ ४ ॥ मुष्णन्तः चोरयन्तः । आरात् दूरे ॥ ५ ॥ पूर्वमहं कृष्णं स्पृशामि त्वत्तोऽपि पूर्वमहमित्युक्त्वा तम् संस्पृश्य ॥ ६ ॥ ध्मान्तः वादयन्तः । बाहुलकात् धमाभावः ॥ ७ ॥ विच्छायाभिः पक्षिच्छायाभिः कलापिभिर्मयूरैः ॥८॥ कीशो वानरः । विकुर्वन्तः भ्रूविजृम्भादिविकारान् तज्जातिशब्दांश्च कुर्वन्तः । पलाशिषु वृक्षेषु प्लवन्तः शाखान्तरं गच्छन्तः ॥ ९ ॥ भेकैः मण्डूकैः । प्रस्रवः प्रवाहः । प्रतिच्छायाः प्रतिबिम्बानि । शपन्त आक्रोशन्तः ॥ १० ॥ सतां ज्ञानिनां ब्रह्म च तत् सुखं च अनुभूतिश्च तया सच्चिदानन्दरूपेण स्फुरता । भक्तानामिष्टदेवतारूपेण साधारणपुंसां नरबालकतया स्फुरता कृष्णेन सह ते बालाः विजह्रुः विहारं चक्रुः ॥ ११ ॥ यस्य पादपांसुः योगिभिरपि अगम्यो भवति स एव येषां नेत्रगोचरः सन् स्वयं साक्षात् स्थितः अतः परं व्रजौकसां किं दिष्टं भाग्यं वर्ण्यते ॥ १२ ॥ तस्य वीक्षणे अक्षमः असमर्थः । यत् सुखक्रीडनम् अन्तर्हृदये अमरैः पीतामृतैरपि प्रतीक्ष्यते चिन्त्यन्ते । अन्यथा जीवनं न स्यादिति भावः । यद्वा स्वजीवनसफलेच्छुभिः यस्यान्तश्छिद्रं मरणोपायः कदाऽयं मरिष्यतीति ॥१३॥ अनुशिष्टःप्रेषितः । बकी पूतना । मे सहोदरयोः

---

१. 'पृथुकः शावकः शिशुः इत्यमरः ।

दृष्ट्वार्भकान् कृष्णमुखानघासुरः कंसानुशिष्टः स बकीबकानुजः।
अयं तु मे सोदरनाशकृत्तयोर्द्वयोर्ममैनं सबलं हनिष्ये ॥ १४ ॥
एते यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः।
प्राणे गते वर्ष्मसु का नु चिन्ता प्रजासवः प्राणभृतो हि ये ते ॥ १५ ॥
इति व्यवस्याजगरं बृहद् वपुः स योजनायाममहाद्रिपीवरम्।
धृत्वाद्भुतं व्यात्तगुहाननं तदा पथि व्यशेत ग्रसनाशया खलः ॥ १६ ॥
धराधरोष्ठो जलदोत्तरोष्ठो दर्याननान्तो गिरिशृङ्गदंष्ट्रः।
ध्वान्तान्तरास्यो विततध्वजिह्वः परुषानिलश्वासदवेक्षणोष्णः ॥ १७ ।
दृष्ट्वा तं तादृशं सर्वे मत्वा वृन्दावनश्रियम्। व्यात्ताजगरतुण्डेन ह्युत्प्रेक्षन्ते स्म लीलया ॥१८॥
अहो मित्राणि गदत सत्त्वकूटं पुरःस्थितम्। अस्मत्संग्रसनव्यात्तव्यालतुण्डायते न वा ॥१९॥
सत्यमर्ककरारक्तमुत्तराहनुवद् घनम्। अधराहनुवद् रोधस्तत्प्रतिच्छायायाऽरुणम् ॥२०॥
प्रतिस्पर्धेते सृक्किभ्यां सव्यासव्ये नगोदरे। तुङ्गशृङ्गालयोऽप्येतास्तद्दंष्ट्राभिश्च पश्यत ॥२१॥
आस्तृतायाममार्गोऽयं रसनां प्रतिगर्जति। एषामन्तर्गतं ध्वान्तमेतदप्यन्तराननम् ॥२२॥
दावोष्णखरवातोऽयं श्वासवद् भाति पश्यत। तद्दग्धसत्त्वदुर्गन्धोऽप्यन्तरामिषगन्धवत् ॥२३॥

---

बकीबकयोः नाशकृत। अतः मम शत्रुरूपयोः तयोर्द्वयोः स्थाने एनं सबलं ससैन्यं हनिष्ये। बलशब्देनात्र बलदेवो न ग्राह्यः एतल्लीलायां तस्यानागमनात् ॥ १४ ॥ एते वत्सवत्सपाः तिलापः कृताः तिलाञ्जलिवत्तृप्तिहेतवः कृताः हृताः। नष्टसमाः मृतप्रायाः। प्राणे निर्गते सति देहेषु का नु चिन्ता न कापि देहाः स्वयमेव नश्यन्तीत्यर्थः। यतो हि ये प्राणभृतो जीवास्ते सर्वेऽपि प्रजासवः पुत्रप्राणा एव सन्ति ॥१५॥ इति व्यवस्य व्यवसाय निश्चित्य स खलः आजगरं वपुर्धृत्वा तेषां ग्रसनाशया पथि व्यशेतेत्यन्वयः। योजनप्रमाण आयामो विस्तारो यस्य। महाद्रिवत्पीवरं स्थूलम्। व्यात्तं प्रसारितं गुहातुल्यमाननं यस्मिंस्तत् ॥ १६ ॥ धरायामधरोष्ठो यस्य जलदेषूत्तरोष्ठो यस्य। दर्यौ गुहे इव आननस्यान्तौ सृक्किणी ओष्ठप्रान्तौ यस्य। ध्वान्तवत् तमोयुक्तं मुखमध्यं यस्य। गिरेः शृङ्गाणीव द्रंष्ट्रा यस्य। विस्तृतमार्गवत् जिह्वा यस्य। परुषानिलः कठोरवायुस्तद्वत् श्वासो यस्य। दववत् वनाग्निवत् ईक्षणयोरुष्णः स चासौ स च तथाभूतः ॥ १७ ॥ तम् अधासुरम्। प्रसारिताजगर मुखसादृश्येन उत्प्रेक्षितवन्तः ॥ १८ ॥ सत्त्वं प्राणिविशेषम्। यद्वा। सत्त्वं कूटं गिरिशृङ्गमिवेति उपमित समासः। अस्मत्संग्रसनाय प्रसारितं यद् व्यालतुण्डं सर्पमुखं तद्वत् आचरति न वा ॥१९॥ सत्यं निश्चतम् अर्ककिरणैरारक्तं मेघम् उपरितनोष्ठवत् पश्यत। तस्य रक्तधनस्य प्रतिबिम्बेन अरुणं रोधः अधःस्थलम् अधरोष्ठवत् पश्यतेति सर्वत्रान्वेति ॥२०॥ सव्यासव्ये वामदक्षिणे नगोदरे गिरिदर्य्यौ ओष्ठप्रान्ताभ्यां प्रतिस्पर्धेते तत्तुल्यतया वर्तेते इति पश्यत। एताः शिखरपङ्क्तयश्च अजगरस्य दंष्ट्राभिः स्पर्धमानाः तत्तुल्पतया प्रतीयमानाः पश्यत ॥ २१ ॥ विस्तृतो दीर्घो मार्गश्च रसनां प्रतिगर्जति तत्तुल्यतया वर्तते। एषां शृङ्गाणां मध्यगतं ध्वान्तं कर्तृ आननस्य मध्यं प्रतिगर्जति स्पर्धते ॥ २२ ॥ दावेन वनाग्निना उष्णस्तीक्ष्णो वायुश्च श्वासवत् भाति। तेन अग्निना। दग्धानां सत्त्वानां प्राणिनां यो दुर्गन्धः स च सर्पान्तर्गतमांसगन्धवत् भातीति पश्यत ॥ २३ ॥ अयं किमस्मान् ग्रसिता तथा चेद् ग्रसिष्यते चेद् तर्हि अनेन श्रीकृष्णेन हेतुना बकवत् क्षणात्

अस्मान् किमत्र ग्रसिता निविष्टानयं तथा चेद् बकवद् विनङ्क्ष्यति ।
क्षणादनेनेति बकार्युशन्मुखं वीक्ष्योद्धसन्तः करताडनैर्ययुः ॥ २४ ॥
इत्थं मिथोऽतथ्यमतज्ज्ञभाषितं श्रुत्वा विचिन्त्येत्यमृषा मृषायते ।
रक्षो विदित्वाऽखिलभूतहृत्स्थितः स्वानां निरोद्धुं भगवान् मनो दधे ॥ २५ ॥
तावत् प्रविष्टास्त्वसुरोदरान्तरं परं न गीर्णाः शिशवः सवत्साः ।
प्रतीक्षमाणेन बकारिवेशनं हतस्वकान्तस्मरणेन रक्षसा ॥ २६ ॥
तान् वीक्ष्य कृष्णः सकलाभयप्रदो ह्यनन्यनाथान् स्वकरादवच्युतान् ।
दीनांश्च मृत्योर्जठराग्निभासान् घृणार्दितो दिष्टकृतेन विस्मितः ॥ २७ ॥
कृत्यं किमत्रास्य खलस्य जीवनं न वा अमीषां च सतां विहिंसनम् ।
द्वयं कथं स्यादिति संविचिन्त्य तज्ज्ञात्वाऽविशत्तुण्डमशेषदृग्घरिः ॥ २८ ॥
तदा घनच्छदा देवा भयाद्धाहेति चुक्रुशुः । जहृषुर्ये च कंसाद्याः कौणपास्त्वघबान्धवाः ॥२९॥
तच्छ्रुत्वा भगवान् कृष्णस्त्वव्ययः सार्भवत्सकम् । चूर्णीचिकीर्षोरात्मानं तरसा ववृधे गले ॥३०॥
ततोऽतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः ।
पूर्णोऽन्तरङ्गे पवनो निरुद्धो मूर्द्धन् विनिष्पाट्य विनिर्गतो बहिः ॥ ३१ ॥

---

ते विनङ्क्ष्यति । इति परस्परमुक्त्वा बकारेः श्रीकृष्णस्य उशत्कमनीयं मुखं वीक्ष्य करतलध्वनिना सह ययुः । वत्सा अपि तान् अनुययुरिति योज्यम् ॥ २४ ॥ इत्थम् अतज्ज्ञानां राक्षसोऽयमित्यजानताम् अतथ्यमसत्यं मिथो भाषितं भाषणं श्रुत्वा विचिन्त्य च अमृषा सत्यः सर्पवपुरसुर एवेषां मृषायते सर्पसादृश्येन प्रतीयते वस्तुत रक्ष एवेति विदित्वा स्वानां स्वान् शेषे षष्ठी । निरोद्धुं यावन्मनो दधे तावत्सवत्साः शिशव असुरोदरान्तरं प्रविष्टा परं केवलम् तेन गीर्णा निगलिता न इत्युत्तरेणान्वयः यतो बकारेः श्रीकृष्णस्य प्रवेशनं प्रतीक्षमाणेन । तत्कुतः यतः हतयोः स्वकयोः पूतनाबकयोरन्तं नाशं स्मरतीति तेन २५ ॥२६॥ नास्ति मत्तोऽन्यो नाथो येषां तान् स्वकरात् अवच्युतान् निःसृतान् मृत्योर्मृत्युरूपस्य असुरस्य धासतुल्यान् वीक्ष्य । घृणार्दितो दयायुक्तः भगवान् दिष्टेन लीलाशक्त्यनुकूलकालकृतेन मुखप्रवेशेन नतु प्रारब्धकृतेनेति व्याख्येयं तथाऽसम्मतत्वात् । 'कालो दिष्टोऽप्यनेहापि' इति कोशाच्च । विस्मित इत्यपि लीलाशक्त्यैव । यद्वा इवेति योज्यम् । लुप्तोपमेयम्॥२७॥ अत्र विषये । येनास्य जीवनं न अभीषां सतां गोपाना मरणं च न स्यात् । एककालावच्छेदेन तद् द्वयं कार्यं कथं स्यादिति विचिन्त्य त ोपायं ज्ञात्वा च स्वयमपि कृष्णः तस्य मुखमविशदित्यन्वयः । अशेषषट्क सर्वापायवित्॥२८॥ तदा हरिप्रवेशे सति भयात् घनच्छन्नाः देवाः चुक्रुशुः आक्रोशं चक्रुः । अघासुरस्य बान्धवा ये कौणपाः शवभक्षका राक्षसास्ते हर्षं प्रापुः ॥ २९ ॥ तत् आक्रोशवचनम् । सबालवत्सम् आत्मानं श्रीकृष्णं चूर्णीकर्तुमिच्छोस्तस्य गले तरसा वेगेन ववृधे ॥ ३० ॥ ततो भगवद्वर्द्धनात् अतिकायस्य योजनविस्तृतदेहस्य निरुद्धः प्राणमार्गः कण्ठो यस्यास्तीति तथा उद्गीर्णदृष्टेर्बहिर्निर्गतलोचनस्य तस्य अन्तरङ्गे देहमध्ये निरुद्धः पवनः प्राणः मूर्द्धन् मूर्द्धनि स्थितं ब्रह्मरन्ध्रम् निर्भिद्य । बाहुलकात्सप्तम्या लुक् ॥३१॥ तेनैव ब्रह्मरन्ध्रेणैव । परेतान् मूर्छितान् न तु मृतान् चिच्छक्त्यालिङ्गितत्वात् । स्वयाऽमृतवर्षिण्या

तेनैव सर्वेषु बहिर्गतेषु प्राणेषु वत्सान् सुहृदः परेतान् ।
दृष्ट्या स्वयोत्थाप्य तदन्वितः पुनर्वक्त्रान्मुकुन्दो भगवान् विनिर्ययौ ॥ ३२ ॥
पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्ना ज्वलयद् दिशो दश ।
प्रतीक्ष्य खेऽवस्थितमीशनिर्गमं विवेश तस्मिन् मिषतां दिवौकसाम् ॥ ३३ ॥
ततोऽतिहृष्टाः स्वकृतोऽकृतार्हणं पुष्पैः सुरा अप्सरसश्च नर्तनैः ।
गीतैः सुगा वाद्यधराश्च वाद्यकैः स्तवैश्च विप्रा जयनिःस्वनैर्गणाः ॥ ३४ ॥
तवद्भुतस्तोत्रसुवाद्यगीतिकाजयादिनैकोत्सवमङ्गलस्वनान् ।
श्रुत्वा स्वधाम्नोऽन्त्यज आगतोऽचिराद् दृष्ट्वा महीशस्य जगाम विस्मयम् ॥ ३५ ॥
राजन्नाजगरं चर्म शुष्कं वृन्दावनेऽद्भुतम् । व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरम् ॥ ३६ ॥
एतत् कौमारजं कर्म हरेरात्माहिमोक्षणम् । मृत्योः पौगण्डके बाला दृष्ट्वोचुर्विस्मिता व्रजे ॥ ३७ ॥
नैतद् विचित्रं मनुजार्भमायिनः परावराणां परमस्य वेधसः ।
अघोऽपि यस्स्पर्शनधौतपातकः प्रापात्मसाम्यं त्वसतां सुदुर्लभम् ॥ ३८ ॥
सकृद् यदङ्गप्रतिमान्तराहिता मनोमयी भागवतीं ददौ गतिम् ।
स एव नित्यात्मसुखानुभूत्यभिव्युदस्तमायोऽन्तर्गतो हि किं पुनः ॥ ३९ ॥

---

तदन्वितः तैःसहितः । मुकुन्दः मुक्तिं ददातीति इत्यन्वर्थं नाम तन्मोक्षसूचकत्वात् ॥३२॥ पीनाहिभोगोऽजगरदेहः। तस्मादुत्थितं निर्गतं तत् महत् ज्योतिः प्राणात्मकं खेऽवस्थितं सत् ईशस्य निर्गमं प्रतीक्ष्य निर्गते तस्मिन्नीशे एव विवेश । देवानां मिषतां पश्यतां सताम् । कीदृक् ज्योतिः । स्वधाम्ना तेजसा दश दिशः प्रकाशयत् ॥ ३३ ॥ ततो ज्योतिःप्रवेशानन्तरम् । सुरादयः सर्वेऽपि स्वकृतः स्वकार्यकृतः कृष्णस्य पुष्पादिभिः अर्हणं पूजनमकृषत कृतवन्तः एवं सर्वोऽप्यकृतेत्येकवचनमप्युपपन्नम् । समूहाभिप्रायेण सर्वेषामेकत्रान्वयो वा । सर्वोऽपि देवादिसमूहोऽकृतेति । सुष्ठु गायन्तीति सुगाः गन्धर्वादयः । गणाः पार्षदाः । विप्रा वसिष्ठादयः ॥३४॥ तेषां देवादीनां यानि अद्भुतस्तोत्रादीनि तेषां येऽनेके हर्षसूचका माङ्गलिकस्वनास्तान् अजो ब्रह्मा स्वधाम्नोऽन्ति समीपे श्रुत्वाऽचिरात् शीघ्रं भूलोकमागत ईशस्य कृष्णस्य महि महिमानं दृष्ट्वा विस्मयं प्राप ॥३५॥ बहुतिथं बहुकालपर्यन्तम् आक्रीडगह्वरं क्रीडागुहा बभूव ॥ ३६ ॥ हरेः कौमारजं पञ्चमाब्दकृतमेतत्कर्म चरित्रं बालाः पौगण्डके षष्ठे वर्षे जगुः । कीदृक् कर्म । आत्मनामात्मीयानां बालानां मृत्योरघासुरात् अहेश्च मृत्योः संसारलक्षणात् मोक्षणरूपम् ॥ ३७ ॥ मनुजार्भस्य माया लीला अस्यास्तीति तस्य । वस्तुतः परे ब्रह्मादयः अवरेऽस्मदादयस्तेषां सर्वेषां वेधसः स्रष्टुः परमस्य श्रीकृष्णस्य स्पर्शेन निवृत्तपातकोऽघासुरः यत्सारूप्यं मुक्तिं प्राप तदेतदाश्चर्यं नास्ति । असतां पापिनाम् ॥ ३८ ॥ सकृद् एकवारमपि यस्य अङ्गप्रतिमा अन्तराहिता अन्तः स्थापिता अत एव मनोमयी मनसि चिन्तिता सती गतिं मुक्तिं ददौ[1] तदा स भगवानेव स्वयं साक्षात् यस्यान्तर्गतः स मुक्तिं ददातीति किं पुनर्वक्तव्यम् । कथंभूतो भगवान् । नित्या या आत्मसुखानुभूतिस्तया व्युदस्ता निवारिता माया येन सः ॥३९॥ हे द्विजाः शौनकादयः । यादवदेवेन श्रीकृष्णेन पाण्डवेभ्यः दत्तः परीक्षित् स्वरातुः प्राणदातुः

---

१. खट्वाङ्गादिभ्यः ।

सूत उवाच

इत्थं द्विजा यादवदेवदत्तः श्रुत्वा स्वरातुश्चरितं विचित्रम्।
प्रपच्छ भूयोऽपि तदेव पुण्यं वैयासकिं यन्निगृहीतचेताः ॥ ४० ॥

राजोवाच

ब्रह्मन् कालान्तरकृतं तत्कालीनं कथं भवेत्। यत् कौमारे हरिकृतं जगुः पौगण्डकेऽर्भकाः ॥४१॥
तद् ब्रूहि मे महायोगिन् परं कौतूहलं गुरो। नूनमेतद्धरेरेव माया भवति नान्यथा ॥४२॥
वयं धन्यतमा लोके गुरोऽपि क्षत्रबन्धवः। यत् पिबामो मुहुस्त्वत्तः पुण्यं कृष्णकथामृतम् ॥४३॥

सूत उवाच

इत्थं स्म पृष्टः स तु बादरायणिस्तत्स्मारितानन्तहृताखिलेन्द्रियः।
कृच्छ्रात् पुनर्लब्धबहिर्दृशिः शनैः प्रत्याह तं भागवतोत्तमोत्तम ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे गूढार्थदीपिन्यां द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः

श्रीशुक उवाच

साधु पृष्टं महाभाग त्वया भागवतोत्तम। यन्नूतनयसीशस्य शृण्वन्नपि कथां मुहुः ॥ १ ॥
सतामयं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि।
प्रतिक्षणं नव्यवदच्युतस्य यत् स्त्रिया विटानामिव साधुवार्ता ॥ २ ॥
शृणुष्वावहितो राजन्नपि गुह्यं वदामि ते। ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ३ ॥

---

श्रीकृष्णस्य चरित्रं श्रुत्वा भूयोऽपि शुकं प्रति तदेव पुण्यचरितं पप्रच्छेत्यन्वयः। येन चरितेन निगृहीतं वशीकृतं चेतो यस्येति परीक्षिद्विशेषणम् ॥ ४० ॥ कालान्तरे कौमारे कृतं तत्कालीनं पौगण्डकालिकम् ॥ ४१ ॥ तत् तस्मात् ब्रूहि। कौतूहलम् उत्कण्ठा आश्चर्यं वा ॥ ४२ ॥ हे गुरो क्षत्रबन्धवः क्षत्रियाधमा अपि वयमित्यन्वयः इयमुक्तिरत्यन्तविनयात्। यत् यस्मात् ॥ ४३ ॥ स्म आचर्य्येण। तेन प्रश्नेन स्मारितो योऽनन्तस्तेन हृतानि अन्तर्मुखीकृतानि इन्द्रियाणि यस्य स शुकः शनैस्तं प्रत्याह। भागवतेति शौनकसंबोधनम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे गूढार्थदीपिन्यां द्वादशोऽध्यायः ॥ १२ ॥

त्रयोदशेऽहरद् ब्रह्मा मायया वत्सवत्सपान्।
तदाब्दं सर्वरूपः सन्नक्रीडत पूर्ववद्धरिः ॥ १३ ॥

यत् यतः। ईशस्य कथा शृण्वन्नपि प्रश्नद्वारा नूतनयसि नव्यवत्करोषि। नूतनशब्दात् 'तत्करोति' इति णिच् ॥ १ ॥ अच्युतस्य वार्ता कथा श्रुता सती प्रतिक्षणं नव्यवद् भवति इति यत् अयमेव सतां निसर्गः स्वभावः। विटानां स्त्रीलम्पटानां स्त्रिया वार्तेव। कथंभूतानां सताम्। यदर्थानि अच्युतवार्ताविषयकाणि वाण्यादीनि येषाम्। श्रुती श्रोत्रे ॥ २ ॥ अवहितः सावधानः सन्। स्निग्धस्य श्रद्धालोः। उत ब्रूयुः ब्रूयुरेव ॥ ३ ॥

तथाघवदनान्मृत्यो रक्षित्वा वत्सपालकान् । सरित्पुलिनमानीय भगवानिदमब्रवीत् ॥ ४ ॥

अहोऽतिरम्यं पुलिनं वयस्याः स्वकेलिसम्पन्मृदुलाच्छबालुकम् ।
स्फुटत्सरोगन्धहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुलम् ॥ ५ ॥

अत्र भोक्तव्यमस्माभिर्दिवा रूढं क्षुधार्दिताः । वत्साः समीपेऽपः पीत्वा चरन्तु शनकैस्तृणम् ॥६॥

तथेति पाययित्वार्भा वत्सानारुध्य शाद्वले । मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा ॥ ७ ॥

कृष्णस्य विष्वक् पुरुराजिमण्डलैरभ्याननाः फुल्लदृशो व्रजार्भकाः ।
सहोपविष्टाः विपिने विरेजुश्छदा यथाम्भोरुहकर्णिकायाः ॥ ८ ॥

केचित् पुष्पैर्दलैः केचित् पल्लवैरङ्कुरैः फलैः । शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः ॥९॥

सर्वे मिथो दर्शयन्तः स्वस्वभोज्यरुचिं पृथक् । हसन्तो हासयन्तश्चाभ्यवजह्रुः सहेश्वराः ॥१०॥

बिभ्रद् वेणुं जठरपटयोः शृङ्गवेत्रे च कक्षे वामे पाणौ मसृणकवलं तत्फलान्यङ्गुलीषु ।
तिष्ठन् मध्ये स्वपरिसुहृदो हासयन् नर्मभिः स्वैः स्वर्गे लोके मिषति बुभुजे यज्ञभुग् बालकेलिः ११

भारतैवं वत्सपेषु भुञ्जानेष्वच्युतात्मसु । वत्सास्त्वन्तर्वने दूरं विविशुस्तृणलोभिताः ॥१२॥

तान् दृष्ट्वा भयसंत्रस्तानूचे कृष्णोऽस्य भीभयम् । मित्राण्याशान्मा विरमतेहानेष्ये वत्सकानहम् १३

इत्युक्त्वाद्रिदरीकुञ्जगह्वरेष्वात्मवत्सकान् । विचिन्वन् भगवान् कृष्णः सपाणिकवलो ययौ १४

अम्भोजन्मजनिस्तदन्तरगतो मायार्भकस्येशितुर्द्रष्टुं मञ्जु महित्वमन्यदपि तद्वत्सानितो वत्सपान् ।
नीत्वान्यत्र कुरूद्वहान्तरधात्खेऽवस्थितो यः पुरा दृष्ट्वाघासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयम् ।

---

मृत्योः मृत्युस्वरूपात् अघवदनात् अघासुरमुखात् । अघवदनात् यो मृत्युरिति वा ॥४॥ हे वयस्याः । स्वीयानां केलीनां क्रीडानां संपदः साधनानि विद्यन्ते यस्मिन् । मृदुलाः कोमला अच्छाः स्वच्छा बालुका यस्मिन् । किञ्च स्फुटत् विकसन् यत्सरस्तस्य गन्धेन हृता आकृष्टा ये अलयो भ्रमराः पत्रिणः पक्षिणश्च तेषां के जले ध्वनयस्तेषां प्रतिध्वनयस्तैर्लसन्तो ये द्रुमास्तैराकुलं व्याप्तम् । अत्र सरोजबाहुल्येनोपचारतः सर एव विकसदित्युक्तं भवति ॥५॥ अत्र पुलिने । दिवा दिनम् । आरूढम् अधिकं व्यतीतम् ॥६॥ तथेति तथाऽस्तु इत्युक्त्वा अर्भा बाला जलमिति शेषः । शाद्वले हरितघासस्थले । शिक्यानि वृक्षेषु अवलम्बितानि अवतार्य समं सह ॥७॥ कृष्णस्य विष्वक् परितः अनेकपङ्क्तिमण्डलैः सह व्यवहितपङ्क्तिषु वने उपविष्टा अपि अभ्याननाः भगवतः संमुखाननाः ते बाला विरेजुः यथा कमलकर्णिकायाः पत्राणि राजन्ते तद्वत् । भगवत्साम्मुख्यं च लीलाशक्त्यैव कृतमिति ज्ञेयमत्र ॥८॥ पुष्पादिभिः कृतभाजनाः सन्तः बुभुजुः । अङ्कुरैः दूर्वादिभिः । त्वग्भिः वल्कलैः । दृषद्भिः पाषाणैः ॥ ९ ॥ अभ्यवजह्रुः भोजनं चक्रुः । रुचिं स्वादविशेषम् ॥ १० ॥ जठरपटयोः ग्रन्थिमुक्तोदरवस्त्रयोर्मध्ये । वामशब्द उभयत्रान्वेति कक्षे पाणौ चेति । मसृणं स्निग्धं दध्योदनग्रासम् । कर्णिकेव मध्ये तिष्ठन् । स्वैः नर्मभिः परिहासवाक्यैः सुहृदो हासयन् यज्ञभुगपि भगवान् बालानामिव केलिर्यस्य स तथाभूतः सन् बुभुजे । स्वर्गस्थे जने मिषति आश्चर्येण पश्यति सति ।११। हे भारत परीक्षित् । अच्युते आत्मा मनो येषाम् तेषु । अन्तर्वने वनमध्ये ।१२। भियः भयहेतुभ्यो व्याघ्रादिभ्यो यत् भयं तत् अस्य अपास्य दूरीकृत्य । यद्वा । अस्य विश्वस्य या भीः मृत्युस्तस्यापि भयं भयरूपः कृष्णः । आशात् भोजनात् । हे मित्राणि वत्सान् अहमिह आनेष्ये ॥ १३ ॥ विचिन्वन् अन्विष्यन् । पाणौ यत्कवलं तेन सह वर्तते सपाणिकवलः ॥ १४ ॥ हे कुरूद्वह परीक्षित् । यो ब्रह्मा पुरा खेऽवस्थितः सन् भगवतः श्रीकृष्णात् अघासुरमोक्षणं दृष्ट्वा विस्मयं प्राप्तः स तदन्तरे तस्मिन् अवसरे गत आगतः सन्

ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान् । उभावपि वने कृष्णो विचिकाय समन्ततः ॥१६॥
क्वाप्यदृष्ट्वान्तर्विपिने वत्सान् पालांश्च विश्ववित् । सर्वं विधिकृतं कृष्णः सहसाऽवजगाम ह १७
ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च । उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥१८॥
यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकं यावद् यष्टिविषाणवेणुदलशिग् यावद्विभूषाम्बरं
यावच्छीलगुणाभिधाकृतिवयो यावद् विहारादिकं सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ
स्वयमात्मात्माऽऽत्मगोवत्सान् प्रतिवार्यात्मवत्सपैः । क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविशद् व्रजम्
तत्तद्वत्सान् पृथङ् नीत्वा तत्तद्गोष्ठे निवेश्य सः । तत्तदात्माऽभवद् राजंस्तत्तत्सद्म प्रविष्टवान् २१

तन्मातरो वेनुरवत्वरोत्थिता उत्थाप्य दोर्भिः परिरभ्य निर्भरम् ।
स्नेहस्नुतस्तन्यपयःसुधासवं मत्वा परं ब्रह्म सुतानपाययन् ॥ २२ ॥
ततो नृपोन्मर्दनमज्जलेपनालंकाररक्षातिलकाशनादिभिः ।
संलालितः स्वाचरितैः प्रहर्षयन् सायं गतो यामयमेन माधवः ॥ २३ ॥
गावस्ततो गोष्ठमुपेत्य सत्वरं हुङ्कारघोषैः परिहूतसङ्गतान् ।
स्वकान् स्वकान् वत्सतरानपाययन् मुहुर्लिहन्त्यः स्रवदौधसं पयः ॥ २४ ॥

---

ईशितुः श्रीकृष्णस्य अन्यदपि मञ्जु महित्वं द्रष्टुं तस्य वत्सान् इतो वनप्रदेशात् पुलिनात् वत्सपांश्चान्यत्र नीत्वाऽन्तर्धात् तिरोहितोऽभूत् । कथंभूतो ब्रह्मा । अम्भोजन्म कमलं तस्माज्जनिरुत्पत्तिर्यस्य सः । अम्भो जलम् ॥१५॥ ततः तत्र वनादिषु । पुलिनमेत्य आगत्य तत्र च वत्सपानपि समन्तात् विचिकाय अन्वेषयामास ॥१६॥ हेत्याश्चर्ये । क्वाप्यदृष्ट्वा । सर्वं वत्सादिहरणं विधिना ब्रह्मणा कृतमिति कृष्णः सहसा झटिति अवजगाम ज्ञातवान् यतो विश्ववित् सर्वज्ञः ॥ १७ ॥ ततो ज्ञानानन्तरम् । तयोः वत्सवत्सपयोः मातॄणां गोगोपीनाम् कस्य ब्रह्मणश्च मुदं कर्तुं उभयायितं वत्सवत्सपात्मकम् । उभय इवाचरतीति उभयायते आचारे क्यङ् ततोऽकर्मकत्वात्कर्तरि क्तः । यद्वा । उभयम् अयितं प्राप्तम् । चक्रे इत्यत्र हेतुः विश्वकृत् ॥ १८ ॥ यत्तदोरिव यावत्तावतोरपि नित्यसम्बन्धः तथा च यावत्प्रमाणमनतिक्रम्य वपुः करादिकं यष्ट्यादिकं शीलादिकं विहारादिकं च तावत्सर्वंस्वरूपः सन् अजः श्रीकृष्णः बभावित्यन्वयः । 'यावदवधारणे' इत्यव्ययीभावः । किवत् बभौ । 'सर्वंविष्णुमयं जगत्' इति गिरः श्रुतेरङ्गवत् मूर्तिवत् । दलं पर्णनिर्मितवाद्यम् ॥ १९ ॥ स्वयमात्मा श्रीकृष्णः आत्मरूपान् वत्सान् आत्मरूपैः वत्सपैः प्रयोज्यकर्तृभिः प्रतिवार्य वनान्निवर्त्य सर्वात्मा सन् ॥ २० ॥ तत्तदात्मा तत्तत्स्वरूपः ॥२१॥ तेषां बालानां मातरः साक्षात्परं ब्रह्मैव श्रीकृष्णमेव तत्तद्बालरूपं सुतान् मत्वा दोर्भिरुत्थाप्य निर्भरं गाढमालिङ्ग्य च पयो दुग्धमपाययन्नित्यन्वयः । कीदृशं पयः । अमृतवत्स्वादु आसववन्मादकं जगद्विस्मारकं च । स्नुतं च्युतं स्तने भवं स्तन्यम् ॥ २२ ॥ ततः पनःपानानन्तरम् । हे नृप । यामानां दिनप्रहराणां यमेन तत्तत्क्रीडानियमेन । यद्वा । यामोऽन्त्यप्रहरः तत्र यो नियमो गृहागमनरूपस्तेन माधवः सायंकाले गृहं गतस्ततश्च ताभिः मातृभिः उन्मर्दनादिभिः संलालितः सत्कृतो बभूवेत्यन्वयः । किं कुर्वन् । शोभनाचरितैः मातॄः प्रहर्षयन् । मज्जनं मज्जः स्नपनम् रक्षा मन्त्रादिभिः अशनं भोजनम् । आदिना शयनम् ॥२३॥ हुंकारघोषैः नामभिः आहूतान् समीपभागतांश्च तान् मुहुर्लिहन्त्यः स्रवत् च्युतम् औधसं पयोऽपाययन् । ऊधः क्षीराशयः

गोगोपीनां मातृतास्मिन् सर्वा स्नेहर्द्धिकां विना । पुरोवदास्वपि हरेस्तोकता मायया विना॥२५॥
व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहम् । शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत् ॥२६॥
इत्थमात्माऽऽत्मनाऽऽत्मानं वत्सपालमिषेण सः । पालयन् वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः॥२७॥
एकदा चारयन् वत्सान् सरामो वनमाविशत् । पञ्चषासु त्रियामासु हायनापूरणीष्वजः ॥२८॥
ततो विदूराच्चरतो गावो वत्सानुपव्रजम् । गोवर्धनाद्रिशिरसि चरन्त्यो ददृशुस्तृणम् ॥२९॥

दृष्ट्वाथ तत्स्नेहवशोऽस्मृतात्मा स गोव्रजोऽत्यात्मपदुर्गमार्गः ।
द्विपात् ककुद्ग्रीव उदास्यपुच्छोऽगाद्धुङ्कृतैरास्रुपया जवेन ॥ ३० ॥

समेत्य गावोऽधो वत्सान् वत्सवत्योऽप्यपायन् । गिलन्त्य इव चाङ्गानि लिहन्त्यः स्वौधसं पयः।३१।
गोपास्तद्रोधनायासमौघ्यलज्जोरुमन्युना । दुर्गाध्वकृच्छ्रतोऽभ्येत्य गोवत्सैर्ददृशुः सुतान् ।३२।

तदीक्षणोत्प्रेमरसाप्लुताशया जातानुरागा गतमन्योऽर्भकान् ।
उदुह्य दोर्भिः परिरभ्य मूर्धनि घ्राणैरवापुः परमां मुदं ते ॥ ३३ ॥

ततः प्रवयसो गोपास्तोकाश्लेषसुनिर्वृताः । कृच्छ्राच्छनैरपगतास्तदनुस्मृत्युदश्रवः ॥३४॥
व्रजस्य रामः प्रेमर्द्धेर्वीक्ष्यौत्कण्ठ्यमनुक्षणम् । मुक्तस्तनेष्वपत्येष्वप्यहेतुविदचिन्तयत् ॥३५॥
किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि । व्रजस्य सात्मनस्तोकेष्वपूर्वं प्रेम वर्धते ॥३६॥

---

यस्तत्र भवमौधसम् । गोष्ठं व्रजम् ॥२४॥ अस्मिन् वत्सवत्सपरूपे कृष्णे मातृता मातृस्नेहः पूर्ववत् किन्तु स्नेहाधिक्यं विना । अधुना तु स्नेहाधिक्यं जातमिति विशेषः । आसु गोगोपीषु हरेस्तोकता बालभावनापि पूर्ववत् किन्तु मायया विना मोहं विना । अधुना तु मोहाधिक्यमिति विशेषः ॥ २५ ॥ स्वतोकेषु कृष्णरूपेषु स्नेहलता आ अब्दं वर्षपर्यन्तं निःसीम निर्मर्यादं यथास्यात्तथा ववृधे साक्षात्कृष्णे तु अपूर्ववत् अनिर्वचनीयैव ॥ २६ ॥ आत्मा श्रीकृष्णः वत्सपो भूत्वा मिषेण व्याजेन आत्मनैव आत्मानं पालयन् चिक्रीडे इत्यन्वयः। कर्मव्यतिहारे तङ् ॥ २७ ॥ अजः कृष्णः । पञ्चसु षट्सु वा रात्रिषु हायनस्य वर्षस्य अपूरणीषु पूरकताऽव्यावर्षिष्टासु सतीषु ॥ २८ ॥ ततस्तदा । अद्रिशिखरे चरन्त्यो गाव व्रजसमीपे तृणं चरतो वत्सान् दूरात् ददृशुरित्यन्वयः ॥ २९ ॥ अथ तदैव स गोव्रजः गोसमूहः जवेन हुंकृतैः सह उपव्रजमगादिति पूर्वस्यानुषङ्गः । कथंभूतः आत्मपान् गोपानतिक्रान्त इत्यात्मपः दुर्गमो मार्गो यस्य स चासौ स च उत् ऊर्ध्वं कृतानि मुखपुच्छानि येन सः आस्रुवन्ति आस्नुवन्ति वा पयांसि यस्य सः । पाठद्वयमपि साधु 'स्रु गतौ, ष्णु प्रस्रवणे इति धातुपाठात् । पद्भ्यां धावन् द्विपादिव प्रतीयमानः ॥३०॥ वत्सवत्यः पुनः प्रसूता अपि गावः अधोवत्सान् कृष्णरूपान् स्वौधसं स्तन्यम् पयः अपाययन् ॥ ३१ ॥ तासां गवां रोधने य आयासः श्रमस्तस्य मौध्येन निष्फलत्वेन या लज्जा तया सह उरु मन्युना दुर्गममार्गजनितक्लेशेन च नीचैरागत्य गोवत्सैः सह सुतान् ॥३२॥ तेषां कृष्णरूपबालकानामीक्षणेनोद्भवो यः प्रेमरसस्तस्मिन् निमग्ना आशया अन्तःकरणानि येषां ते । लज्जामन्युक्लेशैस्तानपि ताडयितुमागताः सन्तोऽपि गतमन्यवः प्रत्युत जातानुरागा मूर्धनि अवघ्राणैरायुर्वृद्धिरिति ज्योतिःशास्त्रम् बालान् उदुह्य उत्थाप्य ॥३३॥ प्रवयसो वृद्धाः ततस्तेभ्यः कृष्णरूपपुत्रेभ्यः कृच्छ्रात् कथञ्चित् शनैः शनैरालिङ्गनात् अपगता निवृत्ता जाता पुनश्च तेषां सुतानां भूयो भूयः स्मरणेन नेत्रेभ्य उदगच्छन्ति निःसरन्ति अश्रूणि येषां ते तथाभूताः सन्तः स्तब्धा बभूवुरित्यर्थः ॥३४॥ मुक्तस्तनेष्वपि प्रेमर्द्धेः प्रेमवृद्धेः प्रतिक्षणमौत्कण्ठ्यमाधिक्यं वीक्ष्य अहेतुवित् हेतुमजानन् ॥३५॥ वासुदेवे यथा पुरा प्रेम तथा स्वतोकेष्वपि अपूर्वं प्रेम एतत्किम् । किञ्च सात्मनो मत्सहितस्य ।

केयं वा कुत आयाता दैवी वा नार्युतासुरी। प्रायो मायास्तु मे भर्तुर्नान्या मेऽपि विमोहिनी ३७

इति संचिन्त्य दाशार्हो वत्सान् सवयसानपि। सर्वानाचष्ट वैकुण्ठं चक्षुषा वयुनेन सः ॥३८॥

नैते सुरेशा ऋषयो न चैते त्वमेव भासीश भिदाश्रयेऽपि।
सर्वं पृथक्त्वं निगमात् कथं वदेत्युक्तेन वृत्तं प्रभुणा बलोऽवैत् ॥ ३९॥

तावदेत्यात्मभूरात्ममानेन त्रुटयनेहसा। पुरोवदब्दं क्रीडन्तं ददृशे सकलं हरिम् ॥४०॥

यावन्तो गोकुले बालाः सवत्साः सर्व एव हि। मायाशये शयाना मे नाद्यापि पुनरुत्थिताः ॥४१॥

इत एतेऽत्र कुत्रत्या मन्मायामोहितेतरे। तावन्त एव तत्राब्दं क्रीडन्तो विष्णुना समम् ।।४२॥

एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः। सत्याः के कतरे नेति ज्ञातुं नेष्टे कथंचन ॥४३॥

एवं सम्मोहयन् विष्णुं विमोहं विश्वमोहनम् स्वयैव माययाजोऽपि स्वयमेव विमोहितः ॥४४॥

तम्यां तमोवन्नैहारं खद्योतार्चिरिवाहनि। महतीतरमायैश्यं निहन्त्यात्मनि युञ्जतः ॥४५॥

तावत् सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात्। व्यदृश्यन्त घनश्यामाः पीतकौशेयवाससः ।४६।

चतुर्भुजाः शङ्खचक्रगदाराजीवपाणयः। किरीटिनः कुण्डलिनो हारिणो वनमालिनः ॥४७॥

श्रीवत्साङ्गदोरत्नकम्बुकङ्कणपाणयः। नूपुरैः कटकैर्भाताः कटिसूत्राङ्गुलीयकैः ॥४८॥

आङ्घ्रिमस्तकमापूर्णास्तुलसीनवदामभिः। कोमलैः सर्वगात्रेषु भूरिपुण्यवदर्पितैः ॥४९॥

चन्द्रिकाविशदस्मेरैः सारुणापाङ्गवीक्षितैः। स्वकार्थानामिव रजःसत्त्वभ्यां स्त्रष्टृपालकाः ॥५०॥

---

ममाप्येतेषु प्रेमातिशयस्तत्र किं कारणमिति भावः ॥ ३६ ॥ इयं माया का देवानां नराणाम् उत अपि असुराणां वा कुतो वा आयाता कस्मात्प्रयुक्ता। मे भर्तुः कृष्णस्यैवास्तु। 'संभावनायां लोट्' अन्या न यतो मेऽपि विमोहिनी॥३७॥ दशार्हवंशजत्वात् दाशार्हो बलदेवः वयुनेन ज्ञानमयेन चक्षुषा समानवयस्कान् सखीनपि वैकुण्ठं श्रीकृष्णमेवापश्यत् ॥ ३८ ॥ भिदाश्रये भेदास्पदे वत्सवत्सपदेहे। पृथक्त्वं कथमिति निगमात् संक्षेपात् वदेत्युक्तेन बलरामपृष्टेन प्रभुणा श्रीकृष्णेन हेतुना बलः वृत्तम् अवैत् ज्ञातवान्। ब्रह्ममोहनार्थमेव मया नानारूपधारणं कृतमिति। अवपूर्वकादिणो लङ् ॥ ३९ ॥ तावत् वर्षे जातेऽपि त्रुटयनेहसा स्वमानेन त्रुटिमात्रकालेन आत्मभूः ब्रह्मा आगत्य पुरोवत् पूर्ववत् ॥४०॥ मायाशये मायाशय्यायाम्॥४१॥इत इह। सप्तम्यर्थे तसिः। एते दृश्यमाना मन्मायामोहितेभ्य इतरे कुत्रत्याः कुत आगताः। अत्रेत्युक्तिस्तु संभ्रमादतो न पौनरुक्त्यम्। आब्दं वर्षपर्यन्तं क्रीडन्तः ॥४२॥ ज्ञातुं नेष्टे न शशाक ॥४३॥ विमोहं मोहरहितम्। स्वया स्वकृतया॥४४॥तम्यां रात्रौ नीहारजन्यं तमोवत् तमो यथा नान्धकारं करोति यथा च दिने खद्योतार्चिर्न प्रकाशं करोति एवं महति पुरुषे युञ्जतः मायाप्रयोगं कुर्वतः पुंस इतरा निकृष्टा माया तत्र न किञ्चित् करोति किन्तु आत्मनि यदैश्यं सामर्थ्यं तन्निहन्ति। अत्र वदिव्ययमिवार्थे। 'इववद्वा च सादृश्ये इति कोशात्॥४५॥यावदयं विचारयति तावदेव पश्यतः सतः ॥४६॥ राजीवं कमलम् ॥४७॥ श्रीयुक्तं वत्सं वक्षो येषाम्। उरो वत्सं च वक्षश्च इत्यमरः भगवद्रूपा। अङ्गदानि बाहुषु येषां रत्नमयानि कम्बुवत् त्रिरेखाङ्कितानि कङ्कणानि पाणिषु येषां ते च ते च ते च ते। कटकोऽत्र पादवलयः नूपुरसाहचर्यात्। भाताः शोभिताः ॥४८॥ कोमलैः दामभिः मालाभिः अङ्घ्रिमारभ्य मस्तकपर्यन्तमासमन्तात् पूर्णाः पुण्यवद्भिरर्पितैः ॥४९॥ स्वकार्थानां स्वभक्त मनोरथानां सत्ववत् विशदस्मितेन पालकाइव रजोवद-

आत्मादिस्तम्बपर्यन्तैर्मूर्तिमद्भिश्चराचरैः । नृत्यगीताद्यनेकार्हैः पृथक् पृथगुपासिताः ॥५१॥
अणिमाद्यैर्महिमभिरजाद्याभिर्विभूतिभिः । चतुर्विंशतिभिस्तत्त्वैः परीता महदादिभिः ॥५२॥
कालस्वभावसंस्कारकामकर्मगुणादिभिः । स्वमहिध्वस्तमहिभिर्मूर्तिमद्भिरुपासिताः ॥५३॥
सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तयः । अस्पृष्टभूरिमाहात्म्या अपि ह्युपनिषद्दृशाम् ॥५४॥
एवं सकृद् ददर्शाजः परब्रह्मात्मनोऽखिलान् । यस्य भासा सर्वमिदं विभाति सचराचरम् ॥५५॥
ततोऽतिकुतुकोद्वृत्य स्तिमितैकादशेन्द्रियः । तद्धाम्नाभूदजस्तूष्णीं पूर्देव्यन्तीव पुत्रिका ॥५६॥
इतीरेशेऽतर्क्ये निजमहिमनि स्वप्रमितिके परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ ।
अनीशेऽपि द्रष्टुं किमिदमिति वा मुह्यति सति चच्छादाजो ज्ञात्वा सपदि परमोऽजाजवनिकाम् ॥५७॥
ततोऽर्वाक् प्रतिलब्धाक्षः कः परेतवदुत्थितः । कृच्छ्रादुन्मील्य वै दृष्टीराचष्टेदं सहात्मना ॥५८॥
सपद्येवाभितः पश्यन् दिशोऽपश्यत् पुरःस्थितम् । वृन्दावनं जनाजीव्यद्रुमाकीर्णं समाप्रियम् ॥५९॥
यत्र नैसर्गदुर्वैराः सहासन् नृमृगादयः । मित्राणीवाजितावासद्रुतरुट्तर्षकादिकम् ॥६०॥

तत्रोद्वहत् पशुपवंशशिशुत्वनाट्यं ब्रह्माद्वयं परमनन्तमगाधबोधम् ।
वत्सान् सखीनिव पुरा परितो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्ट ॥६१॥

---

रुणगुणेन स्रष्टार इव तादृक्कटाक्षैर्द्योतमानाः व्यदृश्यन्त ॥ ५० ॥ स्तम्बस्तृणसमूहः ब्रह्मादितृणपर्यन्तैश्चराचरप्राणिभिः अनेकार्हैः अनेकार्हणसाधनैः उपासिताः पूजिताः ॥५१॥ महिमभिः अष्टैश्वर्यैः । विभूतिभिः शक्तिभिः महत्सूत्रयोः पृथक्त्वविवक्षया चतुर्विंशतितत्त्वानि ॥५२॥ तत्त्वसहकारिभिः कालादिभिश्च । तत्र कालो गुणक्षोभकः । स्वभावः परिणामकरः । संस्कारः वासनोद्बोधकः । कामो वासना । कर्म अदृष्टम् । गुणाः सत्त्वादयः । स्व महिना महिम्ना महिमभिः स्वातन्त्र्यैः॥५३॥सत्यादिमात्रं वदेकरसं ब्रह्म तदेव मूर्तयो येषां ते अत एव ज्ञानिनामपि न स्पृष्टं माहात्म्यं येषा ते तथाभूताः सन्तो व्यदृश्यन्तेति सर्वत्र प्रथमान्तानामत्रैवान्वयः कार्यः॥ ५४॥ सकृत् एकदैव अजो ब्रह्मा अखिलान् वत्सादीन् परब्रह्मात्मनः परमब्रह्मस्वरूपान् ददर्श ॥५५॥ अतिकुतुकेन अत्याश्चर्येण उद्वृत्य दृष्टीः परावृत्य । पूर्देवी व्रजाधिष्ठात्री कानन देवी तस्या अन्ति समीपे पुत्रिका चतुर्मुखी प्रतिमेव स्तिमितानि-निश्चलानि ॥५६॥इति इरा सरस्वती तस्या ईशे ब्रह्मणि किमिदमिति मुह्यति सति पश्चात्तद्द्रष्टुमपि अनीशेऽसमर्थे सति परमोऽजः श्रीकृष्णस्तस्य क्लेशं ज्ञात्वा सपदि अजाजवनिकां मायापटीं चच्छाद अपसारितवान् दूरीचकार यया एतत् ददर्श ताम् । क्व मुह्यति सति । अतर्क्ये तर्कागोचरे श्रीकृष्णे । कथंभूते । निजोऽसाधारणो महिमा यस्य । स्वप्रमिति स्वप्रमाजनकं च तत्सुखं यस्मिन् । अत एत अजातः मायातः परत्र परस्मिन् । पुनश्च तद्ब्रह्म न भवतीति अतत् जगत् तस्य निरसनमुखेन खण्डनद्वारा ब्रह्मकैः श्रुतिशिरोभिर्मितिर्ज्ञानं यस्मिन् तस्मिन्॥५७॥ततो मायापसारणानन्तरम् । को ब्रह्मा अर्वाक् बहिः पुनर्लब्धदृष्टिः आत्मना कृष्णेन सह इदं वक्ष्यमाणं वृन्दावनमपश्यत् । परेतो मृतो यथा कथञ्चित् उत्तिष्ठति तथा उत्थितः ॥५८॥ जनानामाजीव्या जीविकारूपा ये द्रुमा आम्रजम्ब्वादयस्तैराकीर्णं व्याप्तम् । सम्यक् आसमन्तात् प्रियाणि वस्तूनि यत्र । मा लक्ष्मीस्तस्याः प्रियो हरिस्तेन सह वर्तते । यद्वा । प्रिया राधा तया सह कृष्णश्च यत्र ॥ ५९ ॥ यत्र वृन्दावने नरव्याघ्रादयः मित्राणीव सहैवासन् तद् वृन्दावनमपश्यदिति पूर्वेण सम्बन्धः । अजितः श्रीकृष्णस्तस्यावासेन द्रुताः पलायिताः क्रोधलोभादयो यस्मात् ॥ ६० ॥ तत्र वृन्दावने ब्रह्मा पुरा पूर्ववदेव एकं ब्रह्म श्रीकृष्णरूपमेवापश्यत् । कथंभूतम् ।

दृष्ट्वा त्वरेण निजधोरणतोऽवतीर्य पृथ्व्यां वपुः कनकदण्डमिवाभिपात्य ।
स्पृष्ट्वा चतुर्मुकुटकोटिभिरङ्घ्रियुग्मं नत्वा मुदश्रुसुजलैरकृताभिषेकम् ॥६२॥

उत्थायोत्थाय कृष्णस्य चिरस्य पादयोः पतन् । आस्ते महित्वं प्राग्दृष्टं स्मृत्वा स्मृत्वा पुनः पुनः॥

शनैरथोत्थाय विमृज्य लोचने मुकुन्दमुद्वीक्ष्य विनम्रकन्धरः ।
कृताञ्जलिः प्रश्रयवान् समाहितः सवेपथुर्गद्गदयैलतेलया ॥६४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्द्धे सप्तदशोऽध्यायः ॥१३॥

## अथ चतुर्दशोऽध्यायः

### ब्रह्मोवाच

नौमीड्य तेऽभ्रवपुषे तडिदम्बराय गुञ्जावतंसपरिपिच्छलसन्मुखाय ।
वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय ॥ १ ॥

---

नाट्यमुद्वहत् धारयत् तत्र हेतवः । अद्वयं च वत्सान् विचिन्वत् एकं च सखीन्। अगाधबोधं च विचिन्वत् । अनन्तं च परितो विचिन्वत् । परं च शिशुत्वमुद्वहत् । ब्रह्म च सपाणिकवलम् ॥६१॥ निजधोरणतः स्ववाहनात् हंसात् । त्वरेण वेगेन । कोटिभिरग्रैः पृथ्व्यामिति देवाभिमाननिवृत्तिं सूचयति । भक्त्युद्गतानामानन्दाश्रूणामतीवपावित्र्या-त्सुशब्दप्रयोगः । आनिपात्य दण्डवत्प्रणम्येत्यर्थः ॥ ६२ ॥ क्षमायाचनार्थं पुनः पुनः उत्थाय चिरं पादयोः पतन्नेवास्ते न च विरमति ॥६३॥ अथ कथंचित् शनैः उत्थाय अश्रूणि प्रोञ्छ्य नम्रीभूतः समाहितः स्वस्थोऽपि कृतापराधात् स वेपथुः सकम्पः सन् गद्गदया इळया वाण्या ऐलत अस्तौत् । 'ईड् स्तुतौ डलयोरभेदात् 'गोभूवाच-स्त्विडा इला' इत्यमरात् । प्रश्रयो विनयः ॥ ६४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे त्रयोदशोऽध्यायः ॥१३॥

चतुर्दशेऽर्थगाम्भीर्यदैन्यभावाभिसन्धिता ।
स्तुतिः श्रीकृष्णतोषार्थं ब्रह्मणा विहितोच्यते ॥ १४ ॥

### ब्रह्मस्तुतिः

हे ईड्य स्तुतियोग्य भगवन् ते त्वां प्रसादयितुं नौमि । क्रियार्थेति तुमुन्नर्थे चतुर्थी । पत्ये शेते इतिवद्वा । अभ्रवत् श्यामं वपुर्यस्य । तडिद्वत् पीतेऽम्बरे वस्त्रे यस्य । गुञ्जाभिर्निर्मितौ अवतंसौ कर्णभूषणे परिपिच्छं बर्हापीडं मुकुटं च तैर्लसत् शोभमानं मुखं यस्य । वन्याः स्रजो यस्य । कवलो ग्रासस्तदादिभिर्लक्ष्मभिः श्रीः शोभा यस्य । यद्वा । लक्ष्म श्रीवत्सः । पशून् पातीति पशुपो नन्दस्तस्य अङ्गजाय पुत्राय । यद्वा । पशुपो-नन्दस्तस्य अङ्गं मित्रं वसुदेवस्तस्माज्जाताय । यद्वा । पान्तीति पाः पशवश्च पाश्च पशुपा वत्सवत्सपा अङ्गजा देहजा यस्य तस्मै । यद्वा । पशुपां गोपानां मध्ये गजाय मुख्याय । यद्वा । पशुं नन्दिनं पातीति पशुपो महादेवः अङ्गजो हृदयजो यस्य । पशून् प्राणिनः पाति पापात् रक्षतीति पशुपा गङ्गा अङ्गजा अंगुष्ठजा यस्येति वा ।

अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि ।
नेशे महि त्ववसितुं मनसाऽऽन्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः ॥ २ ॥
ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीयवार्ताम् ।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम्॥३॥
श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते नान्यद् यथा स्थूलतुषावघातिनाम् ॥ ४ ॥
पुरेह भूमन् बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया ।
विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥ ५ ॥
तथापि भूमन् महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलान्तरात्मभिः ।
अविक्रियात् स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया न चान्यथा ॥ ६ ॥
गुणात्मनस्तेऽपि गुणान् विमातुं हितावतीर्णस्य क ईशिरेऽस्य ।
कालेन यैर्वा विमिताः सुकल्पैर्भूपांसवः खे मिहिका द्युभासः ॥ ७ ॥
तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥ ८ ॥

---

इति संक्षेपः । अनन्तार्थकोऽयम् ॥ १ ॥ शुद्धसत्त्वस्य अस्यापि सगुणविग्रहस्यापि महि महिमानम् अवसितुं ज्ञातुं कश्चिदपि न ईशे न समर्थं आसीत् । लिट् । यद्वा । को ब्रह्मा अहमपि न ईशे तदा साक्षात् आत्मसुखानुभूते-निर्गुणस्य महि अवसितुं नेशे इति किमुत वक्तव्यम् । कथंभूतस्य । मयि अनुग्रहो यस्मात्तस्य । स्वेषां भक्तानां यथा इच्छा तथा प्रादुर्भवतः । आन्तरेण निरुद्धेनापि मनसा ॥ २ ॥ उदपास्य ईषदपि अकृत्वा सद्भिर्भवदी-मुखरितां वर्णितामत एव श्रवणगतां वार्तां भवदीयकथां तन्वादिभिर्नमन्तः सत्कुर्वन्तो ये जीवन्ति तैः प्रायशस्त्वं जितोऽसि वशीकृतोऽसि । हे अजित । स्थाने स्वनिवासे एव स्थिता न तु तदर्थं तीर्थादिषु भ्रमन्तः । तन्वा सत्कारः श्रवणसमये अञ्जलिबन्धादिः । वाचा अनुमोदनादिः । मनसा आस्तिक्यादिः ।।३।। श्रेयसां धर्मार्थकाममोक्षाणां सृतिः स्रावो यस्यास्तां भक्तिमुदस्य त्यक्त्वा उपेक्ष्येत्यर्थः । श्रेयोमार्गभूतां वा । 'सृ गतौ इत्यस्मात् । अन्यत् क्ले-शातिरिक्तं तुषातिरिक्तं च न शिष्यते । यथा स्थूलतुषानेवावघ्नतां स्थूलतुषः क्लेशं लाति ददातीति तथाऽसौ बोधोऽपि क्लेशजनक इत्यर्थः ।।४।। हे भूमन् सर्वव्यापक । त्वयि अर्पिता ईहा लौकिकी अपि चेष्टा यैस्तै । ईहा निजकर्माणि च तैः लब्धयेत्येकं पदं वा भक्त्यैव त्वां विबुध्य अञ्जः सुखेन ते परां गतिं मुक्तिं प्रपेदिरे प्रापुः ।।५।। हे भूमन् ते महिमा कश्चित् कथंचित् अमलैरन्तः करणै बोधविषयीभवितुमर्हति यद्वा । अर्हति अर्ह्यते शक्यत इत्यर्थः पच्यते ओदनः स्वयमेवेतिवत्कर्मणः कर्तृत्वम् । कुतः स्वस्यानुभवात् । तत्कुतः अविक्रियात् विकारात्मकप्रपञ्च रहितात् । तत्कुतः । रूपं विषयः शब्दादिस्तद्रहितात् । तच्च कथम् । स्वेनैवात्मनो बोध्यत्वेन न च अन्यथा बोद्धुं शक्यत इत्यर्थः ।।६।। अस्य जगतो हिताय पालनाय अवतीर्णस्य सगुणमूर्तेः ते गुणान् विमातु गणयितुं के ईशिरे समर्था बभूवुः न केऽपीत्यर्थः । बाहुलकादामभावः । यैः सुकल्पैर्गणकोत्तमैः भूपरमाणवः आकाशे हिमकणास्तथा दिवि नक्षत्रसमूहा विमितास्तेऽपि किं विमातुं समर्थाः नैवेत्यर्थः ।।७।। यतो ज्ञानं दुर्लभं तत् तस्मात् तेऽनुकम्पां सुसमीक्षमाणः कृपा कदा भविष्यतीति प्रतीक्षमाणः स्वार्जितं विपाकं कर्मफलं भुञ्जानः हृदादिभिस्ते तुभ्यं नमो

पश्येश मेऽनार्यमनन्त आद्ये परात्मनि त्वय्यपि मायिमायिनि।
मायां वितत्येक्षितुमात्मवैभवं ह्यहं कियानैच्छमिवार्चिरग्नौ॥ ९॥
अतः क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः।
अजावलेपान्धतमोऽधचक्षुष एषोऽनुकम्प्यो मयि नाथवानिति॥ १०॥
क्वाहं तमोमहदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः।
क्वेदृग्विधाऽविगणिताण्डपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम्॥ ११॥
उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागसे।
किमस्तिनास्तिव्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनन्तः॥ १२॥
जगत्त्रयान्तोदधिसम्प्लवोदे नारायणस्योदरनाभिनालात्।
विनिर्गतोऽजस्त्विति वाङ् न वै मृषा किं त्वीश्वर त्वन्न विनिर्गतोऽस्मि॥ १३॥
नारायणस्त्वं न हि सर्वदेहिनामात्मास्यधीशाखिललोकसाक्षी।
नारायणोऽङ्गं नरभूजलायनात्तच्चापि सत्यं न तवैव माया॥ १४॥

---

विदधत् यो जीवेत स मुक्तिपदे दायं भागं भजति अधिकारं प्राप्नोति। यद्वा। मुक्तिश्च पदं च तयोर्द्वन्द्वैक्यं तस्मिन् संसारमुक्तौ त्वच्चरणसेवायां च। हृदादीत्यनेन अष्टाङ्गप्रणामो लक्षितः॥ ८॥ हे ईश मे अनार्यं दौर्जन्यं पश्य। यत् अहं मायाविनामपि मोहके त्वय्यपि मायां वितत्य प्रसार्य आत्मवैभवमभीक्षितुमैच्छं स चाहं कियान् अतितुच्छ इत्यर्थः अग्नौ अर्चिः स्फुलिङ्ग इव॥९॥ यतस्त्वं महान् अतो हेतोः मे अपराधं क्षमस्व। कुतः। रजसो भवतीति तस्य अतः त्वामजानतः अत एव त्वत्तः पृथक् आत्मानमीशं मन्यमानस्य। कुतः अजोऽहमिति योऽवलेपो मदः स एवान्धं तमस्तेनान्धीभूतानि चक्षूंषि यस्य तथाभूतस्य। अतः स्वमनसि एवं प्रेरणां विधाय एष ब्रह्मा अनुकम्प्यः। तथा च अयं ब्रह्मा अनाथः मयि नाथे सति नाथवान् भविता अन्यथा अनाथ एव स्यादिति विचार्य अनुकम्प्यः ॥१०॥ तमः प्रकृतिः महत्तत्त्वमहङ्कारः तथा पञ्चतत्त्वैश्च संवेष्टितो योऽण्डघटस्तस्मिन् सप्तवितस्तिमात्रः कायो यस्य सोऽहं ब्रह्मा क्व। ईदृग्विधासंख्यब्रह्माण्डान्येव परमाणवस्तेषां चर्यार्थं भ्रमणार्थं गवाक्षा इव रोमविवराणि यस्य ते महित्वं च क्व। खमाकाशः। चरो वायुः॥ ११॥ हे अधोक्षज। गर्भगतस्य शिशोः पादयोःउत्क्षेपणं किं मातुरागसेऽपराधाय कल्पते नैवेत्यर्थः। भावाभावशब्दाभ्यां स्थूलसूक्ष्मकार्यकारणशब्दैर्वा भूषितं कथितं भुवि उषितं स्थितं वा कियदपि वस्तु तव कुक्षेरेनन्तः बहिः किमस्ति नास्तीत्यर्थः अतोऽहमपि ते कुक्षि गतःपुत्र एव मात्रेव त्वया मे अपराधः क्षन्तव्यः॥ १२॥ जगत्त्रयान्ते प्रलये य उधदीना सम्प्लव एकीभावस्तस्मिन्नुदके[२] त्वत् त्वत्तोऽहं न विनिर्गतः अपि तु त्वत्त एक उत्पन्नः॥१३॥ न होति काक्वा व्याख्येयम्। आत्मा आत्मत्वात् आश्रयत्वात्। अधीशत्वात् प्रवर्तकत्वात् साक्षित्वाच्च नारायणो नहि अपितु अस्त्येव। तथा च नारं जीवसमूहोऽय-नमाश्रयो यस्य। नारस्य अयनं प्रवृत्तिर्यस्मात्। नारम् अयते साक्षित्वेन जानातीति वा क्रमेण व्युत्पत्तिः कार्या।

---

१. दोर्भ्यां पदाभ्यां जानुभ्यामुरसा शिरसा दृशा।
मनसा वचसा चैव प्रणामोऽष्टाङ्ग ईरितः॥

२. नारायणस्य उदरे नाभिनालात् कमलात् अजो ब्रह्मा विनिर्गत इति वाक् मृषा न भवति अतः। 'नलिनेतु नकं मतम्' इति विश्वः। स्वार्थेऽण्।

तच्चेज्जलस्थं तव सज्जगद्वपुः किं मे न दृष्टं भगवंस्तदैव।
किं वा सुदृष्टं हृदि मे तदैव किं नो सपद्येव पुनर्व्यदर्शि ॥ १५ ॥
अत्रैव मायाधमनावतारे ह्यस्य प्रपञ्चस्य बहिः स्फुटस्य।
कृत्स्नस्य चान्तर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते ॥ १६ ॥
यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा। तत्त्वय्यपीह तत् सर्वं किमिदं मायया विना ॥१७॥
अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शितमेकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि।
तावन्तोऽसि चतुर्भुजास्तदखिलैःसाकं मयोपासितास्तावन्त्येव जगन्त्यभूस्तदमितं ब्रह्माद्वयं शिष्यते
अजानतां त्वत्पदवीमनात्मन्यात्माऽऽत्मना भासि वितत्य मायाम्।
सृष्टाविवाहं जगतो विधान इव त्वमेषोऽन्त इव त्रिनेत्रः ॥ १९ ॥
सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादस्स्वपि तेऽजनस्य।
जन्मासतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय च ॥ २० ॥
को वेत्ति भूमन् भगवन् परात्मन् योगेश्वरोतीर्भवतस्त्रिलोक्याम्।
क्व वा कथं वा कति वा कदेति विस्तारयन् क्रीडसि योगमायाम् ॥ २१ ॥
तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्।
त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत् सदिवावभाति ॥ २२ ॥

---

नरात्परमात्मनो भवतीति नरम् जलं तस्यायनात् यः प्रसिद्धो नारायणः सोऽपि तत्रैवाङ्गं मूर्तिः किन्तु सत्यं न परिच्छिन्नत्वेन तव माया लीलैव व्यापकत्वात्तवेत्यर्थः ॥ १४ ॥ जगदाश्रयभूतं तत् वपुः रूपं सत् चेत् तदैव कमलनालमार्गेण विचिन्वताऽपि मया कि न दृष्टम् तदैव तपः करणान्तरं सपद्येव सुदृष्टम्। पुनश्च नो दृष्टम् अतो लीलैव ॥१५॥ हे मायाधमन मायानिवर्तक। अन्तर्जठरे स्वोदरमध्ये अस्य प्रपञ्चस्य जनन्याः प्रदर्शनेन ते त्वया मायात्वमेव ॥ १६ ॥ यस्य तव कुक्षौ सर्वम् इदं यथा भाति तत्सर्वमिहापि बहिरपि तथैव भाति। किञ्च चं सात्मम् आत्मना त्वया सहितं तदिदं सर्वं त्वयि मायया विना किं घटते नैवेत्यर्थः। आत्मानमपरित्यज्य सात्मम्। साकल्येऽव्ययीभावः 'अनश्चेति टच्' 'अव्ययीभावे'—इति सहस्य सः ॥ १७ ॥ किमित्याश्चर्य-करम्। अस्य विश्वस्य मायात्वं त्वदृते त्वां विनाऽन्येन नादर्शितं किन्तु ते त्वयैव ममैव अद्यैव। तदेवाह एकऽसी-त्यादिना। ततो मया सह अखिलैस्तत्त्वादिभिः। पुनश्च जगन्ति ब्रह्माण्डानि त्वमभूः। एतच्च प्रागनुक्तमपि एतदुक्त्यैव ज्ञेयम्। तत् तदनु ब्रह्मैव शिष्यते ।१८। तव पदवीं स्वरूपमजानतां प्राणिनाम् अनात्मनि देहे स्थितः आत्मा त्वम् आत्मना स्वातन्त्र्येण भासि। कथम्। जगतः सृष्टौ अहं ब्रह्मेव। विधाने पालने एष त्वं विष्णुरिव। अन्ते संहारे रुद्र इव ॥१९॥ हे ईश। वामनः। ऋषिषु परशुरामः। रामः वाराहः। यादःसु जलजन्तुषु मत्स्यः इति क्रमेणार्थाः। एतेषु अजनस्य जन्मशून्यस्यापि ते जन्म असतां रावणादीनाम्। हे विधातः ॥२०॥ हे भूमन्। सर्वव्यापक। भवत ऊतीः जन्मादिलीलाः को वेत्ति न कोऽपीत्यर्थः। क्व कुत्र। कति कियत्संख्याकाः कदा वा ॥२१॥ स्वप्नाभं स्वप्नतुल्यम् अस्तधिषणं क्षणिकाभासम् पुरु बहुलं दुःखानन्तरं दुःखमेव यस्मिन् तत् अशेषमिदं जगत् नित्यानन्दज्ञानमूर्तौ त्वय्येव उद्यत् उत्पन्नं सत् अपियत् नश्यत् सदिव अवभाति सत्यस्य तव अधिष्ठानत्वेन न वस्तुतः सत्। अपिपूर्वकादिणः शतृप्रत्यये इणो यण् च ॥ २२ ॥ अक्षरः अपक्षयशून्यः। निरञ्जनो निर्लिप्तः।

एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः ।
नित्योऽक्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥ २३ ॥
एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते ।
गुर्वर्कलब्धोपनिषत्सुचक्षुषा ये ते तरन्तीव भवानृताम्बुधिम् ॥ २४ ॥
आत्मानमेवात्मतयाऽविजानतां तेनैव जातं निखिलं प्रपञ्चितम् ।
ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा ॥ २५ ॥
अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ।
अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी ॥ २६ ॥
त्वामात्मानं परं मत्वा परमात्मानमेव च । आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताज्ञता ॥ २७ ॥
अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः ।
असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं किमु यन्ति सन्तः ॥ २८ ॥
अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि ।
जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥ २९ ॥
तदस्तु मे नाथ स भूरिभागो भवेऽत्र वान्यत्र तु वा तिरश्चाम् ।
येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम् ॥ ३० ॥

---

अमृतो नाशरहितः ॥२३॥ सकलजीवानामपि स्वात्मानम् अन्तर्यामिणं त्वाम् आत्मात्मतया स्वाभेदेन स्वाराध्यत्वेन वा ये पश्यन्ति ते भवाम्बुधिं तरन्तीव । केन । गुरुरेव अर्कस्तस्माल्लब्धं यद् ज्ञानचक्षुस्तेन । भवाम्बुधेरनृतत्वेन तरणस्यापि तथात्वादिवेत्युक्तम् ॥२४॥ यथार्थतया अविजानतां पुंसां तेनैव अज्ञानेनैव प्रपञ्चितं संसारः तत् प्रपञ्चितम् लीयते यथा रज्ज्वामहेः भोगस्य सर्पशरीरस्य भव अध्यासः अज्ञानेन प्रतीतिः अभवोऽपवादः ज्ञानेन तन्निवृत्तिश्च तथा ॥ २५ ॥ भवेन बन्धः तस्मान्मोक्षश्च द्वौ अपि अज्ञानसंज्ञौ ऋतः सत्यः ज्ञो ज्ञानरूपः यो भाव आत्मा तस्मादन्यौ न स्तः । अज्ञानात् आत्मैव बद्ध मुक्तश्चेति व्यवहारो भवति । यथा तरणौ सूर्ये सततं निरीक्ष्यमाणे रात्र्यहनी न स्तः एवमात्मनि विचार्यमाणे सत्यंनुभवे बन्धमोक्षावपि न स्तः । भावयति चेतयतीति भाव आत्मा ॥ २६ ॥ आत्मानं परं देहादिकम् परं देहादिकं च आत्मानम् मत्वा एवमन्तर्नष्ट आत्मा बहिर्मृग्यते इत्यहो अज्ञजनताया मूर्खता । न हि गृहे नष्टं वस्तु वने मृग्यत इत्यर्थः । सदैन्यरोदनवचनत्वेन मृग्य इत्यकारस्य प्लुतत्वात् 'अतोरोरप्लुताद्'–इति सूत्रं न प्रवर्तते ॥२७॥ सन्तः अन्तर्भवे देहमध्ये एव त्वां मृगयन्ति अन्वेषयन्ति । तद् ब्रह्म न भवतीति अतत् जगत् तत् नेति नेति कृत्वा त्यजन्तः । जडं देहाध्यासं वा । उचितं चैतद् यतोऽन्ति समीपे असन्तमपि अहिम् अन्तरेण नायं सर्प इति निषेधं विना । यद्वा । प्रकाशं विना सन्तं वर्तमानमपि गुणं रज्जुं सन्तोऽपि किमु यन्ति[1] जानन्ति नैवेत्यर्थः ॥ २८ ॥ अनुगृहीतः कृपाभाजन एव भगवतस्तव महिम्नस्तत्वं जानाति यद्वा हे भगवन् ते महिम्नः । अन्यो भक्तिहीनः एकोऽपि चिरं विचिन्वन् शास्त्रयोगाभ्यासादिना सततमालोडयन्नपि न वेत्ति ॥२९॥ तद् तस्मात् । स मे भूरिभागो महद्भाग्यम् अस्तु अत्र भवे ब्रह्मजन्मनि । ब्रह्मजन्मारभ्य कर्म-

---

१. 'इण् गतौ लट् 'गत्यर्थानां ज्ञानार्थतापीति वामनादयः ।

अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा ।
यासां विभो वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः ॥ ३१ ॥
अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् । यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥ ३२ ॥
एषां तु भाग्यमहिमाच्युत तावदास्तामेकादशैव हि वयं बत भूरिभागाः ।
एतद्धृषीकचषकैरसकृत् पिबामः शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते ॥ ३३ ॥
तद् भूरिभाग्यमिह जन्म किमप्यटव्यां यद् गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम् ।
यज्जीवितं तु निखिलं भगवान् मुकुन्दस्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ॥ ३४ ॥
एषां घोषनिवासिनामुत भवान् किं देव रातेति नश्चेतो विश्वफलात् फलं त्वदपरं कुत्राप्ययन् मुह्यति
सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ।३५।
तावद् रागादयः स्तेनास्तावत् कारागृहं गृहम् । तावन्मोहोऽङ्घ्रिनिगडो यावत् कृष्ण न ते जनाः।
प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले । प्रपन्नजनतानन्दसंदोहं प्रथितुं प्रभो ॥३७॥
जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो । मनसो वपुषो वाचो वैभवं तव गोचरः ॥३८॥
अनुजानीहि मां कृष्ण सर्वं त्वं वेत्सि सर्वदृक् । त्वमेव जगतां नाथो जगदेतत्तवार्पितम् ॥३९॥
श्रीकृष्ण वृष्णिकुलपुष्करजोषदायिन् क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् ।
उद्धर्मशार्वरहर क्षितिराक्षसध्रुगाकल्पमार्कमर्हन् भगवन् नमस्ते ॥ ४० ॥

---

वशात् तिर्यग्योनिष्वपि पशवादिष्वपि भ्रमन् क्रमेण भवज्जनानां मध्ये एकोऽपि दासानुदासो भूत्वा तव पादपल्लवं नितरां सेवेय । तदेव मे अहोभाग्यम् । लिङर्थे लट् ॥३०॥ यासां गोगोपीनां स्तन्यं दुग्धम् अमृतमिव स्वादु ते त्वया अतीव तृप्तिपूर्वकं पीतम् । केन रूपेण । वत्सतरात्मना वत्सतररूपेण आत्मजरूपेण च । यत् यस्य तव तृप्तये अध्वरा यज्ञा अद्यावधि नालं न समर्थाः ॥ ३१ ॥ अहो इति द्विरुक्तिः भाग्यस्य महत्त्वं सूचयति ॥ ३२ ॥ एषां गोपानां महिमा तावत् आस्तां कस्तं वक्तुं शक्नुयात् । एकादश [1]इन्द्रियाधिष्ठातृदेवताः शर्वाद्यो वयं च महाभाग्यवन्तो जाता । एतेषां गोपानां हृषीकाणि इन्द्रियाण्येव चषकाणि पानपात्राणि तैः ते चरणकमलमाधुर्यामृतरसं पिबामः । शर्वोऽहङ्काराधिष्ठाता । बत हर्षे ॥ ३३ ॥ इह मनुष्यलोके यत् किमपि जन्म तत्राप्यटव्यां यत् जन्म तत्रापि गोकुले यत् जन्म । कीदृशम् । कतमस्य यस्य कस्यापि गोपस्य चरणधूलेरभिषेको यत्र तथाभूतं जन्मास्तु ॥ ३४ ॥ हे देव । उत अपि एषां एभ्यः शेषे षष्ठी विश्वफलात् त्वत्तोऽपरं फलं किं राता दास्यतीति नोऽस्माकंचेतः कुत्रापि अयत् गच्छत् विचारयत् । यद्वा । न यत् अयत् फलम् अप्राप्नुवत् मुह्यति व्याकुलीभवति । नञ्पूर्वकादिण्धातोः शतृप्रत्ययः । येषां धामादयस्त्वत्कृते त्वदर्थं तेषां किमिति मोहे कारणम् । सद्वेषात् मातृतुल्यवेशात् त्वामेव प्रापिता हे देव ॥ ३५ ॥ स्तेना ज्ञानाद्यपहारकाः । कारागृहं बन्धनागारम् । अङ्घ्रिनिगडः पादशृङ्खला । यावत् ते जनाः ते भक्ता न । त्वन्निष्ठास्तु रागादयोमोचका एवेत्यर्थः ॥ ३६ ॥ प्रपञ्चातीतोऽपि त्वं प्रपञ्चस्थपुत्रादिभावम् अनुकरोषि हे प्रभो प्रथयितुं विस्तारयितुम् ॥३७॥ वयं ब्रह्म जानीम इति ये वदन्तः सन्ति ते एव जानन्तु किं प्रलापेन । तव वैभवम् ऐश्वर्यं ये मन आदीनां गोचरो विषयो न । वपुषश्चक्षुषः ॥ ३८ ॥ अनुजानीहि गन्तुमाज्ञां देहि । यद्वा । अन्तर्भावितण्यर्थः, अनुज्ञापय । जगत् शरीरं च ॥३९॥ यदुकुलकमलस्य

श्रीशुक उवाच

इत्यभिष्टूय भूमानं त्रिः परिक्रम्य पादयोः । नत्वाभीष्टं जगद्धाता स्वधाम प्रत्यपद्यत ॥४१॥

ततोऽनुज्ञाप्य भगवान् स्वभुवं प्रागवस्थितान् । वत्सान् पुलिनमानिन्ये यथापूर्वसखं स्वकम् ॥४२॥

एकस्मिन्नपि यातेऽब्दे प्राणेशं चान्तराऽऽत्मनः । कृष्णमायाहता राजन् क्षणार्धं मेनिरेऽर्भकाः ॥४३॥

किं किं न विस्मरन्तीह मायामोहितचेतसः । यन्मोहितं जगत् सर्वमभीक्ष्णं विस्मृतात्मकम् ॥४४॥

ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा । नैकोऽप्यभोजि कवल एहीतः साधु भुज्यताम् ॥४५॥

ततो हसन् हृषीकेशोऽभ्यवहृत्य सहार्भकैः । दर्शयंश्चर्माजगरं न्यवर्तत वनाद् व्रजम् ॥४६॥

बर्हप्रसूननवधातुविचित्रिताङ्गः प्रोद्दामवेणुदलशृङ्गरवोत्सवाढ्यः ।
वत्सान् गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः प्रविवेश गोष्ठम् ॥४७॥

अद्यानेन महाव्यालो यशोदानन्दसूनुना । हतोऽविता वयं चास्मादिति बाला व्रजे जगुः ॥४८॥

राजोवाच

ब्रह्मन् परोद्भवे कृष्णे इयान् प्रेमा कथं भवेत् । योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम् ॥४९॥

श्रीशुक उवाच

सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः । इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि ॥५०॥

---

प्रीतिदातृत्वेन सूर्योपम । क्षमा पृथ्वीं तदादय एव उदधयः तेषां वृद्धिकारित्वेन चन्दोपम । उद्धर्मः पाखण्डधर्मः स एव शार्वरं रात्रिजन्यं तमस्तद्धरतीत्यनेन द्वयोपम । राक्षसाः कंसाद्या । आर्कमर्हन् । सूर्यभमिव्याप्य सर्वेषां पूज्य हे भगवन् । ते कल्पपर्यन्तं नमः । अत्र सप्त संबोधनानि संतावरणभेदकराणि ॥ ४० ॥ भूमानं सर्वव्यापकम् । त्रिर्नत्वा त्रिरभिष्टूयेत्यत्र वा संबन्धः । परिक्रम्येत्यत्रान्वये तु 'चत[2] स्रः केशवस्योक्ता इत्युक्तेर्विरोधः स्यादित्यवधेयम् । स्वधाम सत्यलोकम् ॥ ४१ ॥ ततः स्तुत्यनन्तरम् । स्वभुवं ब्रह्माणं नाट्यसमाप्तौ हेतुभूतेन मौनेनैव आज्ञां प्रदाप्य । मौनं सम्मतिलक्षणम् इति वचनात् । वत्सान् पुलिनम् आनिन्ये प्राग्वदेव दूरप्रदेशे तृणं चरतः स्थितान् । स्वकं स्वभोजनस्थानम् । यथापूर्वं स्थिताः सखायो यस्मिन् तत् ॥ ४२ ॥ आत्मनः प्राणेशं श्रीकृष्णमन्तरा विना । हता मोहिताः ॥ ४३ ॥ यत् यया जगत् प्राणिमात्रम् । विस्मृतः आत्मा स्वरूपमपि येन ॥ ४४ ॥ अतिरंहसा अतिवेगेन आगमनं जातम् । इतोऽत्र ॥४५॥ अभ्यवहृत्य भुक्त्वा ॥४६॥ भगवान् गोष्ठं व्रजं प्रविवेशेत्यन्वयः । कथंभूतः । बर्हो मयूरपिच्छं तदादिभिः विचित्रितानि अङ्गानि यस्य । पुनश्च । प्रोद्दामोऽत्युच्चःयो वेण्वादीनां रवस्तेन य उत्सवो नृत्यादिरूपस्तेन आढ्यः सम्पन्नः । पुनश्च । गोपीदृशामुत्सवरूपा दृशिर्दर्शनं यस्य सः । वत्सान् गृणन् मधुरशब्दैः आह्वयन् ॥४७॥ व्यालात् वयमविता रक्षिताः । बहूनामुक्तौ सहैव दर्शितत्वात् यशोदानन्देत्युक्तम् । यद्वा । यशोदां नन्दयतीति स चासौ सूनुश्च तेन ।४८। योऽभूतपूर्वः स्वपुत्रेष्वपि स परोद्भवे परपुत्रे कृष्णे कथमित्यन्वयः ।४९। वल्लभः प्रियः । तस्य आत्मनो वल्लभतयैव सुखसाधनतयैव इतरे वल्लभाः न स्वतः ॥५०॥ तथा ममतालम्बिषु ममतास्पदेषु न ।५१। तं देहमनु

---

१. दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः : चन्द्रश्च ।

२. शेषपदानीत्थम् । एका चण्ड्याः रवेः सप्त तिस्रो गणपतेः स्मृताः ।
चतस्रः केशवस्योक्ताः शिवस्यार्द्धा प्रदक्षिणा ॥

तद् राजेन्द्र यथा स्नेहः स्वस्वकात्मनि देहिनाम् । न तथा ममतालम्बिपुत्रवित्तगृहादिषु ॥५१॥
देहात्मवादिनां पुंसामपि राजन्यसत्तम । यथा देहः प्रियतमस्तथा न ह्यनु ये च तम् ॥५२॥
देहोऽपि ममताभाक् चेत्तर्ह्यसौ नात्मवत् प्रियः । यज्जीर्यत्यपि देहेऽस्मिन् जीविताशा बलीयसी ५३
तस्मात् प्रियतमः स्वात्मा सर्वेषामपि देहिनाम् । तदर्थमेव सकलं जगदेतच्चराचरम् ॥५४॥
कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् । जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥५५॥
वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च । भगवद्रूपमखिलं नान्यद् वस्त्विह किंचन ॥५६॥
सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः । तस्यापि भगवान् कृष्णः किमतद् वस्तु रूप्यताम् ५७

समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशोमुरारेः ।
भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद् विपदां न तेषाम् ॥५८॥

एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया । यत् कौमारे हरिकृतं पौगण्डे परिकीर्तितम् ॥५९॥

एतत् सुहृद्भिश्चरितं मुरारेरघार्दनं शाद्वलजेमनं च ।
व्यक्तेतरद् रूपमजोर्वभिष्टवं श‍ृण्वन् गृणन्नेति नरोऽखिलार्थान् ॥६०॥

एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे । निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥६१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे ब्रह्मस्तुतिर्नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

पश्चाद् वर्तन्ते ये पुत्रादयस्ते तु नहि प्रियतमा इत्यर्थः ॥५२॥ यत् यस्मात् जीर्यत्यपि आसन्नमरणेऽपि आत्मनो जीविताशा ॥५३॥ तदर्थं स्वात्मार्थमेव एतत् सकलं प्रियतममित्यर्थः ॥ ५४ ॥ अखिलजीवानामात्मानं कृष्णम् अवेहि । मायया कृपया ॥५५॥ वस्तुतो जगत्कारणं कृष्णं जानतां पुंसां स्थावरं जङ्गमम् अखिलं वस्तु तद्रूपमेव भाति ॥५६॥ वस्तूनां स्थावरादीनां भावार्थः सत्तारूपोऽर्थः भवति कारणे स्थितः । तस्य कारणस्यापि कारणं भगवान् कृष्णः अतोऽन्यत् कृष्णव्यातिरिक्तं किं वस्तु न किमपि अस्ति चेत् निरूप्यताम् ।५७। पदपल्लव एव प्लवः नौकारूपस्तं ये समाश्रितास्तेषां भवाम्बुधिः वत्सपदमिव भवति। लुप्तोपमा। परं पदं वैकुण्ठाख्यं पदं स्थानं भवति। विपदां पदं स्थानं न भवति । यद्वा विपदां पदं यत् जगत् तत् पदं न भवति । महतां भक्तानामाश्रयम् । पुण्ययशाश्चासौ मुरारिरित्येकपदम् ॥ ५८ ॥ एतच्चरितं श‍ृण्वन् गृणन् उपदिशन् नरः सर्वपुरुषार्थान् एति प्राप्नोतीत्यन्वयः । अघासुरनाशनम् । शाद्वले घासे जेमनं भोजनम्[1] । वत्सरूपेण नवतृणानां भोजनं च । व्यक्तात् जडप्रपञ्चात् इतरत् शुद्धसत्त्वात्मकं वत्सवत्सपरूपम् । यद्वा । व्यक्तेतरत् सच्चिदानन्दविलासस्तदेव रूप्यते प्रकाश्यते यत्रेति अभिष्टवविशेषणम् । अस्य ब्रह्मणः उरुर्महान् स्तवः तम् ॥ ६० ॥ निलायनं निलीय स्थितस्य अन्येन मार्गणम् । कौमारं वयः जहतुः त्यक्तवन्तौ ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे गूढादीपिन्यां चतुर्दशोऽध्यायः ॥ ६१ ॥

## अथ पञ्चदशोऽध्यायः

### श्रीशुक उवाच

ततश्च पौगण्डवयःश्रितौ व्रजे बभूवतुस्तौ पशुपालसम्मतौ ।
गाश्चारयन्तौ सखिभिः समं पदैर्वृन्दावनं पुण्यमतीव चक्रतुः ॥१॥
तन्माधवो वेणुमुदीरयन् वृतो गोपैर्गृणद्भिः स्वयशो बलान्वितः ।
पशून् पुरस्कृत्य पशव्यमाविशद् विहर्तुकामः कुसुमाकरं वनम् ॥२॥
तन्मञ्जुघोषालिमृगद्विजाकुलं महन्मनःप्रख्यपयःसरस्वता ।
वातेन जुष्टं शतपत्रगन्धिना निरीक्ष्य रन्तुं भगवान् मनो दधे ॥३॥
स तत्र तत्रारुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः ।
स्पृशच्छिखान् वीक्ष्य वनस्पतीन् मुदा स्मयन्निवाहाग्रजमादिपूरुषः ॥४॥

### श्रीभगवानुवाच

अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणम् ।
नमन्त्युपादाय शिखाभिरात्मनस्तमोऽपहत्यै तरुजन्म यत्कृतम् ॥५॥
एतेऽलिनस्तव यशोऽखिललोकतीर्थं गायन्त आदिपुरुषानुपदं भजन्ते ।
प्रायो अमी मुनिगणा भवदीयमुख्या गूढं वनेऽपि न जहत्यनघात्मदैवम् ॥६॥

---

कृष्णगोचारणं पञ्चदशे धेनुकमर्दनम् ।
विषाम्भःपानतो रक्षा मृतानां चात्र वर्ण्यते ॥१५॥

ततः कौमारानन्तरम् । पौगण्डं दशमावधि । अतीव सर्वत्र भ्रमणेन । पशूनां पालने पशुपालानां वा सम्मतौ ॥१॥ माधवः विहर्तुं कामः सन् पशव्यं पशुभ्यो हितकरं कुसुमाकरं तद्वनं प्राविशत् इत्यन्वयः । स्वयशो गृणाद्भिर्गोपैर्वृतः ।२। भगवान् तद्वनं निरीक्ष्य रन्तुं मनो दधे । कथंभूतम् । मञ्जुघोषा मधुरशब्दा ये भ्रमरादयस्तैः आकुलं पूर्णम् । वेणुम् उदीरयन् वादयन् पुनश्च महतां मनसा प्रख्यं तुल्यं स्वच्छं जलं यत्र तत्सरः सरसः शैत्यमस्ति यस्मिन् तेन वायुना जुष्टं सेवितम् । शतपत्रं कमलम् ॥ ४ ॥ स कृष्णः तत्र तत्र वने पल्लवश्रिया सह फलानां पुष्पाणां च अधिकभारेण पादयोः स्पृक्छाखाग्रान् वृक्षान् वीक्ष्य विस्मित इव अग्रजं बलदेवमाहेत्यन्वयः ॥४॥ हे देववर । अमी वृक्षाः सुमनः पुष्पंतदादि पूजनद्रव्यम् आत्मनः शिखारूपैः हस्तैः आदाय ते पदाम्बुजं नमन्तीत्यन्वयः अर्ह्यते-नेनेति अर्हणम् । किमर्थम् । येन तरुजन्म कृतं तस्य तमसःपापस्य अपहत्यैं निवृत्तये ॥५॥ हे आदिपुरुष । हे अनघ । दुखनिवर्तक । आलिनो भ्रमरा एव मुनिगंणाःवने गूढमपि त्वां न जहति न त्यजन्ति । यतःआत्मन इष्टदैवम् ।६। हे ईड्य । शिखिनो मयूराः नृयन्ति । हरिण्यः गोप्य इव इक्षणेन ते प्रियं कुर्वन्ति। हि यतः वनौकसः

---

१. यद्वा । शाद्वलाशनेन वत्सवृन्देन सहितं जेमनं गोपीयमोजनं शाद्वलजेमनम् मध्यमपदलोपी समासः । 'जिमु अदने' भ्वा. ल्युट् ।

नृत्यन्त्यमी शिखिन ईड्य मुदा हरिण्यः कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन ।
सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान् हि सतां निसर्गः ॥७॥
अन्येयमद्य धरणी तृणवीरुधस्त्वत्पादस्पृशो द्रुमलताः करजाभिमृष्टाः ।
नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥८॥

श्रीशुक उवाच

एवं वृन्दावनं श्रीमत् कृष्णः प्रीतमनाः पशून् । रेमे संचारयन्नद्रेः सरिद्रोधस्सु सानुगः ॥९॥
क्वचिद् गायति गायत्सु मदान्धालिष्वनुव्रतैः । उपगीयमानचरितः स्रग्वी संकर्षणान्वितः ॥१०॥
क्वचिच्च कलहंसानामनु कूजति कूजितम् । अभिनृत्यति नृत्यन्तं बर्हिणं हासयन् क्वचित् ॥११॥
मेघगम्भीरया वाचा नामभिर्दूरगान् पशून् । क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥१२॥
चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः । अनुरौति स्म सत्त्वानां भीतवद् व्याघ्रसिंहयोः ॥१३॥
क्वचित् क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणम् । स्वयं विश्रमयत्यार्यं पादसंवाहनादिभिः ॥१४॥
नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः । गृहीतहस्तौ गोपालान् हसन्तौ प्रशशंसतुः ॥१५॥
क्वचित् पल्लवतल्पेषु नियुद्धश्रमकर्शितः । वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः ॥१६॥
पादसंवाहनं चक्रुः केचित्तस्य महात्मनः । अपरे हतपाप्मानो व्यजनैः समवीजयन् ॥१७॥
अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः । गायन्ति स्म महाराज स्नेहक्लिन्नधियः शनैः ॥१८॥

एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विडम्बयन् ।
रेमे रमालालितपादपल्लवो ग्राम्यैः समं ग्राम्यवदीशचेष्टितः ॥१९॥

श्रीदामा नाम गोपालो रामकेशवयोः सखा । सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन् ॥२०॥
राम राम महाबाहो कृष्ण दुष्टनिबर्हण । इतोऽविदूरे सुमहद् वनं तालालिसंकुलम् ॥२१॥

---

वनवासिनः । निसर्गः स्वभावः ॥७॥ धन्येति वचनव्यत्ययेन सर्वत्रान्वेति । करजैर्नखैः स्पृष्टाः । भुजयोरन्तरेण वक्षसा आलिङ्गनेन गोप्यो धन्याः । यस्मै स्पृहत्येव केवलं श्रीर्न च तत्प्राप्नोति । वस्तुतः स्पृहत्येव सततं न च ततः प्रचलति सुखातिरेकादित्यर्थः ॥ ८ ॥ श्रीमत् शोभायुक्तं वनं प्रति प्रीतः । गोपैः सह संचारयन् प्रीतमनाश्च अतो न पुनरुक्तिः । अद्रेः समीपवर्तिषु रोधःसु तटेषु रेमे । क्वचित् प्रति इत्यत्र कृष्ण इति पाठः ॥९॥ अनुव्रतैर्गोपैरुरित्यत्रान्वेति ॥१०॥ बर्हिणम् अभि सम्मुखम् नृत्यति । हासयन् सखीन् ॥११॥ मनोज्ञया मनोहरया वाचा ॥ १२ ॥ क्रौञ्चो जलचरपक्षी । चक्राह्वः चक्रवाकः । भारद्वाजः ऊर्ध्वाधश्चञ्चुः चित्रिताङ्गः पक्षी । अनुकृत्य रौति । सत्त्वानां जीवानां मध्ये ताभ्याम् भीतवत् भवति न तु भीतः । वतिना भयाभावो द्योतितः पञ्चम्यर्थे षष्ठी ॥ १३ ॥ उपबर्हणं शिरःपीठम् । आर्यं बलदेवम् विगतश्रमं करोति ॥ १४ ॥ नृत्यत इत्यादि-द्वितीयान्तानां गोपालानित्यनेन सम्बन्धः । वल्गतः प्लवतः । वल्ग प्लवने धातुः । हसन्तौ स्खलने सति ॥ १५ ॥ नियुद्धं द्वन्द्वयुद्धम् ॥ १६ ॥ पादसंवाहनं चरणमर्दनम् ॥ १७ ॥ तदनुरूपाणि शयनोपयोगीनि । मनोज्ञानि मधुरगीतानि ॥१८॥ गतिः स्वरूपम् । ग्राम्यैः गोपैः सह ग्राम्यवत् रेमे । मध्ये मध्ये ईशस्यैव चेष्टितानि यस्य सः प्रकटितैश्वर्यः ॥ १९ ॥ स्तोककृष्ण इति चतुरक्षरमेकं गोपनाम ॥ २० ॥ दुष्टनिबर्हण दुष्टोन्मूलक आलिः

फलानि तत्र भूरीणि पतन्ति पतितानि च। सन्ति किन्त्ववरुद्धानि धेनुकेन दुरात्मना ॥२२॥
सोऽतिवीर्योऽसुरो राम हे कृष्ण खररूपधृक्। आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः ॥२३॥
तस्मात् कृतनराहाराद् भीतैर्नृभिरमित्रहन्। न सेव्यते पशुगणैः पक्षिसङ्घैर्विवर्जितम् ॥२४॥
विद्यन्तेऽभुक्तपूर्वाणि फलानि सुरभीणि च। एष वै सुरभिर्गन्धो विषूचीनोऽवगृह्यते ॥२५॥
प्रयच्छ तानि नः कृष्ण गन्धलोभितचेतसाम्। वाञ्छास्ति महती राम गम्यतां यदि रोचते ॥२६॥
एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया। प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू ॥२७॥
बलः प्रविश्य बाहुभ्यां तालान् सम्परिकम्पयन्। फलानि पातयामास मतङ्गज इवौजसा ॥२८॥
फलानां पततां शब्दं निशम्यासुररासभः। अभ्यधावत् क्षितितलं सनगं परिकम्पयन् ॥२९॥
समेत्य तरसा प्रत्यग् द्वाभ्यां पद्भ्यां बलं बली। निहत्योरसि काशब्दं मुञ्चन् पर्यसरत् खलः॥३०॥
पुनरासाद्य संरब्ध उपक्रोष्टा पराक् स्थितः। चरणावपरौ राजन् बलाय प्राक्षिपद् रुषा ॥३१॥
तं गृहीत्वा प्रपदयोर्भ्रामयित्वैकपाणिना। चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ॥३२॥
तेनाहतो महातालो वेपमानो बृहच्छिराः। पार्श्वस्थं कम्पयन् भग्नः स चान्यं सोऽपि चापरम् ३३
बलस्य लीलयोत्सृष्टखरदेहहताहताः। तालाश्चकम्पिरे सर्वे महावातेरिता इव ॥३४॥
नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे। ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः ॥३५॥
ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये। क्रोष्टारोऽभ्यद्रवन् सर्वे संरब्धा हतबान्धवाः ॥३६॥
तांस्तानापततः कृष्णो रामश्च नृप लीलया। गृहीतपश्चाच्चरणान् प्राहिणोत्तृणराजसु ॥३७॥
फलप्रकरसंकीर्णा दैत्यदेहैर्गतासुभिः। रराज भूः सतालाग्रैर्घनैरिव नभस्तलम् ॥३८॥
तयोस्तत् सुमहत् कर्म निशाम्य विबुधादयः। मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥३९॥

---

पङ्क्तिः ॥ २१ ॥ पतन्ति शत्रन्तं प्रथमाबहुवचनम् ॥ २२ ॥ धर्जतीति धृजेः क्विप्। ज्ञातिशब्दः क्तिजन्तः अतः स्त्रीत्वाभावादन्यैरित्युक्तम् ॥२३॥ हे अमित्रहन् शत्रुनाशक ॥२४॥ विष्वक् सर्वत्राञ्चति प्रसरतीति विषूचीनः पृषोदरादिः। अवगृह्यते घ्राणेनेति शेषः ॥ २५ ॥ प्रयच्छ देहि नोऽस्माकम् ॥ २६। २७। २८। असुरश्चासौ रासभः खरः। सनगं सवृक्षम्। हन्तुमभ्यधावत् ॥२९॥ तरसा वेगेन-समेत्य समागतय प्रत्यग्द्वाभ्यां पश्चिमाभ्याम् काशब्दं तज्जातिशब्दम्। पर्यसरत् पर्यधावत् ॥ ३० ॥ क्रोष्टा सगालस्तद्वदत्युच्चध्वनित्वात् उपक्रोष्टा गर्दभः। अत्र रासभे गौणी लक्षणा। संरब्धः क्रुद्धः। पराक् पृष्ठीकृत्य स्थितः। बलाय बलं हन्तुम्। अपरौ पश्चिमौ ॥ ३१ ॥ तं दैत्यम्। प्रपदयोः पादाग्रयोः। इत्येव पाठः साधुः। तृणराजस्तालः भ्रामयित्वा मित्वेऽपि बाहुलकात् ह्रस्वाभावः ॥३२॥ तेन खरदेहेन। बृहच्छिरा अत्युच्चः। स चान्यं कम्पयन् सोऽपि अपरं कम्पयन्नि-त्यादि योज्यम् ॥३३॥ प्रक्षिप्तेन खरदेहेन यो हतस्तेनाहतोऽन्यस्तेनान्य इत्येवं हताहताः ॥३४॥ एतत् तालादि-पातनम्। चित्रमाश्चर्यं न। इदं विश्वम्। ओतमूर्ध्वतन्तुषु प्रोतं तिर्यक्तन्तुषु संग्रथितम्। अङ्ग हे राजन्! ॥३५॥ क्रोष्टारः'क्रुश'आह्वाने इत्यस्मात्। स्वज्ञात्याह्वानं कुर्वाणा इत्यर्थः ॥ ३६ ॥ प्राहिणोत् चिक्षेप। तृणराजसु तालमूलेषु। बाहुलकाट्टजभावः ॥ ३७ ॥ फलप्रकरैः फलसमूहैः तथा दैत्यदेहैश्च संकीर्णा व्याप्ता भूः रराज। संकीर्णमिति पाठे क्रियाविशेषणम्। नभस्तलमाकाशमण्डलम् ॥ ३८ ॥ तयोः रामकृष्णयोः ॥ ३९ ॥ आदन्

अथ तालफलान्यादन् मनुष्या गतसाध्वसाः । तृणं च पशवश्चेरुर्हतधेनुककानने ॥४०॥
कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः । स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥४१॥
तं गोरजश्छुरितकुन्तलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासम् ।
वेणुं क्वणन्तमनुगैरनुगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन् समेताः ॥४२॥
पीत्वा मुकुन्दमुखसारधमक्षिभृङ्गैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ।
तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहासविनयं यदपाङ्गमोक्षम् ॥४३॥
तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले । यथाकामं यथाकालं व्यधत्तां परमाशिषः ॥४४॥
गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः । नीवीं वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ ॥४५॥
जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ । संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥४६॥
एवं स भगवान् कृष्णो वृन्दावनचरः क्वचित् । ययौ राममृते राजन् कालिन्दीं सखिभिर्वृतः ।४७।
अथ गावश्च गोपाश्च निदाघातपपीडिताः । दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम् ॥४८॥
विषाम्भस्तदुपस्पृश्य दैवोपहतचेतसः । निपेतुर्व्यसवः सर्वे सलिलान्ते कुरूद्वह ॥४९॥
वीक्ष्य तान् वै तथाभूतान् कृष्णो योगेश्वरेश्वरः। ईक्षयाऽमृतवर्षिण्या स्वनाथान् समजीवयत्॥५०॥
ते सम्प्रतीतस्मृतयः समुत्थाय जलान्तिकात् । आसन् सुविस्मिताः सर्वे वीक्षमाणाः परस्परम् ५१
अन्वमंसत तद् राजन् गोविन्दानुग्रहेक्षितम् । पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः ॥५२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्द्धे धेनुकवधो नाम पञ्चदशोऽध्यायः ॥१५॥

---

अभक्षयन् । निर्भया मनुष्यास्तत्रत्या भिल्लादयो न तु गोपा गर्दभरुधिरोक्षितत्वेन फलेषु घृणोत्पत्तेः । हतेति षष्ठीसमासो बहुव्रीहिर्वा ।४०। पुण्ये पुण्यजनके श्रवणकीर्तने यस्य । यद्वा । पुण्ये धन्ये श्रवणे कर्णौ यतस्तादृक्कीर्तनं वेणुगानं यस्येति ॥४१॥ समेता मिलिता गोप्यः तं कृष्णं द्रष्टुमभ्यगमन् सम्मुखं जग्मुः । गोरजोभिर्व्याप्तकेशेषु बद्धं बर्हं मयूरपिच्छं वन्यानि पुण्याणि यस्य रुचिरे ईक्षणे यस्य चारुर्हासो यस्य स चासौ स चासौ स च तम् ॥ ४२ ॥ अक्षिभृङ्गैः मुखपद्मगतं सारवं मधु तत्सौन्दर्यामृतमित्यर्थः पीत्वा दृष्ट्वेत्यर्थः । तापं जहुः । तासां सत्कृतिः कटाक्षपातरूपैव तां प्राप्य ॥ ४३ ॥ परमाशिषः तत्तदभीष्टान् इच्छानुसारेण व्यधत्ताम् अकुरुताम् ॥४४॥ गतेति द्वयम् । अध्वनोऽयमाध्वनः मार्गजन्यः श्रमः स गतो ययोस्तौ । नीवी धौतवस्त्रम् । उपहृतमानीतं स्वाद्वन्नं पायसादि प्राश्य भुक्त्वा । संविश्य शयनमुद्रायामाविश्य ॥ ४५ ॥ ४६ ॥ ऋते रामं विना । स च जन्मर्क्षशान्त्यर्थं ग्रहे एव स्थितः इति ज्ञेयम् ॥४७॥ निदाघो ग्रीष्मर्तुस्तत्सम्बन्ध्यातपेन । अत एव दुष्टं प्राणघातकम् ।४८। तत् दुष्टम् । विषेण युक्तमम्भ इति मध्यमपदलोपी समासः । उपहतचेतसः नष्टज्ञानाः । व्यसवो विगतप्राणाश्च अन्ते तीरे निपेतुः ॥४९॥ तथाभूतान् गतप्राणान् । स्व आत्मा अहमेव नाथो येषां तान् । ईक्षयादृष्ट्या ॥ ५० ॥ सम्प्रति सद्य एव इता प्राप्ता स्मृतिर्यैस्ते । सम्यक् प्रतीताः पुनः प्राप्ता वा ॥ ५१ ॥ विषं सविषं जलम् । विषं विद्यतेऽत्रेति मत्वर्थीयोऽच्प्रत्ययः । परेतस्य मृतस्य आत्मनो देहस्य यत्पुनरुत्थानं पुनरुज्जीवनं तत् गोविन्दकृपादृष्टिकृतम् ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां पञ्चदशोऽध्यायः ।

## अथ षोडशोऽध्यायः

### श्रीशुक उवाच

विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः । तस्या विशुद्धिमन्विच्छन् सर्पं तमुदवासयत् ॥१॥

### राजोवाच

कथमन्तर्जलेऽगाधे न्यगृह्णाद् भगवानहिम् । स वै बहुयुगावासं यथाऽऽसीद् विप्र कथ्यताम् ॥२॥

ब्रह्मन् भगवतस्तस्य भूम्नः स्वच्छन्दवर्तिनः । गोपालोदारचरितं कस्तृप्येतामृतं जुषन् ॥३॥

### श्रीकृष्ण उवाच

कालिन्द्यां कालियस्यासीद् ह्रदः कश्चिद् विषाग्निना । श्रप्यमाणपया यस्मिन् पतन्त्युपरिगाः खगाः ॥४॥

विप्रुष्मता विषोदोर्मिमारुतेनाभिमर्शिताः । म्रियन्ते तीरगा यस्य प्राणिनः स्थिरजङ्गमाः ॥५॥

तं चण्डवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः ।
कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गमास्फोट्य गाढरशनो न्यपतद् विषोदे ॥६॥

सर्पह्रदः पुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसिताम्बुराशिः ।
पर्यक् प्लुतो विषकषायविभीषणोर्मिर्धावन् धनुःशतमनन्तबलस्य किं तत् ॥७॥

तस्य ह्रदे विहरतो भुजदण्डघूर्णवार्घोषमङ्ग वरवारणविक्रमस्य ।
आश्रुत्य तत्स्वसदनाभिभवं निरीक्ष्य चक्षुःश्रवाः समसरत्तदमृष्यमाणः ॥८॥

---

संप्लुत्य षोडशे कृष्णो ह्रदे सम्मर्द्य कालियम् ।
ननर्त तत्फणा मध्ये स्त्रीनुतोऽहिं व्यवासयत् ॥ १६ ॥

कृष्णां यमुनाम् । कृष्णाहिना कालियेन । उदवासयत् निष्कासितवान् ॥ १ ॥ बहुयुगपर्यन्तमावासो यस्येति अहिविशेषणम् । क्रियाविशेषणं वा । यथा येन कारणेन आसीत् तदेतत्कथ्यतामित्यन्वयः ॥ २ ॥ भूम्नोऽनन्तशक्तिमतः । स्वानां स्वस्य वा छन्देन इच्छया वर्तितुं शीलं यस्य तस्य । तृप्येत सकर्मकस्य तृप्यतेः कर्मकर्तरि प्रयोगः । गोपालरूपेण यत् उदारं चरितं तत् सेवमानः कः तृप्येत ॥ ३ ॥ ह्रदः यमुनाया गर्तजस्तत्प्रवाहास्पृष्ट एव दक्षिणभागे वर्तमानो योजनप्रमाणको ज्ञेयोऽन्यथा विषसम्पृक्तत्वात्सा सर्वैरपेयाऽभविष्यदिति ज्ञेयमत्र । श्रप्यमाणं पच्यमानम् यस्मिन् । ह्रदे ॥ ४ ॥ विप्रुष्मता जलविन्दुयुक्तेन विषोदकतरङ्गस्पर्शिवायुना स्पृष्टा यस्य तीरगा म्रियन्ते स ह्रद आसीदित्यन्वयः ॥५॥ [1]आस्फोट्य करतलेन बाहुमाहत्य । गाढं दृढं बद्धा रशना कटिवस्त्रं येन । ततः कदम्बात् विषोदे ह्रदे न्यपतत् । अमृतमाहरता गरुडेनाक्रान्तत्वात्स कदम्बो न शुष्क इति ज्ञेयमत्र ॥ ६ ॥ कथंभूतः । पुरुषसारः पुरुषोत्तमस्तस्य निपातवेगेन संक्षोभितानामुरगाणां विषेण उन्नतोऽम्बुराशिर्यस्य । विषकषायः[2] विषरागः नीलवर्णः तेन विभीषणा ऊर्मयो यस्य सः सर्पह्रदः धनुः[3] शतं धावन् प्रवहन् पर्यक्प्लुतः सर्वतः प्रसृतः । तत् किमाश्चर्यम् ।७। अङ्ग हे राजन् । तस्य कृष्णस्य भुजदण्डाभ्यां घूर्ण

---

१. प्रचण्डो वेगो यस्य विषमेव वीर्यं यस्य स चासौस च तं कालियम् ।

२. क्वाथे रागे कषायोऽस्त्री । इति यादवः ।

३. 'धनुर्हस्तचतुष्टयम्' । 'अवदातोऽरुणे पीते श्वेते श्यामे'—इति शाश्वतः ।

तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुन्दरास्यम् ।
क्रीडन्तमप्रतिभयं कमलोदराङ्‌घ्रिं संदश्य मर्मसु रुषा भुजया चच्छाद ।।९।।
तं नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्ताः ।
कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा दुःखानुशोकभयमूढधियो निपेतुः ।।१०।।

गावो वृषा वत्सतर्यः क्रन्दमानाः सुदुःखिताः । कृष्णे न्यस्तेक्षणा भीता रुदत्य इव तस्थिरे।।११।।
अथ व्रजे महोत्पातास्त्रिविधा ह्यतिदारुणाः । उत्पेतुर्भुवि दिव्यात्मन्यासन्नभयशंसिनः ।।१२।।
तानालक्ष्य भयोद्विग्ना गोपा नन्दपुरोगमाः । विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम् १३
तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः । तत्प्राणास्तन्मनस्कास्ते दुःखशोकभयातुराः ।।१४।।
आबालवृद्धवनिताः सर्वेऽङ्ग पशुवृत्तयः । निर्जग्मुर्गोकुलाद् दीनाः कृष्णदर्शनलालसाः ।।१५।।
तांस्तथा कातरान् वीक्ष्य भगवान् माधवो बलः । प्रहस्य किंचिन्नोवाच प्रभावज्ञोऽनुजस्य सः ।१६।
तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः । भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटम् ।।१७।।

ते तत्र तत्राब्जयवाङ्कुशाशनिध्वजोपपन्नानि पदानि विश्पतेः ।
मार्गे गवामन्यपदान्तरान्तरे निरीक्षमाणा ययुरङ्ग सत्वराः ।।१८।।
अन्तर्ह्रदे भुजगभोगपरीतमारात् कृष्णं निरीहमुपलभ्य जलाशयान्ते ।
गोपांश्च मूढधिषणान् परितः पशूंश्च संक्रन्दतः परमकश्मलमापुरार्ताः ।।१९।।
गोप्योऽनुरक्तमनसो भगवत्यनन्ते तत्सौहृदस्मितविलोकगिरः स्मरन्त्यः ।
ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम् ।।२०।।
ताः कृष्णमातरमपत्यमनुप्रविष्टां तुल्यव्यथाः समनुगृह्य शुचः स्रवन्त्यः ।
तास्ता व्रजप्रियकथाः कथयन्त्य आसन् कृष्णाननेऽर्पितदृशो मृतकप्रतीकाः ।।२१।।

---

मथितं यज्जलं तस्य नादं श्रुत्वा तत् ततः स्वस्थानपराभवं निरीक्ष्य तत् असहमानः चक्षुःश्रवाः सर्पः समसरत् अधावत् । वरवारणः श्रेष्ठगजः तद्वत् ।।८।। तं कृष्णं मर्मसु संदश्य भुजया कुण्डलीभूतदेहेन चच्छाद वेष्टितवान् । भुजति कुटिलीभवतीति भुजा 'भुजो कौटिल्ये' इगुपधलक्षणः कः । घनवत् अवदातः श्यामः तम् । कमलोदरे इव कोमलौ अङ्घ्री यस्य तम् अप्रतिभयं निर्भयं यथा स्यात्तथा क्रीडन्तम् ।। ९ ।।१०।। क्रन्दमाना आर्तनादं कुर्वाणाः तस्थिरे कर्मव्यतिहारे विवक्षिते आत्मनेपदम् ।। ११ ।। भुवि भूकम्पादयः । दिवि उल्कापातादयः । आत्मनि वामनेत्रस्फुरणादयः । आसन्नं निकटम् यत् भयं तत् शंसिनः सूचकाः ।।१२।। उद्विग्ना कम्पमानाः ।।१३।। अतद्विदः कृष्णबलमजानन्तः।।१४।।१५।। कातरान् भीतान् । माधवो मधुवंशजः ।।१६।। पदैः सूचितया पदव्या मार्गेण जग्मुः लक्ष्यन्तीति लक्षणानि तैः ध्वजादिचिह्नैः ।।१७।। विशां प्रजानां वेश्यगोपानां वा यतः । अशनिर्वज्रम् । अन्तरान्तरे मध्य मध्ये । अन्तरश्च अन्तरश्चानयोः समाहार इति अन्तरान्तरम् ।।१८।। निरीहं निश्चेष्टं कृष्णम् आरात् दूरात् उपलभ्य दृष्ट्वा तटे किंकर्तव्यविमूढान् गोपान् संक्रन्दतः आर्तनादं कुर्वतः पशूंश्च दृष्ट्वा आर्ताः सन्तः गोपाः कश्मलं मूर्च्छां प्रापुः ।। १९ ।। गोप्यः तस्य सौहृदं प्रेम तदादि स्मरन्त्यः प्रियव्यतिहृतं कृष्णविरहितम् त्रिलोकं शून्यम् असत्तुल्यं ददृशुः ।।२०।। कृष्ण मातरं समनुगृह्य हस्तेन धृत्वा शुचोऽश्रूणि उद्गिरन्त्यः ता गोप्य

कृष्णप्राणान् निर्विशतो नन्दादीन् वीक्ष्य तं ह्रदम् । प्रत्यषेधत् स भगवान् रामः कृष्णानुभाववित्॥

इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः ।
आज्ञाय मर्त्यपदवीमनुवर्तमानः स्थित्वा मुहूर्तमुदतिष्ठदुरङ्गबन्धात् ॥२३॥
तत्प्रथ्यमानवपुषा व्यथितात्मभोगस्त्यक्त्वोन्नमय्य कुपितः स्वफणान् भुजङ्गः ।
तस्थौ श्वसञ्छ्वसनरन्ध्रविषाम्बरीषस्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः ॥२४॥
तं जिह्वया द्विशिखया परिलेलिहानं द्वे सृक्किणी ह्यतिकरालविषाग्निदृष्टिम् ।
क्रीडन्नमुं परिससार यथा खगेन्द्रो बभ्राम सोऽप्यवसरं प्रसमीक्षमाणः ॥२५॥
एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरःस्वधिरूढ आद्यः ।
तन्मूर्धरत्ननिकरस्पर्शातिताम्रपादाम्बुजोऽखिलकलादिगुरुर्ननर्त ॥२६॥
तं नर्तमुद्यतमवेक्ष्य तदा तदीयगन्धर्वसिद्धसुरचारणदेववध्वः ।
प्रीत्या मृदङ्गपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः ॥२७॥
यद् यच्छिरो न नमतेऽङ्ग शतैकशीर्ष्णस्तत्तन्ममर्द खरदण्डधरोऽङ्घ्रिपातैः ।
क्षीणायुषो भ्रमत उल्बणमास्यतोऽसृङ् नस्तो वमन् परमकश्मलमाप नागः ॥२८॥
तस्याक्षिभिर्गरलमुद्वमतः शिरस्सु यद् यत् समुन्नमति निःश्वसतो रुषोच्चैः ।
नृत्यन् पदानुनमयन् दमयाम्बभूव पुष्पैः प्रपूजित इवेह पुमान् पुराणः ॥२९॥

---

मृतकप्रतीका मृततुल्या मूर्च्छिता आसन् ॥२१॥२२॥ इत्थमनन्यगतिमरक्षं गोकुलं निरीक्ष्य आत्महेतोः मदर्थं च दुःखितमाज्ञाय अहिवेष्टनात् उदतिष्ठत् पृथक् भवितुमुद्यतोऽभूत्॥२३॥ तस्य कृष्णस्य प्रथ्यमानेन वर्धमानेन वपुषा व्यथितदेहः । भुजङ्गः तं त्यक्त्वा स्वफणान् उन्नमय्य क्रोधात् हरिमीक्षमाणः श्वसन् तस्थौ इत्यन्वयः । कथंभूतः । श्वसनरन्ध्रेषु नासापुटेषु विषं यस्य अम्बरीषो भर्जनपात्रं तद्वत् रक्तानि निश्चलानि नेत्राणि यस्य उल्मुकानि ज्वालाः मुखेषु यस्य स च स च स च सः ॥ २४ ॥ द्वे सृक्विणी ओष्ठप्रान्तौ लेलिहानमास्वादयन्तम् तम् अमुं सर्पं हरिः क्रीडन् सन् परितो बभ्राम । सोऽपि सर्पोऽपि दंशावसरं प्रतीक्षमाणस्तं कृष्णमनुबभ्रामेत्यन्वयः ॥२५॥ परिभ्रमेण हृतमोजो बलं यस्य अत एव उन्नतांसमुन्नतफणं तं हस्तेन आनमय्य तत्फणेषु आरूढ आद्यः श्रीकृष्णः ननर्त यतः सः अखिलकलानामादिगुरुः तस्य मूर्धसु ये रत्नसमूहाः तेषां स्पर्शेन अतिताम्रम् अत्यरुणं पदाम्बुजं यस्य सः ॥ २६ ॥ नर्तं नर्तितुम् । तदीयाः सेवका गन्धर्वादयः झटिति तम् उपसेदुः सेवितवन्तः । पुष्पोपहारः पुष्पवृष्टिः नुतिः स्तुतिः ॥२७॥ शतैकेति मुख्ये तात्पर्यं फणासहस्रस्य वक्ष्यमाणत्वात् । क्षीणायुषो क्षीणबलस्य अथापि कथञ्चित् भ्रमतः कालियस्य यत् यत् शिरः न नमते[1] तत्तन्ममर्द । तदा च मुखतो नासिकातश्च रक्तं वमन् कश्मलम् अतीव क्लेशं[2] प्राप खरः तीक्ष्णः ॥२८॥ पुनरपि रुषा उच्चैर्निश्वसतस्तस्य शिरस्सु मध्ये यत् यत् समुन्नमति उच्चैर्भवति तत्तत् पदाघातेन दमयाम्बभूवेत्यन्वयः । पुष्पैः पुण्यस्थानीयैः शिरोगतरत्नैः पुराणपुरुष

---

१. कर्मकर्तरि लट् । 'न दुहस्नु न माम्' इति यङ् न ।

२. 'कश्मलं क्लेशपापयोः' इति धरणिः ।

तच्चित्रताण्डवविरुग्णफणातपत्रो रक्तं मुखैरुरु वमन् नृप भग्नगात्रः।
स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम ॥३०॥
कृष्णस्य गर्भजगतोऽतिभरावसन्नं पार्ष्णिप्रहारपरिरुग्णफणातपत्रम्।
दृष्ट्वाऽहिमाद्यमुपसेदुरमुष्य पत्न्य आर्ताः श्लथद्वसनभूषणकेशबन्धाः ॥३१॥
तास्तं सुविग्नमनसोऽथ पुरस्कृतार्भाः कायं निधाय भुवि भूतपतिं प्रणेमुः।
साध्व्यः कृताञ्जलिपुटाः शमलस्य भर्तुर्मोक्षेप्सवः शरणदं शरणं प्रपन्नाः ॥३२॥

नागपत्न्य ऊचुः

न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय।
रिपोः सुतानामपि तुल्यदृष्टेर्धत्से दमं फलमेवानुशंसन् ॥३३॥
अनुग्रहोऽयं भवतः कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः।
यद् दन्दशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव सम्मतः ॥३४॥
तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन।
धर्मोऽथ वा सर्वजनानुकम्पया यतो भवांस्तुष्यति सर्वजीवः ॥३५॥
कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः।
यद्वाञ्छया श्रीर्ललनाऽऽचरत्तपो विहाय कामान् सुचिरं धृतव्रता ॥३६॥
न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः ॥३७॥
तदेष नाथाप दुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः।
संसारचक्रे भ्रमतः शरीरिणो यदिच्छतः स्याद् विभवः समक्षः ॥३८॥

इव यशोदानन्दनः पूजितो बभूव ॥२९॥ रक्तम् उरु अधिकम्। वमन् उदिगरन् अरणं शरणम् ॥३०॥ एवंभूतमहिं दृष्टवा अमुष्य कालियस्य पत्न्यः आद्यं श्रीकृष्णम् उपसेदुः समीपं जग्मुः। गर्भे जगन्ति ब्रह्माण्डानि यस्य कृष्णस्य भरेण भारेण। अवसन्नमाक्रान्तम्। श्लथन्तो विस्रंसमाना वसनादयो यासां ताः ॥ ३१ ॥ ता नागपत्न्यः शरणं प्रपन्ना सत्यः तं भूतपतिं प्रणेमुः। शमलस्य पापात्मनः। यद्वा। भर्तुर्यच्छ मलं तस्य मोक्षेप्सवः।३२। रिपोः सुतानामिति सप्तम्यर्थे षष्ठ्यौ। रिपौ सुतेषु चेत्यर्थः। यद्वा रिपुसुतेषु स्वसुतेषु च। रिपुपुत्रप्रह्लादस्य पालनदर्शनात् स्वपुत्रनरकासुरस्य वधदर्शनाच्च। अपराधानुरूपं फलम् अनुशंसन् आलोचयन्। दमं दण्डम् धत्से ॥ ३३ ॥ नोऽस्माकम्। येन पापेन अमुष्य दन्दशूकत्वं सर्पत्वं तस्य कल्मषस्य निवर्तको दण्डोऽनुग्रह एवेत्यर्थः। क्रोधः क्रोधत्वेन प्रतीयमानोऽपि। यद्वा। क्रोधरूपः ॥ ३४ ॥ निरस्तमानेन निरभिमानेन अनेन किं सुतप्तं कृतम्। सर्वं जीवयति प्रवर्तयतीति सर्वजीवः सर्वात्मा ॥३५॥ अस्य कालियस्य। कस्य तप आदेः सुकृतस्य अनुभावः प्रभावः हे देव न [1]विद्म इति योज्यम्। यत् यस्य स्पर्शाधिकारस्य। ललनासर्वश्रेष्ठा श्रीरपि तपः आचरत् कृतवती ॥३६॥ स्वर्गपदं चक्रवर्तिपदं ब्रह्मपदं पाताळाधिपतां च न वाञ्छन्तीत्यन्वयः। अपुनर्भवं मोक्षम्। रजो विशेषणं

१. 'विदो लटो वा' इति मसो मादेशः।

नमस्तुभ्यं भगवते पुरुषाय महात्मने । भूतावासाय भूताय पराय परमात्मने ॥३९॥
ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्तशक्तये । अगुणायाविकाराय नमस्तेऽप्राकृताय च ॥४०॥
कालाय कालनाभाय कालावयवसाक्षिणे । विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥४१॥
भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने । त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये ॥४२॥
नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते । नानावादानुरोधाय वाच्यवाचशक्तये ॥४३॥
नमः प्रमाणमूलाय कवये शास्त्रयोनये । प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥४४॥
नमः कृष्णाय रामाय वसुदेवसुताय च । प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥४५॥
नमो गुणप्रदीपाय गुणात्मच्छादनाय च । गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे ॥४६॥
अव्याकृतविहाराय सर्वव्याकृतसिद्धये । हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने ॥४७॥
परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः । अविश्वाय च विश्वाय तद्द्रष्ट्रेऽस्य च हेतवे ॥४८॥

त्वं ह्यस्य जन्मस्थितिसंयमान् प्रभो गुणैरनीहोऽकृतकालशक्तिधृक् ।
तत्तत्स्वभावान् प्रतिबोधयन् सतः समीक्षयाऽमोघविहार ईहसे ॥४९॥
तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शान्ता अशान्ता उत मूढयोनयः ।
शान्ताः प्रियास्ते ह्यधुनाऽवितुं सतां स्थातुश्च ते धर्मपरीप्सयेहतः ॥५०॥

अपराधः सकृद् भर्त्रा सोढव्यः स्वप्रजाकृतः । क्षन्तुमर्हसि शान्तात्मन् मूढस्य त्वामजानतः ॥५१॥
अनुगृह्णीष्व भगवन् प्राणांस्त्यजति पन्नगः । स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयताम् ॥
विधेहि ते किङ्करीणामनुष्ठेयं तवाज्ञया । यच्छ्रद्धयाऽनुतिष्ठन् वै मुच्यते सर्वतोभयात् ॥५३॥

---

वा ॥३७॥ हे नाथ तद् रज एव कालियः प्राप । भ्रमतः पुंसः यत् रज इच्छतः सतः विभवः अपेक्षिता सम्पत् समक्षः प्रत्यक्षः स्वयमेव स्यात् । जनिः उत्पत्तिः स्वभावः।३८। आवासाय आधारभूताय । भूताय पूर्वं वर्तमानाय । पराय कारणाय ॥३९॥ प्राकृताय प्रकृतिप्रवर्तकाय ॥४०॥ कालनाभाय कालशक्ताश्रयाय । अवयवा निमेषादयः । उपद्रष्टे साक्षिणे ।४१।भूतादिरूपाय । गूढा आच्छादिता स्वांशभूतानामात्मनां जीवानामनुभूतिज्ञानं येन।४२।वादाः अस्तिनास्तीत्यादयः तान् रुणद्धि अनुवर्तते यः तस्मै । वाच्यवाचकयोः अर्थशब्दयोः शक्तिर्यस्मात् ।।४३ ॥ प्रमाणं प्रत्यक्षादि वेदो वा । प्रवृत्तो विधिः निवृत्तो निषेधः निगमाय वेदरूपाय ॥४४॥४५॥ गुणा अन्तःकरणानि तेषाम् । गुणैरहङ्कारादिभिरात्मानम् आच्छादयतीति तथा । वृत्तिः सात्त्विकी ॥४६॥ अव्याकृते प्रकृतौ । व्याकृतानां तत्त्वानाम् सिद्धिरुत्पत्तिः स्यात्॥४७॥ अनीहोऽपि त्वम् अस्य विश्वस्य जन्मादीन् गुणैः ईहसे करोषि समीक्षया ईक्षणमात्रेण । किं कुर्वन् सन् । सतः संस्काररूपेण स्थितान् प्राणिनां तत्तत् स्वभावान् प्रतिबोधयन् । अकृताऽनादिर्या कालशक्तिस्तां धर्जति प्राप्नोतीति तथा । धृजे क्विप् ।४९। तस्य जगत्कर्तुस्ते अमी तनवो देहाः क्रीडोपयोगिनः सात्त्विकराजसतामसा देवमनुष्यादयस्तथा तेषु ते शान्ता एव प्रिया नेतरे । कथंभूतस्य ते सतां धर्मपालनेच्छया ईहतः चेष्टमानस्य कृतावतारस्य अतस्तानवितुं स्थितस्य ॥ ५० ॥ पन्नगः सर्पः शोच्यानां दयनीयानाम् ॥५१॥ क्षन्तुमपराधमिति शेषः ॥५२॥ ते तव । विधेहि आज्ञापय ॥५३॥ कुट्टनैःप्रहारैः॥५४ ॥

श्रीशुक उवाच

इत्थं स नागपत्नीभिर्भगवान् समभिष्टुतः । मूर्च्छितं भग्नशिरसं विससर्जाङ्घ्रिकुट्टनैः ॥५४॥

प्रतिलब्धेन्द्रियप्राणः कालियः शनकैर्हरिम् । कृच्छ्रात् समुच्छ्वसन् दीनः कृष्णं प्राह कृताञ्जलिः

कालिय उवाच

वयं खलाः सहोत्पत्त्या तामसा दीर्घमन्यवः । स्वभावो दुस्त्यजो नाथ लोकानां यदसद्ग्रहः॥५६।

त्वया सृष्टमिदं विश्वं धातर्गुणविसर्जनम् । नानास्वभाववीर्यौजोयोनिबीजाशयाकृति ॥५७॥

वयं च तत्र भगवन् सर्पा जात्युरुमन्यवः । कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहिताः स्वयम् ॥

भवान् हि कारणं तत्र सर्वज्ञो जगदीश्वरः । अनुग्रहं निग्रहं वा मन्यसे तद् विधेहि नः ॥५९।

श्रीशुक उवाच

इत्याकर्ण्य वचः प्राह भगवान् कार्यमानुषः । नात्र स्थेयं त्वया सर्प समुद्रं याहि मा चिरम् ।
स्वज्ञात्यपत्यदाराढ्यो गोनृभिर्भुज्यतां नदी ॥६०॥

य एतत् संस्मरेन्मर्त्यस्तुभ्यं मदनुशासनम् । कीर्तयन्नुभयोः सन्ध्योर्न युष्मद् भयमाप्नुयात् ॥६१॥

योऽस्मिन् स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः । उपोष्य मां स्मरन्नर्चेत् सर्वपापैः प्रमुच्यते ।६२॥

द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः । यद्भयात् स सुपर्णस्त्वां नाद्यान्मत्पादलाञ्छितम् ॥६३॥

श्रीशुक उवाच

एवमुक्तो भगवता कृष्णेनाद्भुतकर्मणा । तं पूजयामास मुदा नागपत्न्यश्च सादरम् ॥६४॥

दिव्याम्बरस्रङ्मणिभिःपरार्ध्यैरपि भूषणैः । दिव्यगन्धानुलेपैश्च महत्योत्पलमालया ॥६५॥

पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम् । ततः प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवन्द्य तम् ॥६६॥

सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह । तदैव साऽमृतजला यमुना निर्विषाऽभवत् ।
अनुग्रहाद् भगवतः क्रीडामानुषरूपिणः ॥६७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे कालियमोक्षणं नाम षोडशोऽध्यायः॥१६॥

---

ब्धेति निवृत्तमूर्च्छः ॥५५॥ लोकानां प्राणिनां यत् यतः स्वभावात् असति देहादौ ग्रहोऽभिमानः हठरूपः ॥५६॥ गुणैर्विविधतया सृज्यते इति । नानास्वभावादयो यस्मिन् तत् । देहेन्द्रियमातृपपितृवत्तयः क्रमेण । आशयो वासना आकृतिः स्वरूपम् । बीजं शुक्रम् ॥५७॥ जात्या जन्मनैव ॥५८॥ तत्र त्वन्मायात्यागे ॥५९॥ इतीति सार्द्धम् । समुद्रं तन्मध्यस्थं रमणकद्वीपम् ॥ ६० ॥ युष्मत् युष्मत्तः । न आप्नुयादिति लिङा भयं नोत्पादनीयमित्याज्ञा व्यञ्जिता ॥६१॥ मम आ समन्तात्क्रीडा यत्र तस्मिन् ह्रदे ॥ ६२ ॥ न अद्यात् न भक्षयिष्यति अपि तु नमस्करिष्यति ॥ ६३ ॥ नागपत्न्यश्च पूजयामासुरिति वचनव्यत्ययेनान्वयः ॥ ६४ ॥ परार्द्ध्यैः बहुमूल्यैः ॥ ६५ ॥ पूजयित्वेति सार्द्धम् । द्वीपं रमणकम् ह हर्षेण ॥ ६६ ॥ अमृतमिव स्वादु जलं यस्याः सा तथाभूता ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे दशम स्कन्धे गूढार्थदीपिन्यां षोडशोऽध्यायः ।

## अथ सप्तदशोऽध्यायः

### राजोवाच

नागालयं रमणकं कस्मात्तत्याज कालियः । कृतं किं वा सुपर्णस्य तेनैकेनाऽसमञ्जसम् ॥१॥

### श्रीशुक उवाच

उपहार्यैः सर्पजनैर्मासि मासीह यो बलिः । वानस्पत्यो महाबाहो नागानां प्राङ् निरूपितः ॥२॥
स्वं स्वं भागं प्रयच्छन्ति नागाः पर्वणि पर्वणि । गोपीथायात्मनः सर्वे सुपर्णाय महात्मने ॥३॥
विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः । कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम् ॥४॥
तच्छ्रुत्वा कुपितो राजन् भगवान् भगवत्प्रियः । विजिघांसुर्महावेगः कालियं समुपाद्रवत् ॥५॥
तमापतन्तं तरसा विषायुधः प्रत्यभ्ययादुच्छ्रितनैकमस्तकः ।
दद्भिः सुपर्णं व्यदशद् ददायुधः करालजिह्वोच्छ्वसितोग्रलोचनः ॥६॥
तं तार्क्ष्यपुत्रः स निरस्य मन्युमान् प्रचण्डवेगो मधुसूदनासनः ।
पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रुसुतमुग्रविक्रमः ॥७॥
सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः । ह्रदं विवेश कालिन्द्यास्तदगम्यं दुरासदम् ॥८॥
तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम् । निवारितः सौभरिणा प्रसह्य क्षुधितोऽहरत् ॥९॥
मीनान् सुदुःखितान् दृष्ट्वा दीनान् मीनपतौ हते । कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन् ॥१०॥
अत्र प्रविश्य गरुडो यदि मत्स्यान् स खादति । सद्यः प्राणैर्वियुज्येत सत्यमेतद् ब्रवीम्यहम् ॥११॥
तं कालियः परं वेद नान्यः कश्चन लेलिहः । अवात्सीद् गरुडाद् भीतः कृष्णेन च विवासितः १२
कृष्णं ह्रदाद् विनिष्क्रान्तं दिव्यस्रग्गन्धवाससम् । महामणिगणाकीर्णं जाम्बूनदपरिष्कृतम् ॥१३॥

---

ततः सप्तदशे हेतुः कालियागमने ह्रदे ।
वनाग्नेः सुप्तगोपानां रक्षणं चात्र वर्ण्यते ॥ १७ ॥

असमञ्जसम् अप्रियम् । 'प्रिये योग्ये समञ्जसम्' इति कोषात् ॥ १ ॥ उपहार्यैः भक्ष्यैः सर्वरूपजनैः । नागानां सम्बन्धी यो बलिः । वानस्पत्यः वनस्पतिमूले देयः । 'पत्युत्तरपदात् ण्यः ॥ २ ॥ तत्प्रभृति पर्वणि दर्शे दर्शे । गोपीथाय रक्षणाय ॥ ३ ॥ विषवीर्याभ्यां यो मदस्तेन व्याप्तः कद्रूपुत्रः कालियः गरुडं तुच्छीकृत्य बलिं न प्रायच्छत् किन्तु अन्यैर्दत्तमपि बलिं स्वयं बुभुजे ॥ ४ ॥ ५ ॥ वेगेन आपतन्तं तं सुपर्णं प्रति अभ्यगात् योद्धुं जगाम दन्तैर्व्यदशच्च । ददायुधः दन्तायुधः । कराला भीषणा जिह्वा यस्य उच्छ्वसितानि सक्रोधानि उग्राणि लोचनानि यस्य ॥ ६ ॥ तार्क्ष्यस्य कश्यपस्य पुत्रो गरुडः । 'तार्क्ष्यौ गरुडकश्यपौ' इत्यमरात् । तक्षो मरीचिः । कद्रूसुतम् तं कालियं निरस्य क्षिप्त्वा । सव्येन वामेन पक्षेण जघान । मधुसूदनस्य आसनं यत्र सः ॥ ७॥ दुरासदम् अगाधतया दुष्प्रवेशम् ॥ ८ ॥ तत्र ह्रदे ॥ ९ ॥ ॥ १० ॥ वियुज्येतेति शापस्तु गरुडाप्रवेशनिमित्तकः ॥ ११ ॥ परं केवलम् । लेलिहः सर्पः । निवासितः निष्कासितः ॥ १२ ॥ कृष्णमिति द्वयम् । जाम्बूनदं सुवर्णम् तन्निर्मितभूषणैः अलङ्कृतम् उपलभ्य दृष्ट्वा । असव इन्द्रियाणीव-

उपलभ्योत्थिताः सर्वे लब्धप्राणा इवासवः । प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽभिरेभिरे ॥१४॥
यशोदा रोहिणी नन्दो गोप्यो गोपाश्च कौरव । कृष्णं समेत्य लब्धेहा आसँल्लब्धमनोरथाः॥१५॥
रामश्चाच्युतमालिङ्‌ग्य जहासास्यानुभाववित् । नगा गावो वृषा वत्सा लेभिरे परमां मुदम्॥१६॥
नन्दं विप्राः समागत्य गुरवः सकलत्रकाः । ऊचुस्ते कालियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः ॥१७॥
देहि दानं द्विजातीनां कृष्णनिर्मुक्तिहेतवे । नन्दः प्रीतमना राजन् गाः सुवर्णं तदादिशत् ॥१८॥
यशोदापि महाभागा नष्टलब्धप्रजा सती । परिष्वज्याङ्कमारोप्य मुमोचाश्रुकलां मुहुः ॥१९॥
तां रात्रिं तत्र राजेन्द्र क्षुत्तृड्भ्यां श्रमकर्शिताः । ऊषुर्व्रजौकसो गावः कालिन्द्या उपकूलतः ॥२०॥
तदा शुचिवनोद्भूतो दावाग्निः सर्वतो व्रजम् । सुप्तं निशीथ आवृत्य प्रदग्धुमुपचक्रमे ॥२१॥
तत उत्थाय सम्भ्रान्ता दह्यमाना व्रजौकसः । कृष्णं ययुस्ते शरणं मायामनुजमीश्वरम् ॥२२॥
कृष्ण कृष्ण महाभाग हे रामाऽमितविक्रम । एष घोरतमो वह्निस्तावकान् ग्रसते हि नः ॥२३॥
सुदुस्तरान्नः स्वान् पाहि कालाग्नेः सुहृदः प्रभो । न शक्नुमस्त्वच्चरणं संत्यक्तुमकुतोभयम् २४
इत्थं स्वजनवैक्लव्यं निरीक्ष्य जगदीश्वरः । तमग्निमपिबत्तीव्रमनन्तोऽनन्तशक्तिधृक् ॥२५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे गूढार्थदीपिन्यां सप्तदशोऽध्यायः ॥ १७ ॥

## अथाष्टादशोऽध्यायः

### श्रीशुक उवाच

अथ कृष्णः परिवृत ज्ञातिभिर्मुदितात्मभिः । अनुगीयमानो न्यविशद् व्रजं गोकुलमण्डितम् ॥१॥
व्रजे विक्रीडतोरेवं गोपालच्छद्ममायया । ग्रीष्मो नामर्तुरभवन्नातिप्रेयाञ्छरीरिणाम् ॥२॥

---

प्रमोदेन निभृतः पूर्ण आत्मा मनो येषां ते । अभिरेभिरे आलिङ्गितवन्तः ॥ १३ ॥ १४ ॥ लब्धेहा लब्धचेष्टाः ॥ १५ ॥ नगा वृक्षाः शुष्का अपि तेषां मुत् हर्षस्तु पुनः प्ररोहत्वरूपैव ॥१६॥ नन्दमिति द्वयम् । एतत् दिष्ट्या भद्रं जातम् । निर्मुक्तिः सर्पात् । प्रीतिर्वा । द्विजातीनां षष्ठी चतुर्थ्यर्थे । अदिशत् ददौ ॥ १७ ॥ १८ ॥ पूर्वं नष्टा अदृष्टा पश्चात् लब्धा प्रजा पुत्रो यया । कलाः बिन्दवः ॥१९॥ उपकूलतः कूलप्रान्ते । ऊषुः वासं चक्रुः ॥२०॥ शुचिर्ग्रीष्मस्तत्सम्बन्धिशुष्के वने उद्भूतः दावः सन्तापकरः अग्निः अतो न पौनरुक्त्यम् 'टुदु उपतापे धातुः' ॥२१॥ मायया कृपया ॥२२॥२३॥२४॥ वैक्लव्यं व्याकुलताम् । शक्तिधृक् । धृञ् गतौ भ्वादिः क्विप् ॥२५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां सप्तदशोऽध्यायः ।

अष्टादशे वनोत्कर्षैर्ग्रीष्मो भाति वसन्तवत् ।
क्रीडंस्तत्र बलेनायं प्रलम्बं समघातयत् ॥ १८ ॥

अथ वनाग्निपानोत्तरम् । कुलं समूहः । ज्ञातिभिः गोपैः ॥ १ ॥ गोपालनं व्याजमात्रं यस्यां तया । नातीत्यनेन जलकेल्यादीनामत्रैव सत्त्वात् किञ्चित्प्रियताऽपि द्योतिता ॥ २ ॥ स च ग्रीष्मः ॥ ३ ॥ यत्र

स च वृन्दावनगुणैर्वसन्त इव लक्षितः । यत्रास्ते भगवान् साक्षाद् रामेण सह केशवः ॥३॥

यत्र निर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम् । शश्वत्तच्छीकरर्जीषद्रुममण्डलमण्डितम् ॥४॥

सरित्सरःप्रस्रवणोर्मिवायुना कह्लारकञ्जोत्पलरेणुहारिणा ।
न विद्यते यत्र वनौकसां दवो निदाघवह्न्यर्कभवोऽतिशाद्वले ॥५॥

अगाधतोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याः पुलिनैः समन्ततः ।
न यत्र चण्डांशुकरा विषोल्बणा भुवो रसं शाद्वलितं च गृह्णते ॥६॥

वनं कुसुमितं श्रीमन्नदच्चित्रमृगद्विजम् । गायन्मयूरभ्रमरं कूजत्कोकिलसारसम् ॥७॥

क्रीडिष्यमाणस्तत् कृष्णो भगवान् बलसंयुतः । वेणुं विरणयन् गोपैर्गोधनैः संवृतोऽविशत् ॥८॥

प्रवालबर्हस्तबकस्रग्धातुकृतभूषणाः । रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुः ॥९॥

कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन् । वेणुपाणितलैः शृङ्गैः प्रशशंसुरथापरे ॥१०॥

गोपजातिप्रतिच्छन्ना देवा गोपालरूपिणः । ईडिरे कृष्णरामौ च नटा इव नटं नृप ॥११॥

भ्रामणैर्लंघनैः क्षेपैरास्फोटनविकर्षणैः । चिक्रीडतुर्नियुद्धेन काकपक्षधरौ क्वचित् ॥१२॥

क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम् । शशंसतुर्महाराज साधु साध्विति वादिनौ ॥१३॥

क्वचिद् बिल्वैः क्वचित् कुम्भैः क्वचामलकमुष्टिभिः । अस्पृश्यनेत्रबन्धाद्यैः क्वचिन्मृगखगेहया ॥१४॥

क्वचिच्च दर्दुरप्लावैर्विविधैरुपहासकैः । कदाचित् स्पन्दोलिकया कर्हिचिन्नृपचेष्टया ॥१५॥

एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने । नद्यद्रिद्रोणिकुञ्जेषु काननेषु सरस्सु च ॥१६॥

---

ग्रीष्मेऽपि निर्झरघोषेण निवृत्तध्वनयो झिल्लिका झीगुराख्याः कीटाः यस्मिन् तत् तथाभूतं वृन्दावनं भवति । तेषां निर्झराणां शीकरैर्जलकणैः ऋजीषैः स्निग्धैः वृक्षसमूहैः मण्डितम् ॥ ४ ॥ यत्र वृन्दावने ग्रीष्मकालिकवह्न्यर्काभ्यां जनितः नृणां दवस्तापो न विद्यते । केन । कह्लारादिकमलपरागवता सरिदादितरङ्गस्पर्शिना शीतलवायुना । क्रमेण सन्ध्यादिनरात्रिविकासीनि कमलानि ज्ञेयानि । अतिशाद्वले बहुघासाच्छन्ने । यद्वा । अतिक्रान्तशाद्वले शाद्वलशून्येऽपि स्थाने ॥५॥ यत्र वृन्दावने अतितीक्ष्णा अपि सूर्यकिरणा भुवो रसं जलं हरितरूपतां च न हरन्ति । कथंभूताया भुवः । ह्रदिनी नदी तत्तटस्पर्शिभिस्तरङ्गैर्द्रवत् आर्द्रं पुरीषं मृत्तिका यस्याः । किञ्च पुलिनैः सह समन्तादार्द्रं स्थलं जातम् अतः । पुरीषी गौरादित्वात् ङीष् इति केचित् । शाद्वलितमित्यत्र[1] आचारार्थक्विबन्ताद्भावे निष्ठा ॥६॥ वनमिति द्वयम् । क्रीडां करिष्यमाणः कृष्णः तद्वनमविशदित्यन्वयः । कथंभूतम् । नदन्तः चित्रा मृगादयो यस्मिन् । गायन्तः मयूरादयो यस्मिन् । कूजन्तः कोकिलादयो यस्मिन् । विरणयन् वादयन् । क्रीडिष्यमाणः कर्मव्यतिहारविवक्षया शानच् ॥ ७ ॥ ८ ॥ बर्हं मयूरपिच्छम् धातवो गैरिकादयः प्रवालादिभिः कृतानि भूषणानि यैस्ते । स्तबकः पुष्पगुच्छः ॥ ९ ॥ शृङ्गैः शृङ्गाकारवाद्यैः कर्मणः करणत्वविवक्षा । प्रशशंसुः अहो अद्भुतं ते नृत्यकौशलमिति ॥ १० ॥ रूपिणः नित्ययोगे इनिः ॥ ११ ॥ भ्रामणैः मण्डलाकारेण गमनैः । हस्तग्रहादिना वा । लङ्घनैर्गर्तादीनाम् । क्षेपैः पाषाणादीनाम् । आस्फोटनैः करेण भुजमूलाघातैः । नियुद्धेन मल्लयुद्धेन च । काकपक्षा वक्रालकाः ॥ १२ ॥ १३ ॥ कुम्भैः गुग्गुलफलैः ॥ १४ ॥ दर्दुरप्लावैः मण्डूकप्लुतिभिः । स्पन्दोलिकया दोलायामारोहणेन ॥ १५ ॥ द्रोणिः पर्वतयोरन्तरालभूमिः ॥ १६ ॥ तत् तयोः हर्तुमिच्छया ॥ १७ ॥ विद्वान्

---

१. यद्वा । शाद्वलच्छब्दात् तत्करोतीति णिजन्तात् क्तः इष्ठवद्भावात् 'विन्मतोर्लुक्' इति मतुपो लुक् ।

पशूंश्चारयतोर्गोपैस्तद्वने रामकृष्णयोः । गोपरूपी प्रलम्बोऽगादसुरस्तज्जिहीर्षया ॥१७॥
तं विद्वानपि दाशार्हो भगवान् सर्वदर्शनः । अन्वमोदत तत्सख्यं वधं तस्य विचिन्तयन् ॥१८॥
तत्रोपाहूय गोपालान् कृष्णः प्राह विहारवित् । हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथम् ॥१९॥
तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ । कृष्णसंघट्टिनः केचिदासन् रामस्य चापरे ॥२०॥
आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः । यत्रारोहन्ति जेतारो वहन्ति च पराजिताः ॥२१॥
वहन्तो वाह्यमानाश्च चारयन्तश्च गोधनम् । भाण्डीरकं नाम वटं जग्मुः कृष्णपुरोगमाः ॥२२॥
रामसंघट्टिनो यर्हि श्रीदामवृषभादयः । क्रीडायां जयिनस्तांस्तानूहुः कृष्णादयो नृप ॥२३॥
उवाह कृष्णो भगवान् श्रीदामानं पराजितः । वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम् ॥२४॥
अविषह्यं मन्यमानः कृष्णं दानवपुङ्गवः । वहन् द्रुततरं प्रागादवरोहणतः परम् ॥२५॥

तमुद्वहन् धरणिधरेन्द्रगौरवं महासुरो विगतरयो निजं वपुः ।
स आस्थितः पुरटपरिच्छदो बभौ तडिद्द्युमानुडुपतिवाडिवाम्बुदः ॥२६॥
निरीक्ष्य तद्वपुरलमम्बरे चरत् प्रदीप्तदृग् भ्रुकुटितटोग्रदंष्ट्रकम् ।
ज्वलच्छिखं कटककिरीटकुण्डलत्विषाद्भुतं हलधर ईषदत्रसत् ॥२७॥
अथागतस्मृतिरभयो रिपुं बलो विहायसार्थमिव हरन्तमात्मनः ।
रुषाऽहनच्छिरसि दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा ॥२८॥
स आहतः सपदि विशीर्णमस्तको मुखाद् वमन् रुधिरमपस्मृतोऽसुरः ।
महारवं व्यसुरपतत् समीरयन् गिरिर्यथा मघवत आयुधाहतः ॥२९॥

---

जानन् । दाशार्हः कृष्णः तद्वंशजत्वात् ॥ १८ ॥ तत्र तदा । यथायथं वयोबलानुरूपम् ॥१९॥ तत्र विहारे परिवृढौ नायकौ । कृष्णसंघट्टिनः कृष्णपक्षीयाः ॥२०॥ आचेरुः चक्रुः[1] ॥ २१ ॥ वहन्तो वहनकर्तारः । वाह्यमानाः पृष्ठेनोह्यमानाः । स्वार्थे णिच् । वटम् अवरोहणस्थानम् ॥२२॥२३॥२४॥ कृष्णमविषह्यं वोढुमशक्यं मन्यमानः रामं वहन्नगात् । अवरोहणस्थानात् परं दूरम् ।२५। सुमेरुवत् गुरुतरं तं बलदेवं नयन् स महासुरो विगतवेगत्वात् निजमासुरं वपुरास्थितः सन् बभावित्यन्वयः । विद्युद्दीप्तिमान् अम्बुदः उडुपतिं चन्द्रं वहन् यथा भाति तद्वत् । अत्र मेघस्थानीयोऽसुरः । उडुपतिस्थानीयो रामः । तडित्स्थानीया अलङ्काराः । पुरटं सुवर्णम् तस्य अलङ्कारा यस्य॥२६॥ अलमतिवेगेन आकाशे विचरत् तद्वपुर्निरीक्ष्य हलधर ईषत् अत्रसत् उद्विग्नोऽभूत् । कथंभूतम् । प्रदीप्ते दृशौ यस्मिन् । भ्रुकुटितटे संलग्ना उग्रा दंष्ट्रा यस्मिन् । ज्वलन्त्यः शिखाः केशा यस्मिन् । कटकादिभिः अद्भुतम् ॥ २७ ॥ अथानन्तरमेव प्राप्तस्मृतिः निर्भयो बलः तं रिपुं दृढेन मुष्टिना शिरसि [2]अहनदित्यन्वयः । कथंभूतम् । आत्मनः सार्थं गोपसमूहं विहाय हरन्तम् । यद्वा । विहायसा आकाशमार्गेण आत्मनः प्राप्तमर्थमिव । वज्रवत् रंहो वेगो यस्य तेन मुष्टिविशेषणम् ॥२८॥ आहतः स प्रलम्बोऽसुरः सपदि मुखात् रुधिरमुद्वमन् उद्गिरन् व्यसुः निर्गतप्राणः सन्

---

१. वाह्येति । भावप्रधानो निर्देशः वाह्यत्वं वाहकत्वं च लक्षणं स्वरूपं यासां ताः क्रीडाः ।

२. अहन् । मूले बाहुलकात् शपो न लुक् ।

दृष्ट्वा प्रलम्बं निहतं बलेन बलशालिना । गोपाः सुविस्मिता आसन् साधु साध्विति वादिनः ॥
आशिषोऽभिगृणन्तस्तं प्रशशंसुस्तदर्हणम् । प्रेत्यागतमिवालिङ्ग्य प्रेमविह्वलचेतसः ॥३१॥
पापे प्रलम्बे निहते देवाः परमनिर्वृताः । अभ्यवर्षन् बलं माल्यैः शशंसु साधु साध्विति ॥३२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्द्धे
प्रलम्बवधो नामाष्टादशोऽध्यायः ॥ १८ ॥

## अथैकोनविंशोऽध्यायः

### श्रीशुक उवाच

क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः । स्वैरं चरन्त्यो विविशुस्तृणलोभेन गह्वरम् ॥१॥
अजा गावो महिष्यश्च निर्विशन्त्यो वनाद् वनम् ।
इषीकाटवीं निर्विविशुः क्रन्दन्त्यो दावतर्षिताः ॥२॥
तेऽपश्यन्तः पशून् गोपाः कृष्णरामादयस्तदा । जातानुतापा न विदुर्विचिन्वन्तो गवां गतिम् ॥३॥
तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरङ्कितैर्गवाम् । मार्गमन्वगमन् सर्वे नष्टाजीव्या विचेतसः ॥४॥
मुञ्जाटव्यां भ्रष्टमार्गं क्रन्दमानं स्वगोधनम् । सम्प्राप्य तृषिताः श्रान्तास्ततस्ते संन्यवर्तयन् ॥५॥

---

भुवि अपतदित्यन्वयः । महारवं घोरनादं मुञ्चन् कुर्वन् सन् । अपस्मृतो गतस्मृतिः । मघवतः इन्द्रस्य आयुधेन वज्रेण हतः यथा गिरिः । चतुर्षु रुचिरावृत्तम् ॥२९॥ बलेन शालते शोभते इति बलशाली बलस्य विशेषणम् । यद्वा । बलेन ओजसा निहतम् अतो न पौनरुक्त्यम् ॥३०॥ तदर्हणं प्रशंसायोग्यं तं बलं प्रशशंसुः गोपा इत्याकृष्यान्वेति । आशिषः आशीर्वादान् प्रयुञ्जानाः प्रेत्य मृत्वा आगतमिव ॥ ३१ ॥ पापे अर्श आद्यजन्तः । निर्वृताः सुखिनः । माल्यैः पुष्पैः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यामष्टादशोऽध्यायः ॥ १८ ॥

ऊनविंशे पथो भ्रष्टमाक्रन्दत् गोपगोकुलम् ।
मुञ्जाग्निवेष्टितं कृष्णोऽमोचयत्तन्निपानतः ॥ १९ ॥

तत् तेषां । दूरचारिण्यः प्रथमार्थे द्वितीया । गह्वरं दुर्गमस्थलम् ॥ १ ॥ इषीकाटवीं मुञ्जारण्यम् । 'अजा स्यादप्रसूता गौः सकृत्सूता महिष्यपि । अन्या गाव इति प्रोक्ता' इति शब्दार्थवेदिनः, इति शब्दरत्नोक्तेर्न दोषः । दावस्तापःतेन तर्षिताः पिपासिताः । तृषेर्णिजन्तात् क्तः 'टुदु' उपतापे धातुः ॥ २ ॥ कृष्णरामौ आदी येषां ते एव न तु तौ । दृष्टसागरमानयेति वत् अतद्गुणसंविज्ञानो बहुव्रीहिः । न विदुः न विविदुः सामीप्य-विवक्षायां लट् ॥ ३ ॥ तासां खुरैर्दरैश्च छिन्नैः तृणैः गवां मार्गमित्यन्वान्वेति । नष्टा आजीव्या जीविका-

ता आहूता भगवता मेघगम्भीरया गिरा। स्वनाम्नां निनदं श्रुत्वा प्रतिनेदुः प्रहर्षिताः ॥६॥

ततः समन्ताद् वनधूमकेतुर्यदृच्छयाऽभूत् क्षयकृद् वनौकसाम्।

समीरितः सारथिनोल्वणोल्मुकैर्विलेलिहानः स्थिरजङ्गमान् महान् ॥७॥

तमापतन्तं परितो दवाग्निं गोपाश्च गावः प्रसमीक्ष्य भीताः।

ऊचुश्च कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः ॥८॥

कृष्ण कृष्ण महावीर हे रामामितविक्रम। दावाग्निना दह्यमानान् प्रपन्नांस्त्रातुमर्हथः ॥९॥

नूनं त्वद्बान्धवा कृष्ण न चार्हन्त्यवसीदितुम्। वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः ॥१०॥

श्रीशुक उवाच

वचो निशम्य कृपणं बन्धूनां भगवान् हरिः। निमीलयत मा भैष्ट लोचनानीत्यभाषत ॥११॥

तथेति मीलिताक्षेषु भगवानग्निमुल्बणम्। पीत्वा मुखेन तान् कृच्छ्राद् योगाधीशो व्यमोचयत् ॥

ततश्च तेऽक्षीण्युन्मील्य पुनर्भाण्डीरमापिताः। निशाम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः॥

कृष्णस्य योगवीर्यं तद् योगमायानुभावितम्। दावाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम् ॥१४॥

गाः संनिवर्त्य सायाह्ने सहरामो जनार्दनः। वेणुं विरणयन् गोष्ठमगाद् गोपैरभिष्टुतः ॥१५॥

गोपीनां परमानन्द आसीद् गोविन्ददर्शने। क्षणं युगशतमिव यासां येन विनाभवत् ॥१६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे

दावाग्निपानं नामैकोनविंशोऽध्यायः ॥१९॥

---

साधनानि येषां ते। विचेतसो व्याकुलचित्ताः ॥ ४ ॥ ते गोपास्तत् गोधनम् ततः संन्यवर्तयन् ॥ ५ ॥ प्रतिनेदुः प्रत्याक्रोशं चक्रुः ॥ ६ ॥ ततः वनवासिनां विनाशकारी यदृच्छया अकस्मात् महान् धूमकेतुर्वनाग्निः प्रादुरभूत्। कथंभूतः। सारथिना वायुना समीरितः प्रज्वलितः। पुनश्च उल्वणोल्मुकैः भीषणज्वालाभिः समन्तात् स्थावरादीन् जीवान् विलेलिहानः ग्रसमानः ॥ ७ ॥ प्रपन्नाः शरणं गताः सन्तः सबलं कृष्णमूचुः ॥ ८ ॥ ९ ॥ अवसीदितुं क्लेशं प्राप्तुम् ॥ १० ॥ कृपणं दीनम् ॥ ११ ॥ उल्बणं भीषणम् ॥ १२ ॥ आपिताः प्रापिताः आत्मानं मोचितं गाश्च मोचिता दृष्ट्वा विस्मिता आसन्नित्यन्वयः। भाण्डीरश्च मुञ्जाटवीतः क्रोशपञ्चके स्थितः ॥ १३ ॥ दावाग्नेः सकाशात् आत्मनः क्षेमं क्षेमकरं योगवीर्यमपूर्वसामर्थ्यं वीक्ष्य ते गोपाः कृष्णममरं परमेश्वरं मेनिरे। क्षेमशब्दात् तत्करोतीतिणिजन्तादच्। अनुभावितं सम्पादितम् ॥ १४ ॥ विरणयन् वादयन् गोष्ठं व्रजम् ॥ १५ ॥ यासां गोपीनां येन कृष्णेन विना ॥ १६ ॥ १७ ॥ १८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यामेकोनविंशोऽध्यायः।

## अथ विंशोऽध्यायः

### श्रीशुक उवाच

तयोस्तदद्भुतं कर्म दावाग्नेर्मोक्षमात्मनः । गोपाः स्त्रीभ्यः समाचख्युः प्रलम्बवधमेव च ॥१॥
गोपवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः । मेनिरे देवप्रवरौ कृष्णरामौ व्रजं गतौ ॥२॥
ततः प्रावर्तत प्रावृट् सर्वसत्त्वसमुद्भवा । विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ॥३॥
सान्द्रनीलाम्बुदैर्व्योम सविद्युत्स्तनयित्नुभिः । अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ॥४॥
अष्टौ मासान् निपीतं यद् भूम्याश्चोदमयं वसु । स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ॥५॥
तडित्वन्तो महामेघाश्चण्डश्वसनवेपिताः । प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव ॥६॥
तपःकृशा देवमीढा आसीत् वर्षीयसी मही । यथैव काम्यतपसस्तनुः सम्प्राप्य तत्फलम् ॥७॥
निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः । यथा पापेन पाखण्डा न हि वेदाः कलौ युगे ॥८॥

श्रुत्वा पर्जन्यनिनदं मण्डूका व्यसृजन् गिरः ।
तूष्णीं शयानाः प्राग् यद्वद् ब्राह्मणा नियमात्यये ॥९॥

आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः । पुंसो यथाऽस्वतन्त्रस्य देहद्रविणसम्पदः ॥१०॥
हरिता हरिभिः शष्पैरिन्द्रगोपैश्च लोहिता । उच्छिलीन्ध्रकृतच्छाया नृणां श्रीरिव भूरभूत् ॥११॥
क्षेत्राणि सस्यसम्पद्भिः कर्षकाणां मुदं ददुः । धनिनामुपतापं च दैवाधीनमजानताम् ॥१२॥
जलस्थलौकसः सर्वे नववारिनिषेवया । अबिभ्रद् रुचिरं रूपं यथा हरिनिषेवया ॥१३॥

---

विंशे वर्षाशरच्छोभा नानादृष्टान्तगर्भिताः ।
मानयन् भगवान् रेमे गोपैर्वृन्दावने वने ॥ २० ॥

ततो ग्रीष्मानन्तरम् । प्रावृट् वर्षर्तुः प्रावर्तत प्रवृत्ताऽभूत् । सत्त्वानां नानाजीवानाम् समुद्भवः वृद्धिः यस्याम् । परिधयो मण्डलानि दिशो वा यस्याम् । विस्फूर्जितं गर्जनयुक्तम् ।१। विद्युद्गर्जितसहितैः सघननीलमेघैः आच्छन्नं व्योम आकाशं बभौ । सगुण गुणैराच्छन्नं ब्रह्म जीवाख्यम् यथा विद्युद्गर्जितमेघानां क्रमेण सत्त्वरजस्तमोभिरुपमा ज्ञेया ॥ २ ॥ अष्टौ मासान् कार्तिकादिज्येष्ठान्तान् । अत्यन्तसंयोगे द्वितीया । उदमयं वसु जलरूपं धनम् । पर्जन्यः सूर्यः स्वगोभिः किरणैः । अत्र करमादाय पुनः प्रतिदानात् राजोपमा ॥ ३ ॥ अस्य विश्वस्य प्रीणनं तृप्तिकरं जीवनं जलम् मुमुचुः ॥४॥ तपसा ग्रीष्मेण शुष्का मेघेन मीढा सिक्ता सती वर्षीयसी पुष्टाङ्गा । अभूत् काम्यं कामनाप्रधानम् तपःफलं प्राप्य यथा तनुः पुष्टिमायाति तथेति योज्यम् ॥ ५ ॥ ६ ॥ यद्वत् यथा नियमात्यये गुरोर्नित्यकर्मसमाप्तौ सत्याम् तद्वचनं श्रुत्वा शिष्याः पठन्ति ॥ ७ ॥ अनुशुष्यन्त्यः । प्रथमार्थे द्वितीया । अस्वतन्त्रस्य अजितेन्द्रियस्य । देहसंपत् यौवनम् । द्रविणजन्या सम्पत् गृहभूम्यादिरूपा ॥८॥ हरिभिः हरितैः शष्पैः । इन्द्रगोपैः लोहितवर्णकीटैः । उच्छिलीन्ध्रैः छत्राकारैरुद्भिज्जैः । श्रीः सैन्यरूपा सम्पत् नानावर्णा भवति ॥ ९ ॥ सम्पद्भिः आधिक्यैः धनिनाम् क्रीतबहुन्नानाम् अन्नसंग्रहकर्तॄणां वा । दैवाधीनं वर्षणावर्षणञ्च ॥ १० ॥ अबिभ्रन् अबिभरुः । वारयति दुःखमिति वारि जलम् ॥ ११ ॥ कामाक्तं कामवासनायुक्तमिति ऊर्मिसाम्यम् । गुणैर्विषयैर्युज्यते इति सरित्सङ्गतिसाम्यम् ॥ १२ ॥ व्यसनैः कष्टैः पीड्यमाना अपि ॥ १३ ॥

सरिद्भिः सङ्गतः सिन्धुश्चुक्षुभे श्वसनोर्मिमान् । अपक्वयोगिनश्चित्तं कामाक्तं गुणयुग् यथा ॥
गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः । अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः ॥१५॥
मार्गा बभूवुः संदिग्धास्तृणैश्छन्ना ह्यसंस्कृताः । नाभ्यस्यमानाः श्रुतयो द्विजैः कालहता इव॥१६॥
लोकबन्धुषु मेघेषु विद्युतश्चलसौहृदाः । स्थैर्यं न चक्रुः कामिन्यः पुरुषेषु गुणिष्विव ॥१७॥
धनुर्वियति माहेन्द्रं निर्गुणं च गुणिन्यभात् । व्यक्ते गुणव्यतिकरेऽगुणवान् पुरुषो यथा ॥१८॥
न रराजोडुपश्छन्नः स्वज्योत्स्नाराजितैर्घनैः । अहंमत्या भासितया स्वभासा पुरुषो यथा ॥१९॥
मेघागमोत्सवात् हृष्टाः प्रत्यनन्दञ्छिखण्डिनः । गृहेषु तप्ता निर्विण्णा यथाऽच्युतजनागमे ॥२०॥
पीत्वापः पादपाः पद्भिरासन् नानात्ममूर्तयः । प्राक्क्षामास्तपसा श्रान्ता यथा कामानुसेवया ॥
सरस्स्वशान्तरोधस्सु न्यूषरङ्गापि सारसाः । गृहेष्वशान्तकृत्येषु ग्राम्या इव दुराशयाः ॥२२॥
जलौघैर्निरभिद्यन्त सेतवो वर्षतीश्वरे । पाखण्डिनामसद्वादैर्वेदमार्गाः कलौ यथा ॥२३॥
व्यमुञ्चन् वायुभिर्नुन्ना भूतेभ्योऽथामृतं घनाः । यथाऽऽशिषो विश्पतयः काले काले द्विजेरिताः ॥
एवं वनं तद् वर्षिष्ठं पक्वखर्जूरजम्बुमत् । गोगोपालैर्वृतो रन्तुं सबलः प्राविशद्धरिः ॥२५॥
धेनवो मन्दगामिन्य ऊधोभारेण भूयसा । ययुर्भगवताऽऽहूता द्रुतं प्रीत्या स्नुतस्तनीः ॥२६॥
वनौकसः प्रमुदिता वनराजीर्मधुच्युतः । जलधारा गिरेर्नादानासन्ना ददृशे गुहाः ॥२७॥
क्वचिद् वनस्पतिक्रोडे गुहायां चाभिवर्षति । निर्विश्य भगवान् रेमे कन्दमूलफलाशनः ॥२८॥
दध्योदनं समानीतं शिलायां सलिलान्तिके । सम्भोजनीयैर्बुभुजे गोपैः संकर्षणान्वितः ॥२९॥
शाद्वलोपरि संविश्य चर्वतो मीलितेक्षणान् । तृप्तान् वृषान् वत्सतरान् गाश्च स्वोधोभरश्रमाः ॥

---

हृता विस्मृताः ॥१४॥ कामिन्यः पुंश्चल्यः ॥१५॥ गुणिनि गर्जितशब्दवति वियति आकाशे । निर्गुणं ज्यारहितम् धनुरभात् । गुणकार्ये व्यक्ते प्रपञ्चे ॥ १६ ॥ स्वभासा चैतन्येनैव प्रकाशितेन अहङ्कारेण छन्नो जीवः॥ १७ ॥ शिखण्डिनो मयूराः । निर्विण्णाः श्रान्ताः । दुःखात् विरक्ता वा ॥ १८ ॥ पद्भिर्मूलैः । प्राक् क्षमा दुर्बलाः ग्रीष्मे तापेन कृशा ॥ १९ ॥ अङ्ग हे राजन् । अशान्तानि पङ्कादियुक्तानि रोधांसि तटानि येषां तेषु । न्यूषुः न्यवसन् । विग्रशिणो गृहस्थाः ॥ २० ॥ ईश्वरे इन्द्रे ॥ २१ ॥ नुन्नाः प्रेरिताः । अमृतं जलम् । विट्पतयो धनिनः । आशिषो वाञ्छितार्थान् । द्विजैः पुरोहितैः ॥ २२ ॥ वर्षिष्ठ समृद्धम् । यद्वा । वर्षं वृष्टिस्तद्विद्यतेऽस्येति वर्षं । मत्वर्थीयोऽच् । अतिशयेन वर्षं वर्षिष्ठं प्रभूतवर्षोपेतम् ॥ २३ ॥ ऊधः क्षीराशयः । स्नुतस्तनीः क्षरितस्तन्यः ॥ २४ ॥ वनौकसः पुलिन्दीः । यद्वा । गाः प्रमुदिता भगवान् ददृशे । सर्वत्र द्वितीयान्तम् । ता गिरेर्जलधारास्तन्निकटवर्तिनीः गुहाश्च ददृशे । धाराणां नादान् शुश्रावेति योज्यम् । यद्वा । आसन् इति क्रियापदं पृथक् कृत्य प्रमुदिता आसन् । गिरेर्जलधारा आसन् एवंभूतान् । आददृशे सर्वतो ददर्श शेषं पूर्ववत् ॥ २५ ॥ वनस्पतिक्रोडे वृक्षमूले ॥ २६ ॥ अन्तिके समीपे शिलायामुपविश्य । गृहात्समानीतम् । संभोजनीयैः सखिभिः ॥ २७ ॥ शाद्वलेति द्वयम् । उपबृंहितां संवर्द्धितां पूजयाञ्चक्रे बहु अमन्यत ॥ २८ ॥ २९ ॥ व्यभ्रा विगतमेधा । स्वच्छानि

प्रावृट्श्रियं च तां वीक्ष्य सर्वभूतमुदावहाम् । भगवान् पूजयांचक्रे आत्मशक्त्युपबृंहिताम् ॥३१॥
एवं निवसतोस्तस्मिन् रामकेशवयोर्व्रजे । शरत् समभवद् व्यभ्रा स्वच्छाम्ब्वपरुषानिला ॥३२॥
शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः । भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥३३॥
व्योम्नोऽब्दं भूतशाबल्यं भुवः पङ्कमपां मलम् । शरज्जहाराश्रमिणां कृष्णे भक्तिर्यथाशुभम् ॥३४॥
सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः । यथा त्यक्तैषणाः शान्ता मुनयो मुक्तकिल्बिषाः ॥३५॥
गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् । यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा ॥३६॥
नैवाविदन् क्षीयमाणं जलं गाधजलेचराः । यथाऽऽयुरन्वहं क्षय्यं नरा मूढाः कुटुम्बिनः ॥३७॥
गाधवारिचरास्तापमविन्दञ्छरदर्कजम् । यथा दरिद्रः कृपणः कुटुम्ब्यविजितेन्द्रियः ॥३८॥
शनैः शनैर्जहुः पङ्कं स्थलान्यामं च वीरुधः । यथाहंममतां धीराः शरीरादिष्वनात्मसु ॥३९॥
निश्चलाम्बुरभूत्तूष्णीं समुद्रः शरदागमे । आत्मन्युपरते सम्यङ्मुनिर्व्युपरतागमः ॥४०॥
केदारेभ्यस्त्वपोऽगृह्णन् कर्षका दृढसेतुभिः । यथा प्राणैः स्रवज्ज्ञानं तन्निरोधेन योगिनः ॥४१॥
शरदर्कांशुजांस्तापान् भूतानामुडुपोऽहरत् । देहाभिमानजं बोधो मुकुन्दो व्रजयोषिताम् ॥४२॥
खमशोभत निर्मेघं शरद्विमलतारकम् । सत्त्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ॥४३॥
अखण्डमण्डलो व्योम्नि रराजोडुगणैः शशी । यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि ॥४४॥
आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम् । जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः ॥४५॥
गावो मृगाः खगा नार्यः पुष्पिण्यः शरदाभवन् । अन्वीयमानाः स्ववृषैः फलैरीशक्रिया इव ॥४६॥

---

अम्बूनि यस्याम् अपरुषः शान्तः अनिलो यस्यां सा च सा च सा ॥३०॥ प्रकृतिं स्वच्छताम् ॥३१॥ व्योमादीनां चतुर्णां मलं शरत् अहरत् । यथा चतुराश्रमिणामशुभं भक्तिः । अपो ददातीति अब्दं मेघम् । शाबल्यं स्थान-संकोचम् ॥ ३२ ॥ धनोत्पादनहेतुत्वात् सर्वस्वं सर्वं जलम् ॥ ३३ ॥ ३४ ॥ गाधजलेचरा अल्पजलवासिनो मत्स्यादयः क्षीयमाणम् जलम् । क्षय्यं क्षेतुं शक्यं क्षीयमाणम् आयुः ॥ ३५ ॥ दरिद्रो निर्धनः अत एव कृपणो दुर्गतिं प्राप्तः ॥ ३६ ॥ वीरुधः तत्फलानि । उपलक्षणतया वृक्षफलानि वा आमम् अपक्वताम् जहुः ॥ ३७ ॥ आत्मनि मनसि उपरते विषयान्निवृत्ते सति । व्युपरतागमः निवृत्तशास्त्रो यथा ॥ ३८ ॥ केदारेभ्यः धान्य-क्षेत्रेभ्यः क्षरन्तीः अपः सेतुभिः जलनिरोधसाधनैः । प्राणैः इन्द्रियैः । अगृह्णन् अरक्षन् ॥ ३९ ॥ उडुपः चन्द्रः । अभिमानजं तापम् अज्ञानम् बोधः आत्मज्ञानं यथा । मुकुन्दो यथा गोपीनां तापम् । उभयत्र लुप्तोपमा ॥ ४० ॥ अर्थं फलस्वरूपं श्रीकृष्णं दर्शयतीति । 'सत्त्वभावस्थितो हरिः' इत्युक्तेः ॥४१॥ वृष्णिचक्रेण यादव-समूहेन ॥ ४२ ॥ प्रसूनवनं पुष्पवनम् । गोप्यस्तु न कृष्णापहृतचेतस्त्वात् । यद्वा । नकार[1] उपमार्थे गोप्य इव जातानन्दाः । कृष्णे हृतं प्रापितं चेतो याभिस्ताः ॥ ४३ ॥ खगाः खग्यः । शरदा निमित्तभूतया । पुष्पिण्यः गर्भिण्यः । स्ववृषैः स्वपतिभिः । क्रिया ईश्वराराधनार्था यथा फलैः पूर्णा वा फलगर्भिता भवन्ति तद्वत् ॥४४॥ कुमुत् कुमुदम् । कुत्सिते रात्रिकाले विकासेन मुत् आनन्दो यस्येति दस्युसाम्यम् ॥ ४५ ॥ आग्रयणैर्नवान्नप्राश-नार्थैः वेदिकैः यज्ञैः । इन्द्रियार्थैर्लौकिकैः महोत्सवैः । हरेः कला भूः आभ्यां रामकृष्णाभ्यां बभौ अतः कृष्णस्तु

---

१. तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता अप्राशस्त्यं विरोधश्च नञर्थः षट् प्रकीर्तिताः । इति कारिकोक्तेः ।

उदहृष्यन् वारिजानि सूर्योत्थाने कुमुद् विना । राज्ञा तु निर्भया लोका यथा दस्यून् विना नृप ॥
पुरग्रामेष्वाग्रयणैरैन्द्रियैश्च महोत्सवैः । बभौ भूः पक्वसस्याढ्या कलाभ्यां नितरां हरेः ॥४८॥
वणिङ्मुनिनृपस्नाता निर्गम्यार्थान् प्रपेदिरे । वर्षरुद्धा यथा सिद्धाः स्वपिण्डान् काल आगते॥४९॥

इति श्रीमद्भागवते पारमहंस्यां संहितायां दशगस्कन्धे पूर्वार्धे प्रावृट्शरद्वर्णनं नाम विंशोऽध्यायः ॥ २० ॥

## अथैकविंशोऽध्यायः

### श्रीशुक उवाच

इत्थं शरत्स्वच्छजलं पद्माकरसुगन्धिना । न्यविशद् वायुना वातं सगोगोपालकोऽच्युतः ॥१॥
कुसुमितवनराजिशुष्मिभृङ्गद्विजकुलघुष्टसरःसरिन्महीध्रम् ।
मधुपतिरवगाह्य चारयन् गाः सहपशुपालबलश्चुकूज वेणुम् ॥ २ ॥
तद् व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम् । काश्चित् परोक्षं कृष्णस्य स्वसखीभ्योऽन्ववर्णयन् ॥
तद् वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम् । नाशकन् स्मरवेगेन विक्षिप्तमनसो नृप ॥४॥
बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं बिभ्रद् वासः कनककपिशं वैजयन्तीं च मालाम् ।
रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दैर्वृन्दारण्यं स्वपदरमणं प्राविशद् गीतकीर्तिः ॥५॥

---

भगवान् स्वयम्' इत्यनेन न विरोधः ॥ ४६ ॥ स्नाताः स्नातकाः कृतसमावर्तनाः । वर्षेण वर्षाकालेन रुद्धाः । अर्थान् वाणिज्यभ्रमणदिग्विजयविवाहादीन् । यथा सिद्धा योगिनः आयुषा रुद्धाः अन्तःकाले पिण्डान् योगादिप्राप्यान् देहान् प्राप्नुवन्ति तद्वत् ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कधे पूर्वार्द्धे गूढार्थदीपिन्यांविंशोऽध्यायः ।

एकविंशेऽद्भुतं वेणोर्नादमाकर्ण्य गोपिकाः ।
वर्णयन्त्यः सखीभ्यस्तद्गीतं चक्रुस्तदात्मिकाः ॥ १ ॥

पद्मानामाकरस्तडागस्तस्य सुगन्धिना वायुना वातं व्याप्तं वनम् अच्युतो न्यविशत् ॥ १ ॥ मधुपतिः श्रीकृष्णः वनमवगाह्य प्रविश्य वेणुं चुकूज अवादयत् । ण्यर्थः । कथंभूतं वनम् । कुसुमितवनपङ्क्तिषु शुष्मिणो मत्ता ये भृङ्गा पक्षिणश्च तेषां कुलैः समूहैर्नादिताः सरांसि सरितः पर्वताश्च यस्मिंस्तत्' ॥ २ ॥ ३ ॥ तत् वेणुगीतम् । विक्षिप्तं व्याकुलम् । आरब्धा अकर्मकत्वात्कर्तरि क्तः ॥ ४ ॥ द्वितीयान्तानां बिभ्रदित्यनेन संबन्धः । बर्हापीडं मयूरपिच्छमुकुटम् । 'आपीडं मुकुटे स्रजि' इति शाश्वतः । वपुर्विशेषणं वा । कर्णिकारं चतुर्दलं कर्णभूषणम् । नटवत् वरं वपुः बिभ्रत् कृष्णः वृन्दावनं प्राविशत् इत्यन्वयः । स्वपदैरङ्कितै रति-

---

१. पुष्पितााग्रावृत्तम् ।

इति वेणुरवं राजन् सर्वभूतमनोहरम् । श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेभिरे ॥६॥

गोप्य ऊचुः

अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननुविवेशयतोर्वयस्यैः ।
वक्त्रं व्रजेशसुतयोरनुवेणु जुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ॥७॥

चूतप्रवालबर्हस्तबकोत्पलाब्जमालानुपृक्तपरिधानविचित्रवेषौ ।
मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रङ्गे यथा नटवरौ क्व च गायमानौ ॥८॥

गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधामपि गोपिकानाम् ।
भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथाऽऽर्याः ॥९॥

वृन्दावनं सखि भुवो वितनोति कीर्तिं यत् देवकीसुतपदाम्बुजलब्धलक्ष्मि ।
गोविन्दवेणुमनु मत्तमयूरनृत्यं प्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्त्वम् ॥१०॥

धन्याः स्म मूढमतयोऽपि हरिण्य एता या नन्दनन्दनमुपात्तविचित्रवेषम् ।
आकर्ण्य वेणुरणितं सहकृष्णसाराः पूजां दधुर्विरचितां प्रणयावलोकैः ॥११॥

---

जनक० । वैजयन्ती[1] ॥५॥ कृष्णं मनसा अभिरेभिर आलिङ्गितवत्यः । सर्वेति वेणुकृष्णयोर्विशेषणम् ॥ ६ ॥ हे सख्यः । चक्षुष्मता तावदिदमेव फलं प्रियदर्शनम् अन्यत् न विद्मः । तच्च फलं सखिभिः सह पशून् वनं प्रवेशयतोः रामकृष्णयोर्वक्त्रं जुष्टं प्रीतिपूर्वकं यैर्निपीतं सादरं दृष्टम् । अथवा यैर्निपीतं तैरेव जुष्टं प्रीत्या सेवितं दर्शनसुखमनुभूतमित्यर्थः । अनुवेणु वेणुमनुसरत् वादयदित्यर्थः । अनुरक्तजनेषु कटाक्षस्य मोक्षणं यस्मात् ॥ ७ ॥ आम्रपल्लवादीनां मालाभिः अनुपृक्ते मिलिते तद्रङ्गचित्रिते ये परिधाने नीलाम्बरे ताभ्यां विचित्रो वेषो ययोस्तौ । गोपालसभायामलमतिशयेन विरेजतुः । बर्हं मयूरपिच्छम् । स्तबकः पुष्पगुच्छः । गायमानौ चानश् । यद्वा । गाये गाने मानः गर्व आदरो वा ययोस्तौ ॥८॥ हे गोप्यः । अयं वेणुः किं पुण्यमाचरत् कृतवान् । यत् यस्मात् स्वयं स्वातन्त्र्येण अधरसुधां भुङ्क्ते तत्रापि केवलं रसमात्रम् । यतो नद्यः विकसितकमलमिषेण हृष्यत्त्वचो रोमाञ्चिता लक्ष्यन्ते । तरवो मधुधारामिषेण आनन्दाश्रु मुमुचुः । तस्य वृक्षवंशे जातत्वात् । यथा आर्याः कुलवृद्धाः स्वकुले भक्तं दृष्ट्वा रोमाञ्चिताः सन्तः अश्रु मुञ्चन्ति तद्वत् ।९। भुवः कीर्तिं वितनोति स्वर्गादपि विशेषेण । अङ्कितैः पदाम्बुजैः लब्धा लक्ष्मीः शोभा येन तत् । वेणुम् अनु नादश्रवणानन्तरं गोविन्दं नीलमेघं वेणुनादं च तद्ध्वनिं मत्वा मयूरा नृत्यन्ति तत् प्रेक्ष्य अद्रिशिखरेषु निवृत्तव्यापाराणि अन्यानि समस्तानि सत्त्वानि जन्तवो यस्मिन् तत् तादृशं वृन्दावनविशेषणम् ।१०। स्मेत्याश्चर्ये । तिर्यग्योनयः या हरिण्यः वेणुनादं श्रुत्वा नन्दनन्दनं प्रति प्रेमावलोकैः पूजां दधुः सम्मानं चक्रुः । कृष्णसारैः स्वपतिभिः मृगैः सहिताः ।११। वनितानामुत्सवो यस्मात्तथाभूतम्

---

१. श्वेतैः पीतैस्तथा रक्तैर्हरितैर्नीलवर्णकैः ।
पुष्पैरेभिः सुगन्धैश्च वैजयन्त्यस्ति मालिका ॥
वैयजन्ती भवेन्मालाऽष्टधामौक्तिकनिर्मिता । इति वा ।

कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं श्रुत्वा च तत्क्वणितवेणुविचित्रगीतम् ।
देव्यो विमानगतयः स्मरनुन्नसारा भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः ।।१२।।
गावश्च कृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैः पिबन्त्यः ।
शावाः स्नुतस्तनपयःकवलाः स्म तस्थुर्गोविन्दमात्मनि दृशाऽश्रुकलाः स्पृशन्त्यः ।।१३।।
प्रायो बताम्ब विहगा मुनयो वनेऽस्मिन् कृष्णेक्षितं तदुदितं कलवेणुगीतम् ।
आरुह्य ये द्रुमभुजान् रुचिरप्रवालान् शृण्वन्त्यमीलितदृशो विगतान्यवाचः ।।१४।।
नद्यस्तदा तदुपधार्य मुकुन्दगीतमावर्तलक्षितमनोभवभग्नवेगाः ।
आलिङ्गनस्थगितमूर्मिभुजैर्मुरारेर्गृह्णन्ति पादयुगलं कमलोपहाराः ।।१५।।
दृष्ट्वाऽऽतपे व्रजपशून् सहरामगोपैः संचारयन्तमनु वेणुमुदीरयन्तम् ।
प्रेमप्रवृद्ध उदितः कुसुमावलीभिः सख्युर्व्यधात् स्ववपुषाम्बुद आतपत्रम् ।।१६।।
पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन ।
तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधिम् ।।१७।।
हन्तायमद्रिरबला हरिदासवर्यो यद् रामकृष्णचरणस्पर्शप्रमोदः ।
मानं तनोति सहगोगणयोस्तयोर्यत् पानीयसूयवसकन्दरकन्दमूलैः ।।१८।।

---

कृष्णं निरीक्ष्य । तेन क्वणितस्य वादितस्य वेणोः गीतं च श्रुत्वा नुन्नसाराः च्युतधैर्याः विमानैर्गच्छन्त्यः देव्यः मुमुहुः रतिप्रार्थनां चक्रुः । भ्रश्यन्ति च्यवन्ति कुसुमानि याभ्यस्तथाभूताश्चूडा यासान्ताः । विनीव्यः स्वयमेव विगलदधोवस्त्राः सत्यः ।१२। कृष्णमुखात् निर्गतं वेणुगीतमेव पीयूषममृतम् उत्तभितैः ऊर्ध्वीकृतैः कर्णपुटैः पिबन्त्यः गावः शावा वत्साश्च क्षरितदुग्धरूपग्रासमुखा एव तस्थुः विस्मृतपानक्रिया बभूवुः। दृशा नेत्रमार्गेण गोविन्दं मनसि कृत्वा स्पृशन्त्यः आलिङ्गन्त्यः गावः। अश्रूणां कला बिन्दवो लोचनयोः यासां ताः। दृशा अश्रूणि कलयन्ति वर्षन्तीति वा द्वयोर्विशेषणम् ॥ १३ ॥ बतेति हर्षे । अम्ब हे सखि ! भावावेशात् । 'अबि' शब्दे इत्यस्मात् विहगविशेषणं वा । प्रायः मुनय एव भवितुमर्हन्ति ये वृक्षशाखासु आरुह्य कृष्णदर्शनं तन्मुखनिःसृतं वेणुगीतं च शृण्वन्ति त्यक्तान्यवार्ताः सन्तः ॥ १४ ॥ तदा वेणुवादनकाले नद्यः तत् वेणुगीतम् उपधार्य श्रुत्वा तरङ्गरूपैर्हस्तैः कमलानि समर्पयन्त्यः मुरारेः पादयुगलं गृह्णन्ति । आलिङ्गनेन स्थगितं आच्छादितं स्वायत्तं यथा भवति तथा । कथंभूता आवर्तो जलभ्रमः तेन सूचितो यः कामः तेन भग्नो रुद्धो वेगो यासां ताः ॥ १५ ॥ आतपे कृष्णं दृष्ट्वा प्रथमम् उदितः तदुपरि प्राप्तः पुनः प्रेम्णा प्रवृद्धश्च अम्बुदः पुष्पवृष्टिभिः सह सख्युः श्रीकृष्णस्य उपरि स्ववपुषा छत्रं व्यदधात् । जलकणा अत्र पुष्पवृष्टित्वेनोक्ताः ॥ १६ ॥ पुलिन्द्यः किरातभार्याः पूर्णाः कृतार्थाः जाताः । कथम् । पूर्वं दयिता प्रिया तस्याः स्तनयोर्मण्डितेन पुनश्च रतिसमये स्तनेषु चरणारोपात् कृष्णचरणरागरञ्जितेन पुनश्च चरणस्य वने चङ्क्रमणात् तृणलग्नेन तत्तथाभूतस्य कुङ्कुमस्य दर्शनेन जनितकामवेगाः तत्कुङ्कुमं मुखादिषु लिम्पन्त्यः कामपीडां जहुः अतः कृतार्थाः इत्युक्तम् ।।१७।। हन्तेति हर्षे । हे अबलाः हे सख्यः । अयम् अद्रिः गोवर्धनः भक्तराजः प्रतीयते । यत् यस्मात् कृष्णस्य चरणस्पर्शेन प्रमोदः रोमाञ्चो यस्य । स च तृणाद्युद्गमव्याजेन व्यज्यते । तयोर्मानमातिथ्यं करोति । कैः सूयवसैः शोभनतृणैः । दीर्घश्छन्दोऽनुरोधेन । यद्वा । पानीयं सुवते सूयन्ते वा पानीयस्वो निर्झराः तदादिभिः । रामेति प्रयोगो भावगोपनार्थः । श्लेषेण रामो

गा गोपकैरनुवनं नयतोरुदारवेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः ।
अस्पन्दनं गतिमतां पुलकस्तरूणां निर्योगपाशकृतलक्षणयोर्विचित्रम् ॥१९॥

एवंविधा भगवतो या वृन्दावनचारिणः । वर्णयन्त्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः ॥२०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे वेणुगीतं नामैकविंशोऽध्यायः ॥२१॥

## अथ द्वाविंशोऽध्यायः

### श्रीशुक उवाच

हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः । चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनव्रतम् ॥१॥

आप्लुत्याम्भसि कालिन्द्या जलान्ते चोदितेऽरुणे । कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप सैकतीम् ॥२॥

गन्धैर्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः । उच्चावचैश्चोपहारैः प्रवालफलतण्डुलैः ॥३॥

कात्यायनि महामाये महायोगिन्यधीश्वरि । नन्दगोपसुतं देवि पतिं मे कुरु ते नमः ।
इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः ॥४॥

एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः । भद्रकालीं समानर्चुर्भूयान्नन्दसुतः पतिः ॥५॥

---

रमणीयः यः कृष्णः । सहेति वैकल्पिकत्वान्न सहस्य सादेशः ॥ १८ ॥ हे सख्यः इदं तु अतिचित्रमाश्चर्यमस्ति । गोपैः सह वने वने गा नयतोश्चारयतोस्तयोर्मधुरपदैः वेणुनादैः श्रवणगतैः सद्भिः तनुभृत्सु जीवेषु मध्ये ये गतिमन्तः जङ्गमास्तेषामस्पन्दनं चलनाद्यभावः स्थावरधर्मः । स्पदि किञ्चिच्चलने धातुः । तरूणां रोमाञ्चश्च जङ्गमधर्मः । निर्योगः पादबन्धनरज्जुः पाशः कर्षणार्थं ताभ्यां कृतं गोपालबोधकं लक्षणं चिह्नं ययोः तयोः ॥ १९ ॥ याः क्रीडास्ता वर्णयन्त्य इत्यन्वयः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यामेकविंशोऽध्यायः ।

द्वाविंशे गोपकन्याभिर्भक्त्या सन्तोषितो व्रतैः ।
वस्त्रं हृत्वा वरं दत्त्वा यज्ञशालामगाद् हरिः ॥ १ ॥

प्रथमे मार्गशीर्षे ।[3] हविष्यं धान्यमुद्गयवतिलादि । अर्चनरूपं व्रतम् । चेरुः चक्रुः । धातूनामनेकार्थत्वात्करणे वृत्तिः । कुमार्य एव कुमारिकाः । स्वार्थे कः ततष्टाप् 'केऽणः' इति ह्रस्वः ॥१॥ आप्लुत्येति द्वयम् । अरुणे उदिते अरुणोदयवेलायाम् । जलान्ते जलसमीपे सैकतीं मृण्मयीं प्रतिमाम् आनर्चुः कैः । सुरभिभिः सुगन्धितैः । माल्यैः पुष्पैः । बलिभिः पूजासामग्रीभिः । उच्चावचैः नानाविधैः उपहार्यैः नैवेद्यैः । प्रवालैः नवपल्लवैः ॥२॥३॥ कात्यायनीति सार्द्धम् स्पष्टम् ॥ ४ ॥ पतिर्भूयादिति संकल्प्य ॥ ५ ॥ अन्वहं स्नातुं यान्त्यः स्वैर्गोत्रैर्नामभिः सह

---

१. स्थगे आच्छादने धातुः ।

२. 'उदयात्प्राक् चतस्रस्तु घटिका अरुणोदयः । इति माधवोक्तेः ।

३. व्रीहिषाष्टिकमुद्गाश्च कलायः सलिलं पयः ।
श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते स्थिताः ॥
किञ्च—अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते । इति

उषस्युत्थाय गोत्रैः स्वैरन्योऽन्याबद्धबाहवः । कृष्णमुच्चैर्जगुर्यान्त्यः कालिन्द्यां स्नातुमन्वहम् ॥६॥
नद्यां कदाचिदागत्य तीरे निक्षिप्य पूर्ववत् । वासांसि कृष्णं गायन्त्यो विजह्रुः सलिले मुदा ॥७॥
भगवांस्तदभिप्रेत्य कृष्णो योगेश्वरेश्वरः । वयस्यैरावृतस्तत्र गतस्तत्कर्मसिद्धये ॥८॥
तासां वासांस्युपादाय नीपमारुह्य सत्वरः । हसद्भिः प्रहसन् बालैः परिहासमुवाच ह ॥९॥
अत्रागत्याबलाः कामं स्वं स्वं वासः प्रगृह्यताम् । सत्यं ब्रवाणि नो नर्म यद् यूयं व्रतकर्शिताः ॥
न मयोदितपूर्वं वा अनृतं तदिमे विदुः । एकैकशः प्रतीच्छध्वं सहैवोत सुमध्यमाः ॥११॥

तस्य तत् क्ष्वेलितं दृष्ट्वा गोप्यः प्रेमपरिप्लुताः ।
व्रीडिताः प्रेक्ष्य चान्योऽन्यं जातहासा न निर्ययुः ॥१२॥

एवं ब्रुवति गोविन्दे नर्मणाऽऽक्षिप्तचेतसः । आकण्ठमग्नाः शीतोदे वेपमानास्तमब्रुवन् ॥१३॥
माऽनयं भोः कृथास्त्वां तु नन्दगोपसुतं प्रियम् । जानीमोऽङ्ग व्रजश्लाघ्यं देहि वासांसि वेपिताः॥
श्यामसुन्दर ते दास्यः करवाम तवोदितम् । देहि वासांसि धर्मज्ञ नो चेद् राज्ञे ब्रुवामहे ॥१५॥
भवत्यो यदि मे दास्यो मयोक्तं वा करिष्यथ । अत्रागत्य स्ववासांसि प्रतीच्छन्तु शुचिस्मिताः ॥

ततो जलाशयात् सर्वा दारिकाः शीतवेपिताः ।
पाणिभ्यां योनिमाच्छाद्य प्रोत्तेरुः शीतकर्शिताः ॥१७॥

भगवानाहता वीक्ष्य शुद्धभावप्रसादितः । स्कन्धे निधाय वासांसि प्रीतः प्रोवाच सस्मितम् ॥१८॥

यूयं विवस्त्रा यदपो धृतव्रता व्यगाहतैतत्तदु देवहेलनम् ।
बद्ध्वाञ्जलिं मूर्ध्न्यपनुत्तयेंऽहसः कृत्वा नमोऽधो वसनं प्रगृह्यताम् ॥१९॥

---

कृष्णं जगुरित्यन्वयः । उषसि अरुणोदयवेलायाम् । अन्वहं प्रतिदिनम् ॥ ६ ॥ कदाचित् पूर्णिमायाम् निक्षिप्य संस्थाप्य विजह्रुः विहारं चक्रुः ॥ ७ ॥ तत् अभिप्रेत्य तन्मतं ज्ञात्वा तत्र तटे सिद्धये फलदानाय आगतः ॥८॥ नीपं कदम्बम् । हेति सुस्पष्टम् ॥ ९ ॥ कामं निश्चितम् । नो नर्म न परिहासः । हे अबलाः ॥ १० ॥ न उदितपूर्वं पूर्वं नोक्तम् । 'आहिताग्न्यादिवत्समासः। इमे गोपाः। प्रतीच्छध्वं गृह्णीत॥११॥ क्ष्वेलितं परिहासम् । न निर्ययुः जलादिति शेषः ॥१२॥ नर्मणा परिहासेन आक्षिप्तम् आकृष्टं चेतो यासां ताः । उदशब्दोऽप्युदकवाची । वेपमानाः कम्पमानाः ॥१३॥ अङ्गैरेव व्रजे श्लाध्यं न तु गुणैरिति कटाक्षः । अतोऽङ्गशब्दस्य संबोधनार्थकत्वेऽपि भोः इत्यनेन न पुनरुक्तिः । यतो वेपिताः । वेपिताः नः प्रति देहीति वा । अनयमन्याय्यम् ॥१४॥ दास्य इत्युक्तवन्त्यः शूद्रजाः । करवामेति वैश्यजाः। देहीति वैश्यजाः । नो चेदिति क्षत्रियजाः । हेति पृथक् पदम् । ब्रवामेति उकाररहितः पाठः साधुः ॥ १५ ॥ प्रतीच्छन्तु गृह्णन्तु । शुचि शोभनं स्मितमीषद्धसनं यासां तास्तत्सम्बुद्धौ ॥ १६ ॥ दारिकाः कन्याः । जलाशयात् यमुनातः । प्रोत्तेरुः निर्गताः ॥ १७ ॥ आहता ईषदप्यक्षतयोनीः अतः प्रोवाचेत्यनेन न पौनरुक्त्यम् । लज्जात्यागात् आ सम्यक्तया हता इव मृता इवेति वा ॥ १८ ॥ यूयं विवस्त्राः सत्यः यत् अपो व्यगाहत आलोडयत अप्सु स्नाताः तदेतत् देवस्य वरुणस्य हेलनमपराध एव । उ एवार्थे । अतोऽस्य अंहसः पापस्य अपनुत्तये निवृत्तये अधो नमः कृत्वा । अधोवसनं वा । उत्तरीयाणि तु अहं धारयिष्यामीति हासः ॥ १९ ॥ विवस्त्राप्लवनं नग्नीभूय स्नानम् व्रतच्युतिं च्युतिहेतुम् मत्वा । साक्षात्कृतं

इत्यच्युतेनाभिहिता व्रजाबला मत्वा विवस्त्राप्लावनं व्रतच्युतिम् ।
तत्पूर्तिकामास्तदशेषकर्मणां साक्षात्कृतं नेमुरवद्यमृग् यतः ॥२०॥

तास्तथावनता दृष्ट्वा भगवान् देवकीसुतः । वासांसि ताभ्यः प्रायच्छत् करुणस्तेन तोषितः॥२१॥

दृढं प्रलब्धास्त्रपया च हापिताः प्रस्तोमिताः क्रीडनवच्च कारिताः ।
वस्त्राणि चैवापहृतान्यथाप्यमुं ता नाभ्यसूयन् प्रियसङ्गनिर्वृताः ॥२२॥

परिधाय स्ववासांसि प्रेष्ठसङ्गमसज्जिताः । गृहीतचित्ता नो चेलुस्तस्मिँल्लज्जायितेक्षणा॥२३॥

तासां विज्ञाय भगवान् स्वपादस्पर्शकाम्यया । धृतव्रतानां संकल्पमाह दामोदरोऽबलाः ॥२४॥

संकल्पो विदितः साध्व्यो भवतीनां मदर्चनम् । मयानुमोदितः सोऽसौ सत्यो भवितुमर्हति॥२५॥

न मय्यावेशितधियां कामः कामाय कल्पते । भर्जिता क्वथिता धाना प्रायो बीजाय नेशते ॥२६॥

याताबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः । यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः ॥२७॥

श्रीशुक उवाच

इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः ।
ध्यायन्त्यस्तत्पदाम्भोजं कृच्छ्रान्निर्विविशुर्व्रजम् ॥२८॥

अथ गोपैः परिवृतो भगवान् देवकीसुतः । वृन्दावनाद् गतो दूरं चारयन् गाः सहाग्रजः ॥२९॥

निदाघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः । आतपत्रायितान् वीक्ष्य द्रुमानाह व्रजौकसः ३०

---

साक्षात्फलप्रदं तं नेमुः । यतः सः अवद्यानि[1] पापानि मार्ष्टि शोधयतीति तथा ॥ २० ॥ तेन मूर्धाञ्जलि-प्रणामेन तोषितः प्रायच्छत् ददौ ॥२१॥ दृढम् अत्यर्थम् वञ्चिताः त्याजिताः उपहसिता इति क्रमेणार्थाः । अमुं कृष्णं ताः नाभ्यसूयन् दोषदृष्टया नापश्यन् । प्रियस्य संगेन निर्वृताः प्राप्तानन्दाः ॥ २२ ॥ सज्जिता वशीकृताः । लज्जायितेक्षणा लज्जाविलसितमीक्षणं यासां ताः । लज्जतेः पचाद्यच् ततः क्यङ् क्तश्च ॥ २३ ॥ ओ वासुदेवोऽहमेव बलं यासां ता अबलाः प्रति आह । पादस्पर्शः शरीरस्पर्श इति तीर्थः तस्य कामनया धृतव्रतानां सङ्कल्पं विज्ञायेति योज्यम् । ॥ २४ ॥ हे साध्व्यः मदर्चनं मत्सङ्गरूपः संकल्पः सत्यः सफलः ॥ २५ ॥ कामाय नश्वरकामभोगाय न किन्तु निरवच्छिन्नदिव्यभोगायेत्यर्थः । भर्जिता दग्धाः पक्वा वा धाना यवादिरूपा बीजाय अङ्कुरोद्गमाय नेशते न समर्था भवन्ति । प्रायः इत्यनेन क्वचित् प्ररोहोऽपि सूचितो भवति ध्रुवादीनाम् । वस्तुतस्तु लौकिकविषयकमेतत् । तत्र तु नवनवेच्छा जागर्ति तृप्तिरपि ततोऽप्यधिकैवेति विशेषः । प्राय इत्यनेनानधिकारिणां नात्र प्रवेशः ॥ २६ ॥ हे अबलाः यत् मत्सङ्गमम् । आर्या कात्यायनी तस्या अर्चन रूपं व्रतं चेरुः चक्रुः ताः सतीः श्रेष्ठाः सुखदायिनी इमा आगामिनीः क्षपा रात्रीः मया सह रंस्यथ ॥२७॥ कामोऽभीष्टम् । निर्विविशुः व्रजमाविशन् ॥२८॥२९॥ निदाघो ग्रीष्मर्तुस्तत्स्वीकारे तु हेमन्त इत्युपक्रमविरोधः स्यादतो निदाघपदेन स्वेदाम्बु ग्राह्यम् । 'निदाघ ऋतुभेदे स्यादुष्णस्वेदाम्बुनोरपि' तथा च निदाघः स्वेदाम्बु तत्करोऽर्को निदाघार्कस्तस्यातपे तीव्रे मध्याह्ने सति । मध्यमपद लोपी समासः । व्रजौकस इति द्रुमविशेषणम् । इति वंशीधरी ।–गोपान् वा । अत्मनः स्वस्य स्वेषां वा उपरि छत्रा-

---

१. 'अवद्यं पापदोषयोः' इति शाश्वतः ।

हे स्तोककृष्ण हे अंशो श्रीदामन् सुबलार्जुन । विशालर्षभ तेजस्विन् देवप्रस्थ वरूथप ।।३१।।

पश्यतैतान् महाभागान् परार्थैकान्तजीविनः । वातवर्षातपहिमान् सहन्तो वारयन्ति नः।।३२।।

अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् । सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः ।।३३।।

पत्रपुष्पफलच्छायामूलवल्कलदारुभिः । गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते ।।३४।।

एतावज्जन्मसाफल्यं देहिनामिह देहिषु । प्राणैरर्थैर्धिया वाचा श्रेय एवाचरेत् सदा ।।३५।।

इति प्रवालस्तबकफलपुष्पदलोत्करैः । तरूणां नम्रशाखानां मध्येन यमुनां गतः ।।३६।।

तत्र गाः पाययित्वापः सुमृष्टाः शीतलाः शिवाः । ततो नृप स्वयं गोपाः कामं स्वादु पपुर्जलम् ।।

तस्या उपवने कामं चारयन्तः पशून् नृप । कृष्णरामावुपागम्य क्षुधार्ता इदमब्रुवन् ।।३८।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
गोपीवस्त्रापहारो नाम द्वाविंशोऽध्यायः ।।२२।।

## अथ त्रयोविंशोऽध्यायः

### गोपा ऊचुः

राम राम महावीर्य कृष्ण दुष्टनिबर्हण । एषा वै बाधते क्षुन्नस्तच्छान्तिं कर्तुमर्हथः ।। १ ।।

### श्रीशुक उवाच

इति विज्ञापितो गोपैर्भगवान् देवकीसुतः । भक्ताया विप्रभार्यायाः प्रसीदन्निदमब्रवीत् ।। २ ।।

---

कारान् । आतपत्रमिवाचरन्तीति आतपत्रायन्ते आतपत्रायितास्तान् । आचारार्थक्यङन्तात्कर्तरि क्तः ।।३०।। अत्र दश संबोधनानि तत्राष्टौ अष्टदिक्षु कृष्णरक्षणार्थं स्थिताः । द्वौ छत्रधारकौ ।।३१।। परार्थमेव एकान्तेन निश्चयेन जीवितुं शीलं येषां तान् नोऽस्माकं वातादीन् ।।३२।। उपजीवनं जीवनसाधनम् सुजनस्य कृपालोरिव येषां समीपमागता अर्थिनो याचकाः विमुखा न यान्ति ।।३३।। कामान् वितन्वते मनोरथान् पूरयन्ति । निर्यासो 'गोंद इति । ख्यातम् । अस्थि सारांशः आसवोपयोगित्वात् । 'तोक्मं स्वेऽङ्कुरे' इति धरणिः ।३४। धिया सत्परामर्शेन । वाचा हितोपदेशेन । श्रेयः कल्याणम् ।। ३५ ।। प्रवालादीनामुत्करैः समूहैर्नम्रशाखानाम् तरूणां । स्तबकाः पुष्पगुच्छाः ।। ३६ ।। सुमृष्टाः स्वच्छाः शिवाः तृप्तिकरी अपः तत्र यमुनायाम् । कामं यथेच्छम् जलं पपुः ।। ३७ ।। नित्यं तु गृहीतभोज्यपदार्था एव गोपा वनमायान्ति तद्दिने तु कुमारिकाभिः सह हास्यकरणार्थं विस्मृतभोज्या एवागता अतः क्षुधार्ता इत्युक्तम् ।। ३८ ।।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां द्वाविंशोऽध्यायः ।।२२

त्रयोविंशेऽन्नयाच्ञाया व्याजेन स्त्रीष्वनुग्रहः ।
कृतः कृष्णेन तेनात्र विप्रतापोऽनुवर्ण्यते ।। १ ।।

दुष्टान् निबर्हति हन्तीति तत्सम्बोधनम् । बर्ह हिंसायां ल्युः । क्षुत्[1] बुभुक्षा शत्रुः ।। १ ।। विज्ञापितः प्रार्थितः । भक्ताया इत्येकवचनं तु सद्यो मोक्षाभिप्रायेण ।।२।। देवा इज्यन्तेऽस्मिन् इति यज्ञशालाम् । आङ्गिरसं

---

१. 'क्षुद् खलु वै मनुष्यस्य भ्रातृव्यः' इति श्रुतेः ।

प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः । सत्रमाङ्गिरसं नाम ह्यासते स्वर्गकाम्यया ॥ ३ ॥
तत्र गत्वौदनं गोपा याचतास्मद्विसर्जिताः । कीर्तयन्तो भगवत आर्यस्य मम चाभिधाम् ॥ ४ ॥
इत्यादिष्टा भगवता गत्वाऽयाचन्त ते तथा । कृताञ्जलिपुटा विप्रान् दण्डवत् पतिता भुवि ॥५॥
हे भूमिदेवाः शृणुत कृष्णस्यादेशकारिणः । प्राप्ताञ्जनीत भद्रं वो गोपान् नो रामचोदितान् ॥

गाश्चारयन्ताववदूर ओदनं रामाच्युतौ वो लषतो बुभुक्षितौ ।
तयोर्द्विजा ओदनमर्थिनोर्यदि श्रद्धा च वो यच्छत धर्मवित्तमाः ॥ ७ ॥

दीक्षायाः पशुसंस्थायाः सौत्रामण्याश्च सत्तमाः । अन्यत्र दीक्षितस्यापि नान्नमश्नन् हि दुष्यति ॥
इति ते भगवद्याच्ञां शृण्वन्तोऽपि न शुश्रुवुः । क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः ॥९॥
देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः । देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥१०॥
तं ब्रह्म परमं साक्षाद् भगवन्तमधोक्षजम् । मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे ॥११॥
न ते यदोमिति प्रोचुर्न नेति च परंतप । गोपा निराशाः प्रत्येत्य तथोचुः कृष्णरामयोः ॥१२॥
तदुपाकर्ण्य भगवान् प्रहस्य जगदीश्वरः । व्याजहार पुनर्गोपान् दर्शयँल्लौकिकीं गतिम् ॥१३॥
मां ज्ञापयत पत्नीभ्यः ससंकर्षणमागतम् । दास्यन्ति काममन्नं वः स्निग्धा मय्युषिता धिया ॥
गत्वाथ पत्नीशालायां दृष्ट्वाऽऽसीनाः स्वलंकृताः । नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रुवन् ॥
नमो वो विप्रपत्नीभ्यो निबोधत वचांसि नः । इतोऽविदूरे चरता कृष्णेनेहेषिता वयम् ॥१६॥
गाश्चारयन् स गोपालैः सरामो दूरमागतः । बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम् ॥१७॥
श्रुत्वाऽच्युतमुपायातं नित्यं तद्दर्शनोत्सुकाः । तत्कथाक्षिप्तमनसो बभूवुर्जातसम्भ्रमाः ॥१८॥
चतुर्विधं बहुगुणमन्नमादाय भाजनैः । अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः ॥१९॥

---

बृहस्पतिसवम् नाम । अङ्गिरसा प्रोक्तत्वात् । आसते कुर्वते । प्रत्ययार्थस्य प्रधानत्वात् करणे वृत्तिः ॥३॥ विसर्जिता आवाभ्यां प्रेषिताः । अभिधां नाम ॥४॥ कृताञ्जलिपुटा भूत्वा विप्रान् अयाचन्तेति सम्बन्धः ॥५॥ प्राप्तान् नोऽस्मान् जानीत ॥६॥ अविदूरे समीपे एव वर्तमानौ तौ वः युष्माकं यत् ओदनं पक्वान्नं तत् अभिलषतः । यदि वः श्रद्धा चेत्तर्हि प्रयच्छत ॥७॥ संस्था हिंसायुक्ता सौत्रामणी सुरायुक्ता चेत्युभयविधदीक्षाया अन्यत्र शुद्धेऽस्मिन् यज्ञेऽन्नमश्नन् न दुष्यति ॥८॥ क्षुद्रे स्वर्गादौ आशा येषां ते । बालिशाः मूर्खाः ॥९॥ देश इति द्वयम् । देशादिः धर्मान्तः यन्मयः यद्विभूतिरूपः तं भगवन्तं न मेनिरे इति द्वयोरन्वयः । देशः तीर्थम् । कालो वसन्तादिः । तन्त्रं प्रयोगः ॥१०॥११॥ ॐ दास्यामः न दास्याम इति किमपि न प्रोचुः । प्रत्येत्य प्रत्यावृत्य । कृष्णेति कर्मणि षष्ठी ॥१२॥ व्याजहार उवाच । को वा याचको न परामूयेत इति लौकिकीम् गतिम् ॥१३॥ कामं यथेच्छम् अन्नम् वः युष्मभ्यम् । धिया मनसा मयि उषिताः कृतनिवासाः॥१४॥१५॥ वः युष्मभ्यं नमः । निबोधत शृणुत । ईषिताः[1] प्रेषिताः ॥१६॥१७॥ आक्षिप्तम् आकृष्टम् । जातसम्भ्रमाः[2] जातादराः ॥१८॥ चतुर्विधमिति[3] द्वयम् । भक्ष्य-

---

१. ईष प्रेरणे धातुः ।
२. 'संभ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि' इति मेदिनी ।
३. भक्ष्यं लड्डुकादि । भोज्यं संयावादि । चूष्यम् इक्ष्वादि । लेह्यं दध्यादि । अवलेहादि वा ।

निषिध्यमानाः पतिभिर्भ्रातृभिर्बन्धुभिः सुतैः । भगवत्युत्तमश्लोके दीर्घश्रुतधृताशयाः ॥२०॥
यमुनोपवनेऽशोकनवपल्लवमण्डिते । विचरन्तं वृतं गोपैः साग्रजं ददृशुः स्त्रियः ॥२१॥

श्यामं हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे ।
विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलालककपोलमुखाब्जहासम् ॥२२॥
प्रायःश्रुतप्रियतमोदयकर्णपूरैर्यस्मिन् निमग्नस्तमथाक्षिरन्ध्रैः ।
अन्तः प्रवेश्य सुचिरं परिरभ्य तापं प्राज्ञं यथाऽभिमतयो विजहुर्नरेन्द्र ॥२३॥

तास्तथा त्यक्तसर्वाशाः प्राप्ता आत्मदिदृक्षया । विज्ञायाखिलदृग्द्रष्टा प्राह प्रहसिताननः ॥२४॥
स्वागतं वो महाभागा आस्यतां करवाम किम् । यन्नो दिदृक्षया प्राप्ता उपपन्नमिदं हि वः ॥२५॥
नन्वद्धा मयि कुर्वन्ति कुशलाः स्वार्थदर्शनाः । अहैतुक्यव्यवहितां भक्तिमात्मप्रिये यथा ॥२६॥
प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः । यत्सम्पर्कात् प्रिया आसंस्ततः को न्वपरः प्रियः ॥२७॥
तद् यात देवयजनं पतयो वो द्विजातयः । स्वसत्रं पारयिष्यन्ति युष्माभिर्गृहमेधिनः ॥२८॥

पत्न्य ऊचुः

मैवं विभोऽर्हति भवान् गदितुं नृशंसं सत्यं कुरुष्व निगमं तव पादमूलम् ।
प्राप्ता वयं तुलसिदाम पदावसृष्टं केशैर्निवोढुमतिलङ्घ्य समस्तबन्धून् ॥२९॥
गृह्णन्ति नो न पतयः पितरौ सुता वा न भ्रातृबन्धुसुहृदः कुत एव चान्ये ।
तस्माद् भवत्प्रपदयोः पतितात्मनां नो नान्या भवेद् गतिररिंदम तद् विधेहि ॥३०॥

श्रीभगवानुवाच

पतयो नाभ्यसूयेरन् पितृभ्रातृसुतादयः । लोकाश्च वो मयोपेता देवा अप्यनुमन्वते ॥३१॥

---

भोज्यलेह्यचूष्यभेदैः । प्रियमभिसस्रुः जग्मुः । निम्नगाः नद्यः । दीर्घं बहुकालं श्रुतेनैव धृतः आशयो याभिस्ताः । आशयः कथं द्रक्ष्याम इत्येवंरूपः ॥१९॥२०॥२१॥ हिरण्यवत् परिधानं पीताम्बरं यस्य तम् । वन माल्यानि पुष्पाणि तदादिभिः नटवद्वेषो यस्य तम् । अनुव्रतस्य मनसुखेति ख्यातस्य स्कन्धे । इतरेण हस्तेन । कर्णयोः उत्पले भूषणे यस्य अलकाः कपोलयोः यस्य मुखाब्जे हासो यस्य स च स च स च तम् ।२२। प्रायः श्रुताः ये प्रियतमस्य उदया उत्कर्षा ते एव कर्णाभरणानि तैः । अथ दर्शनानन्तरे पत्न्यः अन्तः प्रवेश्य आलिङ्ग्य च तापं विजहुः यथा अभिमतयः अहंवृत्तयः प्राज्ञं सुषुप्तिसाक्षिणं प्राप्य तापं जहति तद्वत् । प्राज्ञं भक्तजनं वा प्राप्य यथा विवेकिनः ॥२३॥२४॥ यत् प्राप्ताः तदिदं वः युष्माकम् उपपन्नमुचितमेव ॥२५॥ श्रद्धा साक्षात् यथा यथावत् मयि भक्तिं कुर्वन्तीत्यन्वयः । स्वार्थं परलोकहितम् । अहैतुकी निष्कामा । यद्वा । यथा आत्मप्रिये पुत्रमित्रादौ इति दृष्टान्ते योज्यम् ॥२६॥ यत्सम्पर्कात् आत्मसम्पर्कात् प्रियाः । ततः आत्मनः अपरः कःप्रियः न कोऽपि । स्वा ज्ञातयः । आत्मा देहः ॥२७॥ पारयिष्यन्ति समापयिष्यन्ति ॥२८॥ नृशंसं कठोरं वचः निगमं प्रतिज्ञाम् । यद् गत्वा न निवर्तन्ते इति । पदावसृष्टं अवज्ञयाऽपि दत्तं दाम मालां केशैः धर्तुं दासीभवितुं प्राप्ताः ॥२९॥ भवत्पदाग्रयोः पतितदेहानां नोऽस्माकं त्वत्तोऽन्या स्वर्गादिगतिरपि मा भूत् अतः दास्यमेव विधेहीत्यन्वयः ॥ ३० ॥ लोकाः अन्ये जनाश्च । नाभ्यसूयेरन् दोषदृष्ट्या न पश्येयुः । उपेता अनुज्ञाताः । अनुमन्वते अनुमोदन्ते ॥३१॥ युष्माभिः

न प्रीतयेऽनुरागाय ह्यङ्गसङ्गो नृणामिह । तन्मनो मयि युञ्जाना अचिरान्मामवाप्स्यथ ॥३२॥

श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात् । न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥३३॥

श्रीशुक उवाच

इत्युक्ता मुनिपत्न्यस्ता यज्ञवाटं पुनर्गताः । ते चानसूयवः स्वाभिः स्त्रीभिः सत्रमपारयन् ॥३४॥

तत्रैका विधृता भर्त्रा भगवन्तं यथाश्रुतम् । हृदोपगुह्य विजहौ देहं कर्मानुबन्धनम् ॥३५॥

भगवानपि गोविन्दस्तेनैवान्नेन गोपकान् । चतुर्विधेनाशयित्वा स्वयं च बुभुजे प्रभुः ॥३६॥

एवं लीलानरवपुर्नृलोकमनुशीलयन् । रेमे गोगोपगोपीनां रमयन् रूपवाक्कृतैः ॥३७॥

अथानुस्मृत्य विप्रास्ते अन्वतप्यन् कृतागसः । यद् विश्वेश्वरयोर्याच्ञामहन्म नृविडम्बयोः ॥३८॥

दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम् । आत्मानं च तया हीनमनुतप्ता व्यगर्हयन् ॥३९॥

धिग् जन्म नस्त्रिवृद्विद्यां धिग्व्रतं धिग् बहुज्ञताम् ।
धिक् कुलं धिक् क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ॥४०॥

नूनं भगवतो माया योगिनामपि मोहिनी । यद् वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ॥४१॥

अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ । दुरन्तभावं योऽविध्यन्मृत्युपाशान् गृहाभिधान् ॥४२॥

नासां द्विजातिसंस्कारो न निवासो गुरावपि । न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥४३॥

अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे । भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ॥४४॥

ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया । अहो नः स्मारयामास गोपवाक्यैः सतां गतिः ॥४५॥

अन्यथा पूर्णकामस्य कैवल्याद्याशिषां पतेः । ईशितव्यैः किमस्माभिरीशस्यैतद् विडम्बनम् ॥४६॥

हित्वान्यान् भजते यं श्रीः पादस्पर्शाशया सकृत् । आत्मदोषापवर्गेण तद्याच्ञा जनमोहिनी ॥४७॥

---

सह मम अङ्गसङ्गः नृणां प्रीतये सुखाय न स्यात् । तत् तस्मात् ।३२। श्रवणादिना मयि भावो यथा जायते तथा सन्निकर्षेण नेत्यन्वयः ॥३३॥ यज्ञवाटं यज्ञस्थलम् । अनसूयवः दोषदृष्टिरहिताः । अपारयन् समापयामासुः ॥३४॥ तत्र तासु कचित् एका रज्ज्वादिना बद्धा सा च तं हृदा उपगृह्य आलिङ्ग्य जहौ कृष्णं प्राप्ता ॥३५॥ आशयित्वा भोजयित्वा स्वयमपि ।३६। अनुशीलयन् अनुकुर्वन् कृतैः चरितैः गोपीः रमयितुं रेमे । हेतौ शता कर्मणि शेषे षष्ठी ।३७। वयम् अहन्म उल्लङ्घितवन्तः नृविडम्बयोः नृन् अनुकुर्वतोः ।३८। व्यगर्हयन् निन्दितवन्तः ।३९। नोऽस्माकं त्रिभिर्वर्तते इति त्रिवृत् त्रिविधम् । शौक्लं[1] सावित्रं दैक्षं चेति ।४०। हे द्विजा इति योज्यम् ।४१। स्वार्थे[2] भगवद्दर्शनरूपे ॥४२॥ दुरन्तभावम् अनन्यभक्तिम् पश्यत । यः गृहासक्तिरूपान् पाशान् छिनत्ति ॥४२॥४३॥४४॥ ईहया व्यापारेण प्रमत्तान् नोऽस्मान् ।४५। आशिषां सर्वविधभोगानां मुक्तीनां वा पतेः[3] दातुः ईशितव्यैः नियम्यैः प्रेष्यैः अस्माभिः किं प्रयोजनम् । विडम्बनं कृपैव ।४६। अन्यान् ब्रह्मादीन् हित्वा दोषापवर्गेण चाञ्चल्यादित्यागेन

---

१. शुद्धमातापितृतः । उपनेतुः । देवदीक्षारूपं च क्रमेण ।

२. स्वार्थः सर्वात्मना ज्ञेयो यद्धरेर्दर्शनादिकम् । इत्युक्तेः ।

३. 'षष्ठीयुक्तश्छन्दसि वा' इति घिसंज्ञा ।

देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः । देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥४८॥
स एष भगवान् साक्षाद् विष्णुर्योगेश्वरेश्वरः । जातो यदुष्वित्यशृण्म ह्यपि मूढा न विद्महे ।४९॥
अहो वयं धन्यतमा येषां नस्तादृशीः स्त्रियः । भक्त्या यासां मतिर्जाता अस्माकं निश्चला हरौ ॥
नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे । यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु ॥५१॥
स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम् । अविज्ञातानुभावानां क्षन्तुमर्हत्यतिक्रमम् ॥५२॥
इति स्वाघमनुस्मृत्य कृष्णे ते कृतहेलनाः । दिदृक्षवोऽप्यच्युतोः कंसाद् भीता न चाचलन् ॥५३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे यज्ञपत्न्युद्धरणं
नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

## अथ चतुर्विंशोऽध्यायः

### श्रीशुक उवाच

भगवानपि तत्रैव बलदेवेन संयुतः । अपश्यन्निवसन् गोपानिन्द्रयागकृतोद्यमान् ॥ १ ॥
तदभिज्ञोऽपि भगवान् सर्वात्मा सर्वदर्शनः । प्रश्रयावनतोऽपृच्छद् वृद्धान् नन्दपुरोगमान् ॥ २ ॥
कथ्यतां मे पितः कोऽयं सम्भ्रमो व उपागतः । किं फलं कस्य चोद्देशः केन वा साध्यते मखः ॥
एतद् ब्रूहि महान् कामो मह्यं शुश्रूषवे पितः ।४। न हि गोप्यं हि साधूनां कृत्यं सर्वात्मनामिह ॥

---

॥ ४७ ॥ इदं पूर्वं व्याख्यानमतः देशेत्यस्यानुवादरूपत्वान्न पुनरुक्तिः ॥ ४८ ॥ ४९ ॥ तादृशीः तादृश्यः ॥५०॥ अकुण्ठा निर्विकारा मेधा यस्य ॥५१॥ नोऽस्माकम् अतिक्रमम् अपराधम् ॥ ५२ ॥ हेलनम् अवज्ञा । अच्युतयोः रामकृष्णयोः । शेषे षष्ठी । द्रष्टुमिच्छवोऽपि न च अचलन् नैव जग्मुः यतो भीताः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां त्रयोविंशोऽध्यायः ॥ २३ ॥

चतुर्विंशे निजस्मृत्यै शक्रयागं निवारयन् ।
कृष्णः प्रावर्तयत् गोपैर्व्रजे गोवर्धनोत्सवम् ॥ १ ॥

तत्रैव गोकुले इन्द्रयागाय कृतः उद्यमो यैस्तान् गोपान् अपश्यत् ॥१॥ तदभिज्ञः तज्जानन्नपि । प्रश्रयेण विनयेन अवनतः ॥ २ ॥ वः युष्माकं कोऽयं संभ्रमः उद्यमः[2] । श्लेषेण सम्यक् भ्रम एव । मखः[3] यागः ॥ ३ ॥ एतदित्यर्द्धम् । मह्यं मम । महान् कामः श्रोतुं महती इच्छा ॥४॥ नहीति सार्द्धम् । सर्वात्मनां सर्वत्रात्मदृष्टीनाम् । गोप्यं नास्तीत्यन्वयः । उदास्ता उदासीनाः । वर्ज्यः मन्त्रकार्ये । आत्मवत् उच्यते । अहं तु ततोऽपि

---

१. 'विडम्बनमतर्क्ये चानुकारकृपयोर्हसे' इति धरणिः ।
२. 'संभ्रम उद्यमेऽपि स्यात्' इति शाश्वतः ।
३. 'मखः स्याद् दानयागयोः' इति धरणिः ।

अस्त्यस्वपरदृष्टीनाममित्रोदास्तविद्विषाम् । उदासीनोऽरिवद् वर्ज्य आत्मवत् सुहृदुच्यते ॥ ५ ॥

ज्ञात्वाज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति । विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत् ॥६॥

तत्र तावत् क्रियायोगो भवतां किं विचारितः । अथवा लौकिकस्तन्मे पृच्छतः साधु भण्यताम् ॥

नन्द उवाच

पर्जन्यो भगवानिन्द्रो मेघास्तस्यात्ममूर्तयः । तेऽभिवर्षन्ति भूतानां प्रीणनं जीवनं पयः ॥८॥

तं तात वयमन्ये च वार्मुचां पतिमीश्वरम् । द्रव्यैस्तद्रेतसा सिद्धैर्यजन्ते क्रतुभिर्नराः ॥९॥

तच्छेषेणोपजीवन्ति त्रिवर्गफलहेतवे । पुंसां पुरुषकाराणां पर्जन्यः फलभावनः ॥१०॥

य एवं विसृजेद् धर्मं पारम्पर्यागतं नरः । कामाल्लोभाद् भयाद् द्वेषात् स वै नाप्नोति शोभनम् ॥

श्रीशुक उवाच

वचो निशम्य नन्दस्य तथान्येषां व्रजौकसाम् । इन्द्राय मन्युं जनयन् पितरं प्राह केशवः ॥१२॥

श्रीभगवानुवाच

कर्मणा जायते जंतुः कर्मणैव विलीयते । सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते ॥१३॥

अस्ति चेदीश्वरः कश्चित् फलरूप्यन्यकर्मणाम् । कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः॥१४॥

किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम् । अनीशेनान्यथा कर्तुं स्वभावविहितं नृणाम् ॥१५॥

स्वभावतंत्रो हि जनः स्वभावमनुवर्तते । स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥१६॥

देहानुच्चावचाञ्जन्तुः प्राप्योत्सृजति कर्मणा । शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः ॥१७॥

तस्मात् सम्पूजयेत् कर्म स्वभावस्थः स्वकर्मकृत् । अञ्जसा येन वर्तेत तदेवास्य हि दैवतम् ॥

आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति । न तस्माद् विन्दते क्षेमं जारं नार्यसती यथा ॥१९॥

वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः । वैश्यस्तु वार्तया जीवेच्छूद्रस्तु द्विजसेवया ॥२०॥

कृषिवाणिज्यगोरक्षा कुसीदं तुर्यमुच्यते । वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ॥२१॥

---

अन्तरङ्गः पुत्रत्वादतो नोपेक्ष्यः ॥ ५ ॥ विदुषः विचार्य कर्तुः सिद्धिः ॥ ६ ॥ तावत् प्रथमं किं शास्त्रतोऽपि लोकाचारप्राप्तो वा ॥ ७ ॥ पर्जन्यः वर्षणशीलः । 'पृषु' सेचने इत्यस्मात् । प्रीणनं तृप्तिकरं जीवनहेतुभूतं पयो जलम् । मूर्तयः आत्मवत् प्रियाः ॥ ८ ॥ हे तात पितः । वार्मुचां मेघानां पतिं तमिन्द्रम् अन्ये नरा क्रतुभिः यजन्ते । वयमपि यजामहे इति पुरुषव्यत्ययेनान्वयः । कैः । तद्रेतसा वृष्टिजलेन सिद्धैः अन्नादिभिः ॥ ९ ॥ तच्छेषेण यज्ञशिष्टेन हैतवे धर्मादिसिद्धये । पुंसां कृषीवलानां पर्जन्य इन्द्र एव फलभावनः—अन्नादि सम्पादकः ॥ १० ॥ शोभनं सुखम् ॥ ११ ॥ इन्द्राय इन्द्रस्य ॥ १२ ॥ जन्तुः जीवमात्रम् ॥ १३ ॥ फलरूपी फलदाता चेत् यदि कश्चित् अस्ति सोऽपि अकर्तुः फलदाने न प्रभुः न समर्थः ॥ १४ ॥ कर्म विहितं तज्जन्यं सुखादिकम् अन्यथा कर्तुं परिवर्तयितुम् अनीशेन असमर्थेन ॥ १५ ॥ तन्त्रः प्राक्तनसंस्काराधीनः अनुसरति उच्चावचान् उत्कृष्टनिकृष्टान् । शत्रुमित्रादयः कर्मैव कर्मजन्या एव ॥१७॥ सम्पूजयेत् सम्मानयेत् । येन कर्मणा अञ्जसा सुखेन वर्तेत जीवेत् तदेव दैवतम् उपास्यम् ॥१८॥ एकतरं मुख्यं भावं देवादिरूपम् आजीव्य आश्रित्य अन्यं गौणम् सेवते तस्मात् गौणात्। असती पुंश्चली नारी ॥ १९ ॥ ब्रह्मणा वेदाध्यापनेन । वार्तया कृष्यादि-

सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः । रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत् ॥२२॥
रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वतः । प्रजास्तैरेव सिद्ध्यन्ति महेन्द्रः किं करिष्यति॥२३॥
न नः पुरो जनपदा न ग्रामा न गृहा वयम् । नित्यं वनौकसस्तात वनशैलनिवासिनः ॥२४॥
तस्माद् गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः । य इन्द्रयागसम्भारास्तैरयं साध्यतां मखः ॥२५॥
पच्यन्तां विविधाः पाकाः सूपान्ताः पायसादयः । संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम्॥२६॥
हूयन्तामग्नयः सम्यग् ब्राह्मणैर्ब्रह्मवादिभिः । अन्नं बहुविधं तेभ्यो देयं वो धेनुदक्षिणाः ॥२७॥
अन्येभ्यश्चाश्वचाण्डालपतितेभ्यो यथार्हतः । यवसं च गवां दत्त्वा गिरये दीयतां बलिः ॥२८॥
स्वलंकृता भुक्तवन्तः स्वनुलिप्ताः सुवाससः । प्रदक्षिणं च कुरुत गोविप्रानलपर्वतान् ॥२९॥
एतन्मम मतं तात क्रियतां यदि रोचते । अयं गोब्राह्मणाद्रीणां मह्यं च दयितो मखः ॥३०॥

श्रीशुक उवाच

कालात्मना भगवता शक्रदर्पं जिघांसता । प्रोक्तं निशम्य नन्दाद्याः साध्वगृह्णन्त तद्वचः ॥३१॥
तथा च व्यदधुः सर्वं यथाऽऽह मधुसूदनः । वाचयित्वा स्वस्त्ययनं तद्द्रव्येण गिरिद्विजान् ॥३२॥
उपहृत्य बलीन् सर्वानादृता यवसं गवाम् । गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम् ॥३३॥
अनांस्यनडुद्युक्तानि ते चारुह्य स्वलंकृताः । गोप्यश्च कृष्णवीर्याणि गायन्त्यः सद्विजाशिषः ॥३४॥
कृष्णस्त्वन्यतमं रूपं गोपविश्रम्भणं गतः । शैलोऽस्मीति ब्रुवन् भूरि बलिमादद् बृहद्वपुः ॥३५॥
तस्मै नमो व्रजजनैः स चक्रे आत्मनाऽऽत्मने । अहो पश्यत शैलोऽसौ रूपी नोऽनुग्रहं व्यधात् ।३६
एषोऽवजानतो मर्त्यान् कामरूपी वनौकसः । हन्ति ह्यस्मै नमस्यामः शर्मणे आत्मनो गवाम् ३७
इत्यद्रिगोद्विजमखं वासुदेवप्रणोदिताः । यथा विधाय ते गोपाः सहकृष्णा व्रजं ययुः ॥३८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे चतुर्विंशोऽध्यायः ॥२४॥

---

रूपया ॥२०॥ कुसीदं वृद्ध्यर्थं धनप्रयोगः ॥२१॥ अन्योन्यं स्त्रीपुरुषयोगेन विविधं देवमनुष्यादिरूपम् जगत्॥२२॥ सर्वतः सर्वत्र । सिद्ध्यन्ति जीवन्ति ॥२३॥ वनशैलवासिनां तु वनाद्रिदेवता एव पूज्या न जानपदाद्याः ॥२४॥ मखो यागः । संभारः सामग्री ॥ २१ ॥ सूपं मूद्गपाकः । सर्वदोहः दुग्धदध्यादिः ॥ २६ ॥ अग्नयः आहवनीयादयः हूयन्तां तर्प्यन्ताम् । वः युष्माभिः । बहुगुणं षड्रसोपेतम् । धेनुसहिताः ॥२७॥ श्वादीनभिव्याप्य सर्वेभ्यः । बलिः नैवेद्यम् पक्वान्नादि सर्वम् ॥ २८ ॥ २९ ॥ मह्यं मम च । दयितः प्रियः ॥३०॥३१॥ तथेति त्रयम् साधूक्तं साधूक्तमिति करतलध्वनिना सह तद्द्रव्येण इन्द्रयागार्थपक्वान्नेन गिरिं तथा द्विजान् प्रति बलीन् पुष्पधूपादीन् उपहृत्य समर्प्य अनांसि शकटानि आरुह्य गोप्योऽपि प्रदक्षिणां चक्रुरित्यन्वयः । आदृताः सादराः साशीर्वादाश्च ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ विस्रम्भणं विश्वासजनकम् । शैलः । शैलाभिमानी देवोऽस्मि । आदत् अभक्षयत् ॥ ३५ ॥ तस्मै इति द्वयम् । आत्मना स्वयम् आत्मने गिरिरूपाय नमश्चक्रे । रूपी प्रत्यक्षः सन् । अवजानतः पूजामकुर्वतो जनान् हन्ति । कामरूपी सर्पादिरूपः सन् । शर्मणे क्षेमाय ॥ ३६ ॥ ३७ ॥ मखं पूजाम् । यथा यथावत् विधाय व्रजं ययुः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां चतुर्विंशोऽध्यायः ॥ २४ ॥

## अथ पञ्चविंशोऽध्यायः

### श्रीशुक उवाच

इन्द्रस्तदाऽऽत्मनः पूजां विज्ञाय विहतां नृप । गोपेभ्यः कृष्णनाथेभ्यो नन्दादिभ्यश्चुकोप सः ॥१॥
गणं सांवर्तकं नाम मेघानां चान्तकारिणाम् । इन्द्रः प्राचोदयत् क्रुद्धो वाक्यं चाहेशमान्युत ॥२॥
अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम् । कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्देवहेलनम् ॥३॥
यथाऽदृढैः कर्ममयैः क्रतुभिर्नामनौनिभैः । विद्यामान्वीक्षिकीं हित्वा तितीर्षन्ति भवार्णवम् ॥४॥
वाचालं बालिशं स्तब्धमज्ञं पण्डितमानिनम् । कृष्णं मर्त्यमुपाश्रित्य गोपा मे चक्रुरप्रियम् ॥५॥
एषां श्रियावलिप्तानां कृष्णेनाध्मायितात्मनाम् । धुनुत श्रीमदस्तम्भं पशून् नयत संक्षयम् ॥६॥
अहं चैरावतं नागमारुह्यानुव्रजे व्रजम् । मरुद्गणैर्महावीर्यैर्नन्दगोष्ठजिघांसया ॥७॥

### श्रीशुक उवाच

इत्थं मघवताऽऽज्ञप्ता मेघा निर्मुक्तबन्धनाः । नन्दगोकुलमासारैः पीडयामासुरोजसा ॥८॥
विद्योतमाना विद्युद्भिः स्तनन्तः स्तनयित्नुभिः । तीव्रैर्मरुद्गणैर्नुन्ना ववृषुर्जलशर्कराः ॥९॥
स्थूणास्थूला वर्षधारा मुञ्चत्स्वभ्रेष्वभीक्ष्णशः । जलौघैः प्लाव्यमाना भूर्नादृश्यत नतोन्नतम् १०॥

---

पञ्चविंशे हृते यज्ञे कोपादिन्द्रेऽतिवर्षति ।
छत्रवत् व्रजरक्षार्थं सन्दधार गिरिं हरिः ॥ १ ॥

निहतां त्यक्ताम् । गोपेभ्य क्रुधद्रुहेति चतुर्थी । स इन्द्रः ॥१॥ संवर्तः प्रलयः तत्र भवम् सांवर्तकम् । उत अपि वाक्यं च आहेत्यन्वयः यतः आत्मानमीशं मन्यते ॥२॥ वस्तुतः श्रीमदेति त्रिपदद्वन्द्वः । मदो[1] हर्षः । कृष्णं सदानन्दरूपं ब्रह्मैव कृपया मनुष्यत्वेन प्रतीयमानम् । देवस्य विषयिणो मम हेलनमवज्ञां तच्च शिक्षार्थम् चक्रुः ॥ ३ ॥ वाचा वाण्या अलं पूर्णम् । शास्त्रनामनौकासदृशैः अदृढैः[2] नश्वरैः । आन्वीक्षिकीम्[3] आत्मविद्याम् ॥ ४ ॥ वाचा वाण्या अलं पूर्णम् । शास्त्रयोनित्वात् । बालिशं दिव्यबालम् । यद्वा । वाचया सरस्वत्या अलं पूर्णो बालिशोऽपि यस्मादित्येकं पदम् । स्तब्धम् अनम्रम् अन्यस्य वन्द्यस्याभावात् सर्वेश्वरत्वात् पण्डितैर्मन्यते ॥५॥ श्रिया भक्त्या समृद्धानाम् । आध्मायितो[4] वर्द्धितः आत्मा उत्साहो येषाम् श्रीमतामेषां योऽस्तम्भः[5] तापाधिक्यं तं धुनुत निवर्तयत । संक्षयं सम्यक् निवासं स्वास्थ्यं चेत्यर्थः । क्षि निवासे धातुः ॥६॥ जिघांसया जिगमिषया ज्ञातुमिच्छया ॥७॥ आसारैः धारासम्पातैः । ओजसा बलेन ॥८॥ स्तनयित्नुभिः वज्रध्वनिभिः गर्जन्तः । नुन्नाः प्रेरिताः मेघाः जलशर्कराः जलीयपाषाणान् ॥९॥ स्थूणाः स्तम्भा इव स्थूलाः वर्षधाराः अभ्रेषु मेघेषु मुञ्चत्सु सत्सु नतमुन्नतं च यथा भवति तथा न अदृश्यत ॥१०॥

---

१. 'मदी हर्षे धातुः ।
२. प्लवा ह्येते अदृढा यज्ञरूपाः एताञ्छ्रेयो येऽभिनन्दन्ति मूढाः इति श्रुतेः ।
३. आधमतीति आध्माः स इव आचरतीति आध्मायते ततः कर्मणि क्तः ।
४. अनु पश्चात् श्रवणोत्तरमीक्षणं परीक्षणमन्वीक्षा आत्मविचारः सां प्रयोजनमस्या इति आन्वीक्षिकी 'तदस्य प्रयोजनम्' इति ठक् वृद्धिः ।
५. स्तम्भः स्थूणाजडत्वयोः इति शाश्वतः । जडत्वं शैत्येन ।

अत्यासारातिवातेन पशवो जातवेपनाः । गोपा गोप्यश्च शीतार्ता गोविन्दं शरणं ययुः ॥११॥
शिरः सुतांश्च कायेन प्रच्छाद्यासारपीडिताः । वेपमाना भगवतः पादमूलमुपाययुः ॥१२॥
कृष्ण कृष्ण महाभाग त्वन्नाथं गोकुलं प्रभो । त्रातुमर्हसि देवान्नः कुपिताद् भक्तवत्सल ॥१३॥
शिलावर्षनिपातेन हन्यमानमचेतनम् । निरीक्ष्य भगवान् मेने कुपितेन्द्रकृतं हरिः ॥१४॥
अपर्त्वर्त्युल्बणं वर्षमतिवातं शिलामयम् । स्वयागे विहतेऽस्माभिरिन्द्रो नाशाय वर्षति ॥१५॥
तत्र प्रतिविधिं सम्यगात्मयोगेन साधये । लोकेशमानिनां मौढ्याद्धरिष्ये श्रीमदं तमः ॥१६॥
न हि सद्भावयुक्तानां सुराणामीशविस्मयः । मत्तोऽसतां मानभङ्गः प्रशमायोकल्पते ॥१७॥
तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् । गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः ॥१८॥
इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम् । दधार लीलया कृष्णश्छत्राकमिव बालकः ॥१९॥
अथाह भगवान् गोपान् हेऽम्ब तात व्रजौकसः । यथोपजोषं विशत गिरिगर्तं सगोधनाः ॥२०॥
न त्रास इह वः कार्यो मद्धस्ताद्रिनिपातने । वातवर्षभयेनालं तत्त्राणं विहितं हि वः ॥२१॥
तथा निर्विविशुर्गर्तं कृष्णाश्वासितमानसाः । यथावकाशं सधनाः सव्रजाः सोपजीविनः ॥२२॥
क्षुत्तृड्व्यथां सुखापेक्षां हित्वा तैर्व्रजवासिभिः । वीक्ष्यमाणो दधाराद्रिं सप्ताहं नाचलत् पदात् २३
कृष्णयोगानुभावं तं निशाम्येन्द्रोऽतिविस्मितः । निःस्तम्भो भ्रष्टसंकल्पःस्वान् मेघान् संन्यवारयत्
खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणम् । निशाम्योपरतं गोपान् गोवर्धनधरोऽब्रवीत् ॥२५॥
निर्यात त्यजत त्रासं गोपाः सस्त्रीधनार्भकाः । उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः ॥२६॥
ततस्ते निर्ययुर्गोपाः स्वं स्वमादाय गोधनम् । शकटोढोपकरणं स्त्रीबालस्थविराः शनैः ॥२७॥
भगवानपि तं शैलं स्वस्थाने पूर्ववत् प्रभुः । पश्यतां सर्वभूतानां स्थापयामास लीलया ॥२८॥

---

वेपनं कम्पः ॥ ११ ॥ शिरोऽधः करणेन सुतांश्च कायेन वक्षसा वस्त्रेण च ॥ १२ ॥ कुपितात् इन्द्रात् नोऽस्मान् ॥ १३ ॥ अचेतनं मूर्च्छितं गोकुलम् ॥ १४ ॥ अपगतः ऋतुः यस्य तत् अपर्तु अत्युल्बमतिभीषणम् ॥१५॥ तत्र वर्षणे । प्रतिविधिं प्रतीकारम् । योगेन सामर्थ्येन । तमो गर्वम् ॥ १६ ॥ सद्भावो भगवद्भक्तिः । ईशाः लोकेशा वयमिति विस्मयो गर्वो न भवति । प्रशमाय गर्वमोचनाय ॥ १७ ॥ मत् अहमेव शरणं रक्षको यस्य । व्रतः सङ्कल्पः आहितः गृहीतः ॥ १८ ॥ कृत्वा उत्पाट्य । कृती छेदने इत्यस्मात् । हस्तेन वामेन[1] दधार । छत्राकम् उच्छिलीन्ध्रम् ॥ १९ ॥ यथोपजोषं यथासुखम् ॥२०॥ इह गर्ते । निपातने निपतने स्वार्थे णिच् । अलं वारणकर्तृ त्राणं रक्षणोपायः ॥ २१ ॥ सव्रजाः शकटसमूहसहिताः तण्डुलाद्युपजीवनसहिताः ॥ २२ ॥ पदात् स्थानात् एकपदमपि ॥२३॥ निशाम्य दृष्ट्वा । निस्तम्भो नष्टमदः ॥२४॥ खमाकाशम् व्यभ्रं मेघशून्यम् ॥ २५ ॥ निम्नगाः नद्यः व्युदप्रायाः नाममात्रजलाः ॥ २६ ॥ शकटेषु ऊढं धृतम् उपकरणं जीवनसामग्री यथा भवति तथा । क्रियाविशेषणम् । ततो गर्तात् ॥२७॥२८॥ प्रेमोद्रेकात् निभृताः पूर्णाः तं श्रीकृष्णं यथोचितं समीयुः परिरम्भणा-

---

१. गिरिः सव्येन पाणिना' इति हरिवंशे ।

तं प्रेमवेगान्निभृता व्रजौकसो यथा समीयुः परिरम्भणादिभिः ।
गोप्यश्च सस्नेहमपूजयन् मुदा दध्यक्षताद्भिर्युयुजुः सदाशिषः ।। २९ ।।

यशोदा रोहिणी नन्दो रामश्च बलिनां वरः । कृष्णमालिङ्ग्य युयुजुराशिषः स्नेहकातराः ३०

दिवि देवगणाः साध्याः सिद्धगन्धर्वचारणाः । तुष्टुवुर्मुमुचुस्तुष्टाः पुष्पवर्षाणि पार्थिव ।।३१।।

शङ्खदुन्दुभयो नेदुर्दिवि देवप्रणोदिताः । जगुर्गन्धर्वपतयस्तुम्बुरुप्रमुखा नृप ।।३२।।

ततोऽनुरक्तैः पशुपैः परिश्रितो राजन् स गोष्ठं सबलोऽव्रजद्धरिः ।
तथाविधान्यस्य कृतानि गोपिका गायन्त्य ईयुर्मुदिता हृदिस्पृशः ।। ३३ ।।

इति श्रीमद्भागवते महापुराणे पारमहंस्या संहितायां दशमस्कन्धे पूर्वार्धे पञ्चविंशोऽध्यायः ।। २५ ।।

## अथ षड्विंशोऽध्यायः

### श्रीशुक उवाच

एवंविधानि कर्माणि गोपाः कृष्णस्य वीक्ष्य ते । अतद्वीर्यविदः प्रोचुः समभ्येत्य सुविस्मिताः ।।१।।

बालकस्य यदेतानि कर्माण्यत्यद्भुतानि वै । कथमर्हत्यसौ जन्म ग्राम्येष्वात्मजुगुप्सितम् ।।२।।

यः सप्तहायनो बालः करेणैकेन लीलया । कथं बिभ्रद् गिरिवरं पुष्करं गजराडिव ।।३।।

तोकेनामीलिताक्षेण पूतनाया महौजसः । पीतः स्तनः सह प्राणैः कालेनेव वयस्तनोः ।।४।।

हिन्वतोऽधः शयानस्य मास्यस्य चरणावुदक् । अनोऽपतद् विपर्यस्तं रुदतः प्रपदाहतम् ।।५।।

एकहायन आसीनो ह्रियमाणो विहायसा । दैत्येन यस्तृणावर्तमहन् कण्ठग्रहातुरम् ।।६।।

क्वचिद्धैयङ्गवस्तैन्ये मात्रा बद्ध उलूखले । गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातयत् ।।७।।

---

दिभिः समीयुः मिलिताः दध्यादिभिः अपूजयन् हृदा आशीर्वादांश्च ददुः । अद्भिः जलैः ।।२९।। कातराः विह्वलाः ।।३०।३१।३२।। ततो गोवर्धनात् सरामो हरिः गोष्ठमव्रजत् । तथा अस्य कृतानि चरितानि गायन्त्यः गोपिकाश्च गोष्ठं व्रजम् ईयुः जग्मुरित्यन्वयः । हृदिस्पृशः उभयोर्विशेषणम् । प्रेम्णा कृष्णस्य हृदि स्पृशन्तीति गोप्यः । प्रेष्ठत्वेन तासां हृदि स्पृशतीति स्पृक् तस्य कृष्णस्य ।। ३३ ।।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां पञ्चविंशोऽध्यायः ।

षड्विंशेऽलौकिकैः कृत्यैर्गोपशङ्कानिवृत्तये ।
पित्रा नन्देन गर्गोक्त्या महत्त्वं तस्य वर्ण्यते ।। १ ।।

अतद्वीर्यविदः तत्प्रभावमजानन्तः । समभ्येत्य नन्दं प्राप्य ।।१।। यत् यस्मात् अद्भुतानि कर्माणि अतः ग्रामीणेषु अस्मासु जन्म कथमर्हतीत्यन्वयः । जुगुप्सितम् अयोग्यम् ।।२।। गिरिवरं बिभ्रत् सन् कथं स्थितः । पुष्करं कमलम् सप्तहायनः सप्तवर्षीयः ।३। तोकेन शिशुना स्तनः पीतः कथमिति योज्यम् । वयः आयुः यौवनं वा ।४। मास्यस्य[1] त्रैमासिकस्य उदक् ऊर्ध्वं चरणौ हिन्वतः प्रक्षिपतः तस्य प्रपदेन पदाग्रेण अनः शकटं विपरीतं सत् अपतत् तत् कथमिति सर्वत्र सम्बध्यते ।।५।। येन दैत्येन तृणावर्तेन ह्रियमाणस्तमहन् यः कृष्णः । एकहायनः एकवर्षीयः आसीनः चलनेऽप्यसमर्थः ।। ६ ।। स्तैन्ये चौर्ये ।। ७ ।। मुखतः मुखं प्रगृह्य । ल्यब्लोपे पञ्चमी । अपाटयत् व्यदारयत् ।।८।।

१. 'तमधीष्ट' इत्यधिकारे मासाद्वयसि यत्खञौ इति यत् ।

बने संञ्चारयन् वत्सान् सरामो बालकैर्वृतः । हन्तुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत् ॥८॥
वत्सेषु वत्सरूपेण प्रविशन्तं जिघांसया । हत्वा न्यपातयत्तेन कपित्थानि च लीलया ॥९॥
हत्वा रासभदैतेयं तद्बन्धूंश्च बलान्वितः । चक्रे तालवनं क्षेमं परिपक्वफलान्वितम् ॥१०॥
प्रलम्बं घातयित्वोग्रं बलेन बलशालिना । अमोचयद् व्रजपशून् गोपांश्चारण्यवह्नितः॥११॥
आशीविषतमाहीन्द्रं दमित्वा विमदं ह्रदात् । प्रसह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकाम्१२॥
दुस्त्यजश्चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसाम् । नन्द ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम् ॥
क्व सप्तहायनो बालः क्व महाद्रिविधारणम् । ततो नो जायते शङ्का व्रजनाथ तवात्मजे॥१४॥

नन्द उवाच

श्रूयतां मे वचो गोपा व्येतु शङ्का च वोऽर्भके । एनं कुमारमुद्दिश्य गर्गो मे यदुवाच ह ॥१५॥
वर्णास्त्रयः किलास्यासन् गृह्णतोऽनुयुगं तनूः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः॥१६॥
प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः । वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते ॥१७॥
बहूनि सन्ति नामानि रूपाणि च सुतस्य ते । गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥१८॥
एष वः श्रेय आधास्यद् गोपगोकुलनन्दनः । अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥१९॥
पुरानेन व्रजपते साधवो दस्युपीडिताः । अराजके रक्ष्यमाणा जिग्युर्दस्यून् समेधिता ॥२०॥
य एतस्मिन् महाभागाः प्रीतिं कुर्वन्ति मानवाः ।
नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः ॥२१॥
तस्मान्नन्द कुमारोऽयं नारायणसमो गुणैः । श्रिया कीर्त्यानुभावेन तत्कर्मसु न विस्मयः ॥२२॥
इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते । मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिणम् ॥२३॥
इति नन्दवचः श्रुत्वा गर्गगीतं व्रजौकसः । दृष्टश्रुतानुभावास्ते कृष्णस्यामिततेजसः ।
मुदिता नन्दमानर्चुः कृष्णं च गतविस्मयाः ॥२४॥

---

तेन प्रक्षिप्तशरीरेण स कृष्णः कपित्थानि न्यपातयत् ॥९॥ क्षेमं निर्बाधम् ॥१०॥ बलेन शालते शोभते तच्छीलः ॥११॥ आशिषि 'दंष्ट्रायां विषं' यस्य सः आशीविषः अतिशयेन आशीविषः इति आशीविषतमः[1] स चासौ अहीन्द्रश्च तं कालियं निगृह्य उद्वास्य निष्कास्य च प्रसह्य बलात् निर्विषां चक्रे ॥१२॥ औत्पत्तिकः स्वाभाविकः ॥ १३ ॥ नोऽस्माकम् ॥ १४ ॥ व्येतु अपयातु। ह हर्षे ॥ १५ ॥ इतः परं सप्त पद्यानि गर्गवाक्यानि अष्टमाध्याये व्याख्यातानि अतोऽत्र न व्याख्यायन्ते । पौनरुक्त्यं च न शङ्क्यं प्रकरणस्यानुवादरूपत्वात् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ अद्धा साक्षात् । अंशमज्ञानिनाम् इति मन्ये । अक्लिष्टानि क्लेशनिवर्तकानि चरितानि यस्य । यद्वा । अक्लिष्टम् अनायासम् ॥ २३ ॥ इतीति सार्द्धम् । गतविस्मयाः निवृत्तसंदेहा ॥२४॥ यज्ञस्य विप्लवेन भंगेन या रुट् क्रोधः तया देवे इन्द्रे वर्षति सति अनुकम्पी णिनिप्रत्ययान्तं

---

१. अश्नुते व्याप्नुतेऽतिशयेन सर्वाङ्गमित्याशि । 'अशेरिन्' तादृशं विषं यस्य सः । बाहुलकात्पूर्वपदस्य दीर्घः ततस्तमप् ।

देवे वर्षति यज्ञविप्लवरुषा वज्राश्मपरुषानिलैः

सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वानुकम्प्युत्स्मयन् ।

उत्पाट्यैककरेण शैलमबलो लीलोच्छिलीन्ध्रं यथा

बिभ्रद् गोष्ठमपान्महेन्द्रमदभित् प्रीयान्न इन्द्रो गवाम् ॥२५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यो संहितायां दशमस्कन्धे पूर्वार्धे षड्विंशोध्यायः ॥२६॥

## अथ सप्तविंशोऽध्यायः

### श्रीशुक उवाच

गोवर्धने धृते शैल आसाराद् रक्षिते व्रजे । गोलोकादाव्रजत्[1] कृष्णं सुरभिः शक्र एव च ॥१॥

विविक्त उपसङ्गम्य व्रीडितः कृतहेलनः । पस्पर्श पादयोरेनं किरीटेनार्कवर्चसा ॥२॥

दृष्टाश्रुतानुभावोऽस्य कृष्णस्यामिततेजसः । नष्टत्रिलोकेशमद इन्द्र आह कृताञ्जलिः ॥३॥

### इन्द्र उवाच

विशुद्धसत्त्वं तव धाम शान्तं तपोमयं ध्वस्तरजस्तमस्कम् ।

मायामयोऽयं गुणसम्प्रवाहो न विद्यते तेऽग्रहणानुबन्धः ॥४॥

कुतो नु तद्धेतव ईश तत्कृता लोभादयो येऽबुधलिङ्गभावाः ।

तथापि दण्डं भगवान् बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय ॥५॥

---

भगवान् एतद् दृष्ट्वा उत्स्मयन् प्रोढ्या हसन्निव शैलं बिभ्रत् गोष्ठं व्रजमपात् स भगवान् नोऽस्मान् प्रति प्रीयात् प्रसीदतु इत्यन्वयः । यथा निर्बलो अबलो बालः उच्छिलीन्ध्रं छत्राकम् बिभर्ति । कथंभूतम् गोष्ठम् । अश्मभिःजलोपलैः तीक्ष्णवायुभिश्च सीदन्तः कम्पमानाः बालाः पशवः स्त्रियश्च यस्मिन् तत् । आत्मा अहमेव शरणं यस्य तत् । शार्दूलविक्रीडितं छन्दः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां षड्विंशतितमोऽध्यायः ।

सप्तविंशे हरिं स्तुत्वा क्षमायाचनपूर्वकम् ।
इन्द्रो धेन्वा समं तस्याभिषेकं स्वयमाचरत् ॥ १ ॥

आसारात् धारासम्पातात् । सुरभिः कामधेनुः शक्रश्च स्वर्गादेव मार्गे एव द्वयोः साहित्यम् । यद्वा । गोलोकं व्रजमुद्दिश्येति ल्यब्लोपे कर्मणि पञ्चमी ॥ १ ॥ विविक्ते एकान्ते अर्कवत् वर्चः तेजः यस्य तेन किरीटेन मुकुटेन पस्पर्श नमश्चकार । हेलनमपराधः ।२।३। धाम स्वरूपम् । अतो मायाकार्यरूपः संसारः ते न विद्यते यतोऽयं ग्रहणेन देहाध्यासेन अकारप्रश्लेशेन अग्रहणेन अज्ञानेन वा अनुबध्यते तथा । गुणैः सम्प्रोह्यते सञ्चाल्यते इति । तपोमयं ज्ञानप्रचुरम् । प्राचुर्ये मयट् ॥४॥ संसाराभावे तद्धेतवः संसारकारणभूता तत्कृता अज्ञानकृताः लोभादयः ते कुतः स्युः ये अबुधानां लिङ्गं स्वरूपं भावयन्ति बोधयन्तीति तथा । नु अहो तथापि गुप्त्यै रक्षणाय ॥५॥ स्वेच्छया

---

१. गोशब्दः स्वर्गवाचकोऽप्यस्ति हलायुधे । इति वंशीधरी ।

पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदण्डः ।
हिताय स्वेच्छातनुभिः समीहसे मानं विधुन्वञ्जगदीशमानिनाम् ॥६॥
ये मद्विधाज्ञा जगदीशमानिनस्त्वां वीक्ष्य कालेऽभयमाशु तन्मदम् ।
हित्वाऽऽर्यमार्गं प्रभजन्त्यपस्मया ईहा खलानामपि तेऽनुशासनम् ॥७॥
स त्वं ममैश्वर्यमदप्लुतस्य कृतागसस्तेऽविदुषः प्रभावम् ।
क्षन्तुं प्रभोऽथार्हसि मूढचेतसो मैवं पुनर्भून्मतिरीश मेऽसती ॥८॥
तवावतारोऽयमधोक्षजेह स्वयम्भराणामुरुभारजन्मनाम् ।
चमूपतीनामभवाय देव भवाय युष्मच्चरणानुवर्तिनाम् ॥९॥
नमस्तुभ्यं भगवते पुरुषाय महात्मने । वासुदेवाय कृष्णाय सात्वतां पतये नमः ॥१०॥
स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये । सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ॥११॥
मयेदं भगवन् गोष्ठनाशायासारवायुभिः । चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना ॥१२॥
त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो वृथोद्यमः । ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः ॥१३॥

श्रीशुक उवाच

एवं संकीर्तितः कृष्णो मघोना भगवानमुम् । मेघगम्भीरया वाचा प्रहसन्निदमब्रवीत् ॥१४॥

श्रीभगवानुवाच

मया तेऽकारि मघवन् मखभङ्गोऽनुगृह्णता । मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशम् ॥१५॥
मामैश्वर्यश्रीमदान्धो दण्डपाणिं न पश्यति । तं भ्रंशयामि सम्पद्भ्यो यस्य चेच्छाम्यनुग्रहम् ॥
गम्यतां शक्र भद्रं वः क्रियतां मेऽनुशासनम् । स्थीयतां स्वाधिकारेषु युक्तैर्वः स्तम्भवर्जितैः ।१७।
अथाह सुरभिः कृष्णमभिवन्द्य मनस्विनी । स्वसन्तानैरुपामन्त्र्य गोपरूपिणमीश्वरम् ॥१८॥

सुरभिरुवाच

कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वसम्भव । भवता लोकनाथेन सनाथा वयमच्युत ॥१९॥

---

भक्तेच्छया तनुभिः लीलावतारैः मानं विधुन्वन् नाशयन् चेष्टसे ॥६॥ काले भयकालेऽपि निर्भयं त्वां वीक्ष्य आर्यमार्गं सन्मार्गं भक्तिलक्षणम् अनुसरन्ति । अपस्मयाः नष्टगर्वाः सन्तः अतः ते ईहा अनुशासनं शिक्षणमुखेन दण्ड एव ॥ ७ ॥ ते प्रभावम् अविदुषः अजानतः अत एव कृतागसः कृतापराधस्य मम अपराधम् अथ क्षन्तुमर्हसि अग्रेऽपि एवम् असती मतिः दुर्बुद्धिः मा भूत् ॥ ८ ॥ भराणां भारभूतानाम् उत्पथगामिनां। बहुभाराणां जन्म येभ्यः । अभवाय नाशाय । भवाय कल्याणाय ॥ ९ ॥ सात्वतां यदूनाम् ॥ १० ॥ स्वच्छन्देन भक्तेच्छया उपात्तो गृहीतो देहो येन । सर्वस्मै सर्वरूपाय ॥ ११ ॥ आसारेत्यत्र द्वन्द्वः । आसारेण सहितः इति मध्यमपदलोपी समासो वा । इदम् अनुचितं चेष्टितं कर्म कृतम् ॥ १२ ॥ स्तम्भो गर्वः ॥ १३ ॥ सङ्कीर्तितः संस्तुतः ॥ १४ ॥ अनुस्मृतये मत्तस्य ते मम अनुस्मृतिः स्यादित्येतदर्थम् ॥ १५ ॥ दण्डमाणिं दण्डधरम् ॥ १६ ॥ वः युष्माकम् । युक्तैः अप्रमत्तैः वः युष्माभिः स्तम्भो गर्वः ॥ १७ ॥ स्वसन्तानैः व्रजगोभिः सह कृष्णम् आमन्त्र्य सम्बोध्य आह ॥ १८ ॥ सनाथाः कृताः रक्षिताः ॥ १९ ॥ ये च

त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते। भवाय भव गोविप्रदेवानां ये च साधवः ॥२०॥

इन्द्रं नस्त्वाभिषेक्ष्यामो ब्रह्मणा नोदिता वयम्। अवतीर्णोऽसि विश्वात्मन् भूमेर्भारापनुत्तये॥२१॥

श्रीशुक उवाच

एवं कृष्णमुपामन्त्र्य सुरभिः पयसाऽऽत्मनः। जलैराकाशगङ्गाया ऐरावतकरोद्धृतैः ॥२२॥

इन्द्रः सुरर्षिभिः साकं नोदितो देवमातृभिः। अभ्यषिञ्चत दाशार्हं गोविन्द इति चाभ्यधात्।२३।

अहमिन्द्रो हि देवानां त्वं गवामिन्द्रतां गतः।
गोविन्द इति लोके त्वां गास्यन्ति भुवि मानवाः ॥२४॥
तत्रागतास्तुम्बुरुनारदादयो गन्धर्वविद्याधरसिद्धचारणाः।
जगुर्यशो लोकमलापहं हरेः सुराङ्गनाः संननृतुर्मुदान्विताः ॥२५॥
तं तुष्टुवुर्देवनिकायकेतवो व्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः।
लोकाः परां निर्वृतिमाप्नुवंस्त्रयो गावस्तदा गामनयन् पयोद्रुताम् ॥२६॥

नानारसौघाः सरितो वृक्षा आसन् मधुस्रवाः। अकृष्टपच्यौषधयो गिरयोऽबिभ्रदुन्मणीन् ॥२७॥

कृष्णेऽभिषिक्त एतानि सत्त्वानि कुरुनन्दन। निर्वैराण्यभवंस्तात क्रूराण्यपि निसर्गतः ॥२८॥

इति गोगोकुलपतिं गोविन्दमभिषिच्य सः। अनुज्ञातो ययौ शक्रो वृतो देवादिभिर्दिवम् ॥२९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
सप्तविंशोऽध्यायः ॥ २७ ॥

## अथाष्टाविंशोऽध्यायः

एकादश्यां निराहारः समभ्यर्च्य जनार्दनम्। स्नातुं नन्दस्तु कालिन्द्यां द्वादश्यां जलमाविशत् ।१॥

---

साधवः तेषामपि अभ्युदयाय भव ॥ २० ॥ अपनुत्तये हरणाय ॥ २१ ॥ एवमिति द्वयम्। उपामन्त्र्य सम्प्रार्थ्य मातृभिः अदित्यादिभिः। सुरभिः पयसा दुग्धेन इन्द्रः जलैश्च दाशार्हं कृष्णमभ्यषिञ्चत् इत्युत्तरेणान्वयः। नाम च [1] अभ्यधात् ॥ २२ ॥ २३ ॥ गवामिन्द्रः गोविन्द पृषोदरादिः। गाः विन्दतीति वा ॥ २४ ॥ तत्र अभिषेकस्थले ॥ २५ ॥ निकायेषु समूहेषु केतव इव मुख्याः तं व्यवाकिरन् आच्छादितवन्तः। निर्वृतिं निरतिशय सुखम् प्रापुः। पयसा दुग्धेन द्रुताम् आर्द्राम् पृथ्वीम् अनयन् अकुर्वन् ॥२६॥ रसौघाः क्षीरादिवाहिन्यो जाताः। अकृष्टं कर्षणं विनैव पच्याः व्रीह्यादयः येषु ते गिरिविशेषणं वा। उत् उद्गतान् निर्गतान् मणीन् अबिभ्रत् गोवर्धन इति शेषः ॥ २७ ॥ सत्त्वानि भूतानि ॥ २८ ॥ गवां गोकुलस्य व्रजस्य च पतिम् ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे दशम स्कन्धे पूर्वार्धे गूढार्थदीपिन्यां सप्तविंशोऽध्यायः ॥ २७ ॥

अष्टाविंशेऽनयन्नन्दं वारुणो वरुणालयम्।
तमानीय हरिर्गोपान् स्वंलोकं चाप्यदर्शयत् ॥

द्वादश्यां [2]कलामात्रावशिष्टायाम् ॥ १ ॥ तं नन्दम्। अविज्ञाय अनादृत्य। असुरो यक्षः सुरभिन्नत्वात्

---

२. कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि। आमध्याह्नाः क्रियाः सर्वा कर्तव्याः शम्भुशासनात् ॥ शम्भुः शंकरः ऋषिर्वा। कलार्द्धां त्रिंशत्पलमिताम्। १. कथितवान्। अभ्यधात्अभिपूर्वस्तु भाषणे इति व्याडिः।

तं गृहीत्वाऽनयद् भृत्यो वरुणस्यासुरोऽन्तिकम् । अविज्ञायासुरीं वेलां प्रविष्टमुदकं निशि ॥२॥
चुक्रुशुस्तमपश्यन्तः कृष्ण रामेति गोपकाः । भगवांस्तदुपश्रुत्य पितरं वरुणाहृतम् ।
तदन्तिकं गतो राजन् स्वानामभयदो विभुः ॥३॥
प्राप्तं वीक्ष्य हृषीकेशं लोकपालः सपर्यया । महत्या पूजयित्वाऽऽह तद्दर्शनमहोत्सवः ॥४॥

वरुण उवाच

अद्य मे निभृतो देहोऽद्यैवार्थोऽधिगत प्रभो । त्वत्पादभाजो भगवन्नवापुः पारमध्वनः ॥५॥
नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने । न यत्र श्रूयते माया लोकसृष्टिविकल्पना ॥६॥
अजानता मामकेन मूढेनाकार्यवेदिना । आनीतोऽयं तव पिता तद् भवान् क्षन्तुमर्हति ॥७॥
ममाप्यनुग्रहं कृष्ण कर्तुमर्हस्यशेषदृक् । गोविन्द नीयतामेष पिता ते पितृवत्सल ॥८॥

श्रीशुक उवाच

एवं प्रसादितः कृष्णो भगवानीश्वरेश्वरः । आदायागात् स्वपितरं बन्धूनां चावहन्मुदम् ॥९॥
नन्दस्त्वतीन्द्रियं दृष्ट्वा लोकपालमहोदयम् ।
कृष्णे च सन्नतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत् ॥१०॥
ते त्वौत्सुक्यधियो राजन् मत्वा गोपास्तमीश्वरम् ।
अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः ॥११॥
इति स्वानां स भगवान् विज्ञायाखिलदृक् स्वयम् । संकल्पसिद्धये तेषां कृपयैतदचिन्तयत् ॥१२॥
जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः । उच्चावचासु गतिषु न वेद स्वां गतिं भ्रमन् ॥१३॥
इति संचिन्त्य भगवान् महाकारुणिको हरिः । दर्शयामास लोकं स्वं गोपानां तमसः परम् ॥१४॥
सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनम् । यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः ॥१५॥
ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः । ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽध्यगात् पुरा ॥१६॥

---

॥ २ ॥ तं नन्दम् । तदन्तिकं वरुणसमीपम् ॥ ३ ॥ सपर्यया पूजनसामग्र्या ॥४॥ निभृतः सफलः । अर्थः चरम पुरुषार्थः । अध्वनः भवाटव्याः पारं मोक्षम् प्रापुः ॥५॥ यत्र त्वयि । लोकसृष्टिं विविधं कल्पयति करोतीति तथा ॥ ६ ॥ अजानता द्वादश्या अल्पत्वे अरुणोदयात्प्रागेव जले प्रवेष्टव्यमिति धर्मशास्त्रमजानतेत्यर्थः ॥ ७ ॥ ८ ॥ ईश्वराः लोकपालास्तेषामीश्वरो नियन्ता । मुदम् आवहन् प्रापयन् व्रजमगादित्यन्वयः ॥ ९ ॥ अतीन्द्रियम् अदृष्टपूर्वम् । महोदयं महैश्वर्यम् ॥ १० ॥ ते गोपाः कृष्णः स्वगतिं स्वलोकं नोऽस्मान् अपि किम् उपाधास्यति प्रापयिष्यतीति सङ्कल्पितवन्तः ॥ ११ ॥ स्वानां सङ्कल्पम् ॥१२॥ अविद्या देहात्मबुद्धिः ततः काम इच्छा ततः कर्माणि तैः । उच्चनीचासु गतिषु योनिषु भ्रमन् स्वगतिं स्वपदवीम् न वेद अतः सा दर्शनीयेत्यर्थः ॥१३॥ स्वं ब्रह्मरूपं लोकं वैकुण्ठं च । तमसः प्रकृतेः परम् ॥ १४ ॥ गुणापाये तदावरणक्षये सति ज्ञानिनो यत् पश्यन्ति तत् दर्शयामासेत्यन्वयः । लोकस्वरूपयोस्तादात्म्याभिप्रायेण नपुंसकविशेषणानि ॥ १५ ॥ ते गोपाः ब्रह्महृदं ब्रह्मस्वरूपं प्रापिता पुनः तस्मात् उद्धृताः ब्रह्मणो विष्णोः लोकं वैकुण्ठं ददृशुः । अक्रूरस्तु यमुनायामेव

नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः। कृष्णं च तत्र च्छन्दोभिः स्तूयमानं सुविस्मिताः॥१७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे अष्टाविंशोऽध्यायः ॥ २८ ॥

## अथैकोनत्रिंशोऽध्यायः

### ( रास पञ्चाध्यायी )

### श्रीशुक उवाच

भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः। वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः॥१॥

तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्नरुणेन शन्तमैः।
स चर्षणीनामुदगाच्छुचो मृजन् प्रियः प्रियाया इव दीर्घदर्शनः॥२॥

दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं रमाननाभं नवकुङ्कुमारुणम्।
वनं च तत्कोमलगोभिररञ्जितं जगौ कलं वामदृशां मनोहरम्॥३॥

निशम्य गीतं तदनङ्गवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः।
आजग्मुरन्योन्यमलक्षितोद्यमाः स यत्र कान्तो जवलोलकुण्डलाः॥४॥

दुहन्त्योऽभिययुः काश्चिद् दोहं हित्वा समुत्सुकाः। पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः॥५॥

---

तस्यानुभूतिं कृतवान् ॥ १६ ॥ निर्वृताः पूर्णाः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यामष्टाविंशोऽध्यायः॥२८॥

एकोनत्रिंशकेऽन्योन्यं भाषणं प्रेमपूर्वकम्।
रासारम्भे प्रियोन्मादात् कृष्णान्तर्धानमुच्यते॥१॥
कामदर्पविनाशाय रासलीलां प्रवर्तयन्।
मल्लयुद्धे जिताशेषं तं हरिर्लीलयाऽजयत्॥ २ ॥
कामावेशाच्च्युताः सर्वे न कश्चिद्वस्तुतोऽच्युतः।
तं तु संमर्द्य रासेऽस्मिन्नच्युतोऽच्युततां गतः॥ ३ ॥

दण्डकारण्यवासिमुनिजन मनोरथपूरणार्थं कामगर्वमोचनार्थं च रासपञ्चाध्यायीप्रारम्भः। तेषां सङ्कल्पपूरणार्थं निर्गुणोऽपि भगवान् सगुणः सन् शरदा हेतुभूतेन उत्फुल्ला मल्लिका वेला पुष्पाणि यासु ताः रात्रीः प्राक् प्रतिज्ञाताः रात्रीः वीक्ष्य रन्तुं मनश्चक्रे इत्यन्वयः॥ १ ॥ यदा रन्तुं मनः चक्रे तदा तत्प्रीतये स प्रसिद्धः चन्द्रः उदगात् उदितोऽभूत्। किं कुर्वन्। अत्र दृष्टान्तः। यथा प्रवासादागतः प्रियः प्रियायाः मुखं कुङ्कुमेन विलिम्पति तद्वत्। पुनश्च शन्तमैः सुखमयैः करैः किरणैः चर्षणीनां[1] प्रजानां च शुचः ता तापग्लानीः मृजन् दूरीकुर्वन्॥२॥ 'कुमुदेऽपि कुमुत् प्रोक्तम्' इति विश्वकोशात् तत् विकाशनीयत्वेन वर्तते यस्य तं कुमद्वन्तं चन्द्रं दृष्ट्वा तद्गोभिः किरणैः अञ्जितं प्रकाशितं वनं च दृष्ट्वा वामदृशां गोपीनां मनोहरं वशीकरणं कलम् ईकारघटितं क्लीमिति कामबीजं जगौ इत्यन्वयः। रमा लक्ष्मीः तद्भ्रातृत्वादियमुक्तिः। वामदृक्पदेन ईकारो गृह्यते॥३॥ व्रजस्त्रियः तद् गीतं निशम्य यत्र कान्तः तत्र ययौ इत्यन्वयः। न लक्षितो गमनोद्योगो यासां ताः। जवेन वेगेन चञ्चलानि कुण्डलानि यासां ताः॥ ४ ॥ कान्तः कानां भोगसुखानाम् अन्तः पराकाष्ठा यत्र। दोहं दोहनपात्रम्। पयः

---

१. चर्षणि र्मानुषे सरये, इति निरुक्तिकोशः।

परिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशून् पयः।
शुश्रूषन्त्यः पतीन् काश्चिदश्नन्त्योऽपास्य भोजनम् ॥६॥
लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने।
व्यस्यस्तवस्त्राभरणाः काश्चित् कृष्णान्तिकं ययुः ॥७॥

ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबन्धुभिः। गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः॥८॥
अन्तर्गृहगताः काश्चिद् गोप्योऽलब्धविनिर्गमाः। कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥९॥
दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः। ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥१०॥
तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः। जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥११॥

राजोवाच

कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने। गुणप्रवाहोपरमस्तासां गुणधियां कथम् ॥१२॥

श्रीशुक उवाच

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः। द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥१३॥
नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप। अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥१४॥
कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च। नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥१५॥
न चैवं विस्मयः कार्यो भवता भगवत्यजे। योगेश्वरेश्वरे कृष्णे यत्र एतद् विमुच्यते ॥१६॥
ता दृष्ट्वान्तिकमायाता भगवान् व्रजयोषितः। अवदद् वदतां श्रेष्ठो वाचःपेशैर्विमोहयन् ॥१७॥

श्रीभगवानुवाच

स्वागतं वो महाभागाः प्रियं किं करवाणि वः। व्रजस्यानामयं कच्चिद् ब्रूतागमनकारणम् ॥१८॥
रजन्येषा घोररूपा घोरसत्त्वनिषेविता। प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः॥१९॥
मातरः पितरः पुत्रा भ्रातरः पतयश्च वः। विचिन्वन्ति ह्यपश्यन्तो मा कृढ्वं बन्धुसाध्वसम् २०
दृष्टं वनं कुसुमितं राकेशकररञ्जितम्। यमुनानिललीलैजत्तरुपल्लवशोभितम् ॥२१॥

---

अधिश्रित्य चुल्यामारोप्य। संयावं यवागूभेदम् अनुद्वास्य अनुत्तार्य ॥ ५ ॥ तत् परिवेषणम् अपास्य त्यक्त्वा ॥६॥ लिम्पन्त्यः चन्दनादिलेपं कुर्वंत्यः। प्रमृजन्त्यः उद्वर्तनादि कुर्वंत्यः व्यत्यस्तानि ऊर्ध्वाधोधारणेन विपरीतानि वस्त्रादीनि यासां ताः ॥७॥८॥९॥ प्रेष्टविहरेण धुतानि नष्टानि अशुभानि पापानि यासाम्। मङ्गलं पुण्यम् निर्वृतिःआनन्दः ॥१०॥११॥ गुणैः प्रोह्यते सञ्चाल्यते इति गुणप्रवाहः संसारः ॥११॥ पुरस्तात् पूर्वं सप्तमस्कन्धे ॥ १३ ॥ १४ ॥ ऐक्यं सम्बन्धं पाण्डवादिवत् ये विदधतः कुर्वाणा भवन्ति ते सायुज्यं यान्ति ॥ १५ ॥ यतः श्रीकृष्णात् एतत् स्थावरादि प्राणिमात्रमपि मुच्यते ॥ १६ ॥ वाचःपेशै वाक्चातुर्यैः ॥ १७ ॥ १८ ॥ अघोररूपा उदितचन्द्रत्वात्। अघोरैः कोकिलादिभिः। व्रजं प्रति न यात स्त्रीभिः इहैव स्थेयम्। यथाश्रुतार्थः स्पष्ट एव। हे सुमध्यमाः सुष्ठु मध्यमः कटिभागः यासां ताः ॥१९॥ अपश्यन्तोऽपि मा विचिन्वन्ति न मृगयन्ते अतः बन्धून् साधु सम्यक् असम् उपेक्षणमेव कुरुत। 'असु क्षेपणे धातुः ॥ २० ॥ राकेशकरैः चन्द्रकिरणैः प्रकाशितम्।

तद् यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन् सतीः । क्रन्दन्ति वत्सा बालाश्च तान् पाययत दुह्यत ॥२२॥
अथवा मदभिस्नेहाद् भवत्यो यन्त्रिताशयाः । आगता ह्युपपन्नं वः प्रीयन्ते मयि जन्तवः ॥२३॥
भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया । तद्बन्धूनां च कल्याण्यः प्रजानां चानुपोषणम् ॥२४॥
दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा । पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥२५॥
अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् । जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियाः ॥२६॥
श्रवणाद् दर्शनाद् ध्यानान्मयि भावोऽनुकीर्तनात् । न तथा संनिकर्षेण प्रतियात ततो गृहान् ॥२७॥

श्रीशुक उवाच

इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् । विषण्णा भग्नसंकल्पाश्चिन्तामापुर्दुरत्ययाम् ॥२८॥

कृत्वा मुखान्यव शुचः श्वसनेन शुष्यद्बिम्बाधराणि चरणेन भुवं लिखन्त्यः ।
अस्रैरुपात्तमषिभिः कुचकुङ्कुमानि तस्थुर्मृजन्त्य उरुदुःखभराःस्म तूष्णीम् ॥२९॥
प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः ।
नेत्रे विमृज्य रुदितोपहते स्म किंचित्संरम्भगद्गदगिरोऽब्रुवतानुरक्ताः ॥३०॥

गोप्य ऊचुः

मैवं विभोऽर्हति भवान् गदितुं नृशंसं संत्यज्य सर्वविषयांस्तव पादमूलम् ।
भक्ता भजस्व दुरवग्रह मा त्यजास्मान् देवो यथादिपुरुषो भजते मुमुक्षून् ॥३१॥
यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।
अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥३२॥

---

यमुनास्पर्शिवायोर्लीलया मन्दगतया एजद्भिः कम्पमानैः तरुपल्लवैः शोभितम् ॥ २१ ॥ हे सतीः हे सत्यः । गोष्ठं व्रजम् अचिरं मा यात किन्तु रासानन्तरमेव । मेति पदं सर्वत्र योज्यम् । मा क्रन्दन्ति मा दुह्यतेति ॥ २२ ॥ यन्त्रिताशया वशीकृतचित्ताः । उपपन्नम् उचितमेव । प्रीयन्ते प्रेम कुर्वन्ति ॥ २३ ॥ हे कल्याण्यः ॥ २४ ॥ ते तु उपपतयः मुख्यपतिस्तु अहमेव ममैव शुश्रूषणं कर्तव्यम् । दुःशीलत्वादियुक्तोऽपि पतिः न त्याज्यः किं पुनः सर्वगुणसम्पन्नोऽहमिति अतोऽत्रैव मया सह रमध्वमिति गूढोऽभिप्रायः ॥ २५ ॥ फल्गु तुच्छम् । जुगुप्सितं निन्दितम् उपपतिर्जारः तत्सम्बन्धि सुखमौपपत्यम् । पत्युत्तरपदाण्यः ।।२६।। श्रवणादिभिः तथा भावो न यथा सन्निकर्षेण ततो न यातेति व्यङ्ग्योऽर्थः स च ताभिर्न बुद्धः किन्तु यथाश्रुतार्थ एव अतस्तदभिप्राये णैवाग्रिमग्रन्थयोजना ॥ २७ ॥ विशेषेण प्रियमपि भावाज्ञानात् प्रतिकूलम् । विषण्णाः विषादं प्राप्ताः ॥ २८ ॥ मुखानि अव अधःकृत्वा चरणेन भुवं लिखन्त्यः तूष्णीं तस्थुरित्यन्वयः । शुचःश्वसनेन शोकोच्छ्वासेन शुष्यन्तो विम्बफलसदृशा अधरोष्ठा येषु तानि । उपात्तमषिभिः मिलितकज्जलैः अस्रैः अश्रुभिः कुचकुंकुमानि मृजन्त्यः क्षालयन्त्यः स्म एवार्थे तस्थुरेव चित्रिता इवेत्यर्थः । उरुः दुःखभरो यासां ताः ।।२९।। किञ्चित्संरंभेण प्रणयकोपेन गद्गदगिरः सत्यः प्रेष्ठं कृष्णम् अब्रुवत । रुदितेन रोदनेन उपहते अन्धीभूते इव नेत्रे प्रोञ्छ्य । विनिर्वर्तिताः त्यक्ताः तत्प्राप्त्यर्थमेव सर्वे कामाः याभिस्ताः ।।३०।। नृशंसं क्रूरम् । दुरवग्रहो हठी । स्वच्छन्दचारिन् वा । तव पादमूलं भक्ताः सेवितवतीः अस्मान् भजस्व स्वीकुरु मा त्यज । आदिकर्मणि विवक्षिते कर्तरि क्तः ।।३१।। यत् त्वया उक्तं तत् उपदेशपदे उपदेष्टरि त्वयि एव

कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन् नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ।
तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या आशां धृतां त्वयि चिरादरविन्दनेत्र ॥३३॥
चित्तं सुखेन भवतापहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ।
पादौ पदं न चलतस्तव पादमूलाद् यामः कथं व्रजमथो करवाम किं वा ॥३४॥
सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम् ।
नो चेद् वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते ॥३५॥
यर्ह्यम्बुजाक्ष तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य ।
अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग स्थातुं त्वयाभिरमिता बत पारयामः ॥३६॥
श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या लब्ध्वापि वक्षसि पदं किल भृत्यजुष्टम् ।
यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयासस्तद्वद् वयं च तव पादरजः प्रपन्नाः ॥३७॥
तन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ।
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण देहि दास्यम् ॥३८॥
वीक्ष्यालकावृतमुखं तव कुण्डलश्रीगण्डस्थलाधरसुधं हसितावलोकम् ।
दत्ताभयं च भुजदण्डयुगं विलोक्य वक्षःश्रियैकरमणं च भवाम दास्यः ॥३९॥
का स्त्र्यङ्ग ते कलपदायतमूर्च्छितेन सम्मोहितार्यचरितान्न चलेत्त्रिलोक्याम् ।
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद् गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ॥४०॥

---

सर्वमस्तु यतो भवानेव सर्वेषां तनुभृतां बन्धुः आत्मा च ॥ ३२ ॥ हे आत्मन् प्रियतम । स्वे असाधारणे त्वय्येव रतिं कुर्वन्ति । अतः त्वयि चिरात् भृतां निबद्धाम् आशां मा स्म नैव छिन्द्याः । मा विफलीकुरु ॥ ३३ ॥ यत् चित्तं गृहेषु निविशति तत् भवता अपहृतम् । उत अपि यौ करौ तावपि अपहृतौ । किं बहुना नेत्रे श्रोत्रे सर्वाण्यपि इन्द्रियाणि अपहृतानीत्यर्थः पदमेकपदमपि पादौ न चलतः अतः कथं यामः गत्वा च किं करवाम ॥३४॥ पूरकेण प्रवाहेण । हासावलोकः कलगीतं वेणुनादः ताभ्यां जातं कामाग्निं सिञ्च प्रशमय । उपयुक्तदेहाः दग्धशरीराः सत्यः ते पदवीं सन्निधानम् प्राप्नुयाम ॥३५॥ अङ्ग हे सखे । यर्हि पादतलम् अस्प्राक्ष्म स्पृष्टवत्यो वयं तत्प्रभृति अन्यस्य समक्षं स्थातुमपि न पारयामः न समर्था भवामः । अभिरमिताः सन्तोषिताः ॥ ३६ ॥ दत्तक्षणं दत्तावसरम् । बत खेदे ॥ ३६ ॥ वक्षसि पदं लब्ध्वापि श्रीः तुलस्या सह यत्पादरजः चकमे इयेष तद्वत् वयमपि तव पादरजः प्राप्तुमागता इत्यन्वयः ॥ ३७ ॥ हे वृजिनार्दन तापनिवर्तक । नोऽस्माकं दास्यं दासीभावं देहीत्यन्वयः । वसतीः गृहान् । स्मितपूर्वकनिरीक्षणेन यः दुःसहः तापः तेन तप्तान्तःकरणानाम् । इदं तव मुखं वीक्ष्य तथा भुजदण्डयुगं वक्षश्च विलोक्य दास्यो भवामेत्यन्वयः । कथंभूतं मुखम् । कुण्डलयोः श्रीः ययोस्ते एवंभूते गण्डस्थले यस्मिन् अधरे सुधा यस्मिन् तच्च तच्च । श्रियो लक्ष्म्या एकं मुख्यं रमयतीति रमणं रतिजनकं ॥ ३९ ॥ अङ्ग हे सखे । ते मधुरपदयुक्तेन दीर्घस्वरालापेन मोहिता सती का स्त्री आर्यचरितात् पातिव्रत्यलक्षणात् न विचलेत् सर्वापीत्यर्थः । यत् यतः गवादयोऽपि तव रूपं निरीक्ष्य

व्यक्तं भवान् व्रजभयार्तिहरोऽभिजातो देवो यथाऽऽदिपुरुषः सुरलोकगोप्ता ।
तन्नो निधेहि करपङ्कजमार्तबन्धो तप्तस्तनेषु च शिरस्सु च किङ्करीणाम् ॥४१॥

श्रीशुक उवाच

इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः । प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥४२॥
ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ।
उदारहासद्विजकुन्ददीधितिर्व्यरोचतैणाङ्क इवोडुभिर्वृतः ॥४३॥
उपगीयमान उद्गायन् वनिताशतयूथपः । मालां बिभ्रद् वैजयन्तीं व्यचरन्मण्डयन् वनम् ।४४।
नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् । रेमे तत्तरलानन्दकुमुदामोदवायुना ॥४५॥
बाहुप्रसारपरिरम्भकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः ।
क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिं रमयांचकार ॥४६॥
एवं भगवतः कृष्णाल्लब्धमाना महात्मनः । आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ४७
तासां तत् सौभगमदं वीक्ष्य मानं च केशवः । प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥४८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे भगवतो रासक्रीडावर्णनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

## अथ त्रिंशोऽध्यायः

श्रीशुक उवाच

अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः । अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥

---

रोमाञ्चयुक्ता अभवन् ॥ ४० ॥ व्यक्तं निश्चितम् । यथां देवः उपेन्द्रःसन् । तत् तस्मात् कामदमनार्थं करकमलं शिरःसु निधेहि स्थापयेत्यर्थः ॥ ४१ ॥ विक्लवितं कामविकलताम् ॥ ४२ ॥ समेताभिः राधासहिताभिश्च ताभिः वृतः अच्युतः व्यरोचतेत्यन्वयः । उडुभिः नक्षत्रैः वृतः मृगाङ्कः चन्द्र इव । उदारहासेषु दन्तेषु कुन्दकुसुमवत् दीधितिः प्रकाशोः यस्य ॥ ४३ ॥ ताभि उपगीयमानः ॥ ४४ ॥ तस्याः तरलैः तरङ्गैः आनन्दी कुमुदानाम् आमोदः सुगन्धः यस्मिन् तेन वायुना हिमेति योज्यम् ॥ ४५ ॥ बाहुप्रसारेण परिरम्भः गाढालिङ्गनम् करादीनामालभनं स्पर्शः । नर्म परिहासः क्ष्वेलिः रतिक्रीडा तदादिभिश्च कामम् उत्तम्भयन् उद्दीपयन् सन्तोषयामास ॥ ४६ ॥ आत्मानं प्रत्येकमपि ॥ ४७ ॥ सौभगमदं सौन्दर्योन्मादम् । मानं गर्वम् । प्रशमाय गर्वमोचनाय प्रसादाय पुनरनुग्रहाय च अन्तरधीयत नत्वन्यत्र गतः । 'धीङ् धारणे दिवादिः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

त्रिंशे लता द्रुमान् कृष्णं प्रचछन्त्यः प्रेमविह्वलाः ।
लीलाविडम्बनं चक्रुर्मार्गयन्त्यो वने वने ॥ १ ॥

यूथपं गजेन्द्रम् अचक्षाणाः अपश्यन्त्यः करिण्यः हस्तिन्य इव ॥ १ ॥ रमापतेः श्रीकृष्णस्य गत्यादिभिः

गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः ।
आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥२॥
गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः ।
असावहं त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णविहारविभ्रमाः ॥३॥
गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद् वनाद् वनम् ।
पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥४॥

दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः । नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥५॥
कच्चित् कुरबकाशोकनागपुन्नागचम्पकाः । रामानुजो मानिनीनामितो दर्पहरस्मितः ॥६॥
कच्चित्तुलसि कल्याणि गोविन्दचरणप्रिये । सह त्वालिकुलैर्बिभ्रद् दृष्टस्तेऽतिप्रियोऽच्युतः॥७॥
मालत्यदर्शि व कच्चिन्मल्लिके जाति यूथिके । प्रीतिं वो जनयन् यातः करस्पर्शेन माधवः ॥८॥

चूतप्रियालपनसासनकोविदारजम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपाः ।
येऽन्ये परार्थभवका यमुनोपकूलाः शंसन्तु कृष्णपदवीं रहितात्मनां नः ॥९॥
किं ते कृतं क्षिति तपो बत केशवाङ्घ्रिस्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ।
अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद् वा आहो वराहवपुषः परिरम्भणेन ॥१०॥
अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन् दृशां सखि सुनिर्वृतिमच्युतो वः ।
कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥११॥

---

आक्षिप्तचित्ताः प्रमदाः ताः ताः विचेष्टाः लीलाः जगृहुः अनुचक्रुरित्यन्वयः । विभ्रमो भ्रूविलासः । उत्तरो विभ्रमः[1] शृङ्गारभावः । रमा राधा ॥ २ ॥ प्रियस्य गत्यादिषु आविष्टचित्ताः गोप्यः असौ कृष्णः अहमेव इति परस्परं न्यदेदिषुः । विभ्रमोऽत्र भ्रान्तिः ॥ ३ ॥ संहताः मिलिताः सत्यः विचिक्युः अन्वेषितवत्यः । भूतेषु अन्तरं बहिश्च आकाशवत् सर्वत्र सन्तं कृष्णं वनस्पतीन् पप्रच्छुः ॥ ४ ॥ वः युष्माभिः दृष्टः कच्चित् । मनो हृत्वा गतः ॥५॥ इतः गतः एतन्मार्गेण दृष्टः कच्चित् । कुरबकः रक्तवर्णा कटसरैया । नागकेशरः तद्भे-दश्च । मानिनीनां दर्पेति योज्यम् ॥ ६ ॥ अलिकुलैः भ्रमरसमूहैः सह त्वां बिभ्रत् ते त्वया दृष्टः कच्चित् ॥७॥ हे यूथिके जुही) वः युष्माकं प्रीतिं जनयन् यातः गतः युष्माभिः अदर्शि कच्चित् ॥८॥ हे चूतादिवृक्षाः ! रहितः त्यक्त आत्मा कृष्णो येषां कृष्णत्यक्तानां । परार्थं भवो जन्म येषां तेषां नोऽस्माकम् कृष्णपदवीं मार्गं कथयन्तु । आम्र चिरौंजी कटहल पीतशाल कचनार इति क्रमेणार्थाः यमुनेति ॥९॥[2] हे क्षिति ! ते त्वया । अत एव उत्पुलकिता रोमाञ्चिता सती विभासि । अपि किम् अयम् उत्सवः उरुक्रमस्य वामनस्य विक्रमात् पदा सर्वाक्रम-णात् । परिरम्भणेन आलिङ्गनेन वा ॥१०॥ हे सखि एणपत्नि मृगि ! अच्युतः प्रियया सह इह उपगतः किम् । स्वैः गात्रैः वः युष्माकं दृशां निवृतिं सुखं वितन्वन् कुर्वन् । यतो हि कुलपतेः श्रीकृष्णस्य कुन्दस्रजः इह गन्धः वाति आयाति । कान्ताया अङ्गसंगेन यत् कुचगतं कुंकुमं तेन रञ्जितायाः वासितायाः ॥११॥

---

१. चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः । २. उपसमीपे कूलं येषां ते उपकूला यमुनाया उपकूला यमुनोपकूला इति विग्रहः ।

बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदान्धैः ।
अन्वीयमान इह वस्तरवः प्रणामं किं वाभिनन्दति चरन् प्रणयावलोकैः ॥१२॥

पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः । नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥१३॥

इत्युन्मत्तवचोगोप्यः कृष्णान्वेषणकातराः । लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥१४॥

कस्याश्चित् पूतनायन्त्याः कृष्णायन्त्यपिबत् स्तनम् ।
तोकायित्वा रुदत्यन्या पदाहञ्छकटायसीम् ॥१५॥
दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम् ।
रिङ्गयामास कप्यङ्घ्री कर्षन्ती घोषनिःस्वनैः ॥१६॥

कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन । वत्सायतीं हन्ति चान्या तत्रैका तु बकायतीम् ॥१७॥

आहूय दूरगा यद्वत् कृष्णस्तमनुवर्ततीम् । वेणुं क्वणन्तीं क्रीडन्तीमन्याः शंसन्ति साध्विति॥१८॥

कस्यांचित् स्वभुजं न्यस्य चलन्त्याहापरा ननु । कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः १९

मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया । इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम् ॥२०॥

आरुह्यैका पदाऽऽक्रम्य शिरस्याहापरां नृप । दुष्टाहे गच्छ जातोऽहं खलानां ननु दण्डधृक् ॥२१॥

तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्वणम् । चक्षूंष्याश्वपिधध्वं वो विधास्ये क्षेममञ्जसा।२२।

बद्धान्यया स्रजा काचित्तन्वी तत्र उलूखले । भीता सुदृक् पिधायास्यं भेजे भीतिविडम्बनम् ।२३।

एवं कृष्णं पृच्छमाना वृन्दावनलतास्तरून् । व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥२४॥

पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः । लक्ष्यन्ते हि ध्वजाम्भोजवज्राङ्कुशयवादिभिः॥२५॥

---

हे तरवः । रामस्य अनुजः श्रीकृष्णः प्रियांसे बाहुं निधाय इह विचरन् इतो गच्छन् वः युष्माकं प्रणामं किं वा प्रेमावलोकैः अभिनन्दति । तुलसिकायाः अलिकुलैः अनुगम्यमानः । असे स्कन्धे ॥ १२ ॥ करजैः कृष्णनखैः स्पृष्टा । वनस्पतेः वृक्षस्य बाहून् शाखा आलिङ्गिता लताः पृच्छत । उत् उच्चैः पुलकानि अंकुररूपाणि बिभ्रति ॥ १३ ॥ गोप्यन्तमेकपदम् ॥ १४ ॥ कृष्णवत् आचरन्ती कृष्णायन्ती काचित् गोपी । तोकवत् बालवत् आत्मानं कृत्वा ॥ १५ ॥ दैत्यवत् तृणावर्तवत् आत्मानं कृत्वा एका गोपी कृष्णस्य आर्भं बाल्यं भावयतीति तं । जहार । घोषाणां किङ्किणीनाम् मंजीरादीनाम् ॥ १६ ॥ द्वे गोप्यौ कृष्णरामाविव आचरतः कृष्णरामायेते ततो भावे क्ते इति च । कृष्णरामवत् जाते । गोपायन्त्यः गोपबालवत् आचरन्त्याः । तत्र तासु । एका कृष्णायन्ती । अन्या कृष्णायमाना ॥ १७ ॥ यद्वत् कृष्णः तथा दूरे वर्तमानाः गाः दूरंगवीः[1] ॥ १८ ॥ ननु संबोधने ॥१९॥ यतन्ती यत्नं कुर्वती अम्बरम् उत्तरीयवस्त्रं वितत्य उर्ध्वं धृतवती ॥ २० ॥ एका कृष्णरूपा अपरां कालियरूपाम् ॥ २१ ॥ यूयं पश्यत । आशु अपिधध्वं निमीलयत । 'दधस्तथोश्च' इति नियमात् अभ्यासस्य भष्भावे प्राप्तेरपिधध्वमिति वक्तव्ये दकारघटितः पाठः प्रामादिकः । अञ्जसा अनायासेन ॥ २२ ॥ तत्र तासां मध्ये अन्यया यशोदारूपया आस्यं पिधाय मुखमाच्छाद्य । सुदृक् गोपी वा ॥ २३ ॥ व्यचक्षत अपश्यन् ॥ २४ ॥

---

१. समासान्तविधेरनित्यत्वान्न टच् ।

तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ।
वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥२६॥

कस्याः पदानि चैतानि यातायाः नन्दसूनुना । अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥२७॥
अनयाऽऽराधितो नूनं भगवान् हरिरीश्वरः । यन्नो विहाय गोविन्दः प्रीतो यामनयद् रहः ॥२८॥
धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः । यान् ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥२९॥
तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् । यैकापहृत्य गोपीनां रहो भुङ्क्तेऽच्युताधरम् ३०
न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरैः । खिद्यत्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥३१॥
इमान्यधिकमग्नानि पदानि वहतो वधूम् । गोप्यः पश्यत कृष्णस्य भाराक्रान्तस्य कामिनः ॥३२॥
अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना ॥३३॥

अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः । प्रपदाक्रमणे एते पश्यताऽसकले पदे ॥३४॥
केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् । तानि चूडयता कान्तामुपविष्टमिह ध्रुवम् ॥३५॥
रेमे तया चात्मरत आत्मारामोऽप्यखण्डितः । कामिनां दर्शयन् दैन्यं स्त्रीणां चैव दुरात्मताम् ३६
इत्येवं दर्शयन्त्यस्ताश्चेरुर्गोप्यो विचेतसः । यां गोपीमनयत् कृष्णो विहायान्याः स्त्रियो वने ।३७।
सा च मेने तदाऽऽत्मानं वरिष्ठं सर्वयोषिताम् । हित्वा गोपीः कामयाना मामसौ भजते प्रियः ॥
ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् । न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥३९॥
एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति । ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत ॥४०॥
हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज । दास्यास्ते कृपणाया मे सखे दर्शय संनिधिम् ।४१।

अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरतः ।
ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम् ॥४२॥

---

व्यक्तं निश्चितम् ॥ २५ ॥ अन्विच्छन्त्यः अन्वेषयन्त्यः । वध्वा राधाया सुपृक्तानि मिलितानि ॥ २६ ॥ अंसे स्कन्धे न्यस्तः प्रकोष्ठः करतलमूलभागो यस्याः । करिणा सह गच्छन्त्या हस्तिन्या इव ॥ २७ ॥ राधामितः प्राप्तः राधितः हरिः 'शकन्ध्वादित्वात् पररूपम् । याम् अनयत् सा अनया योऽनयत् सोऽपि अनयः इति श्लेषेण राधानाम्नोऽभिव्यक्तिः ॥ २८ ॥ हे आल्यः सख्यः अघं वियोगदुःखं तन्निवृत्तये ॥ २९ ॥ ३० ॥ खिद्यन्ती सुजाते कोमले अङ्घ्रितले यस्याः । उन्निन्ये अङ्के निधाय ॥ ३१ ॥ ३२ ॥ अत्रेत्यर्द्धम् । अवरोपिता अवतारिता ॥ ३३ ॥ प्रपदाभ्यां पादाग्राभ्याम् आक्रमणं पृथ्वीमर्दनं याभ्यां ते । असकले अर्द्धे पदे कर्मणी पश्यत । जातौ द्वित्वं पदानीत्यर्थः ॥ ३४ ॥ कान्तामधिकृत्य तानि प्रसूनानि चूडारूपेण बध्नता तेन उपविष्टम् । भावे क्तः । चूडाशब्दात् तत्करोतीति ण्यन्तात् शतृप्रत्ययः ॥ ३५ ॥ दैन्य पारवश्यम् । दुरात्मताम् अहंभावम् । आत्मरतः स्वतस्तुष्टः । कुतः । आत्मनि आरामः क्रीडा यस्य सः . अखण्डितः स्त्रीविभ्रमैरनाकृष्टः ॥ ३६ ॥ इत्येवमित्यर्द्धम् ॥ ३७ ॥ यामिति सार्द्धम् । कामयमानाः आगमशास्त्रस्यानित्यत्वात् मुगभावः कामेन यानमागमनं यासां ताः इति वा ॥३८॥ न पारये न शक्नोमि । दृप्ता गर्विता ॥ ३९ ॥ ४० ॥ ४१ ॥

तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् । अवमानं च दौरात्म्याद् विस्मयं परमं ययुः ॥४३॥
ततोऽविशन् वनं चन्द्रज्योत्स्ना यावद् विभाव्यते । तमः प्रविष्टमालक्ष्य ततो निववृतुः स्त्रियः ४४
तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः । तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ४५
पुनः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः । समवेता जगुः कृष्णं तदागमनकाङ्क्षिताः ॥४६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे रासलीलायां त्रिंशोऽध्यायः ॥३०॥

## अथैकत्रिंशोऽध्यायः

गोप्य ऊचुः

जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि ।
दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते ॥ १ ॥
शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा ।
सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः ॥ २ ॥
विषजलाप्ययाद् व्यालराक्षसाद् वर्षमारुताद् वैद्युतानलात् ।
वृषमयात्मजाद् विश्वतोभयादृषभ ते वयं रक्षिता मुहुः ॥ ३ ॥
न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक् ।
विखनसार्थितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥ ४ ॥

---

अन्विच्छन्त्यः अन्वेषयन्त्यः । अवमानं त्यागलक्षणं ॥ ४२ ॥ मानप्राप्ति स्कन्धारोहणम् । दौरात्म्यात् अभिमानात् ॥ ४३ ॥ ततो वनात् । अन्वेषणाद्वा ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां त्रिंशोऽध्यायः ॥३०॥

एकत्रिंशे निराशास्ता कृष्णस्यान्वेषणे यदा ।
तदा पुलिनमागत्य गोपीभिर्गीतमीर्यते ॥ १ ॥

हे दयित प्रिय ! इन्दिरा लक्ष्मीः अत्र हि अत्रैव श्रयते निवसति । तावका त्वदीया गोपीजनाः दिक्षु त्वां विचिन्वते अन्विष्यन्ति अतस्त्वया दृश्यतां[1] प्रत्यक्षीभूयताम् । अस्माभिर्वा भवान्[2] ॥ १ ॥ शरत्कालिके सरसि सञ्जातकमलश्रियमपहरता दृशा नेत्रेण अमूल्यदासीः निघ्नतः मारयतः ते त्वया क्रियमाण इह लोके किं वधो न भवति किं शस्त्रेणैव वधो भवति दृशा वधो न भवति किन्तु भवत्येव ॥ २ ॥ हे ऋषभ देवश्रेष्ठ । अप्ययात् नाशात् । व्यालोऽघासुरः तस्मात् । वैद्युतानलात् वज्रपातात् । वृषोऽरिष्टः । मयात्मजो व्योमासुरः तस्माच्च किं बहुना विश्वतः सर्वतोभयात् । अरिष्टव्योमवधस्य भावित्वेऽपि गर्गाचार्यमुखतः श्रवणाद् भूतत्वेन निर्देशः ॥ ३ ॥ नेति व्यङ्ग्योक्तिः । नेति प्रत्येकं सम्बध्यते । न नन्दनः । न अन्तरात्मदृक् न प्रार्थितः न च यदूनां कुले उदेयिवान् किन्तु स भवान् खे आकाशेउदेयिवान् अत एव आकाशस्य असङ्गौदासीन्ये इति अवगुणद्वयं त्वयि आयातम् ।

---

१. अकर्मकत्वाद्भावे लोट् ।
२. कनकमञ्जरीवृत्तम् । कनकमञ्जरी नश्च री लगौ ।

विरचिताभयं वृष्णिधुर्य ते चरणमीयुषां संसृतेर्भयात् ।
करसरोरुहं कान्त कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥ ५ ॥
व्रजजनार्तिहन् वीर योषितां निजजनस्मयध्वंसनस्मित ।
भज सखे भवत्किङ्करीः स्म नो जलरुहाननं चारु दर्शय ॥ ६ ॥
प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् ।
फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ७ ॥
मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ।
विधिकरीरिमा वीर मुह्यतीरधरसीधुनाऽऽप्याययस्व नः ॥ ८ ॥
तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ।
श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥ ९ ॥
प्रहसितं प्रिय प्रेमवीक्षणं विहरणं च ते ध्यानमङ्गलम् ।
रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयन्ति हि ॥ १० ॥
चलसि यद् व्रजाच्चारयन् पशून् नलिनसुन्दरं नाथ ते पदम् ।
शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त गच्छति ॥ ११ ॥
दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम् ।
घनरजस्वलं दर्शयन् मुहुर्मनसि नः स्मरं वीर यच्छसि ॥ १२ ॥
प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि ।
चरणपङ्कजं शन्तमं च ते रमण नः स्तनेष्वर्पयाऽऽधिहन् ॥ १३ ॥

---

यथाश्रुतार्थस्तु स्पष्ट एव । विखन्यते मैथुनं विना उत्पद्यते इति विखना ब्रह्मा पद्मजत्वात् । यो जातः सर्वतः पूर्वं विना मैथुनमात्मनः । विखनाः स हि विज्ञेयः कुद्दालो विखनास्तथा इति निरुक्तात् ।।४।। ते चरणमीयुषां प्राप्तानां दत्ताभयं स्वकीयं करकमलं नोऽस्माकं शिरसि धेहि स्थापयेन्वयः । वृष्णयो यदुवंशीया तेषां धुर्य । हे कान्त ।।५।। योषितां नः जलरुहाननं मुखकमलं दर्शयेत्यन्वयः । स्मेति भूतकालवत् । निजजनानां स्मयध्वंसनं गर्वनाशनं स्मितं यस्य तत्सम्बुद्धौ । भज स्वीकुरु ।।६।। तृणचरा गावःताननुगच्छतीति । कुचेषु कृणु अर्पय कृञ् हिंसामां करणे वृतिः हृच्छयं कामं च कृन्धि छिन्धि । कृती वेष्टने छेदेऽपि ।।७।। गिरा मुह्यतीः इमा विधिकरीः किङ्करीः नः सीधुना अधरामृतेन आप्याययस्व सञ्जीवय ।।८।। मृतं मरणकारणम् । तप्ततैलादौ जलमिवेति श्लेषः । ईडिते वर्णनस्वभावत्वात् । कल्मषेति येषां पापं स्यात् ते शृण्वन्तु नास्माकम् । श्रवणेनैव मङ्गलमिति श्रूयतं न तु अनुभूयते । श्रीमदैः धनमदान्धैः आततं विस्तारितम् । ते भूरिदाः भूरीन् श्रोतॄन् घ्नन्ति खण्डयन्ति मारयन्तीति व्यङ्ग्योक्तिः । पक्षे तु स्पष्टम् भूरिदातारः । गृणन्ति निरूपयन्ति ।।९।। संविदः रतिसङ्केतवाचः । हे कुहक कपटिन् इति प्रेमावेशात् ।।१०।। यत् यदा व्रजात् चलसि तदा ते पदं शिलादिभिः सीदति क्लिश्यतीति नः मनः कलिलतां व्यग्रतां प्राप्नोति । शिलं धान्यकणिशम् ।।११।। कुन्तलैः केशैः आवृतं वनरुहाननं मुखकमलं बिभ्रत् तत् दर्शयंश्च मनसि कामं यच्छसि प्रेरयसि सङ्गं च न ददासीति कपटित्वम् । घनेति गोरजोव्याप्तम् ।। १२ ।। हे आधिहन् कामनाशक । पद्मजेन

सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् ।
इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम् ॥ १४ ॥
अटति यद् भवानह्नि काननं त्रुटि युगायते त्वामपश्यताम् ।
कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद् दृशाम् ॥ १५ ॥
पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य तेऽन्त्यच्युतागताः ।
गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥ १६ ॥
रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ।
बृहदुरः श्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥
व्रजवनौकसां व्यक्तिरङ्ग ते वृजिनहन्त्र्यलं विश्वमङ्गलम् ।
त्यज मनाक् च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥ १८ ॥
यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु ।
तेनाटवीमटसि तत् व्यथते न किं स्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥१९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यामेकत्रिंशोऽध्यायः ॥३१॥

## अथ द्वात्रिंशोऽध्यायः

### श्रीशुक उवाच

इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा । रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः ॥१॥

---

ब्रह्मणा । शन्तमं सुखमयम् ॥१३॥ स्वरितेत स्वरयुक्तेन । इतरराग: संसारराग: तस्य विस्मारकम् नोऽस्मभ्यम् ॥१४॥ त्रुटि क्षणार्द्धमपि कालः । सुलुक् । निर्विसर्गपाठ एव साधुः इति चक्रवर्ती । युगायते युगमिवाचरति । ते मुखम् उत् उच्चैः आसक्त्या ईक्षतां दृशां पक्ष्मकृत् ब्रह्मा जड़: मूर्खः । दर्शने विक्षेपकरत्वात् पक्ष्मणोऽनावश्यकत्वम् ॥१५॥ हे अच्युत ते अन्ति समीपम् आगताः । गतिम् अस्मदागमनं सुरतार्थमेवेति जानतस्तव ॥ १६ ॥ संविदं रतिचेष्टाम् । श्रियो धाम उरः वक्षःस्थलं वीक्ष्य अतिस्पृहा भवति । यद्वा सम्पदादित्वात् स्पृहेः भावे क्विप् तृतीयान्तम् । मनश्च मुह्यति आसक्तं भवति ॥ १७ ॥ अङ्ग हे प्रियतम ! ते व्यक्तिः वृजिनहन्त्री दुःखनिरसनी मङ्गलरूपा च स्वजनानाम् अस्माकं हृद्रोगाणां निवर्तकं यत् औषधं त्वत्सङ्गरूपं तत् मनाक् ईषत् यथातृप्ति वा त्यज देहीत्यर्थः ॥१८॥ यत् सुजातम् अतिकोमलं ते चरणकमलं स्तनेषु वयं शनैः दधीमहि धारयेम तेन त्वं वनमटसि तत् कूर्पादिभिः सूक्ष्मपाषाणादिभिः किं न व्यथते व्यथते एव इति नः अस्माकं धीः भ्रमति व्यग्रीभवति । भवानेव आयुर्जीवनं यासां तासामस्माकं धीः । स्वित् वितर्के ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यामेकत्रिंशोऽध्यायः ॥ ३१ ॥

द्वात्रिंशे भगवान् व्यक्तो गोपीमध्येऽतिशोभनः ।
तमाश्लिष्य मुदं प्रापुरुत्तरं च यथोचितम् ॥ १ ॥

चित्रधा बहुधा । सुस्वरम् उच्चैः ॥ १ ॥ शौरिः शूरत्वात् । शूरवंशोद्भवत्वाद्वा । मन्मथस्यापि मनो

तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः । पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥२॥
तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः । उत्तस्थुर्युगपत् सर्वास्तन्वः प्राणमिवागतम् ॥३॥
काचित् कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा । काचित् दधार तद्बाहुमंसे चन्दनरूषितम् ॥४॥
काचिदञ्जलिनागृह्णात्तन्वी ताम्बूलचर्वितम् । एका तदङ्घ्रिकमलं संतप्ता स्तनयोरधात् ॥५॥
एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला । घ्नतीवैक्षत् कटाक्षेपैः संदष्टदशनच्छदा ॥६॥
अपराऽनिमिषद्दृग्भ्यां जुषाणा तन्मुखाम्बुजम् । आपीतमपि नातृप्यत् सन्तस्तच्चरणं यथा ॥७॥
तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च । पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसम्प्लुता ॥८॥
सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः । जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥९॥
ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः । व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥१०॥
ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः । विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥११॥
शरच्चन्द्रांशुसंदोहध्वस्तदोषातमः शिवम् । कृष्णया हस्ततरलाचितकोमलवालुकम् ॥१२॥

तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः ।
स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितैरचीक्लृपन्नासनमात्मबन्धवे ॥१३॥
तत्रोपविष्टो भगवान् स ईश्वरो योगेश्वरान्तर्हृदि कल्पितासनः ।
चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥१४॥
सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवा ।
संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे ॥१५॥

गोप्य ऊचु

भजतोऽनुभजन्त्येक एक एतद्विपर्ययम् । नोभयांश्च भजन्त्येक एतन्नो ब्रूहि साधु भोः ॥१६॥

---

मथ्नातीति क्षोभयतीति । पृषोदरादित्वात्साधुः ॥ २ ॥ तन्वः करचरणादय इव ॥ ३ ॥ अंसे स्कन्धे ॥ ४ ॥ ॥ ५ ॥ प्रेमसंरम्भः प्रणयकोपः कटाक्षेपैः कटाक्षपातैः सन्दष्टः दशनच्छदः ओष्ठो ययासा ॥ ६ ॥ अनिमिषन्तीभ्यां निमेषशून्याभ्याम् ॥ जुषाणा सेवमाना ॥ ७ ॥ उपगुह्य आलिङ्ग्य पुलकानि रोमाञ्चितानि अङ्गानि यस्याः सा ॥ ८ ॥ प्राज्ञं ब्रह्मज्ञं प्राप्य यथा संसारिणः । सुषुप्तिसाक्षिणं वा ॥ ९ ॥ पुरुष ईश्वरः शक्तिभिः सत्त्वादिभिः ॥ १० ॥ ता इति द्वयम् । ताः पुलिनं तटं समादाय नीत्वा ताभिर्वृतः भगवान् व्यरोचतेति पूर्वेणान्वयः । विकसद्भिः कुन्दादिभिः सुरभिः योऽनिलः तस्मात् भ्रमरा यस्मिन् । कथंभूतम् । शरत्कालिकचन्द्रस्य किरणसमूहैः ध्वस्तं निशातमो यस्मिन् । पुनश्च । यमुनायाः हस्तरूपतरङ्गै आचिता आस्तृता कोमला वालुकाश्च यस्मिन् तत् ॥११॥१२॥ तस्य हरेर्दर्शनाह्लादेन विधूता निवृत्ता हृद्रुजः वियोगजन्यपीडा यासां ताः । यथा श्रुतयः ज्ञानकाण्डे ब्रह्म प्रतिपाद्य पूर्णमनोरथा भवन्ति तथा । आत्मबन्धवे कृष्णाय आसनम् अचीक्लृपन् रचयामासुः॥१३॥ त्रैलोक्ये या लक्ष्मीः शोभा तस्या एकमेव प दम् आश्रयभूतं वपुः दधत् प्रकटयन् चकास शुशुभे ॥ १४ ॥ सहासलीलेक्षणेन विभ्रमो विलासो यस्यां तया भ्रुवा तं कृष्णं समाजयित्वा सत्कृत्य । संस्पर्शनेन सम्मर्दनेन संस्तुत्य अहो सौकुमार्यं ॥१५॥ विपर्ययं कुर्वन्ति अभजतोऽपि भजन्ति । उभयान् भजतोऽभजतश्च न । एते

श्रीभगवानुवाच

मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते ।
न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥१७॥
भजन्त्यभजतो ये वै करुणाः पितरो यथा ।
धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥१८॥
भजतोऽपि न वै केचिद् भजन्त्यभजतः कुतः ।
आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ॥१९॥
नाहं तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तिवृत्तये ।
यथाऽधनो लब्धधने विनष्टे तच्चिन्तयान्यन्निभृतो न वेद ॥२०॥
एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः ।
मया परोक्षं भजता तिरोहितं मासूयितुं मार्हथ तत् प्रियं प्रियाः ॥२१॥
न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः ।
या माभजन् दुर्जरगेहशृङ्खलाः संवृश्च्य तद् वः प्रतियातु साधुना ॥२२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे रासक्रीडायां गोपीसान्त्वनं नाम द्वात्रिंशोऽध्यायः ॥३२॥

---

खलु के । एतत् भजनमभजनं च किम् तत् ब्रूहि । एते च एतच्च एतत् एकशेषः ॥ १६ ॥ स्वार्थे एव एकान्तो मुख्यः उद्यमः प्रयोजनं येषां ते । तत् भजनम् । अन्यथा परार्थं न ॥ १७ ॥ मातापितरौ च । सुष्ठु मध्यमः कटिभागो यासां ताः तत्सम्बुधौ । निरपवादः निर्दोषः ॥१८॥ आत्मारामः अबहिर्दृष्टयः । पूर्णकामाश्च । कृतमुपकारं न जानन्ति विस्मरन्तीति । गुरुतुल्यमुपकारकर्तारं जानन्तोऽपि ये द्रुह्यन्ति ते कृतघ्ना इत्यर्थः ॥१९॥ हे सख्यः ! न भजामि कुतः अमीषाम् अनुवृत्तिवृत्तये निरन्तरध्यानप्रवृत्त्यर्थम् । यथा दरिद्रः धनचिन्तया निभृतो व्याप्तः अन्यत् क्षुत्पिपासाद्यपि न वेद ॥ २० ॥ हे अबलाः ! मदर्थे उज्झिताः त्यक्ता लोकवेद[1]स्वीयमर्यादा याभिः तासां एवभूतानां वः युष्माकं भजता प्रेमालापान् शृण्वतैव मया तिरोहितम् । भावे क्तः । तत् तस्मात् हे प्रियाः । माम् असूयितुं दोषारोपेण द्रष्टुं न योग्याः स्थ ॥ २१ ॥ निरवद्या निर्दोषा संयुक् संयोगो यासां तासां वः यत् स्वीयमसाधारणं साधु कृत्यं तत् न पारये प्रत्युपकर्तुं न शक्नोमि ब्रह्मायुषापि । या भवत्यः दुर्जराः गेहशृङ्खलाः छित्वा माम् अभजन् तत् तस्मात् वः युष्माकं साधुना सौशील्येनैव प्रतियातु प्रतिकृतं ममानृण्यं भवतु । अन्यथा युष्माकम् अहम् ऋणी एवेत्यर्थः ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां द्वात्रिंशोऽध्यायः

---

१. लोकमर्यादा अपवादभयत्यागः । वेदमर्यादा निजपतित्यागः । स्वीयमर्यादा पारिवारिकस्नेहत्यागः ।

## अथ त्रयस्त्रिंशोऽध्यायः

### श्रीशुक उवाच

इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः । जहुर्विरहजं तापं तदङ्गोपचिताशिषः ॥१॥
तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः । स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥२॥
रासोत्सवः सम्प्रवृत्तो गोपीमण्डलमण्डितः । योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ।
प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः ॥३॥
यं मन्येरन् नभस्तावद् विमानशतसंकुलम् । दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ॥४॥
ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः । जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥५॥
वलयानां नूपुराणां किङ्किणीनां च योषिताम् । सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले ॥६॥
तत्रातिशुशुभे ताभिर्भगवान् देवकीसुतः । मध्ये मणीनां हैमानां महामरकतो यथा ॥७॥
पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः ।
स्विद्यन्मुख्यः कबररशनाऽग्रन्थयः कृष्णवध्वो गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥८॥
उच्चैर्जगुर्नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः । कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥९॥
काचित् समं मुकुन्देन स्वरजातीरमिश्रिताः । उन्निन्ये पूजिता तेन प्रीयता साधु साध्विति ।
तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥१०॥

---

त्रयस्त्रिंशे महारासो गोपिकाभिः समं हरेः ।
तत्र राज्ञश्च सन्देहः सोपपत्ति निवार्यते ॥

सुपेशला अतिमनोहराः । तत्र तदा । अङ्ग हे राजन् ! यद्वा । तस्य भगवतोऽङ्गेन उपचिताः समृद्धाः आशिषः मनोरथा यासां ताः । तासामङ्गेनेति प्राप्तसुखस्य भगवतोऽपि षष्ठ्यन्तं विशेषणम् ॥१॥ तत्र यमुनातटे । अन्योन्यम् आबद्धा गृहीता बाहवो यैस्तैः अनुव्रतैः वशवर्तिभिः ॥ २ ॥ रासेति सार्द्धम् । कृष्णेन रासः सम्यक् प्रवर्तितः । कथंभूतेन । कण्ठे गृहीतानाम् उभयतः आलिङ्गितानां तासां द्वयोर्द्वयो र्मध्ये प्रविष्टेन अत एव स्त्रियः यं स्वनिकटं मन्येरन् इति योज्यम् ॥ ३ ॥ यावत् एवं तावत् तत्क्षणमेव नभः विमानशतैः संकुलमासीत् ॥४॥५॥ सप्रियाणां कृष्णसहितानाम् योषितां किङ्किणीनां क्षुद्रघण्टिकानाम् । तुमुलो रणसंकीर्णे इति मेदिनी। मिश्रित इत्यर्थः ॥ ६ ॥ हेम्न इमे हैमाः तेषां मध्ये यथा मारकतो नीलमणिः । तत्र रासमण्डले ॥ ७ ॥ तं श्रीकृष्णं गायन्त्यः कृष्णवध्वः मेघमण्डले तडित इव विरेजुरित्यन्वयः । कथंभूताः । षड्भिः तृतीयान्तैः स्विद्यन्मुख्यः । भुज कैः । विधुतिभिः करचालनैः । भज्यन्मध्यैः कुटिलीभवन्मध्यभागैः । गण्डेषु लोलैः चञ्चलैः कुण्डलैः । स्विद्यन्ति स्वेदयुक्तानि मुखानि यासां ताः । कबरादिषु[1] नृत्यवशात् अग्रन्थय इति पदच्छेदः शिथिलग्रन्थयः अत्राल्पार्थे नञ् । मेघचक्रे मेघमण्डले ॥ ८॥ नृत्यमाना नृत्यशीलाः । ताच्छील्ये चानश् । नृत्येन मानः आदरो यासां ताः इति वा । रक्तो रागरञ्जितः कण्ठो यासां ताः । कृष्णस्य अभिमर्शः सुस्पर्शः तेन मुदिताः ॥ ९ ॥ स्वरजाताः स्वरालापगतीः उन्निन्ये उन्नीतवती । तदेव तज्जात्युन्नयनमेव

---

१. कबर केशजूटायाम् इति कोशः ।

काचिद् रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः । जग्राह बाहुना स्कन्धं श्लथद्वलयमल्लिका॥११॥
तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् । चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥१२॥
कस्याश्चिन्नाटयविक्षिप्तकुण्डलत्विषमण्डितम् । गण्डं गण्डे संदधत्या अदात्ताम्बूलचर्वितम् ॥१३॥
नृत्यन्ती गायती काचित् कूजन्नूपुरमेखला । पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताऽधात् स्तनयोः शिवम्॥
गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्तवल्लभम् । गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे ॥

कर्णोत्पलालकविटङ्ककपोलधर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः ।
गोप्यः समं भगवता ननृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥१६॥
एवं परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ।
रेमे रमेशो व्रजसुन्दरीभिर्यथाऽर्भकः स्वप्रतिबिम्बविभ्रमः ॥१७॥
तदङ्गसङ्गप्रमुदाकुलेन्द्रियाः केशान् दुकूलं कुचपट्टिकां वा ।
नाञ्जः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभरणाः कुरूद्वह ॥१८॥

कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः । कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत् १९
कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः । रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया ॥२०॥
तासामतिविहारेण श्रान्तानां वदनानि सः । प्रामृजत् करुणः प्रेम्णा शन्तमेनाङ्ग पाणिना॥२१॥

गोप्यः स्फुरत्पुरटकुण्डलकुन्तलत्विड्गण्डश्रिया सुधितहासनिरीक्षणेन ।
मानं दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥२२॥

---

ध्रुवाख्यं तालविशेषं कृत्वा उन्निन्ये ॥ १० ॥ गदति शब्दं करोतीति गदा वंशी तां बिभर्तीति तस्य कृष्णस्य । श्लथन्त बलयादयो यस्याः ॥११॥ ह हर्षेण ॥१२॥ नाटयेन चञ्चलकुण्डले स्वाभाविकी त्विट् च तेषां समाहारः । द्वन्द्वाच्चुदषहान्तादिति टच् । गण्डे कृष्णकपोले स्वकपोलं संयोजयन्त्याः तस्या मुखे ताम्बूलचर्वितमदात् ॥१३॥ शिवं कामशान्तिप्रदम् ॥१४॥१५॥ गोप्यः भगवता समं सह ननृतुरित्यन्वयः । क्व । भ्रमराः एव गायका यस्यां सा चासौ रासगोष्ठी तस्याम् । कथंभूताः । कर्णोत्पलैः कर्णावतंसैः अलकालङ्कृतैः कपोलैः धर्मैः स्वेदबिन्दुभिश्च वक्त्रेषु श्रीः शोभा यासां ताः । पुनश्च । बलयादिभिः उपलक्षिताः । पुनश्च । स्वकेशेभ्यः स्रस्ताः गलिताः स्रजो यासां ताः तथोक्ताः ॥ १६ ॥ एवं रमेशो भगवान् परिष्वङ्गादिभिः व्रजसुन्दरीभिः सह रेमे । यथा अर्भको बालः स्वप्रतिबिम्बैः सह विभ्रमः क्रीडापरो भवति । एवं भगवानपि स्वप्रतिबिम्बभूताभिः स्वकीयाभिः सह रेमे न परकीयाभिरतो भगवति न व्यभिचारशङ्केति । स्वप्रतिबिम्बैः विभ्रमः क्रीडा यस्येति बहुव्रीहिः । परिष्वङ्गः आलिङ्गनम् । करेण अभिमर्शः स्तनादीनां स्पर्शः । उद्दामविलासः तीव्रकामचेष्टा ॥ १७ ॥ व्रजस्त्रियः केशादीन् प्रतिव्योढुं पुनर्धर्तुं अञ्जः सुखेन नालं न समर्था बभूवुरित्यन्वयः । कथंभूताः । तस्य भगवतोऽङ्गसंगेन या प्रकृष्टा मुत् हर्षः तया आकुलानि विवशानि इन्द्रियाणि यासां ताः । पुनश्च । विस्रस्ता माला आभरणानि च यासां ताः तथोक्ताः ॥१८॥ खेचराः देवादयः । कामार्दिताः स्त्रीभावं प्राताः ॥१९॥ यावतीः यावत्यः ॥२०॥ शन्तमेन सुखप्रदेन । प्रामृजत् संमार्जितवान् ॥२१॥ गोप्यः [1]ऋषभस्य श्रेष्ठस्य भर्तुः श्रीकृष्णस्य मानं दधत्यः कुर्वत्य कृतानि चरितानि जगुरित्यन्वयः । केन । स्फुरतां स्वर्णकुण्डलानां कुन्तलानां वक्रकेशानां च त्विषा गण्डेषु या श्रीः तया

---

१. 'ऋषभः श्रेष्ठवृषयोः' इति विश्वः ।

ताभिर्युतः श्रममपोहितुमङ्गसङ्गधृष्टस्रजः स कुचकुङ्कुमरञ्जितायाः।
गन्धर्वपालिभिरनुद्रुत आविशद् वाः श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥२३॥
सोऽम्भस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग।
वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः ॥२४॥
ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे।
चचार भृङ्गप्रमदागणावृतो यथा मदच्युद् द्विरदः करेणुभिः ॥२५॥
एवं शशाङ्कांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः।
सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयाः ॥२६॥

राजोवाच

संस्थापनाय धर्मस्य प्रशमायेतरस्य च। अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥२७॥
स कथं धर्मसेतूनां वक्ता कर्ताभिरक्षिता। प्रतीपमाचरद् ब्रह्मन् परदाराभिमर्शनम् ॥२८॥
आप्तकामो यदुपतिः कृतवान् वै जुगुप्सितम्। किमभिप्राय एतं नः संशयं छिन्धि सुव्रत ॥२९॥

श्रीशुक उवाच

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्। तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥३०॥
नैतत् समाचरेज्जातु मनसापि ह्यनीश्वरः। विनश्यत्याचरन् मौढ्याद् यथा रुद्रोऽब्धिजं विषम्॥३१॥
ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित्। तेषां यत् स्ववचो युक्तं बुद्धिमांस्तत् समाचरेत्॥३२॥

---

सुधितेन अमृतायितेन हाससहितनिरीक्षणेन मानम् दधत्य सुधितेत्याचारविवबन्तात् क्तः तस्य भगवतः कररुहैः नखैः स्पर्शेन प्रमोदो यासां ता गोप्यः ॥ २२ ॥ श्रान्त इव स कृष्णः श्रमम् अपोहितुं दूरीकर्तुं ताभिः युतः वाः जलमाविशदित्यन्वयः। कथंभूताः। कुचकुंकुमरञ्जितायाः स्रजः सम्बन्धिभिः गन्धर्वपैः गन्धर्वपतिभिरिव वर्तमानैः अलिभिः भ्रमरैः अनुगतः। इभराड् गजेन्द्रः। भिन्नसेतुः विदारितवप्रः। पक्षे अतिक्रान्तमर्यादः। वस्तुतः भिन्ना पृथक्-पृथक् स्थापिता सेतुः प्रेममर्यादा येन सः ॥२३॥ अङ्ग हे राजन्! स्वरतिः आत्मारामोऽपि सः कृष्णः अम्भसि जले ताभिः सह रमे विक्रीडेत्यन्वयः। वैमानिकैः देवैः। स्वासु स्वीयासु। स्वा असाधारणी वा रतिर्यस्य सः ॥ २४ ॥ ततो जलविहारानन्तरम्। कृष्णः प्रमदावृतः सन् यमुनोपवने विचचार। कथंभूते। प्रसूनगन्धानिलेन जुष्टानि सुरभीकृतानि दिक्तटानि दिग्भागाः यस्य तस्मिन् यमुनोपवने। करेणुभिः हस्तिनीभिः। द्विरदः गजः इव ॥ २५ ॥ स कृष्णः सर्वा एव निशाः सेवितवान्। कीदृशीः। शरत्सम्बन्धी काव्येषु कथ्यमानो यः शृङ्गाररसस्तदाश्रय भूताः। अवरुद्धः सौरतश्चरमधातुर्यस्येति कामजयोक्तिः[1] ॥ २६ ॥ इतरस्य अधर्मस्य निवृत्तये। अंशेन बलदेवेन सह। यस्य अंशेन जगत् स ईश्वरः इत्यन्वयो वा ॥२७॥ प्रतीपं प्रतिकूलमधर्मम्। अभिमर्शनं परस्त्रीसंभोगम् ॥ २८ ॥ कोऽभिप्रायो यस्येति किमाशयवानित्यर्थः। जुगुप्सितं निन्दितं कर्म कृतवान् ।२९। व्यतिक्रमः उल्लङ्घनम्। यथा सर्वभुजः अग्ने विष्ठादि सर्वममेध्यंप्रदहतोऽपि न दोषः। ईश्वराणाम् समर्थानां इन्द्रसोमादीनाम् ॥३०॥ अनीश्वरः प्राकृतः निकृष्टः प्राणी जातु कदाचिदपि नाचरेत्। यथा अरुद्रः रुद्रव्यतिरिक्तः विषम् आचरन् भक्षयन् विनश्यति तथा ॥३१॥ युक्तम् उचितम् ॥३२।३३॥ यदा निरहङ्कारिणां

---

१. स्त्रीसङ्गेऽपि न पतितं रेतो यस्य परेच्छया। स धन्यः पुरुषो लोके कामजेता स कथ्यते ॥

कुशलाचरितेनैषामिह स्वार्थो न विद्यते। विपर्ययेण वानर्थो निरहंकारिणां प्रभो ॥३३॥

किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम्। ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः॥३४॥

यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबन्धाः।

स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छयाऽऽत्तवपुषः कुत एव बन्धः ॥३५॥

गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम्। योऽन्तश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥३६॥

अनुग्रहाय भूतानां मानुषं देहमास्थितः। भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत् ॥३७॥

नासूयन् खलु कृष्णाय मोहितास्तस्य मायया।

मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः ॥३८॥

ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः। अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान् भगवत्प्रियाः ॥३९॥

विक्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद् यः।

भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥४०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्द्धे रासक्रीडावर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥

## अथ चतुस्त्रिंशोऽध्यायः

### श्रीशुक उवाच

एकदा देवयात्रायां गोपाला जातकौतुकाः। अनोभिरनडुद्युक्तैः प्रययुस्तेऽम्बिकावनम् ॥१॥

---

अध्यासरहितानां कुशलेन न स्वार्थः न सुखं विपर्येण अधर्मेण न अनर्थः न दुखं भवति तदा ईशितव्यानां नियम्यानां सर्वेषामपि सत्त्वानां जीवानाम् ईशितुः नियामकस्य भगवतः पुण्यपापसम्बन्धो न भवतीति किमुत वक्तव्यमित्यर्थः ॥ ३४ ॥ योगप्रभावेण विधुता निरस्ताः अखिलाः कर्मबन्धा येषां ते मुनयोऽपि न नह्यमाना बन्धनमप्राप्नुवन्तः स्वैरं यथेच्छं विचरन्ति तदा इच्छया स्वेच्छया गृहीतमूर्तेः भगवतः कुतो बन्धः ॥३५॥ अन्तश्चरति। किञ्च गोपीनां परदारत्वमपि नास्ति राधारोमोद्भवत्वात् तासां गान्धर्वविधिना भगवता परिणीतत्वात् ॥ ३६ ॥ तत्परः भगवत्परः ॥ ३७ ॥ ३८ ॥ ब्रह्मरात्रे युगसहस्रप्रमाणे व्यतीते सति ॥ ३९ ॥ अचिरेण धीरः जितेन्द्रियः सन् कामम् आशु अपहिनोति त्यजति।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

चतुस्त्रिंशे वने नन्दं जग्रसे बलवानहिः।

तं विमोच्याङ्गिरःशापात् शंखचूडमथावधीत् ॥

एकदा गोपालाः फाल्गुनशिवरात्रौ वृषभयुक्तैः अनोभिः शकटैः। अम्बिका वनम्[1] प्रययुः कौतुकमुत्साहः ॥१॥

---

१. मथुरातः वायव्यदिशि सरस्वतीतीरस्थं साम्बशिवस्थानमस्ति।

तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं विभुम् । आनर्चुरर्हणैर्भक्त्या देवीं च नृपतेऽम्बिकाम् ॥२॥
गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः । ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति ॥३॥
ऊषुः सरस्वतीतीरे जलं प्राश्य धृतव्रताः । रजनीं तां महाभागा नन्दसुनन्दकादयः ॥४॥
कश्चिन्महानहिस्तस्मिन् विपिनेऽतिबुभुक्षितः । यदृच्छयाऽऽगतो नन्दं शयानमुरगोऽग्रसीत् ॥५॥
स चुक्रोशाहिना ग्रस्तः कृष्ण कृष्ण महानयम् । सर्पो मां ग्रसते तात प्रपन्नं परिमोचय ॥६॥
तस्य चाक्रन्दितं श्रुत्वा गोपालाः सहसोत्थिताः । ग्रस्तं च दृष्ट्वा विभ्रान्ताः सर्पं विव्यधुरुल्मुकैः
अलातैर्दह्यमानोऽपि नामुञ्चत्तमुरङ्गमः । तमस्पृशत् पदाभ्येत्य भगवान् सात्वतां पतिः ॥८॥
स वै भगवतः श्रीमत्पादस्पर्शहताशुभः । भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥९॥
तमपृच्छद्धृषीकेशः प्रणतं समुपस्थितम् । दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥१०॥
को भवान् परया लक्ष्म्या रोचतेऽद्भुतदर्शनः । कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः॥११॥

सर्प उवाच

अहं विद्याधरः कश्चित् सुदर्शन इति श्रुतः । श्रिया स्वरूपसम्पत्त्या विमानेनाचरं दिशः ॥१२॥
ऋषीन् विरूपानङ्गिरसः प्राहसं रूपदर्पितः । तैरिमां प्रापितो योनिं प्रलब्धैः स्वेन पाप्मना॥१३॥
शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः । यदहं लोकगुरुणा पदा स्पृष्टो हताशुभः ॥१४॥
तं त्वाऽहं भवभीतानां प्रपन्नानां भयापहम् । आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् ॥१५॥
प्रपन्नोऽस्मि महायोगिन् महापुरुष सत्पते । अनुजानीहि मां देव सर्वलोकेश्वरेश्वर ॥१६॥
ब्रह्मदण्डाद् विमुक्तोऽहं सद्यस्तेऽच्युत दर्शनात् ॥१७॥
यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च। सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते ॥१८॥
इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवन्द्य च । सुदर्शनो दिवं यातः कृच्छ्रान्नन्दश्च मोचितः ॥१९॥

---

तत्र वने । पशवो जीवाः तेषां पतिम् । अर्ह्यतेऽनेनेति अर्हणं पूजनद्रव्यम् ॥ २ ॥ या गावस्ताश्च । मधु मधुरम् मध्वन्न मिष्टान्नम् । आदृताः सादराः । नोऽस्माकं प्रीयतामिति सङ्कल्प्य ॥ ३ ॥ तां रजनीं शिवरात्रिम् ऊषुः निवासं चक्रुः । सुनन्दकः नन्दानुजः । संज्ञायां कन् ॥ ४ ॥ उरगः उरसा गच्छन् सन् अलक्षितागमनः अहिः अजगरः अग्रसीत् पारणादिने रात्रौ ॥५॥ प्रपन्नं शरणागतम् ॥ ६ ॥ आक्रन्दितं दीनवचनम् चकारात् रोदनं च उल्मुकैः ज्वलत्काष्ठैःविव्यधुः ताडयामासुः ॥७॥ सात्वतां यदूनाम् ॥८॥ हतमशुभं शापःरूपं यस्य सः सोऽजगरः । भेजे रूपं प्राप्तवान् ॥ ९ ॥ १० ॥ लक्ष्म्या सौन्दर्येण । अवशः कथमवशः सन् जुगुप्सितां निन्दितां गतिं योनिं प्रापितोऽसि ॥ ११ ॥ अचरं भ्रमन्नासम् ॥ १२ ॥ अङ्गिरसो वंश्यान् कुरूपान् । प्रलब्धैः उपहसितैः तैः ॥ १३ ॥ १४ ॥ अमीवहन् दुःखनाशन । 'अमीवं पापदुःखयो' इति कोशात् । अनुजानीहि गन्तुमाज्ञां देहि ॥ १६ ॥ ब्रह्मेति अर्द्धम् । ब्रह्मदण्डात् शापात् ॥ १७ ॥ तस्य ते पदा स्पृष्टः पुनातीति किं पुनर्वक्तव्यमित्यर्थः ॥ १८ ॥ दाशार्हं श्रीकृष्णम् । अनुज्ञाप्य पृष्ट्वा ॥ १९ ॥ निशाम्य दृष्ट्वा । ततोऽम्बिकावनात् । आदृताः सादराः

निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मितचेतसस्ततः ।
समाप्य तस्मिन् नियमं पुनर्व्रजं नृपाययुस्तत् कथयन्त आदृताः ॥२०॥

कदाचिदथ गोविन्दो रामश्चाद्भुतविक्रमः । विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम् ॥२१॥
उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः । स्वलंकृतानुलिप्ताङ्गौ स्रग्विणौ विरजोऽम्बरौ ॥२२॥
निशामुखं मानयन्तावुदितोडुपतारकम् । मल्लिकागन्धमत्तालिजुष्टं कुमुदवायुना ॥२३॥
जगतुः सर्वभूतानां मनःश्रवणमङ्गलम् । तौ कल्पयन्तौ युगपत् स्वरमण्डलमूर्च्छितम् ॥२४॥
गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन् नृप । स्रंसद्दुकूलमात्मानं स्रस्तकेशस्रजं ततः ॥२५॥
एवं विक्रीडतोः स्वैरं गायतोः सम्प्रमत्तवत् । शङ्खचूड इति ख्यातो धनदानुचरोऽभ्यगात् ॥२६॥
तयोर्निरीक्षतो राजंस्तन्नाथं प्रमदाजनम् । क्रोशन्तं कालयामास दिश्युदीच्यामशङ्कितः ॥२७॥
क्रोशन्तं कृष्ण रामेति विलोक्य स्वपरिग्रहम् । यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम् ॥२८॥
मा भैष्टेत्यभयारावौ शालहस्तौ तरस्विनौ । आसेदतुस्तं तरसा त्वरितं गुह्यकाधमम् ॥२९॥
स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन् । विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवितेच्छया ॥३०॥
तमन्वधावद् गोविन्दो यत्र यत्र स धावति । जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन् स्त्रियो बलः ॥३१॥
अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मनः । जहार मुष्टिनैवाङ्ग सहचूडामणिं विभुः ॥३२॥
शङ्खचूडं निहत्यैवं मणिमादाय भास्वरम् । अग्रजायाददात् प्रीत्या पश्यन्तीनां च योषिताम् ॥३३॥

इति श्रीमद्भागवते महापुराणे परमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
शङ्खचूडवधो नाम चतुस्त्रिंशोऽध्यायः ॥३४॥

---

हे नृप ! ॥२०॥ कदाचित् होलिकावसरे ॥२१॥ उपेति त्रयम् । विरजोऽम्बरौ निर्मलवस्त्रौ । उदितः उडुपः चन्द्रः तारकाश्च यस्मिन् तत् कुमुद वायुना जुष्टमिति विभज्य अन्वेति मल्लिकागन्धेन मत्ता अलयो यत्रेति । अत्यन्तं पृथक् पदं वा मुखविशेषणम् । मङ्गलं सुखप्रदं यथा स्यात्तथा मूर्छितम् आलापप्रकार जगतुः गानं चक्रतुः ॥२२॥ ॥ २३ ॥२४॥ मूर्छिताः मोहिताः स्रंसत् शिथिलीभवत् दुकूलं यस्मात् तम् आत्मानं देहम् ॥२५॥ स्वैरं यथेच्छं धनदः कुबेरः ॥ २६ ॥ तौ नाथौ यस्य । क्रोशन्तं चीत्कृत्य रुदन्तं कालयामास बलात् विद्रावयामास ॥ २७ ॥ क्रोशन्तम् आह्वयन्तं स्वपरिग्रहं स्त्रीजनम् । दस्युना[1] व्याघ्रेण ग्रस्ता गा दृष्ट्वा यथा कश्चित् धावेत् तथा अन्वधावताम् ॥ २८ ॥ अभयारावौ अभयवचनौ । त्वरितं धावन्तम् ॥ २९ ॥ उद्विजन् बिभ्यत् ॥३०॥ इव शब्देन किञ्चिदद्दूरम् । मुष्टिनैव खड्गभावनायुक्तेन शिरः जहार चकर्त । अङ्ग हे राजन् ! अददात् इति पाठः ॥३१॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

१. 'दस्यू तस्करशार्दूलौ इति यादवः ।

## अथ पञ्चत्रिंशोऽध्यायः

### श्रीशुक उवाच

गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः। कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥१॥

### गोप्य ऊचुः

वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम्।
कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः ॥२॥
व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः।
काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥३॥
हन्त चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत्।
नन्दसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥४॥
वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात्।
दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥५॥
बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्बः।
कर्हिचित् सबल आलि स गोपैर्गाः समाह्वयति यत्र मुकुन्दः ॥६॥
तर्हि भग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतम्।
स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः ॥७॥

---

पञ्चत्रिंशे वियोगार्ता वेणुमुद्दिश्य गोपिकाः।
युगलं गीतमाचेरुर्व्यतीयुस्तेन वासरान् ॥ १ ॥

अनुद्रुतमासक्तम् ॥ १ ॥ हे गोप्यः मुकुन्दः यत्र यदा अधरार्पितवेणुम् ईरयति वादयति तदा सिद्धवनिताः सिद्धैः स्वपतिभिः सह तत् गीतमुपधार्य श्रुत्वा विस्मिताः सलज्जाश्च सत्यः कश्मलं मोहं ययुरिति द्वयोरन्वयः। अत्र सर्वत्र तस्य विरहं कथं सहामहे इति वाक्यं योजनीयम्। कथंभूतो मुकुन्दः। वल्गिते नर्तिते भ्रुवौ येन सः। कथंभूतं वेणुम्। अङ्गुलिभिः आश्रिताः स्पृष्टा मार्गाः सप्त स्वरछिद्राणि यस्य तम्। कथंभूता वनिताः। कामबाणैः व्याकुलानि चित्तानि यासां ताः। पुनश्च। अपस्मृता स्खलिता नीव्यः कटिवस्त्रग्रन्थयोऽपि यासाताः। व्योम्नि यानं गमनं येषां ते व्योमयानाः सिद्धाः। चतुर्विंशतिपद्येषु स्वागतावृत्तम् ॥२॥३॥ हे अबला ! इदं चित्रमाश्चर्यं शृणुत। अयं नन्दसूनुः यर्हि कूजितवेणुर्भवति तदा व्रजगवादयः निद्रिता इव लिखित-चित्रमिव प्रतीयमानाः आसन्। हारवत् विशदो हासो यस्य। उरसि स्थिरा विद्युत् लक्ष्मीः यस्य। नर्मदः सुखदः। आरात् दूरादेव वाद्यश्रवणेन आकृष्टचित्ता दष्टा एव न तु चर्विताः नापि त्यक्ताः तृणग्रासा यैस्ते ॥५॥ हे आलि सखि ! यत्र यदा गोपैः सह मुकुन्दः गाः समाह्वयति। कथंभूतः। बर्हिणस्तबका मयूरपिच्छाः तदादिभिः बद्धो यो मल्लानां परिकरो वेषभूषा तं विडम्बयति अनुकरोति उपहसतीति वा ॥६॥ तदा सरितः पदाम्बुज रजः वय-मिव स्पृहयन्त्यः स्तिमितापः स्थिरजला भवामः न च तल्लभामहे यतो अबहुपुण्याः। भुजाः तरङ्गाः। अत्र स्पृहे-

अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ।
वनचरो गिरितटेषु चरन्तीर्वेणुनाऽऽह्वयति गाः स यदा हि ॥८॥
वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः ।
प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥९॥
दर्शनीयतिलको वनमालादिव्यगन्धतुलसीमधुमत्तैः ।
अलिकुलैरलघुगीतमभीष्टमाद्रियन् यर्हि संधितवेणुः ॥१०॥
सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ।
हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः ॥११॥
सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ।
हर्षयन् यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥१२॥
महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः ।
सुहृदमभ्यवर्षद् सुमनोभिश्छायया च विदधत् प्रतपत्रम् ॥१३॥
विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा निजशिक्षाः ।
तव सुतः सति यदाधरबिम्बे दत्तवेणुरनयत् स्वरजातीः ॥१४॥
सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ।
कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥१५॥

---

रीप्सित इति रजसः सम्प्रदानत्वेपि ईप्सिततमत्वविवक्षया कर्मत्वम् ।७। गिरितटेषु चरन्तीः गाः यदा स आह्वयति तदा वन लतादयः आनन्दोद्रेकेण पुष्पफलादिभि आत्मनि भगवद्व्यक्तिं सूचयन्त्य इव मधुधारामिषेण अश्रुधारा मुमुचुः । स्म विस्मये । भूतिः लक्ष्मीः । भारेण प्रणता इति प्रणतभारा शाखा यासां ताः लताः 'राजदन्तादिषु परम्' इति नियमात् ॥८॥९॥ दर्शनीयानां मध्ये तिलको मुख्यः भगवान् कृष्णः दिव्यागन्धा तुलसी तस्या मधुना मत्तैः अलिकुलैः उच्चैः गीतमाद्रियन् यर्हि अधरे सान्धितवेणुर्भवति तदा सारसादयः एत्य आगत्य हरिमुपासते तत्समीपम् उपविविशुः हन्त विषादे वयं नेति द्वयोरन्वयः । मधु मकरन्दः । सन्धानं सन्धा सा सञ्जाता अस्येति इतच्प्रत्ययः ॥ १० ॥ ११ ॥ स्रग्भिर्निर्मिताभ्यां कर्णभूषणाभ्यां विलासः शोभातिशयो यस्य स भगवान् यर्हि वेणुरवेण विश्वं हर्षयन् उपरम्भति नादेन पूरयति तदा मेघः छायया आतपत्रं विदधत् सुहृदं सुमनोभिः कुसुमतुषारैः अभ्यवर्षत् । कथंभूतो मेघः । महतः श्रीकृष्णस्य अतिक्रमणे शङ्कितं चेतो यस्य स मेघः । क्षितिभृतः गोवर्धनस्य शिखरेषु वर्तमानः कृष्णः । हे व्रजदेव्यः ॥ १२ ॥ १३ ॥ हे सति यशोदे तव सुतः अधरे न्यस्तवेणुः सन् यदा स्वरजातीः स्वरालापभेदान् अनयत् उन्नीतवान् तदा शक्रादयः तत् ताः जातीः स्वरालापान् उपधार्य श्रुत्वा कश्मलं मोहं ययुः । सवनशः मन्द्रमध्यतारभेदेन वेणुवाद्ये उरुधा बहुप्रकारा निजैव शिक्षा यासु ता स्वरजातीः । गोपचरणेषु गोपक्रीडासु विदग्धो निपुणः ॥ १४ ॥ १५ ॥ ध्वजादिविचित्रचिह्नैः निजपदाब्जदलैः

निजपदाब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः ।
व्रजभुवः शमयन् खुरतोदं वर्ष्मधुर्यगतिरीडितवेणुः ॥१६॥
व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ।
कुजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥१७॥
मणिधरः क्वचिदागणयन् गा मालया दयितगन्धतुलस्याः ।
प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन् भुजमगायत यत्र ॥१८॥
क्वणितवेणुरववञ्चितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः ।
गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥१९॥
कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ।
नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥२०॥
मन्दवायुरुपवात्यनुकूलं मानयन् मलयजस्पर्शेन ।
वन्दिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥२१॥
वत्सलो व्रजगवां यदगध्रो वन्द्यमानचरणः पथि वृद्धैः ।
कृत्स्नगोधनमुपोह्य दिनान्ते गीतवेणुरनुगेडितकीर्तिः ॥२२॥
उत्सवं श्रमरुचापि दृशीनामुन्नयन् खुररजश्छुरितस्रक् ।
दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥२३॥
मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली ।
बदरपाण्डुवदनो मृदुगण्डं मण्डयन् कनककुण्डललक्ष्म्या ॥२४॥

---

खुरतोदं खुरजन्यव्यथां शमयन् कृष्णः वादितवेणुः सन् यत् व्रजति तेन कश्मलेन मोहेन कुजानां वृक्षणां गतिं निश्चेष्टतां गमिताः प्रापिताः सत्यः वयं केशपाशं वसनं वा न विद्मः । कथंभूतः कृष्णः । वर्ष्मणा देहेन धुर्यः उच्चो गजः तद्वत् गतिर्यस्य । कथभूताः गोप्यः । साभिलाषवीक्षणेन उद्दीपितः कामवेगो यासु ताः ॥ १६ ॥ १७ ॥ तुलस्या मालया सह गोगणनार्थं मणिमालाधरः कृष्णः कस्यचित्प्रणयिनोऽनुचरस्य स्कन्धे भुजं प्रक्षिपन् स्थापयन् यत्र यश कदाचित् अगायत् तदा कृष्णसारमृगस्य भार्याः कृष्णमनुगत्य प्राप्य तमेव अन्वासत अन्वर्तन्त न न्यवर्तन्तेत्यर्थः कथंभूताः । क्वणितवेणुरवेण वञ्चितानि अपहृतानि चित्तानि यासां ताः । गुणगणानाम् अर्णम् अर्णवम् ॥१८॥ ॥१९॥ दाम माला । हे अनघे यशोदे । नर्मदः सुखदः तव वत्सः यदा विजहार तदा मलयजस्य अङ्गलिप्तचन्दनस्य स्पर्शेन अनुकूलं वायुः तं मानयन् सत्कुर्वन् सन् उपवाति बीजयति । किञ्च ये उपदेवा गन्धर्वादयः तेऽपि तदा वाद्यादिभिः तं परिवव्रुः परिवेष्टिवन्तः ॥२०॥२१॥ अगं पर्वतं धरतीति अगध्रः व्रजगवां वत्सलश्च उडुराजः इव श्रीकृष्ण चन्द्रः लुप्तोपमा सम्पूर्णं गोधनमेकीकृत्य आशिषो भोगान् दातुमिच्छया दिनान्ते एति आयातीत्यन्वयः । श्रमरुचापि नेत्राणाम् उत्सवमानन्दं उन्नयन् जनयन् । वृद्धैः ब्रह्मादिभिः वन्द्येति खुररजोभिः छुरिता व्याप्ताः स्रजो यस्य । अनुगैः ईडिता कीर्तिः यस्य जठरमेव क्षीरनिधिः तत्र भवतीति ॥२२ ॥ २३ ॥ ईषन्मदेति

यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते ।
मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥२५॥

श्रीशुक उवाच

एवं व्रजस्त्रियो राजन् कृष्णलीला नु गायतीः ।
रेमिरेऽहःसु तच्चित्तास्तन्मनस्का महोदयाः ॥२६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे वृन्दाबनक्रीडायां गोपिकायुगलगीतं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

योज्यम् । कनककुण्डलयोः लक्ष्म्या मृदुगण्डं वदनं मण्डयन् । द्विरदो गजः । दुरन्तं दुर्निवारम् ॥ २४ ॥ २५ ॥ नु अहो कृष्णलीला गायन्त्यः रेमिरे । महान् उदयः उत्सवो यासां ताः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## अथ षट्त्रिंशोऽध्यायः

श्रीशुक उवाच

अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः । महीं महाककुत्कायः कम्पयन् खुरविक्षताम् ॥१॥
रम्भमाणः खरतरं पदा च विलिखन् महीम् । उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन् ॥२॥

किंचित् किंचिच्छकृन्मुञ्चन् मूत्रयन् स्तब्धलोचनः ।
यस्य निर्ह्रादितेनाङ्ग निष्ठुरेण गवां नृणाम् ॥३॥

पतन्त्यकालतो गर्भाः स्रवन्ति स्म भयेन वै । निर्विशन्ति घना यस्य ककुद्यचलशङ्कया ॥४॥
तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः । पशवो दुद्रुवुर्भीता राजन् संत्यज्य गोकुलम् ॥५॥
कृष्ण कृष्णेति ते सर्वे गोविन्दं शरणं ययुः । भगवानपि तद् वीक्ष्य गोकुलं भयविद्रुतम् ॥६॥
मा भैष्टेति गिराऽऽश्वास्य वृषासुरमुपाह्वयत् । गोपालैः पशुभिर्मन्द त्रासितैः किमसत्तम ॥७॥

---

षट्त्रिंशे निहतेऽरिष्टे सुतौ तौ वसुदेवजौ ।
ज्ञात्वा मुनेरिहानेतुं कंसोऽक्रूरं समादिशत् ॥१॥

विरुद्धकथाधिकार्थमथ शब्दः । महती ककुत् कायश्च यस्य सः । वृषपृष्ठाग्रऋङ्गः ॥ १ ॥ रम्भेति सार्द्धम् । खरतरं कर्कशं रम्भमाणः स्वजातिशब्दमुदिगरन् । वप्रम् उच्चप्रदेशम् । विषाणं शृङ्गम् । स्तब्धे निर्निमेषे लोचने यस्य ॥ २ ॥ यस्येति सार्द्धम् । अङ्ग हे राजन्! निर्ह्रादितेन गर्जितेन नृणां नारीणां च । चतुर्थमासपर्यन्तं स्रावः तदूर्ध्वं पातः । ककुदि पृष्ठाग्रशृङ्गे ॥ ३ ॥ दुद्रुवुः पलायिताः ॥ ४ ॥ कृष्णेति सार्द्धम् ॥ ५ ॥ आश्वास्य सान्त्वय्य ॥ ६ ॥ ७ ॥ आस्फोटच करतलेन बाहुमाहत्य । तेनैव करतलशब्देन । सख्युः

बलदर्पहाहं दुष्टानां त्वद्विधानां दुरात्मनाम् । इत्यास्फोटयाच्युतोऽरिष्टं तलशब्देन कोपयन् ॥८॥

सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः । सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् ।

उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥९॥

अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् । कटाक्षिप्याद्रवत्तूर्णमिन्द्रमुक्तोऽशनिर्यथा ॥१०॥

गृहीत्वा शृङ्गयोस्तं वा अष्टादश पदानि सः । प्रत्यपोवाह भगवान् गजः प्रतिगजं यथा ॥११॥

सोऽपविद्धो भगवता पुनरुत्थाय सत्वरः । आपतत् स्विन्नसर्वाङ्गो निःश्वसन् क्रोधमूर्च्छितः ॥१२॥

तमापतन्तं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतले ।

निष्पीडयामास यथाऽऽर्द्रमम्बरं कृत्वा विषाणेन जघान सोऽपतत् ॥१३॥

असृग् वमन् मूत्रशकृत् समुत्सृजन् क्षिपंश्च पादाननवस्थितेक्षणः ।

जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुराः ॥१४॥

एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः । विवेश गोष्ठं सबलो गोपीनां नयनोत्सवः ॥१५॥

अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा । कंसायाथाह भगवान् नारदो देवदर्शनः ॥१६॥

यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च । रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ॥१७॥

न्यस्तौ स्वमित्रे नन्दे वै याभ्यां ते पुरुषा हताः । निशम्य तद् भोजपतिः कोपात् प्रचलितेन्द्रियः ॥

निशातमसिमादत्त वसुदेवजिघांसया । निवारितो नारदेन तत्सुतौ मृत्युमात्मनः ॥१९॥

ज्ञात्वा लोहमयैः पाशैर्बबन्ध सह भार्यया । प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम् ॥२०॥

प्रेषयामास हन्येतां भवता रामकेशवौ । ततो मुष्टिकचाणूरशलतोशलकादिकान् ॥२१॥

अमात्यान् हस्तिपांश्चैव समाहूयाह भोजराट् । भो भो निशम्यतामेतद् वीरचाणूरमुष्टिकौ ।२२।

नन्दव्रजे किलासाते सुतावानकदुन्दुभेः । रामकृष्णौ ततो मह्यं मृत्युः किल निर्दर्शितः ॥२३॥

---

श्रीदाम्नः स्कन्धे भुजाभोगं सर्पाकारं भुजम् ॥ ८ ॥ अवनिं पृथ्वीम् उल्लिखन् विदारयन् उद्यता ऊर्ध्वीकृतेन पुच्छेन भ्रमन्तो मेघा यस्मिन् सोऽरिष्टः ॥ ९ ॥ अग्रन्यस्ते विषाणाग्रे शृङ्गाग्रे येन सः । स्तब्धे निश्चले रक्तनेत्रे यस्य सः । कटशब्दोऽत्र एकदेशन्यायेन कटाक्षपरः कटेन आक्षिप्य । अशनिः वज्रम् ॥१०॥ प्रत्यपोवाह पृष्ठतोऽनीतवान् ॥ ११ ॥ अपविद्धः अधःक्षिप्तः । आपतत् कृष्णमभ्यद्रवत् । स्विन्नानि स्वेदयुक्तानि ॥ १२ ॥ अम्बरं वस्त्रम् । कृत्वा शृङ्गम् उत्पाटय । कृती छेदने धातुः । तेनैव ॥ १३ ॥ असृक् रक्तम् मूत्रं च शकृच्चेति एकवद्भावः । अनवस्थिते भयोद्विग्ने । निर्ऋतेः मृत्योः हेतोः क्षयं भगवन्निवासं । क्षि निवासे धातुः । किरन्तः आच्छादयन्तः ॥ १४ ॥ जातिभिः गोपैः ॥ १५ ॥ देववत् दर्शनं यस्य । देवं दर्शयतीति वा ॥ १६ ॥ यशोदेति सार्द्धम् । देवक्या अष्टमगर्भत्वेन प्रसिद्धां कन्यां यशोदायाः सुतामाह । यशोदाया सुतत्वेन प्रसिद्धं कृष्णं देवक्याः सुतमाह । रोहिणीपुत्रं रामं च देवक्याः सप्तमं सुतमाहेति सम्बन्धः कार्यः ॥ १७ ॥ निशातं तीक्ष्णम् ॥ १८ ॥ मृत्युं मृत्युरूपौ ज्ञात्वा हते वसुदेवे तौ पलायेतामतो मा वधगतामिति मन्त्रं वदता नारदेनेत्यर्थः ॥ १९ ॥ केशिनम् अश्वाकृतिं दैत्यम ॥ २० ॥ भोजराट् कंसः ॥ २१ ॥ ॥ २२ ॥ मह्यं मम । निर्दर्शितः सूचितः । हन्येतां प्राप्येतां तत्र लीयतामिति वास्तवोऽर्थः ॥ २३ ॥

भवद्भ्यामिह सम्प्राप्तौ हन्येतां मल्ललीलया। मञ्चाः क्रियन्तां विविधा मल्लरङ्गपरिश्रिताः।
पौरा जानपदाः सर्वे पश्यन्तु स्वैरसंयुगम् ॥२४॥

महामात्र त्वया भद्र रङ्गद्वार्युपनीयताम्। द्विपः कुवलयापीडो जहि तेन ममाहितौ ॥२५॥

आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि। विशसन्तु पशून् मेध्यान् भूतराजाय मीढ्षे ॥२६॥

इत्याज्ञाप्यार्थतन्त्रज्ञ आहूय यदुपुङ्गवम्। गृहीत्वा पाणिना पाणिं ततोऽक्रूरमुवाच ह ॥२७॥

भो भो दानपते मह्यं क्रियतां मैत्रमादृतः। नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥२८॥

अतस्त्वामाश्रितः सोम्य कार्यगौरवसाधनम्। यथेन्द्रो विष्णुमाश्रित्य स्वार्थमध्यगमद् विभुः ॥

गच्छ नन्दव्रजं तत्र सुतावानकदुन्दुभेः। आसाते ताविहानेन रथेनानय मा चरिम् ॥३०॥

निसृष्टः किल मे मृत्युर्देवैर्वैकुण्ठसंश्रयैः। तावानय समं गोपैर्नन्दाद्यैः साभ्युपायनैः ॥३१॥

घातयिष्य इहानीतौ कालकल्पेन हस्तिना। यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमैः ॥३२॥

तयोर्निहतयोस्तप्तान् वसुदेवपुरोगमान्। तद्बन्धून् निहनिष्यामि वृष्णिभोजदशार्हकान्॥३३॥

उग्रसेनं च पितरं स्थविरं राज्यकामुकम्। तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥३४॥

ततश्चैषा मही मित्र भवित्री नष्टकण्टका। जरासन्धो मम गुरुर्द्विविदो दयितः सखा ॥३५॥

शम्बरो नरको बाणो मय्येव कृतसौहृदाः। तैरहं सुरपक्षीयान् हत्वा भोक्ष्ये महीं नृपान् ॥३६॥

एतज्ज्ञात्वाऽऽनय क्षिप्रं रामकृष्णाविहार्भकौ। धनुर्मखनिरीक्षार्थं द्रष्टुं यदुपुरश्रियम् ॥३७॥

अक्रूर उवाच

राजन् मनीषितं सध्र्यक् तव स्वावद्यमार्जनम्। सिद्ध्यसिद्ध्योः समं कुर्याद् दैवं हि फलसाधनम्

मनोरथान् करोत्युच्चैर्जनो दैवहतानपि। युज्यते हर्षशोकाभ्यां तथाप्याज्ञां करोमि ते ॥३९॥

श्रीशुक उवाच

एवमादिश्य चाक्रूरं मन्त्रिणश्च विसृज्य सः। प्रविवेश गृहं कंसस्तथाक्रूरः स्वमालयम् ॥४०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धेऽक्रूरसंप्रेषणं नाम षट्त्रिंशोऽध्यायः ॥३६॥

---

मल्लरङ्गो मल्लभूमिः। स्वैरं यथेच्छं संयुगं युद्धम्। जानपदा बहिर्देशीयाः॥ २४॥ महामात्र हस्तिप। अहितौ शत्रू। मम अहितौ अहितकरौ जहि प्राप्नुहि। तत्रैव लीयस्वेत्यर्थः ओहाङ् गतौ धातुः॥ २५॥ मेध्यान् यज्ञार्हान्। भूतराजाय भैरवाय। मीढषे वरसेक्त्रे। विशसन्तु॥ २६॥ अर्थतन्त्रज्ञः कार्यसाधनकुशलः यदुपुङ्गवमक्रूरमित्यत्रान्वेति। ह हर्षे॥ २७॥ मैत्रं मित्रकृत्यम्॥ २८॥ कार्यगौरवस्य गुरुतरकार्यस्य साधने सम्पादने त्वाम् सप्तम्यन्तम्। विष्णुं श्रीवामनम् स्वार्थं स्वार्गाधिपत्यम्॥ २९॥ तत्र असाते तिष्ठतः॥ ३०॥ वैकुण्ठसंश्रयैः विष्णवाश्रितैः। निसृष्ठः सूचिताः। समं सह। अभ्युपायनम् उपहारः॥ ३१॥ कल्पेन सहशेन। वैद्युतोपमैः वज्रतुल्यैः मल्लैः॥ ३२॥ ३३॥ ये च अन्ये तानापि निहनिष्यामि॥ ३४॥ नष्टकण्टका शत्रुहीना भविष्यति॥ ३५॥ जरासन्ध इति सार्द्धम्। गुरुः श्वशुरः॥ ३६॥ यदुपुरस्य मथुरायाः॥ ३७॥ मनीषितं विचारितम्। स्वावद्यमार्जनं मृत्युपरिहारः पापमार्जनं च। 'अवद्यं मृत्युपापयोः' समं चित्तमिति शेषः। फलं साधयतीति॥ ३८॥ ३९॥ ४०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे गूढार्थदीपिन्यां षट्त्रिंशोऽध्यायः

## अथ सप्तत्रिंशोऽध्यायः

श्रीशुक उवाच

केशी तु कंसप्रहितः खुरैर्महीं महाहयो निर्जरयन् मनोजवः ।
सटावधूताभ्रविमानसंकुलं कुर्वन् नभो हेषितभीषिताखिलः ॥ १ ॥
विशालनेत्रो विकटास्यकोटरो बृहद्गलो नीलमहाम्बुदोपमः ।
दुराशयः कंसहितं चिकीर्षुर्व्रजं स नन्दस्य जगाम कम्पयन् ॥ २ ॥
तं त्रासयन्तं भगवान् स्वगोकुलं तद्धेषितैर्बालविघूर्णिताम्बुदम् ।
आत्मानमाजौ मृगयन्तमग्रणीरुपाह्वयत् स व्यनदन्मृगेन्द्रवत् ॥ ३ ॥
स तं निशाम्याभिमुखो मुखेन खं पिबन्निवाभ्यद्रवदत्यमर्षणः ।
जघान पद्भ्यामरविन्दलोचनं दुरासदश्चण्डजवो दुरत्ययः ॥ ४ ॥
तद् वञ्चयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः ।
सावज्ञमुत्सृज्य धनुःशतान्तरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ॥ ५ ॥
स लब्धसंज्ञः पुनरुत्थितो रुषा व्यादाय केशी तरसाऽऽपतद्धरिम् ।
सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन् प्रवेशयामास यथोरगं बिले ॥ ६ ॥
दन्ता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयः स्पृशो यथा ।
बाहुश्च तद्देहगतो महात्मनो यथाऽऽमयः संववृधे उपेक्षितः ॥ ७ ॥
समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् ।
प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लेण्डं विसृजन् क्षितौ व्यसुः ॥ ८ ॥

---

सप्तत्रिंशे हतः केशी भाविलीलाभिकाङ्क्षिणा ।
नारदेन स्तुतो भावादहन् व्योमासुरं हरिः ॥

कंसप्रेषितः केशी तु महीं निर्जरयन् विदारयन् व्रजं जगाम तं भगवान् अग्रणीः सन् उपाह्वयत् स च मृगेन्द्रवत् व्यनदत् इति त्रयाणामेकान्वयः । सटाभिः स्कन्धकेशैः अवधूतानि इतस्ततः क्षिप्तानि अभ्रादीनि तैः संकुलम् नभः कुर्वन् हेषितैः तज्जातिशब्दैः भीषितम् अखिलं विश्वं येन । तद्धे हितैः त्रासयन्तम् । विकटम् आस्यकोटरं मुखच्छिद्रं यस्य । बालैः पुच्छलोमभिः परिभ्रमिताः अम्बुदा येन । आजौ संग्रामार्थम् आत्मानं श्री कृष्णम् अन्वेषयन्तम् ॥१॥२॥३॥ स केशी तं श्रीकृष्णं निशाम्य दृष्ट्वा पद्भ्यां जघानेत्यन्वयः । अत्यमर्षणः अत्यन्तमसहमानः । अभिमुखः सम्मुखः सन् अभ्यद्रवत् अधावत् ॥ ४ ॥ तत् हननम् । दोर्भ्यां भुजाभ्यां पादयो प्रगृह्य भ्रामयित्वा प्रक्षिप्य च यथावत् स्थितः । धनुर्हस्तचतुष्टयम् । तार्क्ष्यः कश्यपस्तस्य सुतो गरुड़ ॥ ५ ॥ व्यादाय मुखं प्रसार्य हरिमपतत् । उत्तरं वामं भुजम् ॥ ६ ॥ ते दन्ता निपेतुः इति योज्यम् । तप्तमयम् । अतितप्तं लोहादि स्पृशन्तीति स्पृशः यथा पतन्ति तथा । अत्र मयडन्तः पाठो न तु शान्तः । आमयो जलोदरः ॥ ७ ॥ समेधमानेन वर्धमानेन । परिवृत्ते बहिर्निर्गते लोचने यस्य । लेण्डे बद्धपुरीषे स्यात् इति धराणिः ॥ ८ ॥

तद्देहतः कर्कटिकाफलोपमाद् व्यसोरपाकृष्य भुजं महाभुजः ।
अविस्मितोऽयत्नहतारिरुत्स्मयैः प्रसूनवर्षैर्दिविषद्भिरीडितः ॥ ९ ॥

देवर्षिरुपसङ्गम्य भागवतप्रवरो नृप । कृष्णमक्लिष्टकर्माणं रहस्येतदभाषत ॥१०॥
कृष्ण कृष्णाप्रमेयात्मन् योगेश जगदीश्वर । वासुदेवाखिलावास सात्वतां प्रवर प्रभो ॥११॥
त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम् । गूढो गुहाशयः साक्षी महापुरुष ईश्वरः ॥१२॥
आत्मनाऽऽत्माश्रयः पूर्वं मायया ससृजे गुणान् । तैरिदं सत्यसंकल्पः सृजस्यत्स्यवसीश्वरः ॥१३॥
स त्वं भूधरभूतानां दैत्यप्रमथरक्षसाम् । अवतीर्णो विनाशाय सेतूनां रक्षणाय च ॥ १४॥
दिष्टचा ते निहतो दैत्यो लीलयायं हयाकृतिः । यस्य हेषितसंत्रस्तास्त्यजन्त्यनिमिषा दिवम्॥१५॥
चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिनम् । कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो ॥१६॥
तस्यानु शङ्खयवनमुराणां नरकस्य च । पारिजातापहरणमिन्द्रस्य च पराजयम् ॥१७॥
उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्षणम् । नृगस्य मोक्षणं पापाद् द्वारकायां जगत्पते ॥१८॥
स्यमन्तकस्य च मणेरादानं सह भार्यया । मृतपुत्रप्रदानं च ब्राह्मणस्य स्वधामतः ॥१९॥
पौण्ड्रकस्य वधं पश्चात् काशिपुर्याश्च दीपनम् । दन्तवक्त्रस्य निधनं चैद्यस्य च महाक्रतौ ॥२०॥
यानि चान्यानि वीर्याणि द्वारकामावसन् भवान् । कर्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि।२१।
अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै । अक्षौहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथेः॥२२॥

विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवाञ्छितम् ।
स्वतेजसा नित्यनिवृत्तमायागुणप्रवाहं भगवन्तमीमहि ॥२३॥
त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषविशेषकल्पनम् ।
क्रीडार्थमद्यात्तमनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्वताम् ॥२४॥

---

कर्कटिकाफलोपमात् तद्देहतः (ककड़ी) व्यसोः निर्गतप्राणात् । उत्स्मयैः विस्मितैः देवैः रीडितः अविस्मितः गर्वरहितः ॥ ९ ॥ अक्लिष्टेन अक्लेशेन कर्म केशिवधाद्दिकं यस्य ॥ १० ॥ कृष्णेति द्वयम् आत्मा अन्तर्यामी एधसा काष्ठानाम् अन्तर्ज्योतिः अग्निरिव गूढः ॥११॥१२॥ आत्माश्रयः स्वतन्त्रः । आत्मना पुरुषेण प्रेरितया मायया इदं विश्वम् तैः गुणैः अत्सि संहरसि ॥१३॥ भुवं धरन्तीति भूधराः राजानः तद्रूपाणाम् । सेतूनां धर्ममर्यादाम् ॥१४॥ दिष्ट्येति मङ्गलार्थेऽव्ययम् । हेषितेन शब्देन अनिमिषा देवा दिवं स्वर्गम् ॥१५॥ ते त्वया निहतं ॥१६॥ अनु पश्चात् शंखः पञ्चजनः । नरको भौमासुरः । अत्र केवलं संग्रह एव न तु क्रमो विवक्षितः ॥ १७ ॥ पापात् विप्रगोहरणजात् ॥ १८ ॥ द्वारकावासिनः सान्दीपनेर्वा ब्राह्मणस्य ब्राह्मणस्येत्यत्र सम्प्रदानाभावस्तु तस्यैव स्वत्वात् ॥ १९ ॥ पौण्ड्रकोमिथ्यावासुदेवः चैद्यस्य शिशुपालस्य ॥ २० ॥ वीर्याणि चरितानि यानि कर्ता करिष्यत तानीति योज्यम् ॥ २१ ॥ अमुष्य भूभारस्य शेषे षष्ठी निधने सेनाविनाशरूपं तव कर्म द्रक्ष्यामि ॥ २२ ॥ त्वां भगवन्तम् ईमहि शरणं व्रजेम । कथंभूतम् । विज्ञानघनं विज्ञानमूर्तिम् । स्वसंस्थया स्वरूपस्थित्यैव सम्यक् आप्ताः प्राप्ताः सर्वेऽर्थाः कामाः येन । नित्य निवृत्तः मायाकार्यरूपो गुणप्रवाहः संसारो यस्मात् तम् ॥२३॥ विनिर्मिता कृता विशेषाणां महदादीनां कल्पना रचना येन तम् । आत्तो गृहीतो मनुष्यविग्रहो येन तं

### श्रीशुक उवाच

एवं यदुपतिं कृष्णं भागवतप्रवरो मुनिः। प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः ॥२५॥
भगवानपि गोविन्दो हत्वा केशिनमाहवे। पशूनपालयत् पालैः प्रीतैर्व्रजसुखावहः ॥२६॥
एकदा ते पशून् पालांश्चारयन्तोऽद्रिसानुषु। चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः ॥२७॥
तत्रासन् कतिचिच्चोराः पालाश्च कतिचिन्नृप। मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः ॥२८॥
मयपुत्रो महामायो व्योमो गोपालवेषधृक्। मेषायितानपोवाह प्रायश्चोरयितो बहून् ॥२९॥
गिरिदर्यां विनिक्षिप्य नीतं नीतं महासुरः। शिलया पिदधे द्वारं चतुःपञ्चावशेषिताः ॥३०॥
तस्य तत् कर्म विज्ञाय कृष्णः शरणदः सताम्। गोपान् नयन्तं जग्राह वृकं हरिरिवौजसा ॥३१॥
स निजं रूपमास्थाय गिरीन्द्रसदृशं बली। इच्छन् विमोक्तुमात्मानं नाशक्नोद् ग्रहणातुरः ॥३२॥
तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले। पश्यतां दिवि देवानां पशुमारममारयत् ॥३३॥
गुहापिधानं निर्भिद्य गोपान् निःसार्य कृच्छ्रतः। स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥३४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे व्योमासुरवधो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

नतोऽस्मि धुर्यं श्रेष्ठम् ॥ २४ ॥ तेन अभ्यनुज्ञातः दत्ताज्ञः ॥ २५ ॥ आहवे युद्धे ॥२६॥ ते पालाः गोपालाः। निलायनं चोरितवस्तुतिरोधापनम्। अपदेशवः व्याजतः ॥२७॥ मेषायिताः मेषवत् वर्तमानाः विजह्रुः ॥२८॥ चोरायितः स्वयं चोरवत् आचरितः। मेषायितान् अपोवाह चोरयामास ॥२९॥ पिदधे आच्छादितवान्। चत्वारः पञ्च च चतुष्पञ्चाः वशेषिताः बहुव्रीहौ डच्। भागुरिमतेन अकारलोपः ॥३०॥ शरणदः रक्षकः। हरिः सिंहो यथा वृकम्। ओजसा बलेन ॥३१॥ बली अपि इच्छन्नपि रूपमास्थायापि विमोचयितुम्। ण्यर्थः नाशक्नोत् यतो ग्रहणेन आतुरो विवशः ॥३२॥ यज्ञियपशुं यथा मारयति तथा श्वासनिरोधपूर्वकं मुष्टिभिः अमारयत्। 'उपमाने' कर्मणि च इति णमुल् ॥ ३३ ॥ पिधानम् आच्छादनशिलाम् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे गूढार्थदीपिन्यां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अथाष्टात्रिंशोऽध्यायः

### श्रीशुक उवाच

अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः। उषित्वा रथमास्थाय प्रययौ नन्दगोकुलम् ॥ १ ॥
गच्छन् पथि महाभागो भगवत्यम्बुजेक्षणे। भक्तिं परामुपगत एवमेतदचिन्तयत् ॥ २ ॥

---

अष्टत्रिंशे सुतो नेतुमक्रूरो गोकुलं गतः।
सत्कृतो रामकृष्णाभ्यां लेभे तत् चिन्तितं पथि ॥ १ ॥

यस्यामादिष्टः तां रात्रिम् ॥ १ ॥ परां प्रेमलक्षणाम् एतत् वक्ष्यमाणम् ॥ २ ॥ भद्रं पुण्यम्।

किं मयाऽऽचरितं भद्रं किं तप्तं परमं तपः । किं वाथाप्यर्हते दत्तं यद् द्रक्ष्याम्यद्य केशवम् ॥३॥
ममैतद् दुर्लभं मन्य उत्तमश्लोकदर्शनम् । विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥ ४ ॥
मैवं ममाधमस्यापि स्यादेवाच्युतदर्शनम् । ह्रियमाणः कालनद्या क्वचित्तरति कश्चनः ॥ ५ ॥
ममाद्यामङ्गलं नष्टं फलवांश्चैव मे भवः । यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥ ६ ॥

कंसो बताद्याकृत मेऽत्यनुग्रहं द्रक्ष्येऽङ्घ्रिपद्मं प्रहितोऽमुना हरेः ।
कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन् यन्नखमण्डलत्विषा ॥ ७ ॥
यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभिः ससात्वतैः ।
गोचारणायानुचरैश्चरद् वने यद् गोपिकानां कुचकुङ्कुमाङ्कितम् ॥ ८ ॥
द्रक्ष्यामि नूनं सुकपोलनासिकं स्मितावलोकारुणकञ्जलोचनम् ।
मुखं मुकुन्दस्य गुडालकावृतं प्रदक्षिणं मे प्रचरन्ति वै मृगाः ॥ ९ ॥
अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया ।
लावण्यधाम्नो भवितोपलम्भनं मह्यं न न स्यात् फलमञ्जसा दृशः ॥१०॥
य ईक्षिताऽहंरहितोऽप्यसत्सतोः स्वतेजसापास्ततमोभिदाभ्रमः ।
स्वमाययाऽऽत्मन् रचितैस्तदीक्षया प्राणाक्षधीभिः सदनेष्वभीयते ॥११॥
यस्याखिलामीवहभिः सुमङ्गलैर्वाचो विमिश्रा गुणकर्मजन्मभिः ।
प्राणन्ति शुम्भन्ति पुनन्ति वै जगद् यास्तद्विरिक्ताः शवशोभना मताः ॥१२॥

---

तप्तं कृतम् । पाकं पचतीति वन्निदेशः अर्हते सत्पात्राय ॥ ३ ॥ विषयात्मनो मम दर्शनम् दुर्लभं मन्ये ब्रह्मकीर्तनं वेदोच्चारणं यथा शूद्रस्य ॥ ४ ॥ एवं दुर्लभं मा किन्तु अधमस्यापि मम स्यादेव ॥ ५ ॥ भवो जन्म ॥ ६ ॥ बत हर्षे । अमुना कंसेन प्रहितः प्रेषितः । यन्नखमण्डलत्विषा पूर्वे अम्बरीषादयः नमः संसाराख्यम् अतरन-तीर्णाः तत् अङ्घ्रिपद्मं द्रक्ष्ये इत्यन्वयः कृतावतारस्य हरेः इति योज्यम् ॥ ७ ॥ ससात्त्वतैः भक्तसहितैः । अनुचरैः सखिभिः सह यत् वने विचरत् तत् द्रक्ष्ये इति योज्यम् ॥ ८ ॥ मुकुन्दस्य मुखं नूनं द्रक्ष्यामीत्यन्वयः । यतो मृगा मे प्रदक्षिणं[1] गच्छन्ति । कथंभूतं मुखम् । स्मितसहितः अवलोको यस्मिन् अरुणकञ्जनवत् लोचने यस्मिन् तच्च तच्च । गुडालकैः वक्रकेशैः आवृतम् च ॥ ९ ॥ मनुजत्वं प्राप्तवतः विष्णोः लावण्यमूर्तेः अपि यदि उपलम्भनं दर्शनं भविता भविष्यति तर्हि अञ्जसा साक्षात् मम दृशः फलं न स्यादिति न अपि तु स्यादेव यद्वा विष्णोर्लाणवण्ययुक्तं यत् धाम वपुः तस्य ॥ १० ॥ असत्सतोः कार्यकारणयोः ईक्षिता ईक्षणमात्रेण कर्ताऽपि अहम् अहङ्कारेण रहितः । पुनश्च स्वेतजसा चिच्छक्त्या अपास्ताः निराकृताः तम आदयो येन सः एवंभूतोऽपि स्वमायया भक्तवात्सल्येन सदनेषु गोपीगृहेषु विरहन् तदीक्षया गोपीदृष्ट्या अभीयते आसक्तवत् प्रतीयते । कथंभूतः । आत्मन्येव रचितैः प्रकाशितैः प्राणाक्षधीभिः दिव्यविग्रहैः सहितः स व्रजे आस्ते इत्युत्तरेणान्वयः ॥११॥ अखिलेति अखिलपापनिवर्तकैः यस्य गुणादिभिः तिमिश्रा वाचः जगत् प्राणिमात्रं प्राणन्ति जीवयन्ति सफल-जीवनं कुर्वन्ति शोभयन्ति पुनन्ति च स व्रजे आस्ते इति योज्यम् । तद्विरक्ता याः शववत् शोभताः मताः ॥१२॥

---

१. प्रदक्षिणगता श्रेष्ठा यात्रायां मृगपक्षिणः । इत्युक्तेः ।

स चावतीर्णः किल सात्वतान्वये स्वसेतुपालामरवर्यशर्मकृत् ।
यशो वितन्वन् व्रज आस्त ईश्वरो गायन्ति देवा यदशेषमङ्गलम् ॥१३॥
तं त्वद्य नूनं महतां गतिं गुरुं त्रैलोक्यकान्तं दृशिमन्महोत्सवम् ।
रूपं दधानं श्रिय ईप्सितास्पदं द्रक्ष्ये ममासन्नुषसः सुदर्शनाः ॥१४॥
अथावरूढः सपदीशयो रथात् प्रधानपुंसोश्चरणं स्वलब्धये ।
धिया धृतं योगिभिरप्यहं ध्रुवं नमस्य आभ्यां च सखीन् वनौकसः ॥१५॥
अप्यङ्घ्रिमूले पतितस्य मे विभुः शिरस्यधास्यन्निजहस्तपङ्कजम् ।
दत्ताभयं कालभुजङ्गरंहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥१६॥
समर्हणं यत्र निधाय कौशिकस्तथा बलिश्चाप जगन्त्रयेन्द्रताम् ।
यद् वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगन्धिकगन्ध्यपानुदत् ॥१७॥
न मय्युपैष्यत्यरिबुद्धिमच्युतः कंसस्य दूतः प्रहितोऽपि विश्वदृक् ।
योऽन्तर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥१८॥
अप्यङ्घ्रिमूलेऽवहितं कृताञ्जलिं मामीक्षिता सस्मितमार्द्रया दृशा ।
सपद्यपध्वस्तसमस्तकिल्बिषो वोढा मुदं वीतविशङ्क ऊर्जिताम् ॥१९॥

---

सात्वतान्वये यदुकुले । स्वसेतून् धर्ममर्यादाः वर्णाश्रमधर्मान् पालयताम् अमराणां शर्म सुखं करोतीति तथा यत् यशः अशेष मङ्गलं सर्वं श्रेयस्करं देवा गायन्ति ॥१३॥ तं तु अद्य नूनं द्रक्ष्ये इत्यन्वयः । कुतः । उषसः प्रभातसमयाः शुभशकुनां भवन्ति । कथंभूतम् । महतां भक्तानां गतिं गम्यं गुरुम् उपदेष्टारं च । पुनश्च । रूपं दधानम् । कीदृक् तत् । त्रैलोक्ये कान्तं न्सुदरम् । दृशिमतां चक्षुष्मतां महान् उत्सवो यस्मात् । श्रियः आस्पदं चेति विशेषण-त्रयम् ॥१४॥ अथ दर्शनानन्तरं सपदि तत्क्षणमेव रथात् अवतीर्णः सन् अहम् अनयोः चरणम् आभ्यां सह अनयोः सखींश्च नमस्ये इत्यन्वयः । वर्तमानसामीप्ये लट् । धियैव यत् धृतं चिन्ततं ननु-दृष्टम् तत् साक्षादित्यन्वयः । स्वलब्धये स्वरूपज्ञानोय ॥ १५ ॥ अपि किम् हस्तपंकजम् अधास्यत् शिरसि धारयिष्याति । कीदृशम् । कालि-सर्पेण प्रोद्वेजिताना त्रस्तानां नृणां नृभ्यः दत्तात्रयम् ॥१६॥ कौशिकः इन्द्रः यत्र हस्तपङ्कजे[1] । सम्यक् अर्ह्यते पूज्यतेऽनेनेति समर्हणं सङ्कल्पोदकम् यद्वा यच्च श्रमम् अपानुदत् दूरीकृतवान् तत् शिरसि अधास्यत् किमित्य-नुषङ्गः । सौगन्धिकं कमलगन्धि ॥ १७ ॥ मयि अरिबुद्धि न उपैष्यति न करिष्यति । तस्य दूतः तेन प्रहितः प्रेषितोऽपि यतः विश्वदृक् अतो मम चेतसः अन्तर्बहिश्च यत् एतत् ईहितं चेष्टितं तत् ईक्षते । यद्वा । एतस्य जगतः ॥ १८ ॥ अवहितं दण्डवत् पतितं माम् ईक्षिता द्रक्ष्यति तदा अहम् ऊर्जिताम् अधिकतरां मुदं वोढा प्राप्स्यामि । तृनन्तं न तु लुटि उत्तमपुरुषे तु वोढास्मीति स्यात् । कथंभूतः । अपध्वस्त न समस्तं पापं यस्य सः सपदि तत्क्षणमेव ॥१९॥ ज्ञातिं पितृव्यम् न विद्यते अन्यत् दैवतं यस्य तथाभूतं मां परिरप्स्यते आलिङ्गिष्यति तदैव मे आत्मा अन्तःकरणं देहो वा पवित्रीक्रियते बन्धश्च संसृतिलक्षणः अतो देहात् उच्छ्वसिति शिथिली-

---

१, सार्वभौमावतारे पुरन्दरेण भगवतो हस्ते जलं दत्तमिति चक्रवर्ती । अस्य कौशिकत्वं तु हरिवंशतो ज्ञेयम् ।

सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् ।
आत्मा हि तीर्थीक्रियते तदैव मे बन्धश्च कर्मात्मक उच्छ्वसित्यतः ॥२०॥
लब्धाङ्गसङ्गं प्रणतं कृताञ्जलिं मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः ।
तदा वयं जन्मभृतो महीयसा नैवादृतो यो धिगमुष्य जन्म तत् ॥२१॥
न तस्य कश्चिद् दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा ।
तथापि भक्तान् भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥२२॥
किञ्चाग्रजो मावनतं यदूत्तमः स्मयन् परिष्वज्य गृहीतमञ्जलौ ।
गृहं प्रवेश्याप्तसमस्तसत्कृतं सम्प्रक्ष्यते कंसकृतं स्वबन्धुषु ॥२३॥

श्रीशुक उवाच

इति संचिन्तयन् कृष्णं श्वफल्कतनयोऽध्वनि । रथेन गोकुलं प्राप्तः सूर्यश्चास्तगिरिं नृप ॥२४॥
पदानि तस्याखिललोकपालकिरीटजुष्टामलपादरेणोः ।
ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवाङ्कुशाद्यैः ॥२५॥
तद्दर्शनाह्लादविवृद्धसम्भ्रमः प्रेम्णोर्ध्वरोमाश्रुकलाकुलेक्षणः ।
रथादवस्कन्द्य स तेष्वचेष्टत प्रभोरमून्यङ्घ्रिरजांस्यहो इति ॥२६॥
देहंभृतामियानर्थो हित्वा दम्भं भियं शुचम् । संदेशाद् यो हरेर्लिङ्गदर्शनश्रवणादिभिः ॥२७॥
ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ । पीतनीलाम्बरधरौ शरदम्बुरुहेक्षणौ ॥२८॥
किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ । सुमुखौ सुन्दरवरौ बालद्विरदविक्रमौ ॥२९॥
ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम् । शोभयन्तौ महात्मानावनुक्रोशस्मितेक्षणौ ॥३०॥
उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ । पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवाससौ ॥३१॥

---

भविष्यति ॥२०॥ तन्मते वंशोऽनेनेति ततः[1] हे पितः । तनोतेर्निष्ठान्तं रूपम् । जनकभ्रातृत्वात् अनुकम्प्यत्वाद्वा मयि तथोपचर्यते । उरुश्रवा विपुलकीर्तिः । महीयसा श्रीकृष्णेन यो नादृतः अमुष्य तत् जन्म धिक् ॥२१॥ यथा भक्तः तथा सोऽपि भजते । यद्वत् यथा कल्पवृक्षः उपाश्रितः सेवितः अर्थदः फलप्रदो भवति ॥२२॥ अग्रजो बलदेवः स्मयन् ईषद्धसन् सन् अञ्जलौ गृहीतं मां गृहं प्रवश्य कंसकुकृत्यं सम्प्रक्ष्यते इत्यन्वयः । प्राप्तसमस्तसत्कारम् ॥२३॥ श्वफल्कोऽक्रूरपिता ॥२४॥ गोष्ठे व्रजे तस्य पदानि ददर्शेत्यन्वयः । कौतुकानि भूमेः अलङ्कारभूतानि । अब्जादिभिः रेखारूपै विलक्षितानि चिह्नितानि । अखिल लोकपालैः किरीटेषु जुष्टाः धृताः पादरेणुः यस्य तस्य ॥२५॥ विवृद्धः सम्भ्रमः किंकर्तव्यमूढता व्याकुलता यस्य । अश्रुबिन्दुभिः पूर्णे ईक्षणे यस्य सः । अवस्कन्ध अवप्लुत्य । रजांसि इति सम्मानयन् तत्र धूलौ अचेष्टत लुलोट ॥२६॥ कंसस्य सन्देशात् हरेर्दर्शनादिभिः योऽक्रूरस्य जातः एतावानेव अर्थः परमपुरुषार्थः ॥२७ ॥ गावो दुह्यन्तेऽस्मिन्निति गोदोहनं तत्स्थानम् । २८ ॥ द्विरदो गजः । विक्रमो गतिः ॥२९॥ महात्मानौ उदारस्वभावौ । सानुक्रोशं सानुकम्पं स्मितेक्षणं ययोस्तौ ॥३०॥ ॥३१॥ जगत्यर्थे भूभार-

---

१. 'ततोऽनुकम्प्ये जनके' इति मेदिनी ।

प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती । अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ॥३२॥
दिशो वितिमिरा राजन् कुर्वाणौ प्रभया स्वया । यथा मारकतः शैलो रौप्यश्च कनकाचितौ३३॥
रथात्तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः । पपात चरणोपान्ते दण्डवद् रामकृष्णयोः॥३४॥
भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः । पुलकाचिताङ्ग औत्कण्ठयात् स्वाख्याने नाशकन् नृप ३५॥
भगवांस्तमभिप्रेत्य रथाङ्गाङ्कितपाणिना । परिरेभेऽभ्युपाकृष्य प्रीतः सानुजोगृहम् ॥३६॥
संकर्षणश्च प्रणतमुपगुह्य महामनाः । गृहीत्वा पाणिना पाणी अनयत् सानुजो गृहम् ॥३७॥
पृष्ट्वाथ स्वागतं तस्मै निवेद्य च वरासनम् । प्रक्षाल्य विधिवत् पादौ मधुपर्कार्हणमाहरत्॥३८॥
निवेद्य गां चातिथये संवाह्य श्रान्तमादृतः । अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद् विभुः ॥३९॥
तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् । मुखवासैर्गन्धमाल्यैः परां प्रीतिं व्यधात् पुनः ॥४०॥
पप्रच्छ सत्कृतं नन्दः कथं स्थ निरनुग्रहे । कंसे जीवति दाशार्ह सौनपाला इवावयः ॥४१॥
योऽवधीत् स्वस्वसुस्तोकान् क्रोशन्त्या असुतृप् खलः । किं नु स्वित्तत्प्रजानां वः कुशलं विमृशामहे
इत्थं सूनृतया वाचा नन्देन सुसभाजितः । अक्रूरः परिपृष्टेन जहावध्वपरिश्रमम् ॥४३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूरार्द्धेऽक्रूरागमनं नामाष्टत्रिंशोऽध्यायः ॥३८॥

---

हरणार्थम् स्वांशेन निजैश्वर्येण ।३२। मारकतः नीलमणिमयः । रौप्यो रजतमयश्च । वितिमिराः अन्धकारशून्याः दिशः कुर्वाणौ तौ ददर्शेत्यनुषङ्गः ॥३३॥ दण्डवत् यथात् ॥३४॥ बाष्पैः अश्रुभिः पर्याकुले व्याप्ते अक्षिणी यस्य सः । पुलकैः रोमभिः आचितं व्याप्तम् अङ्गं यस्य सः स्वाख्याने स्वपरिचयदाने नाशक्नोत् ॥३५॥ रथाङ्गं चक्रम् ॥३६॥३७॥ मधुपर्कं घृतक्षौद्रदधिभिः 'संभवेन्मुने' इत्यादिपुराणात् । आहरत् समर्पितवान् ॥३८॥ गां मधुपर्काङ्गभूताम् ऋचम् निवेद्य संश्राव्य । केचित्तु गां वासार्थं भूमिं धेनुं वा । संवाह्य पादसेवां कृत्वा । बहुगुणं षड्रसोपेतम् । मेध्यं पवित्रम् ॥३९॥४०॥[१] निरनुग्रहे महाक्रूरे । यूयं कथं स्थ जीवथ । सौनः पशुघाती स एव पालको येषां तादृशाः अवयः मेषाः । सूनावृत्या चरतीति सौनः । सूना पशुमारणं जीवघातस्थानमिति यावत् । हे दाशार्ह यदुवंशिन् ॥४१॥ तोकान् बालान् हे पृथक् पदम् ॥४२॥ सुसभाजितः सुसत्कृतः । परिपृष्टेन परिप्रश्नेन भावे क्तः ॥४३॥

इति श्रीमद्भागवते महापुराणे दशम-स्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यामष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## अथैकोनचत्वारिंशोऽध्यायः

### श्रीशुक उवाच

सुखोपविष्टः पर्यङ्के रामकृष्णोरुमानितः । लेभे मनोरथान् सर्वान् पथि यान् स चकार ह ॥१॥
किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने । तथापि तत्परा राजन् न हि वाञ्छन्ति किंचन ॥ २॥
सायंतनाशनं कृत्वा भगवान् देवकीसुतः । सुहृत्सु वृत्तं कंसस्य पप्रच्छान्यच्चिकीर्षितम् ॥ ३॥

---

नवत्रिंशे हरेर्याने श्रुत्वा गोप्योऽतिविह्वलाः ।
करुणाक्रन्दनं चक्रक्रुरक्रूरा यात्मदर्शनम् ॥ १ ॥

उरु बहु । हर्षे ॥ १॥ किञ्चन भक्त्यतिरिक्तम् । वृत्तं व्यवहारम् । अन्यदपि यत् तच्च ॥ ३ ॥

---

१. नागवल्लीदलं चूर्णं क्रमुकाणां फलानि च । एलालवङ्गकङ्कोलैर्मुखवासं प्रचक्षते ॥

श्रीभगवानुवाच

तात सौम्यागतः कच्चित् स्वागतं भद्रमस्तु वः । अपि स्वज्ञातिबन्धूनामनमीवमनामयम् ॥४॥
किं नु नः कुशलं पृच्छे एधमाने कुलामये । कंसे मातुलनाम्न्यङ्ग स्वानां नस्तत्प्रजासु च ॥ ५ ॥
अहो अस्मदभूद् भूरि पित्रोर्वृजिनमार्ययोः । यद्धेतोः पुत्रमरणं यद्धेतोर्बन्धनं तयोः ॥६॥
दिष्टयाद्य दर्शनं स्वानां मह्यं वः सौम्य काङ्क्षितम् । संजातं वर्ण्यतां तात तवागमनकारणम् ॥७॥

श्रीशुक उवाच

पृष्टो भगवता सर्वं वर्णयामास माधवः । वैरानुबन्धं यदुषु वसुदेववधोद्यमम् ॥ ८ ॥
यत्संदेशो यदर्थं वा दूतः सम्प्रेषितः स्वयम् । यदुक्तं नारदेनास्य स्वजन्मानकदुन्दुभेः ॥ ९ ॥
श्रुत्वाऽक्रूरवचः कृष्णो बलश्च परवीरहा । प्रहस्य नन्दं पितरं राज्ञाऽऽदिष्टं विजज्ञतुः ॥१०॥
गोपान् समादिशत् सोऽपि गृह्यतां सर्वगोरसः । उपायनानि गृह्णीध्वं युज्यन्तां शकटानि च ॥११॥
यास्यामः श्वो मधुपुरीं दास्यामो नृपते रसान् । द्रक्ष्यामः सुमहत् पर्व यान्ति जानपदाः किल ।
एवमाघोषयत् क्षत्त्रा नन्दगोपः स्वगोकुले ॥ १२ ॥
गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिता भृशम् । रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतम् ॥१३॥
काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रियः । स्रंसद्दुकूलवलयकेशग्रन्थ्यश्च काश्चन ॥१४॥
अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः । नाभ्यजानन्निमं लोकमात्मलोकं गता इव ॥१५॥
स्मरन्त्यश्चापराः शौरेरनुरागस्मितेरिताः । हृदिस्पृशश्चित्रपदा गिरः सम्मुमुहुः स्त्रियः ॥१६॥
गतिं सुललितां चेष्टां स्निग्धहासावलोकनम् । शोकापहानि नर्माणि प्रोद्दामचरितानि च ॥१७॥

---

स्वे सुहृदः ज्ञातयः सपिण्डाः बन्धवोऽसपिण्डाः । अपि किम् अनमीवं कुशलम् अनामयम् आरोग्यं चास्ति ॥ ४ ॥ अङ्ग हे अक्रूर । नोऽस्माकं कुलस्यामये वर्धमाने सति नः स्वानां ज्ञातीनां तस्य प्रजासु च किं नु कुशलं ॥५॥ अस्मत् अस्मन्निमित्तम् । आर्ययोः निरपराधयोः मातापित्रोः वृजिनं दुःखम् । योऽहमेव हेतुः तस्मात् ॥ ६ ॥ मह्यं मम वः युष्माकं दर्शनं जातम् एतद् दिष्टया भद्रम् ॥ ७ ॥ माधवः मधुवंशजातत्वात् ॥ ८ ॥ यः संदेशः धनुर्मखव्याजरूपो यस्य । यदर्थं मारणार्थम् स्वयम् अहम् दूतः प्रेषितः आनकदुन्दुभेः वसुदेवात् यत् कृष्णजन्म उक्तं तच्च वर्णयामासेत्यन्वयः । अस्य कृष्णस्य अग्रे ॥ ९ ॥ विजज्ञतुः निवेदयामासतुः ॥ १० ॥ सोऽपि नन्दोऽपि । युज्यन्तां वृषभैरिति शेषः ॥ ११ ॥ रसान् घृतादीन् श्लेषेण 'रसो वै सः' इति श्रुतेः कृष्णबलदेवरूपान् । बहुत्वमादरार्थे । नृपतेः कंसाय । क्षत्त्रा द्वारपालेन सर्वतो घोषितवान् ॥ १२ ॥ १३ ॥- तत्कृतेति श्रवणकृतहृत्तापेन तज्जन्यश्वासेन च मलिना मुखश्रीः यासां ताः । स्रंसंतः शिथिलीभवन्तः दुकूलादयो यासां ताः ॥ १४ ॥ तस्य अनुध्या नं तेन निवृत्ताः अशेषाः चक्षुरादिवृत्तयो यासां ताः बाह्यज्ञानरहिता इत्यर्थः । इमं लोकं देहमपि नाभ्यजानन् स्वरूपं गता इव बभूवुः ॥१५॥ अपराः शौरेः कृष्णस्य गिरः स्मरन्त्यः संमुमुहुरित्यन्वयः । ईरिताः प्रोक्ताः ॥ १६ ॥ नर्माणि परिहासवाक्यानि प्रोद्दामानि दिव्यानि ॥ १७ ॥ संघशः

चिन्तयन्त्यो मुकुन्दस्य भीता विरहकातराः । समेताः सङ्घशः प्रोचुरश्रुमुख्योऽच्युताशयाः ।१८।

गोप्य ऊचुः

अहो विधातस्तव न क्वचिद् दया संयोज्य मैत्र्या प्रणयेन देहिनः ।
तांश्चाकृतार्थान् वियुनङ्क्ष्यपार्थकं विक्रीडितं तेऽर्भकचेष्टितं यथा ।।१९।।
यस्त्वं प्रदर्श्यासितकुन्तलावृतं मुकुन्दवक्त्रं सुकपोलमुन्नसम् ।
शोकापनोदस्मितलेशसुन्दरं करोषि पारोक्ष्यमसाधु ते कृतम् ।।२०।।
क्रूरस्त्वमक्रूरसमाख्यया स्म नश्चक्षुर्हि दत्तं हरसे बताज्ञवत् ।
येनैकदेशेऽखिलसर्गसौष्ठवं त्वदीयमद्राक्ष्म वयं मधुद्विषः ।।२१।।
न नन्दसूनुः क्षणभङ्गसौहृदः समीक्षते नः स्वकृतातुरा बत ।
विहाय गेहान् स्वजनान् सुतान् पतींस्तद्दास्यमद्धोपगता नवप्रियः ।।२२।।
सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवम् ।
याः सम्प्रविष्टस्य मुखं व्रजस्पतेः पास्यन्त्यपाङ्गोत्कलितस्मितासवम् ।।२३।।
तासां मुकुन्दो मधुमञ्जुभाषितैर्गृहीतचित्तः परवान् मनस्व्यपि ।
कथं पुनर्नः प्रतियास्यतेऽबला ग्राम्याः सलज्जस्मितविभ्रमैर्भ्रमन् ।।२४।।
अद्य ध्रुवं तत्र दृशो भविष्यते दाशार्हभोजान्धकवृष्णिसात्वताम् ।
महोत्सवः श्रीरमणं गुणास्पदं द्रक्ष्यन्ति ये चाध्वनि देवकीसुतम् ।।२५।।

---

संधीभूय प्राप्ताः । अच्युते आशयोऽन्तःकरणं यासां ताः ।।१८।। प्रणयेन प्रेम्णा च देहिनः संयोज्य अकृतार्थानेव तान् मध्ये [1]वियुनक्षि वियोजयसि । अतो निर्दयस्त्वम् । ते विक्रीडितम् अपार्थं निष्प्रयोजनमेव यथेति योज्यम् ।।१९।। यस्त्वं वक्त्रं प्रदर्श्य पुनस्तत् पारोक्ष्यमदृश्यतां करोषि । चातुर्वण्यादित्वात् ष्यञ् । अतस्ते कृत्यम् असाधु निन्द्यमित्यर्थः । शोकापनोदः शोकनिवारकः यः गूढहासः तेन सुन्दरम् । कुन्तलैः नीलकेशैः ।।२०।। अक्रूरनाम्ना आगतस्त्वं दत्तमेव चक्षुः हरसे इति दत्तापहारिता महान् दोषः । येन त्वद्दत्तेन चक्षुषा मधुद्विषः एकैकस्मिन् प्रदेशे सकलसृष्टिसौन्दर्यम् अद्राक्ष्म । बत खेदे ।२१। स्वजनादीन् विहाय यस्य दास्यमुपगताः स नन्दसूनुरेव नोऽस्मान् न समीक्षते यतो नवप्रियः अतो वयमेव एनं निवारयामः इत्युत्तरेणान्वयः । स्वकृतेनैव प्रेम्णा आतुराः विवशाः नः द्वितीयान्तम् ।।२२।। या व्रजस्पतेः मुखं पास्यन्ति तासां योषिताम् इयं रजनी सुप्रभाता भविष्यतीत्यन्वयः विप्रैः दत्ताः आशिषश्च सत्याः । कथंभूतम् मुखम् । अपाङ्गेन उत्कलितं क्षरितं स्मितमेव [2]आसवोऽमृतं मद्यं वा संसार-विस्मारकत्वात् यस्मिन् तत् ।।२३।। हे अबलाः । मनस्वी स्वतन्त्रोऽपि भगवान् तासां मधुवत् मधुरभाषणैः भाषितै परवान् परतन्त्रः सन् ग्राम्याः नः अस्मान् प्रति कथं प्रतियास्यते इत्यन्वयः । यतो विभ्रमैः स्मितविलासैः भ्रमन् सर्वं विस्मरन् ।। २४ ।। ये पथि द्रक्ष्यन्ति तेषां [3]दृशो नेत्राणि महोत्सवः भविष्यते प्राप्स्यति । 'भू प्राप्तौ'

---

१. डकाररहित एव पाठः साधुः ।

२. 'आसवोऽमृतमद्ययोः' इति धरणिः ।

३. द्वितीयाबहुवचनम् ।

मैतद्विधस्याकरुणस्य नाम भूवक्रूर इत्येतदतीव दारुणः ।
योऽसावनाश्वास्य सुदुःखितं जनं प्रियात्प्रियं नेष्यति पारमध्वनः ॥२६॥
अनार्द्रधीरेष समास्थितो रथं तमन्वमी च त्वरयन्ति दुर्मदाः ।
गोपा अनोभिः स्थविरैरुपेक्षितं दैवं च नोऽद्य प्रतिकूलमीहते ॥२७॥
निवारयामः समुपेत्य माधवं किं नोऽकरिष्यन् कुलवृद्धबान्धवाः ।
मुकुन्दसङ्गान्निमिषार्धदुस्त्यजाद् दैवेन विध्वंसितदीनचेतसाम् ॥२८॥
यस्यानुरागललितस्मितवल्गुमन्त्रलीलावलोकपरिरम्भणरासगोष्ठ्याम् ।
नीताः स्म नः क्षणमिव क्षणदा विना तं गोप्यः कथं न्वतितरेम तमो दुरन्तम्॥२९॥
योऽह्नः क्षये व्रजमनन्तसखः परीतो गोपैर्विशन् खुररजश्छुरितालकस्रक् ।
वेणुं क्वणन् स्मितकटाक्षनिरीक्षणेन चित्तं क्षिणोत्यमुमृते नु कथं भवेम ॥३०॥

श्रीशुक उवाच

एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः ।
विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द दामोदर माधवेति च ॥३१॥

स्त्रीणामेवं रुदन्तीनामुदिते सवितर्यथ । अक्रूरश्चोदयामास कृतमैत्रादिको रथम् ॥३२॥
गोपास्तमन्वसज्जन्त नन्दाद्याः शकटैस्ततः । आदायोपायनं भूरि कुम्भान् गोरससम्भृतान् ॥३३॥
गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः । प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे ॥३४॥
तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः । सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैः ॥३५॥

---

इत्यस्मात् । दाशार्हाः यदूनामवान्तरभेदाः ॥ २५ ॥ एषा विधा विधानं क्रूरकर्म यस्य तस्य एतद्विधस्य । क्रूरस्य अक्रूर इति नाम मा भूत न युक्तम् । प्रियात् प्राणादपि प्रियं श्रीकृष्णमध्वनः पारं दूरदेशं नेष्यति ॥२६॥ अनार्द्रधीः कठोरचित्तः एष कृष्णः रथमास्थितः । तम् अनु दुर्मदा उन्मत्ता गोपाः अनोभिः शकटैः त्वरां कुर्वन्ति । स्थविरैः बृद्धैरपि उपेक्षितम् । दैवं च नोऽस्माकं प्रतिकूलं यथा स्यात्तथा ईहते चेष्टते । अनुकूलत्वे च म्रियेत कश्चित् येन यात्रा स्थगिता भवेदित्यर्थः ॥ २७ ॥ नोऽस्माकं बान्धवाः किम् अकरिष्यन् किं करिष्यन्ति । कथंभूतानाम् । मुकुन्दसङ्गात् वियोजितानि अत एव दीनानि चेतांसि यासां तासाम् ॥ २८ ॥ अनुरागेण ललितस्मितादीनि यस्यां सा चासौ रासगोष्ठी तस्यां क्षणदा रात्र्यः क्षणमिव व्यतीताः तं विना दुरन्तम् अपारं तमः विरहदुःखं कथं नु अतितरेमेत्यन्वयः । स्मेत्याश्चर्ये । वल्गुः मनोहरः मन्त्रः सुरतालापः कटाक्षपातः परिरम्भणम् आलिङ्गनं च । क्षणं सुरतानन्दं ददाति । क्षणं क्षणं द्यति खण्डयतीति वा क्षणदाशब्दार्थः ॥ २९ ॥ यः अह्नः क्षये सायङ्काले व्रजं विशन् वेणुं क्वणन् वादयन् निरीक्षणेन चित्तं क्षिणोति अपहरति तम् अमुम् श्रीकृष्णम् ऋते विना कथं नु भवेम जीवेमेत्यन्वयः । खुर रजोभिः छुरिता व्याप्ताः अलकाः स्रजश्च यस्य 'छुरितं । व्यापने छेदे' । इति निरुक्तेः ॥३०॥ सुस्वरम् उच्चैः । स्मेति लोकाकर्षणे । माधवेति चेति चकारयुक्तः पाठ साधुः ॥ ३१ ॥ कृतं मैत्रं सूर्यदेवताकं सन्ध्योपासनादिकृत्यं येन सः ॥३२॥ गोपाः तं श्रीकृष्णम् अन्वषज्जन्त अन्वगच्छन् ॥३३॥ तेन अनुरञ्जिताः सन्तोषिताः एष्यामीति कटाक्षसङ्केतेन । प्रत्यादेशं गमनप्रत्याख्यानम् ॥३४॥ पुनश्च दौत्यकैः दूतवचनैश्च । कर्मणि ष्यञ् अनुकम्पायां कन् ॥ ३५ ॥ लेख्यानि काष्ठपुत्तलिका इव निश्चेष्टाः सत्यः । आत्मा

यावदालक्ष्यते केतुर्यावद् रेणू रथस्य च । अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिताः ॥३६॥
ता निराशा निववृतुर्गोविन्दविनिवर्तने । विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितम् ॥३७॥
भगवानपि सम्प्राप्तो रामाक्रूरयुतो नृप । रथेन वायुवेगेन कालिन्दीमघनाशिनीम् ॥३८॥
तत्रोपस्पृश्य पानीयं पीत्वा मृष्टं मणिप्रभम् । वृक्षषण्डमुपव्रज्य सरामो रथमाविशत् ॥३९॥
अक्रूरस्तावुपामन्त्र्य निवेश्य च रथोपरि । कालिन्द्या ह्रदमागत्य स्नानं विधिवदाचरत् । ४०॥
निमज्ज्य तस्मिन् सलिले जपन् ब्रह्म सनातनम् । तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥४१॥
तौ रथस्थौ कथमिह सुतावानकदुन्दुभेः । तर्हि स्वित् स्यन्दने न स्त इत्युन्मज्ज्य व्यचष्ट सः ।४२।
तत्रापि च यथापूर्वमासीनौ पुनरेव सः । न्यमज्जद् दर्शनं यन्मे मृषा किं सलिले तयोः ॥४३॥
भूयस्तत्रापि सोऽद्राक्षीत् स्तूयमानमहीश्वरम् । सिद्धचारणगन्धर्वैरसुरैर्नतकन्धरैः ॥४४॥
सहस्रशिरसं देवं सहस्रफणमौलिनम् । नीलाम्बरं बिसश्वेतं शृङ्गैः श्वेतमिव स्थितम् ॥४५॥
तस्योत्सङ्गे घनश्यामं पीतकौशेयवाससम् । पुरुषं चतुर्भुजं शान्तं पद्मपत्रारुणेक्षणम् ॥४६॥
चारुप्रसन्नवदनं चारुहासनिरीक्षणम् । सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥४७॥
प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियम् । कम्बुकण्ठं निम्ननाभिं वलिमत्पल्लवोदरम् ॥४८॥
बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् । चारुजानुयुगं चारुजङ्घायुगलसंयुतम् ॥४९॥
तुङ्गगुल्फारुणनखव्रातदीधितिभिर्वृतम् । नवाङ्गुल्यङ्गुष्ठदलैर्विलसत्पादपङ्कजम् ॥५०॥
सुमहार्हमणिव्रातकिरीटकटकाङ्गदैः । कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः ॥५१॥
भ्राजमानं पद्मकरं शङ्खचक्रगदाधरम् । श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥५२॥
सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः । सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥५३॥

---

चित्तम् ॥ ३६ ॥ अहनी रात्र्यहनी ॥ ३७ ॥ सम्प्राप्तः मध्याह्नसमये । प्राप्तो मध्याह्नसमये इति विष्णु पुराणोक्तेः । विलम्बस्तु मार्गावरोधतया ॥ ३८ ॥ मणिः नीलमणिः । मृष्टं निर्मलम् षण्डे समूहम् सरामः कृष्णः ॥ ३९ ॥ उपामन्त्र्य पृष्ट्वा ह्रदम् अनन्ततीर्थाख्यं तीरम् ॥४०॥ ब्रह्म गायत्रीम् जपन् ॥ ४१ ॥ स्वित् वितर्के ॥४२॥ तत्रापि रथेऽपि ॥४३॥ तत्रापि जलेऽपि स्तूयमानम् अहीश्वरं श्रीशेषम् अद्राक्षीत् ॥४४॥ तं वर्णयति । सहस्रफणेषु मौलयः किरीटानि यस्य सन्तीति । 'व्रीह्यादित्वादिनिः । बिसवत् कमलनालवत् श्वेतं कैलासमिव स्थितम् ॥ ४५ ॥ तस्य शेषस्य उत्सङ्गे पुरुषं विलोक्य सात्वतः अक्रूरः अस्तौषीदित्येका-दशेनान्वयः ॥४६॥ तं वर्णयति । हासेन युक्तम् निरीक्षणं यस्य । शोभने भ्रुवौ उन्नता नासिका च यस्य ॥४७॥ तुङ्गौ अंसौ यस्य उरःस्थले श्री रेखारूपा यस्य । कम्बुः शंखः तद्वत् रेखात्रयाङ्कितः कण्ठो यस्य । वलयः तिर्यक् रेखा । पल्लववत् अश्वत्थदलवत् उदरं यस्य ॥४८॥ कटितटं नितम्बः श्रोणिः कटिः ताभ्यां हस्तिशुण्डासदृशेन ऊरुद्वयेन च युक्तम् ॥४९॥ तुङ्गौ ईषदुन्नतौ गुल्फौ अरुणनखानां व्रातः समूहश्च तेषां दीधितिभिः किरणैः वृतम् । नवाः कोमलाः अङ्गुलय अङ्गुष्ठौ च तान्येव दलानि तैः विलसन्ती पादपङ्कजे यस्य ॥५०॥ सुमहार्हा अमूल्याः मणिसमूहाः येषु तैः किरीटादिभिः भ्राजमानम् । कटिसूत्रं काञ्ची तदादिभिश्च ॥५१॥५२॥ नवभिः मरीच्या-

प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः । स्तूयमानं पृथग्भावैर्वचोभिरमलात्मभिः ॥५४॥

श्रिया पुष्टया गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया ।
विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥ ५५ ॥

विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः । हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥५६॥

गिरा गद्गदयास्तौषीत् सत्त्वमालम्ब्य सात्वतः । प्रणम्य मूर्ध्नावहितः कृताञ्जलिपुटः शनैः ।५७।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धेऽक्रूरप्रतियाने एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

दिभिः स्तूयमानमुत्तरेणान्वेति ॥५३॥५४॥ श्रीः सम्पत् तदादिभिः निषेवितम् । इला भूमिः ऊर्जा सामर्थ्यरूपा शक्तिः ॥ ५५ ॥ हृष्यन्ति प्रादुर्भूतानि तनूरुहाणि रोमाणि यस्य । भावेन परिक्लिन्नः द्रवीभूतः आत्मा लोचने च यस्य ॥ ५६ ॥ अवहितः सावधानश्च सन् अस्तावीदिति स्यात् ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यामेकोनचत्वारिंशोऽध्यायः ।

## अथ चत्वारिंशोऽध्यायः

### अक्रूर उवाच

नतोऽस्म्यहं त्वाखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम् ।
यन्नाभिजातादरविन्दकोशाद् ब्रह्माऽऽविरासीद् यत एष लोकः ॥ १ ॥

भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इन्द्रियाणि ।
सर्वेन्द्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽङ्गभूताः ॥ २ ॥

नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽनात्मतया गृहीताः ।
अजोऽनुबद्धः स गुणैरजाया गुणात् परं वेद न ते स्वरूपम् ॥ ३ ॥

त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम् । साध्यात्मं साधिभूतं च साधिदैवं च साधवः ॥ ४ ॥

त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजाः । यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ॥ ५ ॥

---

चत्वारिंशेऽखिलाचार्यैर्नानामार्गैरुपासितम् ।
तुष्टाव श्रद्धयाऽक्रूरो निर्गुणं सगुणं हरिम् ॥

त्वा त्वाम् । अखिलस्य विश्वस्य हेतवो महदादयः तेषामपि हेतुम् ॥ १ ॥ खम् आकाशम् तस्य आदिः कारणम् अहङ्कारः । महान् महत्तत्त्वम् । अजा माया तस्या आदि पुरुषः । अर्थाः शब्दादयः विबुधाः इन्द्रियाधिष्ठातारः । अङ्गात् श्रीमूर्तेः भूताः जाताः ॥ २ ॥ आत्मनः परमात्मनः अजा प्रकृति । अनातमतया जडत्वेन हेतुना । अजो ब्रह्मापि ॥ ३ ॥ अद्धा साक्षात् । साध्यात्मेतिआत्मनि शरीरे भवमध्यात्मं तेन सहितं साध्यात्मं साकल्येऽव्ययीभावः । अनश्चेति टच् । देहावस्थितेन पञ्चभूतावस्थितेन आदित्यमण्डलावस्थितेन च रूपेण सहितमिति तेषां साक्षिणम् इति क्रमेणार्थाः ॥ ४ ॥ त्रय्या वेदत्रय्या । वैतानिकाः याज्ञिकाः । नानारूपा ये अमरा इन्द्रादयः तेषां नाम्ना ॥ ५ ॥ एके योगिनः

एके त्वाखिलकर्माणि संन्यस्योपशमं गताः। ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रहम् ॥ ६ ॥
अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते। यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्यैकमूर्तिकम् ॥७॥
त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम्। बह्वाचार्यविभेदेन भगवन् समुपासते ॥ ८ ॥
सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम्। येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ॥ ९ ॥
यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो। विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्ततः ॥१०॥
सत्त्वं रजस्तम इति भवतः प्रकृतेर्गुणाः। तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः ॥११॥

तुभ्यं नमस्तेऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधियां च साक्षिणे।
गुणप्रवाहोऽयमविद्यया कृतः प्रवर्तते देवनृतिर्यगात्मसु ॥ १२ ॥
अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभिरथो दिशः श्रुतिः।
द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवाः कुक्षिर्मरुत् प्राणबलं प्रकल्पितम् ॥ १३ ॥
रोमाणि वृक्षौषधयः शिरोरुहा मेघाः परस्यास्थिनखानि तेऽद्रयः।
निमेषणं रात्र्यहनी प्रजापतिर्मेढ्रस्तु वृष्टिस्तव वीर्यमिष्यते ॥ १४ ॥
त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता लोकाः सपाला बहुजीवसंकुलाः।
यथा जले सञ्जिहते जलौकसोऽप्युदुम्बरे वा मशका मनोमये ॥ १५ ॥

यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि। तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः ॥१६॥
नमः कारणमत्स्याय प्रलयाब्धिचराय च। हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥१७॥
अकूपाराय बृहते नमो मन्दरधारिणे। क्षित्युद्धारविहाराय नमः सूकरमूर्तये ॥१८॥
नमस्तेऽद्भुतसिंहाय साधुलोकभयापह। वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च ॥१९॥
नमो भृगूणां पतये दृप्तक्षत्रवनच्छिदे। नमस्ते रघुवर्याय रावणान्तकराय च ॥२०॥

---

त्वा त्वां यजन्ति। संन्यस्य समर्प्य ज्ञानयज्ञेन समाधिना ॥६॥ संस्कृतात्मनः दीक्षिताः सन्तः। ते त्वया प्रोक्तेन पञ्चरात्रादिविधिना। बहुत्वं चतुर्व्यूहाभिप्रायेण ॥७॥ अन्ये शैवाः। भेदेन पाशुपतादिभेदेन समुपासते ॥ ८ ॥ अन्यदेवताः क्षुद्रदेवताः ॥ ९ ॥ गतयः भजनमार्गाः त्वामेव ॥ १० ॥ प्राकृताः प्रकृतिकार्योपाधयः स्थावरादयो ब्रह्मपर्यन्ता जीवाः तेषु गुणेषु प्रोताः ॥११॥ ते त्वां प्राप्तुं तुभ्यं नमः। अविषक्ता निर्लिप्ता। गुणैः प्रोह्यते संचाल्यते संसारः। आत्मसु तत्तद्देहाभिमानिषु ॥१२॥ अवनिः पृथ्वी। ईक्षणं चक्षुः। द्यौः सत्यलोकः तव कं मूर्धा। मरुत् वायुः तत्र प्राणो बलं चेति ॥ १३ ॥ परस्य परमेश्वरस्य ते। निमेषणपदेन उन्मेषोऽपि स्मार्यते एकसम्बन्धिज्ञानस्य अपरसम्बन्धिस्मारकत्वनियमात् घटघटत्वयोरिति वत् तथा च निमेषो रात्रिः उन्मेषोऽहश्चेति प्रजापतिः दक्षो ब्रह्मा वा। वीर्यं रेतः ॥१४॥ हे अव्ययात्मन्। न व्येति नश्यति आत्मा देहो यस्येति। बहुजीवैः जरायुजादिभिः संकुला व्याप्ता सर्वे लोकाः त्वय्येव कल्पिता यथा जलौकसः जलजन्तवः जले सञ्जिहते प्रचलन्ति यथा च उदुम्बरे मशकाः सूक्ष्मकीटाः एवं त्वयि कल्पिता इति योज्यम्। मनोमये मनोवृत्तिग्राह्ये त्वयि ॥१५॥ तैः चिन्तितैः रूपैः आमृष्टशुचः निवारितशोकाः जनाः ॥१६॥१७॥ अकूपाराय कूर्माय ॥१८॥१९॥ दृप्तं क्षत्रं क्षत्रियकुलमेव वनं तच्छिनत्तीति तस्मै परशुरामाय ॥ २० ॥ सात्वतां यदूनां भक्तानां वा ॥२१॥२२॥ असक्ति

नमस्ते वासुदेवाय नमः संकर्षणाय च। प्रद्युम्नायाऽनिरुद्धाय सात्वतां पतये नमः ॥२१॥
नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने। म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे ॥२२॥
भगवञ्जीवलोकोऽयं मोहितस्तव मायया। अहंममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु ॥२३॥
अहं चात्मात्मजागारदारार्थस्वजनादिषु। भ्रमामि स्वप्नकल्पेषु मूढः सत्यधिया विभो ॥२४॥
अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम्। द्वन्द्वारामस्तमोविष्टो न जाने त्वाऽऽत्मनः प्रियम्॥२५
यथाऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः। अभ्येति मृगतृष्णां वै तद्वत्त्वाहं पराङ्मुखः ॥२६॥
नोत्सहेऽहं कृपणधीः कामकर्महतं मनः। रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः ॥२७॥

सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं तच्चाप्यहं भवदनुग्रह ईश मन्ये।
पुंसो भवेद् यर्हि संसरणापवर्गस्त्वय्यब्जनाभ सदुपासनया मतिः स्यात् ॥ २८ ॥

नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे। पुरुषेशप्रधानाय ब्रह्मणेऽनन्तशक्तये ॥२९॥
नमस्ते वासुदेवाय सर्वभूतक्षयाय च। हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ॥३०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धेऽक्रूरस्तुतिर्नाम चत्वारिंशोऽध्यायः ॥४१॥

---

देहादौ असन् मिथ्याभूतो वा ग्राहः आग्रहः अभिनिवेशो यस्य सः ॥ २३ ॥ आत्मा देहः। स्वप्नकल्पेषु स्वप्नतुल्येषु ॥२४॥ अनित्ये कर्मफले नित्यमिति अनात्मनि देहे आत्मेति दुःखरूपे गृहादौ सुखमिति। तमोऽज्ञानम् त्वा त्वाम् ॥२५॥ तदुद्भवैः जलोद्भवैः तृणशैवालादिभिः आच्छन्नं जलं हित्वा मृगतृष्णां मरीचिकां जलाभासरूपामनुधावति तद्वत् तथा त्वा हित्वा पराङ्मुखो देहाभिमुखो वर्ते ॥ २६ ॥ प्रमाथिभिः अतिबलिष्ठैः इन्द्रियैः आकृष्यमाणं मनो निरोद्धुं नोत्सहे न शक्नोमि ॥ २७ ॥ अङ्घ्रि[1] अङ्घ्रिम् उपगतः। तच्चापि अङ्घ्र्युपगमनम् भवदनुग्रहः।[2] यदि त्वयि मतिः तदैव संसारात् मोक्षः स्यात् नान्यथा ॥२८॥ मात्रा स्वरूपम्। प्रत्ययो ज्ञानम्। पुरुषेति पुरुष-काल-प्रकृतिरूपाय ॥ २९ ॥ सर्वभूतानां क्षयो निवासो लयो वा यस्मिन् तस्मै ते नमः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां चत्वारिंशोऽध्यायः ॥ ४० ॥

## अथैकचत्वारिंशोऽध्यायः

### श्रीशुक उवाच

स्तुवतस्तस्य भगवान् दर्शयित्वा जले वपुः। भूयः समाहरत् कृष्णो नटो नाट्यमिवात्मनः ॥१॥
सोऽपि चान्तर्हितं वीक्ष्य जलादुन्मज्ज्य सत्वरः। कृत्वा चावश्यकं सर्वं विस्मितो रथमागमत् ।२।

---

रजकं हतवानेकचत्वारिंशे विशन् पुरीम्।
वायकस्य सुदाम्नश्चानुग्रहं कृतवान् हरिः ॥ १ ॥

आत्मनो वपुः रूपम् भूयः। समाहरत् उपसंहृतवान् नाट्यं नटविषयकं रूपम् ॥१॥ सोऽपि अक्रूरोऽपि।

---

१. 'सुपां सुलुक्' इत्यमो लुक्।
२. 'इति अहं मन्ये' इति शब्दाध्याहारेण प्रथमा समाधेया।

तमपृच्छद्धृषीकेश किं ते दृष्टमिहाद्भुतम् । भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥३॥

अक्रूर उवाच

अद्भुतानीह यावन्ति भूमौ वियति वा जले । त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ॥४॥

यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले । तं त्वानुपश्यतो ब्रह्मन् किं मे दृष्टमिहाद्भुतम् ॥५॥

इत्युक्त्वा चोदयामास स्यन्दनं गान्दिनीसुतः । मथुरामनयद् रामं कृष्णं चैव दिनात्यये ॥६॥

मार्गे ग्रामजना राजंस्तत्र तत्रोपसंगताः । वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः ॥७॥

तावद् व्रजौकसस्तत्र नन्दगोपादयोऽग्रतः । पुरोपवनमासाद्य प्रतीक्षन्तोऽवतस्थिरे ॥८॥

तान् समेत्याह भगवानक्रूरं जगदीश्वरः । गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥९॥

भवान् प्रविशतामग्रे सहयानः पुरीं गृहम् । वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ॥१०॥

अक्रूर उवाच

नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो । त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ॥११॥

आगच्छ याम गेहान् नः सनाथान् कुर्वधोक्षज । सहाग्रजः सगोपालैः सुहृद्भिश्च सुहृत्तम ॥१२॥

पुनीहि पादरजसा गृहान् नो गृहमेधिनाम् । यच्छौचेनानुतृप्यन्ति पितरः साग्नयः सुराः ॥१३॥

अवनिज्याङ्घ्रियुगलमासीच्छ्लोक्यो बलिर्महान् । ऐश्वर्यमतुलं लेभे गतिं चैकान्तिनां तु या ॥१४॥

आपस्तेऽङ्घ्र्यवनेजन्यस्त्रींल्लोकाञ्छुचयोऽपुनन् । शिरसाधत्त याः शर्वः स्वर्याताः सगरात्मजाः१५

देवदेव जगन्नाथ पुण्यश्रवणकीर्तन । यदूत्तमोत्तमश्लोक नारायण नमोऽस्तु ते ॥१६॥

श्रीभगवानुवाच

आयास्ये भवतो गेहमहमार्यसमन्वितः । यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियम् ॥१७॥

---

आवश्यकं सन्ध्याबन्दनादि ॥२॥ ते त्वया । तथा त्वां दृष्टवन्तम् अनुमिनुमः ।३॥ वियति आकाशे । तानि त्वयि सन्त्येव अतस्त्वां पश्यतः मे मम शेषे षष्ठी । किं न दृष्टं सर्वमपि दृष्टम् ॥ ४ ॥ यत्र त्वयि अद्भुतानि सन्ति तं त्वाम् अद्भुताधिष्ठानं पश्यतो मे त्वत्तोऽन्यत् भूम्यादिषु किमद्भुतं न किमपीत्यर्थः ॥५॥ गान्दिनी अक्रूरमाता । दिनात्यये[1] उत्तरभागे अपराह्णे न तु सायङ्काले ॥ ६ ॥ उपसङ्गता मिलिताः । तत्र तत्र कृष्णे रामे च लग्नां दृष्टिम् न आददुः न प्रत्याजह्रुः यावत् ते आयान्ति तावत् प्रतीक्षमाणाः सन्तः स्थिताः ॥८॥ तान् नन्दादीन् । प्रश्रितं विनीतम् अक्रूरमाह ॥९॥ पुरीं ततः स्वगृहं च । वयं तु अवमुच्य वस्तूनि उत्तार्य विश्रम्य च । ततोऽथ त्वत्प्रवेशान्तरम् ॥१०॥११॥ स अग्रज इत्यत्र सह गोपालैरित्यत्र चान्वेति 'बहुलं छन्दसि' इति नियमात् व्यवहितयोरपि स सहशब्दयोः पूर्वोत्तरभागेनान्वयः कार्यः । तथा च स; अग्रजस्त्वं गोपालैः सह आगच्छ । सर्वे वयं सहैव याम गमिष्यामः । एवं गमनेन नोऽस्मान् गेहांश्च सनाथान् कुरु इत्यन्वयः । यद्वा । सगोपालैरित्यत्र साकल्येऽव्ययीभावः । 'तृतीयासप्तम्योर्बहुलम्' इत्यादेशविकल्प इति वंशीधरी । सुहृद्भिः पित्रादिभिः ॥ १२ ॥ यच्छौचेन पादप्रक्षालितजलेन ॥ १३ ॥ अवनिज्य प्रक्षाल्य । श्लोक्यः प्रशंसनीयः । एकान्तिनाम् अनन्यभक्तानां या गतिः मुक्तिः तां च लेभे ॥ १४ ॥ अङ्घ्र्यवनेजन्यः पादप्रक्षालनकर्त्र्यः आपः लोकान् लोकस्थान् अपुनन् । या अपः शिवोऽधत्त स्वर्याताः याभिरिति शेषः ॥१५॥ पुण्ये पुण्यप्रापके श्रवणकीर्तने यस्य ॥१६॥ चक्रं कुलम् द्रुहं कंसं

श्रीशुक उवाच

एवमुक्तो भगवता सोऽक्रूरो विमना इव । पुरीं प्रविष्टः कंसाय कर्मावेद्य गृहं ययौ ॥१८॥
अथापराह्ले भगवान् कृष्णः संकर्षणान्वितः । मथुरां प्राविशद् गोपैर्दिदृक्षुः परिवारितः ॥१९॥

ददर्श तां स्फाटिकतुङ्गगोपुरद्वारां बृहद्धेमकपाटतोरणाम् ।
ताम्रारकोष्ठां परिखादुरासदामुद्यानरम्योपवनोपशोभिताम् ॥२०॥
सौवर्णशृङ्गाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम् ।
वैदूर्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥२१॥
जुष्टेषु जालामुखरन्ध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम् ।
संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्याङ्कुरलाजतण्डुलाम् ॥२२॥
आपूर्णकुम्भैर्दधिचन्दनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः ।
सवृन्तरम्भाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां सपट्टिकैः ॥२३॥
तां सम्प्रविष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना ।
द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः ॥२४॥
काश्चिद् विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः ।
कृतैकपत्रश्रवणैकनूपुरा नाङ्क्त्वा द्वितीयं त्वपराश्च लोचनम् ॥२५॥

---

वितरिष्ये दास्यामि । विपूर्वस्तरतिर्दाने इति व्याडिः ॥१७॥१८॥ अथ अक्रूरप्रेषणोत्तरम् गोपैः परिवारितः इत्यत्रान्वेति ॥१९॥ गोपुराणि पुरद्वाराणि गृहद्वाराणि च यस्याम् । एकदेशन्यायेन आरपदेन आरकूटः पित्तलम् ॥२०॥ निष्कुटो गृहोद्यानम् बृहन्ति हेममयानि कपाटादीनि यस्याम् कृष्णः तां मथुरां ददर्शेत्यन्वयः । कीदृशीम् सुवर्णमयशृङ्गाटकादिभिः उपस्कृताम् अलंकृताम् । पुनश्च वैदूर्यादिरत्नैः जुष्टेषु वलभ्यादिषु आविष्टैः उपविष्टैः कपोतैः बर्हिभिः मयूरैश्च नादिताम् । पुनश्च । संसिक्तानि रथ्यादीनि यस्याम् । पुनश्च प्रकीर्णाः माल्यादयो यस्यां तां तथोक्तम् । सौवर्णेति द्वयम् । शृङ्गाटकं चतुष्पथं हर्म्यं धनिकगृहम् । श्रेण्यः एकशिल्पोपजीविनः कुट्टिमं मणिनद्धभूमिः । वज्रं हीरकः अमलः स्फटिकः । जालेति गवाक्षछिद्राणि । वलभी चन्द्रशालिका छज्जा) इति । वेदयोऽत्र गृहाग्रे विश्रामभूमयः (चबूतरा) इति ॥२१॥२२॥ पुनश्च कीदृशीम् । स्वलङ्कृतद्वारा गृहाः यस्यां ताम् । कैः । आपूर्णकुम्भादिभिः । वृन्तं[1] पुष्पादिगुच्छः । क्रमुकः पूगः इति । पट्टिका ( झण्डी ) इति ॥२३॥ तां मथुरां [2]सम्प्रविष्टौ तौ द्रष्टुं याः साधारण्यः स्त्रियः ताः समीयुः सम्मुखमाजग्मुः याश्च कुलाङ्गनाः ताश्च हर्म्याणि आरुरुहुरिति योज्यम् । हे नृप ।२४। युगनम् विपर्यक् विपरीतं यथा स्यात्तथा धृतानि वस्त्रादीयाभिः । युगलेषु धार्यमाणेषु कुण्डलादिषु एकं विस्मृत्य एकमेव धृत्वा समीयुरित्यनुषङ्गः । कथंभूताः——एकमेव पत्रं ययोस्ते श्रवणे यासाम् एकमेव नूपुरं यासां ताश्च ताश्च । नाङ्क्त्वा अञ्जनरहितं कृत्वा । एका काश्चित् निःस्वनं निशम्य तत् भोजनम् अपास्य त्यक्त्वा समीयुः ।

---

१. 'वृन्तं प्रसवबन्धनम्' इत्यमरात् प्रसवस्य पुष्पफलत्रस्येत्यर्थात् गुच्छ एव आयाति अतो वृन्देत्यपपाठः ।
२. द्वितीयान्तम् ।

अश्नन्त्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः ।
स्वपन्त्य उत्थाय निशम्य निःस्वनं प्रपाययन्त्योऽर्भमपोह्य मातरः ॥२६॥
मनांसि तासामरविन्दलोचनः प्रगल्भलीलाहसितावलोकनैः ।
जहार मत्तद्विरदेन्द्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवम् ॥२७॥
दृष्ट्वा मुहुःश्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः ।
आनन्दमूर्तिमुपगुह्य दृशाऽऽत्मलब्धं हृष्यत्त्वचो जहुरनन्तमरिंदमाधिम् ॥२८॥
प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखाम्बुजाः । अभ्यवर्षन् सौमनस्यैः प्रमदा बलकेशवौ ॥२९॥
दध्यक्षतैः सोदपात्रैः स्रग्गन्धैरभ्युपायनैः । तावानर्चुः प्रमुदितास्तत्र तत्र द्विजातयः ॥३०॥
ऊचुः पौरा अहो गोप्यस्तपः किमचरन् महत् । या ह्येतावनुपश्यन्ति नरलोकमहोत्सवौ ॥३१॥
रजकं कंचिदायान्तं रङ्गकारं गदाग्रजः । दृष्टवाऽयाचत वासांसि धौतान्यत्युत्तमानि च ॥३२॥
देह्यावयोः समुचितान्यङ्ग वासांसि चार्हतोः । भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥३३॥
स याचितो भगवता परिपूर्णेन सर्वतः । साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥३४॥
ईदृशान्येव वासांसि नित्यं गिरिवनेचराः । परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥३५॥
याताशु बालिशा मैवं प्रार्थ्यं यदि जिजीविषा । बध्नन्ति घ्नन्ति लुम्पन्ति दृप्तं राजकुलानि वै ।३६।
एवं विकत्थमानस्य कुपितो देवकीसुतः । रजकस्य कराग्रेण शिरः कायादपातयत् ॥३७॥
तस्यानुजीविनः सर्वे वासःकोशान् विसृज्य वै । दुद्रुवुः सर्वतो मार्गं वासांसि जगृहेऽच्युतः ।३८।
वसित्वाऽऽत्मप्रिये वस्त्रे कृष्णः संकर्षणस्तथा । शेषाण्यदत्त गोपेभ्यो विसृज्य भुवि कानिचित्३९
ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत् । विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपतः ॥४०॥
नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः । स्वलंकृतौ बालगजौ पर्वणीव सितेतरौ ॥४१॥
तस्य प्रसन्नो भगवान् प्रादात् सारूप्यमात्मनः । श्रियं च परमां लोके बलैश्वर्यस्मृतीन्द्रियम् ।४२।
ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः । तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ।४३।

अभ्यज्यमाना उद्वर्तनं कुर्वाणाः । अर्भं बालम् अपोह्य अपास्य ॥२५।२६॥ भगवान् कृष्णः प्रगल्भैः उत्कटैः मन्दस्मितैः कटाक्षपातैश्च तासां मनांसि जहारेत्यन्वयः । किं कुर्वन् । श्रियं रमयतीति श्रीरमणः तेन आत्मना वपुषा दिव्यविग्रहेण तासां दृशाम् उत्सवं ददत् हर्षं जनयन् सन् । द्विरदेन्द्रः मत्तगजः तद्वत् विक्रमः गतिर्यस्य सः ॥२७॥ मुहुः श्रुतं तं श्रीकृष्णं दृष्ट्वा अनुद्रुतचेतसः प्रमदाः सद्यः झटिति दृशा नेत्रद्वारेण आत्मनि लब्धम् उपगुह्य अनन्तम् आधि जहुरित्यन्वयः । कथंभूतास्ता । तत्प्रेक्षणपूर्वकं स्मितमेव अमृतसेचनं तेन लब्धः सम्मानो याभिस्ताः ॥ २८ ॥ सौमनस्यैः कुसुमसमूहैः अभ्यवर्षन् । प्रीत्या उत्फुल्लानि विकसितानि मुखाम्बुजानि यासां ताः ॥२९॥ अभ्युपायनैः मिष्टान्नफलादिभिः आनर्चुः । उदपात्रं पादप्रक्षालनार्थम् ॥ ३० ॥ पौराः नागरिकाः स्त्रीजना वा सर्वेऽपि ऊचुः ॥ ३१ ॥ ३२ ॥ अकारप्रश्लेषेण अदातु स्तुमरणमित्यर्थः । अर्हतोः योग्ययोः । अङ्ग हे रजक ॥ ३३ ॥ रुषितः कुपितः सन् ॥ ३४ ॥ हे उद्वृत्ता[1] उच्छृङ्खलाः

१. 'उद्वृत्तमुत्तमाचारे तथैवोच्छृङ्खलेऽन्यृजौ ।' इति धरणिः ।

तयोरासनमानीय पाद्यं चार्घार्हणादिभिः । पूजां सानुगयोश्चक्रे स्रक्ताम्बूलानुलेपनैः ॥४४॥
प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो । पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥४५॥
भवन्तौ किल विश्वस्य जगतः कारणं परम् । अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥४६॥
न हि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः । समयोः सर्वभूतेषु भजन्तं भजतोरपि ॥४७॥
तावाज्ञापयतं भृत्यं किमहं करवाणि वाम् । पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥४८॥
इत्यभिप्रेत्य राजेन्द्र सुदामा प्रीतमानसः । शस्तैः सुगन्धैः कुसुमैर्माला विरचिता ददौ ॥४९॥
ताभिः स्वलंकृतौ प्रीतौ कृष्णरामौ सहानुगौ । प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥५०॥
सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि । तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥५१॥
इति तस्मै वरं दत्त्वा श्रियं चान्वयवर्धिनीम् । बलमायुर्यशः कान्तिं निर्जगाम सहाग्रजः ॥५२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे पुरप्रवेशो नाम एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

वस्तुतस्तु हे उत्तमाचाराः ये यूयम् ईदृशान्येव अपि तु दिव्यानि । किमभीप्सथ नैव प्रहसनमात्रमेव ॥३५॥ हे बालिशाः अज्ञाःशीघ्रं यात गच्छत । इत्थमुद्दण्डं युष्मद्विधं राजकुलानि राजदूताः लुम्पन्ति निर्धनं कुर्वन्ति तद्गृहं लुण्ठन्ति च । भारतीपक्षे तु यातः प्राप्तः आशुः चपलो मादृशो मूर्खो यैस्तथाभूताः । यदि जिजीविषा बलप्रकटनेच्छा तर्हि मैवं प्रार्थ्यं बलात् ग्राह्याणि ॥ ३६ ॥ विकत्थमानस्य असम्बद्धं ब्रुवतः । विशिष्टं श्लाघमानस्य । कराग्रेण खड्गानुकारिणा शिरः अपातयत् पृथक् कृतवान् ॥३७॥ वासःकोशान् वस्त्रपुटकान् । अकारप्रश्लेषे मार्गं हित्वा इतरस्थानं प्रति ॥ ३८ ॥ वसित्वा परिधाय । अदत्तेति पाठः । आत्मप्रिये पीतनीलवर्णे ॥३९॥ चैलेयैः वस्त्रखण्डनिर्मितैः आकल्पैः भूषणैः वेषमकल्पयत् ॥ ४० ॥ पर्वणि उत्सवे । सितेतरौ श्वेतकृष्णौ ॥ ४१ ॥ स्मृतिः आत्मस्मरणम् । इन्द्रियपाटवं च ॥ ४२ ॥ अर्ह्यतेऽनेनेति अर्हणं पूजनद्रव्यम् ॥ ४३ ॥ ४४ ॥ सार्थकं सफलम् । मह्यं मम । वां युवयोः ॥ ४५ ॥ विश्वस्य सर्वस्य । अंशेन कारणमित्यत्रान्वेति । भवाय वृद्धये ॥ ४६ ॥ वां युवयोः ॥ ४७ ॥ तौ भवन्तौ ॥ ४८ ॥ शस्तैः प्रशस्तैः ॥ ४९ ॥ ॥ ५० ॥ ५१ ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे गूढार्थदीपिन्यामेकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## अथ द्विचत्वारिंशोऽध्यायः

### श्रीशुक उवाच

अथ व्रजन् राजपथेन माधवः स्त्रियं गृहीताङ्गविलेपभाजनाम् ।
विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यान्तीं प्रहसन् रसप्रदः ॥ १ ॥

---

द्विचत्वारिंशके कुब्जाऽवक्रत्वं चापभञ्जनम् ।
दुर्निमित्तानि कंसस्य मल्लभूमेरथोत्सवः ॥ १ ॥

अङ्गविलेपः चन्दनादिः । रसप्रदः सुखप्रदः ॥ १ ॥ हे वरोरु । हे अङ्गने । उह इति भ्रूविक्षेपे ॥ २ ॥

का त्वं वरोर्वेतदु हानुलेपनं कस्याङ्गने वा कथयस्व साधु नः ।
देह्यावयोरङ्गविलेपमुत्तमं श्रेयस्ततस्ते नचिराद् भविष्यति ॥ २ ॥

सैरन्ध्र्युवाच

दास्यस्म्यहं सुन्दर कंससम्मता त्रिवक्रनामा ह्यनुलेपकर्मणि ।
मद्भावितं भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ॥ ३ ॥

रूपपेशलमाधुर्यहसितालापवीक्षितैः । धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् ॥ ४ ॥
ततस्तावङ्गरागेण स्ववर्णेतरशोभिना । सम्प्राप्तपरभागेन शुशुभातेऽनुरञ्जितौ ॥ ५ ॥
प्रसन्नो भगवान् कुब्जां त्रिवक्रां रुचिराननाम् । ऋज्वीं कर्तुं मनश्चक्रे दर्शयन् दर्शने फलम् ॥६॥
पद्भ्यामाक्रम्य प्रपदे द्व्यङ्गुल्युत्तानपाणिना । प्रगृह्य चुबुकेऽध्यात्ममुदनीनमदच्युतः ॥७॥
सा तदर्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा । मुकुन्दस्पर्शनात् सद्यो बभूव प्रमदोत्तमा ॥८॥
ततो रूपगुणौदार्यसम्पन्ना प्राह केशवम् । उत्तरीयान्तमाकृष्य स्मयन्ती जातहृच्छया ॥९॥
एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे । त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ ॥१०॥
एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः । मुखं वीक्ष्यानुगानां च प्रहसंस्तामुवाच ह ॥११॥
एष्यामि ते गृहं सुभ्रूः पुंसामाधिविकर्शनम् । साधितार्थोऽगृहाणां नः पान्थानां त्वं परायणम्१२
विसृज्य माध्व्या वाण्या तां व्रजन् मार्गे वणिक्पथैः ।नानोपायनताम्बूलस्रग्गन्धैः साग्रजोऽर्चितः१३
तद्दर्शनस्मरक्षोभादात्मानं नाविदन् स्त्रियः । विस्रस्तवासःकबरवलया लेख्यमूर्तयः ॥१४॥
ततः पौरान् पृच्छमानो धनुषः स्थानमच्युतः । तस्मिन् प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम् ॥१५॥
पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत् । वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे ॥१६॥

करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा निमिषेण पश्यताम् ।
नृणां विकृष्य प्रबभञ्ज मध्यतो यथेक्षुदण्डं मदकर्युरुक्रमः ॥१७॥

---

त्रिवक्रत्वं ग्रीवोरःकटिषु । त्रिवक्रेति पूंवद्भाव आर्षः इति तोषिणी । मया भावितं घृष्टम् भोजपतेः कंसस्य ॥३॥ पेशलं सौकुमार्यम् । धर्षितात्मा मोहितचित्ता सती सान्द्रं घनीभूतम् ॥४॥ ततः तेन । तृतीयार्थे तसिः । रामकृष्ण-वर्णाभ्यामितरः पीतादिवर्णः । परभागः नाभेरुपरितनो भागः । नु इति पृथक् छेदः । अन्यथा सन्धिरार्षः ॥५॥ ऋज्वीम् अवक्राम् ॥ ६ ॥ प्रपदे पदाग्रद्वयम् । द्वे अङ्गुल्यौ उन्नते यस्मिन् तेन । पाणिना आत्मानं जीवमधि-कृत्य वर्तमानम् अध्यात्मं देहम् उदनीनमत् उर्ध्वमाकृष्टवान् ॥ ७ ॥ ऋजु अवक्रम् अतएव समानमङ्गं यस्याः ॥ ८ ॥ हृच्छयः कामः । स्मयन्ती ईषद्धसन्ती ॥ ९ ॥ १० ॥ ह हर्षेण ॥ ११ ॥ साधितार्थः कृतकार्यः सन् । आधिः मानसी व्यथा तस्य निवर्तकम् । अगृहाणां स्थानरहितानां त्वमेवाश्रयः ।१२। वणिक्पथैः वणिग्जनः ॥१३॥ विस्रस्तानि शिथिलीभूतानि वास आदीनि यासां ताः । लेख्याः चित्रन्यस्ता इव मूर्तयो यासां ताः ॥ १४ ॥ ॥१५॥ परमर्द्धिमत्[1] बहुभारम् ॥१६॥ मदेन युक्तः करी मदकरी मत्तहस्ती । मध्यमपदलोपी समासः । स यथा इक्षुदण्डं भनक्ति तथा मध्यतो बभञ्जेत्यन्वयः । उरुक्रमः महापराक्रमः । उद्धृतम् उत्थापितम् ॥ १७ ॥ रोदसी

---

१. 'समृद्धौषधिभारेषु वृद्धावृद्धिः प्रकीर्तिता' इति निरुक्तिः ।

धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः । पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् ॥१८॥
तद्रक्षिणः सानुचराः कुपिता आततायिनः । ग्रहीतुकामा आवव्रुर्गृह्यतां बध्यतामिति ॥१९॥
अथ तान् दुरभिप्रायान् विलोक्य बलकेशवौ । क्रुद्धौ धन्वन आदाय शकले तांश्च जघ्नतुः ॥२०॥
बलं च कंसप्रहितं हत्वा शालामुखात्ततः । निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसम्पदः ॥२१॥
तयोस्तदद्भुतं वीर्यं निशाम्य पुरवासिनः । तेजः प्रागल्भ्यं रूपं च मेनिरे विबुधोत्तमौ ॥२२॥
तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान् । कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः ॥२३॥

गोप्यो मुकुन्दविगमे विरहातुरा या आशासताशिष ऋता मधुपूर्यभूवन् ।
सम्पश्यतां पुरुषभूषणगात्रलक्ष्मीं हित्वेतरान् नु भजतश्चकमेऽयनं श्रीः ॥२४॥

अवनिक्ताङ्घ्रियुगलौ भुक्त्वा क्षीरोपसेचवम् । ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् ॥२५॥
कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च । वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥२६॥
दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः । बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥२७॥
अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि । असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥२८॥
छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः । स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥२९॥
स्वप्ने प्रेतपरिष्वङ्गः खरयानं विषादनम् । यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगम्बरः ॥३०॥
अन्यानि चेत्थंभूतानि स्वप्नजागरितानि च । पश्यन् मरणसंत्रस्तो निद्रां लेभे न चिन्तया ॥३१॥
व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्यः समुत्थिते । कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ३२
आनर्चुः पुरुषा रङ्गं तूर्यभेर्यश्च जघ्निरे । मञ्चाश्चालंकृताः स्रग्भिः पताकाचैलतोरणैः ॥३३॥

---

द्यावाभूमी ॥ १८ आवव्रुः समन्तादावृतवन्तः ॥ १९ ॥ तान् विलोक्य क्रुद्धौ बभूवतुः पुनश्च तान् जघ्नतुः इति वाक्यान्तरत्वात् तानित्यस्य न पुनरुक्तिः ॥२०॥ शाला धनुर्मखशालातद्द्वारात् बहिः । बलं सैन्यम् ॥२१॥ प्रागल्भ्यं धृष्टताम् रूपं सौन्दर्यम् ॥२२॥ स्वैरं यथेच्छम् । शकटाः सन्ति अत्रेति शकटम् । मत्वर्थीयोऽच् । शकटावमोचनस्थानम् (डेराइति) ॥२३॥ गोप्य या आशिषः आशासत[1] ऐच्छन् ताः सत्या अभूवन् । केषाम् । मधुपुरि मथुरायाम् कृष्णस्य गात्रलक्ष्मीं शोभां सम्पश्यताम् । नु अहो यां लक्ष्मीं श्रीः अयनं स्वाश्रयं चकमे । इतरान् ब्रह्मादीन् हित्वा ॥ २४ ॥ अवनिक्त[2] क्षालितम् अङ्घ्रयुगलं ययोस्तौ । क्षीरेण उपसिच्यते यत् तत् पायसम् । कर्मणि ल्युट् । ऊषतुः न्यवसताम् ॥२५॥ कंस इति युग्मम् । परं केवलम् बलस्य सैन्यस्य । उभयथा स्वप्नजागरितभेदेन बहूनि दुर्निमित्तानि अपशकुनानि अचष्ट ददर्शेत्यन्वयः । दौत्यकराणि आगमनसूचकानि ॥ २६ ॥ ॥ २७ ॥ प्रतिरूपे दर्पणादौ । द्वितीये चन्द्रादौ । ज्योतिषां चन्द्रादीनां द्विरूपत्वम् ॥ २८ ॥ पादचिह्नानाम् अदर्शनं रजः कर्दमादिषु ॥२९॥ नलदं जपापुष्पम् तन्मालाधारी । यायात् गच्छेत् । अदनं भक्षणम् ॥३०॥३१॥ व्युष्टायाम् आसन्नप्रभातायाम् रङ्गं मल्लक्रीडास्थानम् ॥ ३२ ॥ जघ्निरे वादयाञ्चक्रिरे वादकैः । कर्मणि लिट्

---

१. आङः शासु इच्छायाम् इति शाब्दिकाः ।

२. णिजिर् शौचे धातुः ।

तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः । यथोपजोषं विविशू राजानश्च कृतासनाः ॥३४॥
कंसः परिवृतोऽमात्यै राजमञ्च उपाविशत् । मण्डलेश्वरमध्यस्थो हृदयेन विदूयता ॥३५॥
वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च । मल्लाः स्वलंकृता दृप्ताः सोपाध्यायाः समाविशन् ॥३६॥
चाणूरो मुष्टिकः कूटः शलस्तोशल एव च । त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः ॥३७॥
नन्दगोपादयो गोपा भोजराजसमाहुताः । निवेदितोपायनास्ते एकस्मिन् मञ्च आविशन् ॥३८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूरार्द्धे मल्लरङ्गोपवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

॥ ३३ ॥ यथोपजोषं यथासुखम् ॥ ३४ ॥ विदूयता परितप्यमानेन हृदयेन । दूङ् परितापे धातुः ॥३५॥ दृप्ता गर्विताः । मल्लतालः उत्तरः उच्चैः श्रूयमाणः येषु तेषु ॥ ३६ ॥ उपस्थानं मल्लभूमिम् आजग्मुः । वल्गु मनोहरम् ॥ ३७ ॥ ये समाहूताः ते आविशन् उपविविशुः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे गूढार्थदीपिन्यां द्विचत्वारिंशोऽध्यायः ॥४२॥

## अथ त्रिचत्वारिंशोऽध्यायः

### श्रीशुक उवाच

अथ कृष्णश्च रामश्च कृतशौचौ परंतप । मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः ॥ १ ॥
रङ्गद्वारं समासाद्य तस्मिन् नागमवस्थितम् । अपश्यत् कुवलयापीडं कृष्णोऽम्बष्ठप्रचोदितम् ।२।
बद्ध्वा परिकरं शौरिः समुह्य कुटिलालकान् । उवाच हस्तिपं वाचा मेघनादगभीरया ॥ ३ ॥
अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपक्राम माचिरम् । नो खेत् सकुञ्जरं त्वाद्य नयामि यमसादनम् ।४।
एवं निर्भर्त्सितोऽम्बष्ठः कुपितः कोपितं गजम् । चोदयामास कृष्णाय कालान्तकयमोपमम् ॥५॥
करीन्द्रस्तमभिद्रुत्य करेण तरसाग्रहीत् । कराद् विगलितः सोऽमुं निहत्याङ्घ्रिष्वलीयत ॥६॥
संक्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् । परामृशत् पुष्करेण स प्रसह्य विनिर्गतः ॥७॥
पुच्छे प्रगृह्यातिबलं धनुषः पञ्चविंशतिम् । विचकर्ष यथा नागं सुपर्ण इव लीलया ॥८॥

---

त्रिचत्वारिंशके द्वारि हस्तिहस्तिपमर्दनम् ।
रङ्गभूमौ प्रवेशश्च चाणूरेणास्य भाषणम् ॥ १ ॥

शौचं दन्तधावनादि । यद्वा । कृतं शौचं कंसमारणेऽपि निर्दोषत्वं याभ्यां तौ ॥ १ ॥ अम्बष्ठः हस्तिपकः ॥२॥ शौरिः कृष्णः । परिकरं युद्धवेषम् । समुह्य निबध्य ॥३॥ अम्बष्ठेति द्विरुक्तिः कोपावेशात् नौ आवयोः । अपक्राम मार्गादपसर । सादनं स्वार्थेऽण् । यमलोकं वस्तुतः यमेन मनोनिरोधेन आसाद्यते यत् तत् मोक्षम् ॥४॥ अन्तको मृत्युः स च कालो निमित्तं यमो नियन्ता च द्वयोरधीनः अत एतत् त्रित्वमुक्तम् तैरुपमा यस्य तम् ॥५॥ अवक्षाणः अपश्यन् । परामृशत् जग्राह करेण शुण्डादण्डेन । तरसा वेगेन । अलीयत तिरोहितोऽभूत ॥ ६ ॥ ॥ ७ ॥ पञ्चविंशति शतहस्तपरिमितम् । धनुर्हस्तचतुष्ठयम् । यथा यथावत् नागं सर्पं सुपर्णः गरुड इव ॥ ८ ॥

स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः । बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः ॥९॥
ततोऽभिमुखमभ्येत्य पाणिनाऽऽहत्य वारणम् । प्राद्रवन् पातयामास स्पृश्यमानः पदे पदे ॥१०॥
स धावन् क्रीडया भूमौ पतित्वा सहसोत्थितः । तं मत्वा पतितं क्रुद्धो दन्ताभ्यां सोऽहनत् क्षितिम्
स्वविक्रमे प्रतिहते कुञ्जरेन्द्रोऽत्यमर्षितः । चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद् रुषा ॥१२॥
तमापतन्तमासाद्य भगवान् मधुसूदनः । निगृह्य पाणिना हस्तं पातयामास भूतले ॥१३॥
पतितस्य पदाऽऽक्रम्य मृगेन्द्र इव लीलया । दन्तमुत्पाट्य तेनेभं हस्तिपांश्चाहनद्धरिः ॥१४॥
मृतकं द्विपमुत्सृज्य दन्तपाणिः समाविशत् । अंसन्यस्तविषाणोऽसृङ्मदबिन्दुभिरङ्कितः ।
विरूढस्वेदकणिकावदनाम्बुरुहो बभौ ॥१५॥
वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ । रङ्गं विविशतू राजन् गजदन्तवरायुधौ ॥१६॥

मल्लानामशनिर्नृणाम् नरवरः स्त्रीणां स्मरो मूर्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां ।
वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः ॥ १७ ॥

हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ । कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप ॥१८॥

तौ रेजतू रङ्गगतौ महाभुजौ विचित्रवेषाभरणस्रगम्बरौ ।
यथा नटावुत्तमवेषधारिणौ मनः क्षिपन्तौ प्रभया निरीक्षताम् ॥ १९ ॥
निरीक्ष्य तावुत्तमपूरुषौ जना मञ्चस्थिता नागराष्ट्रिका नृप ।
प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्न तृप्ता नयनैस्तदाननम् ॥ २० ॥

पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया । जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः॥२१॥

---

पुच्छग्राहिणं श्रीकृष्णं ग्रहीतुं वामदक्षिणतः परिवर्तमानेन तेन सह अच्युतः बभ्रामेत्यन्वयः ॥९॥ ततः पुच्छं त्यक्त्वा प्रकर्षेण आसमन्तात् द्रवन् धावन् अत एव तेन स्पृश्यमानः कृष्णः पदे पदे तं पातयामास ॥१०॥ स कृष्णः स गजः ॥ ११ ॥ अभ्यद्रवत् अधावत् ॥ १२ ॥ हस्तं शुण्डादण्डम् ॥ १३ ॥ पतितस्य दन्तमित्यत्रान्वेति । तं यदा आक्रम्य तेन दन्तेन इभं गजमहन् ॥ १४ ॥ मृतमिति सार्द्धम् । अंसे वामस्कन्धे न्यस्तः स्थापितो विषाणो गजदन्तः येन । द्वितीय रामेण उद्गतस्वेदकणिकायुक्तं मुखाम्बुजं यस्य, सः । असृजः रक्तस्य मदस्य च बिन्दुभिः अङ्कितः ॥१५॥१६॥ रङ्गं मल्लभूमिं गतः प्राप्तः सन् श्रीकृष्णः दशधा विदितः प्रतीतो बभूवेत्यन्वयः । मति बुद्धीति वर्तमाने क्तः अतः कर्तरि षष्ठी शेषे वा । विकलः अपर्याप्तो राजते इति विराट् । अत्र क्रमेण एकस्मिन्नेव नवरसानामभिव्यक्तिः ॥१७॥ मनस्वी धीरोऽपि कंसः । उद्विविजे भयकम्पितोऽभूत् ॥ १८ ॥ विचित्रवेषः आभरणादीनि च ययोस्तौ । प्रभया देहकान्त्या मनः क्षिपन्तौ आकर्षन्तौ ॥१९॥ प्रहर्षवेगेन उत्कलितानि विकसितानि ईक्षणानि आननानि येषां ते राष्ट्रिका अन्यदेशीयाः सर्वेऽपि । इकारघटितः पाठः ॥२०॥ पिबन्त इति युग्मकम् । तद्रूपादिभिः अयं साक्षात् भगवानिति स्मरणं प्रापिता इव ते परस्परम् ऊचुरित्यन्वयः ।

ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम् । तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥२२॥
एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि । अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥२३॥
एष वै किल देवक्यां जातो नीतश्च गोकुलम् । कालमेतं वसन् गूढो ववृधे नन्दवेश्मनि ॥२४॥
पूतनानेन नीतान्तं चक्रवातश्च दानवः । अर्जुनौ गुह्यकः केशी धेनुकोऽन्ये च तद्विधाः ।२५।
गावः सपाला एतेन दावाग्नेः परिमोचिताः । कालियो दमितः सर्प इन्द्रश्च विमदः कृतः॥२६॥
सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना । वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥२७॥
गोप्योऽस्य नित्यमुदितहसितप्रेक्षण मुखम् । पश्यन्त्यो विविधांस्तापांस्तरन्ति स्माश्रमं मुदा।२८
वदन्त्यनेन वंशोऽयं यदोः सुबहुविश्रुतः । श्रियं यशो महत्त्वं च लप्स्यते परिरक्षितः ॥२९॥
अयं चास्याग्रजः श्रीमान् रामः कमललोचनः । प्रलम्बो निहतो येन वत्सको ये बकादयः ॥३०॥
जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च । कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥३१॥
हे नन्दसूनो हे राम भवन्तौ वीरसम्मतौ । नियुद्धकुशलौ श्रुत्वा राज्ञाऽऽहूतौ दिदृक्षुणा ॥३२॥
प्रियं राज्ञः प्रकुर्वन्त्यः श्रेयो विन्दन्ति वै प्रजाः । मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ३३
नित्यं प्रमुदिता गोपा वत्सपाला यथा स्फुटम् । वनेषु मल्लयुद्धेन क्रीडन्तश्चारयन्ति गाः ॥३४॥
तस्माद् राज्ञः प्रियं यूयं वयं च करवाम हे । भूतानि नः प्रसीदन्ति सर्वभूतमयो नृपः ॥३५॥
तन्निशम्याब्रवीत् कृष्णो देशकालोचितं वचः । नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनन्द्य च ३६
प्रजा भोजपतेरस्य वयं चापि वनेचराः । करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥ ३७ ॥
बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम् । भवेन्नियुद्धं माधर्मः स्पृशेन्मल्लसभासदः ॥३८॥

चाणूर उवाच

न बालो न किशोरस्त्वं बलश्च बलिनां वरः । लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत् ॥३९॥

---

प्रागल्भ्यं[1] नैपुण्यम् ।॥ २१ ॥ २२ ॥ अंशेनेति तेषामल्पज्ञानत्वादेवमुक्तिः । यद्वा । नारायणस्य अंशेन जातस्य वसुदेवस्येति योज्यम् ॥२३॥२४॥ पूतना अन्तं मृत्युम् नीता तद्विधाः तत्सदृशपराक्रमाः ये अन्ये तेऽपि अन्तं नीता इत्यन्वयः । गुह्यकः शंखचूडः चक्रवातः तृणावर्तः अर्जुनौ वृक्षौ पातितौ ।२५।२६। एकेन वामेन ।२७। नित्यमुदिते हर्षप्रदे हसितप्रेक्षणे यस्मिन् तत् । आश्रमम् ईषच्छ्रमयुक्तम् । अश्रमं वा श्रमरहितम् अनायासेन वा ॥२८॥ अनेन श्रीकृष्णेन ॥ २९ ॥ वत्सकः वत्सप्रतिरूपः एव न तु वत्सः । इवे प्रतिकृतौ इत्यनुशासनात् कन् । एतेन तद्वधे दोषो निराकृतः । ये बकादयः तेऽपि निहताः ॥३०॥ समाभाष्य सम्बोध्य ॥३१॥३२॥ अतः अन्यथा प्रियानाचरणे विपरीतम् अश्रेयः ॥ ३३ ॥ यथा चारयन्ति तथा स्फुटं लोके प्रसिद्धमेव ॥ ३४ ॥ एवं राज्ञि प्रीते सति भूतानि प्रसीदन्ति । यतः ॥३५॥ ॥ ३६ ॥ वयं चात् यूयं च ॥ ३७ ॥ बालाः वस्तुतस्तु बलानां शक्तीनां समूहो बालं तद्विद्यते येषु ते बालाःमत्वर्थीयोऽच्प्रत्ययः सर्वशक्तिमन्तः ईश्वराः वयम् । मल्लेति सम्बुद्धिर्वा ॥३८॥

---

१. प्रगल्भो निपुणे धृष्टे इति धरणिः ।

तस्माद् भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै। मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः ॥४०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे कुवलयापीडवधो नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥

सत्त्वं बलम् ॥ ३९ ॥ अत्र युद्धे। हे वार्ष्णेय वृष्णिवंशज कृष्ण। त्वं मयि विक्रम पराक्रमं कुरु। बलेन सह मुष्टिकः विक्रामतु ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## अथ चतुश्चत्वारिंशोऽध्यायः

### श्रीशुक उवाच

एवं चर्चितसंकल्पो भगवान् मधुसूदनः। आससादाथ चाणूरं मुष्टिकं रोहिणीसुतः ॥ १ ॥
हस्ताभ्यां हस्तयोर्बध्वा पद्भ्यामेव च पादयोः। विचकर्षतुरन्योन्यं प्रसह्य विजिगीषया ॥ २ ॥
अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी। शिरः शीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः ॥ ३ ॥
परिभ्रामणविक्षेपपरिरम्भावपातनैः। उत्सर्पणापसर्पणैश्चान्योन्यं प्रत्यरुन्धताम् ॥४॥
उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि। परस्परं जिगीषन्तावपचक्रतुरात्मनः ॥ ५ ॥
तद् बलाबलवद् युद्धं समेताः सर्वयोषितः। ऊचुः परस्परं राजन् सानुकम्पा वरूथशः ॥ ६ ॥
महानयं बताऽधर्म एषां राजसभासदाम्। ये बलाबलवद्युद्धं राज्ञोऽन्विच्छन्ति पश्यतः ॥ ७ ॥
क्व वज्रसारसर्वाङ्गौ मल्लौ शैलेन्द्रसंन्निभौ। क्व चातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनौ ॥८॥
धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत्। यत्राऽधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥ ९ ॥
न सभां प्रविशेत् प्राज्ञः सभ्यदोषाननुस्मरन्। अब्रुवन् विब्रुवन्नज्ञो नरः किल्बिषमश्नुते ॥१०॥

मल्लयुद्धे चतुश्चत्वारिंशे मल्लविमर्दनम्।
कंसघातोऽबलाश्वासो बन्धात् पित्रोश्च मोचनम् ॥ १ ॥

चर्चितः निश्चितः[1]। आससाद जग्राह ॥१॥ बद्ध्वा गृहीत्वा ॥२॥ बद्धमुष्टिर्हस्तोऽरत्निः। अभितो जघ्नतुः प्रहृतवन्तौ ॥३॥ परिरम्भो बाहुभ्यां निष्पीडनम्। अवपातोऽधःक्षेपः। उत्सर्पणं पुरतो गमनम् अर्पणं पृष्ठतः। अन्योन्यं रुरुधतुः ॥४॥ उत्थापनं पतितस्य। चालनम् इतस्ततः। स्थापनं पिण्डीकृत्य भूमौ। आत्मनो देहस्य अपचक्रतुः अपकारं चक्रतुः ॥५॥६॥ बलवतोऽबलवतोश्च युद्धम् अनुमन्यन्ते ये तेषामयं महानधर्मः। बत खेदे ॥७॥ वज्रसाराणि वज्रवत्काठिनानि अङ्गानि ययोस्तौ सन्निभौ सदृशौ पर्वताकारौ ॥८॥ व्यतिक्रमो हानिः। समुत्तिष्ठेत् प्रवर्तेत। कर्हिचित् लाभेऽपि ॥९॥ अब्रुवन् ज्ञात्वाऽपि तूष्णीं तिष्ठन्। विब्रुवन् विपरीतं ब्रुवन्। अज्ञो न जानामिति ब्रुवन् ॥१०॥ शत्रुमभितः सर्वतः वल्गतः[2] उत्प्लुत्य उत्प्लुत्य गच्छतः उप्तं व्याप्तं वीक्ष्यतां दृश्यताम्। कर्मणि लोट्

१. 'चर्चितौ निश्चितार्चितौ' इति निरुक्तिः।

२. वल्ग प्लुतगतौ धातुः।

वल्गतः शत्रुमभितः कृष्णस्य वदनाम्बुजम् । वीक्ष्यतां श्रमवार्युप्तं पद्मकोशमिवाम्बुभिः ॥११॥
किं न पश्यत रामस्य मुखमाताम्रलोचनम् । मुष्टिकं प्रति सामर्षं हाससंरम्भशोभितम् ॥ १२ ॥
पुण्या बत व्रजभुवो यदयं नृलिंगगूढः पुराणपुरुषो वनचित्रमाल्यः ।
गाः पालयन् सहबलः क्वणयंश्च वेणुं विक्रीडयाञ्चति गिरित्ररमार्चितांघ्रिः ॥१३॥
गोप्यस्तपः किमचरन् यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ।
दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशसः श्रिय ऐश्वरस्य ॥१४॥
या दोहनेऽवहनने मथनोपलेपप्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ ।
गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः ॥१५॥
प्रातर्व्रजाद् व्रजत आविशतश्च समं गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ।
निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः पश्यन्ति सस्मितमुखं सदयावलोकम् ॥१६॥
एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः । शत्रुं हन्तुं मनश्चक्रे भगवान् भरतर्षभ ॥ १७ ।
सभयाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचाऽऽतुरौ । पितरावन्वतप्येतां पुत्रयोरबुधौ बलम् ॥१८॥
तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ । युयुधाते यथान्योऽन्यं तथैव बलमुष्टिकौ ॥१९॥
भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः । चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह ॥२०॥
स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ । भगवन्तं वासुदेवं क्रुद्धो वक्षस्यबाधत ॥२१॥
नाचलत्तत्प्रहारेण मालाहत इव द्विपः । बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन् हरिः॥२२॥

---

यद्वा । वदनाम्बुजं[1] मुखचन्द्रो वा ॥११॥ आताम्रे ईषद्रक्ते लोचने यस्मिन् । सामर्षं सक्रोधम् । सरम्भः आवेशः ॥१२॥ यत् यासु भूमिषु स बलः अयं श्रीकृष्णः विविधक्रीडया अञ्चति अटतीत्यन्वयः । वर्तमानसामीप्ये भूते लट् किं कुर्वन् । गाः पालयन् वेणु क्वणयन् वादयन् सन् । वनस्थानि मालाभवानि पुष्पाणि यस्य । गिरित्रः शिवः । नृलिङ्गेन मनुष्यदेहेन । बत हर्षे ॥ १३ ॥ यत् यस्मात् गोप्यः अमुष्य श्रीकृष्णस्य दुर्लभं रूपं दृग्भिः पिबन्तीत्यन्वयः कथंभूतम् । नास्ति समम् ऊर्ध्वमधिकं च यस्मात् तत् असमोर्ध्वम् अनुसवं प्रतिक्षणं नवीनम् यश आदीनां मुख्यं धाम ॥१४॥ या दोहनादिषु एनं श्रीकृष्णं गायन्ति ता धन्या इत्यन्वयः । कथंभूताः । उरुक्रमे यत् चित्तं तेनैव यानं सर्वविषयप्राप्तिः यासां ताः । अवहननं धान्यकुट्टनम् । प्रेङ्खेङ्खनं दोलान्दोलनम् । उक्षणं सेचनम् ॥ १५ ॥ या अबला क्वणयतो वादयतः अस्य वेणुरवं निशम्य गृहात् तूर्णं निष्क्रम्य पथि तस्य सस्मितं मुखं पश्यन्ति ताः भूरिपुण्याः इत्यन्वयः। समं सह॥१६॥१७॥ पुत्र स्नेहेन या शुक् शोकः तया व्याकुलौ। बलम् अबुधौ अजानन्तौ । तदर्हमिति निर्देशात् षष्ठ्यभावः ॥१८॥ इतरः चाणूरः ॥१९॥ वज्रनिष्पेषो वज्रपातः तद्वत् कठोरैः गात्राणां जान्वादीनां निष्पातैः प्रहारैः । भज्यमानं जर्जरीभवत् अङ्गं यस्य । ह हेतौ ॥२०॥ अबाधत अताडयत् ॥ २१ ॥ नेति सार्द्धम् । न आचलन् ईषदपि नाकम्पत । पृष्ठे उपरि । पोथयामास पातयामास । तरसा-

---

१. अब्जौ शंखशशाङ्कौ च इत्यमरः ।

भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् । विस्रस्ताकल्पकेशस्रगिन्द्रध्वज इवापतत् ॥२३॥
तथैव मुष्टिकः पूर्वं स्वमुष्ट्याभिहतेन वै । बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥२४॥
प्रवेपितः स रुधिरमुद्वमन् मुखतोऽर्दितः । व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः ॥२५॥
ततः कूटमनुप्राप्तं रामः प्रहरतां वरः । अवधील्लीलया राजन् सावज्ञं वाममुष्टिना ॥२६॥
तर्ह्येव हि शलः कृष्णप्रपदाहतशीर्षकः । द्विधा विदीर्णस्तोशलक उभावपि निपेततुः ॥२७॥
चाणूरे मुष्टिके कूटे शले तोशलके हते । शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः ॥२८॥
गोपान् वयस्यानाकृष्य तैः संसृज्य विजह्रतुः। वाद्यमानेषु तूर्येषु वल्गन्तौ रुतनूपुरौ ॥२९॥
जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः ।ऋते कंसं विप्रमुख्याः साधवः साधु साध्विति॥३०॥
हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् । न्यवारयत् स्वतूर्याणि वाक्यं चेदमुवाच ह ॥३१॥
निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् । धनं हरत गोपानां नन्दं बध्नीत दुर्मतिम् ॥३२॥
वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः । उग्रसेनः पिता चापि सानुगः परपक्षगः ॥३३॥
एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः । लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत् ॥३४॥
तमाविशन्तमालोक्य मृत्युमात्मन आसनात् । मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥३५॥

तं खड्गपाणिं विचरन्तमाशु श्येनं यथा दक्षिणसव्यमम्बरे ।
समग्रहीद् दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य ॥३६॥
प्रगृह्य केशेषु चलत्किरीटं निपात्य रङ्गोपरि तुङ्गमञ्चात् ।
तस्योपरिष्टात् स्वयमब्जनाभः पपात विश्वाश्रय आत्मतन्त्रः ॥३७॥
तं सम्परेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः ।
हाहेति शब्दः सुमहांस्तदाभूदुदीरितः सर्वजनैर्नरेन्द्र ॥३८॥
स नित्यदोद्विग्नधिया तमीश्वरं पिबन् वदन् वा विचरन् स्वपञ्छ्वसन् ।
ददर्श चक्रायुधमग्रतो यतस्तदेव रूपं दुरवापमाप ॥३९॥

---

वेगेन ॥ २२ ॥ विस्रस्तेत्यर्द्धम् । इन्द्रध्वजः पुरुषाकृतिः स्तम्भः स यथा पतति तथा । कथंभूतः । विस्रस्ताः विच्युता आकल्पादयो यस्य । आकल्पो भूषणम् ॥ २३ ॥ तथेति द्वयम् । तलेन चपेटेन ॥ २४ ॥ व्यसुः विगतप्राणः सन् । उर्व्युपस्थे भूतले । अर्दितः पीडितः ॥ २५ ॥ २६॥ प्रपदं पदाग्रम् ॥२७॥२८॥ संसृज्य सङ्गम्य ॥ २९ ॥ इति वदन्तः सर्वे प्रजहृषुः ॥ ३० ॥ विद्रुतेषु पलयितेषु। भोजराट् कंसः । ह कोपे ॥३१॥ दुर्गमं वृत्तं चरित्रं ययोस्तौ । निःशेषेण सारं श्रेष्ठं कुरुत । धनं कृष्णं हरत अत्रैव रक्षत । दुर्गममतिं बध्नीत प्रेमरशनया । दुर्मेधा दुर्गमबुद्धिः । असत्तमः सर्वोत्तमः । हन्यतां गम्यताम् आश्रीयताम् । इति वागर्थे। परः परमेश्वरः तस्य पक्षं गच्छतीति ॥ ३२ ॥ ३३ ॥ विकत्थमाने विरुद्धं भाषमाणे वाह्यदृष्ट्या । लघिम्ना अतिशैघ्र्येण ॥ ३४ ॥ ३५ ॥ तार्क्ष्यसुतः[1] गरुडः यथा उरगं गृह्णाति तथेत्यन्वयः ॥ ३६ ॥ चलत् विगलत् किरीटं यस्य तम् कसम् ॥३७॥ सम्परेतं मृतम् । हरिः सिंहो यथा इभं गजम् ॥३८॥ आप प्राप्तवान् ॥ ३९ ॥

---

१. 'तार्क्ष्यौ गरुडकश्चपौ' इत्यमरः ।

तस्यानुजा भ्रातरोऽष्टौ कङ्कन्यग्रोधकादयः । अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिणः ॥४०॥
तथातिरभसांस्तांस्तु संयतान् रोहिणीसुतः । अहन् परिघमुद्यम्य पशूनिव मृगाधिपः ॥४१॥
नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः । पुष्पैः किरन्तस्तं प्रीताः शशंसुर्ननृतुः स्त्रियः ॥४२॥
तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः । तत्राभीयुर्विनिघ्नन्त्यः शीर्षाण्यश्रुविलोचनाः॥४३॥
शयानान् वीरशय्यायां पतीनालिङ्ग्य शोचतीः।विलेपुः सुस्वरं नार्यो विसृजन्त्यो मुहुः शुचः॥४४॥
हा नाथ प्रिय धर्मज्ञ करुणानाथ वत्सल । त्वया हतेन निहता वयं ते सगृहप्रजाः ॥४५॥
त्वया विरहिता पत्या पुरीयं पुरुषर्षभ । न शोभते वयमिव निवृत्तोत्सवमङ्गला ॥४६॥
अनागसां त्वं भूतानां कृतवान् द्रोहमुल्बणम् । तेनेमां भो दशां नीतो भूतध्रुक् को लभेत शम्॥४७॥
सर्वेषामिह भूतानामेष हि प्रभवाप्ययः । गोप्ता च तदवध्यायी न क्वचित् सुखमेधते ॥४८॥

श्रीशुक उवाच

राजयोषित आश्वास्य भगवाँल्लोकभावनः । यामाहुर्लौकिकीं संस्थां हतानां समकारयत् ॥४९॥
मातरं पितरं चैव मोचयित्वाथ बन्धनात् । कृष्णरामौ ववन्दाते शिरसाऽऽस्पृश्य पादयोः॥५०॥
देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ । कृतसंवन्दनौ पुत्रौ सस्वजाते न शङ्कितौ ॥५१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे कंसवधो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

निर्वेशः आनृण्यम् ॥४०॥ रभसो वेगः । परिघं लोहदण्डं दैवतः प्राप्तम् । गजदन्तमिति तोषिणी ॥४१॥ किरन्तः वर्षन्तः ॥ ४२ ॥ तेषां कंसादीनाम् । सुहृदः पतयः ॥ ४३ ॥ शय्यायां भूमौ शोचतीः शोचन्त्यः । सुस्वरम् उच्चैः । शुचः शोकाश्रूणि ॥ ४४ ॥ ते त्वदीया वयम् ॥ ४५ ॥ वाग्देवी तु अकारप्रश्लेषेण अनाथेत्येकपदं कृत्वा न शोभते किमिति अपि तु शोभते एवेति काक्वा व्याचष्टे । हे पुरुषर्ष हे वलीवर्द ॥ ४६ ॥ अनागसां निरपराधानाम् । उल्बणम् उत्कटम् ॥ ४७ ॥ एष कृष्णः । प्रभवः स्रष्टा । अप्ययः संहर्ता । तदवध्यायी तदपमानकर्ता ॥ ४८ ॥ संस्थां मृतसंस्कारम् ॥ ४९ ॥ आस्पृश्य सम्यक् स्पृष्ट्वा ॥ ५० ॥ न सस्वजाते नालिङ्गितवन्तौ किन्तु बद्धाञ्जली तस्थतुः इति विष्णुपुराणात् ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## अथ पञ्चचत्वारिंशोऽध्यायः

श्रीशुक उवाच

पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः । मा भूदिति निजां मायां ततान जनमोहिनीम् ॥ १ ॥

---

नन्दादेः सान्त्वनां पञ्चचत्वारिंशे प्रदाय सः ।
राज्यं दत्त्वोग्रसेनाय गुरोर्विद्यामवाप्तवान् ॥

उपलब्धः प्राप्तः अर्थः ईश्वराविमौ इति ज्ञानं याभ्यां तौ । जनयतः इति जनौ जननीजनकौ तयोः मोहिनीम्

उवाच पितरावेत्य साग्रजः सात्वतर्षभः । प्रश्रयावनतः प्रीणन्नम्ब तातेति सादरम् ॥ २ ॥
नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि । बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन् क्वचित् ॥३॥
न लब्धो दैवहतयोर्वासो नौ भवदन्तिके । यां बालाः पितृगेहस्था विन्दन्ते लालिता मुदम् ॥४॥
सर्वार्थसम्भवो देहो जनितः पोषितो यतः । न तयोर्याति निर्वेषं पित्रोर्मर्त्यः शतायुषा ॥ ५ ॥
यस्तयोरात्मजः कल्प आत्मना च धनेन च । वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि ॥६॥
मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् । गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन् मृतः ॥७॥
तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः । मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतो ॥ ८ ॥
तत् क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयोः । अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ॥ ९ ॥

श्रीशुक उवाच

इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा । मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम् ॥१०॥
सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन चावृतौ । न किंचिदूचतू राजन् बाष्पकण्ठौ विमोहितौ ॥११॥
एवमाश्वास्य पितरौ भगवान् देवकीसुतः । मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥१२॥
आह चास्मान् महाराज प्रजाश्चाज्ञप्तुमर्हसि । ययातिशापाद्यदुभिर्नासितव्यं नृपासने ॥१३॥
मयि भृत्य उपासीने भवतो विबुधादयः । बलिं हरन्त्यवनताः किमुतान्ये नराधिपाः ॥१४॥
सर्वान् स्वान्ज्ञातिसम्बन्धान् दिग्भ्यः कंसभयाकुलान् । यदुवृष्ण्यन्धकमधुदाशार्हकुकुरादिकान् ॥१५॥
सभाजितान् समाश्वास्य विदेशावासकर्शितान् । न्यवासयत् स्वगेहेषु वित्तैः संतर्प्य विश्वकृत् ॥१६॥
कृष्णसंकर्षणभुजैर्गुता लब्धमनोरथाः । गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः ॥१७॥
वीक्षन्तोऽहरहः प्रीता मुकुन्दवदनाम्बुजम् । नित्यं प्रमुदितं श्रीमत् सदयस्मितवीक्षणम् ॥१८॥

---

॥१॥ प्रीणयन् प्रीतिमुत्पादयन् ॥२॥ अस्मत्तः अस्मन्निमित्तम् । युवयोः आवाभ्यां पुत्राभ्यां बाल्याद्यवस्थासुखानि ॥ ३ ॥ दैवहतयोः लीलामग्नयोः नौ आवयोः । तृतीयार्थे षष्ठी । आवाभ्याम् ॥ ४ ॥ अर्थः चतुर्विधपुरुषार्थः । यतः याभ्यां जनितः तयोः पित्रोः । निर्वेशम् आनृण्यन् ।५। कल्पः समर्थः आत्मजः आत्मना देहेन तयोः वृत्तिम् । प्रेत्य यमलोकं गत्वा । यमदूता इति शेषः ॥ ६ ॥ कल्पश्चेत् अविभ्रत् अपुष्णन् भवति स श्वसन् मृतः जीवन्-मृतकः । प्रपन्नं शरणागतम् ॥ ७ ॥ न विद्यते कल्पो याभ्यां तयोः सर्वसमर्थयोः । कंसात् कंसमाकर्ण्य तेन सह युद्धार्थं नित्यमुदोः अत एव पुरीं प्रति विग्नचेत[1]सोः चलितचेतसोश्च वां युवामनर्चतोः नौ आवयोः किं मोघं व्यतीता नैवेति काक्वा व्याख्येयम् ॥ ८ ॥ नौ आवयोः तत् अपराधाचरणम् । दुर्हृदा कंसेन । परेति क्लिष्टेति लोकव्यवहाराय ॥ ९ ॥ मापया कृपया ॥ १० ॥ ११ ॥ १२ ॥ तव तु यादवत्वेऽपि भोजवंशित्वेन किञ्चिद्वैलक्षण्यात् मदाज्ञया राज्यपालने न कश्चिद् दोषः ॥ १३ ॥ हरन्ति समर्पयिष्यन्ति ॥ १४ ॥ सर्वानिति-द्वयम् । दिग्भ्यः समानाय्य सन्तर्प्य च स्वस्वगृहेषु न्यवासयत् इत्यन्वयः । सभाजितान् सम्मानितान् ॥ १५ ॥ ॥ १६ ॥ सिद्धाः कृतार्थाः सन्तः । ज्वरः सन्तापः ॥ १७ ॥ मुखं वीक्षन्तो रेमिरे इति योज्यम् ॥ १८ ॥ तत्र

---

१. 'ओविजी भयचलनयो;' धातुः ।

तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजसः । पिबन्तोऽक्षैर्मुकुन्दस्य मुखाम्बुजसुधां मुहुः ॥१९॥
अथ नन्दं समासाद्य भगवान् देवकीसुतः । संकर्षणश्च राजेन्द्र परिष्वज्येदमूचतुः ॥२०॥

पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम् ।
पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥२१॥

स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् । शिशून् बन्धुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥२२॥
यात यूयं व्रजं तात वयं च स्नेहदुःखितान् । ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥२३॥
एवं सान्त्वय्य भगवान् नन्दं सव्रजमच्युतः । वासोऽलंकारकुप्याद्यैरर्हयामास सादरम् ॥२४॥
इत्युक्तस्तौ परिष्वज्य नन्दः प्रणयविह्वलः । पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ ॥२५॥
अथ शूरसुतो राजन् पुत्रयोः समकारयत् । पुरोधसा ब्राह्मणैश्च यथावद् द्विजसंस्कृतिम् ॥२६॥

तेभ्योऽदाद् दक्षिणा गावो रुक्ममालाः स्वलंकृताः ।
स्वलंकृतेभ्यः सम्पूज्य सवत्साः क्षौममालिनीः ॥२७॥

याः कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः । ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः ॥२८॥
ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ । गर्गाद् यदुकुलाचार्याद् गायत्रं व्रतमास्थितौ ॥२९॥
प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ । नान्यसिद्धामलज्ञानं गूहमानौ नरेहितैः ॥३०॥
अथो गुरुकुले वासमिच्छन्तावुपजग्मतुः । काश्यं सांदीपनिं नाम ह्यवन्तीपुरवासिनम् ॥३१॥
यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम् । ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवादृतौ ॥३२॥
तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः । प्रोवाच वेदानखिलान् साङ्गोपनिषदो गुरुः ॥३३॥
सरहस्यं धनुर्वेदं धर्मान् न्यायपथांस्तथा । तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ॥३४॥
सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ । सकृन्निगदमात्रेण तौ संजगृहतुर्नृप ॥३५॥
अहोरात्रैश्चतुःषष्टया संयत्तौ तावतीः कलाः । गुरुदक्षिणयाऽऽचार्यं छन्दयामासतुर्नृप ॥३६॥

---

मथुरायाम् । प्रवयसः वृद्धा अपि ॥१९॥ अथ यादवाश्वासानन्तरम् ॥२०॥ आत्मनः स्वदेहादपि अधिका ॥२१॥ उत्सृष्टान् त्यक्तान् । अकल्पैः असमर्थैः ॥ २२ ॥ वयमिति । अस्मदो द्वयोश्चेति नियमात् ॥ २३ ॥ सव्रजं व्रजवासिभिः सहितम् । कुप्यानि गोदोहनार्थं कांस्यादिपात्राणि ॥ २४ ॥ तौ रामकृष्णौ ॥ २५ ॥ संस्कृतिम् उपनयनसंस्कारम् । शूरसुतो वसुदेवः ॥ २६ ॥ या गावस्ता इति योज्यम् । रुक्मं सुवर्णम् । क्षौमं दुकूलं पुष्पमालाश्च विद्यन्ते यासां ताः । स्वलङ्कृतेभ्यः आचारसम्पन्नेभ्यः ॥ २७ ॥ या हृताः ताः तद्गोष्ठात् आच्छिद्य ॥२८॥ गायत्रोमधीयानस्य त्रिराजव्यापि गायत्रम् ॥२९॥ अनन्यसिद्धं स्वतः सिद्धं गुरूपदेशं विनैव ईहितैः नरचेष्टितैः गूहमानौ आच्छादयन्तौ ॥३०॥ काश्यं काश्यां पठितवन्तं तत्र जातं वा । एकदेशन्यायेन कश्यपगोत्रोत्पन्नं वा ॥३१। यथा यथावत् वृत्तिम् अनुवृत्तिं अन्यान् ग्राहयन्तौ स्वयं च गुरुमुपेतौ सेवितवन्तौ च ॥३२॥३३॥ आन्वीक्षिकीं तर्कविद्याम् ॥ ३४ ॥ ३५ ॥ चतुःषष्टया संख्यातैः अहोरात्रैः तावती कलाः संजगृहतुरिति

द्विजस्तयोस्तं महिमानमद्भुतं संलक्ष्य राजन्नतिमानुषीं मतिम् ।
सम्मन्त्र्य पत्न्या स महार्णवे मृतं बालं प्रभासे वरयाम्बभूव ह ॥३७॥

तथेत्यथारुह्य महारथौ रथं प्रभासमासाद्य दुरन्तविक्रमौ ।
वेलामुपव्रज्य निषेदतुः क्षणं सिन्धुर्विदित्वार्हणमाहरत्तयोः ॥३८॥

तमाह भगवानाशु गुरुपुत्रः प्रदीयताम् । योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा ॥३९॥

समुद्र उवाच

नैवाहार्षमहं देव दैत्यः पञ्चजनो महान् । अन्तर्जलचरः कृष्ण शङ्खरूपधरोऽसुरः ॥४०॥
आस्ते तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुः । जलमाविश्य तं हत्वा नापश्यदुदरेऽर्भकम् ॥४१॥
तदङ्गप्रभवं शङ्खमादाय रथमागमत् । ततः संयमनीं नाम यमस्य दयितां पुरीम् ॥४२॥
गत्वा जनार्दनः शङ्खं प्रदध्मौ सहलायुधः । शङ्खनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः ॥४३॥
तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहिताम् । उवाचावनतः कृष्णं सर्वभूताशयालयम् ।
लीलामनुष्य हे विष्णो युवयोः करवाम किम् ॥४४॥

श्रीभगवानुवाच

गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् । आनयस्व महाराज मच्छासनपुरस्कृतः ॥४५॥
तथेति तेनोपानीतं गुरुपुत्रं यदूत्तमौ । दत्त्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः ॥४६॥

गुरुरुवाच

सम्यक् सम्पादितो वत्स भवद्भ्यां गुरुनिष्क्रयः । को नु युष्मद्विधगुरोः कामानामवशिष्यते ॥४७॥
गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी । छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥४८॥
गुरुणैवमनुज्ञातौ रथेनानिलरंहसा । आयातौ स्वपुरं तात पर्जन्यनिनदेन वै ॥४९॥
समनन्दन् प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ । अपश्यन्त्यो बह्वहानि नष्टलब्धधना इव ॥५०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे गुरुपुत्रानयनं
नाम पञ्चचत्वारिंशोऽध्यायः ॥४५॥

---

पूर्वेणान्वेति । दक्षिणया दक्षिणार्थम् छन्दयामासतुः प्रार्थयामासतुः ॥३६॥ ह हर्षेण ॥ ३७ ॥ द्विजः सान्दीपनिः प्रभासक्षेत्र मृतम् । ह औत्सुक्ये ॥३८॥ तथाऽस्तु बाढमिति । वेलां समुद्रतटम् । अर्हणं पूजनं कृतवान् । निषेदतुः इति पाठः ॥ ३९ ॥ नैवेति द्वयम् ॥४०॥४१॥ तदिति सार्द्धम् । पञ्चजने दैत्ये भवः पाञ्चजन्यः । 'पञ्चजनात्' इति यत् प्रत्ययः । पञ्चजनस्य अङ्गात् प्रभवो यस्य ॥४२॥ प्रजाः संयच्छति नियच्छतीति तथा ॥ ४३ ॥ आशयो हृदयमेव आलयो यस्य तम् । लीलेति पृथक्-पृथक् द्वयोः सम्बोधनम् ॥ ४४ ॥ ४५ ॥ ॥ ४६ ॥ गुरुनिष्क्रयः गुरुदक्षिणा युष्मद्विधयोः शिष्ययोः; गुरोः कामानां मध्ये को नु कामः उवशिष्यते न कोऽपीत्यन्वयः वत्सेति प्राधान्यादेकस्य सम्बोधनम् ॥ ४७ ॥ वां युवयोः । अयातयामानि सफलानि सर्वदोपस्थितानि । 'अयातयामः सफले' इति धरणिः ॥ ४८ ॥ स्वपुरं मथुराम् ॥ ४९ ॥ नष्टं पुनर्लब्धं धनं याभिस्ताः ॥५०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## अथ षट्चत्वारिंशोऽध्यायः

श्रीशुक उवाच

वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा । शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ॥ १ ॥

तमाह भगवान् प्रेष्ठं भक्तमेकान्तिनं क्वचित् । गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥२॥

गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमावह । गोपीनां मद्वियोगाधिं मत्संदेशैर्विमोचय ॥ ३ ॥

ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः । मामेव दयितं प्रेष्ठमात्मानं मनसा गताः ।

ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहम् ॥ ४ ॥

मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः । स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ॥

धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथंचन । प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ॥ ६ ॥

श्रीशुक उवाच

इत्युक्त उद्धवो राजन् संदेशं भर्तुरादृतः । आदाय रथमारुह्य प्रययौ नन्दगोकुलम् ॥ ७ ॥

प्राप्तो नन्दव्रजं श्रीमान् निम्लोचति विभावसौ । छन्नयानः प्रविशतां पशूनां खुररेणुभिः ॥ ८ ॥

वासितार्थेऽभियुध्यद्भिर्नादितं शुष्मिभिर्वृषैः । धावन्तीभिश्च वास्राभिरुधोभारैः स्ववत्सकान् ॥

इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः । गोदोहशब्दाभिरवं वेणूनां निःस्वनेन च ॥१०॥

गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयोः । स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥११॥

अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः । धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥१२॥

सर्वतः पुष्पितवनं द्विजालिकुलनादितम् । हंसकारण्डवाकीर्णैः पद्मषण्डैश्च मण्डितम् ॥१३॥

तमागतं समागम्य कृष्णस्यानुचरं प्रियम् । नन्दः प्रीतः परिष्वज्य वासुदेवधियार्चयत् ॥१४॥

भोजितं परमान्नेन संविष्टं कशिपौ सुखम् । गतश्रमं पर्यपृच्छत् पादसंवाहनादिभिः ॥१५॥

कच्चिदङ्ग महाभाग सखा नः शूरनन्दनः । आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥१६॥

---

षट्चत्वारिंशके गोष्ठमुद्धवं प्रेष्य माधवः ।
नन्दादीनां स्वसन्देशैः शोकमोहौ न्यवारयत् ॥ १ ॥

बुद्ध्या सत्तमः अतीवनिपुणः ॥१॥२॥ नौ आवयोः । प्रीतिम् आवह कुरु ॥३॥ मत् अहमेव प्राणो यासाम् ताः । त्यक्ता दैहिकाः देहसम्बन्धिनः पतिपुत्रादयः याभिः ताः बिभर्मि पालयामि ॥ ४ ॥ अङ्ग हे उद्धव । दूरस्थे सति मां स्मरन्त्यः ॥ ५ ॥ बल्लव्यो गोपिकाः ॥६॥७॥ निम्लोचति अस्तं गच्छति सति । यानं रथः ॥ ८ ॥ वासितार्थे मैथुनार्थे । 'वासिता वृषकामिनी' इति यादवः । शुष्मिभिः मत्तैः । वास्राभिः धेनुभिश्च मण्डितम् ॥ ९ ॥ शब्दैः सह अभितो रवाः मुञ्च आ मुञ्च मा मुञ्चेत्यादयः ॥ १० ॥ ११ ॥ माल्यैः पुष्पैः । आवासैः गृहैः ॥ १२ ॥ द्विजाः पक्षिणः । कारण्डवाः जलकुक्कुटाः । आकीर्णैः व्याप्तैः । षण्डैः समूहैः ॥ १३ ॥ तम् उद्धवम् ॥ १४ ॥ परमान्नं पायसादि । कशिपौ पर्यङ्के संविष्टं शयितम् ॥ १५ ॥ अङ्ग हे उद्धव ! शूरनन्दनो वसुदेवः । मुक्तो बन्धनात् ॥ १६ ॥ दिष्टया मङ्गलार्थेऽव्ययम् । साधूनां शेषे षष्ठी । कर्मणि इति पृथक्

दिष्टचा कंसो हतः पापः सानुगः स्वेन पाप्मना । साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा।१७।
अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् । गोपान् व्रजं चात्मनाथं गावो वृन्दावनं गिरिम्१८
अप्यायास्यति गोविन्दः स्वजनान् सकृदीक्षितुम् । तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम् १९
दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः । दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥२०॥
स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षितम् । हसितं भाषितं चाङ्ग सर्वा नः शिथिलाः क्रियाः२१
सरिच्छैलवनोद्देशान् मुकुन्दपदभूषितान् । आक्रीडानीक्षमाणानां मनो याति तदात्मताम्।२२
मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ । सुराणां महदर्थाय गर्गस्य वचनम् यथा ॥२३॥
कंसं नागायुतप्राणं मल्लौ गजपतिं तथा । अवधिष्टां लीलयैव पशूनिव मृगाधिपः ॥२४॥
तालत्रयं महासारं धनुर्यष्टिमिवेभराट् । बभञ्जैकेन हस्तेन सप्ताहमदधाद् गिरिम् ॥२५॥
प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तो बकादयः । दैत्याः सुरासुरजितो हता येनेह लीलया ॥२६॥

श्रीशुक उवाच

इति संस्मृत्य संस्मृत्य नन्दः कृष्णानुरक्तधीः । अत्युत्कण्ठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः ॥२७॥
यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च । शृण्वन्त्यश्रूण्यवास्राक्षीत् स्नेहस्नुतपयोधरा ॥२८॥
तयोरित्थं भगवति कृष्णे नन्दयशोदयोः । वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा ॥२९॥

उद्धव उवाच

युवां श्लाघ्यतमौ नूनं देहिनामिह मानद । नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ॥३०॥

एतौ हि विश्वस्य च बीजयोनी रामो मुकुन्दः पुरुषः प्रधानम् ।
अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ ॥ ३१ ॥
यस्मिञ्जनः प्राणवियोगकाले क्षणं समावेश्य मनो विशुद्धम् ।
निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः ॥ ३२ ॥

---

पदं योज्यं वा ॥ १७ ॥ अपि किम् । आत्मा श्रीकृष्णः । या गावस्ताः ॥ १८ ॥ १९ ॥ वृषोऽरिष्टः सर्पात् अघासुरात् । सुष्ठु महान् दयालुः आत्मा स्वभावो यस्य तेन ॥ २०॥२१ ॥ आक्रीडानि क्रीडास्थानानि ॥२२॥ सुराणामर्थाय कार्यसिद्धये । महद् गम्भीरं यथा यथार्थमेव । यद्वा । महते अर्थाय भूभारहरणाय ॥२३॥ नागायुतस्य हस्तिदशसहस्रस्य प्राणो बलं यस्मिन् ॥२४॥ महासारं गुरुतरम् । यष्टिम् इक्षुदण्डम् । तालः षष्टिहस्तपरिमितो वृक्षः, केचित्तु 'तालो हस्तचतुष्टयमित्याहुः । एकेन वामेन ॥ २५ ॥ येन कृष्णेन प्राधान्यान्निर्देशो न तु बलस्य । जयतीतिजित् ॥२६॥ प्रसरः प्रवाहः ॥ २७ ॥ २८॥२९ ॥ यत् यस्मात् ॥३०॥ बीजम् उपादानं पुरुषः मुकुन्दः । योनिः निमित्तं प्रधानं प्रकृतिः रामः अन्वीय अनुप्रविश्य । देहात् विलक्षणस्य ज्ञानस्य चिद्रूपस्य जीवस्य ईशाते नियन्तारो भवतः । पुराणौ अनादी ॥३१॥ क्षणं क्षणमात्रपि । समावेश्य स्थिरीकृत्य । कर्माशयं कर्मवासना दग्ध्वा । गतिं मुक्तिम् याति ॥३२॥ भावं भक्तिं व्यधत्ताम् अकुरुताम् महात्मनि 'सुपां सुलुक् इति ङेर्लुक्'

तस्मिन् भवन्तावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ ।
भावं व्यधत्तां नितरां महात्मन् किं वावशिष्टं युवयोः सुकृत्यम् ॥ ३३ ॥

आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः । प्रियं विधास्यते पित्रोर्भगवान् सात्वतां पतिः ॥३४॥
हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम् । यदाह वः समागत्य कृष्णः सत्यं करोति तत् ॥३५॥
मा खिद्यतं महाभागौ द्रक्ष्यथः कृष्णमन्तिके । अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥३६॥
नह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वास्त्यमानिनः। नोत्तमो नाधमो नापि समानस्यासमोऽपि वा ॥
न माता न पिता तस्य न भार्या न सुतादयः । नात्मीयो न परश्चापि न देहो जन्म एव च ॥३८॥
न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु । क्रीडार्थः सोऽपि साधूनां परित्राणाय कल्पते ॥३९॥
सत्त्वं रजस्तम इति भजते निर्गुणो गुणान् । क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हन्त्यजः ॥४०॥
यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते । चित्ते कर्तरि तत्रात्मा कर्तेवाहं धिया स्मृतः ॥४१॥
युवयोरेव नैवायमात्मजो भगवान् हरिः । सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ॥४२॥

दृष्टं श्रुतं भूतभवद्भविष्यत् स्थास्नुश्चरिष्णुर्महदल्पकं च ।
विनाच्युताद् वस्तु तरां न वाच्यं स एव सर्वं परमार्थभूतः ॥ ४३ ॥
एवं निशा सा ब्रुवतोर्व्यतीता नन्दस्य कृष्णानुचरस्य राजन् ।
गोप्यः समुत्थाय निरूप्य दीपान् वास्तून् समभ्यर्च्य दधीन्यमन्थन् ॥ ४४ ॥
ता दीपदीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकङ्कणस्रजः ।
चलन्नितम्बस्तनहारकुण्डलत्विषत्कपोलारुणकुङ्कुमाननाः ॥ ४५ ॥
उद्गायतीनामरविन्दलोचनं व्रजाङ्गनानां दिवमस्पृशद् ध्वनिः ।
दध्नश्च निर्मन्थनशब्दमिश्रितो निरस्यते येन दिशाममङ्गलम् ॥ ४६ ॥

---

सम्बोधनं वा । अखिलस्य जगतः आत्मा उपादानं हेतुः निमित्तं च किं वा अवशिष्टं न किमपि ॥३३॥ पित्रोः युवयोः ॥ ३४ ॥ सात्वतां यदूनां प्रतीपं शत्रुम् । करोति करिष्यत्येव ॥ ३५ ॥ एधसि काष्ठे ज्योतिः अग्निरिव ॥ ३६ ॥ अस्य प्रियादयो न सन्ति । तत्र हेतुद्वयम् । निरभिमानिनः समदृष्टेश्च रागादिरहितत्वात् ॥ ३७ ॥ देहः प्राकृतो नास्ति ॥ ३८ ॥ सदिति सात्त्विकराजसतामसयोनिषु । कल्पते आविर्भवति ॥ ३९ ॥ क्रीडामतीतोऽपि गुणैः कृत्वा क्रीडन् विश्वं सृजति ॥४०॥ भ्रमरिका भ्रमणस्वभावा । मही ईयते प्रतीयते । तत्र चित्ते अहंधिया चित्तमेवाहम् इत्यध्यासेन आत्मा कर्तेव स्मर्यते प्रतीयते इत्यर्थः ॥४१॥ युवयोरेव न केवलम् अपि तु सर्वेषामित्यन्वयः ॥४२॥ भवत् वर्तमानम् । स्थास्नुः स्थावरः चरिष्णुः जङ्गमश्च । यत् किञ्चित् वस्तुमात्रं तत् तरां नितरां तत्त्वतो तद्भिन्नतया वाच्यं निर्वचनार्हं नास्ति किन्तु स एव सर्वमित्यन्वयः ॥४३॥ निरूप्य प्रज्वाल्य । वास्तून् देहल्यादीन् गन्धपुष्पादिभिः ॥४४॥ काञ्च्यादिषु लग्नैः दीपदीप्तैः मणिभिः रत्नैः ता गोप्यः । विरेजुः । चलन्तो नितम्बादयो यासां ताः कुण्डलैः त्विषन्तः स्फुरन्तः कपोलाः यासाम् ताः । अरुणकुङ्कुमयुक्तानि आननानि यासां ताश्च ताश्च ताश्चेति त्रिपदबहुव्रीहिः ॥ ४५ ॥ चकारात् कङ्कणादेश्च ॥ ४६ ॥ व्रजौकसः

भगवत्युदिते सूर्ये नन्दद्वारि व्रजौकसः। दृष्ट्वा रथं शातकौम्भं कस्यायमिति चाब्रुवन् ॥४७॥
अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः। येन नीतो मधुपुरीं कृष्णः कमललोचनः ॥४८॥
किं साधयिष्यत्यस्माभिर्भर्तुः प्रेतस्य निष्कृतिम्। इति स्त्रीणां वदन्तीनामुद्धवोऽगात् कृताह्निकः

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे नन्दशोकापनयनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

व्रजवासिन्यः गोप्यः। शातकौम्भं सुवर्णालङ्कृतम् ॥४७॥ अर्थः कार्यम् ॥४८॥ प्रेतस्य[1] मृतस्य कंसस्य निष्कृतिम् और्ध्वदेहिकम् अस्माभिः अस्मन्मांसपिण्डैः सम्पादयिष्यति किमिति वितर्के ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## अथ सप्तचत्वारिंशोऽध्यायः

### श्रीशुक उवाच

तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलम्बबाहुं नवकञ्जलोचनम्।
पीताम्बरं पुष्करमालिनं लसन्मुखारविन्दं मणिमृष्टकुण्डलम् ॥ १ ॥
शुचिस्मिताः कोऽयमपीच्यदर्शनः कुतश्च कस्याच्युतवेषभूषणः।
इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदाम्बुजाश्रयम् ॥ २ ॥
तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः।
रहस्यपृच्छन्नुपविष्टमासने विज्ञाय संदेशहरं रमापतेः ॥ ३ ॥
जानीमस्त्वां यदुपतेः पार्षदं समुपागतम्। भर्त्रेह प्रेषितः पित्रोर्भवान् प्रियचिकीर्षया ॥ ४ ॥
अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे। स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ॥ ५ ॥

---

आश्वास्य गोपिकाः सप्तचत्वारिंशे तु सोद्धवः।
भ्रामरं गीतमाश्रुत्य तद्दासः सन् पुरीमगात् ॥१॥

तमिति द्वयम्। गोप्यः तम् उद्धवं वीक्ष्य कोऽयं कुतः आयातः कस्य दूत इति वदन्त्यः तं परिवव्रः परिवेष्टितवत्यः इति द्वयोरन्वयः। स्मेति वितर्के। पुष्करं कमलम्। परिमृष्टे उज्ज्वले कुण्डले यस्य। शुचीति संबोधनं वा अपीच्यम् अतिसुन्दरं दर्शनं रूपं यस्य सः ॥ १ ॥ गोप्यः सन्देशहरं दूतं विज्ञाय रहसि एकान्ते तम् अपृच्छन् इत्यन्वयः। कथंभूतम्। सव्रीडेन हासादिना सुसत्कृतम्। प्रश्रयेण विनयेन ॥ ३ ॥ ४ ॥ न चक्ष्महे न पश्यामः। गोव्रजे गोकुले। मुनेः विरक्तस्यापि ॥ ५ ॥ अन्येषु बन्धुव्यतिरिक्तेषु मैत्री अर्थकृता कार्यनिमित्ता। यावदर्थः प्रयोजनं तावत् विडम्बनमनुकरणमात्रमेव मैत्र्या न सा तात्त्विकी। यद्वत् यथा भ्रमरैः सुमनःसु पुष्पेषु ॥ ६ ॥ निः स्वं निर्धनम्। अकल्पं

---

१. अयमेव पाठः साधुः।

अन्येष्वर्थकृता मैत्री यावदर्थविडम्बनम् । पुम्भिः स्त्रीषु कृता यद्वत् सुमनस्स्विव षट्पदैः ॥६॥
निस्स्वं त्यजन्ति गणिका अकल्पं नृपतिं प्रजाः । अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ७ ॥
खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् । दग्धं मृगास्तथाऽरण्यं जारो भुक्त्वा रतां स्त्रियम् ॥८॥
इति गोप्यो हि गोविन्दे गतवाक्कायमानसाः । कृष्णदूते व्रजं याते उद्धवे त्यक्तलौकिकाः ॥ ९ ॥
गायन्त्यः प्रियकर्माणि रुदत्यश्च गतह्रियः । तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः ॥१०॥
काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम् । प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥११॥

गोप्युवाच

मधुप कितवबन्धो मा स्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः ।
वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥१२॥
सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान् भवादृक् ।
परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥१३॥
किमिह बहु षडङ्घ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् ।
विजयसखसखीनां गीयतां तत्प्रसङ्गः क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥१४॥
दिवि भुवि च रसायां काः स्त्रियस्तद् दुरापाः कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ।
चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥१५॥
विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ।
स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किं नु संधेयमस्मिन् ॥१६॥
मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ।
बलिमपि बलिमत्त्वावेष्टयद् ध्वाङ्क्षवत् यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥१७॥

---

पालनासमर्थम् । दत्तदक्षिणं यजमानम् ॥७॥ रताम् अतृप्ताम् ॥८॥ गतानि प्राप्तानि वागादीनि तत्तद्व्यपाराः यासां ताः । लौकिका त्यक्तलोकव्यवहारा आसन् ॥ ९ ॥ रुदत्यश्च तम् अपृच्छन्निति योज्यम् । यानि चरितानि तानि संस्मृत्य ॥१०॥ काचित् श्रीराधा ॥ ११ ॥ हे मधुप भ्रमर नोऽस्माकम् अङ्घ्रिं मा स्पृश । कैः । सपत्नीकुचमर्दितकृष्णमालागतं यत् कुङ्कुमं तद्युक्तश्मश्रुभिः । मधुपतिः यदुपतिः कृष्णः तासां प्रसादं प्रसन्नतां वहतु करोतु । यस्य दूतः त्वं स च द्वयमपि विडम्ब्यम् उपहासास्पदं स्यात् । गोपीसन्तोषार्थं कृष्णेन भ्रमरो दूतः प्रेषित इति ॥ १२ ॥ सुमनसः पुष्पाणि । भवादृक् कृष्णवर्णो दुर्मनाः । बत अहो पद्मा लक्ष्मीः कथं तं परिचरति सेवते । जल्पैः मिथ्याप्रलापैः आकृष्टचेताः ।१३। पुराणं बहुशोऽनुभूतं कृष्णं नोऽस्माकम् अग्रे किं किमर्थं गायसीत्यन्वयः । अगृहाणां तेनैव त्याजितगृहाणाम् । विजयस्य अर्जुनस्य सखा कृष्णः तस्य सखीनाम् अग्रतः तत्संदेशः कथ्यताम् । इष्टाः प्रियाः माथुरस्त्रियः ते इष्टम् अभीष्टं पूरयिष्यन्ति । कुतः आलिङ्गनेन क्षपिता अपास्ता निवृत्ता कुचरुक् कामपीडा यासां ताः ॥१४॥ रसायां रसातले एवं लोकत्रयेऽपि ताः काः स्त्रियः याः तत् तस्य दुष्प्रापा इत्यन्वयः । कथंभूतस्य । कपटपूर्वको यो रुचिरो हासः तेन भ्रूचालनं यस्य तस्य । भूतिः लक्ष्मीः । अथापि कृपणपक्षे दीनानुकम्पिनि जने उत्तमश्लोकशब्दः प्रवर्तते । उद्गतं निवृत्तं तमो दुःखं यस्मात् स तथाभूतः श्लोकः यशो यस्येति तच्छब्दार्थः॥१५॥ शिरसि निहितं मे पादं त्यज । मुकुन्दात् अभ्येत्य शिक्षित्वा दूतकर्मभिः चाटुकारैः प्रियवचनैः

यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्मा विनष्टाः ।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इव विहङ्गा भिक्षुचर्यां चरन्ति ॥१८॥
वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ।
ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमन्त्रिन् भण्यतामन्यवार्ता ॥१९॥
प्रियसख पुनरागाः प्रेयसा प्रेषितः किं वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ।
नयसि कथमिहास्मान् दुस्त्यजद्वन्द्वपार्श्वं सततमुरसि सौम्य श्रीर्वधूः साकमास्ते ॥२०॥
अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहान् सौम्य लन्धूंश्च गोपान् ।
क्वचिदपि स कथा नः किङ्करीणां गृणीते भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु ॥२१॥

श्रीशुक उवाच

अथोद्धवो निशाम्यैवं कृष्णदर्शनलालसाः । सान्त्वयन् प्रियसंदेशैर्गोपीरिदमभाषत ॥२२॥

उद्धव उवाच

अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः । वासुदेवे भगवति यासामित्यर्पितं मनः ॥२३॥
दानव्रततपोहोमजपस्वाध्यायसंयमैः । श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥

---

प्रार्थनाचतुरस्य ते सर्वं कपटं वेद्मि । स्वकृते कृष्णार्थमेव विसृष्टा अपत्यादयो याभिस्ता: नः व्यसृजत् तत्याज एवादृशोऽकृतचेताः कृतघ्नः नु अहो अस्मिन् कृतघ्ने किं नु कथं नु सन्धेयं सन्धिः करणीयः ॥१६॥ मृगयुः व्याध इव कपीन्द्रं वालिनम् विव्यधे। स्त्रियं शूर्पणखाम् । कामयमानाम् । यद्वा । कामः यानं प्राप्तिसाधनं यस्यास्ताम् । बलिं विरोचनपुत्रम् । ध्वाङ्क्षवत् काकवत् अवेष्टयत् बबन्ध । बलिं त्रिलोकीरूपमत्त्वा गृहीत्वा । तत् तस्मात् असितस्य कृष्णवर्णीयवस्तुमात्रस्य सख्यैः अलं न किञ्चित्प्रयोजनम् अथापि हा किं कुर्मः तत्कथारूपोऽर्थः दुस्त्यजः ॥ १७ ॥ यस्य अनुचरितमेव लीला आनन्दजनकं कर्णपीयूषं तस्य विप्रुट् कणिका सस्या सकृ-दनेन सेवनेन निवृत्ता रागद्वेषादयो येषां ते अत एव असत्तुल्याः दीना भोगहीनाः सन्तः विचरन्ति । वस्तुतस्तु अविनष्टाः दीनं तुच्छं कुटुम्बं विहाय दीना परिग्रहशून्या एव बहवो हंसा इव सारग्राहिणः भिक्षुचर्यां पारमहंस्यं ज्ञानपथम् आश्रयन्ति ॥ १८ ॥ कृष्णस्य मृगस्य पत्न्यो हरिण्यः यथा कुलिकस्य व्याधस्य गीतं सत्यमिति श्रद्दधानाः बाणजनिता रुजो ददृशुः एवं जिह्मस्य कुटिलस्य कृष्णस्य वचनम् ऋतमिव श्रद्दधाना वयमपि असकृत् एतत् ददृशिमेति योज्यम् । तदेवाह-तस्य श्रीकृष्णस्य नखस्पर्शेन तीव्रा असह्या कामपीडाः । द्वितीयाबहुवचनम् । तस्मात् अन्यवार्ता कथ्यतां न तु कृष्णस्य । हे उपमन्त्रिन् हे दूत ॥ १९ ॥ परावृत्य पुनरागतं प्रत्याह-अङ्ग हे प्रियस्य कृष्णस्य सखे । पुनः आगाः आगतोऽसि अतः त्वं माननीयोऽसि किम् अनुरुन्धे प्राप्तुमिच्छति तत् वृणीष्व । इह अत्र स्थिताः अस्मान् कथं नयसि । दुस्त्यजं द्वन्द्वं नार्यन्तरसम्पर्को यस्य तस्य पार्श्वम् । श्रीः साकं सहैव सततमास्ते ।२०। अपि किम् । बत हर्षे । आर्यस्य नन्दस्य पुत्रः श्रीकृष्णः । नु वितर्के अगुरुतोऽपि सुगन्धं भुजं शिरसि कदा अधास्यत् धारयिष्यति ॥२१॥ निशाम्य दृष्ट्वा ॥२२॥ स्म नूनम् । इत्येवम् अनन्यनिष्ठम् ॥२३॥ श्रेयोभिः श्रेयःसाधनैः ॥ २४ ॥ प्रवर्तिता । 'आशंसायां भूतवच्चेति भविष्यति निष्ठा ।

भगवत्युत्तमश्लोके भवतीभिरनुत्तमा । भक्तिः प्रवर्तिता दिष्टया मुनीनामपि दुर्लभा ॥
दिष्टया पुत्रान् पतीन् देहान् स्वजनान् भवनानि च । हित्वा वृणीत यूयं यत् कृष्णाख्यं पुरुषं परम् ॥
सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे । विरहेण महाभागा महान् मेऽनुग्रहः कृतः ॥२७॥
श्रूयतां प्रियसंदेशो भवतीनां सुखावहः । यमादायागतो भद्रा अहं भर्तू रहस्करः ॥२८॥

श्रीभगवानुवाच

भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् ॥२९॥

यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही । तथाहं च मनःप्राणभूतेन्द्रियगुणाश्रयः ॥३०॥
आत्मन्येवात्मनाऽऽत्मानं सृजे हन्म्यनुपालये । आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ॥३१॥
आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः । सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥३२॥
येनेन्द्रियार्थान् ध्यायेत मृषा स्वप्नवदुत्थितः । तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः प्रत्यपद्यत ॥३३॥
एतदन्तः समाम्नायो योगः सांख्यं मनीषिणाम् । त्यागस्तपो दमः सत्यं शमुद्रान्ता इवापगा ३४॥
यत् त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम् । मनसः संनिकर्षार्थे मदनुध्यानलाम्यया ॥३५॥
यथा दूरचरे प्रेष्ठे मन आविश्म वर्तते । स्त्रीणां च न तथा चेतः संनिकृष्टेऽक्षिगोचरे॥३६॥
मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृद्धि यत् । अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथ ॥३७॥
या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः । अलब्धरासाः कल्याण्यो माऽऽपुर्मद्वीर्यचिन्तया

श्रीशुक उवाच

एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः । ता ऊचुरुद्धवं प्रीतास्तत्संदेशागतस्मृतीः ॥३९॥

गोप्य ऊचुः

दिष्टयाहितो हतः कंसो यदूनां सानुगोऽघकृत् । दिष्टयाऽऽप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुनाः

---

दिष्टया लोकानामतिभाग्येन ॥२५॥ अवृणीत तदपि दिष्टया ॥२६॥ सर्वात्मभाव अनन्यप्रेमा प्राप्तः । विरहेण हेतुना आगतस्य ममोपरि अनुग्रहः कृतः ॥२७॥ हे भद्रा रहस्करः गुप्तकार्यकर्ता ॥२८॥ भवतीनामित्यर्द्धम् । मे मया सह वियोगो नास्ति । कुतः । सर्वात्मना सर्वव्यापकेन ॥२९॥ भूतेषु स्थावरजङ्गमेषु । वायुना सहितोऽग्निः वाय्वग्निः । मन आदीनि कार्याणि गुणाः कारणं तेषामाश्रयः अनुगतः ॥३०॥ अनुभावेन कार्येण । आत्मना जीवरूपेण च ॥३१॥ अगुणान्वयः न गुणेषु अन्वेति यतो व्यतिरिक्तः पृथक् । ईयते तत्रत्साक्षिरूपेण विश्वतैजसप्राज्ञरूपेण प्रतीयते ॥ ३२ ॥ स्वप्नात् उत्थितः पुमान् जाग्रदवस्थायामपि स्वप्नवत् यथा मृषा मिथ्याभूतानेव इन्द्रियार्थान् विषयान् ध्यायेत् ध्यायंश्च येन मनसा इन्द्रियाण इन्द्रियोपलक्षितभोग्यदेहान् स्त्रीपुत्रादीन् प्रतिपद्यते तत् मनो निरुन्ध्यात् ततो हृदि मदाभासः स्यादित्यन्वयः ॥३३॥ मनीषिणां समाम्नायः वेदः तदादिः सर्वोऽपि साधनकलापः एतदन्तः मनोनिरोधान्तः । त्यागः संन्यासः आपगाः नद्यः ॥ ३४ ॥ दृशां दूरे यत् वर्ते तत् मदनुध्यानार्थं तच्च ध्यानं मनसः सन्निकर्षार्थम् ॥३५॥ स्त्रीणां चकारादन्येषां च मनः ॥३६॥ कृत्स्नं निर्वासनम् । अस्यैव विवरणं विमुक्तेति । वृतयो वहिर्वृत्तयः ॥३७॥ या मया सह अलब्धरासाः ताः मामेव आपुरित्यन्वयः । हे कल्याण्यः ॥ ३८ ॥ स्मृतीः प्राप्तस्मृतय ॥ ३९ ॥ अघकृत् दुःखदः । अहितः शत्रुः । दिष्टया शोभनं

कच्चिद् मदाग्रजः सौम्य करोति पुरयोषिताम् । प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ।४१।
कथं रतिविशेषज्ञः प्रियश्च वरयोषिताम् । नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः ।।४२।।
अपि स्मरति नः साधो गोविन्दः प्रस्तुते क्वचित् । गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथान्तरे ।।

ताः किं निशाः स्मरति यासु तदा प्रियाभिर्वृन्दावने कुमुदकुन्दशशाङ्करम्ये ।
रेमे क्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथः कदाचित् ।।४४।।

अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा । संजीवयन् नु नो गात्रैर्यथेन्द्रो वनमम्बुदैः ।।४५।।
कस्मात् कृष्ण इहायाति प्राप्तराज्यो हताहितः । नरेन्द्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः।।४६।।
किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः । श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः।४७।।
परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिङ्गला । तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ४८
क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदम् । अनिच्छतोऽपि यस्य श्रीरङ्गान्न च्यवते क्वचित् ।।४९।।
सरिच्छैलवनोद्देशा गावो वेणुरवा इमे । संकर्षणसहायेन कृष्णेनाचरिताः प्रभो ।।५०।।
पुनः पुनः स्मारयन्ति नन्दगोपसुतं बत । श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ।।५१।।
गत्या ललितयोदारहासलीलावलोकनैः । माध्व्या गिरा हृतधियः कथं तं विस्मराम हे ।।५२।।
हे नाथ हे रमानाथ व्रजनाथार्तिनाशन । मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवे ।।५३।।

श्रीशुक उवाच

ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वराः । उद्धवं पूजयांचक्रुर्ज्ञात्वाऽऽत्मानमधोक्षजम् ।।५४।।
उवास कतिचिन्मासान् गोपीनां विनुदञ्छुचः । कृष्णलीलाकथां गायन् रमयामास गोकुलम् ।५५।

---

जातम् । आप्तैः तत्र प्राप्तैः यदुभिः ।४०। नोऽस्मासु उचितां प्रीतिं तास्वपि करोति कच्चित् । सप्तम्यर्थे षष्ठ्यौ । स्निग्धं सरसं सव्रीडहासेन उदारम् आकर्षकं च यत् ईक्षणं तेन अर्चितः ।। ४१।। विभ्रमैः कटाक्षादिभिः सत्कृतः कथं नानुवध्येत ।।४२।। स्वैरकथान्तरे याहच्छिककथाप्रसङ्गे प्रस्तुते सति ग्राम्या नः किं स्मरति ।।४३।। वृन्दावने तत्रापि रासगोष्ठ्यांम् अस्माभिः सह यासु रेमे ताः निशाः किं स्मरतीत्यन्वयः । क्वणन्ति ध्वनयन्ति चरणनूपुराणि यस्यां सा चासौ गोष्ठी तस्याम् । ब्रह्मादिभिः अस्माभिरपि ईडिता स्तुता कथा यस्य ।४४। [1]दाशार्हः श्रीकृष्णः स्वकृतया कृष्णकृतया शुचा शोकेन तप्ता नः अस्मान् गात्रैः आश्लेषैः सञ्जीवयन् सन्तोषयन् अपि किं नु इह एष्यतीत्यन्वयः ।। ४५ ।। अहिताः शत्रवः ।। ४६ ।। अस्माभिः किं श्रीपतेः कोऽपि अर्थः प्रयोजनं क्रियेत सम्पद्येत न कोऽपीत्यन्वयः । कृतात्मनः वशीकृतचित्तस्य पूर्णस्य वा ।।४७।। तत् आशया दुःखहेतुत्वम् । दुरत्यया दुस्त्यजा ।। ४८ ।। संविदं गुप्तवर्ताम् । न च्यवते नापयाति ।। ४९ ।। सरिदिति द्वयम् । कृष्णेन आचरिताः सेविताः सरिदादयः अङ्कितैः तत्पदकैः नन्दगोपसुतं स्मारयन्तीत्यन्वयः । बत मोहे ।।५०।।५१।। हे उद्धव । तं कृष्णम् ।। ५२ ।। वृजिनार्णवे दुःखसागरे ।। ५३ ।। आत्मानं सर्वगतम् ज्वरः सन्तापः ।। ५४ ।। शुचः शोको-

---

१. यदुवंशीयः ।

यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत् स उद्धवः । व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्तया ।५६।
सरिद्वनगिरिद्रोणीर्वीक्षन् कुसुमितान् द्रुमान् । कृष्णं संस्मारयन् रेमे हरिदासो व्रजौकसाम् ॥५७॥
दृष्ट्वैमादि गोपीनां कृष्णावेशात्मविक्लवम् । उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥५८॥

एताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः ।
वाञ्छन्ति यद् भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥५९॥
क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावः ।
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥६०॥
नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद् व्रजवल्लवीनाम् ॥६१॥
आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥६२॥
या वै श्रियार्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ।
कृष्णस्य तद् भगवतश्चरणारविन्दं न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥६३॥

वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः । यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥६४॥

श्रीशुक उवाच

अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च । गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥६५॥
तं निर्गतं समासाद्य नानोपायनपाणयः । नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥६६॥

---

दगारान् । विनुदन् अपनयन् ॥ ५५ ॥ ५६ ॥ हरिदास उद्धवः स्वयं रेमे आनन्दमनुभूतवान् ॥ ५७ ॥ कृष्णावे शेन आत्म- विक्लवं मनोव्याकुलताम् ॥ ५८ ॥ एता गोप्यः परं केवलं तनुभृतः सफलजन्मानः । रूढभावः दृढभावः । यद् यं भावम् । अनन्तस्य कथासु रसो रागो यस्य तस्य पुंस इति शेषः ब्रह्मजन्मभिः किं प्रयोजनं न किमपीत्यर्थः ॥ ५९ ॥ इमाः स्त्रियः स्त्रीत्वेन गोपसन्ततित्वेन च गर्हिताः किञ्च भगवदतिरिक्तपत्यन्तरसंयोगात् व्यभिचारेणापि दूषिताः क्व अनु निरन्तरं भजतः अविदुषः प्रभावम् अजानतोऽपि श्रेयः तनोति । यथा उपयुक्तः सेवितः अगराजोऽमृतम् आरोग्यम् ॥६०॥ उ अहो अङ्गे भगवद्वक्षसि नितान्तरते श्रियोऽपि नायं प्रसादः नलिनस्येव गन्धो रुक् कान्तिश्च यासां स्वर्योषितामपि न अन्याः कुतः । कः । यः व्रजवल्लवीनाम् उदगात् प्रकटोऽभूत् । अस्य भुजदण्डाभ्यां गृहीतकण्ठेन लब्ध आशिषो याभिस्तासाम् ॥६१॥ आसां गोपीनां चरणरेणुस्पर्शकतृणां गुल्मादीनां मध्ये किमति तृणादिकं स्यां भवेयम् । आर्यपथं वेदमार्गम् । 'नैका द्वौ पती विन्देत' इति श्रुत्युक्तं । पदवीं लोकं भेजुः प्रापुः ॥ ६२ ॥ यत् श्र्यादिभिः आत्मनि मनसि अर्चितं रासगोष्ठ्यां तत् स्तनेषु न्यस्तं परिरभ्य आलिङ्ग्य च या गोप्यः तापं जहुः तासाभांसामिति पूर्वेणान्वयः ।६३।उद्गीतम् । उत्कृष्टं गानं । भावे क्तः ।६४। अनुज्ञाप्य अनुज्ञां नीत्वा । आमन्त्र्य पृष्ट्वा । यास्यन् यातुं 'लक्षण हेत्वोः' इति शत्रादेशः । दाशार्हः उद्धवः यादवभेदः ॥६५।ः तम् उद्धवम् ॥६६॥ अभिधायिन्यः ।

मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः । वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥६७॥
कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया । मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥६८॥
एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप । उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥६९॥
कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् । वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥७०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे उद्धवप्रतियाने सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

प्रह्वणं शिरसा नतिः । प्रह्वशब्दात् आचारक्विन्तात् ल्युट् प्रह्वाणः पृषोदरादित्वात् ह्रस्वश्च ॥६७॥ यत्र क्वापि योनिषु । मङ्गलाचरितैः पुण्याचरणैः ॥ ६८ ॥ सभाजितः सत्कृतः ॥ ६९ ॥ कृष्णादिभ्यः भक्त्युद्रेकमाह उपायनानि च । राज्ञे उग्रसेनाय तु उपानान्येव न च भक्त्युद्रेकमि त्यन्वयः ॥७०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## अथाष्टचत्वारिंशोऽध्यायः

श्रीशुक उवाच

अथ विज्ञाय भगवान् सर्वात्मा सर्वदर्शनः । सैरन्ध्र्याः कामतप्तायाः प्रियमिच्छन् गृहं ययौ ॥१॥
महार्होपस्करैराढ्यं कामोपायोपबृंहितम् । मुक्तादामपताकाभिर्वितानशयनासनैः ।
धूपैः सुरभिभिर्दीपैः स्रग्गन्धैरपि मण्डितम् ॥ २ ॥
गृहं तमायान्तमवेक्ष्य साऽऽसनात् सद्यः समुत्थाय हि जातसम्भ्रमा ।
यथोपसंगम्य सखीभिरच्युतं सभाजयामास सदासनादिभिः ॥ ३ ॥
तथोद्धवः साधु तयाभिपूजितो न्यषीददुर्व्यामभिमृश्य चासनम् ।
कृष्णोऽपि तूर्णं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ॥ ४ ॥
सा मज्जनालेपदुकूलभूषणस्रग्गन्धताम्बूलसुधासवादिभिः ।
प्रसाधितात्मोपससार माधवं सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥ ५ ॥

---

अष्टचत्वारिंशके तु कुब्जां सन्तोष्य माधवः ।
अक्रूरस्यालयं गत्वा प्राहिणोत्तं गजाह्वयम् ॥ १ ॥

अथ उद्धवागमनानन्तरम् । विज्ञाय उद्धवोक्तम् ॥ १ ॥ गृहं वर्णयति सार्द्धेन । महार्होपस्करैः अमूल्यसामग्रीभिः । कामोपायैः कामासनैः परिपूर्णम् । दाम माला वितानम् उपरिपट्टिका ॥२॥ सा कुब्जा आयान्तं तमवेक्ष्य सखीभिः सह सद्यः समुत्थाय उपसङ्गम्य सम्मुखमागत्य च यथावत् तं कृष्णं पूजयामासेत्तत्त्वयः सदासनं सिंहासनम् । संभ्रमः मानसी त्वरा ॥ ३ ॥ अभिमृश्य हस्तेन स्पृष्ट्वा । तूर्णमित्यत्र नूत्नमिति पाठः प्रशस्तः ।

आहूय कान्तां नवसङ्गमह्रिया विशङ्कितां कङ्कणभूषिते करे।
प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया॥ ६॥
सानङ्गतप्तकुचयोरुरसस्तथाक्ष्णोर्जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती।
दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्तमानन्दमूर्तिमजहादतिदीर्घतापम्॥ ७॥
सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम्। अङ्गरागार्पणेनाहो दुर्भगेदमयाचत॥ ८॥
आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया। रमस्व नोत्सहे त्यक्तुं सङ्गं तेऽम्बुरुहेक्षण॥ ९॥
तस्यै कामवरं दत्त्वा मानयित्वा च मानदः। सहोद्धवेन सर्वेशः स्वधामागमदर्चितम्॥१०॥
दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम्। यो वृणीते मनोग्राह्यमसत्त्वात् कुमनीष्यसौ॥११॥
अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः। किंचिच्चिकीर्षयन् प्रागादक्रूरप्रियकाम्यया॥१२॥
स तान्नरवरश्रेष्ठानाराद् वीक्ष्य स्वबान्धवान्। प्रत्युत्थाय प्रमुदितः परिष्वज्याभ्यनन्दत॥१३॥
ननाम कृष्णं रामं च स तैरप्यभिवादितः। पूजयामास विधिवत् कृतासनपरिग्रहान्॥१४॥
पादावनेजनीरापो धारयञ्छिरसा नृप। अर्हणेनाम्बरैर्दिव्यैर्गन्धस्रग्भूषणोत्तमैः॥१५॥
अर्चित्वा शिरसाऽऽनम्य पादावङ्कगतौ मृजन्। प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत॥१६॥
दिष्टया पापो हतः कंसः सानुगो वामिदं कुलम्। भवद्भ्यामुद्धृतं कृच्छ्राद् दुरन्ताच्च समेधितम्
युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ। भवद्भ्यां न विना किंचित् परमस्ति न चापरम् १८

---

शयनं पर्यङ्कम्। महाधनं बहुमूल्यम्। लोकेत्यनेन रात्रावेव अज्ञात एव। अनुव्रतः अनुसरन्॥ ४॥ मज्जनादिभिः प्रसाधितात्मा सा कुब्जा माधवम् उपससार समीपं जगामेत्यन्वयः कैः। सव्रीडं लीलोत्स्मितैः विभ्रमेक्षितैः सतृष्णकटाक्षपातैश्च। प्रसाधितः रतियोग्यतां प्रापितः आत्मा देहो यया सा। सुधेव स्वादुः य आसवो मादकद्रव्यं तदादिभिः॥ ५॥ शय्यामिति कर्मप्रवचनीययोगे सप्तम्यर्थे द्वितीया। लेशयेत्युक्तेः इतोऽन्यत्पुण्यं नास्तीत्यभिप्रायेण न तु पुण्यस्याल्पत्वविवक्षया॥ ६॥ सा कुब्जा श्रीकृष्णचरणेन कुचादीनां रुजः कामपीडाः मृजन्ती अपनयन्ती चरणं च जिघ्रन्ती सती तं कान्तं परिरभ्य तापम् अजहात् तत्याजेत्यन्वयः। स्तनान्तरं वक्षः॥ ७॥ वस्तुतस्तु दुर्गतं भं भयं यस्मात् स दुर्भः कृष्णः तं गच्छतीति दुर्भगा। मत्वर्थीयोऽच् ततष्टाप्॥ ८॥ आह च इह उष्यतां रमस्व चेत्यन्वयः॥ ९॥ कामवरम् अभीष्टवरम्। स्वधाम वसुदेवगृहम्। कुब्जेयं भूशक्तेर्विभूतिः सा च पत्न्येव अतो न दोषकल्पनेति। विशेषस्तु अस्मत्कृतसाप्ताहिककथायां द्रष्टव्यः इति॥ १०॥ असत्त्वात् नश्वरत्वात् हेतोः यो मनोग्राह्यं विषयसुखं वृणीते स कुमनीषी। कुब्जा तु मनसाऽपि अग्राह्यं श्रीकृष्णं वृणीते अतो बुद्धिमतीत्यर्थः॥ ११॥ भवनं प्रागादित्यत्रान्वेति। किञ्चित् हस्तिनापुरप्रेषणम्॥ १२॥ स इति द्वयम् आरात् दूरादेव। सोऽक्रूरः। तैः रामादिभिः। कृतः आसनपरिग्रहः परिग्रहणं यैस्तान्॥ १३॥१४॥ पादेति द्वयम्। पादौ अवनिज्येते प्रक्षाल्येते याभिः ताः अपः आ सर्वतः शिरसा धारयन् पादौ मृजन् सम्मर्दयन् पुनः अर्चित्वा च तौ अभाषतेति द्वयोरन्वयः। अर्ह्यते ऽनेनेति अर्हणं पूजनद्रव्यम्॥१५॥१६॥ पापः पापी अर्शआद्यजन्तः। वां युवयोः कुलं समेधितं वर्द्धितं च एतत् दिष्ट्या शोभनं जातम्॥ १७॥ जगन्मयौ जगद्व्यापिनौ। परं कारणम् अपरं कार्यं च नास्ति॥ १८॥ श्रुतेति

आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः । ईयते बहुधा ब्रह्मन् श्रुतप्रत्यक्षगोचरम् ॥१९॥

यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भान्ति नाना ।
एवं भवान् केवल आत्मयोनिष्वात्माऽऽत्मतन्त्रो बहुधा विभाति ॥२०॥

सृजस्यथो लुम्पसि पासि विश्वं रजस्तमःसत्त्वगुणैः स्वशक्तिभिः ।
न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बन्धहेतुः ॥२१॥

देहाद्युपाधेरनिरूपितत्वाद् भवो न साक्षान्न भिदाऽऽत्मनः स्यात् ।
अतो न बन्धस्तव नैव मोक्षः स्यातां निकामस्त्वयि नोऽविवेकः ॥२२॥

त्वयोदितोऽयं जगतो हिताय यदा यदा वेदपथः पुराणः ।
बाध्यते पाखण्डपथैरसद्भिस्तदा भवान् सत्त्वगुणं बिभर्ति ॥२३॥

स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः स्वांशेन भारमपनेतुमिहासि भूमेः ।
अक्षौहिणीशतवधेन सुरेतरांशराज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥२४॥

अद्येश नो वसतयः खलु भूरिभागा यः सर्वदेवपितृभूतनृदेवमूर्तिः ।
यत्पादशौचसलिलं त्रिजगत् पुनाति सत्वं जगद्गुरुरधोक्षज याःप्रविष्ट ॥२५॥

कः पण्डितस्त्वदपरं शरणं समीयाद् भक्तप्रियादृतगिरःसुहृदःकृतज्ञात् ।
सर्वान् ददाति सुहृदो भजतोऽभिकामानात्मानमप्युपचयापचयौ न यस्य॥२६॥

---

श्रवणदर्शनविषयीभूतं यथा भवति तथा नानारूपेण भवानेव प्रतीयते । यद्वा । श्रुतस्य ब्रह्मणः प्रत्यक्षं साक्षात्कारो येषां ते श्रुतप्रत्यक्षा ज्ञानिनः तेषाम्॥१९॥ योनिषु अभिव्यक्तिस्थानेषु भूतेषु मह्यादयः यथा भान्ति प्रतीयन्ते । एवम् आत्मयोनिषु आत्माभिव्यक्तिस्थानेषु भूतभौतिकेषु आत्मा परमात्मा स्वतंत्रो भवान् विभातीत्यन्वयः॥२०॥ शक्तिभिः शक्तिरूपैः लुम्पसि संहरसि कर्मभिः सर्जनादिभिश्च । यतः क्व च कदाचिदपि ते बन्धहेतुः अविद्या नास्ति । कुतः ज्ञानात्मनः ॥२१॥ अनिरूपितत्वात् मिथ्यात्वात् हेतोः भवो जन्म तन्मूला भिदा भेदश्च साक्षात् स्वरूपतो न स्यात् । यतः अविद्याभावात् उभौ न स्याताम् । उलूखले च प्रतीयमानौ बन्धमोक्षौ नोऽस्माकं त्वयि विषये निकामः इच्छानुरूपः अविवेक एव उभौ स्याताम् व्यापकस्यात्मनः तौ कथं घटेत इत्यर्थः ॥२२॥ उदितः प्रकाशितः । हिताय स्वर्गापवर्गाय । पुराणोऽनादिः वेदपथः धर्ममार्गः । सत्त्वगुणं शुद्धसत्त्वात्मकं रूपम्॥२३॥ स्वांशेन बलदेवेन सह । अमुष्य यदोः । यशो वितन्वन् विस्तारयितुम् । 'लक्षणहेत्वोः । इति शतृप्रत्ययः ॥२४॥ हे ईश ! या त्वं प्रविष्टः ताः नः वसतयो गृहा भूरिभागाः बहुपुण्याः जाताः । कथंभूत स्त्वम् यस्य तव पादप्रक्षालनजलं गङ्गा त्रिजगत् पुनाति । यश्च त्वं सर्वदेवादिमूर्तिः सन् जगद्गुरुरसि । देवा ब्रह्माद्याः । पितरोऽर्यमाद्याः । भूताः कीटपतङ्गाद्याः । नरोऽतिथयः । वेदा ऋगाद्याः तेषां मूर्तिरेकत्र घनीभावः । एते पञ्चयज्ञदेवताश्चोक्ताः ॥२५॥ कः पण्डितः त्वत्तः अपरं शरणं समीयात् गच्छेत् । कथंभूतात् । ऋतगिरः सत्यवाचः । किं च भजतः पुंसः सर्वान् कामान् किं बहुना आत्मानं स्वरूपमपि ददाति यस्य आत्मनः उपचयापचयौ वृद्धिह्रासौ न स्तः तमात्मानमित्यन्वयः ॥२६॥ नोऽस्माकम् अविवेकिनां भवान् प्रतीतः दृष्टिगोचरो जातः एतत्

दिष्ट्या जनार्दन भवानिह नःप्रतीतो योगेश्वरैरपि दुरापगतिः सुरेशैः।
छिन्ध्याशु नः सुतकलत्रधनाप्तगेहदेहादिमोहरशनां भवदीयमायाम् ॥२७॥

श्रीशुक उवाच

इत्यर्चितः संस्तुतश्च भक्तेन भगवान् हरिः। अक्रूरं सस्मितं प्राह गीर्भिः सम्मोहयन्निव ॥२८॥

श्रीभगवानुवाच

त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा। वयं तु रक्ष्या पोष्याश्च अनुकम्प्याः प्रजा हि वः २९
भवद्विधा महाभागा निषेव्या अर्हसत्तमाः। श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥३०॥
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः। ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥३१॥
स भवान् सुहृदां वै नः श्रेयाञ्छ्रेयश्चिकीर्षया।
जिज्ञासार्थं पाण्डवानां गच्छस्व त्वं गजाह्वयम् ॥३२॥
पितर्युपरते बालाः सह मात्रा सुदुःखिताः। आनीताः स्वपुरं राज्ञा वसन्त इति शुश्रुम ॥३३॥
तेषु राजाम्बिकापुत्रो भ्रातृपुत्रेषु दीनधीः। समो न वर्तते नूनं दुष्पुत्रवशगोऽन्धदृक् ॥३४॥
गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा। विज्ञाय तद् विधास्यामो यथा शं सुहृदां भवेत् ।३५।
इत्यक्रूरं समादिश्य भगवान् हरिरीश्वरः। संकर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥३६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

दिष्टया शोभनं जातम्। अतः नोऽस्माकं सुतादिषु मोहरशनैव माया ताम् आशु छिन्धीत्यन्वयः ॥२७॥२८॥ हि यतः वो युष्माकं प्रजाः पुत्राः स्मः॥ २९ ॥ अर्हसत्तमाः योग्यतमाः। स्वार्थाः स्वार्थसाधनपराः। साधवस्तु परार्थसाधनपराः। साध्नोति परकार्यमिति व्युत्पत्तेः॥ ३० ॥ अम्मयानि तीर्थानि मृन्मयाः शिलामयाश्च देवा न सन्ति अपि तु सन्त्येव। अथाऽपि साधूनाम् अपेक्षाकृतवैशिष्ट्यं मार्गप्रदर्शकत्वात् ॥३१॥ नोऽस्माकं सुहृदां मध्ये श्रेयान् श्रेष्ठतमो भवान्। अतः हे स्व आत्मीय त्व गच्छ॥ ३२ ॥ पितरि पाण्डौ उपरते मृते सा राज्ञा धृतराष्ट्रेण प्रत्यानीताः वसन्तः वसन्ति॥ ३३ ॥ अम्बिकापुत्रो धृतराष्ट्र तेषु समो न वर्तते। कुतः दीनधीः क्षुद्र-बुद्धिः। तत्कुतः। दुष्पुत्रेति। तत्कुतः अन्धदृक् अन्धा विवेकहीना दृक् धीर्यस्य। यथेष्ट हेतुहेतुमद्भावः ॥३४॥ तस्य राज्ञो वृत्तं वर्तनं व्यवहारः। तेषां शं सुखं यथा स्यात्तथेत्यन्वयः॥ ३५ ॥ वै एवार्थे॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे गूढार्थदीपिन्यामष्टचत्वारिंशोध्यायः ॥४८॥

## अथैकोनपञ्चाशत्तमोऽध्यायः

श्रीशुक उवाच

स गत्वा हास्तिनपुरं पौरवेन्द्रयशोऽङ्कितम् । ददर्श तत्राम्बिकेयं सभीष्मं विदुरं पृथाम् ॥१॥

सहपुत्रं च बाह्लीकं भारद्वाजं सगौतमम् । कर्णं सुयोधनं द्रौणिं पाण्डवान् सुहृदोऽपरान् ॥२॥

यथावदुपसंगम्य बन्धुभिर्गान्दिनीसुतः । सम्पृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥३॥

उवास कतिचिन्मासान् राज्ञो वृत्तविवित्सया । दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः ॥४॥

तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् । प्रजानुरागं पार्थेषु न सहद्भिश्चिकीर्षितम् ॥५॥

कृतं च धार्तराष्ट्रैर्यत् गरदानाद्यपेशलम् । आचख्यौ सर्वमेवास्मै पृथा विदुर एव च ॥६॥

पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् । उवाच जन्मनिलयं स्मरन्त्यश्रुकलेक्षणा ॥७॥

अपि स्मरन्ति नः सौम्य पितरौ भ्रातरश्च मे । भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥८॥

भ्रात्रेयो भगवान् कृष्णः शरण्यो भक्तवत्सलः । पैतृष्वसेयान् स्मरति रामश्चाम्बुरुहेक्षणः ॥९॥

सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव ।
सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥१०॥

कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वभावन ।
प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम् ॥११॥

नान्यत्तव पदाम्भोजात् पश्यामि शरणं नृणाम् ।
बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात् ॥१२॥

---

अक्रूरस्तूनपञ्चाशत्तमे गत्वा गजाह्वयम् ।
राज्ञः पार्थेषु वैषम्यं बुद्ध्वा भूयः पुरीमगात् ॥

सोऽक्रूरः । पौरवेन्द्राणां पुरुवंशीयनृपाणां यशोभिः यशःसूचकैः मन्दिरादिभिः अङ्कितम् । अम्बिकापुत्रं धृतराष्ट्रम् ॥१॥ पुत्रं सोमदत्तम् । भारद्वाजो द्रोणः । गौतमः कृपः । द्रौणिः अश्वत्थामा । अपरान् शकुन्यादीन् ददर्श ददर्शेत्यन्वयः ॥ २ ॥ गान्दिनी अक्रूरमाता । उपसङ्गम्य मिलित्वा । स्वयमपि अव्ययं कुशलम् ॥ ३ ॥ विवित्सेति 'विदलृ लाभे' इत्यस्मात् । अल्पसारस्य मन्दबुद्धेः । दुष्टपुत्रस्य । खला दुर्योधनादयः तेषामिच्छानुवर्तिनः ॥ ४ ॥ तेज इति द्वयम् । प्रभावम् । सामर्थ्यम् । शारीरम् । शौर्यमिति क्रमेणार्था । एतानि न सहद्भिः दुर्योधनादिभि यत् अपेशलं क्रूरं कर्म कृतं यच्च अग्रे चिकीर्षितं तत्सर्वम् निवेदयामासेति द्वयोरन्वयः । गरो विषम् ॥ ५ ॥ ६ ॥ अश्रुबिन्दुयुक्ते नेत्रे यस्याः सा ॥ ७ ॥ नोऽस्मात् । पितरौ शूरतत्पत्न्यौ । जामयः । 'जामिः स्वसृकुलस्त्रियोः' इत्यमरः ॥ ८ ॥ पितृष्वसुः कुन्त्याः पुत्रान् पाण्डवान् ॥ ९ ॥ सपत्नाः शत्रवः । वृकाः व्याघ्राः ॥ १० ॥ अवसीदतीं क्लिश्यन्तीम् ॥ ११ ॥ मृत्युग्रस्तः संसारः इति मध्यमपदलोपी समासः । बिभ्यतां

नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने । योगेश्वराय योगाय त्वामहं शरणं गता ॥१३॥

श्रीशुक उवाच

इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम् । प्रारुदद् दुःखिता राजन् भवतां प्रपितामही ॥१४॥

समदुःखसुखोऽक्रूरो विदुरश्च महायशाः । सान्त्वयामासतुः कुन्तीं तत्पुत्रोत्पत्तिहेतुभिः ॥१५॥

यास्यन् राजानमभ्येत्य विषमं पुत्रलालसम् । अवदत् सुहृदां मध्ये बन्धुभिः सौहृदोदितम् ॥१६॥

अक्रूर उवाच

भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन । भ्रातर्युपरते पाण्डावधुनाऽऽसनमास्थितः ॥१७॥

धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रञ्जयन् । वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि॥१८॥

अन्यथा त्वाचरँल्लोके गर्हितो यास्यसे तमः । तस्मात् समत्वे वर्तस्व पाण्डवेष्वात्मजेषु च ॥१९॥

नेह चात्यन्तसंवासः कर्हिचित् केनचित् सह । राजन् स्वेनापि देहेन किमु जायात्मजादिभिः॥२०॥

एकः प्रसूयते जन्तुरेक एव प्रलीयते । एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥२१॥

अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पमेधसः । सम्भोजनीयापदेशैर्जलानीव जलौकसः ॥२२॥

पुष्णाति यानधर्मेण स्वबुद्ध्या तमपण्डितम् । तेऽकृतार्थं प्रहिण्वन्ति प्राणा रायः सुतादयः ॥२३॥

स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः । असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तमः ॥२४॥

तस्माल्लोकमिमं राजन् स्वप्नमायामनोरथम् ।
वीक्ष्यायम्यात्मनाऽऽत्मानं समः शान्तो भव प्रभो ॥२५॥

धृतराष्ट्र उवाच

यथा वदति कल्याणीं वाचं दानपते भवान् । तथाऽनया न तृप्यामि मर्त्यः प्राप्य यथाऽमृतम् ॥२६॥

---

नृणां तव चरणकमलादन्यात् शरणं न पश्यामीत्यन्वयः । आपवर्गिकात् मोक्षप्रदात् ॥१२॥ १३ ॥ स्वजनं पित्रादिकम् । अभिमन्युः परीक्षित्पिता । पितामहोऽर्जुनः प्रपितामहः पाण्डुः तत्पत्नी प्रपितामही कुन्तीति क्रमः ॥ १४ ॥ हेतुभिः जनकैः धर्मानिलादिभिः ॥ १५ ॥ यास्यत् गन्तुमिच्छन् । बन्धुभिः रामकृष्णादिभिः यत् उदितं तत् अक्रूरः अवदत् इत्यन्वयः ॥ १६ ॥ विचित्रवीर्यो धृतराष्ट्रपिता । पाण्डौ उपरते मृते सति तत्पुत्रेषु सत्सु तवाधिकारो नास्ति अर्थापि बलात् आस्थितः इति कटाक्षः । वर्धनं छेदक । 'वर्धनं वृद्धिवर्विष्णुच्छेदे' इति मेदिनी ॥ १७ ॥ १८ ॥ अन्यथा वैषम्यमाचरन् इहैव दुःखं परत्र नरकं च ॥ १९ ॥ सं सहार्थे ॥ २० ॥२१॥ अल्पमेधसः मूढस्य वित्तम् अन्ये पुत्रादयः हरन्तीत्यन्वयः । कैः । संभोज्याः पोष्या वयमिति व्यपदेशैः कपट वचनैः । जलौकसो मत्स्यस्य जीवनभूतानि जलानि यथा तत्पुत्रादय हरन्ति तद्वत् ॥ २२ ॥ यान् पुष्णाति तं मूर्खं ते प्रहिण्वन्ति त्यजन्तीत्यन्वयः । अकृतार्थं अप्राप्तभोगम् ॥ २३ ॥ तमो नरकम् ॥ २४ ॥ त्रिष्वपि कालेषु अस्यानित्यतासूचनार्थं लुप्तोपमात्रयम् । माया इन्द्रजालम् । आत्मना बुद्ध्या आत्मानं मनःनियम्य ॥२५॥ अनया वाचा ॥ २६ ॥ सूनृता मधुरा । सुदामा नाम कश्चित् स्फटिकपर्वतः मेघो वा तत्र भवा सौदामनी । तेनैकदिक्

तथापि सूनृता सौम्य हृदि न स्थीयते चले । पुत्रानुरागविषमे विद्युत् सौदामनी यथा ॥२७॥
ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान् । भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥२८॥

यो दुर्विमर्शपथया निजमाययेदं सृष्ट्वा गुणान् विभजते तदनुप्रविष्टः ।
तस्मै नमो दुरवबोधविहारतन्त्रसंसारचक्रगतये परमेश्वराय ॥२९॥

श्रीशुक उवाच

इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः । सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात् ॥३०॥
शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् । पाण्डवान् प्रति कौरव्य यदर्थं प्रेषितः स्वयम् ॥३१॥

इति श्रीमद्भागवते महापुराणे वैयासिक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

## समाप्तमिदं दशमस्कन्धस्य पूर्वार्द्धम्

हरिः ॐ तत्सत्

---

॥ २७ ॥ विधिं विधानं को वा विधुनोति अन्यथा कर्तुं शक्नोति न कोऽपि ॥ २८ ॥ यो मायया इदं प्राणि जातं सृष्ट्वा तत्र प्रविष्टश्च गुणान् गुण-कार्यंशान्तरागद्वेषा दीन् विभज्य ददाति तस्मै परमेश्वराय नमः इत्यन्वयः । कथभूताय । दुखबोधः विहार एव तन्त्रं मुख्यं कारणं यस्य तत् एवंभूतं यत् संसारचक्रं तस्य गतिः प्रवृत्तिर्यस्मात् तस्मै ॥ २९ ॥ यादवोऽक्रूरः । सुहृद्भिः विदुरादिभिः ॥ ३० ॥ पाण्डवान् प्रति यत् विरुद्धं चेष्टितं तत्सर्वं शशंस कथयामासेत्यन्वयः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे सनाढचवंशावतंसपण्डितप्रवरश्रीराममूर्तिशास्त्रि पौराणिकविरचिताया गूढार्थदीपिन्यामेकोनपञ्चाशत्तमोऽध्यायः ॥

# दशमः स्कन्धः

## उत्तरार्धः



### अथ पञ्चाशत्तमोऽध्यायः

श्रीशुक उवाच

अस्तिः प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ । मृते भर्तरि दुःखार्ते ईयतुः स्म पितुर्गृहान् ॥१॥
पित्रे मगधराजाय जरासंधाय दुःखिते । वेदयांचक्रतुः सर्वमात्मवैधव्यकारणम् ॥२॥
स तदप्रियमाकर्ण्य शोकामर्षयुतो नृप । अयादवीं महीं कर्तुं चक्रे परममुद्यमम् ॥३॥
अक्षौहिणीभिर्विंशत्या तिसृभिश्चापि संवृतः । यदुराजधानीं मथुरां न्यरुणत् सर्वतोदिशम् ॥४॥
निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम् । स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥५॥
चिन्तयामास भगवान् हरिः कारणमानुषः । तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥६॥
हनिष्यामि बलं ह्येतद् भुवि भारं समाहितम् । मागधेन समानीतं वश्यानां सर्वभूभुजाम् ॥७॥
अक्षौहिणीभिः संख्यातं भटाश्वरथकुञ्जरैः । मागधस्तु न हन्तव्यो भूयः कर्ता बलोद्यमम् ॥८॥
एतदर्थोऽवतारोऽयं भूभारहरणाय मे । संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥९॥

---

पञ्चाशत्तमे ईशाभ्यां जरासन्धपराजयः ।
यावनैर्मथुरारोधाद् दुर्गनिर्माणमुच्यते ॥१॥

एतन्नामिके द्वे महिष्यौ । स्मेति प्रसिद्धौ । ईयतुर्जग्मतुः ॥ १ ॥ २ ॥ कंसे शोकः कृष्णे चामर्षस्ताभ्याम् ॥ ३ ॥ ४ ॥ निरीक्ष्येति युग्मकम् । बलं सैन्यम् । उद्वेलं लङ्घितमर्यादम् । अनुगुणमनुरूपं यत् भूभारहरणरूपं प्रयोजनं तत् चिन्तयामासेत्यन्वयः ॥५॥६॥ हनिष्यामीति युग्मम् । समाहितं संस्थितम् भाररूपं बलम् । बलाय सेनानयनाय उद्यमं कर्ता करिष्यति ॥७॥८॥ एतच्छब्दार्थं विवृणोति भूभारेति । मे मया कृतः

अन्योऽपि धर्मरक्षायै देहः सम्भ्रियते मया । विरामायाप्यधर्मस्य काले प्रभवतः क्वचित् ।।१०।।
एवं ध्यायति गोविन्द आकाशात् सूर्यवर्चसौ । रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ।।११।।
आयुधानि च दिव्यानि पुराणानि यदृच्छया । दृष्ट्वा तानि हृषीकेशः संकर्षणमथाब्रवीत् ।।१२।।
पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां प्रभो । एष ते रथ आयातो दयितान्यायुधानि च ।।१३।।
यानमास्थाय जह्येतद् व्यसनात् स्वान् समुद्धर । एतदर्थं हि नौ जन्म साधूनामीश शर्मकृत् १४।।
त्रयोविंशत्यनीकाख्यं भूमेर्भारमपाकुरु ।।१५।।
एवं सम्मन्त्र्य दाशार्हौ दंशितौ रथिनौ पुरात् । निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसाऽऽवृतौ१६
शङ्खं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः । ततोऽभूत् परसैन्यानां हृदि वित्रासवेपथुः ।।१७।।
तावाह मागधो वीक्ष्य हे कृष्ण पुरुषाधम । न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया ।।१८।।
गुप्तेन हि त्वया मन्द न योत्स्ये याहि बन्धुहन् । तव राम यदि श्रद्धा युध्यस्व धैर्यमुद्वह ।।१९।।
हित्वा वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि ।।२०।।

श्रीभगवानुवाच

न वै शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम् । न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ।।२१।।

श्रीशुक उवाच

जरासुतस्तावभिसृत्य माधवौ महाबलौघेन बलीयसाऽऽवृणोत् ।
ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः ।।२२।।
सुपर्णतालध्वजचिह्नितौ रथावलक्षयन्त्यो हरिरामयोर्मृधे ।
स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः सम्मुमुहुः शुचार्दिताः ।।२३।।
हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्बणवर्षपीडितम् ।
स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम् ।।२४।।

---

।। ९ ।। अन्यो रामादिरपि । प्रभवतो वर्धमानस्य । विरामाय विनाशाय ।। १० ।। एवमिति सार्द्धकम् । सूतः सारथिः परिच्छदो युद्धसामग्री ।।११।। दृष्ट्वेत्यर्द्धम् । पुराणानि नित्यानि उपस्थितानि ।।१२।। त्वावतां त्वमेव अवन् रक्षको येषां तेषाम् । आत्वभार्षम् । यद्वा । त्वत्सदृशानां युष्मदस्मदोः सादृश्ये वतुप् 'आसर्वनाम्नः' इत्यात्वम् ।।१३।। एतत् सैन्यम् । यानं रथम् । शर्म सुखम् ।।१४।। त्रयोविंशतीत्यर्द्धम् । अपाकुरु दूरीकुरु ।।१५।। दाशार्हौ यदुवंशीयौ । दंशितौ धृतकवचौ ।। १६ ।। वेपथुः कम्पः ।। १७ ।। पुरुषा अधमा यस्मात् । हे पुरुषोत्तम बालवत्प्रतीयमानेन वस्तुतस्तु एकेनाद्वितीयेन ।। १८ ।। गुप्तेनेत्यर्द्धम् । हे मन्द भीरो हे बन्धुहन् मातुलघातिन् गुप्तेन वैश्येन नन्दपालितत्वात् । इति निन्दा । हे अमन्द वीर । बध्नातीति बन्धुरविद्या तां हन्तीति । गुप्तेन अदृश्येन कालरूपेणेति स्तुतिः ।। १९ ।। मत् मत्तः पापिनः सकाशात् स्ववैकुण्ठं याहि । किं कृत्वा । शरैश्छिन्नं मम देहं हित्वा गर्ते प्रक्षिप्य । निन्दा तुस्पष्टैव ।।२०।। न वै विकत्थन्ते नैव श्लाघन्ते ।।२१।। यथा वायुः अभ्रैः सूर्यं रेणुभिश्चानलम् आवृणोति तथा सैन्यादिसहितौ माधवौ रामकृष्णौ जरासुतः जरासन्धः तावावृणोदित्यन्वयः । अभिसृत्य संमुखमागत्य ।।२२।। गोपुरं पुरद्वारम् । संमुमुहुः उद्विग्ना बभूवुः ।। २३ ।। परेति शत्रुसैन्यरूपमेघानां

गृह्णन् निषङ्गादथ संदधच्छरान् विकृष्य मुञ्चञ्छितबाणपूगान् ।
निघ्नन् रथान् कुञ्जरवाजिपत्तीन् निरन्तरं यद्वदलातचक्रम् ॥२५॥
निर्भिन्नकुम्भाः करिणो निपेतुरनेकशोऽश्वाः शरवृक्णकन्धराः ।
रथा हताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकन्धराः ॥२६॥
संछिद्यमानद्विपदेभवाजिनामङ्गप्रसूताः शतशोऽसृगापगाः ।
भुजाहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाकुलाः ॥२७॥
करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसंकुलाः ।
अच्छूरिकावर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः ॥२८॥
प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः परस्परम् ।
विनिघ्नतारीन् मुसलेन दुर्मदान् संकर्षणेनापरिमेयतेजसा ॥२८॥
बलं तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम् ।
क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयो परम् ॥२९॥
स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः स्वलीलया ।
न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते ॥३०॥

जग्राह विरथं रामो जरासधं महाबलम् । हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा ॥३१॥
बध्यमानं हतारातिं पाशैर्वारुणमानुषैः । वारयामास गोविन्दस्तेन कार्यचिकीर्षया ॥३२॥
स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसम्मतः । तपसे कृतसंकल्पो वारितः पथि राजभिः ॥३३॥

---

मेघानां ये शिलीमुखा वाणास्तेषां दुःसहं वर्षं वृष्टिस्तेन । शार्ङ्गाख्यं धनुःश्रेष्ठं व्यस्फूर्जयत् टङ्कारयुक्तमकरोत् ॥२४॥ निरन्तरं यथा स्यात्तथा निषङ्गात् तूणीरात् शरान् गृह्णन् तान् धनुषि संदधत् पुनः मुञ्चन् कुञ्जरादीन् निघ्नन् यथा अलातचक्रं ज्वलत्काष्ठं सर्वतो भ्रमति तथा सेनायां चतुर्दिक्षु भ्रमन् भगवान् सर्वैरदृश्यतेत्यन्वयः । शितान् तीक्ष्णान् वाणसमूहान् ॥२५॥ अनीकश इति पाठे राशिशः । शरैः छिन्नाः कन्धरा ग्रीवाः येषां । नायका रथिनः ॥२६॥ संछिद्यमानेति सार्द्धद्वयम् । द्विपदादीनाम् अङ्गेभ्यः प्रसूताः शतशो रुधिरनद्यो भगवता प्रवर्तितेति तृतीये नान्वयः । हता गजा एव द्वीपा हया एव ग्रहा ग्राहास्तैर्व्याप्ता 'ग्रहो ग्राहे च ख्यादौ' इति धरणिः । धनूष्येव तरङ्गा आयुधान्येव गुल्माः झाड़ी इति तैः अच्छूरिकाश्चक्राणि । ढालेति वा । मणिप्रवेका मण्युत्तमा पाषाणा अलङ्काराश्च शर्करा बालुकारूपा यासु ताः । वीराणां हर्षकर्यः ॥२७।२८॥ अत्रासृगापगाः न केवलं कृष्णेनैव, प्रवर्तिता किन्तु बलदेवेनापीति व्याख्येयमन्यथाऽग्रिमपद्योक्तवसुदेवपुत्रयोरित्यनेन विरोधः स्यादित्यवधेयम् । विनिघ्नेति सार्द्धम् । अङ्ग हे राजन् सङ्कर्षणेन तद्बलं क्षयं प्रणीतं तत् तयोः परं केवलं विक्रीडितं क्रीडैव न तु पराक्रमः । दुरन्तमनन्तम् । दुर्गं दुर्गमम् ॥ २९ ॥ स्थितिः पालनम् । समीहते करोति । चित्रमाश्चर्यं न । मर्त्याननुविधत्तोऽनुकरोतीति तस्य । मनुष्यदेहमनुकुर्वतोऽमानुषं कर्मेत्यतो वर्ण्यत इत्यर्थः ॥३०॥ हतानि सैन्यानि यस्य अवशिष्टा असव एव यस्य स चासौ स च तम् ॥३१॥ हता बहुशोऽरातयो रिपवः येन । वारुणै वरुणदेवताकैः नागपाशैः । वारयामास मोचयामास ॥३२॥३३॥ पवित्रार्थानि धर्मोपदेशपराणि पदानि येषु तैः । क्षत्रियस्य

२३

वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि । स्वकर्मबन्धप्राप्तोऽयं यदुभिस्ते पराभवः ॥३४॥
हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा । उपेक्षितो भगवता मगधान् दुर्मना ययौ ॥३५॥
मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः । विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः ॥३६॥
माथुरैरुपसंगम्य विज्वरैर्मुदितात्मभिः । उपगीयमानविजयः सूतमागधवन्दिभिः ॥३७॥
शङ्खदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः । वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ ॥३८॥
सिक्तमार्गां हृष्टजनां पताकाभिरलंकृताम् । निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥३९॥
निचीयमानो नारीभिर्माल्यदध्यक्षताङ्कुरैः । निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः । ४०॥
आयोधनगतं वित्तमनन्तं वीरभूषणम् । यदुराजाय तत् सर्वमाहृतं प्रादिशत् प्रभुः ॥४१॥
एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः । युयुधे मागधो राजा यदुभिः कृष्णपालितैः ॥४२॥
अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा । हतेषु स्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः ॥४३॥
अष्टादशमसंग्रामे आगामिनि तदन्तरा । नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥४४॥
रुरोध मथुरामेत्य तिसृभिर्म्लेच्छकोटिभिः । नृलोके चाऽप्रतिद्वन्द्वो वृष्णीञ्छ्रुत्वाऽऽत्मसम्मितान्
तं दृष्ट्वाचिन्तयत् कृष्णः संकर्षणसहायवान् । अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥४६॥
यवनोऽयं निरुन्धेऽस्मानद्य तावन्महाबलः । मागधोऽप्यद्य वा श्वो वा परश्वो वाऽऽगमिष्यति॥४७॥
आवयोर्युध्यतोरस्य यद्यागन्ता जरासुतः । बन्धून् वधिष्यत्यथवा नेष्यते स्वपुरं बली ॥४८॥
तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् । तत्र ज्ञातीन् समाधाय यवनं घातयामहे ॥४९॥
इति सम्मन्त्र्य भगवान् दुर्गं द्वादशयोजनम् । अन्तःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ॥५०॥
दृश्यते तत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् । रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ॥५१॥
सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् । हेमशृङ्गैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः॥५२॥
राजतारकुटैः कोष्ठैर्हेमकुम्भैरलंकृतैः । रत्नकूटैगृहैर्हैमैर्महामरकतस्थलैः ॥५३॥

---

युद्धमेव मुख्यो धर्मः तपस्तु वार्धक्य एवेति बोधकानीत्यर्थः । नयनैर्नीतियुक्तैः । प्राकृतैर्लौकिकैः तदेवाह स्वेति कर्मबन्धेन ॥३४॥ बृहद्रथपुत्रो जरासन्धः ॥ ३५ ॥ मुकुन्द इति युग्मम् । मुकुन्दोऽपि ययौ इति योज्यम् । अरिबलार्णवः शत्रुसेनासमुद्रः । विकीर्यमाण आच्छाद्यमानः । जयजयेत्यादिशब्दैरनुमोदितश्च ॥३६॥३७॥ शंखेति युग्मम् । ब्रह्म वेदः । कौतुकेनोत्सवेन ॥ ३८ ॥ ३९ ॥ निचीयमानो विकीर्यमाणो भगवान् तत्सर्वं वित्तमुग्रसेनाय प्रादिशत् समर्पितवानित्युत्तरेणान्वयः । आयोधनं रणभूमिः । उत्कलितानि विकसितानि ॥ ४०॥४१ ॥ तावति पराजये वर्तमानेऽपि । सप्तदशकृत्वः सप्तदशवारान् ॥ ४२ ॥ अक्षिण्वन् नाशितवन्तः ॥४३॥ तदन्तरा तन्मध्ये: प्रतिद्वन्द्वः प्रतियोद्धा । संमितान् तुल्यान् ॥४५॥ वृजिनं दुःखम् । अहो खेदे ॥४७॥ अस्य अनेन । तृतीयार्थे षष्ठी । छन्दसि बहुलम् इति ॥ ४८ ॥ ४९ ॥ अचीकरत् कारयामास । विश्वकर्मणेति शेषः ॥५०॥ त्वष्टा विश्वकर्मा तस्य संबन्धि विज्ञानं ज्ञानसूचकं क्रियाकौशलम् । रथ्या राजमार्गाः । वास्तु ग्रहनिर्माणशास्त्रं तदनुसारेण ॥ ५१ ॥ सुरेति नगरविशेषणम् । गोपुरैः पुरद्वारैश्च निर्मितमित्युत्तरेणान्वयः ॥ ५२ ॥ रजतम्

वास्तोष्पतीनां च गृहैर्वलभीभिश्च निर्मितम् । चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत् ॥५४॥
सुधर्मां पारजातं च महेन्द्रः प्राहिणोद्धरेः । यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यते ॥५५॥

श्यामैककर्णान् वरुणो हयाञ्छुक्लान् मनोजवान् ।
अष्टौ निधिपतिः कोशान् लोकपालो निजोदयान् ॥५६॥

यद् यद् भगवता दत्तमाधिपत्यं स्वसिद्धये । सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ।५७॥
तत्र योगप्रभावेण नीत्वा सर्वजनं हरिः । प्रजापालेन रामेण कृष्णः समनुमन्त्रितः ।

निर्जगाम पुरद्वारात् पद्ममाली निरायुधः ॥५८॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे दुर्गनिवेशनं नाम पञ्चाशत्तमोऽध्यायः ।।५० ॥

---

आरकुटं पित्तलं च ताभ्यां निर्मितैः कोष्ठैरन्नशालादिभिश्च निर्मितम् । कूटैः शिखरैः गृहैश्च निर्मितम् ॥ ५३ ॥ वास्तोष्पतीनां देवानां मन्दिरैः । यदुदेव उग्रसेनः श्रीकृष्णो वा तेषां गृहैः उल्लसदिति नगरविशेषणम् ॥५४॥ प्राहिणोत् प्रस्थापयमास । हरेः हरये । मर्त्यधर्मैः क्षुत्पिपादिभिः ॥ ५५ ॥ लोकपालो वरुणः निजोदयान् निजविभूतीः प्राहिणोदित्यनुषङ्गः ॥ ५६ ॥ स्वसिद्धये स्वाधिकारसिद्धये ॥ ५७ ॥ तत्रेति सार्द्धम् । समनुमन्त्रितः त्वमत्र पुरं पालय अहं तु एनं मुचुकुन्देन घातयिष्यामिति कृतानुमन्त्रः । सम्यगनुरूपो मन्त्रः समनुमन्त्रः संजातोऽस्येति तारकादित्वादितच् ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे गूढार्थदीपिन्यां पञ्चाशत्तमोऽध्यायः ।

## अथैकपञ्चाशत्तमोऽध्यायः

### श्रीशुक उवाच

तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम् । दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् । पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम् ॥ २ ॥
नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् । मुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ३ ॥
वासुदेवो ह्ययमिति पुमाञ्छ्रीवत्सलाञ्छनः । चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः ॥ ४ ॥
लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति । निरायुधश्चलन् पद्‌भ्यां योत्स्येऽनेन निरायुधः॥५॥
इति निश्चित्य यवनः प्राद्रवन्तं पराङ्मुखम् । अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥ ६ ॥
हस्तप्राप्तमिवात्मानं हरिणा स पदे पदे । नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम् ॥ ७ ॥

---

यवनं दग्धवानेकपञ्चाशत्तम ईश्वरः ।
मुचुकुन्ददृशा तेन स्तुतस्तस्मै वरानदात् ॥ १ ॥

तमिति षट्कम् । तं कृष्णम् विनिष्क्रान्तम् उज्जिहीते इति उज्जिहानस्तम् उद्यन्तं चन्द्रमिव । 'ओहाङ्गतौ' शानच् । भ्राजता कौस्तुभेन आयुक्ता बद्धा ग्रीवा यस्य । नित्येत्यादि पञ्च विशेषणानि मुखारविन्दस्य । श्रीमत् इत्यत्र प्रशंसायां मतुप् । वासुदेव इति सार्द्धम् । श्रीवत्सेति द्विरुक्तिरावेशात् । पराङ्मुखं पृष्ठं दर्शयन्तम् ॥१॥२॥३॥४॥५॥६॥ आत्मानं हस्तप्राप्तमिव दर्शयता हरिणा स यवनेशः दूरं नीत इत्यन्वयः ॥ ७ ॥

पलायनं यदुकुले जातस्य तव नोचितम् । इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः ॥ ८ ॥
एवं क्षिप्तोऽपि भगवान् प्राविशद् गिरिकन्दरम् । सोऽपि प्रविष्टस्तत्रान्यं शयानं ददृशे नरम् ॥९॥
नन्वसौ दूरमानीय शेते मामिह साधुवत् । इति मत्वाच्युतं मूढस्तं पदा समताडयत् ॥१०॥
स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने । दिशो विलोकयन् पार्श्वे तमद्राक्षीदवस्थितम् ॥११॥
स तावत्तस्य रुष्टस्य दृष्टिपातेन भारत । देहजेनाग्निना दग्धो भस्मसादभवत् क्षणात् ॥१२॥

राजोवाच

को नाम स पुमान् ब्रह्मन् कस्य किंवीर्य एव च । कस्माद् गुहां गतः शिश्ये किंतेजो यवनार्दनः ।१३।

श्रीशुक उवाच

स इक्ष्वाकुकुले जातो मान्धातृतनयो महान् । मुचुकुन्द इति ख्यातो ब्रह्मण्यः सत्यसंगरः ॥१४॥
स याचितः सुरगणैरिन्द्राद्यैरात्मरक्षणे । असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोच्चिरम् ॥१५॥
लब्धा गुहं ते स्वःपालं मुचुकुन्दमथाब्रुवन् । राजन् विरमतां कृच्छ्राद् भवान् नः परिपालनात् १६
नरलोके परित्यज्य राज्यं निहतकण्टकम् । अस्मान् पालयतो वीर कामास्ते सर्व उज्झिताः ।१७।
सुता महिष्यो भवतो ज्ञातयोऽमात्यमन्त्रिणः । प्रजाश्च तुल्यकालीया नाधुना सन्ति कालिताः १८
कालो बलीयान् बलिनां भगवानीश्वरोऽव्ययः । प्रजा कालयते क्रीडन् पशुपालो यथा पशून् ॥१९॥
वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः । एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः ॥२०॥
एवमुक्तः स वै देवानभिवन्द्य महायशाः । अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥२१॥
स्वापं यातं यस्तु मध्ये बोधयेत्त्वामचेतनः । स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणात् ॥२२॥
यवने भस्मतान्नीते भगवान् सात्वतर्षभः । आत्मानं दर्शयामास मुचुकुन्दाय धीमते ॥२३॥
तमालोक्य घनश्यामं पीतकौशेयवाससम् । श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥२४॥
चतुर्भुजं रोचमानं वैजयन्त्या च मालया । चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥२५॥
प्रेक्षणीयं नृलोकस्य सानुरागस्मितेक्षणम् । अपीच्यवयसं मत्तमृगेन्द्रोदारविक्रमम् ॥२६॥

---

क्षिपन् निन्दन् इत्यावेशात् ॥८॥ सोऽपि यवनोऽपि । तत्र कन्दरे शयानम् ॥९॥ असौ कृष्णः ननु वितर्के॥१०॥ स शयानो मुचुकुन्दः । तं यवनम् ॥११॥ स यवनः । तस्य मुचुकुन्दस्य ॥१२॥ नामेति प्रसिद्धे । कस्य वश्यः । किंवीर्यः किंप्रभावः । किंतेजः कस्य पुत्रः । 'तेजो वीर्यें' इति नाममाला ॥१३॥ सङ्गरो युद्धं प्रतिज्ञा वा ॥१४॥ स मुचुकुन्दः । रक्षणे निमित्ते ॥१५॥ गुहं कार्तिकेयम् । स्वःपालं स्वर्गपालं सेनापतिम् । नः परिपालनात् यत् कृच्छ्रं कष्टं तस्मात् ॥ १६ ॥ उज्झिता त्यक्ताः ॥१७॥ अमात्याः समीपवर्तिनः । कालिता मारिताः कालेनेति शेषः ॥ १८ ॥ कालयते चालयति ॥ १९ ॥ नोऽस्मांकं सकाशात् वरमिति योज्यम् । ईश्वरो दाता ॥ २० ॥ ॥ २१ ॥ भस्मतां नीते इत्येव पाठः प्राक्तनः लेखकभ्रमात्तास्थाने सेति जातम् इति वंशीधरी ॥२२॥ तमिति चतुष्कम् राजा तमालोक्य शंकितः सन् पर्यपृच्छदिति चतुर्थेनान्वयः । वैजयन्ती पञ्चरत्नमाला । अपीच्यं त्वति सुन्दरे । वयो यौवनम् । मृगेन्द्रस्य सिंहस्येव उदारः पराभवजनकः । विक्रमो यस्य धर्षितोऽभिभूतः । दुधर्षम् अपराभाव्यम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ यस्त्वं गह्वरे दुर्गमे विपिने विचरसि स भवान् क इत्यन्वयः ।

पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य धर्षितः । शङ्कितः शनकै राजा दुर्धर्षमिव तेजसा ॥२७॥

मुचुकुन्द उवाच

को भवानिह सम्प्राप्तो विपिने गिरिगह्वरे । पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके ॥२८॥

किंस्वित्तेजस्विनां तेजो भगवान् वा विभावसुः । सूर्यः सोमो महेन्द्रो वा लोकपालोऽपरोऽपि वा२९

मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् । यद् बाधते गुहाध्वान्तं प्रदीपः प्रभया यथा ॥३०॥

शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव । स्वजन्म कर्म गोत्रं वा कथ्यतां यदि रोचते ॥३१॥

वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबन्धवः । मुचुकुन्द इति प्रोक्तो यौवनाश्वात्मजः प्रभो ॥३२॥

चिरप्रजागरश्रान्तो निद्रयोपहतेन्द्रियः । शयेऽस्मिन् विजने कामं केनाप्युत्थापितोऽधुना ॥३३॥

सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना । अनन्तरं भवाञ्छ्रीमान् लक्षितोऽमित्रशातनः ३४॥

तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः । हतौजसो महाभाग माननीयोऽसि देहिनाम् ॥३५॥

एवं सम्भाषितो राज्ञा भगवान् भूतभावनः । प्रत्याह प्रसहन् वाण्या मेघनादगभीरया ॥३६॥

श्रीभगवानुवाच

जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः । न शक्यन्तेऽनुसंख्यातुमनन्तत्वान्मयापि हि ॥३७॥

क्वचिद् रजांसि विममे पार्थिवान्युरुजन्मभिः । गुणकर्माभिधानानि न मे जन्मानि कर्हिचित्३८॥

कालत्रयोपपन्नानि जन्मकर्माणि मे नृप । अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः ॥३९॥

तथाप्यद्यतनान्यङ्ग शृणुष्व गदतो मम । विज्ञापितो विरिञ्चेन पुराऽहं धर्मगुप्तये ।

भूमेर्भारायमाणानामसुराणां क्षयाय च ॥४०॥

अवतीर्णो यदुकुले गृह आनकदुन्दुभेः । वदन्ति वासुदेवेति वसुदेवसुतं हि माम् ॥४१॥

कालनेमिर्हतः कंसः प्रलम्बाद्याश्च सद्द्विषः । अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा ॥४२॥

सोऽहं तवानुग्रहणार्थं गुहामेतामुपागतः । प्रार्थितः प्रचुरं पूर्वं त्वयाहं भक्तवत्सलः ॥४३॥

---

उरूणि बहूनि कण्टकानि यस्मिन् ॥ २७ ॥ स्विन् वितर्के । अपरः कुबेरादिः ॥२८॥ ऋषभमुत्तमं श्रीविष्णुम् । गुहाध्वान्तं हृदयाज्ञानम् ॥२९॥ अस्माकमिति शेषे षष्ठी । अन्यलीकं सत्यं सत्यं कथ्यताम् । गोत्रं नाम । यद्वा अन्यलीकं निष्कपटं शुश्रूषतामित्यत्रान्वेति ॥ ३० ॥ ऐक्ष्वाका इक्ष्वाकुवंशीयाः । 'दाण्डिनायन' इत्यादिना निपातः । यौवनाश्वो युवनाश्वपुत्रो मान्धाता । क्षत्रबन्धवा क्षत्रियाधमा अपि इति विनयात् ॥३१॥ उपहतानि व्याकुलानि । कामं यथेच्छं शये अशयिषि । भूते लट् ॥३२॥ शातनः नाशकः ॥३३॥ भूरि चिरम् अधिकं वा ॥३४॥ संभाषितः पृष्टः । संभावित इति पाठे पूजितः ॥३५॥ अङ्ग हे राजन् । अनुसंख्यातुं गणयितुम् ॥३६॥ क्वचित्कदाचित्कश्चित् । यद्यपि रजः कणान् विमिमीते गणयति लडर्थे लिट् । उरुभिर्बहुभिः ॥ ३७ ॥ कालत्रयसंबन्धीनि । अनुक्रमन्तो गणयन्तः । अन्तं पारम् न गच्छन्ति । परमर्षयो वसिष्ठादयः ॥ ३८ ॥ तथापीति अर्द्धम् ।३९।भारायमाणानां भारवदाचरताम् । कर्तुः क्यङ् इति क्यङ् । गृहे भार्यायाम् ।४०। वासुदेवेति सुप्सुपेति समासः । पूर्वं यः कालनेमिः स कंसः । प्रलम्ब आदिर्येषान्ते एव धेनुकादयो न तु प्रलम्बस्तस्य बलदेवकृतहननादित्य-

वरान् वृणीष्वराजर्षे सर्वान् कामान् ददामि ते । मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम् ॥

श्रीशुक उवाच

इत्युक्तस्तं प्रणम्याह मुचुकुन्दो मुदान्वितः । ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥४५॥

मुचुकुन्द उवाच

विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् ।
सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित् पुरुषश्च वञ्चितः ॥४६॥
लब्ध्वा जनो दुर्लभमत्र मानुषं कथंचिदव्यङ्गमयत्नतोऽनघ ।
पादारविंदं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥४७॥
ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः ।
मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिन्तया ॥४८॥
कलेवरेऽस्मिन् घटकुडचसंनिभे निरूढमानो नरदेव इत्यहम् ।
वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वागणयन् सुदुर्मदः ॥४९॥
प्रमत्तमुच्चैरिति कृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥५०॥
पुरा रथैर्हेमपरिष्कृतैश्चरन् मतङ्गजैर्वा नरदेवसंज्ञितः ।
स एव कालेन दुरत्ययेन ते कलेवरो विट्कृमिभस्मसंज्ञितः ॥५१॥
निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः ।
गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते ॥५२॥

---

तद्गुणसंविज्ञानो बहुव्रीहिः ॥ ४१ ॥ चक्षुषा निमित्तेन मयैवेति योज्यम् ॥ ४२ ॥ प्रार्थित इति सार्द्धम् । द्रष्टुमिति शेषः ॥४३॥ गर्गवाक्यम् । द्वापरे भगवानवतरिष्यति त्वं च द्रक्ष्यसीत्येवंरूपम् ॥४४॥ अनर्थे संसारे दृक् दृष्टिर्यस्य । वञ्चितः परस्परं निजनिजकपटेन । सज्जते आसक्तो भवति ॥ ४५ ॥ अत्र कर्मभूमौ । कथञ्चित् भगवदनुग्रहेण । अव्यङ्गं पूर्णाङ्गम् । असति विषयसुखे । यथा पशुस्तृणलुब्धः सन् कूपे पतति ॥४६॥ उन्नद्धः संवृद्धः । आसज्जमानस्य आसक्तस्य । दुरन्ता अपारा ॥ ४७ ॥ अस्मिन् नरदेवोऽहमिति निरूढाभिमानो गां भूमिं पर्यटन् त्वामपि अगणयन् अनाद्रियमाणः सुदुर्मदोऽभवम् अतो निष्फलो गत इति पूर्वेणान्वयः । कुडचं भित्तिः । सन्निभे सदृशे ॥ ४८ ॥ उच्चैरतिशयेन प्रमत्तमेनं जनम् अप्रमत्तस्त्वं सहसा अकस्मादेव अभिपद्यसे ग्रससे । अहिर्यथा मूषकम् । लेलिहानो लोलजिह्व इत्यर्थः ॥ ४९ ॥ चरन् विचरन् । श्वादिभिर्भक्षितो विष्ठेति । अभक्षितः कृमिरिति । दग्धो भस्मेति । दुरत्ययेन दुरतिक्रमणीयेन ॥ ५० ॥ दिक्चक्रं दिङ्मण्डलम् । अभूतविग्रहोऽसंभावितसंग्रामः । पूर्वं ये समास्तैः वन्दितः । क्रीडामृगो वानर इव नीयते इतस्ततश्चाल्यते । वरासनं सिंहासनम् ॥५१॥ तदपेक्षया भोगापेक्षया । स्वराट् इन्द्रः । पुनर्जन्मान्तरे चक्रवर्ती वा । तर्षस्तृष्णा यस्य सः । न कल्पते न समर्थो भवति ॥५२॥ हे अच्युत ! भ्रमतः पुंसः यदाभवस्यांतो भवेत् तन्निवृत्तिकालः प्राप्तः स्यात् ।

करोति कर्माणि तपस्सु निष्ठितो निवृत्तभोगस्तदपेक्षया ददत् ।
पुनश्च भूयेयमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ॥५३॥
भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः ।
सत्संगमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥५४॥
मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया ।
यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखण्डभूमिपैः ॥५५॥
न कामयेऽन्यं तव पादसेवनादकिंचनप्रार्थ्यतमाद् वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम् ॥५६॥
तस्माद् विसृज्याशिष ईश सर्वतो रजस्तमःसत्त्वगुणानुबन्धनाः ।
निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥५७॥
चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैरवितृषषडमित्रोऽलब्धशान्तिः कथंचित् ।
शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि माऽऽपन्नमीश ॥५८॥

श्रीभगवानुवाच

सार्वभौम महाराज मतिस्ते विमलोर्जिता । वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥५९॥
प्रलोभितो वरैर्यत्त्वमप्रमादाय विद्धि तत् । न धीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचित् ॥६०॥
युञ्जानानामभक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन् दृश्यते पुनरुत्थितम् ॥६१॥
विचरस्व महीं कामं मय्यावेशितमानसः । अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥६२॥
क्षात्रधर्मस्थितो जन्तून् न्यवधीर्मृगयादिभिः । समाहितस्तत्तपसा जह्यघं मदुपाश्रितः ॥६३॥
जन्मन्यनन्तरे राजन् सर्वभूतसुहृत्तमः । भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम् ॥६४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे मुचुकुन्दस्तुतिर्नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

तर्हि तदा सतां समागमः सङ्गमः भवेत् । मतिर्भक्तिः । परं कारणमवरं कार्यं तयोरीशे नियन्तरि त्वयि ॥५३॥ राज्यानुबन्धो राज्यासक्तिस्तस्या अपगमः त्यागः यदृच्छयाऽकस्मादभूत् इत्येष ते त्वया कृतः । योऽपगमः । एकचर्यया एकान्तनिष्ठया अखण्डभूमिपैः सार्वभौमैरपि प्रार्थ्यते ॥ ५४ ॥ अकिञ्चनैर्भक्तैः । पादसेवनादन्यं वरं नेत्यन्वयः । क आर्यो विवेकी वर्णाति । बन्धनं संसारकारणम् ॥५५॥ यतो वराणां बन्धकत्वं तस्माद्धेतोः । हे ईश आशिषः फलानि विसृज्य त्वां शरणं व्रजामीत्यवयः । ज्ञप्तिमात्रं ज्ञानस्वरूपम् । रजआदिभिरनुबध्यन्ते संसृज्यन्ते तथा आशिषो विशेषणम् । रजसा ऐश्वर्यं तमसा शत्रुनाशः सत्त्वाद्धर्मः ॥ ५८ ॥ वृजिनैः पापभोगैः । अनुतापैः पुण्यभोगक्षयैः । न वितृषा न तृप्ता षडिन्द्रियलक्षणा शत्रवो यस्य । कथञ्चिदलब्धशान्तिरिति वा तत् समुपेतः प्राप्तोऽहम् । तस्य विशेषणत्रयम । आपन्नम् आपद्ग्रस्तं मां पाहीति । मालिनी वृत्तम् ॥ ५७ ॥ विमला निर्वासना । ऊर्जिता बलवती च ते मतिः । कामैर्विषयै न विहता नाकृष्टा ॥५८॥ अप्रमादाय अनासक्ति दर्शयितुम् । आशीभि न भिद्यते न चाल्यते ॥ ५९ ॥ युञ्जानानां निरोधार्थं प्रयतमानानाम् । उत्थितं विषयासक्तं दृश्यते ॥ ६० ॥ कामं यथेच्छम् । तुभ्यं तव ॥ ६१ ॥ तत् अघं जन्तुवधोत्थं पापम् ॥ ६२ ॥ अनन्तरे आगमिनि । केवलमद्वितीयं मामुपैष्यसि ॥ ६३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे गूढार्थदीपिन्यामेकपञ्चाशत्तमोऽध्यायः

## अथ द्विपञ्चाशत्तमोऽध्यायः

### श्रीशुक उवाच

इत्थं सोऽनुगृहीतोऽङ्ग कृष्णेनेक्ष्वाकुनन्दनः । तं परिक्रम्य सन्नम्य निश्चक्राम गुहामुखात् ॥१॥
स वीक्ष्य क्षुल्लकान् मर्त्यान् पशून् वीरुद्वनस्पतीन् । मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम्॥२॥
तपःश्रद्धायुतो धीरो निःसङ्गो मुक्तसंशयः । समाधाय मनः कृष्णे प्राविशद् गन्धमादनम् ॥३॥
बदर्याश्रममासाद्य नरनारायणालयम् । सर्वद्वन्द्वसहः शान्तस्तपसाऽऽराधयद्धरिम् ॥४॥
भगवान् पुनराव्रज्य पुरीं यवनवेष्टिताम् । हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम् ॥५॥
नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः । आजगाम जरासंधस्त्रयोविंशत्यनीकपः ॥६॥
विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ । मनुष्यचेष्टामापन्नौ राजन् दुद्रुवतुर्द्रुतम् ॥७॥
बिहाय वित्तं प्रचुरमभीतौ भीरुभीतवत् । पद्भ्यां पद्मपलाशाभ्यां चेरतुर्बहुयोजनम् ॥८॥
पलायमानौ तौ दृष्ट्वा मागधः प्रहसन् बली । अन्वधावद् रथानीकैरीशयोरप्रमाणवित् ॥९॥
प्रद्रुत्य दूरं संश्रान्तौ तुङ्गमारुहतां गिरिम् । प्रवर्षणाख्यं भगवान् नित्यदा यत्र वर्षति ॥१०॥
गिरौ निलीनावाज्ञाय नाधिगम्य पदं नृप । ददाह गिरिमेधोभिः समन्तादग्निमुत्सृजन् ॥११॥
तत उत्पत्य तरसा दह्यमानतटादुभौ । दशैकयोजनोत्तुङ्गान्निपेततुरधो भुवि ॥१२॥
अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ । स्वपुरं पुनरायातौ समुद्रपरिखां नृप ॥१३॥
सोऽपि दग्धाविति मृषा मन्वानो बलकेशवौ । बलमाकृष्य सुमहन्मगधान् मागधो ययौ ॥१४॥
आनर्ताधिपतिःश्रीमान् रैवतो रेवतीं सुताम् । ब्रह्मणा चोदितः प्रादाद् बलायेति पुरोदितम्॥१५॥
भगवानपि गोविन्द उपयेमे कुरूद्वह । वैदर्भीं भीष्मकसुतां श्रियो मात्रां स्वयंवरे ॥१६॥

---

द्विपञ्चाशत्तमे धावन् गतः कृष्णः प्रवर्षणम् ।
तद्दाहात्स्वपुरीं यातो भैष्मीसन्देशमश्रृणोत् ॥ १ ॥

अङ्ग हे राजन् ! स मुचुकुन्दः । मुखात् द्वारात् ॥१॥ क्षुल्लकान् अल्पप्रमाणान् । 'क्षुल्लकस्त्रिषु नीचेऽल्पे' इति मेदिनी ॥२॥ तपसि कृष्णाराधने । गन्धमादनं पर्वतम् ॥३॥ द्वन्द्वं शीतोष्णादि सहते ॥४॥ बलं सैन्यम् । तदीयं यवनाहृतम् धनं निन्ये नेतुमुपचक्रमे ॥५॥ गोभिर्वृषयुक्तशकटैः ॥६॥ वेगरभसं वेगाधिक्यम् ॥ ७ ॥ भीरुशब्दोऽत्यर्थकः ॥८॥ रथानीकैः रथिकसैन्यैः । प्रमाणं बलप्रमाणम् ॥९॥ आरुहतां बाहुलकाच्च्लेरङ् । भगवान् इन्द्रः ॥१०॥ निलीनौ तिरोहितौ । पदं निलयस्थानम् । एधोभिः काष्ठैः गिरिं वेष्टयित्वा । उत्सृजम् प्रक्षिपन् ॥ ११ ॥ ततो गिरेः सकाशात् । तटः प्रान्तभागः ॥ १२ ॥ स्वपुरं द्वारकाम् ॥ १३ ॥ १४ ॥ रैवतो रेवतपुत्रः ककुद्मी । पुरा नवमस्कन्धे ॥ १५ ॥ भगवानिति युग्मम् । माति प्रविशति सर्वं विश्वमस्यामिति मात्रां परिपूर्णां मूर्तिम् । 'रुक्मिणी कृष्णजन्मनि' इति विष्णुपुराणाच्च । तरसा बलेन । तरो बले च वेगे च इति मेदिनी । तार्क्ष्यपुत्रः कश्यपपुत्रो गरुडः । 'तार्क्ष्यौ गरुडकश्यपौ' इत्यमरः । प्रमथ्य निर्जित्य ॥ १६ ॥ १७ ॥

प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् । पश्यतां सर्वलोकानां तार्क्ष्यपुत्रः सुधामिव ॥१७॥

राजोवाच

भगवान् भीष्मकसुतां रुक्मिणीं रुचिराननाम् । राक्षसेन विधानेन उपयेम इति श्रुतम् ॥१८॥

भगवञ्छ्रोतुमिच्छामि कृष्णस्यामिततेजसः । यथा मागधशाल्वादीन् जित्वा कन्यामुपाहरत् ॥१९॥

ब्रह्मन् कृष्णकथाः पुण्या माध्वीर्लोकमलापहाः। को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः॥२०॥

श्रीशुक उवाच

राजाऽऽसीद् भीष्मको नाम विदर्भाधिपतिर्महान् । तस्य पञ्चाभवन् पुत्राः कन्यैका च वरानना॥२१॥

रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तरः । रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥२२॥

सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः । गृहागतैर्गीयमानास्तं मेने सदृशं पतिम् ॥२३॥

तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम् । कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे ॥२४॥

बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप । ततो निवार्य कृष्णद्विड् रुक्मी चैद्यममन्यत ॥२५॥

तदवेत्यासितापाङ्गी वैदर्भी दुर्मना भृशम् । विचिन्त्याप्तं द्विजं कंचित् कृष्णाय प्राहिणोद् द्रुतम् ॥

द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः । अपश्यदाद्यं पुरुषमासीनं काञ्चनासने ॥२७॥

दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासनात् । उपवेश्यार्हयांचक्रे यथाऽऽत्मानं दिवौकसः ॥२८॥

तं भुक्तवन्तं विश्रान्तमुपगम्य सतां गतिः । पाणिनाभिमृशन् पादावव्यग्रस्तमपृच्छत ॥२९॥

कच्चिद् द्विजवरश्रेष्ठ धर्मस्ते वृद्धसम्मतः । वर्तते नातिकृच्छ्रेण संतुष्टमनसः सदा ॥३०॥

संतुष्टो यर्हि वर्तेत ब्राह्मणो येन केनचित् । अहीयमानः स्वाद् धर्मात् स ह्यस्याखिलकामधुक् ॥

असंतुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः । अकिंचनोऽपि संतुष्टः शेते सर्वाङ्गविज्वरः ॥३२॥

विप्रान् स्वलाभसंतुष्टान् साधून् भूतसुहृत्तमान् । निरहंकारिणः शान्तान् नमस्ये शिरसाऽसकृत् ॥

कच्चिद् वः कुशलं ब्रह्मन् राजतो यस्य हि प्रजाः । सुखं वसन्ति विषये पाल्यमानाः स मे प्रियः॥

यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया । सर्वं नो ब्रूह्यगुह्यं चेत् किं कार्यं करवाम ते ॥३५॥

---

राक्षसो 'युद्धहरणात्' इति स्मृतेः । उपयेमे परिणीतवान् ॥१८॥१९॥ माध्वीः अतीवमधुराः ॥२०॥२१॥ अग्रजो ज्येष्ठः । तदनन्तरोऽनुज । इति सर्वत्रान्वेति ॥२२॥ सा रुक्मिणी गृहागतैर्नारदादिभिः गीयमानाः ॥२३॥ समुद्वोढुम् उपयन्तुम् दधे चकार ॥२४॥ बन्धूनां पित्रादीनाम् ।ताननादृत्य । ततः कृष्णाय दानात् बन्धून् निवार्य । द्विट् जन्मान्तरीयसंस्कारवशेन ॥ २५ ॥ तत् भ्रातुर्हठम् अवेत्य ज्ञात्वा । आप्तं विश्वस्तम् । कृष्णाय कृष्णमानेतुम् । प्राहिणोत् प्रेषयामास ॥२६॥ प्रतीहारैः द्वारपालैः ॥२७॥ ब्रह्मण्यो ब्राह्मणभक्तः अवरुह्य अवतीर्य । देवा यथा आत्मानं परमात्मानं श्रीकृष्णम् पूजयन्ति ॥२८॥ अभिमृशन् शनैः शनैः संमर्दयन् ॥ २९ ॥ नातिकृच्छ्रेण सुखेन ॥ ३० ॥ अहीयमानोऽच्यवमानः । हि एवार्थे ॥ ३१ ॥ असकृत् पुनः पुनः । आप्नोति तेषु भ्रमति । नैकत्र सुखितः सन् तिष्ठतीत्यर्थः । विज्वरस्तापरहितः शेते सुखमास्ते ॥३२॥३३॥ राजतो राज्ञः सकाशात् वो युष्माकम् । यस्य राज्ञो विषये देशे ॥३४॥ दुर्गं दुर्गमं समुद्रमुल्लङ्घ्य अगुह्यं गोप्यं न चेत्तर्हि नोऽस्मभ्यम् ॥ ३५ ॥

एवं सम्पृष्टसम्प्रश्नो ब्राह्मणः परमेष्ठिना । लीलागृहीतदेहेन तस्मै सर्वमवर्णयत् ॥३६॥

रुक्मिण्युवाच

श्रुत्वा गुणान् भुवनसुन्दर शृण्वतां ते निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम् ।
रूपं दृशां दृशिमतामखिलार्थलाभं त्वय्यच्युताऽऽविशति चित्तमपत्रपं मे ॥३७॥
का त्वा मुकुन्द महती कुलशीलरूपविद्यावयोद्रविणधामभिरात्मतुल्यम् ।
धीरा पतिं कुलवती न वृणीत कन्या काले नृसिंह नरलोकमनोऽभिरामम् ॥३८॥
तन्मे भवान् खलु वृतः पतिरङ्ग जायामात्मार्पितश्च भवतोऽत्र विभो विधेहि ।
मा वीरभागमभिमर्शतु चैद्य आराद् गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥३९॥
पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिरलं भगवान् परेशः ।
आराधितो यदि गदाग्रज एत्य पाणिं गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥४०॥
श्वो भाविनि त्वमजितोद्वहने विदर्भान् गुप्तः समेत्य पृतनापतिभिः परीतः ।
निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥४१॥
अन्तःपुरान्तरचरीमनिहत्य बन्धूंस्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ।
पूर्वेद्युरस्ति महती कुलदेवियात्रा यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥४२॥
यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ।
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून् व्रतकृशाञ्छतजन्मभिः स्यात् ॥४३॥

---

सम्पृष्टः सम्प्रश्नः पृष्टव्योऽर्थो यं सः ॥ ३६ ॥ हे अच्युत ते गुणान् रूपं च श्रुत्वा मे चित्तमपत्रपं लज्जारहितं सत् त्वयि आविशति आसक्तं भवतीत्यन्वयः । कथंभूतान् गुणान् । शृण्वतां पुंसां कर्णरन्ध्रैरन्तः प्रविश्य अङ्गतापं हरतः । अङ्गेति सम्बोधनं वा । कथंभूतं रूपम् दृशिमतां चक्षुष्मताम् अभीष्टपदार्थानां लाभो यस्मात्तथाभूतम् ॥ ३७ ॥ हे मुकुन्द का नाम कुलवती कन्या त्वां पतिं न वृणीत । कथंभूतम् । कुलादिभिरात्मनैव तुल्यं निरुपमम् । पुनश्च नरलोकमात्रस्य मनोऽभिरमयतीति तथा । महती गुणवती । सिंहः श्रेष्ठः ॥३८॥ अङ्ग हे । तत् तस्मात् मे मया वृतः आत्मा देहश्च भवतः भवतेऽर्पितः । शेषे षष्ठी । अतोऽत्रागत्य मां जायां विधेहि । वीरस्य तव भागं शिशुपालः मां दूरादपि मा स्पृशतु । यथा शृगालः सिंहस्य बलिं न स्पृशति तद्वत् ॥३९॥ पूर्तादिभिर्यदि भगवान् अलमत्यर्थमाराधितस्तर्हि स एव मे पाणिं गृह्णातु नान्ये शिशुपालादयः । पूर्तं वापीकूपादि । इष्टं यागादि । दत्तं दानम् । नियमो गङ्गास्नानादिः । व्रतमेकादश्यादि ॥ ४० ॥ हे अजित श्वो भाविनि विवाहे प्रथमं गुप्त एव विदर्भानागत्य पश्चात्सेनापतिभिः परिवृतः सन् चैद्यादीनां सैन्यं पराभूय मामुद्वह ॥४१॥ कथमुद्वहे इति शङ्कसे चेत्तर्हि । पूर्वेद्युः विवाहात्पूर्वदिने । महती महत्त्वपूर्णा । यस्यां वधूः वहिर्गिरिजामित्यन्वयः । उपेयात् गच्छेत् ॥ ४२ ॥ महान्त इन्द्रादय आत्मनोऽपहत्यै स्वाज्ञाननिवृत्तये यस्याङ्घ्रिरजसा स्नानं वाञ्छन्ति तस्य भवतः प्रसादमित्यन्वयः भवच्छब्दे षष्ठ्या लुक् । अत्र दृष्टान्तः—उमापतिरिव । ननूमापतिरात्मतमोपहत्यै इति व्याख्येयमन्यथा 'ज्ञानं महेश्वरादिच्छेदिति स्मृतेर्विरोधापत्तेः । अत अपहत्यै इति पृथक् पदं कार्यम् । तथा च अपगता हतिः नाशो यस्याः सा अपहतिर्मर्यादा तद्रक्षणाय स रजःस्नपनं प्रक्षालनोदकं श्रीगङ्गारूपं न

ब्राह्मण उवाच

इत्येते गुह्यसंदेशा यदुदेव मयाऽऽहृताः। विमृश्य कर्तुं यच्चात्र क्रियतां तदनन्तरम् ॥४४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे रुक्मिण्युद्वाहप्रस्तावे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

केवलं वाञ्छति अपि तु शिरसा धारयतीत्यर्थः। एतेन मद्भक्ताः अपि एवमेव हरिं सेवेरन् अन्यथा तेषां पातः स्यादिति मर्यादा व्यञ्जितेति। कथंभूतः उमापतिः आत्मतमः आत्मा श्रीकृष्णः। अतिशयेन आत्मेत्यात्मतमः। श्रीकृष्णरूपः। यदि न लभेय तदा जह्यामित्यत्र 'हेतु हेतुमतोर्लिङ्'। एवं कृत्वा कदापि पतिः स्यादित्यतः पूर्वपद्ये धीरेत्युक्तम् इति वंशीधरी ॥ ४३ ॥ आहृताः आनीताः अत्र यत्कर्तुं युक्तं तत् अनन्तरं शीघ्रमेव क्रियताम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

## अथ त्रिपञ्चाशत्तमोऽध्यायः

वैदर्भ्याः स तु संदेशं निशम्य यदुनन्दनः। प्रगृह्य पाणिना पाणिं प्रहसन्निदमब्रवीत् ॥१॥

श्रीभगवानुवाच

तथाऽहमपि तच्चित्तो निद्रां च न लभे निशि। वेदाहं रुक्मिणा द्वेषान्ममोद्वाहो निवारितः ॥२॥

तामानयिष्य उन्मथ्य राजन्यापसदान्मृधे। मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव ॥३॥

श्रीशुक उवाच

उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः। रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥४॥

स चाश्वैः शैब्यसुग्रीवमेघपुष्पबलाहकैः। युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ॥५॥

आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः। आनर्तादेकरात्रेण विदर्भानगमद्धयैः ॥६॥

राजा स कुण्डिनपतिः पुत्रस्नेहवशं गतः। शिशुपालाय स्वां कन्यां दास्यन् कर्माण्यकारयत् ॥७॥

---

त्रिपञ्चाशत्तमे गत्वा कुण्डिनं स्वप्रियोक्तितः।
पश्यतां द्विषतां कृष्णो रुक्मिणीमहरद् बलात् ॥ १ ॥

वैदर्भ्या रुक्मिण्याः ॥ १ ॥ यथा सा मच्चित्ता तथाऽहमपि तच्चित्तः ॥२॥ मृधे संग्रामे राजन्येषु अपसदान् नीचान् शिशुपालादीन् उन्मथ्य निर्जित्य तामनयिष्ये। एधसः काष्ठात् ॥३॥ उद्वाहर्क्षं विवाहनक्षत्रं परश्वो रात्रौ ॥४॥ स च दारुकः। शैब्यादिनामकैः अश्वैः ॥५॥ तूर्णगैः शीघ्रगामिभिः हयैः। एका चासौ रात्रिश्चेत्येकरात्रः ॥६॥ स भीष्मकः। दास्यन् दातुम् ॥७॥ पुरमिति युग्मम्। रथ्या पण्यवीथिका। संमृष्टाः संशोधिताः संसिक्ताश्च मार्गादयो यस्मिन्। तोरणं वन्दनमालिकाः। स्रगादीनि आबिभ्रतीति तैः। स्त्रीपुरुषैः जुष्टं सुसज्जितमकारयदिति

पुरं सम्मृष्टसंसिक्तमार्गरथ्याचतुष्पथम् । चित्रध्वजपताकाभिस्तोरणैः समलंकृतम् ॥८॥
स्रग्गन्धमाल्याभरणैर्विरजोऽम्बरभूषितैः । जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगुरुधूपितैः ॥९॥
पितॄन् देवान् समभ्यर्च्य विप्रांश्च विधिवन्नृप । भोजयित्वा यथान्यायं वाचयामास मङ्गलम् ॥१०॥
सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम् । अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः ॥११॥
चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः । पुरोहितोऽथर्वविद् वै जुहाव ग्रहशान्तये ॥१२॥
हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् । प्रादाद् धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ॥
एवं चेदिपती राजा दमघोषः सुताय वै । कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम् ॥१४॥
मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः । पत्त्यश्वसंकुलैः सैन्यैः परीतः कुण्डिनं ययौ ॥१५॥
तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च । निवेशयामास मुदा कल्पितान्यनिवेशने ॥१६॥
तत्र शाल्वो जरासंधो दन्तवक्त्रो विदूरथः । आजग्मुश्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः ॥१७॥
कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम् । यद्यागत्य हरेत् कृष्णो रामाद्यैर्यदुभिर्वृतः ॥१८॥
योत्स्यामः संहतास्तेन इति निश्चितमानसाः । आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः ॥१९॥
श्रुत्वैतद् भगवान् रामो विपक्षीयनृपोद्यमम् । कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः ॥२०॥
बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः । त्वरितः कुण्डिनं प्रागाद् गजाश्वरथपत्तिभिः ॥२१॥
भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः । प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा ॥२२॥
अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः । नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम् ।
सोऽपि मावर्ततेऽद्यापि मत्संदेशहरो द्विजः ॥२३॥
अपि मय्यनवद्यात्मा दृष्ट्वा किंचिज्जुगुप्सितम् । मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ॥२४॥
दुर्भगाया न मे धाता नानुकूलो महेश्वरः । देवी वा विमुखा गौरी रुद्राणी गिरिजा सती ॥२५॥
एवं चिन्तयती बाला गोविन्दहृतमानसा । न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाकुले ॥२६॥

---

क्रियाशेषः ॥८॥९॥ मङ्गलं स्वस्तिपाठं वाचयामास कन्यां प्रतीत्युत्तरेणान्वेति ॥१०॥ कौतुकेन विवाहसूत्रेण मङ्गलं यस्याः अहतं नवीनम् वस्त्रयुग्मं तेन ॥११॥ वै प्रसिद्धार्थे अथर्ववित् अथर्वमन्त्राणां ग्रहशान्त्यर्थमुपयोगाव ॥१२॥ रूप्यं रजतम् । राजा भीष्मकः ॥१३॥ सुताय शिशुपालाय अभ्युदयोचितं विवाहोचितं कर्म नान्दीश्राद्धादि कारयामास ॥१४॥१५॥ तं दमघोषम् । समभ्येत्यसंमुखं गत्वा । अन्यद् वरयोग्यम् निवेशनं तस्मिन् ॥१६॥ तत्रेति सार्द्धम् कुण्डिनपुरे । यत्ता उद्युक्ताः । साधितुं साधयितुं दापयितुम् अन्तर्भावितण्यर्थः ॥१७॥ यदीति सार्द्धम् संहता मिलिताः सन्तः । समग्रं सर्वाङ्गपूर्णम् ॥१८॥ श्रुत्वेति युग्मम् । शङ्कितः कर्तरि क्तः । तारकादित्वादि-तज्वा ॥१९॥२०॥ द्विजस्य प्रत्यापत्तिं प्रत्यागमनम् ॥२१॥ अहो खेदे त्रियामा रात्रिस्तयैव अन्तरितो व्यवहितः अल्पराधसो मन्दभाग्यायाः । अत्रानागमने ॥ २२ ॥ सोऽपीत्यर्द्धम् ॥२३॥ अपि किम् अनवद्यः निर्दोषस्वरूपः ॥२४॥ देवीनामनन्तत्वाद् गौरीति तत्रापि गौरवर्णत्वेनानिश्चयात् रुद्राणीति तत्रापि गङ्गाप्रसक्तिरत आह गिरिजेति पुनरपि नद्याः प्रसक्तिरत आह सती नाम्नीति ॥ २५ ॥ कलाभिर्बिन्दुभिः व्याप्ते । कालः आगमनकालं ॥२६॥

एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप । वाम ऊरुर्भुजो नेत्रमस्फुरन् प्रियभाषिणः ॥२७॥
अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः । अन्तःपुरचरीं देवीं राजपुत्रीं ददर्श ह ॥२८॥
सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती । आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता ॥२९॥
तस्या आवेदयत् प्राप्तं शशंस यदुनन्दनम् । उक्तं च सत्यवचनमात्मोपनयनं प्रति ॥३०॥
तमागतं समाज्ञाय वैदर्भी हृष्टमानसा । न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा ॥३१॥
प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ । अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः ॥३२॥
मधुपर्कमुपानीय वासांसि विरजांसि सः । उपायनान्यभीष्टानि विधिवत् समपूजयत् ॥३३॥
तयोर्निवेशनं श्रीमदुपाकल्प्य महामतिः । ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा ॥३४॥
एवं राज्ञां समेतानां यथावीर्यं यथावयः । यथाबलं यथावित्तं सर्वैः कामैः समार्हयत् ॥३५॥
कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः । आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम् ॥३६॥
अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा । असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥३७॥
किंचित् सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् । अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः ॥३८॥
एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः । कन्या चान्तःपुरात् प्रागाद् भटैर्गुप्ताम्बिकालयम् ३९
पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम् । सा चानुध्यायती सम्यङ्मुकुन्दचरणाम्बुजम् ४०
यतवाङ् मातृभिः सार्धं सखीभिः परिवारिता । गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः ।
मृदङ्गशङ्खपणवास्तूर्यभेर्यश्च जघ्निरे ॥४१॥
नानोपहारबलिभिर्वारमुख्याः सहस्रशः । स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलंकृताः ॥४२॥
गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः । परिवार्य वधूं जग्मुः सूतमागधवन्दिनः ॥४३॥
आसाद्य देवीसदनं धौतपादकराम्बुजा । उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम् ॥४४॥

---

वध्वा इति सन्निहितविवाहत्वात् । प्रियभाषिणः शुभसूचका कृष्णागमन सूचका । एतानि एकदैवाऽस्फुरन् ॥ २७ ॥ हेति हर्षे ॥ २८ ॥ सा रुक्मिणी । अव्यग्रा स्वस्था आत्मनो देहस्य मनसो वा गतिर्यस्य । यद्वा । अव्यग्रा सती आत्मनो गतिं श्रीकृष्णम् आलक्ष्य ॥ २९ ॥ प्राप्तं कृष्णं तस्यै आवेदयत् । तथा आत्मनो रुक्मिण्या आनय नं प्रति यदुक्तं तच्च शशंसेत्यन्वयः ॥३०॥ तं श्रीकृष्णम् । प्रियम् एतत्कार्योचितं प्रियं वस्तु पारितोषिकम् अपश्यन्ती सती केवलं ननाम । तेन विप्रगृहं तु तदैव सम्पत्तिपूर्णमभूत् प्रणत्या च तस्या ऋणित्वमेव जातमिति व्यञ्जितम् ॥३१॥ समर्हणैः पूजनद्रव्यैः सह अभ्ययात् संमुखमाजगाम ॥३२॥ उपानीय समर्प्य । मधुपर्कं दधिमधुमिश्रितम् द्रव्यम् ॥३३॥ यथा यथावत् ॥३४॥ समेतानामागतानाम् ॥ ३५ ॥ ३६ ॥ अत्र पद्ये षडवधारणानि । अस्यैव रुक्मिण्येव अर्हत्येव असावेव भैष्म्या एव समुचित एवेति ॥३७॥ नोऽस्माकं यत् किञ्चित्सुकृतमस्ति तेन तुष्टः पाणिं गृह्णातु इत्येव नोऽस्माकम् उपर्यनुग्रहः ॥३८॥ कला भावना । गुप्ता सती ॥३९॥ पद्भ्यामिति युग्मम् । यतवाक् धृतमौना । मातृभिस्तत्तुल्याभिः । सन्नद्धैर्बद्धकवचैः ॥४०॥४१॥ मृदङ्गेत्यर्द्धम् ॥४२॥ नानेति युग्मम् । वारमुख्या गणिकोत्तमाः । उपस्पृश्य आचम्य ॥४३॥४४॥ प्रवयसो वृद्धाः पुरोहित-

तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः । भवानीं वन्दयांचक्रुर्भवपत्नीं भवान्विताम् ॥४५॥
नमस्ये त्वाम्बिकेऽभीक्ष्णं स्वसंतानयुतां शिवाम् । भूयात् पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥
अद्भिर्गन्धाक्षतैर्धूपैर्वासःस्रङ्माल्यभूषणैः । नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ॥४७॥
विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत् । लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः ॥४८॥
तस्यै स्त्रियस्ताः प्रददुः शेषां युयुजुराशिषः । ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः ॥४९॥
मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात् । प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना ॥५०॥

तां देवमायामिव वीरमोहिनीं सुमध्यमां कुण्डलमण्डिताननाम् ।
श्यामां नितम्बार्पितरत्नमेखलां व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम् ॥५१॥

शुचिस्मितां बिम्बफलाधरद्युतिशोणायमानद्विजकुन्दकुड्मलाम् ॥
पदा चलन्तीं कलहंसगामिनीं शिञ्जत्कलानूपुरधामशोभिना ।
विलोक्य वीरा मुमुहुः समागता यशस्विनस्तत्कृतहृच्छयार्दिताः ॥५२॥
यां वीक्ष्य ते नृपतयस्तदुदारहासव्रीडावलोकहृतचेतस उज्झितास्त्राः ।
पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ॥५३॥
सैवं शनैश्चलयती चलदब्जकोशौ प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ।
उत्सार्य वामकरजैरलकानपाङ्गैः प्राप्तान् ह्रियैक्षत नृपान् ददृशेऽच्युतं च ॥५४॥
तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम् ।
रथं समारोप्य सुपर्णलक्षणं राज्यचक्रं परिभूय माधवः ।
ततो ययौ रामपुरोगमैः शनैः सृगालमध्यादिव भागहृद्धरिः ॥५५॥

---

स्त्रियः ॥४५॥ स्वसन्तानो गणेशादिः ॥४६॥ अद्भिरिति युग्मम् । अद्भिर्जलादिभिः अम्बिकां तथा तैरेव द्रव्यैर्लवणादिभिश्च विप्रस्त्रीरपि समपूजयादित्यन्वयः । लवण पूपः कचोरिकाः । कण्ठसूत्रमुपवीतम् । उपहारो नैवेद्यम् । बलिर्नारिकेलादिर्नतु छागादिः ॥४७॥४८॥ तस्यै रुक्मिण्यै । शेषां सप्रसादमालाम् आशीर्वादांश्च ददुः ॥४९॥ मुनिव्रत मौनम् । भृत्यां सखीम् । रत्नमुद्रा रत्नाङ्गुलीयकम् ॥५०॥ तामिति सार्द्धद्वयम् । तां रुक्मिणीं देवमामिव विलोक्य समागता वीरा मुमुहुर्मूर्च्छिता बभूवुरिति तृतीयेनान्वयः । इव एवार्थे । मध्यमः कटिभागः । श्यामां षोडशवार्षिकीम् । व्यञ्जन्तौ प्रकटयन्तौ स्तनौ यस्याः । कुन्तलैरलकैः । शुचि मोहकम् । बिम्बफलवत् योऽधरस्तस्य द्युतिभिः शोणायमाना अरुणायमाना ये द्विजा दन्ता त एव कुन्दकुड्मलानि कुन्दकुसुमकलिकाः इव यस्यास्ताम् शिञ्जन्त्यः शब्दं कुर्वत्य या कलाः क्षुद्रघण्टिकास्तद्युक्तं नूपुरं तस्य धाम दीप्तिस्तेन शोभितुं शीलमस्येति तेन ॥५२॥ यां वीक्ष्य ते भुवि पेतुः सा रुक्मीणित्युत्तरेणान्वयः । उदार आकर्षकः हासः व्रीडावलोकश्च तेन हृतानि आकृष्टानि चेतांसि येषां ते । उज्झितानि त्यक्तानि ॥ ५३ ॥ चलदब्जकोशाविव कोमलौ चरणौ चालयन्ती । करजैर्नखैर्विकीर्णान् अलकान् अपसार्य ह्रिया नृपानैक्षत तदैवाच्युतं च ददृशे इति चकारस्यान्वयः । अत्रान्ते सेति पाठोऽसम्बन्धः श्रीधरासम्मतश्च ॥५४॥ तामिति सार्द्धम् । तां कन्यां जहार ततश्च शनैर्ययावित्युत्त-

तं मानिनः स्वाभिभवं यशःक्षयं परे जरासंधवशा न सेहिरे।
अहो धिगस्मान् यश आत्तधन्वनां गोपैर्हृतं केसरिणां मृगैरिव ॥५६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे रुक्मिणीहरणं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥५३॥

---

रेणान्वयः। शनैरिति निर्भयत्वद्योतनाय। द्विषतांसमीक्षतामित्यनादरे षष्ठी। रामः पुरोगम अग्रणीर्येषां तैर्यदुभिः सह। हरिः सिंहः। सुपर्णलक्षणं गरुडध्वजम् ॥ ५५ ॥ तं रुक्मिणीहरणरूपम् स्वपराभवं परे शत्रवः न सेहिरे अहो खेदे। अस्मान् धिक् यतोऽस्माकं यशो गोपराजैर्हृतमित्यन्वयः। वयं मृगास्ते सिंहाः क्वसाम्यमित्यर्थः इति। स्तुतिः ॥५६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे त्रिपञ्चाशत्तमोऽध्यायः ॥५३॥

## अथ चतुःपञ्चाशत्तमोऽध्यायः

### श्रीशुक उवाच

इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः। स्वैःस्वैर्बलैःपरिक्रान्ता अन्वीयुर्धृतकार्मुकाः ॥१॥
तानापतत आलोक्य यादवानीकयूथपाः। तस्थुस्तत्सम्मुखा राजन् विस्फूर्ज्य स्वधनूंषि ते ॥२॥
अश्वपृष्ठे गजस्कन्धे रथोपस्थे च कोविदाः। मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ॥३॥
पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा। सव्रीडमैक्षत्तद्वक्त्रं भयविह्वललोचना ॥४॥
प्रहस्य भगवानाह मा स्म भैर्वामलोचने। विनङ्क्षत्यधुनैवैतत्तावकैः शात्रवं बलम् ॥५॥
तेषां तद्विक्रमं वीरा गदसंकर्षणादयः। अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान् रथान् ॥६॥
पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि। सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः ॥७॥
हस्ताः सासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः। अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥८॥

---

शत्रून् जित्वा चतुष्पञ्चाशत्तमे रुक्मिमुण्डनम्।
भैष्म्याः प्रसान्त्वनं पुर्यां तद्विवाहश्च वर्ण्यते ॥ १ ॥

सुसंरब्धा अतीवक्रुद्धाः। दंशिता धृतकवचाः वाहान् आरुह्य। अन्वीयुः कृष्णमन्वधावन् ॥ १ ॥ यूथपाः सेनापतयः विस्फूर्ज्य टङ्कारयित्वा तस्थुः ॥ २ ॥ रथोपस्थे रथमध्ये ॥ ३ ॥ बलं सैन्यम्। शरासारैः शरवर्षैः छन्नं वीक्ष्य मध्यमः कटिभागः ॥ ४ ॥ मा स्म भैः भयं मा कृथाः। 'बाहुलकात्' सिचः परस्य ईडभावः हल्ङ्याप् इति लोपश्च। तावकैस्त्वदीयैः सैन्यैः ॥ ५ ॥ तेषां राज्ञाम्। स चासौ विक्रमस्तम्। अमृष्यमाणाः असहमानाः। नाराचैर्बाणैः जघ्नुः ॥ ६ ॥ पेतुरिति युग्मम्। उष्णीष शिरोवेष्टनम्। इष्वासो धनुः। इषवो बाणा अस्यन्ते प्रक्षिप्यन्तेऽनेनेति। करभाः करस्याधस्तना भागाः करैकदेशाः। यद्वा हस्तिशुण्डादण्डतुल्या ऊरवः। अश्वतरः खच्चरेति प्रसिद्धः ॥ ७ ॥ ८ ॥ हन्यमानं बलं यस्य

हन्यमानबलानीका वृष्णिभिर्जयकाङ्क्षिभिः । राजानो विमुखा जग्मुर्जरासंधपुरःसराः ॥९॥
शिशुपालं समभ्येत्य हृतदारमिवातुरम् । नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ॥१०॥
भो भोः पुरुषशार्दूल दौर्मनस्यमिदं त्यज । न प्रियाप्रिययो राजन् निष्ठा देहिषु दृश्यते ॥११॥
यथा दारुमयी योषिन्नृत्यते कुहकेच्छया । एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः ॥१२॥
शौरेः सप्तदशाहं वै संयुगानि पराजितः । त्रयोविंशतिभिः सैन्यैर्जिग्य एकमहं परम् ॥१३॥
तथाप्यहं न शोचामि न प्रहृष्यामि कर्हिचित् । कालेन दैवयुक्तेन जानन् विद्रावितं जगत् ॥१४॥
अधुनापि वयं सर्वे वीरयूथपयूथपाः । पराजिताः फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः ॥१५॥
रिपवो जिग्युरधुना काल आत्मानुसारिणि । तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः ॥१६॥
एवं प्रबोधितो मित्रैश्चैद्योऽगात् सानुगः पुरम् । हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः॥१७॥
रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन् स्वसुः । पृष्ठतोऽन्वगमत् कृष्णमक्षौहिण्या वृतो बली ॥१८॥
रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम् । प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ॥१९॥
अहत्वा समरे कृष्णमप्रत्यूह्य च रुक्मिणीम् । कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद् ब्रवीमि वः ॥२०॥
इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः । चोदयाश्वान् यतः कृष्णस्तस्य मे संयुगं भवेत् ॥२१॥
अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः । नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता ॥२२॥
विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् । रथेनैकेन गोविन्दं तिष्ठ तिष्ठेत्यथाह्वयत् ॥२३॥
धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः । आह चात्र क्षणं तिष्ठ यदूनां कुलपांसन ॥२४॥
कुत्र यासि स्वसारं मे मुषित्वा ध्वाङ्क्षवद्धविः । हरिष्येऽद्य मदं मन्द मायिनः कूटयोधिनः॥२५॥

---

तथाभूतमनीकं सैन्यं येषाम् ॥९॥१०॥ दौर्मनस्यं विषादम् । देहिषु जीवेषु । निष्ठा स्थैर्यम् न दृश्यति ॥ ११ ॥ योषित् (कठपुतली) । इति । कुहको नर्तकः । तन्त्रोऽधीनः । अयं जीवलोकः । ईहते यतते प्रवर्तते वा ॥१२॥ संयुगानि संग्रामान् कृत्वेति शेषः । शौरेः कृष्णात् । सैन्यैः सह पराजितः परं केवलम् एकमन्तिमम् ॥ १३ ॥ दैवयुक्तेन अदृष्टप्रेरितेन कालेन विद्रावितं विचालितम् ॥१४॥ फल्गुतन्त्रैः स्वल्पसैन्यैः । यूथपा महासेनापतयः ॥१५॥ अनुसारिणि अनुकूले सति । प्रदक्षिणोऽनुकूलः ॥१६॥ हतेभ्यः ये शेषाः तेऽपि ॥ १७ ॥ १८ ॥ अमर्षी तद्धरणमसहमानः । सुसंरब्धः संक्रुद्धः । प्रतियज्ञे प्रतिज्ञामकरोत् ॥१९॥ अप्रत्यूह्य अनिवर्त्य । अहत्वा न किन्तु हत्वा प्राप्यैवेति वास्तवोऽर्थः ॥२०॥ चोदय प्रापय । यतः यत्र कृष्णः तस्य तेन ॥२१॥ गोपालस्य पशुपालकस्य नेष्ये दूरीकरिष्यामि । इति निन्दा । स्तुतिस्तु वेदमालकस्य सुष्ठु शोभना दुष्टेष्वपि मतिर्यस्य तस्य कृष्णस्य तीक्ष्णैर्बाणैर्वीर्यमदं स्वपराक्रमगर्वमहं नेष्ये क्षपयिष्यामि । प्रसभं हठात् ॥२२॥ विकत्थमान आत्मानं श्लाघमानः । प्रमाणं बलस्येयत्ताम् । आह्वयत् स्पर्धाया अविवक्षणान्नतङ् ॥ २३ ॥ कुलस्य पांसुं धूलिं करोतीति कुलपांसन कुलदूषण । पांसुशब्दात्तत्करोतीति णिच् । वस्तुतस्तु हे कुलपते । हे असन ! शत्रुघातिन् । अंस समाघाते धातुः इत्यस्मान्ननदित्वद्यात्कर्तरि ल्युः । दर्शनं यथा स्यात्तथा क्षणं तिष्ठति योज्यम् ॥२४॥ निन्दा तु स्पष्टैव । हविः यज्ञसिद्धं स्वभागमिव मे स्वसारम् अमुषित्वा न्यायेनैव लब्ध्वा कुत्र यासि न कुत्रापि भयाभावादित्यर्थः । किन्तु ध्वांक्ष काकस्तद्वत्क्षुद्रोऽहं त्वत्त एनां हरिष्ये इति मे मदं गर्वं द्य खण्डय । मन्दो मूर्खश्चासौ मायी च

यावन्न मे हतो बाणैः शयीथा मुञ्च दारिकाम् ।
स्मयन् कृष्णो धनुश्छित्त्वा षड्भिर्विव्याध रुक्मिणम् ॥२६॥

अष्टभिश्चतुरो वाहान् द्वाभ्यां सूतं ध्वजं त्रिभिः । स चान्यद् धनुरादाय कृष्णं विव्याध पञ्चभिः॥
तैस्ताडितः शरौघैस्तु चिच्छेद धनुरच्युतः । पुनरन्यदुपादत्त तदप्यच्छिनदव्ययः ॥२८॥
परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ । यद् यदायुधमादत्त तत् सर्वं सोऽच्छिनद्धरिः ॥२९॥
ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया । कृष्णमभ्यद्रवत् क्रुद्धः पतङ्ग इव पावकम् ॥३०॥
तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः । छित्त्वासिमाददे तिग्मं रुक्मिणं हन्तुमुद्यतः ॥३१॥
दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला । पतित्वा पादयोर्भर्तुरुवाच करुणं सती ॥३२॥
योगेश्वराप्रमेयात्मन् देवदेव जगत्पते । हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज ॥३३॥

श्रीशुक उवाच

तया परित्रासविकम्पिताङ्गया शुचावशुष्यन्मुखरुद्धकण्ठया ।
कातर्यविस्रंसितहेममालया गृहीतपादः करुणो न्यवर्तत ॥३४॥
चैलेन बद्ध्वा तयसाधुकारिणं सश्मश्रुकेशं प्रवपन् व्यरूपयत् ।
तावन्ममर्दुः परसैन्यमद्भुतं यदुप्रवीरा नलिनीं यथा गजाः ॥३५॥

कृष्णान्तिकमुपव्रज्य ददृशुस्तत्र रुक्मिणम् । तथाभूतं हतप्रायं दृष्ट्वा संकर्षणो विभुः ।
विमुच्य बद्धं करुणो भगवान् कृष्णमब्रवीत् ॥३६॥

असाध्विदं त्वया कृष्ण कृतमस्मज्जुगुप्सितम् । वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः ॥३७॥
मैवास्मान् साध्व्यसूयेथा भ्रातुर्वैरूप्यचिन्तया । सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक् पुमान्॥
बन्धुर्वधार्हदोषोऽपि न बन्धोर्वधमर्हति । त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः ॥३९॥
क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः । भ्रातापि भ्रातरं हन्याद् येन घोरतरस्ततः ॥४०॥

---

कपटयोधी च तस्य मे इति योज्यमिति स्तुतिः । द्येति 'दोऽवखण्डने' इत्यस्मात् लोट् मध्यमपुरुषैकवचनम् ॥ २५ ॥ निन्दा स्पष्टैव । यावत् एवार्थे मे बाणैस्त्वमहत एव दारिकां न मुञ्च किन्तु अनया शयीथा पुष्पशय्यायामिति शेषः ॥२६॥ स च रुक्मी ॥२७॥२८॥ परिघो लोहबद्धो लगुडः । पट्टिशो लोहदण्डः । चर्म (ढालेति) तोमरः (गड़ासा) इति ॥२९॥३०॥ तिग्मं तीक्ष्णम् ॥३१॥३२॥ सम्बुद्धिषट्केन भगवत ऐश्वर्यं प्रदर्श्य स्वभ्रातृवधानर्हत्वं सूचयति ॥३३॥ तया रुक्मिण्या गृहीतपादो भगवान् न्यवर्तत रुक्मिणो वधादिति शेषः । शुचा शोकेन अवशुष्यता मुखेन रुद्धः कण्ठो यस्यास्तया कातर्येण वैक्लव्येन विगलिता हेममाला यस्याः ॥३४॥ सश्मश्रुकेशं यथा स्यात्तथा प्रवपन् मुण्डयन् । यावत्कृष्णो मुमुण्ड तावदिति योज्यम् ॥ ३५ ॥ कृष्णेति सार्द्धम् । तथाभूतं मुण्डितम् ॥ ३६ ॥ अस्मत् अस्माकं जुगुप्सितं नापितकर्मत्वात् । सुहृदः श्यालस्य । अत्र विपरीतलक्षणया दुर्हृद इत्यर्थः ॥ ३७ ॥ हे साध्वि । मा असूयेथा दोषदृष्ट्या न पश्य । अन्यो नास्ति किन्तु स्वयमेव ॥ ३८ ॥ बन्धोः सकाशात् ॥ ३९ ॥ येन धर्मेण भ्राताऽपि ॥४०॥ मानिनोऽहङ्कारिणः जनाः राज्यादिहेतोरन्यस्य हेतोर्निमित्ताद्

राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः । मानिनोऽन्यस्य वा हेतोः श्रीमदान्धाः क्षिपन्ति हि ।
तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम् । यन्मन्यसे सदाऽभद्रं सुहृदां भद्रमज्ञवत् ॥४२॥
आत्ममोहो नृणामेष कल्प्यते देवमायया । सुहृद् दुर्हृदुदासीन इति देहात्ममानिनाम् ॥४३॥
एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् । नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः ॥४४॥
देह आद्यन्तवानेष [1]द्रव्यप्राणगुणात्मकः । आत्मन्यविद्यया क्लृप्तः संसारयति देहिनम् ॥४५॥
नात्मनोऽन्येन संयोगो वियोगश्चासतः सति । तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः ॥४६॥
जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् । कलानामिव नैवेन्दोर्मृतिर्ह्यस्य कुहूरिव ॥४७॥
यथा शयान आत्मानं विषयान् फलमेव च । अनुभुङ्क्तेऽप्यसत्यर्थे तथाऽऽप्नोत्यबुधो भवम् ।४८।
तस्मादज्ञानजं शोकमात्मशोषविमोहनम् । तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ॥४९॥

श्रीशुक उवाच

एवं भगवता तन्वी रामेण प्रतिबोधिता । वैमनस्यं परित्यज्य मनो बुद्धया समादधे ॥५०॥
प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः । स्मरन् विरूपकरणं वितथात्ममनोरथः ॥५१॥
चक्रे भोजकटं नाम निवासाय महत् पुरम् । अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम् ।
कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद् रुषा ॥ ५२ ॥
भगवान् भीष्मकसुतामेवं निर्जित्य भूमिपान् । पुरमानीय विधिवदुपयेमे कुरूद्वह ॥५३॥

---

क्षिपन्ति तिरस्कुर्वन्ति बन्धूनिति शेषः । वयं तु न तथा अतोऽनुचितमेतत् ॥ ४१ ॥ सर्वभूतेषु दुर्हृदः शिशुपालादयस्तेषामभद्रं यत् रुक्मिप्रभृतयः सुहृदस्तेषां भद्रं च अज्ञवत् यन्मन्यसे इच्छसि इयं तव बुद्धिर्विषमा प्रतिकूला ॥ ४२ ॥ आत्मनो बुद्धेः मोहः । देह एवात्मेत्यभिमानवताम् ॥ ४३ ॥ ज्योतिश्चन्द्रादिकं यथा जलादिषु । अग्नि यथा काष्ठेषु । नभो यथा घटादिषु तद्वत् ॥ ४४ ॥ आद्यन्तवान् जन्ममरणवान् अधिभूतादिरूपो देहो देहिनं जीवं संसारयति संसारे क्षिपति । क्लृप्तः कल्पितः ॥ ४५ ॥ हे सति । अन्येन देहादिना अस्यात्मनः संयोगो वियोगश्च नास्ति । कुतः । असत अन्यस्य देहादेरसत्त्वादित्यर्थः । कुतोऽसत्त्वं तत्राह-तत्प्रसिद्धेः देहादि प्रतीतेस्तद्धेतुत्वात् आत्महेतुत्वात् अत आत्मातिरिक्तं देहादि नास्तीत्यर्थः । अत्र दृष्टान्तः–यथा दृग्रूपाभ्यां भिन्नादपि रवेः सकाशादेव तयोः प्रतीतिर्भवति नान्यथेति । अत्र रविस्थानीयः परमात्मा, दृक्स्थानीयो जीवः, रूपस्थानीयो देह इति विवेचनीयम् ॥४६॥ विक्रिया षड् विकाराः । यथा इन्दोः कलानामेव जन्मादयो नैवेन्दोस्तद्वत् । यथा च अस्य इन्दोर्मृतिःकलानाश एव इन्दुक्षयः कुहूरमावास्योच्यते तथा देहनाशादेवात्मनो नाशव्यवहार उच्यते इत्यर्थः ॥४७॥ अर्थे देहादिरूपे असत्यपि आत्मानं देहादिरूपं भोक्तारं विषयान् भोग्यान् शब्दादीन् फलं भोगं च अबुधोऽनात्मज्ञः । भवं संसारम् ॥ ४८ ॥ आत्मानं शोषयति कृशीकरोति विमोहयतीति । निर्हृत्य दूरीकृत्य ॥४९॥ तन्वी रुक्मिणी । विमनसो भावः वैमनस्य शोकम् । समादधे सुस्थिरमकरोत् ॥५०॥ प्राणेति सार्द्धम् । उत्सृष्टः त्यक्तः । वितथो व्यर्थः ॥ ५१ ॥ यवीयसीं कनिष्ठाम् । अप्रत्यूह्य अनिवर्त्य ॥ ५२ ॥ निर्जित्य । जयतेः द्विकर्मकत्वात्कर्मद्वयम् । भीष्मकसुतामानीयेति योज्यं वा । उपयेमे विवाहितवान् ॥ ५३ ॥

---

१. द्रव्यमधिभूतं प्राणा इन्द्रियाणि अध्यात्मम् गुणशब्देनाधिदैवम् ।

तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे । अभूदनन्यभावानां कृष्णे यदुपतौ नृप ॥५४॥
नरा नार्यश्च मुदिताः प्रभृष्टमणिकुण्डलाः । पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ॥५५॥
सा वृष्णिपुर्युत्तभितेन्द्रकेतुभिर्विचित्रमाल्याम्बररत्नतोरणैः ।
बभौ प्रतिद्वार्युपक्लृप्तमङ्गलैरापूर्णकुम्भागुरुधुपदीपकैः ॥५६॥
सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् । गजैर्द्वास्सु परामृष्टरम्भापूगोपशोभिता ॥५७॥
कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः । मिथो मुमुदिरे तस्मिन् सम्भ्रमात् परिधावताम् ॥५८॥
रुक्मिण्या हरणं श्रुत्वा गीयमानं ततस्ततः । राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः ॥५९॥
द्वारकायामभूद् राजन् महामोदः पुरौकसाम् । रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियःपतिम् ।६०।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे रुक्मिण्युद्वाहे

चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

तदा विवाहावसरे । कृष्णे अनन्येति योज्यम् ॥५४॥ प्रमृष्टानि परिष्कृतानि मणिमयानि कुण्डलानि येषां ते । पारिबर्हं कन्यादेयद्रव्यम् समर्पयामासु । वरवोर्वरवध्वोः। 'पुमान् स्त्रिया' इत्येकशेषः ॥५५॥ सा वृष्णिपुरी द्वारका बभौ । कैः । उत्तभितैरत्युच्चैः इन्द्रकेतुभिरिव ध्वजैः इन्द्रदेवताकैर्वा । विचित्रैर्माल्यादिभिश्च । उपक्लृप्तैः स्थापितैर्माङ्गलिकैर्जलपूर्णघटादिभिश्च । माल्यानि पुष्पाणि तोरणानि बन्दनमालिकाः ॥५६॥ सिक्तमार्गा पुरी । यद्वा तैरेव गजैः परामृष्टैर्गृहीतैः रम्भादिभिः शोभिता ॥ ५७ ॥ तस्मिन् महोत्सवे । सम्भ्रमादौत्सुक्यात्परिधावतां मध्ये कुर्वादयः ॥ ५८ ॥ ततस्ततः तत्र तत्र ५९ ॥ रमया लक्ष्मीरूपया ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे गूढार्थदीपिन्यां

चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## अथ पञ्चपञ्चाशत्तमोऽध्यायः

### श्रीशुक उवाच

कामस्तु वासुदेवांशो दग्धः प्राग् रुद्रमन्युना । देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥ १ ॥
स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः । प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥ २ ॥
तं शम्बरः कामरूपी हृत्वा तोकमनिर्दशम् । स विदित्वाऽऽत्मनः शत्रुं प्रास्योदन्वत्यगाद् गृहम् ।३।
तं निर्जगार बलवान् मीनः सोऽप्यपरैः सह । वृतो जालेन महता गृहीतो मत्स्यजीविभिः ॥४॥

---

पञ्चपञ्चाशत्तमे तु प्रद्युम्नः कृष्णतोऽभवत् ।

शम्बरेण हृतः सोऽयं तं हत्वा स्वपुरीमगात् ॥ १ ॥

वासुदेवाधिष्ठितचित्तप्रभवत्वात् वासुदेवांशः । तमेव वासुदेवांशं प्रद्युम्नमेव । देहस्य उपपत्तये प्राप्तये ॥१॥ स काम एव । अनवमोऽन्यूनः । 'न्यूने नीचेऽवमो मतः इति निरुक्तिः ॥ २ ॥ तोकं शिशुम् अनिर्दशं षष्ठेऽह्नि । उदन्वति समुद्रे प्रास्य प्रक्षिप्य ॥३॥ निर्जगार निगिलितवान् । वृतो बद्धः ॥४॥ तं मत्स्यम् । कैवर्ता धीवराः ।

तं शम्बराय कैवर्ता उपाजह्रुरुपायनम् । सूदा महानसं नीत्वाऽवाद्यन् स्वधितिनाद्भुतम् ॥५॥
दृष्ट्वा तदुदरे बालं मायावत्यै न्यवेदयन् । नारदोऽकथयत् सर्वं तस्याः शङ्कितचेततः ।
बालस्य तत्त्वमुत्पत्तिं मत्स्योदरनिवेशनम् ॥ ६ ॥
सा च कामस्य वै पत्नी रतिर्नाम यशस्विनी । पत्युर्निर्दग्धदेहस्य देहोत्पत्तिं प्रतीक्षती ॥ ७ ॥
निरूपिता शम्बरेण सा सूपौदनसाधने । कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं तदार्भके ॥ ८ ॥
नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः । जनयामास नारीणां वीक्षन्तीनां च विभ्रमम् ॥९॥
सा तं पतिं पद्मदलायतेक्षणं प्रलम्बबाहुं नरलोकसुन्दरम् ।
सव्रीडहासोत्तभितभ्रुवेक्षती प्रीत्योपतस्थे रतिरङ्ग सौरतैः ॥ १० ॥
तामाह भगवान् कार्ष्णिर्मातस्ते मतिरन्यथा । मातृभावमतिक्रम्य वर्तसे कामिनी यथा ॥११॥

रतिरुवाच

भवान् नारायणसुतः शम्बरेणाऽऽहृतो गृहात् । अहं तेऽधिकृता पत्नी रतिः कामो भवान् प्रभो ।१२।
एष त्वानिर्दशं सिन्धावक्षिपच्छम्बरोऽसुरः । मत्स्योऽग्रसीत्तदुदरादिह प्राप्तो भवान् प्रभो ॥१३॥
तमिमं जहि दुर्धर्षं दुर्जयं शत्रुमात्मनः । मायाशतविदं त्वं च मायाभिर्मोहनादिभिः ॥१४॥
परिशोचति ते माता कुररीव गतप्रजा । पुत्रस्नेहाकुला दीना विवत्सा गौरिवातुरा ॥१५॥
प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने । मायावती महामायां सर्वमायाविनाशिनीम् ॥१६॥
स च शम्बरमभ्येत्य संयुगाय समाह्वयत् । अविषह्यैस्तमाक्षेपैः क्षिपन् संजयनयन् कलिम् ॥१७॥
सोऽधिक्षिप्तो दुर्वचोभिः पादाहत इवोरगः । निश्चक्राम गदापाणिरमर्षात्ताम्रलोचनः ॥१८॥
गदामाविध्य तरसा प्रद्युम्नाय महात्मने । प्रक्षिप्य व्यनदन्नादं वज्रनिष्पेषनिष्ठुरम् ॥१९॥

---

उपायनमूतं समर्पयामासुः । स्वधितिना छुरिकया । अवाद्यन् खण्डितवन्तः ॥ ५ ॥ दृष्ट्वेति सार्द्धम् । मायावती कामपत्नी रतिः तत्त्वं रहस्यं तव भर्ताऽयमिति ॥ ६ ॥ सा[1] चेति युग्मम् । सूपौदनस्य साधने[2] आधिपत्ये ॥७॥ ॥८॥ रूढं प्रकटितम् । विभ्रमं सम्भोहम् उन्मादं वा ॥९॥ अङ्ग हे राजन् सा रतिः सौरतैः सुरतसम्बन्धिभावै-स्तमुपतस्थेऽभजदित्यन्वयः । कीदृशी । व्रीडासहितहासेन उत्तभिते नर्तिते भ्रुवौ यस्यास्तया दृशा तमीक्षती ॥१०॥ कार्ष्णिः कृष्णपुत्रः । अन्यथा विपरीता । यथा पुंश्चली तथा वर्तसे व्यवहरसि ॥११॥ अधिकृता अधिकारप्राप्ता ॥ १२ ॥ त्वा त्वाम् अनिर्दशम् अनतीतदशदिनमेव ॥१३॥ दुर्धर्षं दुरतिक्रमणीयम् । अत एव मायाभिः ॥१४॥ कुररी पक्षिणीव । परीत्युपसर्गवशात् शोचते रोदनार्थं परस्मैपदित्वं च लक्ष्यते ॥ १५ ॥ मायां मन्त्रात्मिकां विद्याम् ॥ १६ ॥ स च प्रद्युम्नः । संयुगाय युद्धार्थम् । आक्षेपैर्भर्त्सनावाक्यैः । क्षिपन् तिरस्कुर्वन् । कलिं कलहं जनयन् जनयितुम् ॥ १७ ॥ १८ ॥ आविध्य भ्रामयित्वा । तरसा वेगेन । वज्रनिष्पेषो वज्रपातस्तद्वत्

---

१. प्रसङ्गान्मत्स्यपुराणोक्तेयमाख्यायिकाऽनुसंधेया भस्मीकृते मदने रतिस्तत्प्राप्त्यर्थं शिवमुपासितवती । तदैव शम्बरोऽपि शिवमुपासीन आसीत् तेन च सा वव्रे तदा शिवेनोक्तं गच्छास्य गृहे तत्रैव तव पतिर्मिलिष्यति पातिव्रत्यरक्षा चेति ।

२. संस्कारे ह्याधिपत्येऽपि साधनं परिकीर्तितम् इति मेदिनी ।

तामापतन्तीं भगवान् प्रद्युम्नो गदया गदाम् । अपास्य शत्रवे क्रुद्धः प्राहिणोत् स्वगदां नृप ॥२०॥
स च मायां समाश्रित्य दैतेयीं मयदर्शिताम् । मुमुचेऽस्त्रमयं वर्षं कार्ष्णौ वैहायसोऽसुरः ॥२१॥
बाध्यमानोऽस्त्रवर्षेण रौक्मिणेयो महारथः । सत्त्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम् ॥२२॥
ततो गौह्यकगान्धर्वपैशाचौरगराक्षसीः । प्रायुङ्क्त शतशो दैत्यः कार्ष्णिर्व्यधमयत् स ताः ॥२३॥
निशातमसिमुद्यम्य सकिरीटं सकुण्डलम् । शम्बरस्य शिरः कायात्ताम्रश्मश्र्वोजसाहरत् ॥२४॥
आकीर्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्करैः । भार्ययाम्बरचारिण्या पुरं नीतो विहायसा ॥२५॥
अन्तपुरवरं राजन् ललनाशतसंकुलम् । विवेश पत्न्या गगनाद् विद्युतेव बलाहकः ॥२६॥
तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम् । प्रलम्बबाहुं ताम्राक्षं सुस्मितं रुचिराननम् ॥२७॥
स्वलंकृतमुखाम्भोजं नीलवक्रालकालिभिः । कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्र तत्र ह ॥२८॥
अवधार्य शनैरीषद्वैलक्षण्येन योषितः । उपजग्मुः प्रमुदिताः सस्त्रीरत्नं सुविस्मिताः ॥२९॥
अथ तत्रासितापाङ्गी वैदर्भी वल्गुभाषिणी । अस्मरत् स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥३०॥
को न्वयं नरवैदूर्यः कस्य वा कमलेक्षणः । धृतः कया वा जठरे केयं लब्धा त्वनेन वा ॥३१॥
मम चाप्यात्मजो नष्टो नीतो यः सूतिकागृहात् । एतत्तुल्यवयोरूपो यदि जीवति कुत्रचित् ॥३२॥
कथं त्वनेन सम्प्राप्तं सारूप्यं शार्ङ्गधन्वनः । आकृत्यावयवैर्गत्या स्वरहासावलोकनैः ॥३३॥
स एव वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः । अमुष्मिन् प्रीतिरधिका वामः स्फुरति मे भुजः ॥३४॥
एवं मीमांसमानायां वैदर्भ्यां देवकीसुतः । देवक्यानकदुन्दुभ्यामुत्तमश्लोक आगमत् ॥३५॥
विज्ञातार्थोऽपि भगवांस्तूष्णीमास जनार्दनः । नारदोऽकथयत् सर्वं शम्बराहरणादिकम् ॥३६॥
तच्छ्रुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः । अभ्यनन्दन् बहूनब्दान् नष्टं मृतमिवागतम् ॥३७॥
देवकी वसुदेवश्च कृष्णरामौ तथा स्त्रियः । दम्पती तौ परिष्वज्य रुक्मिणी च ययुर्मुदम् ॥३८॥

---

कठोरम् । व्यनदत् चकार । पाकं पचतीतिवदयं निर्देशः ॥ १९ ॥ गदाम् अपास्य प्रत्यक् क्षिप्त्वा । प्राहिणोत् चिक्षेप ॥ २० ॥ विहायसि आकाशे स्थितः सन् ॥२१॥ बाध्यमानेति युग्मम् । मायां प्रायुङ्क्तेत्युत्तरेणान्वेति । ता मायाः रुक्मिणीपुत्रः । व्यधमयत् व्यनाशयत् । धमधातोः सौत्राण्णिच् अमन्तत्वान्मित्त्वम् ॥ २२ ॥ २३ ॥ निशातं तीक्ष्णम् । कायात् शिरः अहरत् पृथक् कृतवान् । ओजसा बलेन ॥ २४ ॥ दिविजैः देवैः । आकीर्यमाण आच्छाद्यमानः । उत्करैः समूहैः ॥२५॥ बलाहको मेघः ॥ २६ ॥ तमिति युग्मम् । नीला वक्राश्च अलका एव अलयस्तैः । तत्र तत्र इतस्ततः । हेति संकोचे । ह्रीता लज्जिताः ॥ २७ ॥ २८ ॥ अवधार्य नायं कृष्ण इति निश्चित्य । स्त्रीरत्नं रतिः ॥ २९ ॥ वल्गु मधुरम् ॥ ३० ॥ वैदूर्यः नीलमणिर्दीप्यमानः । कस्य पुत्र इति शेषः ॥३१॥ एतेन तुल्यं वयो रूपं च यस्य सः तथा भवेत् ॥३२॥ भगवतः सारूप्यं समानरूपत्वम् । स्वरः शब्दः ॥ ३३ ॥ ३४ ॥ मीमांसमानायां तर्कयन्त्याम् दुन्दुभिभ्यां भिलोप आर्षः ॥ ३५ ॥ ३६ ॥ नारदोऽकस्मादागत्य अब्दान् 'अत्यन्तसंयोगे द्वितीया' । नष्टमदृष्टं तमागतं प्रद्युम्नमभ्यनन्दन् सचक्रुः ॥ ३७ ॥ दम्पती रतिप्रद्युम्नौ ॥ ३८ ॥ दिष्ट्या भद्रं जातम् । इति ह इत्थम् ॥ ३९ ॥ वै एवार्थे । यं प्रद्युम्नं तन्मातरो यत्पतित्वेन अभजन्

नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः । अहो मृत इवायातो बालो दिष्टच्येति हाब्रुवन् ॥३९॥

यं वै मुहुः पितृसरूपनिजेशभावास्तन्मातरो यदभजन् रहरूढभावाः ।
चित्रं न तत् खलु रमास्पदबिम्बबिम्बे कामे स्मरेऽक्षिविषये किमुतान्यनार्यः ॥४०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे प्रद्युम्नोत्पत्तिनिरूपणं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

तत्खलु चित्रमाश्चर्यं नास्ति । कुतः । पितृसरूपे सदृशे प्रद्युम्ने निजेशभावः पतिभावो यासान्ताः । अत एव रह एकान्ते रूढो दृढः भावः कामवासना यासाम् । कुत एतत् । कामेऽक्षिविषये सति । स्मरे स्मरणमात्रतः क्षोभके । कथंभूते । रमास्पदं श्रीकृष्णस्तस्य बिम्बं विग्रहस्तस्य प्रतिबिम्बे पुत्रे । अन्यनार्यः भेजुरिति किमुत वक्तव्यम् । यद्वा रहस्त्यक्तो रूढो भावः कृष्णोऽयमिति याभिस्ताः । रह त्यागे धातुः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पारमहंस्यो संहितायाम् उत्तरार्द्धे गूढार्थदीपिन्यां पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

## अथ षट्पञ्चाशत्तमोऽध्यायः

### श्रीशुक उवाच

सत्राजितः स्वतनयां कृष्णाय कृतकिल्बिषः । स्यामन्तकेन मणिना स्वयमुद्यम्य दत्तवान् ॥१॥

### राजोवाच

सत्राजितः किमकरोद् ब्रह्मन् कृष्णस्य किल्बिषम् । स्यमन्तकः कुतस्तस्य कस्माद् दत्ता सुता हरेः ॥

### श्रीशुक उवाच

आसीत् सत्राजितः सूर्यो भक्तस्य परमः सखा । प्रीतस्तस्मै मणिं प्रादात् सूर्यस्तुष्टः स्यमन्तकम् ॥
स तं बिभ्रन् मणिं कण्ठे भ्राजमानो यथा रविः । प्रविष्ठो द्वारकां राजंस्तेजसा नोपलक्षितः ॥४॥
तं विलोक्य जना दूरात्तेजसा मुष्टदृष्टयः । दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः ॥ ५ ॥
नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर । दामोदरारविन्दाक्ष गोविन्द यदुनन्दन ॥ ६ ॥

---

षट्पञ्चाशत्तमे नेतुं मणिं मिथ्याकलङ्कतः ।
गतो जाम्बवतीं लेभे सत्यभामां च माधवः ॥ १ ॥

सत्राजित इत्यकारान्तः क्वचित्तकारान्तश्च । सत्रे दाने न केनापि जित इत्यकारान्तः । सत्रेण दान्लक्षण-तपसा मणिमाजितवानिति तकारान्तश्च । उद्यम्य परप्रेरणां विनैव ॥१॥ कुतः प्राप्तः । हरेः हरये ॥२॥ भक्तस्य सत्राजितः सखेवासीदिति व्याख्येयम् ॥ ३ ॥ नोपलक्षितो न ज्ञातः सत्राजितोऽयमिति ॥ ४ ॥ मुष्टा पिहिता । दीव्यते क्रीडते । सूर्योऽयमिति ॥५॥६॥ गर्भास्तिचक्रेण किरणसमूहेन । तिग्मगुः तिग्माः तीक्ष्णा गावः किरणाः

एष आयाति सविता त्वां दिदृक्षुर्जगत्पते । मुष्णन् गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः ॥ ७ ॥
नन्वन्विच्छन्ति ते मार्गं त्रिलोक्यां विबुधर्षभाः । ज्ञात्वाद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो॥८॥

श्रीशुक उवाच

निशम्य बालवचनं प्रहस्याम्बुजलोचनः । प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ॥९॥
सत्राजित् स्वगृहं श्रीमत् कृतकौतुकमङ्गलम् । प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥१०॥
दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो । दुर्भिक्ष्मार्यरिष्टानि सर्पाधिव्याधयोऽशुभाः ।
न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ॥११॥
स याचितो मणिं क्वापि यदुराजाय शौरिणा । नैवार्थकामुकः प्रादाद् याच्ञाभङ्गमतर्कयन् ॥१२॥
तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् । प्रसेनो हयमारुह्य मृगयां व्यचरद् वने ॥१३॥
प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी । गिरिं विशञ्जाम्बवता निहतो मणिमिच्छता ॥१४॥
सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले । अपश्यन् भ्रातरं भ्राता सत्राजित् पर्यतप्यत ॥१५॥
प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः । भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपञ्जनाः॥१६॥
भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि । मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ॥१७॥
हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने । तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ॥१८॥
ऋक्षराजबिलं भीममन्धेन तमसाऽऽवृतम् । एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥१९॥
तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् । हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥२०॥
तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् । तच्छ्रुत्वाऽभ्यद्रवत् क्रुद्धो जाम्बवान् बलिनां वरः२१
स वै भगवता तेन युयुधे स्वामिनाऽऽत्मनः । पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥२२॥
द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः । आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥२३॥
आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः । वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥२४॥

---

यस्य सः ॥ ७ ॥ अन्विच्छन्ति अन्वेषयन्ति । अजः सूर्यः । अकारो वासुदेवस्तस्माज्जातत्वात् ॥ ८ ॥ बालानामज्ञानाम् । 'बालोऽज्ञे' इति हैमः ॥ ९ ॥ श्रीमत् प्रशंसायां मतुप् । कृतं कौतुकेनोत्सवेन मङ्गलं स्वस्तिवाचनं यस्मिन् । न्यवेशयत् प्रतिष्ठापयामास । विप्रैः कृत्वा ॥१०॥ दिने इति सार्द्धम् । अष्टौ स्वर्णभारान् 'भारः स्याद्विंशतिस्तुलाः' तस्याश्चाष्टगुणितत्वे षष्ट्यधिकैकशततुलाः १६० तुलाः इत्यायाति । मारी विषूचिका ॥ ११ ॥ यदुराजाय उग्रसेनाय । भङ्गं भङ्गजन्यदोषमविचारयन् ॥ १२ ॥ प्रतिमुच्य बद्ध्वा । प्रसेनः सत्राजिद्भ्राता । मृगयामुद्दिश्य ॥१३॥ आच्छिद्य बलाद् गृहीत्वा ॥ १४ ॥ सोऽपीत्यर्द्धम् । क्रीडनकं क्रीडासाधनम् । बिले गुहायाम् ॥१५॥ अपश्यन्निति सार्द्धम् । प्रायो वितर्के । कर्णे कर्णेऽजपन् शनैः शनैरबोचन् ॥१६॥ दुर्यशो मार्ष्टुं शोधयितुम् । लिप्तं लग्नम् ॥ १७ ॥ तं केसरिणम् ॥ १८ ॥ अन्धेन गाढेन ॥ १९ ॥ तत्र बिले । अवतस्थेऽवसरप्रतीक्षां चक्रे ॥ २० ॥ धात्री उपमाता ॥२१॥२२॥ द्वन्द्वेति युग्मम् । क्रव्यार्थे मांसार्थे । श्येनो बाजाख्यः पक्षी । अविश्रमं निरन्तरम् । वज्रनिष्पेषो वज्रपातस्तद्वत् कठोरैः ॥२३॥२४॥ उरुबन्धनानि सन्धिस्था-

कृष्णमुष्टिविनिष्पातनिष्पिष्टाङ्गोरुबन्धनः । क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीव विस्मितः ॥२५॥
जाने त्वां सर्वभूतानां प्राण ओजः सहो बलम् । विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥२६॥

त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत् ।
कालः कलयतामीशः पर आत्मा तथाऽऽत्मनाम् ॥२७॥

यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत् क्षुभितनक्रतिमिङ्गिलोऽब्धिः ।
सेतुः कृतः स्वयश उज्ज्वलिता च लङ्का रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ॥२८॥

इति विज्ञातविज्ञानमृक्षराजानमच्युतः । व्याजहार महाराज भगवान् देवकीसुतः ॥२९॥
अभिमृश्यारविन्दाक्षः पाणिनां शंकरेण तम् । कृपया परया भक्तं प्रेमगम्भीरया गिरा ॥३०॥
मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् । मिथ्याभिशापं प्रमृजन्नात्मनो मणिनाऽमुना ॥३१॥
इत्युक्तः स्वां दुहितरं कन्यां जाम्बवतीं मुदा । अर्हणार्थं स मणिना कृष्णायोपजहार ह ॥३२॥
अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः । प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः॥३३॥
निशम्य देवकी देवी रुक्मिण्यानकदुन्दुभिः । सुहृदो ज्ञातयोऽशोचन् बिलात् कृष्णमनिर्गतम् ॥३४॥
सत्राजितं शपन्तस्ते दुःखिता द्वारकौकसः । उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥३५॥
तेषां तु देव्युपस्थानात् प्रत्यादिष्टाशिषा च सः । प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन् हरिः ॥३६॥
उपलभ्य हृषीकेशं मृतं पुनरिवागतम् । सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥३७॥
सत्राजितं समाहूय सभायां राजसंनिधौ । प्राप्तिं चाख्याय भगवान् मणिं तस्मै न्यवेदयत् ॥३८॥

---

नानि यस्य । सत्त्वं बलम् । स्विन्नं स्वेदयुक्तम् ॥ २५ ॥ प्राणे यत् ओज आदि तत्सर्वं त्वमित्यहं त्वाम् जाने । इन्द्रियमनोदेहशक्तय इति क्रमेणार्थाः । प्रभविष्णुं सर्वसमर्थम् ॥२६॥ विश्वसृजां महदादीनां स्रष्टा निमित्तम् । सृज्यानां कार्याणां यत् सत् उपादानम् तच्च त्वम् । कलयतां संहर्तृणाम् कालः त्वम् । आत्मनां जीवानाम् आत्मा च त्वम् ॥ २७ ॥ अब्धिः समुद्रः यस्य यस्मै रामाय वर्त्म मार्गमदिशत् दत्तवान् लङ्कां गन्तुम् । किञ्च येन स्वयशोरूपः सेतुः कृतः । इषुभिः वाणैः क्षतानि छिन्नानि शिरांसि भुवि पेतुः स एव त्वमित्यहे जाने इत्यन्वयः । कथंभूतोऽब्धिः । यस्य ईषदुद्दीपितरोषेण ये कटाक्षमोक्षास्तैः क्षुभिताः नक्रादयो यस्मिन् ॥२८॥ विज्ञायतेऽनेनेति विज्ञायते यत्तत् विज्ञानं ज्ञेयं वस्तु भगवत्स्वरूम् येन तम् । विज्ञानशब्दः करणसाधनः कर्मसाधनो वा ॥२९॥ अभिमृश्य संस्पृश्य । शङ्करेण सुखकरेण ॥ ३० ॥ बिलद्वारं तु वयं बहवः प्राप्तास्तत्र अभिशापं कलङ्कं[1] प्रमृजन् प्रमाष्टुमन्तर्विलमिह अहमेक एव प्राप्त इत्यन्वयः ॥३१॥ मणिना सह उपजहार समर्पितवान् । ह हर्षेण ॥३२॥ ॥३३॥३४॥ शपन्तो निन्दन्तः । उपतस्थुः आराधयामासुः ॥३५॥ देव्या प्रत्यक्षीभूय तान् प्रति आदिष्टया दत्तया आशिषा आशीर्वादेन सह सः हरिः प्रादुर्बभूव ॥३६॥३७॥ न्यवेदयत् अर्पितवान् ॥३८॥ अवाङ्मुखोऽधोमुखः

---

१. अयं कलङ्को भाद्रशुक्लचतुर्थ्यां चन्द्रदर्शनात्प्राप्तः । तत्तिथौ चन्द्रदर्शननिषेधात् । क्वचिदत्रैव तिथौ पङ्कस्खलितं गणेशं दृष्ट्वा चन्द्रो जहास । स च तेन शप्तः योऽद्य त्वां द्रक्ष्यति स मिथ्याकलङ्कं प्राप्स्यतीति । अतोऽन्यैरपि सति चन्द्रदर्शने तद्दोषशान्त्यर्थमिष्टकाप्रक्षेपादिना वस्माच्चद्गालीश्रवणादिकार्यमित्युक्तं पुराणान्तरे इति वंशीधरी ।

स चातिव्रीडितो रत्नं गृहीत्वाऽवाङ्मुखस्ततः । अनुतप्यमानो भवनमगमत् स्वेन पाप्मना ॥३९॥
सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः । कथं मृजाम्यात्मरजः प्रसीदेद् वाऽच्युतः कथम् ॥४०॥
किं कृत्वा साधु मह्यं स्यान्न शपेद् वा जनो यथा । अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम् ॥४१॥
दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च । उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा ॥४२॥
एवं व्यवसितो बुद्ध्या सत्राजित् स्वसुतां शुभाम् । मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह ॥४३॥
तां सत्यभामां भगवानुपयेमे यथाविधि । बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ॥४४॥
भगवानाह न मणिं प्रतीच्छामो वयं नृप । तवास्तां देवभक्तस्य वयं च फलभागिनः ॥४५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे स्यमन्तकोपाख्याने
षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

---

अधोमुखः ततः राजसभातः पाप्मना अपराधेन ॥ ३९ ॥ स इत्यर्द्धम् । स सत्राजित् । तदेव मिथ्योक्तिलक्षणम् । अघं दोषम् ॥ ४० ॥ कथमिति सार्द्धम् । आत्मरजः स्वापराधम् । मह्यं मम । साधु भद्रम् । अदीर्घदर्शनं परिणामाविदम् ॥ ४१ ॥ पारिबर्हत्वेन रत्नं स्यमन्तकमपि ॥ ४२ ॥ व्यवसितः कृतनिश्चयः । उपजहार समर्पयामास ॥ ४३ ॥ बहुभिः कृतवर्मादिभिः । उपयेमे विवाहितवान् ॥ ४४ ॥ न प्रतीच्छामो न गृह्णीमः । फलभागिन इति । तवापुत्रत्वात्त्वदीयं धनमस्माकमेवेति गूढाभिसन्धिः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां
षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## अथ सप्तपञ्चाशत्तमोऽध्यायः

### श्रीशुक उवाच

विज्ञातार्थोऽपि गोविन्दो दग्धानाकर्ण्य पाण्डवान् । कुन्तीं च कुल्यकरणे सहरामो ययौ कुरून् ॥१॥
भीष्मं कृपं सविदुरं गान्धारीं द्रोणमेव च । तुल्यदुःखौ च संगम्य हा कष्टमिति होचतुः ॥२॥
लब्ध्वैतदन्तरं राजन् शतधन्वानमूचतुः । अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ॥३॥
योऽस्मभ्यं सम्प्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः । कृष्णायादान्न सत्राजित् कस्माद् भ्रातरमन्वियात्४

---

वधे शतधनोः सप्तपञ्चाशत्तम ईश्वरः ।
मार्ष्टि दोषं पुनर्जातमक्रूरानीतसन्मणेः ॥ १ ॥

लाक्षाभवने पाण्डवा न दग्धा इत्येवंरूपोऽर्थो विज्ञातो येन सः । कुन्तीं च दग्धामाकर्ण्य । कुल्यं[1] मृतगेहगमनं तस्य करणे तन्निमित्तम् ॥ १ ॥ २ ॥ अन्तरमवसरम् ॥३॥ यः सत्राजित् संप्रतिश्रुत्य दातुं प्रतिज्ञाय नःविगर्ह्य अनाहत्य । भ्रातरं मृतं प्रसेनं कथं नानुगच्छेत् अपि तु म्रियेतैवेत्यर्थः ॥ ४ ॥ भिन्ना धर्मादभ्रंशिता

---

१. कुल्यं स्यात्कीकसे मांसे मृतगेहगतौ तथा ।

एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः । शयामवधील्लोभात् स पापः क्षीणजीवितः ॥५॥
स्त्रीणां विक्रोशमानानां क्रन्दन्तीनामनाथवत् । हत्वा पशून् सौनिकवन्मणिमादाय जग्मिवान् ॥६॥
सत्यभामा च पितरं हतं वीक्ष्य शुचार्पिता । व्यलपत्तात तातेति हा हतास्मीति मुह्यती ॥७॥
तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम् । कृष्णाय विदितार्थाय तप्ताऽऽचख्यौ पितुर्वधम् ॥८॥
तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोकताम् । अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः ॥९॥
आगत्य भगवांस्तस्मात् सभार्यः साग्रजः पुरम् । शतधन्वानमारेभे हन्तुं हर्तुं मणिं ततः ॥१०॥
सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया । साहाय्ये कृतवर्माणमयाचत स चाब्रवीत् ॥११॥
नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः । को नु क्षेमाय कल्पेत तयोर्वृजिनमाचरन् ॥१२॥
कंसः सहानुगोऽपीतो यद्द्वेषात् त्याजितः श्रिया । जरासन्धः सप्तदश संयुगात् विरथो गतः ॥१३॥
प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत । सोऽप्याह को विरुध्येत विद्वानीश्वरयोर्बलम् ॥१४॥
य इदं लीलया विश्वं सृजत्यवति हन्ति च । चेष्टां विश्वसृजो यस्य न विदुर्मोहिताजया ॥१५॥
यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना । दधार लीलया बाल उच्छिलीन्ध्रमिवार्भकः ॥१६॥
नमस्तस्मै भगवते कृष्णायाऽद्भुतकर्मणे । अनन्तायादिभूताय कूटस्थायात्मने नमः ॥१७॥
प्रत्याख्यातः स तेनापि शतधन्वा महामणिम् । तस्मिन् न्यस्याश्वमारुह्य शतयोजनगं ययौ ॥१८॥
गरुडध्वजमारुह्य रथं रामजनार्दनौ । अन्वयातां महावेगैरश्वै राजन् गुरुद्रुहम् ॥१९॥
मिथिलायामुपवने विसृज्य पतितं हयम् । पद्भ्यामधावत् संत्रस्तः कृष्णोऽप्यन्वद्रवत् रुषा॥२०॥
पदातेर्भगवांस्तस्य पदातिस्तिग्मनेमिना । चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिन् ॥२१॥
अलब्धमणिरागत्य कृष्ण आहाग्रजान्तिकम् । वृथा हतः शतधनुर्मणिस्तत्र न विद्यते ॥२२॥
तत आह बलो नूनं स मणिः शतधन्वना । कस्मिंश्चित् पुरुषे न्यस्तस्तमन्वेष पुरं व्रज ॥२३॥
अहं विदेहमिच्छामि द्रष्टुं प्रियतमं मम । इत्युक्त्वा मिथिलां राजन् विवेश यदुनन्दनः ॥२४॥
तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः । अर्हयामास विधिवदर्हणीयं समर्हणैः ॥२५॥

---

मतिर्यस्य ॥५॥ क्रन्दन्तीनां विलपन्तीनाम् । सौनिको हिंसकः सूना वधस्थानं विद्यतेऽस्येति विग्रहः । शुचा शोकेन व्याप्ता ॥७॥ तैलद्रोण्यां नौकाकारपात्रे । कटाहे वा । मृतं प्रास्य निक्षिप्य ॥८॥ अस्राक्षौ अश्रुपूर्णनेत्रौ विलेपतुः ॥९॥ भार्या सत्यभामा ॥१०॥ परीप्सया रक्षणेच्छया ॥११॥ हेलनं प्रतिकूलम् । वृजिनमपराधम्॥१२॥ अपीतो मृतः । 'मरणेऽपीतः' इति निरुक्तेः । सप्तदशानां संयुगानां समाहारस्तस्मात् इति पञ्चम्यन्तपाठ एव सुकरः ॥ १३ ॥ प्रत्याख्यातो निराकृतः स शतधन्वा । पार्ष्णिग्राहं पृष्ठरक्षकम् साहाय्यमित्यर्थः अयाचत । बलं विद्वान् जानन् ॥१४॥ चेष्टामभिप्रायम् । विश्वसृजो ब्रह्मादयः ॥१५॥ यो बालः कृष्णः दधार । उच्छिलीन्ध्रं छत्राकम् ॥१६॥१७॥ तस्मिन् अक्रूरे ॥१८॥ गुरुः श्वशुरः सत्राजित् तद्धन्तारं शतधन्वानम् ॥१९॥२०॥ तिग्मनेमिना तीक्ष्णधारेण शिरः उत्कृत्य छित्वा । व्यचिनोत् अन्वेषयामास ॥ २१ ॥ २२ ॥ अन्वेषय ॥ २३ ॥ ॥ २४ ॥ समर्हणैः पूजाद्रव्यैः ॥ २५ ॥ उवासेति सार्द्धम् । समाः संवत्सरान् ॥ २६ ॥ २७ ॥ बन्धोः

उवास तस्यां कतिचिन्मिथिलायां समा विभुः। मानितः प्रीतियुक्तेन जनकेन महात्मना।
ततोऽशिक्षद् गदां काले धार्तराष्ट्रः सुयोधनः ॥२६॥
केशवो द्वारकामेत्य निधनं शतधन्वनः। अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृत् विभुः ॥२७॥
ततः स कारयामास क्रिया बन्धोर्हतस्य वै। साकं सुहृद्भिर्भगवान् या याः स्युः साम्परायिकाः ॥
अक्रूरः कृतवर्मा च श्रुत्वा शतधनोर्वधम्। व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ ॥२९॥
अक्रूरे प्रोषितेऽरिष्टान्यासन् वै द्वारकौकसाम्। शरीरा मानसास्तापा मुहुर्दैहिकभौतिकाः ॥३०॥
इत्यङ्गोपदिशन्त्येके विस्मृत्य प्रागुदाहृतम्। मुनिवासनिवासे किं घटेतारिष्टदर्शनम् ॥३१॥
देवेऽवर्षति काशीशः श्वफल्कायागताय वै। स्वसुतां गान्दिनीं प्रादात् ततोऽवर्षत् स्म काशिषु ॥
तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र यत्र ह। देवोऽभिवर्षते तत्र नोपतापा न मारिकाः ॥३३॥
इति वृद्धवचः श्रुत्वा नैतावदिह कारणम्। इति मत्वा समानाय्य प्राहाक्रूरं जनार्दनः ॥३४॥
पूजयित्वाऽभिभाष्यैनं कथयित्वा प्रियाः कथाः। विज्ञाताऽखिलचित्तज्ञः स्मयमान उवाच ह ॥३५॥
ननु दानपते न्यस्तस्त्वय्यास्ते शतधन्वना। स्यमन्तको मणिः श्रीमान् विदितः पूर्वमेव नः ॥३६॥
सत्राजितोऽनपत्यत्वाद् गृह्णीयुर्दुहितुः सुताः। दायं निनीयापः पिण्डान् विमुच्यर्णं च शेषितम् ॥
तथापि दुर्धरस्त्वन्यैस्त्वय्यास्तां सुव्रते मणिः। किन्तु मामग्रजः सम्यङ् न प्रत्येति मणिं प्रति।३८।
दर्शयस्व महाभाग बन्धूनां शान्तिमावह। अव्युच्छिन्ना मखास्तेऽद्य वर्तन्ते रुक्मवेदयः ॥३९॥
एवं सामभिरालब्धः श्वफल्कतनयो मणिम्। आदाय वाससाच्छन्नं ददौ सूर्यसमप्रभम् ॥४०॥
स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः। विमृज्य मणिना भूयस्तस्मै प्रत्यार्पयत् प्रभुः ॥४१॥
यस्त्वेतद् भगवत ईश्वरस्य विष्णोर्वीर्याढ्यं वृजिनहरं सुमङ्गलं च।
आख्यानं पठति शृणोत्यनुस्मरेद् वा दुष्कीर्तिं दुरितमपोह्य याति शान्तिम् ॥४२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे स्यमन्तकोपाख्याने
सप्तपञ्चाशत्तमोऽध्यायः ॥५७॥

---

सत्राजितः। वै प्रसिद्धार्थे। साम्परायिकाः पारलौकिक्य यायास्तास्ताः सर्वाः इति योज्यम् ॥२८॥ प्रयोजकौ मणि-हरणे प्रवर्तकौ। व्यूषतुः ततः पलायितौ ॥२९॥ अक्रूर इति युग्मम्। प्रोषिते परदेशं गते शरीराः तापा व्याधयः। मानसा आधयश्च क्रमेण। देविका अनावृष्ट्याद्य । भौतिकाः सर्पादिजन्याः आसन् ॥३०॥ अङ्ग हे राजन्। एके वैशम्पायनादयः। प्रागुक्तं श्रीकृष्णमाहात्म्यम्। मुनीनां वासो यस्मिन् स श्रीकृष्णः तस्य निवासे ॥३१॥ अन्यदपि मुनिमतं दूषयितुमनुवदति–देव इति। श्वफल्काय अक्रूरपित्रे। ततो दानात् अनवर्षत् स्मेत्याश्चर्ये ॥३२॥३३॥ एता-वत् मणिसहिताक्रूरप्रवासनमेव न किन्तु ममेच्छैव ॥३४॥ अभिभाष्य संबोध्य ह हर्षेण विज्ञाता विज्ञः ॥३५॥ ननु निश्चये। नोऽस्माकम् ॥३६॥ पिण्डांश्च निनीय दत्त्वा ऋणं च अपाकृत्य अवशेषितं सर्वं दायं धनं दौहित्रा गृह्णी-युरिति धर्मशास्त्रम् ॥३७॥ तथापीत्यर्द्धम्। सुव्रतेऽधिकारिणि त्वय्येव आस्ते ॥३८॥ किन्त्विति सार्द्धम्। मां प्रति न प्रत्येति न विश्वसिति किन्तु अनेनैव तिरोधापित इति बलः शङ्कत इत्यर्थः। आवह प्रापय। रुक्मवेदयः सुवर्णरचितवेदियुक्ता ॥३९॥ सामभिः सान्त्वनावाक्यैः। आलब्धः प्रोत्साहितः। स्वपाणिना स्पृष्टो वा सूर्यसमेति अत एव वाससेति योज्यम् ॥ ४० ॥ ज्ञातिभ्यो बलदेवादिभ्यः। रजो मिथ्यादोषं प्रमृज्य। तस्मै अक्रूराय ॥ ४१ ॥ सुमङ्गलं परममङ्गलमयम् एतदाख्यानम् यस्तु पठति शृणोति अनुस्मरति वा स दुष्कीर्ति तन्मूलं दुरितं पापं च त्यक्त्वा शान्तिं याति। वृजिनं दुःखम् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां
सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

## अथाष्टपञ्चाशत्तमोऽध्यायः

श्रीशुक उवाच

एकदा पाण्डवान् द्रष्टुं प्रतीतान् पुरुषोत्तमः । इन्द्रप्रस्थं गतः श्रीमान् युयुधानादिभिर्वृतः ॥१॥

दृष्ट्वा तमागतं पार्था मुकुन्दमखिलेश्वरम् । उत्तस्थुर्युगपद् वीराः प्राणा मुख्यमिवागतम् ॥२॥

परिष्वज्याच्युतं वीरा अङ्गसङ्गहतैनसः । सानुरागस्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः ॥३॥

युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम् । फाल्गुनं परिरभ्याथ यमाभ्यां चाभिवन्दितः॥४॥

परमासन आसीनं कृष्णा कृष्णमनिन्दिता । नवोढा व्रीडिता किंचिच्छनैरेत्याभ्यवन्दत ॥५॥

तथैव सात्यकिः पार्थैः पूजितश्चाभिवन्दितः । निषसादासनेऽन्ये च पूजिताः पर्युपासत ॥६॥

पृथां समागत्य कृताभिवादनस्तयातिहार्दार्द्रदृशाभिरम्भितः ।
आपृष्टवांस्तां कुशलं सहस्नुषां पितृष्वसारं परिपृष्टबान्धवः ॥७॥

तमाह प्रेमवैक्लव्यरुद्धकण्ठाऽश्रुलोचना । स्मरन्ती तान् बहून् क्लेशान् क्लेशापायात्मदर्शनम् ॥८॥

तदैव कुशलं नोऽभूत् सनाथास्ते कृता वयम् । ज्ञातीन् नः स्मरता कृष्ण भ्राता मे प्रेषितस्त्वया ।९।

न तेऽस्ति स्वपरभ्रान्तिर्विश्वस्य सुहृदात्मनः । तथापि स्मरतां शश्वत् क्लेशान् हंसि हृदि स्थितः१०

युधिष्ठिर उवाच

किं न आचरितं श्रेयो न वेदाहमधीश्वर । योगेश्वराणां दुर्दर्शो यन्नो दृष्टः कुमेधसाम् ॥११॥

इति वै वार्षिकान् मासान् राज्ञा सोऽभ्यर्थितः सुखम् । जनयन् नयनानन्दमिन्द्रप्रस्थौकसां विभुः ॥

एकदा रथमारुह्य विजयो वानरध्वजम् । गाण्डीवं धनुरादाय तूणौ चाक्षयसायकौ ॥१३॥

---

अष्टपञ्चाशत्तमे तु कन्याः पञ्चाऽग्रहीद्धरिः ।
कालिन्दीं मित्रविन्दां च सत्यां भद्रां च लक्ष्मणाम् ॥ १ ॥

प्रतीतान् द्रुपदगेहे ज्ञातान् । प्रतीतः सादरे ज्ञाते इति मेदिनी । युयुधानः सात्यकिः ॥१॥ युगपत् एककालावच्छेदेन । मुख्यं प्राणम् आगतं यथा प्राणा इन्द्रियाणि सक्रियाणि भवन्ति ।२। हतम् एनोऽत्र दुःखम् येषाम् ॥३॥ फाल्गुनमर्जुनम् फाल्गुनोनक्षत्रे जातत्वात् ॥४॥ कृष्णा द्रौपदी शनैः कृष्णमेत्य । किञ्चित् व्रीडिता अनिन्दिता बहूनां भार्याऽपि निन्दारहिता । नवोढा सद्योविवाहिता ॥५॥ कृष्णं पर्युपासत परित उपविष्टाः ॥६॥ अतिहार्देन स्नेहेन आर्द्रे सजले दृशौ नेत्रे यस्यास्तया कुन्त्या अभिरम्भित आलिङ्गितः । परिपृष्टा बान्धवा भ्रातरः वसुदेवादयो यस्येति कृष्णविशेषणम् ॥ ७ ॥ वैक्लव्यं व्याकुलत्वम् । क्लेशापायाय नाशाय आत्मानं दर्शयतीति तथा ॥८॥ ते त्वया यदा भ्राता अक्रूरः ॥९॥ स्वकीयः परकीय इति भ्रान्तिर्भ्रमः ॥१०॥ नोऽस्माभिः किं श्रेयः पुण्यं कर्म । कुत्सितेषु विषयेषु मेधा येषाम् । कर्तरि षष्ठी ॥ ११ ॥ इति वै इत्येवम् । वार्षिकान् चतुर्मासान् । सुखमवसदिति शेषः । अभ्यर्थित इति वा ॥ १२ ॥ एकदेति युग्मम् । विजयोऽर्जुनः । तूणौ इषुधी । साकं

साकं कृष्णेन संनद्धो विहर्तुं विपिनं वनम्। बहुव्यालमृगाकीर्णं प्राविशत् परवीरहा ॥१४॥
तत्राविध्यच्छरैर्व्याघ्रान् सूकरान् महिषान् रुरून्। शरभान् गवयान् खड्गान् हरिणाञ्छशशल्लकान्
तान् निन्युः किंकरा राज्ञे मेध्यान् पर्वण्युपागते। तृट्परीतः परिश्रान्तो बीभत्सुर्यमुनामगात्॥१६॥
तत्रोपस्पृश्य विशदं पीत्वा वारि महारथौ। कृष्णौ ददृशतुः कन्यां चरन्तीं चारुदर्शनाम् ॥१७॥
तामासाद्य वरारोहां सुद्विजां रुचिराननाम्। पप्रच्छ प्रेषितः सख्या फाल्गुनः प्रमदोत्तमाम्॥१८॥
का त्वं कस्यासि सुश्रोणि कुतोऽसि किं चिकीर्षसि। मन्ये त्वां पतिमिच्छन्तीं सर्वं कथय शोभने १९

कालिन्द्युवाच

अहं देवस्य सवितुर्दुहिता पतिमिच्छती। विष्णुं वरेण्यं वरदं तपः परममास्थिता ॥२०॥
नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम्। तुष्यतां मे स भगवान् मुकुन्दोऽनाथसंश्रयः ॥२१॥
कालिन्दीति समाख्याता वसामि यमुनाजले। निर्मिते भवने पित्रा यावदच्युतदर्शनम् ॥२२॥
तथावदत् गुडाकेशो वासुदेवाय सोऽपि ताम्। रथमारोप्य तद् विद्वान् धर्मराजमुपागमत् ॥२३॥
यदैव कृष्णः संदिष्टः पार्थानां परमाद्भुतम्। कारयामास नगरं विचित्रं विश्वकर्मणा ॥२४॥
भगवांस्तत्र निवसन् स्वानां प्रियचिकीर्षया। अग्नये खाण्डवं दातुमर्जुनस्यास सारथिः ॥२५॥
सोऽग्निस्तुष्टो धनुरदाद्धयाञ्छ्वेतान् रथं नृप। अर्जुनायाक्षयौ तूणौ वर्म चाभेद्यमस्त्रिभिः२६॥
मयश्च मोचितो वह्नेः सभां सख्य उपाहरत्। यस्मिन् दुर्योधनस्यासीज्जलस्थलदृशिभ्रमः ॥२७॥
स तेन समनुज्ञातः सुहृद्भिश्चानुमोदितः। आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः ॥२८॥
अथोपयेमे कालिन्दीं सुपुण्यर्त्वृक्ष ऊर्जिते। वितन्वन् परमानन्दं स्वानां परममङ्गलम् ॥२९॥
विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ। स्वयंवरे स्वभगिनीं कृष्णे सक्तां न्यषेधताम् ॥३०॥

---

सह। सन्नद्धो धृतकवचः। गहनं दुर्गमम्। [1]विपिनमिति पाठे गम्भीरम्। व्यालो दुष्टगजः मृगसाहचर्यात् ॥ १३ ॥ १४ ॥ तत्र वने। रुरुः कृष्णमृगे दैत्ये इति धरणिः। शरभोऽष्टापदः व्याघ्रहन्ता। गवया गोसदृशाः खड्गाः गेंडा इति ॥१५॥ तान् व्याघ्रादीन्। व्याघ्रमांसस्याभक्ष्यत्वात्परहिंसकत्वात्ते हता इत्यवधेयम्। बीभत्सुः अर्जुनः। मेध्यान् कर्मार्हान् राज्ञे राजानं याजयितुम् ॥ १६ ॥ उपस्पृश्य आचम्य। विशदं स्वच्छम्। चरन्ती तपश्चरन्तीम्। दृश्यत इति दर्शनं रूपम् कृष्णौ कृष्णार्जुनौ ॥१७॥ आरोहौ उरू। द्विजा दन्ताः। सख्या श्रीकृष्णेन ॥ १८ ॥ कस्य पुत्री ॥ १९ ॥ वरेण्यं वरणीयम् ॥ २० ॥ मे ममोपरि तुष्यताम् ॥ २१ ॥ कलिन्दगिरेरुद्भूतत्वात्-कालिन्दी यमुना तस्यां निवासात्सापि तन्नाम्नी ॥ २२ ॥ गुडाकेशो जितनिद्रोऽर्जुनः। तत् कालिन्दीवृत्तं जानन् ॥ २३ ॥ पार्थैर्यदैव सन्दिष्टः प्रार्थितस्तदैव ॥ २४ ॥ खाण्डवमिद्रवनम्। इन्द्रप्रस्थस्यावान्तरमेतत् ॥ २५ ॥ वर्म कवचम्। अस्त्रिभिः अस्त्रधारिभिः ॥ २६ ॥ सख्ये अर्जुनाय। यस्मिन् सभास्थले। जलस्थलयोर्दृशेर्दृष्टेर्भ्रमः ॥ २७ ॥ स कृष्णः। तेन युधिष्ठिरेण ॥ २८ ॥ सुपुण्यो विवाहयोग्यो ऋतुः ऋक्षं नक्षत्रं रोहिण्यादि च यस्मिन्। ऊर्जिते ग्रहबलवति मुहूर्ते परम् मङ्गलं निर्विघ्नं यथा स्यात्तथा उपयेमे इत्यन्वयः ॥ २९ ॥ पञ्चमं विवाहमाह—विन्देति, आवन्त्यौ अवन्तिदेशराजानौ ॥ ३० ॥ पितृष्वसुर्वसुदेवभगिन्याः

---

१. 'अशब्दे विपिनं प्रोक्तं वनगम्भीरयोरपि' इति धरणिः।

राजाधिदेव्यास्तनयां मित्रविन्दां पितृष्वसुः । प्रसह्य हृतवान् कृष्णो राजन् राज्ञां प्रपश्यताम् ३१
नग्नजिन्नाम कौसल्य आसीद् राजातिधार्मिकः । तस्य सत्याभवत् कन्या देवी नाग्नजिती नृप ३२
न तां शेकुर्नृपा वोढुमजित्वा सप्त गोवृषान् । तीक्ष्णशृङ्गान् सुदुर्धर्षान् वीरगन्धासहान् खलान् ।।
तां श्रुत्वा वृषजिल्लभ्यां भगवान् सात्वतां पतिः । जगाम कौशल्यपुरं सैन्येन महता वृतः ।।३४।।
स कोसलपतिः प्रीतः प्रत्युत्थानासनादिभिः । अर्हणेनापि गुरुणा पूजयन् प्रतिनन्दितः ।।३५।।

वरं विलोक्याभिमतं समागतं नरेन्द्रकन्या चकमे रमापतिम् ।
भूयादयं मे पतिराशिषोऽमलाः करोतु सत्या यदि मे धृतो व्रतैः ।।३६।।
यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीरब्जजः सगिरिशः सहलोकपालैः ।
लीलातनूः स्वकृतसेतुपरीप्सयेशः काले दधत् स भगवान् मम केन तुष्येत् ।।३७।।

श्रीशुक उवाच

अर्चितं पुनरित्याह नारायण जगत्पते । आत्मानन्देन पूर्णस्य करवाणि किमल्पकः ।।३८।।
तमाह भगवान् हृष्टः कृतासनपरिग्रहः । मेघगम्भीरया वाचा सस्मितं कुरुनन्दन ।।३९।।

श्रीभगवानुवाच

नरेन्द्र याच्ञा कविभिर्विगर्हिता राजन्यबन्धोर्निजधर्मवर्तिनः ।
तथापि याचे तव सौहृदेच्छया कन्यां त्वदीयां न हि शुल्कदा वयम् ।।४०।।

राजोवाच

कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः । गुणैकधाम्नो यस्याङ्गे श्रीर्वसत्यनपायिनी ।।४१।।
किं त्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ । पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया ।।४२।।
सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः । एतैर्भग्नाः सुबहवो भिन्नगात्रा नृपात्मजाः ।।४३।।

---

राजाधिदेवीनाम्न्याः शिविदेशोद्भवत्वादस्याः शैव्यापि नाम । यदुवंशे स्वसम्बन्धिविवाहस्य लोकाचारप्राप्तत्वान्न-दोषः । यद्वा । हरिवंशे यदुवंशस्य चन्द्रवंशे सूर्यवंशे च वर्णनाद् परस्परं भिन्नवंशं स्वीकृत्य विवाहे न काप्य-नुपपत्तिः ।। ३१ ।। षष्ठमाह—कौशल्योऽयोध्यापतिः ।। ३२ ।। ३३ ।। वृषान् जयति यस्तेन लभ्याम् ।। ३४ ।। प्रीतः सन् अर्हणेन पूजनसामग्र्या तं कृष्णं पूजयन् स राजा तेनाऽपि कृष्णेनापि वृद्धत्वात् प्रतिनन्दितः वाचा सत्कृतः ।।२५।। चकमे इयेष । यदि मे व्रतैर्नियमैः सह धृतो हृदि चिन्तितस्तर्हि स एव मे आशिषः कामनाः सत्याः पूर्णाः करोतु । काः । अयं मे पतिर्भूयादिति ।।३६।। श्रीः लक्ष्मीःअब्जजो ब्रह्मा लोकपालैः सह यस्य पादरजः बिभर्ति स्वसेतूनां धर्ममर्यादानां परीप्सया परिपालनेच्छया तनूर्मूर्तीर्दधत् स ईश मम केन पुण्येन तुष्येत् ।।३७।। अल्पकोऽतितुच्छः ।। ३८ ।। तं नग्नजितम् । कृतः आसनपरिग्रह आसनस्वीकारो येन सः ।। ३९ ।। यद्यपि गर्हिता तथापीत्यन्वयः । राजन्यबन्धोः क्षत्रियाधमस्यापि किं पुनरुत्कृष्टस्य ममेत्यर्थः ।।४०।। ते त्वत्तः । अन-पायिनी अवियोगिनी ।। ४१ ।। समयो नियमः । कन्या वरपरीप्सया योग्यवरप्राप्तीच्छया ।। ४२ ।। दुर्दान्ता अशिक्षिताः । दुरवग्रहा अपराधीनाः । अत एव भग्ना भङ्गं प्रापिताः ।। ४३ ।। यत् यदि निश्चये इमे ।।४४।।

तप्तोऽहं ते तेजसा दुःसहेन शान्तोग्रेणात्युल्बणेन ज्वरेण ।
तावत्तापो देहिनां तेऽङ्घ्रिमूलं नो सेवेरन् यावदाशानुबद्धाः ॥२८॥

श्रीभगवानुवाच

त्रिशिरस्ते प्रसन्नोऽस्मि व्येतु ते मज्ज्वराद् भयम् । यो नौ स्मरति संवादं तस्य त्वन्न भवेद् भयम्॥
इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः । बाणस्तु रथमारूढः प्रागाद् योत्स्यञ्जनार्दनम् ॥
ततो बाहुसहस्रेण नानायुधधरोऽसुरः । मुमोच परमक्रुद्धो बाणांश्चक्रायुधे नृप ॥३१॥
तस्याऽस्यतोऽस्त्राण्यसकृच्चक्रेण क्षुरनेमिना । चिच्छेद भगवान् बाहून् शाखा इव वनस्पतेः॥३२॥
बाहुषुच्छिद्यमानेषु बाणस्य भगवान् भवः । भक्तानुकम्प्युपव्रज्य चक्रायुधमभाषत ॥३३॥

श्रीरुद्र उवाच

त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये । यं पश्यन्त्यमलात्मान आकाशमिव केवलम्॥३४॥

नाभिर्नभोऽग्निर्मुखमम्बु रेतो द्यौः शीर्षमाशा श्रुतिरङ्घ्रिरुर्वी ।
चन्द्रो मनो यस्य दृगर्क आत्मा अहं समुद्रो जठरं भुजेन्द्रः ॥३५॥
रोमाणि यस्यौषधयोऽम्बुवाहाः केशा विरिञ्चो धिषणा विसर्गः ।
प्रजापतिर्हृदयं यस्य धर्मः स वै भवान् पुरुषो लोककल्पः ॥३६॥
तवावतारोऽयमकुण्ठधामन् धर्मस्य गुप्त्यै जगतो भवाय ।
वयं च सर्वे भवतानुभाविता विभावयामो भुवनानि सप्त ॥३७॥
त्वमेक आद्यः पुरुषोऽद्वितीयस्तुर्यः स्वदृग्घेतुरहेतुरीशः ।
प्रतीयसेऽथापि यथाविकारं स्वमायया सर्वगुणप्रसिद्धयै ॥३८॥
यथैव सूर्यः पिहितश्छायया स्वया छायां च रूपाणि च संचकास्ति ।
एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ॥३९॥

---

शान्तः शीतः पुनः उग्रो दाहकश्च शीतज्वरः तेन । उल्बणेन । भीषणेन आशाभिः पुत्रवित्तलोकैषणाभिः ।।२८॥ व्येतु निवर्तताम् । नौ आवयोः संवादम् । त्वत् त्वत्तः ॥२९॥ योत्स्यन् योद्धुम् ।३०। चक्रायुधे श्रीकृष्णे ॥३१॥ असकृत् अस्त्राणि अस्यतः क्षिपतः तस्य बाणस्य बाहून् चक्रेण चिच्छेदेत्यन्वयः । क्षुरनेमिना तीक्ष्णधारेण ॥३२ ॥ भक्तानुकम्पी भक्तवत्सलः ॥३३॥ यत् ब्रह्म ब्रह्मणि वेदे गूढं ज्योतिःस्वरूपं आकाशमिव व्यापकं च परं दुर्दर्शं दुर्ज्ञेयमस्ति तदेव अवतीर्णं यं मुनयः पश्यन्ति स त्वं हि त्वमेवेत्यन्वयः ॥ ३४ ॥ नाभिरिति युग्मम् । नभो यस्य नाभिः । द्यौः स्वर्गः शीर्षं आशा दिशः श्रुतिः श्रवणेन्द्रियम् । अहं शिवः आत्मा अहङ्कारः । भुजा बाहुः । धिषणा बुद्धिः । विसर्गो मेढ्रम् । स पुरुषः लोकैः अवयवित्वेन कल्प्यते प्रतिपाद्यते इति ।३६। हे अकुण्ठधामन् अलुप्तज्ञान ! भवाय अभ्युदयाय । अनुभाविता पालिताः सन्तः भुवनानि विभावयामः पालयामः ।३७। स्वदृक् स्वप्रकाशरूपः । सर्वस्य हेतुः स्वयम् अहेतुः । यथाविकारं प्रतिशरीरम् गुणप्रसिद्धयै विषयप्रकाशनाय प्रतीयसे।३८। यथैव सूर्यं छायया मेघलक्षणया आच्छादितोऽपि छायां मेघं रूपाणि घटपटादीनि प्रकाशते। एवं गुणेन अहङ्कारेण स्वकार्यैण तद्दृष्टया आच्छादितोऽपि त्वं गुणान् सत्त्वादीन् तदुपहतान् गुणिनः जीवानपि प्रकाशयसि आत्मना स्वयमेव दीपयसीति तथा।

यन्मायामोहितधियः पुत्रदारगृहादिषु । उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे ॥४०॥
देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः । यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः॥४१॥
यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् । विपर्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजन् ॥४२॥
अहं ब्रह्माथ विबुधा मुनयश्चामलाशयाः । सर्वात्मना प्रपन्नास्त्वामात्मानं प्रेष्ठमीश्वरम् ॥४३॥

तं त्वा जगत्स्थित्युदयान्तहेतुं समं प्रशान्तं सुहृदात्मदैवम् ।
अनन्यमेकं जगदात्मकेतं भवापवर्गाय भजाम देवम् ॥४४॥
अयं ममेष्टो दयितोऽनुवर्ती मयाऽभयं दत्तममुष्य देव ।
सम्पाद्यतां तद् भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः ॥४५॥

श्रीभगवानुवाच

यदात्थ भगवंस्त्वं नः करवाम प्रियं तव । भवतो यद्व्यवसितं तन्मे साध्वनुमोदितम् ॥४६॥
अवध्योऽयं ममाप्येष वैरोचनिसुतोऽसुरः । प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः ॥४७॥
दर्पोपशमनायास्य प्रवृक्णा बाहवो मया । सूदितं च बलं भूरि यच्च भारायितं भुवः ॥४८॥
चत्वारोऽस्य भुजाः शिष्टा भविष्यन्त्यजरामराः । पार्षदमुख्यो भवतो नकुतश्चिद्भयोऽसुरः॥४९॥
इति लब्ध्वाऽभयं कृष्णं प्रणम्य शिरसाऽसुरः । प्राद्युम्निं रथमारोप्य सवध्वा समुपानयत् ॥५०॥
अक्षौहिण्या परिवृतं सुवासःसमलंकृतम् । सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः ॥५१॥

स्वराजधानीं समलंकृतां ध्वजैः सतोरणैरुक्षितमार्गचत्वराम् ।
विवेश शङ्खानकदुन्दुभिस्वनैरभ्युद्यतः पौरसुहृद्द्विजातिभिः ॥५२॥

य एवं कृष्णविजयं शंकरेण च संयुगम् । संस्मरेत् प्रातरुत्थाय न तस्य स्यात् पराजयः ॥५३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धेऽनिरुद्धानयनं नाम
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

हे भूमन् परिपूर्ण ॥३९॥ वृजनार्णवे दुःखसमुद्रे संसारे पुत्रादिषु प्रसक्ताः सन्तः उन्मज्जन्ति ऊर्ध्वं स्वर्गं गच्छन्ति पुण्याधिक्यात् । निमज्जन्ति अधो नरकं गच्छन्ति पापाधिक्यात् ॥४०॥ देवेन त्वया दत्तं नृदेहं मनुष्यदेहं लब्ध्वा यो नाद्रियेत् स शोच्यः निन्दनीयः अपराधीत्यर्थः । आत्मानं वञ्चयतीति वञ्चकः ।४१। यो मर्त्यो मरणधर्मा त्वां विसृजते उपेक्षते । त्वत्तो विपर्यया विपरीता अर्थात् अनात्मानः अप्रियाः अनीश्वराश्च ये इन्द्रियार्थाः पुत्रादयः तदर्थं स विषम् अत्ति।४२॥ अत एव सर्वे वयं त्वामेव प्रपन्नाः शरणं गताः स्मः। सर्वात्मना कायवाङ्मनोव्यापारेण ॥४३॥ तं त्वां भवापवर्गाय संसारमोक्षाय वयं भजामेत्यन्वयः।प्रार्थनायां लोट्। अनन्यं समानातिशयरहितम् आत्मनां जीवानां च केतम् आधारम् ॥४४॥ इष्टः अभिमतः । दयितः प्रियश्च सेवकश्च भवतः तव प्रसादः अस्मिन्नपि सम्पाद्यतां यथा प्रह्लादे ॥ ४५ ॥ नोऽस्मान् प्रति यत् ब्रवीषि भवतो यत् व्यवसितं निश्चितं बाहुच्छेदनं तत् न केवलमनुमोदितम् अपि तु साधु सम्यक् पूर्णीकृतम् ॥४६॥ वैरोचनो बलिः ॥ ४७ ॥ बाहवः प्रवृक्णाः छिन्नाः भार इव आचरति भारायते । ततः कर्तरि क्तः भारायितं तच्च सूदितं नाशितम् ॥ ४८ ॥ अजराः श्रमरहिताः । अमरा अच्छेद्याश्च ॥ ४९ ॥ प्राद्युम्निम् अनिरुद्धम् सादरमानयत् स सहेत्यर्थः । क्वचिदादेशोऽपि आदेशित्वेन गृह्यते इति वैयाकरणाः ॥ ५० ॥ ५१ ॥ सतोरणैरित्यत्र स इति पृथक् पदं कार्यम् द्वारकां कृष्णः सविवेशेत्यन्वयः । तोरणं वन्दनमालिका । उक्षिताः सिक्ताः मार्गादयो यस्याः । पौरादिभिः अभ्युद्यतः अभिमुखमागत्य सत्कृतः ॥ ५२ ॥ श्रीकृष्णस्य विजयो यत्र संयुगविशेषणम् । तत्पुरुषो वा ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां त्रिषष्टितमोऽध्यायः ॥६३॥

## अथ चतुःषष्टितमोऽध्यायः

श्रीशुक उवाच

एकदोपवनं राजन् जग्मुर्यदुकुमारकाः । विहर्तुं साम्बप्रद्युम्नचारुभानुगदादयः ॥१॥

क्रीडित्वा सुचिरं तत्र विचिन्वन्तः पिपासिताः । जलं निरुदके कूपे ददृशुः सत्त्वमद्भुतम् ॥२॥

कृकलासं गिरिनिभं वीक्ष्य विस्मितमानसाः । तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयान्विताः ॥३॥

चर्मजैस्तान्तवैः पाशैर्बद्ध्वा पतितमर्भकाः । नाशक्नुवन् समुद्धर्तुं कृष्णायाऽचख्युरुत्सुकाः ॥४॥

तत्रागत्यारविन्दाक्षो भगवान् विश्वभावनः । वीक्ष्योज्जहार वामेन तं करेण स लीलया ॥५॥

स उत्तमश्लोककराभिमृष्टो विहाय सद्यः कृकलासरूपम् ।
संतप्तचामीकरचारुवर्णः स्वर्ग्यद्भुतालंकरणाम्बरस्रक् ॥६॥

पप्रच्छ विद्वानपि तन्निदानं जनेषु विख्यापयितुं मुकुन्दः ।
कस्त्वं महाभाग वरेण्यरूपो देवोत्तमं त्वां गणयामि नूनम् ॥७॥

दशामिमां वा कतमेन कर्मणा सम्प्रापितोऽस्यतदर्हः सुभद्र ।
आत्मानमाख्याहि विवित्सतां नो यन्मन्यसे नः क्षममत्र वक्तुम् ॥८॥

श्रीशुक उवाच

इति स्म राजा सम्पृष्टः कृष्णेनानन्तमूर्तिना । माधवं प्रणिपत्याह किरीटेनार्कवर्चसा ॥९॥

नृग उवाच

नृगो नाम नरेन्द्रोहमिक्ष्वाकुतनयः प्रभो । दानिष्वाख्यायमानेषु यदि ते कर्णमस्पृशम् ॥१०॥

---

चतुःषष्टितमे कृष्णो नृगं योनेरमूमुचत् ।
ब्रह्मस्वहारिदुर्गत्या नृपान् दृष्टानवोधयत् ॥

सत्यपि यौवने क्रीडासक्तत्वात् कुमारप्राचुर्याद्वा कुमारशब्दप्रयोगः । कुत्सितान् हिंसकजन्तून् मारयतीति वा कुमारः ॥१॥ जलं विचिन्वन्तः अन्वेषयन्तः । सत्त्वं विशालजन्तुम् । कूपे ददृशुः 'सत्त्वं गुणे' जन्तुषु—इति मेदिनी ॥२॥ कृकं गलं लासयति नर्तयतीति तथा । गिरिगिट इति । 'कृको गले' इति वामनः ॥३ ॥४॥५॥ श्रीकृष्णस्य करेण अभिमृष्टः स्पृष्टः सन् रूपं विहाय स स्वर्गी देवो बभूवेति योज्यम् । चामीकरं सुवर्णं तद्वत् सुन्दरवर्णो यस्य ॥ ६ ॥ तन्निदानं कारणं विद्वान् जानन्नपि प्रचारयितुम् पप्रच्छ । वरेण्यम् आदरणीयम् ॥ ७ ॥ हे सुभद्र पुण्यमूर्ते । अतदर्हः एतद्दशानर्हः । नोऽस्माकमग्रे यत् यदि वक्तुं क्षममुचितं मन्यसे तर्हि कथयेत्यन्वयः । अत्र अधुना आत्मानं स्वप्राक्तनं वृत्तं कथय ॥८॥ स्म साश्चर्यम् ॥९॥ इक्ष्वाकुभ्रातुर्नृगादन्योऽयं नृगः इक्ष्वाकुतनयः । आख्यायमानेषु प्रशस्यमानेषु । अस्पृशम् अवश्यमेव । यदीति असन्देहे सन्देह-वचनम् ॥ १० ॥ आत्मा बुद्धिः तस्य । साक्षिणः अव्याहतदृशः अलुप्तज्ञानस्य ॥ ११ ॥ सिकता द्वीपाः ॥ ७ ॥ अदिवि मर्त्यलोके भारते तारका नद्यः ॥ ४५ ॥ वर्षधाराः पर्वताः ॥ २७ ॥ एवम् अङ्कानां

किं नु तेऽविदितं नाथ सर्वभूतात्मसाक्षिणः । कालेनाव्याहतदृशो वक्ष्येऽथापि तवाज्ञया ॥११॥
यावत्यः सिकता भूमेर्यावत्यो दिवि तारकाः । यावत्यो वर्षधाराश्च तावतीरददां स्म गाः ॥१२॥
पयस्विनीस्तरुणीः शीलरूपगुणोपपन्नाः कपिला हेमशृङ्गीः ।
न्यायार्जिता रूप्यखुराः सवत्सा दुकूलमालाभरणा ददावहम् ॥१३॥
स्वलंकृतेभ्यो गुणशीलवद्भ्यः सीदत्कुटुम्बेभ्य ऋतव्रतेभ्यः ।
तपःश्रुतब्रह्मवदान्यसद्भ्यः प्रादां युवभ्यो द्विजपुङ्गवेभ्यः ॥१४॥
गोभूहिरण्यायतनाश्वहस्तिनः कन्याः सदासीस्तिलरूप्यशय्याः ।
वासांसि रत्नानि परिच्छदान् रथानिष्टं च यज्ञैश्चरितं च पूर्तम् ॥१५॥
कस्यचिद् द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने । सम्पृक्ताऽविदुषा सा च मया दत्ता द्विजातये॥१६॥
तां नीयमानां तत्स्वामी दृष्ट्वोवाच ममेति तम् । ममेति प्रतिग्राह्याह नृगो मे दत्तवानिति॥१७॥
विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ । भवान् दाताऽपहर्तेति तच्छ्रुत्वा मेऽभवद् भ्रमः॥१८॥
अनुनीतावुभौ विप्रौ धर्मकृच्छ्रगतेन वै । गवां लक्षं प्रकृष्टानां दास्याम्येषा प्रदीयताम् ॥१९॥
भवन्तावनुगृह्णीतां किंकरस्याऽविजानतः । समुद्धरत मां कृच्छ्रात् पतन्तं निरयेऽशुचौ ॥२०॥
नाहं प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत् । नान्यद् गवामप्ययुतमिच्छामीत्यपरो ययौ॥२१॥
एतस्मिन्नन्तरे याम्यैर्दूतैर्नीतो यमक्षयम् । यमेन पृष्टस्तत्राहं देवदेव जगत्पते ॥२२॥

---

वामतो गत्या २७४५७ इयत्संख्याका एवं गावो नृगेण दत्ता । यथाश्रुतार्थग्रहणे तु तासां स्थितिरपि दुर्घटाऽस्तीति किमुत दानमिति वंशीधरी । अददामिति पाठः स्म एवार्थे ।१२। तरुणीत्युक्तेः बालाया वृद्धायाश्च दानं न कार्यम् । वाराहोक्ता दशविधाः कपिला[1] ग्राह्याः ॥१३॥ सुष्ठु सदाचारेण अलङ्कृतेभ्यः। तपसा श्रुता विख्याता ब्रह्मणि वदान्या वेदे अत्युदाराः अध्यापनशीलाश्च ते च ते सन्तः तेभ्यः ॥१४॥ परिच्छदान् गृहोचितसामग्रीः । इष्टं वैदिकं कर्म । पूर्तं स्मार्तं कर्म वापीकूपादि चरितं कृतम् ॥१५॥ मुख्यस्य प्रतिग्रहशून्यस्य । भ्रष्टा स्थानात् च्युता । सम्पृक्ता मिलिता अजानता मया दत्ता ॥१६॥ तत्स्वामी अप्रतिग्राही ॥१७॥ विवदमानौ । 'भासनोपसंभाषा' इत्यात्मनेपदम् । भ्रमो व्यग्रता ।१८। अनुनीतौ प्रार्थितौ । एषा युवयोर्मध्ये अन्यतरेण अन्यतरस्मै दीयताम् ।१९।२०। न प्रतीच्छे अन्यां न प्रतिगृह्णामि । स्वामी अप्रतिग्राही अपाक्रमत् ययौ स्वगां विहाय । अपरः प्रतिग्राही हठी एनामेव नान्यत् इत्युक्त्वा ययौ ॥२१॥ यमक्षयं यमलोकम् । 'क्षि निवासे' इत्यस्मादेरच् ॥२२॥ उपार्जितस्य दानस्य

---

१. सुवर्णपिङ्गला पूर्वा द्वितीया गौरपिङ्गला ।
तृतीया चैव रक्ताक्षी चतुर्थी गूढपिङ्गला ॥ १ ॥
पञ्चमी बहुवर्णा स्यात् षष्ठी स्यात् श्वेतपिङ्गला ।
सप्तमी श्वेतपिङ्गाक्षी ह्यष्टमी कृष्णपिङ्गला ॥ २ ॥
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला ।
एता दश समाख्याताः कपिलास्ते वरानने ॥ ३ ॥ सर्वाश्चैता महाभागास्तारयन्ति न संशयः ॥

पूर्वं त्वमशुभं भुङ्क्षे उताहो नृपते शुभम् । नान्तं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः ॥२३॥

पूर्वं देवाऽशुभं भुञ्ज इति प्राह पतेति सः । तावदद्राक्षमात्मानं कृकलासं पतन् प्रभो ॥२४॥

ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव । स्मृतिर्नाद्यापि विध्वस्ता भवत्संदर्शनार्थिनः ॥२५॥

स त्वं कथं मम विभोऽक्षिपथः परात्मा योगेश्वरैः श्रुतिदृशाऽमलहृद्विभाव्यः ।
साक्षादधोक्षज उरुव्यसनान्धबुद्धेः स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः ॥२६॥

देवदेव जगन्नाथ गोविन्द पुरुषोत्तम । नारायण हृषीकेश पुण्यश्लोकाऽच्युताव्यय ॥२७॥

अनुजानीहि मां कृष्ण यान्तं देवगतिं प्रभो । यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम् ॥२८॥

नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये । कृष्णाय वासुदेवाय योगानां पतये नमः ॥२९॥

इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना । अनुज्ञातो विमानाग्र्यमारुहत् पश्यतां नृणाम् ॥

कृष्णः परिजनं प्राह भगवान् देवकीसुतः । ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥३१॥

दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि । तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥३२॥

नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया । ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि ॥३३॥

हिनस्ति विषमत्तारं वह्निरद्भिः प्रशाम्यति । कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥३४॥

ब्रह्मस्वं दुरनुज्ञातं भुक्तं हन्ति त्रिपूरुषम् । प्रसह्य तु बलाद् भुक्तं दश पूर्वान् दशापरान् ॥३५॥

राजानो राजलक्ष्म्यान्धा नात्मपातं विचक्षते । निरयं येऽभिमन्यन्ते ब्रह्मस्वं साधु बालिशाः ॥३६॥

गृह्णन्ति यावतः पांसून् क्रन्दतामश्रुबिन्दवः । विप्राणां हृतवृत्तीनां वदान्यानां कुटुम्बिनाम् ॥३७॥

राजानो राजकुल्याश्च तावतोऽब्दान्निरङ्कुशाः । कुम्भीपाकेषु पच्यन्ते ब्रह्मदायापहारिणः ॥३८॥

स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेच्च यः । षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥३९॥

---

तज्जन्यधर्मस्य भास्वतः प्रकाशमानस्य स्वर्गादिलोकस्य पुण्यफलस्य च अन्तं नेत्यन्वयः । भुङ्क्षे भोक्ष्यसे । वर्तमानसामीप्ये लट् । 'भुजोऽनवने ।' इत्यात्मनेपदम् ॥२३॥ पत गच्छ नीचयोनिमिति यमः मां प्राहेति ॥२४॥२५॥ यः श्रुतिदृशा उपनिषच्चक्षुषा अमले हृदि विभाव्यः चिन्तनीयो भवति स त्वं मम साक्षात् अक्षिपथः नेत्रगोचरः कथं जातोऽसि । यस्य भवापवर्गः संसारान्तः भवेत् तस्यैव भवान् अनुदृश्यः स्यात् मम तु एतद्योनिदुःखेन अन्धबुद्धेः कथमेतदित्याश्चर्यम् ॥२६॥ देवदेवेति युग्मम् । देवगतिं स्वर्गम् । अनुजानीहि । आज्ञां देहि । दशेन्द्रियैः सह मे चेतः त्वत्पदास्पदं भूयादिति दशसम्बोधनैः प्रार्थयते ।२७।२८। सर्वं भावाय सर्वस्य भावो जन्म यस्मात् । योगानांसाधनानां पतये फलदात्रे ।२९। अग्र्यं श्रेष्ठम् ।३०। परिजनं परितो वर्तमानं जनसमुदायम् प्राह ।३१। स्वं धनं मनाक् ईषदपि भुक्तं सत् अग्नेरिव तेजीयसोऽपि दुर्जरं दुष्पचं भवति किमुत राज्ञामित्यन्वयः ।३२। प्रतिविधिः प्रतिक्रिया ।३३। विषं कर्तृ अत्तारं भोक्तारम् हन्ति । ब्रह्मस्वमेव अरणिः काष्ठं तज्जातः पावकः समूलं कुलम् ।३४ । दुरत्र वर्जने । अनुज्ञां विना । त्रिपूरुषं स्वयं पुत्रं पौत्रं च । प्रसह्य हठात् बलात् राज्यसाहाय्यात् । पूर्वान् पितृपितामहादीन् । अपरान् पुत्रपौत्रादीन् भोक्तारं च हन्ति ॥३५॥ निरयं नरकहेतुभूतम् अभिमन्यन्ते इच्छन्ति ते साधुबालिशाः महामूर्खाः ॥ ३६ ॥ गृह्णन्तीति युग्मम् । क्रन्दतां रुदतां विप्राणां यावतः यावत्संख्याकान् रजःकणान् आर्द्रीकुर्वन्ति । कुल्याः कुलोद्भवाः । दायो द्रव्यम् ॥ ३७ ॥ ३८ ॥ ब्रह्मवृत्तिं ब्राह्मणविकाम् ॥ ३९ ॥ गृष्वापि

न मे ब्रह्मधनं भूयाद्यद् गृद्ध्वाल्पायुषो नराः । पराजिताश्च्युता राज्याद् भवन्त्युद्वेजिनोऽहयः।।
विप्रं कृतागसमपि नैव द्रुह्यत मामकाः । घ्नन्तं बहु शपन्तं वा नमस्कुरुत नित्यशः ।।४१।।
यथाहं प्रणमे विप्राननुकालं समाहितः । तथा नमत यूयं च योऽन्यथा मे स दण्डभाक् ।।४२।।
ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः । अजानन्तमपि ह्येनं नृगं ब्राह्मणगौरिव ।।४३।।
एवं विश्राव्य भगवान् मुकुन्दो द्वारकौकसः । पावनः सर्वलोकानां विवेश निजमन्दिरम् ।।४४।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे नृगोपाख्यानं
नाम चतुःषष्टितमोऽध्यायः ।। ६४ ।।

---

अभिकाङ्क्ष्यापि । उद्वेजितु भयभीतं कर्तुं शीले येषांते तथाभूताः सन्त जन्मान्तरे सर्पाःभवन्ति ।।४०।। हे मामकाः ।। ४१ ।। अनुकालं त्रिकालम् । प्रणमे । कर्मकर्तरि लट् तङ् च ।। ४२ ।। अधो नरके । यथा ब्राह्मणगौः अजानन्तमपि नृगमपातयदिति योज्यम् ।। ४३ ।। द्वारकौकसः द्वारकावासिनो जनान् । पावयति उपदेशेनेति पावनः भगवान् ।। ४४ ।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे गूढार्थदीपिन्यां
चतुःषष्टितमोःध्यायः ।। ६४ ।।

## अथ पञ्चषष्टितमोऽध्यायः

### श्रीशुक उवाच

बलभद्रः कुरुश्रेष्ठ भगवान् रथमास्थितः । सुहृद्दिदृक्षुरुत्कण्ठः प्रययौ नन्दगोकुलम् ।।१।।
परिष्वक्तश्चिरोत्कण्ठैर्गोपैर्गोपीभिरेव च । रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दितः ।।२।।
चिरं नः पाहि दाशार्ह सानुजो जगदीश्वरः । इत्यारोप्याङ्कमालिङ्ग्य नेत्रैः सिषिचतुर्जलैः ।।३।।
गोपवृद्धांश्च विधिवद् यविष्ठैरभिवन्दितः । यथावयो यथासख्यं यथासम्बन्धमात्मनः ।।४।।
समुपेत्याथ गोपालान् हास्यहस्तग्रहादिभिः । विश्रान्तं सुखमासीनं पप्रच्छुः पर्युपागताः ।।५।।
पृष्टाश्चानामयं स्वेषु प्रेमगद्गदया गिरा । कृष्णे कमलपत्राक्षे संन्यस्ताखिलराधसः ।।६।।
कच्चिन्नो बान्धवा राम सर्वे कुशलमासते । कच्चित् स्मरथ नो राम यूयं दारसुतान्विताः ।।७।।

---

पञ्चषष्टितमे गोपीर्नन्दयन् व्रजमागतः ।
क्रीडार्थेऽनागतां रामः कालिन्दी माचकर्ष च ।।१।।

परिष्वक्तः आलिङ्गितः ।।१।।२।। नेत्रैः नेत्रजैः जलैः प्रेमाश्रुभिः ।। ३ ।। गोपेति त्रयम् । गोपवृद्धान् विधिवत् अभिवन्द्य स्वयंय विष्टैः कनिष्ठैः अभिवन्दितो बभूव । अथ पुनश्च तान् समुपेत्य उपविवेश ततश्च तेन रामेण पृष्टाः गोपा आसीनं रामं स्वेषु यादवेषु अनामयं कुशलं पप्रच्छुरित्यन्वयः । कथंभूताः कृष्णे निमित्ते समर्पितानि राधांसि कर्मफलानि सकलेन्द्रियव्यापाराः वा यैस्ते ।। ४ ।। ५ ।। ६ ।। कच्चिदिति प्रश्ने ।

दिष्टचा कंसो हतः पापो दिष्टया मुक्ताः सुहृज्जनाः ।
निहत्य निर्जित्य रिपून् दिष्टचा दुर्गं समाश्रिताः ॥८॥

गोप्यो हसन्त्यः पप्रच्छू रामसंदर्शनादृताः । कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥
कच्चित् स्मरति वा बन्धून् पितरं मातरं च सः ॥९॥

अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति । अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः ॥१०॥

मातरं पितरं भ्रातॄन् पतीन् पुत्रान् स्वसॄरपि । यदर्थे जहिम दाशार्ह दुस्त्यजान् स्वजनान् प्रभो ॥
ता नः सद्यः परित्यज्य गतः संछिन्नसौहृदः ॥११॥
कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम् ॥१२॥

कथं नु गृह्णन्त्यनवस्थितात्मनो वचः कृतघ्नस्य बुधाः पुरस्त्रियः ।
गृह्णन्ति वै चित्रकथस्य सुन्दरस्मितावलोकोच्छ्वसितस्मरातुराः ॥१३॥

किं नस्तत्कथया गोप्यः कथाः कथयतापराः । यात्यस्माभिर्विना कालो यदि तस्य तथैव नः॥१४॥

इति प्रहसितं शौरेर्जल्पितं चारु वीक्षितम् । गतिं प्रेमपरिष्वङ्गं स्मरन्त्यो रुरुदुः स्त्रियः ॥१५॥

संकर्षणस्ताः कृष्णस्य संदेशैर्हृदयङ्गमैः । सान्त्वयामास भगवान् नानानुनयकोविदः ॥१६॥

द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च । रामः क्षपासु भगवान् गोपीनां रतिमावहन् ॥१७॥

पूर्णचन्द्रकलामृष्टे कौमुदीगन्धवायुना । यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः ॥१८॥

वरुणप्रेषिता देवी वारुणी वृक्षकोटरात् । पतन्ती तद् वनं सर्वं स्वगन्धेनाध्यवासयत् ॥१९॥

तं गन्धं मधुधाराया वायुनोपहृतं बलः । आघ्रायोपगतस्तत्र ललनाभिः समं पपौ ॥२०॥

उपगीयमानचरितो वनिताभिर्हलायुधः । वनेषु व्यचरत् क्षीबो मदविह्वललोचनः ॥२१॥

स्रग्व्येककुण्डलो मत्तो वैजयन्त्या च मालया । बिभ्रत् स्मितमुखाम्भोजं स्वेदप्रालेयभूषितम् ॥२२॥

---

नोऽस्माकं बान्धवाः वसुदेवादयः ॥ ७ ॥ पापः पापी अर्श आद्यजन्तः ॥ ८ ॥ गोप्य इति सार्द्धम् । आदृताः प्राप्तादराः ॥९॥ अपि किम् । महाः पूज्या राजकन्या भुङ्क्ते इति महाभुजः । 'इगुपधलक्षणः कः ॥१०॥ मातरमिति सार्द्धम् । हे दाशार्ह । यदुवंशिन् । यदर्थे जहिम[1] त्यक्तवत्यो वयं स कृष्णः गत इत्यन्वयः ॥११॥ कथमिति अर्द्धम् । तादृशं वञ्चनापूर्णम् कथं न । श्रद्धीयेत विश्वसेत् ॥१२॥ अनवस्थितात्मनः अस्थिरचित्तस्य । अन्या ऊचुः गृह्णन्तीति । सुन्दरस्मितावलोकेन प्रबुद्धो यः स्मरः तेन आतुराः व्याकुलाः ॥१३॥ तेन विना अस्माकमपि कालः याति किन्तु तस्य सुखेन अस्माकं दुःखेन एतावानेव भेदः ॥१४॥१५॥ हृदयङ्गमैः विश्वासजनकैः । अनुनयेषु सान्त्वनादानेषु कुशलः ।१६। मधुं चैत्रं वैशाखं च । रतिमावहन् प्रीतिं जनयन् अवात्सीदित्यन्वयः । वासुदेवकलात्वात् चतुर्व्यूहेषु अन्यतमत्वाच्च भगवदादेशेनैव गोपीविहारे रामः प्रवृत्तोऽतो न दोषलेशोऽपीत्यवधेयम् ॥१७॥ कलाभृष्टे किरणोज्ज्वले । कौमुदी कुमुदसम्बन्धिनी नदी यमुना तद्गन्धयुक्तवायुनासेविते ॥१८॥ कोटराद् रन्ध्रात् निःसरन्ती वारुणी वरुणकन्या देवी मदिराधिष्ठात्री लक्ष्मीसहोदरी अतो दिव्यत्वात् तद्ग्रहणेऽपि न दोषः । अध्यवासयत् सुगन्धितं चकार ॥१९॥ मधु धारायाः मदिराया गन्धं उपहृतं घ्राणं प्रत्यानीतं यत्र पतति तत्र उपगतः प्राप्तः ॥२०॥ उपेति युग्मम् । क्षीवो मत्तः । वैजयन्ती पञ्चरत्नग्रथिता । स्वेद एव प्रालेयं हिमम्

---

1. ओहाक् त्यागे लिट् उत्तमपुरुषबहुवचनम् ।

स आजुहाव यमुनां जलक्रीडार्थमीश्वरः । निजं वाक्यमनादृत्य मत्त इत्यापगां बलः ।
अनागतां हलाग्रेण कुपितो विचकर्ष ह ॥२३॥
पापे त्वं मामवज्ञाय यन्नायासि मयाऽऽहुता । नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम् ॥२४॥
एवं निर्भर्त्सिता भीता यमुना यदुनन्दनम् । उवाच चकिता वाचं पतिता पादयोर्नृप ॥२५॥
राम राम महाबाहो न जाने तव विक्रमम् । यस्यैकांशेन विधृता जगती जगतः पते ॥२६॥
परं भावं भगवतो भगवन् मामजानतीम् । मोक्तुमर्हसि विश्वात्मन् प्रपन्नां भक्तवत्सल ॥२७॥
ततो व्यमुञ्चद् यमुनां याचितो भगवान् बलः । विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट् ॥२८॥
कामं विहृत्य सलिलादुत्तीर्णायाऽसिताम्बरे । भूषणानि महार्हाणि ददौ कान्तिः शुभां स्रजम् ॥२९॥
वसित्वा वाससी नीले मालामामुच्य काञ्चनीम् । रेजे स्वलंकृतो लिप्तो माहेन्द्र इव वारणः ॥३०॥
अद्यापि दृश्यते राजन् यमुनाऽऽकृष्टवर्त्मना । बलस्यानन्तवीर्यस्य वीर्यं सूचयतीव हि ॥३१॥
एवं सर्वा निशा याता एकेव रमतो व्रजे । रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम् ॥३२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे बलदेवविजये
यमुनाकर्षणं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

॥ २१ ॥ २२॥ स इति सार्द्धम् । मत्तोऽयमित्यनादृत्य आपगां नदीम् । ह कोपे ॥ २३ ॥ शतधा शतकुल्यावतीं करिष्ये । स्वेच्छाचारिणीम् ॥ २४ ॥ चकिता कम्पिता सती ॥ २५ ॥ एकांशेन शेषाख्येन । जगती पृथ्वी ॥ २६ ॥ परं भावं पारमैश्वर्यम् ॥ २७ ॥ ततः प्रार्थनातः । विजगाहे आलोडनपूर्वकं स्नानं कृतवान् । इभराट् गजेन्द्रः यथा हस्तिनीभिः सह ॥२८॥ उत्तीर्णाय निर्गताय बलाय । असिताम्बरे नीलाम्बरे । कान्तिः लक्ष्मीः ॥२९॥ वसित्वा परिधाय । आमुच्य कण्ठे निधाय । माहेन्द्रः ऐरावतः । लिप्तः चन्दनादिना ॥ ३० ॥ आकृष्टवर्त्मना हलाकर्षणमार्गेण उपलक्षिता स्यन्दमाना वा ॥ ३१ ॥ माधुर्यैः विलासैः । सर्वानिशा एकेव याता एक निशावद् बभूवुः प्रतिरजनि नवनवायमानानुभवात् ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## अथ षट्षष्टितमोऽध्यायः

### श्रीशुक उवाच

नन्दव्रजं गते रामे करूषाधिपतिर्नृप । वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥१॥

---

षट्षष्टितम ईशेन समित्रः पौण्ड्रको हतः ।
सुदक्षिणश्च कृत्याग्नेः दग्धा चक्रेण काशिका ॥१॥

करूषो देशः काशीसमीपवर्ती । तस्य अधिपतिः पौण्ड्रकः । प्राहिणोत् प्रेषयामास ॥ १ ॥ बालैः

त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः । इति प्रस्तोभितो बालैर्मेन आत्मानमच्युतम् ॥२॥
दूतं च प्राहिणोन्मन्दः कृष्णायाव्यक्तवर्त्मने । द्वारकायां यथा बालो नृपो बालकृतोऽबुधः ॥३॥
दूतस्तु द्वारकामेत्य सभायामास्थितं प्रभुम् । कृष्णं कमलपत्राक्षं राजसंदेशमब्रवीत् ॥४॥
वासुदेवोऽवतीर्णोऽहमेक एव न चापरः । भूतानामनुकम्पार्थं त्वं तु मिथ्याभिधां त्यज ॥५॥
यानि त्वमस्मच्चिह्नानि मौढ्याद् बिभर्षि सात्वत । त्यक्त्वैहि मां त्वं शरणं नो चेद् देहि ममाहवम्

श्रीशुक उवाच

कत्थनं तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः । उग्रसेनादयः सभ्या उच्चकैर्जहसुस्तदा ॥७॥
उवाच दूतं भगवान् परिहासकथामनु । उत्स्रक्ष्ये मूढ चिह्नानि यैस्त्वमेवं विकत्थसे ॥८॥
मुखं तदपिधायाज्ञ कङ्कगृध्रवटैर्वृतः । शयिष्यसे हतस्तत्र भविता शरणं शुनाम् ॥९॥
इति दूतस्तदाक्षेपं स्वामिने सर्वमाहरत् । कृष्णोऽपि रथमास्थाय काशीमुपजगाम ह ॥१०॥
पौण्ड्रकोऽपि तदुद्योगमुपलभ्य महारथः । अक्षौहिणीभ्यां संयुक्तो निश्चक्राम पुराद् द्रुतम् ॥११॥
तस्य काशिपतिर्मित्रं पार्ष्णिग्राहोऽन्वयान्नृप । अक्षौहिणीभिस्तिसृभिरपश्यत् पौण्ड्रकं हरिः॥१२॥
शङ्खार्यसिगदाशार्ङ्गश्रीवत्साद्युपलक्षितम् । बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥१३॥
कौशेयवाससी पीते वसानं गरुडध्वजम् । अमूल्यमौल्याभरणं स्फुरन्मकरकुण्डलम् ॥१४॥
दृष्ट्वा तमात्मनस्तुल्यवेषं कृत्रिममास्थितम् । यथा नटं रङ्गगतं विजहास भृशं हरिः ॥१५॥
शूलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः । असिभिः पट्टिशैर्बाणैः प्राहरन्नरयो हरिम् ॥१६॥

कृष्णस्तु तत्पौण्ड्रककाशिराजयोर्बलं गजस्यन्दनवाजिपत्तिमत् ।
गदासिचक्रेषुभिरार्दयद् भृशं यथा युगान्ते हुतभुक् पृथक् प्रजाः ॥१७॥

---

अज्ञैः प्रस्तोभितः प्रोत्साहितः ॥ २ ॥ यथा अबुधो बालः क्रीडायां बालैरेव नृपः कृतः कल्पितः आत्मान नृपं मन्यते तथा सोऽपि ॥ ३ ॥ ४ ॥ वस्तुतस्तु अहं न यतोऽपरः अश्रेष्ठः तुच्छ इत्यर्थः । किन्तु त्वमेव अवतीर्णः । मौढ्यादेव यानि एतानि अस्माभिः कल्पितानि कृत्रिमाणि सन्ति त्वं तु नित्यान्येव तानि बिभर्षि अतः त्यक्त्वा मयि प्रक्षिप्य शरणं मुक्तिप्रदत्वात् आश्रयः सन् मामेहि स्वीकुरु । न चेदेवं तर्हि आहवं युद्धेन मोक्षं देहीति वागर्थः । त्यज त्याजय ॥ ५ ॥ ६ ॥ कत्थनम् आत्मश्लाघनम् ॥ ७ ॥ उत्स्तक्ष्ये त्वयि प्रक्षेप्स्यामि । विकत्थसे श्लाघसे ॥ ८ ॥ अपिधाय आच्छाद्य । तत्र रणभूमौ कङ्कः चीलपक्षी वटः ( वटेर पक्षी ) ॥ ९ ॥ ह हर्षे ॥ १० ॥ उपलभ्य ज्ञात्वा ॥ ११ ॥ पार्ष्णिग्राहः पृष्ठरक्षकः सन् । तमनुजगाम ॥ १२ ॥ तस्येति त्रयम् अरि चक्रम् । वसानं धारयन्तम् । अमूल्यम् अल्पमूल्यम् कृत्रिमत्वात् । अत्र अल्पार्थे नञ् । 'तदन्यत्वं तदल्पता' इति भूषणोक्तेः मौलिः मुकुटम् ॥ १३ ॥ १४ ॥ १५ ॥ परिघो लोहदण्डः । ऋष्टिः उभयतोधारखड्गः । प्रासः प्रक्षेपास्त्रम् । तोमरः (गड़ांसा) पट्टिशः शस्त्रभेदः ॥१६॥ गजादियुक्तं तद् बलं सैन्यं गदादिभिः अमर्दयत् । यथा हुतभुक् प्रलयाग्निः पृथक् चतुर्विधा प्रजाः जरायुजादिभेदेन ॥ १७ ॥ अरिणा चक्रेण खण्डितैः रथादिभिः चितं

आयोधनं तद्रथवाजिकुञ्जरद्विपत्खरोष्ट्रै ररिणावखण्डितैः ।
बभौ चितं मोदवहं मनस्विनामाक्रीडनं भूतपतेरिवोल्बणम् ॥१८॥

अथाह पौण्ड्रकं शौरिर्भो भोः पौण्ड्रक यद् भवान् । दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते।१९।
त्याजयिष्येऽभिधानं मे यत् त्वयाज्ञ मृषा धृतम् । व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम् ।२०।
इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौण्ड्रकम् । शिरोऽवृश्चद् रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः ।२१।
तथा काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः । न्यपातयत् कशिपुर्यां पद्मकोशमिवानिलः ॥२२॥
एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः । द्वारकामाविशत् सिद्धैर्गीयमानकथामृतः ॥२३॥
स नित्यं भगवद्ध्यानप्रध्वस्ताखिलबन्धनः । बिभ्राणश्च हरे राजन् स्वरूपं तन्मयोऽभवत् ॥२४॥
शिरः पतितमालोक्य राजद्वारे सकुण्डलम् । किमिदं कस्य वा वक्त्रमिति संशिश्यिरे जनाः ॥२५॥
राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबान्धवाः । पौराश्च हा हता राजन् नाथ नाथेति प्रारुदन् ॥२६॥
सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः । निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः॥२७॥
इत्यात्मनाभिसंधाय सोपाध्यायो महेश्वरम् । सुदक्षिणोऽर्चयामास परमेण समाधिना ॥२८॥
प्रीतोऽविमुक्ते भगवांस्तस्मै वरमदाद् भवः । पितृहन्तृवधोपायं स वव्रे वरमीप्सितम् ॥२९॥
दक्षिणाग्निं परिचर ब्राह्मणैः सममृत्विजम् । अभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥३०॥
साधयिष्यति संकल्पमब्रह्मण्ये प्रयोजितः । इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन् व्रती ॥३१॥
ततोऽग्निरुत्थितः कुण्डान्मूर्तिमानतिभीषणः । तप्तताम्रशिखाश्मश्रुरङ्गारोद्गारिलोचनः ॥३२॥
दंष्ट्रोग्रभ्रुकुटीदण्डकठोरास्यः स्वजिह्वया । आलिहन् सृक्किणी नग्नो विधुन्वंस्त्रिशिखं ज्वलन् ३३
पद्भ्यां तालप्रमाणाभ्यां कम्पयन्नवनीतलम् । सोऽभ्यधावद् वृतो भूतैर्द्वारकां प्रदहन् दिशः ॥३४॥
तमाभिचारदहनमायान्तं द्वारकौकसः । विलोक्य तत्रसुः सर्वे वनदाहे मृगा यथा ॥३५॥

---

व्याप्तं तत् आयोधनं युद्धस्थलं बभौ इत्यन्वयः। भूतपते रुद्रस्य उल्वणं भयजनकम् आक्रीडनं श्मशानमिव। 'श्मशानेष्वाक्रीडा' इत्युक्तेः ॥१८॥ ते त्वद्वधार्थं उत्सृजामि प्रक्षिपामि ॥१९॥२०॥ शितैः तीक्ष्णैः। अवृश्चत् चिच्छेद। गिरेः शृङ्गमिति शेषः ॥२१॥ पत्रिभिः बाणैः उत्कृत्य छित्त्वा। 'कृती छेदने' धातुः ॥२२॥ परोत्कर्षासहनं मत्सरः तद्वान् मत्सरी ॥ २३ ॥ बन्धनम् अविद्यालक्षणम् ॥२४॥ संशिश्यिरे संशयं प्रापुः। 'संशयिरे' इत्यपपाठः ॥२५॥२६॥ संस्थाविधिं मृतकक्रियाम्। अपचितिम् आनृण्यम् ॥२७॥ आत्मना मनसा अभिसन्धाय सङ्कल्प्य। समाधिना चित्तैकाग्र्येण ॥ २८ ॥ अविमुक्ते क्षेत्रे प्रथमान्तपाठोऽपि साधीयान् ॥ २९ ॥ दक्षिणेति सार्द्धम्। ब्राह्मणैः समं सह दक्षिणाग्निं परिचर अराधय। कीदृशम्। ऋत्विजमिव कार्यकारिणम्। अभिचारो मारणप्रयोगः ॥ ३० ॥ इतीति अर्द्धम्। अभिचरन् द्रुह्यन् ॥ ३१ ॥ तत इति त्रयम्। ततः कुण्डात् उत्थितः मूर्तिमान् अग्निः दश दिशः प्रदहन् सन् द्वारकामभ्यधावदिति त्रयाणामेकान्वयः। कथंभूता। तप्तताम्रवत् शिखाःश्मश्रूणि यस्य अङ्गाराणामुद्गारिणो लोचने यस्य दंष्ट्राभिः उग्रैः भ्रुकुटीदण्डैश्च कठोरं क्रूरं मुखं यस्य। सृक्किणी ओष्ठप्रान्तौ आलिहन् संस्पृशन्। त्रिशिखं त्रिशूलं कम्पयन् सन् ॥ ३२ ॥ ३३ ॥ ३४ ॥ अभिचारदहनं

अक्षैः सभायां क्रीडन्तं भगवन्तं भयातुराः । त्राहि त्राहि त्रिलोकेश वह्नेः प्रदहतः पुरम् ॥३६॥
श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानां च साध्वसम् । शरण्यः सम्प्रहस्याह मा भैष्टेत्यवितास्म्यहम् ॥
सर्वस्यान्तर्बहिःसाक्षी कृत्यां माहेश्वरीं विभुः । विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ॥३८॥

तत् सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयानलप्रभम् ।
स्वतेजसा खं ककुभोऽथ रोदसी चक्रं मुकुन्दास्त्रमथाग्निमार्दयत् ॥३९॥
कृत्यानलः प्रतिहतः स रथाङ्गपाणेरस्त्रौजसा स नृप भग्नमुखो निवृत्तः ।
वाराणसीं परिसमेत्य सुदक्षिणं तं सर्त्विग्जनं समदहत् स्वकृतोऽभिचारः ॥४०॥
चक्रं च विष्णोस्तदनुप्रविष्टं वाराणसीं साट्टसभालयापणाम् ।
सगोपुराट्टालककोष्ठसंकुलां सकोशहस्त्यश्वरथान्नशालाम् ॥४१॥

दग्ध्वा वाराणसीं सर्वां विष्णोश्चक्रं सुदर्शनम् । भूयः पार्श्वमुपातिष्ठात् कृष्णस्याक्लिष्टकर्मणः ।
य एतच्छ्रावयेन्मर्त्य उत्तमश्लोकविक्रमम् । समाहितो वा शृणुयात् सर्वपापैः प्रमुच्यते ॥४३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे पौण्ड्रकादिवधो नाम षट्षष्टितमोऽध्यायः ॥ ५९ ॥

---

कृत्यानलम् । तत्रसुः भीता बभूवुः ॥ ३५ ॥ त्राहीत्याहुरिति शेषः ॥ ३६ ॥ वैक्लव्यं व्याकुलताम् । साध्वसं भयम् । अवितास्मि रक्षिष्यामि ॥३७॥ साक्षी ाता ॥३८॥ तत् मुकुन्दास्त्र सुदर्शनं चक्रं कर्तृ अग्निं कृत्यानलम् अमर्दयत्‍र्द्रइत्यन्वयः । कथंभूतम् । खादीन् प्रति जाज्वल्यमानं प्रकाशं कुर्वाणम् । रोदसी द्यावाभूमी ॥ ३९ ॥ प्रतिहतः अत एव निवृत्तः सन् सुदक्षिणं समदहत् । स्वेनैव कृतः अभिचारः मारणप्रयोगः स्वस्यैव नाशहेतुरभवत् । यद्वा । सुष्ठु ब्रह्मण्ये अकारपदवाच्ये हरौ कृतः ॥ ४० ॥ तदनु वाराणसीं च समदहदित्यनुषङ्गः । अट्टाः मञ्चाः । गोपुरं नगरद्वारम् अट्टालकाः गृहोपरिभागाः ( अटारी ) ॥ ४१ ॥ विक्रमः अस्त्यस्मिन्निति चरितमित्यर्थः मत्वर्थीयोऽच् प्रत्ययः ॥ ४२ ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां सहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## अथ सप्तषष्टितमोऽध्यायः

### राजोवाच

भूयोऽहं श्रोतुमिच्छामि रामस्याद्भुतकर्मणः । अनन्तस्याप्रमेयस्य यदन्यत् कृतवान् प्रभुः ॥१॥

---

सप्तषष्टितमे स्त्रीभिः क्रीडन् रैवतके गिरौ ।
दौर्जन्यात् द्विविद युद्धे मुष्टिभिर्न्यवधीत् बलः ॥ १ ॥

द्विविदो हि रात्रौ लङ्का प्रविश्य राक्षसीर्नग्नाः कृत्वा तासां योनीः यस्पर्श । ज्ञात्वैतद् रामेण

श्रीशुक उवाच

नरकस्य सखा कश्चिद् द्विविदो नाम वानरः । सुग्रीवसचिवः सोऽथ भ्राता मैन्दस्य वीर्यवान् ॥२॥

सख्युः सोऽपचितिं कुर्वन् वानरो राष्ट्रविप्लवम् । पुरग्रामाकरान् घोषानदहद् वह्निमुत्सृजन् ॥३॥

क्वचित् स शैलानुत्पाटय तैर्देशान् समचूर्णयत् । आनर्तान् सुतरामेव यत्रास्ते मित्रहा हरिः ॥४॥

क्वचित् समुद्रमध्यस्थो दोर्भ्यामुत्क्षिप्य तज्जलम् । देशान् नागायुतप्राणो वेलाकूलानमज्जयत् ५॥

आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् । अदूषयच्छकृन्मूत्रैरग्नीन् वैतानिकान् खलः ॥६॥

पुरुषान् योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः ।
निक्षिप्य चाप्यधाच्छैलैः पेशस्कारीव कीटकम् ॥७॥

एवं देशान् विप्रकुर्वन् दूषयंश्च कुलस्त्रियः । श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥८॥

तत्रापश्यद् यदुपतिं रामं पुष्करमालिनम् । सुदर्शनीयसर्वाङ्गं ललनायूथमध्यगम् ॥९॥

गायन्तं वारुणीं पीत्वा मदविह्वललोचनम् । विभ्राजमानं वपुषा प्रभिन्नमिव वारणम् ॥१०॥

दुष्टः शाखामृगः शाखामारूढः कम्पयन् द्रुमान् । चक्रे किलकिलाशब्दमात्मानं सम्प्रदर्शयन् ११॥

तस्य धाष्ट्र्यं कपेर्वीक्ष्य तरुण्यो जातिचापलाः । हास्यप्रियाः विजहसुर्बलदेवपरिग्रहाः ॥१२॥

ता हेलयामास कपिर्भ्रूक्षेपैः सम्मुखादिभिः । दर्शयन् स्वगुदं तासां रामस्य च निरीक्षतः ॥१३॥

तं ग्राव्णा प्राहरत् क्रुद्धो बलः प्रहरतां वरः । स वञ्चयित्वा ग्रावाणं मदिराकलशं कपिः ॥
गृहीत्वा हेलयामास धूर्तस्तं कोपयन् हसन् १४॥

निर्भिद्य कलशं दुष्टो वासांस्यास्फालयद् बलम् । कदर्थीकृत्य बलवान् विप्रचक्रे मदोद्धतः ॥१५॥

तं तस्याविनयं दृष्ट्वा देशांश्च तदुपद्रुतान् । क्रुद्धो मुसलमादत्त हलं चारिजिघांसया ॥१६॥

द्विविदोऽपि महावीर्यः शालमुद्यम्य पाणिना । अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत् ॥१७॥

तं तु संकर्षणो मूर्ध्नि पतन्तमचलो यथा । प्रतिजग्राह बलवान् सुनन्देनाहनच्च तम् ॥१८॥

---

स्वसैन्यान्निष्कासितः । उक्तं च द्वापरे श्रीबलदेवात् मृत्युं प्राप्य स्वर्लोकं प्राप्स्यतीत्येत्तदभिप्रेत्यैवायमुपक्रमः । मैन्दोऽपि वानरः नरकस्य सखा ॥ १ ॥ २ ॥ अपचितिम् आनृण्यम् । राष्ट्रस्य विप्लवो नाशो यथा भवति तथा अदहत् क्रियाविशेषणम् । उत्सृजन् प्रक्षिपन् ॥ ३ ॥ आनर्तान् द्वारकासमीपवर्तिनो देशान् ॥ ४ ॥ नागायुतस्येव प्राणो बलं यस्य सः । वेला समुद्रजलं तत्कूलमवान् । अत्र भवार्थेऽण् । संज्ञापूर्वकत्वात् वृद्ध्यभावः । आर्श आद्यन्तो वा ॥५॥ वैतानिकान् यज्ञसम्बन्धिनः ॥६॥ दृप्त गर्वितः । क्ष्माभृतोः पर्वतयोः द्रोणी अन्तरालभूमिः । अप्यधात् आच्छादयामास । पेशस्कारी भृङ्गीसंज्ञकः ॥ ७ ॥ विप्रकुर्वन् पीडयन् ॥ ८ ॥ तत्रेति युग्मम् । प्रभिन्नं मत्तं गजमिव ॥९॥१०॥११॥ जात्या स्वभावेनैव चापलाः । परिग्रहाः पत्न्यः । परिग्रहः परिजने 'पत्न्याम्—इति मेदिनी ॥ १२ ॥ ताः पत्नीः । हेलयामास अवज्ञातवान् । भ्रूचालनैः ॥ १३ ॥ तमिति सार्द्धम् । ग्राव्णा पाषाणेन प्राहरत् । कलशं गृहीत्वा ॥ १४ ॥ वासांसि स्त्रीणां वस्त्राणि आस्कालयत् आकृष्य पाटितवान् । कदर्थीकृत्य तिरस्कृत्य । विप्रचक्रे अपकृतवान् ॥ १५ ॥ अविनयम् औद्धत्यम् । आदत्त गृहीतवान् ॥ १६ ॥ अभ्येत्य सम्मुखआगत्य ॥ १७ ॥ सुनन्देन मुसलेन ॥ १८ ॥ मुसलेति युग्मम् । गैरिकया

मुसलाहतमस्तिष्को विरेजे रक्तधारया । गिरिर्यथा गैरिकया प्रहारं नानुचिन्तयन् ॥१९॥
पुनरन्यं समुत्क्षिप्य कृत्वा निष्पत्रमोजसा । तेनाहनत् सुसंक्रुद्धस्तं बलः शतधाच्छिनत् ॥२०॥
ततोऽन्येन रुषा जघ्ने तं चापि शतधाच्छिनत् ॥२१॥
एवं युध्यन् भगवता भग्ने भग्ने पुनः पुनः । आकृष्य सर्वतो वृक्षान् निर्वृक्षमकरोद् वनम् ॥२२॥
ततोऽमुञ्चच्छिलावर्षं बलस्योपर्यमर्षितः । तत् सर्वं चूर्णयामास लीलया मुसलायुधः ॥२३॥
स बाहू तालसंकाशौ मुष्टीकृत्य कपीश्वरः । आसाद्य रोहिणीपुत्रं ताभ्यां वक्षस्यरूरुजत् ॥२४॥
यादवेन्द्रोऽपि तं दोर्भ्यां त्यक्त्वा मुसललाङ्गले । जत्रावभ्यर्दयत् क्रुद्धः सोऽपतद् रुधिरं वमन् ॥२५॥
चकम्पे तेन पतता सटङ्कः सवनस्पतिः । पर्वतः कुरुशार्दूल वायुना नौरिवाम्भसि ॥२६॥
जयशब्दो नमःशब्दः साधु साध्विति चाम्बरे । सुरसिद्धमुनीन्द्राणामासीत् कुसुमवर्षिणाम् ॥२७॥
एवं निहत्य द्विविदं जगद्व्यतिकरावहम् । संस्तूयमानो भगवाञ्जनैः स्वपुरमाविशत् ॥२८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे द्विविदवधो नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

लोहितधातुना ॥ १९ ॥ समुत्क्षिप्य उत्पाटच ॥ २० ॥ तत इत्यर्द्धम् ॥ २१ ॥ २२ ॥ २३ ॥ संकाशौ तालप्रमाणौ । अरूरुजत् अताडयत् ॥ २४ ॥ दोर्भ्यां मुष्टीकृतबाहुभ्याम् । जत्रौ कण्ठबाहुमूले ॥ २५ ॥ सवनस्पतिः वृक्षसहितः । सटङ्कः निर्झरादिसहितः । 'टङ्कः सतोयविवरे इति धरणिः ॥ २६ ॥ अम्बरे आकाशे ॥ २७ ॥ जगतो व्यतिकरं नाशम् आवहति प्रापयतीति तथा स्वपुरं द्वारकाम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां सहितायां दशमस्कन्धोउत्तरार्द्धे गूढार्थदीपिन्यां सप्तषष्टिशत्तमोऽध्यायः ॥ ६७ ॥

## अथाष्टषष्टितमोऽध्यायः

### श्रीशुक उवाच

दुर्योधनसुतां राजन् लक्ष्मणां समितिंजयः । स्वयंवरस्थामहरत् साम्बो जाम्बवतीसुतः ॥१॥
कौरवाः कुपिताः ऊचुर्दुर्विनीतोऽयमर्भकः । कदर्थीकृत्य नः कन्यामकामामहरद् बलात् ॥२॥
बध्नीतेमं दुर्विनीतं किं करिष्यन्ति वृष्णयः । येऽस्मत्प्रसादोपचितां दत्तां नो भुञ्जते महीम् ॥३॥
निगृहीतं सुतं श्रुत्वा यद्येष्यन्तीह वृष्णयः । भग्नदर्पाः शमं यान्ति प्राणा इव सुसंयताः ॥४॥

---

अष्टषष्टितमे साम्बो लक्ष्मणामाहरन् युधि ।
बद्धस्तैरस्य मोक्षार्थं रामोऽकर्षद् गजाह्वयम् ॥ १ ॥

समिति संग्रामं सभां वा जयतीति यमितिञ्जयः ॥१॥ कदार्थीकृत्य तुच्छीकृत्य अकामां तद्वरेच्छारहिताम् ॥२॥ उपचितां समृद्धाम् । नोऽस्माभिः ॥ ३ ॥ वशे यान्ति यास्यन्ति । सुसंयताः दमिताः प्राणा इन्द्रियाणीव ।

इति कर्णः शलो भूरिर्यज्ञकेतुः सुयोधनः। साम्बमारेभिरे बद्धुं कुरुवृद्धानुमोदिताः ॥५॥

दृष्ट्वानुधावतः साम्बो धार्तराष्ट्रान् महारथः। प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥६॥

तं ते जिघृक्षवः क्रुद्धास्तिष्ठ तिष्ठेति भाषिणः। आसाद्य धन्विनो बाणैः कर्णाग्रण्यः समाकिरन् ॥

सोऽपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनन्दनः। नामृष्यत्तदचिन्त्यार्भः सिंहः क्षुद्रमृगैरिव ॥८॥

विस्फूर्ज्य रुचिरं चापं सर्वान् विव्याध सायकैः।
कर्णादीन् षड् रथान् वीरांस्तावद्भिर्युगपत् पृथक् ॥९॥

चतुर्भिश्चतुरो वाहानेकैकेन च सारथीन्। रथिनश्च महेष्वासांस्तस्य तत् तेऽभ्यपूजयन् ॥१०॥

तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान्। एकस्तु सारथिं जघ्ने चिच्छेदान्यः शरासनम् ॥११॥

तं बद्ध्वा विरथीकृत्य कृच्छ्रेण कुरवो युधि। कुमारं स्वस्य कन्यां च स्वपुरं जयिनोऽविशन् ॥१२॥

तच्छ्रुत्वा नारदोक्तेन राजन् संजातमन्यवः। कुरून् प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः ॥१३॥

सान्त्वयित्वा तु तान् रामः संनद्धान् वृष्णिपुङ्गवान्। नैच्छत् कुरूणां वृष्णीनां कलिं कलिमलापहः

जगाम हास्तिनपुरं रथेनादित्यवर्चसा। ब्राह्मणैः कुलवृद्धैश्च वृतश्चन्द्र इव ग्रहैः ॥१५॥

गत्वा गजाह्वयं रामो बाह्योपवनमास्थितः। उद्धवं प्रेषयामास धृतराष्ट्रं बुभुत्सया ॥१६॥

सोऽभिवन्द्याम्बिकापुत्रं भीष्मं द्रोणं च बाह्लिकम्। दुर्योधनं च विधिवद् राममागतमब्रवीत् ॥१७॥

तेऽतिप्रीतास्तमाकर्ण्य प्राप्तं रामं सुहृत्तमम्। तमर्चयित्वाभिययुः सर्वे मङ्गलपाणयः ॥१८॥

तं संगम्य यथान्यायं गामर्घ्यं च न्यवेदयन्। तेषां ये तत्प्रभावज्ञाः प्रणेमुः शिरसा बलम् ॥१९॥

बन्धून् कुशलिनः श्रुत्वा पृष्ट्वा शिवमनामयम्। परस्परमथो रामो बभाषेऽविक्लवं वचः ॥२०॥

उग्रसेनः क्षितीशेशो यद् व आज्ञापयत् प्रभुः। तदव्यग्रधियः श्रुत्वा कुरुध्वं माविलम्बितम् ॥२१॥

यद् यूयं बहवस्त्वेकं जित्वाऽधर्मेण धार्मिकम्। अबध्नीताथ तन्मृष्ये बन्धूनामैक्यकाम्यया ॥२२॥

वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमं वचः। कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः ॥२३॥

---

॥४॥ कुरुवृद्धो भीष्मः तेन सह षट् ॥५॥ एक एव एकलः। स्वार्थे लः। यद्वा एकान् प्रधानानपि लुनाति छिनत्तीति। लुनातेर्डः। शुरतम इत्यर्थः ॥६॥ तं समाकिरन् आच्छादितवन्त कर्णः अग्रणी येषां ते ॥७॥ नामृष्यत् न असहत। अचिन्त्यस्य भगवतः अर्भकः कर्मधारयो वा। अपविद्धः ताडितः ॥८॥ यावन्तस्ते तावद्भिः। तत्रापि प्रत्येकं, तत्रापि युगपदिति विस्फूर्ज्य टङ्कारायित्वा ॥ ९ ॥ अपूजयन् प्रशशंसः ॥ १० ॥ ११ ॥ १२ ॥ तत् साम्बवन्धनम्। प्रत्युद्युमं युद्धोद्यमम् ॥ १३ ॥ कलिं विरोद्यमम्। कलेर्दुर्योधनस्य मलमभिमानाम् अपहन्तीति ॥ १४ ॥ वर्चः तेजः ॥ १५ ॥ बुभुत्सया तदभिप्रायजिज्ञासया ॥ १६ ॥ स उद्धवः। विधिवत् अभिवन्ध ॥ १७ ॥ ते भीष्मादयः। मङ्गलम् उपायनम्। दुर्योधन प्रति गदाविद्याप्रदत्वेन सुहृत्तमं पूज्यम् ॥१८॥ तं रामम् मिलित्वा। गां धेनुम्। तेऽपि भीष्मादयः ॥ १९ ॥ स्थितेषु तेषु। अनामयम् आरोग्यम्। अविक्लम् उदारम् ॥ २० ॥ वः युष्मान् ॥ २१ ॥ मृष्ये सोढवानस्मि ॥ २२ ॥ शौर्यम् उत्साहः। उन्नद्धम् उच्छ्रङ्खलम् ॥ २३ ॥

अहो महच्चित्रमिदं कालगत्या दुरत्यया । आरुरुक्षत्युपानद्‌ वै शिरो मुकुटसेवितम् ॥२४॥

एते यौनेन सम्बद्धाः सहशय्यासनाशनाः । वृष्णयस्तुल्यतां नीता अस्मद्दत्तनृपासनाः ॥२५॥

चामरव्यजने शङ्खमातपत्रं च पाण्डुरम् । किरीटमासनं शय्यां भुञ्जन्त्यस्मदुपेक्षया ॥२६॥

अलं यदूनां नरदेवलाञ्छनैर्दातुः प्रतीपैः फणिनामिवामृतम् ।
येऽस्मत्प्रसादोपचिता हि यादवा आज्ञापयन्त्यद्य गतत्रपा बत ॥२७॥

कथमिन्द्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः । अदत्तमवरुन्धीत सिंहग्रस्तमिवोरणः ॥२८॥

श्रीशुक उवाच

जन्मबन्धुश्रियोन्नद्धमदास्ते भरतर्षभ । आश्राव्य रामं दुर्वाच्यमसभ्याः पुरमाविशन् ॥२९॥

दृष्ट्वा कुरूणां दौःशील्यं श्रुत्वावाच्यानि चाच्युतः । अवोचत् कोपसंरब्धो दुष्प्रेक्ष्यः प्रहसन् मुहुः ॥

नूनं नानामदोन्नद्धाः शान्तिं नेच्छन्त्यसाधवः । तेषां हि प्रशमो दण्डः पशूनां लगुडो यथा ॥३१॥

अहो यदून् सुसंरब्धान् कृष्णं च कुपितं शनैः । सान्त्वयित्वाहमेतेषां शममिच्छन्निहागतः ॥३२॥

त इमे मन्दमतयः कलहाभिरताः खलाः । तं मामवज्ञाय मुहुर्दुर्भाषान् मानिनोऽब्रुवन् ॥३३॥

नोग्रसेनः किल विभुर्भोजवृष्ण्यन्धकेश्वरः । शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ॥३४॥

सुधर्माऽऽक्रम्यते येन पारिजातोऽमराङ्‌घ्रिपः । आनीय भुज्यते सोऽसौ न किलाध्यासनार्हणः ॥३५॥

यस्य पादयुगं साक्षात् श्रीरुपास्तेऽखिलेश्वरी । स नार्हति किल श्रीशो नरदेवपरिच्छदान् ॥३६॥

यस्याङ्‌घ्रिपङ्कजरजोऽखिललोकपालैर्मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् । ।
ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः श्रीश्चोद्वहेम चिरमस्य नृपासनं क्व ॥३७॥

भुञ्जते कुरुभिर्दत्तं भूखण्डं वृष्णयः किल । उपानहः किल वयं स्वयं तु कुरवः शिरः ॥३८॥

अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् । असम्बद्धा गिरो रूक्षाः कः सहेतानुशासिता ॥३९॥

अद्य निष्कौरवीं पृथ्वीं करिष्यामीत्यमर्षितः । गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ॥४०॥

लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम् । विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः ॥४१॥

---

चित्रमाश्चर्यम् । दुरन्तया इति पाठः सम्यक् इति वंशीधरी ॥ २४ ॥ एते यदवः । यौनेन कुन्तीविवाहेन । सहैव शय्यादीनि येषां ते ॥२५॥ उपेक्षया अनुग्रहेणेत्यर्थः ॥२६॥ यदूनां लाञ्छनैः राजचिह्नैः अलं न किञ्चित् प्रयोजनम् । अतः परं तानि अपहर्तव्यानीत्यर्थः । दातुरेव प्रतीपैः प्रतिकूलैः सर्पाणाम् अमृतं दुग्धमिव ये उपचिताः समृद्धाः अस्मान् आज्ञापयन्ति ॥२७॥ कथम् अदत्तम् अवरुन्धीत गृहीतुं शक्नुयात् । उरणो मेषः ॥२८॥ उन्नद्धः उत्कटः ॥ २९ ॥ अच्युतशक्तिः रामः । संरब्धः कोपाविष्टः ॥ ३० ॥ प्रशमो गर्वहरः । लगुडो दण्डः ॥३१॥ सुरब्धान् क्रोधाविष्टान् ॥ ३२ ॥ दुर्भाषान् कटुवाक्यानि खल् प्रत्ययान्तः ॥३३॥३४॥ येन । कृष्णेन न अध्यासनार्हणः न सिंहासनयोग्य ॥३५॥ परिच्छदान् राजचिह्नानि छत्रचामरादीनि नार्हति ॥३६॥ मौल्युत्तमैः मुकुटयुक्तशिरोभिः । उपासिततीर्थाः योगिनः तेषां तीर्थं पवित्रत्वापादकम् । उपासिततीर्थं गङ्गा वा । कलाः अंशांशा । सर्वे वयं यत् पाद रजः शिरसा धारयामः ॥३७॥३८॥ मदिरामत्तानामिव अहङ्कारिणां रूक्षा कर्कशाः ।सक्; मादृशः कः सहेत न कोऽपीत्यर्थः ॥ ३९ ॥ अत्यमर्षितः अतीवक्रुद्धः सन् ॥ ४० ॥ प्रहरिष्यन् पातयितुं

जलयानमिवाघूर्णं गङ्गायां नगरं पतत् । आकृष्यमाणमालोक्य कौरवा जातसम्भ्रमाः ॥४२॥
तमेव शरणं जग्मुः सकुटुम्बा जिजीविषवः । सलक्ष्मणं पुरस्कृत्य साम्बं प्राञ्जलयः प्रभुम् ॥४३॥
राम रामखिलाधार प्रभावं न विदाम ते । मूढानां नः कुबुद्धीनां क्षन्तुमर्हस्यतिक्रमम् ॥४४॥
स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः । लोकान् क्रीडनकानीश क्रीडतस्ते वदन्ति हि ॥४५॥

त्वमेव मूर्ध्नीदमनन्त लीलया भूमण्डलं बिभर्षि सहस्रमूर्धन् ।
अन्ते च यः स्वात्मनि रुद्धविश्वः शेषेऽद्वितीयः परिशिष्यमाणः ॥४६॥

कोपस्तेऽखिलशिक्षार्थं न द्वेषान्न च मत्सरात् । बिभ्रतो भगवन् सत्त्वं स्थितिपालनतत्परः ॥४७॥
नमस्ते सर्वभूतात्मन् सर्वशक्तिधराव्यय । विश्वकर्मन् नमस्तेऽस्तु त्वां वयं शरणं गताः ॥४८॥

श्रीशुक उवाच

एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः । प्रसादितः सुप्रसन्नो मा भैष्टेत्यभयं ददौ ॥४९॥
दुर्योधनः पारिबर्हं कुञ्जरान् षष्टिहायनान् । ददौ च द्वादशशतान्ययुतानि तुरङ्गमान् ।५०।
रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् । दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ।५१।
प्रतिगृह्य तु तत् सर्वं भगवान् सात्वतर्षभः । ससुतः सस्नुषः प्रागात् सुहृद्भिरभिनन्दितः ॥५२॥

ततः प्रविष्टः स्वपुरं हलायुधः समेत्य बन्धूननुरक्तचेतसः ।
शशंस सर्वं यदुपुङ्गवानां मध्ये सभायां कुरुषु स्वचेष्टितम् ॥५३॥

अद्यापि च पुरं ह्येतत् सूचयद् रामविक्रमम् । समुन्नतं दक्षिणतो गङ्गायामनुदृश्यते ॥५४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे हास्तिनपुरकर्षणरूपसंकर्षणविजयो नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

तच्च साम्वव्यतिरेकेणेति ज्ञातव्यम् ॥ ४१ ॥ ज्ञातसंभ्रमा उत्पन्नभयाः ॥ ४२ ॥ जिजीविषेति इदं गाथाख्यवृत्तमक्षराधिक्यात् ॥ ४३ ॥ अतिक्रमम् अपराधम् ॥ ४४ ॥ क्रीडनकान् क्रीडोपकरणीभूतान् ॥ ४५ ॥ इदं विश्वं लीलया अनायासेन त्वमेव बिभर्षि । अन्ते च प्रलये स्वात्मनि रुद्धं लीनं विश्वं येन सः । शेषे शयनं करोषि । शेषपर्यङ्के वा यः सोऽपि त्वमेवेत्यभेदेन निर्देशः ॥ ४६ ॥ अखिलानाम् उत्पथगामिनाम् । स्थितेः शिष्टमर्यादायाः ॥ ४७ ॥ ४८ ॥ प्रपन्नैः शरणागतैः । वेपमानं कम्पमानम् 'अयनं नगरं येषां तैः ॥ ४९ ॥ पारिवर्हं कन्यादेयद्रव्यम् । द्वादशशतानि कुञ्जरान् । द्वादश अयुतानि तुरङ्गमानिति योज्यम् ॥ ५० ॥ रौक्माणां हैमानाम् । वर्चः कान्तिः ॥ ५१ ॥ ५२ ॥ समेत्य मिलित्वा । स्वचेष्टितं नगराकर्षणरूपम् ॥ ५३ ॥ इदानीं तु तन्नगरं गङ्गायां पतितमिति ज्ञातव्यम् । 'गजाह्वये हृते नद्या इति द्वादशोक्तेः । कथनसमये तु दृश्यते एवेति श्रीवल्लभाचार्य्याः ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां सहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्याम् अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## अथैकोनसप्ततितमोऽध्यायः

श्रीशुक उवाच

नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम् । कृष्णेनैकेन बह्वीनां तद् दिदृक्षुः स्म नारदः ॥१॥

चित्रं बतैतदेकेन वपुषा युगपत् पृथक् । गृहेषु द्वयष्टसाहस्रं स्त्रिय एक उदावहत् ॥२॥

इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत् । पुष्पितोपवनारामद्विजालिकुलनादिताम् ॥३॥

उत्फुल्लेन्दीवराम्भोजकह्लारकुमुदोत्पलैः । छुरितेषु सरस्सूच्चैः कूजितां हंससारसैः ॥४॥

प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः । महामरकतप्रख्यैः स्वर्णरत्नपरिच्छदैः ॥५॥

विभक्तरथ्यापथचत्वरापणैः शालासभाभी रुचिरां सुरालयैः ।
संसिक्तमार्गाङ्गणवीथिदेहलीं पतत्पताकाध्वजवारितातपाम् ॥६॥

तस्यामन्तःपुरं श्रीमदर्चितं सर्वधिष्ण्यपैः । हरेः स्वकौशलं यत्र त्वष्ट्रा कार्त्स्न्येन दर्शितम् ॥७॥

तत्र षोडशभिः सद्मसहस्रैः समलंकृतम् । विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥ ८ ॥

विष्टब्धं विद्रुमस्तम्भैर्वैदूर्यफलकोत्तमैः । इन्द्रनीलमयैः कुडचैर्जगत्या चाहतत्विषा ॥ ९ ॥

वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामविलम्बिभिः । दान्तैरासनपर्यङ्कैर्मण्युत्तमपरिष्कृतैः ॥१०॥

---

नवषष्टितमे द्रष्टुं गार्हस्थ्यं श्रीहरेर्मुनिः ।
गतः प्रत्यालयं सोऽभूत् विस्मितोऽनुस्मरन् ययौ ॥ १ ॥

तत् कृष्णरहस्यं दिदृक्षुः आसीदिति शेषः ॥ १ ॥ चित्रं वतेति अत्याश्चर्ये । उदावहत् आ सम्यक् उदवहत् इति योज्यम् । 'छन्दसि' व्यवहिताश्च' इति नियमात् ॥ २ ॥ इत्युत्सुकः सन् तं द्रष्टुं द्वारवतीमागमत् । कीदृशीम् । पुष्पितेषु उपवनादिषु पक्षिभ्रमरकुलैः नादिताम् । आरामः क्रीडावनम् ॥ ३ ॥ इन्दीवरं नीलम् । अम्भोजं विविधवर्णम् । कल्हारं सौगन्धिकम् । कुमुदं श्वेतम् । उत्पलं रक्तं चेति कमलजातयः । एतैः छुरितेषु व्याप्तेषु सरःसु हंसैः उच्चैः कूजिताम् ॥ ४ ॥ स्फटिकमयैः रजतमयैः महामरकतैश्च प्रख्यान्ति प्रकाशन्ते तथा तैः । प्रासादलक्षैः[1] जुष्टाम् । परिच्छदाः तन्मयाः विविधसामग्र्यः येषु तैः ॥५॥ रथ्याः राजमार्गाः पथाः अवान्तराः । शाला अश्वशाला । सभा विश्रामस्थानम् तदादिभिः रुचिराम् । पतत्पताकाभिः ध्वजैश्च निवारितः आतपो यस्यां ताम् ॥६॥ तस्यामिति युग्मम् । तस्यां द्वारकायाम् । सर्वं धिष्ण्यपैः लोकपालैः अर्चितं प्रशंसितम् । त्वष्ट्रा विश्वकर्मणा ॥ ७ ॥ हरेः अन्तःपुरं तत्रापि एकतमं श्रीरुक्मिणीभवनं विवेश ॥८॥ कथंभूतं भवनम् । तत् वर्णयति चतुर्भिः । विष्टब्धमिति । वैदूर्यमयानि फलकोत्तमानि स्तम्भाच्छादनानि येषु तैः विद्रुमस्तम्भैः विष्टब्धं धृतम् । पुनश्च । इन्द्रनीलमयैः कुडचैः भित्तिभिः जगत्या भूमिकया च अलङ्कृतम् ॥ ९ ॥ त्वष्ट्रा विश्वकर्मणा विनिर्मितैः वितानैः मण्युत्तमैः परिष्कृतैः अलङ्कृतैः दान्तैः हस्तिदन्तनिर्मितैः आसनैः पर्यङ्कैश्च अलङ्कृतम् । मुक्तानां दामानि माला विलम्बन्ते येषु तैः वितानैः । सूर्यादिभिरपि न हृता त्विट्-

---

१. 'स्तम्भानामाश्रये तेषां छादने फलकं मतम्' इति स्वामी ।

दासीभिर्निष्ककण्ठीभिः सुवासोभिरलंकृतम् । पुम्भिः सकञ्चुकोष्णीषसुवस्त्रमणिकुण्डलैः ॥११॥

रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वान्तं विचित्रवलभीषु शिखण्डिनोऽङ्ग ।
नृत्यन्ति यत्र विहितागुरुधूपमक्षैर्निर्यान्तमेक्ष्य घनबुद्धय उन्नदन्तः ॥ १२ ॥

तस्मिन् समानगुणरूपवयस्सुवेषदासीसहस्रयुतयाऽनुसवं गृहिण्या ।
विप्रो ददर्श चमरव्यजनेन रुक्मदण्डेन सात्वतपतिं परिवीजयन्त्या ॥ १३ ॥

तं संनिरीक्ष्य भगवान् सहसोत्थितः श्रीपर्यङ्कतः सकलधर्मभृतां वरिष्ठः ।
आनम्य पादयुगलं शिरसा किरीटजुष्टेन साञ्जलिरवीविशदासने स्वे ॥ १४ ॥

तस्यावनिज्य चरणौ तदपःस्वमूर्ध्ना बिभ्रऽजगद्गुरुतरोऽपि सतां पतिर्हि ।
ब्रह्मण्यदेव इति यद्गुणनाम युक्तं तस्यैव यच्चरणशौचमशेषतीर्थम् ॥ १५ ॥

सम्पूज्य देवऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन ।
वाण्याभिभाष्य मितयामृतमिष्टया तं प्राह प्रभो भगवते करवाम हे किम् ॥१६॥

नारद उवाच

नैवाद्भुतं त्वयि विभोऽखिललोकनाथे मैत्री जनेषु सकलेषु दमः खलानाम् ।
निःश्रेयसाय हि जगत्स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥ १७ ॥

---

कान्तिर्यस्यास्तया जगत्या । पुनश्च । निष्ककण्ठीभिः दासीभिः पुम्भिश्च अलंकृतम् । कथंभूतैः पुम्भिः । सुष्ठूनि कञ्चुकादीनि येषां तैः ॥ १० ॥ ११ ॥ पुनः कथंभूतम् । रत्नप्रदीपानां निकराः समूहाः तेषां द्युतिभिः निरस्तं ध्वान्तं तमो यस्मित् तत् इति पृथक् भवनविशेषणम् । अङ्ग हे राजन् । यत्र भवने वलभीषु चन्द्रशालोपरि ( छज्जा ) इति स्थिताः शिखण्डिनः गवाक्षमार्गैः निर्यान्तं अगुरुधूपम् एक्ष्य घनोऽयमिति बुद्धिर्येषां ते तथाभूताः उन्नदन्तश्च सन्तः नृत्यन्तीत्यन्वयः ॥१२॥ तस्मिन् अन्तर्गृहे विप्रो नारदः गृहिण्या रुक्मिण्या सहितं सात्वपतिं यदुपतिं श्रीकृष्णं ददर्शेत्यन्वयः । कथंभूतया । चमरमेव व्यजनं तेन परिवीजयन्त्या वायुं प्रसारयन्त्या । पुनश्च । आत्मसमानगुणरूपादियुक्तदासीसहस्रेण युतया । अनुसवं सर्वकालम् ॥१३॥ भगवान् तं नारदं सन्निरीक्ष्य श्रीपर्यङ्कतः सहसा उत्थितः पादयुगलम् शिरसा आनम्य साञ्जलिः सन् स्वे आसने अवीविशत् उपवेशयामासेत्यन्वयः ॥ १४ ॥ यस्य गुणानुसारि अन्वर्थमिति नाम तत् तस्यैव युक्तं नान्यस्य । यस्य पादशौचं गङ्गाजलम् अशेषाणां लोकानां तीर्थं पावनकरं स गुरुतरः पूज्यतमोऽपि तस्य नारदस्य चरणौ प्रक्षाल्य तदपः स्वमूर्ध्ना बिभ्रत् सन् प्राहेत्युत्तरेणान्वयः ॥ १५ ॥ नारायणः ऋषिः उदितेन शास्त्रोक्तेन विधिना देवर्षि सम्पूज्य वाण्या अभिभाष्य सम्बोध्य च प्राह हे प्रभो भगवते भवते किं करवामेति सम्बन्धः । अमृतवत् मिष्टया मधुरया मितया स्वल्पया । नरस्य अर्जुनस्य सखा । टच् प्रत्ययः ॥ १६ ॥ हे उरुगाय । सकलेषु साधुषु मैत्री खलानां दमश्च एतत् द्वयमपि त्वयि अद्भुतम् असम्भावितं नास्ति । यतः जगतः स्थितिरक्षणाभ्यां सह निःश्रेयसाय तवायं स्वेच्छावतार इति वयं सुष्ठु विद्मः । उरु बहुधा शास्त्रेषु गीयते इति उरुगाय । स्थितिः धारणम् ॥ १७ ॥

दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ १८ ॥
ततोऽन्यदाविशद् गेहं कृष्णपत्न्याः स नारदः । योगेश्वरेश्वरस्याङ्ग योगमायाविवित्सया ॥१९॥
दीव्यन्तमक्षैस्तत्रापि प्रियया चोद्धवेन च ।
पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः । पृष्टश्चाविदुषेवासौ कदाऽऽयातो भवानिति ॥२०॥
क्रियते किं नु पूर्णानामपूर्णैरस्मदादिभिः । अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु ॥२१॥
स तु विस्मित उत्थाय तूष्णीमन्यदगाद् गृहम् । तत्राप्याचष्ट गोविन्दं लालयन्तं सुताञ्छिशून्॥२२॥
ततोऽन्यस्मिन् गृहेऽपश्यन्मज्जनाय कृतोद्यमम् । जुह्वन्तं च वितानाग्नीन् यजन्तं पञ्चभिर्मखैः २३
भोजयन्तं द्विजान् क्वापि भुञ्जानमवशेषितम् । क्वापि संध्यामुपासीनं जपन्तं ब्रह्म वाग्यतम्॥२४॥
एकत्र चासिचर्मभ्यां चरन्तमसिवर्त्मसु । अश्वैर्गजै रथैः क्वापि विचरन्तं गदाग्रजम् ॥२५॥
क्वचिच्छयानं पर्यङ्के स्तूयमानं च वन्दिभिः । मन्त्रयन्तं च कस्मिंश्चिन्मन्त्रिभिश्चोद्धवादिभिः ॥
जलक्रीडारतं क्वापि वारमुख्यावृतम् । कुत्रचिद् द्विजमुख्येभ्यो ददतं गाः स्वलंकृताः ॥२७॥
इतिहासपुराणानि शृण्वन्तं मङ्गलानि च । हसन्तं हास्यकथया कदाचित् प्रियया गृहे ॥२८॥
क्वापि धर्मं सेवमानमर्थकामौ च कुत्रचित् । ध्यायन्तमेकमासीनं पुरुषं प्रकृतेः परम् ॥२९॥
शुश्रूषन्तं गुरून् क्वापि कामैर्भोगैः सपर्यया । कुर्वन्तं विग्रहं कैश्चित् संधिं चान्यत्र केशवम् ॥३०॥
कुत्रापि सह रामेण चिन्तयन्तं सतां शिवम् । पुत्राणां दुहितॄणां च काले विध्युपयापनम् ॥३१॥
दारैर्वरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः ॥ ३२ ॥

---

हे भगवन् । तव अङ्घ्रियुगलं दृष्टं न च तृप्तोऽस्मि अतः तदेव ध्यायन् विचरामि स्मृतिश्च यथावत् स्यात् तथा मामनुगृहाणेत्यन्वयः । कथंभूतम् । जनताया अपवर्गो मोक्षो यस्मात् । जनानां तापस्य वर्गो वर्जनं यस्मात् । पुनश्च ब्रह्मादिभिः हृदि विचिन्त्यम् । पुनश्च । संसारकूपपतितानामुद्धरणाय अवलम्बम् आश्रयोभूतं सहायकमित्यर्थः ॥ १८ ॥ अङ्ग हे राजन् । कृष्णपत्न्याः क्रमप्राप्तसत्यभामायाः गृहम् । विवित्सया ज्ञातुमिच्छया । विन्दतेः रूपम् ॥१९॥ पाशैः दीव्यन्तं ददर्शेति शेषः । अविदुषेव अजानतेव पृष्टः कदेति ॥२०॥ पूर्णानां विरक्तानां युष्माकम् । अपूर्णैः गृहस्थैः किं नु क्रियते अथापि । किञ्चित् कार्यं ब्रूहि । शोभनं सफलम् जन्म च ॥२१॥ अचष्ट अपश्यत् । एवमग्रेऽपि सर्वत्र योजनीयम् ॥२२॥ मज्जनाय स्नानाय वितानाग्नीन् यज्ञाग्नीन् आहवनीयादीन् । पञ्चभिः मखैः यज्ञैः पाठहोमातिथ्यार्चनतर्पणैः जुह्वन्तम् होमं कुर्वन्तम् । नुमार्षः ॥२३॥ ब्रह्म गायत्रीम् । वाग्यतं मौनं यथा स्यात्तथा ॥२४॥ एकत्र एकस्मिन् गृहे । वर्त्मसु खड्गभ्रमणःमार्गेषु चरन्तं शिष्यान् शिक्षयन्तम् गदाग्रजं श्रीकृष्णम् ॥२५॥ मन्त्रयन्तं षड्गुणचिन्तनं मन्त्रः । गुणाश्च सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्या ज्ञेयाः । इति नीतिशास्त्रम् ॥ २६ ॥ वारमुख्या स्वाबला एव न तु वेश्याः वरमेव वारमतिसुन्दरं मुखं यासां ताः । यद्वा । वारे द्वारे मुखं भगवत्प्रतीक्षार्थं यासां ताः ताश्च ताः अबलाश्चेति ताभिरावृतम् । मुखमेव मुख्यं स्वार्थे यत् । 'वारो द्वारे हरे'—इति वारतान्तविः ॥ २७ ॥ अप्यर्थे चकारः । मङ्गलानि 'इतिहासपुराणानां श्रवणं मङ्गलं परम्' इति नारदीये ॥ २८ ॥ २९ ॥ कामैः अभीष्टपदार्थैः ॥ ३० ॥ कुत्रापीत्यर्द्धम् । सतां भक्तानां शिवं योगक्षेमम् । यद्वा । पाण्डवादीनां शिवं कथं स्यादिति ॥३१॥ पुत्राणां तत्सदृशैः दारैः दुहितॄणां च तत्सदृशैः वरैः विधिना उपयापनं प्रापणं विवाहमित्यर्थः । उपयाप्यते प्राप्यते वरकन्याभ्यां श्वशुरगृहं यत्र तदुपयापनमिति

प्रस्थापनोपानयनैरपत्यानां महोत्सवान् । वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे ॥३३॥
यजन्तं सकलान् देवान् क्वापि क्रतुभिरूर्जितैः । पूर्तयन्तं क्वचिद् धर्मं कूपाराममठादिभिः ॥३४॥
चरन्तं मृगयां क्वापि हयमारुह्य सैन्धवम् । घ्नन्तं ततः पशून् मेध्यान् परीतं यदुपुङ्गवैः ॥३५॥
अव्यक्तलिङ्गं प्रकृतिष्वन्तःपुरगृहादिषु । क्वचिच्चरन्तं योगेशं तत्तद्भावबुभुत्सया ॥३६॥
अथोवाच हृषीकेशं नारदः प्रहसन्निव । योगमायोदयं वीक्ष्य मानुषीमीयुषो गतिम् ॥३७॥
विदाम योगमायास्ते दुर्दर्शा अपि मायिनाम् । योगेश्वरात्मन् निर्भाता भवत्पादनिषेवया ॥३८॥
अनुजानीहि मां देव लोकांस्ते यशसाऽऽप्लुतान् । पर्यटामि तवोद्गायन् लीलां भुवनपावनीम् ॥३९॥

श्रीभगवानुवाच

ब्रह्मन् धर्मस्य वक्ताहं कर्ता तदनुमोदिता । तच्छिक्षयँल्लोकमिममास्थितः पुत्र मा खिदः ॥४०॥

श्रीशुक उवाच

इत्याचरन्तं सद्धर्मान् पावनान् गृहमेधिनाम् । तमेव सर्वगेहेषु सन्तमेकं ददर्श ह ॥४१॥
कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम् । मुहुर्दृष्ट्वा ऋषिरभूद् विस्मितो जातकौतुकः ॥४२॥
इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना । सम्यक् सभाजितः प्रीतस्तमेवानुस्मरन् ययौ ॥४३॥
एवं मनुष्यपदवीमनुवर्तमानो नारायणोऽखिलभवाय गृहीतशक्तिः ।
रेमेऽङ्ग षोडशसहस्रवराङ्गनानां सव्रीडसौहृदनिरीक्षणसहासजुष्टः ॥४४॥

---

निरुक्तेः । विभूतिभिः बहुसंभारैः कल्पयन्तं सम्पादयन्तम् ॥ ३२ ॥ उपानयनं तत्तद्गृहात्पुनरानयनम् । येषामपत्यानां महोत्सवान् वीक्ष्य लोका जना विस्मयं चक्रुः । णिलोपः छान्दसः विसिस्मियिरे इति भाव्यम् ॥३३॥ ऊर्जितैः बहुदक्षिणैः । पूर्तयन्तं पूरयन्तम् अपश्यत् । 'पूर्त कर्मणि पूरणे' इति निरुक्तिकोशात् । आरामः क्रीडावनम् । देवान् इन्द्रादीन् ॥ ३४ ॥ सैन्धवं सिन्धुदेशोद्भवम् । मृगयामुद्दिश्य चरन्तं विचरन्तम् । मेध्यार्हान् यज्ञार्हान् घ्नन्तमिवेति लुप्तोपमा । एतच्च लीलानुकरणमेव न वस्तुतस्तस्याविधित्वादिति सिद्धान्तः ॥ ३५ ॥ अव्यक्तं वेषान्तरेण छन्नं लिङ्गं स्वरूपं यस्य तं तथाभूतं कृष्णं प्रकृतिषु अमात्यादिषु चरन्तमपश्यदिति सर्वत्र योज्यम् । प्रकृत्यादेः तत्तद्भावस्य अभिप्रायस्य जिज्ञासया ॥ ३६ ॥ गतिं चेष्टाम् ईयुषः प्राप्तवतः भगवतः योगमायाया वैभवं वीक्ष्य प्रहसन्निव कृष्णमुवाचेत्यन्वयः ॥ ३७ ॥ विदामेति साक्षादनुभवितुं प्रार्थयामेति प्रार्थनायां लोट् । आत्मन्निति लुप्तसप्तम्यन्तम् । आत्मनि त्वय्येव निर्भाता स्फुरिता इति सेवयैव विद्मः न तु त्वत्परमार्थमिति भावः ॥ ३८ ॥ अनुजानीहि गन्तुमाज्ञां देहि । आप्लुतान् व्याप्तान् ॥ ३९ ॥ तत् तस्मात् लोकं शिक्षयन् इमं धर्मं त्वत्सम्माननादिरूपमास्थितः न तत्त्वतः अतो मा खिदः । किमभिप्रायकमेतच्चेष्टितमिति संशयं मा कुर्वित्यर्थः ॥ ४० ॥ एवं भगवताऽनुगृहीतो नारदस्तदा सर्वगेहेषु एकरूपमेव सन्तं श्रीकृष्णं ददर्शेत्यन्वयः । ह हर्षेति शंकानिवृत्यर्थम् ॥ ४१ ॥ महोदयं महावैभवं मुहुर्मुहुः दृष्ट्वा जातकौतुकः उत्कण्ठायुक्तः सन् विस्मितोऽभूत् इति ॥ ४२ ॥ इत्येवमर्थादिषु श्रद्धितः श्रद्धायुक्तः आत्मा मनो यस्य तेन कृष्णेन सभाजितः सत्कृतो नारदः तमेव स्मरन् ययौ ॥ ४३ ॥ अङ्ग हे राजन् ! अखिलभवाय जगत्कल्याणाय गृहीताः शक्तयो नानामूर्तयो अवताराः येन स भगवान् ताभिः सह रेमे । कथंभूतः । तासां व्रीडासहितं यद् सौहृदं तेन निरीक्षणं हासश्च

यानीह विश्वविलयोद्भववृत्तिहेतुः कर्माण्यनन्यविषयाणि हरिश्चकार ।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा भक्तिर्भवेद् भगवति ह्यपवर्गमार्गे ॥४५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे कृष्णगार्हस्थदर्शनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

ताभ्यां जुष्टः सेवितः आकृष्ट इत्यर्थः ॥ ४४ ॥ अङ्गः हे राजन् ! हरिः अनन्यविषयाणि असाधारणानि यानि कर्माणि चकार तानि यस्तु गायति शृणोति वा तस्य भगवति भक्तिर्भवेदित्यन्वयः । कथंभूते । अपवर्ग मार्गे मोक्षप्रदे । कथंभूतो हरिः । विश्वस्य प्रलयादौ हेतुः कारणभूतः । उद्भवः सृष्टिः वृत्तिः पालनम् ॥४५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यामेकोन-सप्ततितमोऽध्यायः ॥ ६९ ॥

## अथ सप्ततितमोऽध्यायः

### श्रीशुक उवाच

अथोषस्युपवृत्तायां कुक्कुटान् कूजतोऽशपन् । गृहीतकण्ठ्यः पतिभिर्माधव्यो विरहातुराः ॥१॥
वयांस्यरूरुवन् कृष्णं बोधयन्तीव वन्दिनः । गायत्स्वलिष्वनिद्राणि मन्दारवनवायुभिः ॥२॥
मुहूर्तं तं तु वैदर्भी नामृष्यदतिशोभनम् । परिरम्भणविश्लेषात् प्रियबाह्वन्तरं गता ॥३॥
ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः । दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥४॥
एकं स्वयंज्योतिरनन्यमव्ययं स्वसंस्थया नित्यनिरस्तकल्मषम् ।
ब्रह्माख्यमस्योद्भवनाशहेतुभिः स्वशक्तिभिर्लक्षितभावनिर्वृतिम् ॥५॥

---

कृष्णस्य सप्ततितमे कृत्यमाह्निकमादितः ।
देवर्षिदूतसन्देशे किं कार्यं चेति मन्त्र्यते ॥ १ ॥

उषसि प्रभातवेलायाम् उपवृत्तायामासन्नायां सत्याम् माधव्यः कृष्णपत्न्यः रुक्मिण्याद्याः कूजतः प्लुतध्वनिं कुर्वतः कुक्कुटान् अशपन् शापं ददुः । रे रे कुक्कुटाः प्रियविच्छेदप्रातर्बोधका यूयं शीघ्रमेव किं न म्रियध्वम् ॥ १ ॥ वन्दिन इव कृष्णं बोधयन्ति वयांसि पक्षिणः अरूरुवन् अतिशयेन अकूजन् । कथंभूतानि । मन्दारवन वायुभिः अलिषु भ्रमरेषु गायत्सु सत्सु अनिद्राणि निद्रारहितानि ॥२॥ प्रियस्य बाह्वन्तरं वक्षःस्थलं गता वैदर्भी परिरम्भणमालिङ्गनं तस्य वियोगात् हेतोः[1] तं पर्यालोच्य नामृष्यत न सेहे ॥३॥ उपस्पृश्यआचम्य । तमसः प्रकृतेः परम् आत्मानं स्वरूपभूतं ब्रह्म दध्यौ । प्रसन्नकरणः स्वस्थचित्तः सन् । एतच्च लोकशिक्षार्थं लोका अपि एवं कुर्युरिति ॥४॥ आत्मानं विशिनष्टि । एकमखण्डं ब्रह्माख्यमात्मानं दध्यौ इति पूर्वेणान्वयः । तस्य पञ्च विशेषणानि क्रमेण योज्यानि । तथाहि । अनन्यं निरुपाधिम् । अत एव अव्ययम् । ज्योतिष्ट्वे हेतुः । स्वरूपस्थित्या नित्यनिवृत्तं कल्मषमविद्या यस्मात् । पुनश्च । अस्य विश्वस्य उद्भवादिषु हेतुभूताभिः स्वशक्तिभिः

---

१. ल्यब्लोपे पञ्चमीयम् ।

अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापं परिधाय वाससी।
चकार संध्योपगमादि सत्तमो हुतानलो ब्रह्म जजाप वाग्यतः ॥६॥

उपस्थायार्कमुद्यन्तं तर्पयित्वाऽऽत्मनः कलाः। देवानृषीन् पितॄन् वृद्धान् विप्रानभ्यर्च्य चात्मवान् ७
धेनूनाँ रुक्मशृङ्गीणां साध्वीनां मौक्तिकस्रजाम्। पयस्विनीनां गृष्टीनां सवत्सानां सुवाससाम् ८
ददौ रूप्यखुराग्राणां क्षौमाजिनतिलैः सह। अलंकृतेभ्यो विप्रेभ्यो बद्वं बद्वं दिने दिने ॥९॥
गोविप्रदेवतावृद्धगुरून् भूतानि सर्वशः। नमस्कृत्यात्मसम्भूतीर्मङ्गलानि समस्पृशत् ॥१०॥
आत्मानं भूषयामास नरलोकविभूषणम्। वासोभिर्भूषणैः स्वीयैर्दिव्यस्रगनुलेपनैः ॥११॥
अवेक्ष्याज्यं तथाऽऽदर्शं गोवृषद्विजदेवताः। कामांश्च सर्ववर्णानां पौरान्तःपुरचारिणाम्।
प्रदाप्य प्रकृतीः कामैः प्रतोष्य प्रत्यनन्दत ॥१२॥
संविभज्याग्रतो विप्रान् स्रक्ताम्बूलानुलेपनैः। सुहृदः प्रकृतीर्दारानुपायुङ्क्त ततः स्वयम् ॥१३॥
तावत् सूत उपानीय स्यन्दनं परमाद्भुतम्। सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥१४॥
गृहीत्वा पाणिना पाणी सारथेस्तमथारुहत्। सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥१५॥
ईक्षितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः। कृच्छ्राद् विसृष्टो निरगाज्जातहासो हरन् मनः ।१६।
सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः। प्राविशद् यन्निविष्टानां न सन्त्यङ्ग षडूर्मयः ।१७।

रज आद्याभिः लक्षितो भावः सत्ता निर्वृत्तिः आनन्दरूपता च यस्य तम् ॥ ५ ॥ अथ ध्यानानन्तरम्। सत्तमः धर्मनिष्ठो भगवान् अमले अम्भसि जले आप्लुतः स्नातः सन् वाससी च परिधाय सन्ध्योपासनादि क्रियाकलापं चकारेत्यन्वयः। पुनश्च। वाग्यतः[1] मौनी सन् ब्रह्म गायत्रीं जजाप। उपगम उपासनम् ॥ ६ ॥ उपेति त्रयम् क्रियाकलापमाह—आत्मवान् भगवान् अर्कमुपस्थाप्य आत्मनः कलाः अंशान् देवादीन् तर्पयित्वा विप्रांश्च अभ्यर्च्य तेभ्यः धेनूनां बद्वं बद्वं[2] क्षौमवस्त्रादिभिः सह प्रतिदिनं ददौ इति त्रयाणामेकान्वयः। रुक्मं सुवर्णम्। गृष्टीनां सकृत्प्रसूतानाम्। रुक्मं सुवर्णं शृङ्गयोः यासाम्। रूप्यं रजतं खुराग्रे यासाम्। आत्मा वेदः स विद्यते पाल्यतया यस्य स आत्मवान् शब्दार्थः ॥ ७ ॥ ८ ॥ ९ ॥ आत्मसंभूतीः स्वविभूतीः गोविप्रादीन्। भूतानि स्थावराणि अश्वत्थादीनि। मङ्गलानि[3] कपिलादीनि दत्तवान् ॥१०॥ स्वीयैः आत्मीयैः पीताम्बरकौस्तुभादिभिः ॥ ११ ॥ अवेक्ष्येति सार्द्धम्। आज्यं घृतं तदादीन् अवेक्ष्य वर्णानां कामान् अभीष्टपदार्थान् प्रदाप्य तैरेव प्रकृतीः अमात्या-दींश्च प्रतोष्य स्वयमपि प्रत्यनन्दत् सन्तुष्टोऽभूत्। अवेक्ष्याज्यमित्यनेन प्रतिदिनं छायापात्रदानमुक्तम् ॥ १२ ॥ स्रगादिभिः विप्रादीन् संविभज्य तेभ्यः पूर्वं दत्त्वा पुनः स्वयम् उपायुङ्क्त भुक्तवान् गृहस्थस्य शेषभोजित्वविधा-नात् ॥ १३ ॥ यावत् भुक्तवान् तावत् सूतः सारथिः स्यन्दनमुपानीय अग्रे समुपस्थितः ॥ १४ ॥ भगवान् स्व-दक्षिणपाणिना सारथेः पाणी अञ्जलीभूतौ गृहीत्वा रथमारुहत्। यथा उदयाचलं सूर्यः आरोहति तथा ॥१५॥ ईक्षितः कटाक्षविषयीकृतस्तदा क्षणं स्थितः मध्याह्ने भोजनार्थमेष्यामीति किमिति खिद्यसे इति प्रत्येकं सूचयन् जातहासश्च सन् ताभिः कृच्छ्रात् क्लेशात् विसृष्टः गन्तुमनुज्ञातः तासां मनो हरन् गृहाद् निरगात् ॥ १६ ॥ अङ्ग हे राजन्। एवं सर्वगृहेभ्यः पृथक् पृथक् निर्गत्य पुनः अभिन्नमूर्तिः एक एव सन् सभां प्राविशत्। यत्

१. 'जपभोजनहोमेषु मूत्रोच्चारे च वाग्यतः' इति स्मृतेः।
२. 'बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश' १३०८४ इति।
३. अनलो गौ र्हिरण्यं च दूर्वागोरचनामृतम्। अक्षतं दधि चेत्यष्टौ मङ्गलानि प्रचक्षते।

तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन् ।
वृतो नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः ॥१८॥

तत्रोपमन्त्रिणो राजन् नानाहास्यरसैर्विभुम् । उपस्थतुर्नटाचार्या नर्तक्यस्ताण्डवैः पृथक् ॥१९॥

मृदङ्गवीणामुरजवेणुतालदरस्वनैः । ननृतुर्जगुस्तुष्टुवुश्च सूतमागधवन्दिनः ॥२०॥

तत्राहुर्ब्राह्मणाः केचिदासीना ब्रह्म वादिनः । पूर्वेषां पुण्ययशसां राज्ञां चाकथयन् कथाः ॥२१॥

तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः । विज्ञापितो भगवते प्रतीहारैः प्रवेशितः ॥२२॥

स नमस्कृत्य कृष्णाय परेशाय कृताञ्जलिः । राज्ञामावेदयद् दुःखं जरासंधनिरोधजम् ॥२३॥

ये च दिग्विजये तस्य संनतिं न ययुर्नृपाः । प्रसह्य रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे ॥२४॥

कृष्ण कृष्णाप्रमेयात्मन् प्रपन्नभयभञ्जन । वयं त्वां शरणं यामो भवभीताः पृथग्धियः ॥२५॥

लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।
यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥२६॥

लोके भवाञ्जगदिनः कलयावतीर्णः सद्रक्षणाय खलनिग्रहणाय चान्यः ।
कश्चित् त्वदीयमतियाति निदेशमीश किं वा जनः स्वकृतमृच्छति तन्न विद्मः ॥२७॥

स्वप्नायितं नृपसुखं परतन्त्रमीश शश्वद्भयेन मृतकेन धुरं वहामः ।
हित्वा तदात्मनि सुखं त्वदनीहलभ्यं क्लिश्याम हेऽतिकृपणास्तव माययेह ॥२८॥

---

यस्यां प्रविष्टानां षड्[1]ऊर्मयः न सन्ति ॥ १७ ॥ तत्र सभायां सिंहासने उपविष्टः भगवान्–यदुभिर्वृतः बभौ । ककुभः अवभासयन् दिशः प्रकाशयन् सन् । यथा दिवि आकाशे तारागणैः वृतः उडुराजः चन्द्रः भाति तथा ।१८। तत्रेति युग्मम् । उपमन्त्रिणः परिहासका विदूषका इत्यर्थः हास्यरसैः विभुं श्रीकृष्णमुपतस्थुः सेवितवन्तः । नटाचार्याः मृदङ्गादिस्वनैः सह ताण्डवनृत्यैः उपतस्थुः नर्तक्यश्च पृथक् पृथक् स्वसमुदायैः सह ननृतुः जगुश्च । सूतादयश्च तुष्टुवुरिति योज्यम् । दरः शंखः ॥ १९ ॥ २० ॥ तत्र सभायामासीनाः केचित् ब्राह्मणा वेदज्ञा ब्रह्म वेदमाहुः मन्त्रान् व्याख्यातवन्तः । अन्ये वादिनश्च वदनचतुराः कथाः अकथयन् पुण्ययशसां नलादीनाम् । पुण्यश्लोको नलो राजा' इत्युक्तेः ।२१। अपूर्वदर्शनः अदृष्टपूर्वः पुरुषः । प्रतीहारैः द्वारपालैः भगवते विज्ञापितः । तदाज्ञया अन्तःप्रवेशितश्च ॥ २२ ॥ कृष्णाय कृष्णं प्रसादयितुम् ॥ २३ ॥ ये नृपाः सन्ततिं नम्रतापूर्वकं साहाय्यं न ददुः तेन जरासन्धेन गिरिव्रजे दुर्गे निरुद्धाः आसन् । द्वे अयुते विंशतिसहस्राणि अष्टौ शतानीति अनुक्तमपि ज्ञेयमत्र अग्रे वक्ष्यमाणत्वात् ॥ २४ ॥ २५ ॥ अयं लोको जनः विकर्मणि निषिद्धे काम्ये कर्मणि निरतः त्वया उदिते कथिते पाञ्चरात्रे स्वे कुशले कर्मणि भवदर्चनलक्षणे यावत्प्रमत्तः तावदेव यो बलवान् कालः अस्य जीविताशां सद्यः छिनत्ति तस्मै अनिमिषाय कालरूपाय ते तुभ्यं नमः ॥ २६ ॥ जगतः इनः स्वामी भवान् सतां रक्षणाय खलानां निग्रहणाय च लोके अवतीर्णः । एवं सति कश्चिदन्यः द्वेष्टा जरासन्धादिः त्वदीयं निदेशमाज्ञामतियाति उल्लङ्घयति स च सुखी किं वा त्वदीयो जनः सेवकः स्वकृतं कर्मफलम् ऋच्छति भुङ्क्ते दुःखं प्राप्नोतीति न विद्मः निश्चेतुं न शक्नुमः इत्यर्थः 'इनः सूर्ये प्रभौ' इत्यमरः । कलया बलदेवेन सह ॥ २७ ॥ नृपसुखं परतन्त्रमस्ति तदर्थं धुरं सन्धिविग्रहाद्यायासरूपं भारमेव मृतकतुल्येन देहेन वहामः अत एव अतिकृपणाः

---

१. क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः ।

तन्नो भवान् प्रणतशोकहराङ्घ्रियुग्मो बद्धान् वियुङ्क्ष्व मगधाह्वयकर्मपाशात् ।

यो भूभुजोऽयुतमतङ्गजवीर्यमेको बिभ्रद् रुरोध भवने मृगराडिवावीः ॥२९॥

यो वै त्वया द्विनवकृत्व उदात्तचक्र भग्नो मृधे खलु भवन्तमनन्तवीर्यम् ।

जित्वा नृलोकनिरतं सकृदूढदर्पो युष्मत्प्रजा रुजति नोऽजित तद् विधेहि ॥३०॥

दूत उवाच

इति मागधसंरुद्धा भवद्दर्शनकाङ्क्षिणः । प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥३१॥

श्रीशुक उवाच

राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः । बिभ्रत् पिङ्गजटाभारं प्रादुरासीद् यथा रविः ॥३२॥

तं दृष्ट्वा भगवान् कृष्णः सर्वलोकेश्वरेश्वरः । ववन्द उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा ॥३३॥

सभाजयित्वा विधिवत् कृतासनपरिग्रहम् । बभाषे सूनृतैर्वाक्यैः श्रद्धया तर्पयन् मुनिम् ॥३४॥

अपि स्विदद्य लोकानां त्रयाणामकुतोभयम् । ननु भूयान् भगवतो लोकान् पर्यटतो गुणः ॥३५॥

न हि तेऽविदितं किंचिल्लोकेष्वीश्वरकर्तृषु । अथ पृच्छाम हे युष्मान् पाण्डवानां चिकीर्षितम् ॥

श्रीनारद उवाच

दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः ।

भूतेषु भूमंश्चरतः स्वशक्तिभिर्वह्नेरिवच्छन्नरुचो न मेऽद्भुतम् ॥३७॥

---

सन्तः क्लिश्याम दुःखमनुभवामः । किं कृत्वा । त्वत्तः त्वदनुग्रहात् अनीहैः निष्कामैः आत्मनि लभ्यं युत् ब्रह्म सुखं तत् हित्वा । शश्वत् निरन्तरं भयं यस्मिन तेन मृतकेन । हे पृथक् पदम् ॥ २८ ॥ यतः प्रणतानां शोकहरं अङ्घ्रियुग्मं यस्य स भवान् ततस्त्वं मगधाह्वयात् जरासन्धसंज्ञकात् कर्मपाशात् बद्धान् नोऽस्मान् वियुङ्क्ष्व विमोचय । य एक एव भूभुजोऽस्मान् भवने कारागारे रुरोध आवृतवान् यथा मृगराट् सिंहः अवीः मेषी रुणद्धि तद्वत् । कथंभूतः । अयुतगजानां वार्यं बलं पराक्रमं च बिभ्रत् । यद्वा । अभवान् इत्यत्र अकार प्रश्लेषेण न विद्यते भवःश्रेयो येषु तान् परमार्तानित्यर्थः ॥ २९ ॥ हे उदात्तचक्र उद्यतसुदर्शन । वै प्रसिद्धो यो जरासन्धः मृधे युद्धे द्विनवकृत्वः अष्टादशवारान् त्वया भग्नः पराजितः । पश्चात् नृलोकनिरतं त्वां सकृत् एकवारं जित्वा[1] ऊढदर्पः प्राप्तगर्वः सन् युष्मत्प्रजा नः रुजति पीडयति अत्र यत् युक्तं तत् विधेहि । विमोक्षणं वा ॥३०॥शं कल्याणं सुखं वा ॥३१॥ पीतं जटाभारं जटामण्डलम् ॥३२॥ शीर्ष्णा शिरसा तं ववन्दे इति योज्यम् । सभ्याः सभासदः ॥३३॥ कृतः आसनस्य परिग्रहः स्वीकारो येन तं नारदं सभाजयित्वा पूजयित्वा सूनृतैः मधुरैः ॥ ३४ ॥ स्वित् वितर्के । अपि किं लोकानां कुतश्चित् भयं तु नास्ति । ननु अहो पर्यटतस्तव अयं भूयान् महान् गुणः सर्वलोकवृत्तान्तज्ञानमिति ॥ ३५ ॥ लोकेषु किञ्चिदपि तव अविदितं नास्ति अथ अतः युष्मान् प्रति पृच्छाम । प्रार्थनायां लोट् । हे इति पृथक् पदम् ॥ ३६ ॥ हे विभो ! विश्वसृजश्च ब्रह्मणोऽपि मायिनः मोहकस्य ते माया मायिककार्याणि ब्रह्माण्डगतानि बहुशो दृष्टा । कथंभूता । दुरत्यया दुःखेनापि अत्येतुमुल्लङ्घयितुमशक्या ज्ञातुं वा । कथंभूतस्य ते । भूतेषु अन्तर्यामितया चरतः वर्तमानस्य । तर्हि मां कथं न पश्यन्ति । भस्मना छन्नवह्नेरिवः स्वशक्तिभिः सत्त्वादिगुणैः छन्ना रुक् प्रकाशो यस्य तस्य नाहं प्रकाशः सर्वस्य योगमायासमावृतः इत्युक्तेः : अतः सर्वज्ञस्यापि साधारणजनवत् ते प्रपञ्चकरणं मेऽद्भुतमाश्चर्यकरं नास्ति ॥ ३७ ॥

---

१. जरासन्धस्य ब्राह्मणसैन्यं दृष्ट्वा भगवति पलायिते सति ।

तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः।
यद् विद्यमानात्मतयावभासते तस्मै नमस्ते स्वविलक्षणात्मने ॥३८॥
जीवस्य यः संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः।
लीलावतारैः स्वयशःप्रदीपकं प्राज्वालयत् त्वा तमहं प्रपद्ये ॥३९॥
अथाप्याश्रावये ब्रह्मन् नरलोकविडम्बनम्। राज्ञः पैतृष्वसेयस्य भक्तस्य च चिकीर्षितम् ॥४०॥
अक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः। पारमेष्ठ्यकामो नृपतिस्तद् भवाननुमोदताम् ॥४१॥
तस्मिन् देव क्रतुवरे भवन्तं वै सुरादयः। दिदृक्षवः समेष्यन्ति राजानश्च यशस्विनः ॥४२॥
श्रवणात् कीर्तनाद् ध्यानात् पूयन्तेऽन्तेऽवसायिनः। तव ब्रह्ममयस्येश किमुतेक्षाभिमर्शिनः ॥४३॥
यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते भुवनमङ्गल दिग्वितानम्।
मन्दाकिनीति दिवि भोगवतीति चाधो गङ्गेति चेह चरणाम्बु पुनाति विश्वम् ॥४४॥

श्रीशुक उवाच

तत्र तेष्वात्मपक्षेष्वगृह्णत्सु विजिगीषया। वाचःपेशैः स्मयन् भृत्यमुद्धवं प्राह केशवः ॥४५॥

श्रीभगवानुवाच

त्वं हि नः परमं चक्षुः सुहृन्मन्त्रार्थतत्त्ववित्। तथात्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत् ॥४६॥
इत्युपामन्त्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत्। निदेशं शिरसाऽऽधाय उद्धवः प्रत्यभाषत ॥४७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे भगवद्यानविचारे सप्ततितमोऽध्यायः ॥ ७० ॥

---

तव ईहितं साधु सम्यक्तया को वेदितुमर्हति न कोऽपि। कथंभूतस्य तव। इदं जगत् नियच्छतः संहरतः पालयतश्चेति योज्यम्। किञ्च असदपि यत् जगत् तव मायया विद्यमानात्मतया सत्यस्वरूपतया प्रतीयते तस्मै स्वेन रूपेण विलक्षणात्मने अचिन्त्यरूपाय ते नमः ॥ ३८ ॥ किं च संसरतो नानायोनिषु भ्रमतः जीवस्य हेतोः य लीलावतारैः मुक्तिप्रदं स्वयशोरूपं दीपं प्राज्वालयत् तं त्वामहं शरणं प्रपद्ये इत्यन्वयः। कथंभूतस्य जीवस्य। अनर्थप्रापकात् शरीरद्वयात् विमोक्षणं न जानतः। अनर्थो दुःखपरम्परा जन्ममरणादिरूपा ॥ ३९ ॥ हे ब्रह्मन्[1] यद्यपि तवाविदितं किञ्चिन्नास्ति अथापि त्वाम् पैतृष्वसेयस्य युधिष्ठिरस्य चिकीर्षितं आश्रावये श्रावयिष्यामि। भविष्यदर्थे लट्। कथंभूतम्। नरलोकं विडम्बयति अनुकरोतीति तथाभूतम्। पितृष्वसा कुन्ती वसुदेवभगिनी ॥ ४० ॥ पारमेष्ठ्यकामः साम्राज्यकामः ॥ ४१ ॥ क्रतुवरे राजसूये समेष्यन्ति आगमिष्यन्ति। भवन्तं दिदृक्षवः ॥ ४२ ॥ श्रवणादिभिः अन्तेवसायिनः चाण्डालादयोऽपि पूयन्ते तदा ईक्षाभिमर्शिनः दर्शनस्पर्शनकारिणः पूयन्ते इति किमुत वक्तव्यम्। ईक्षा च अभिमर्शश्च नो विद्येते येषां ते। द्वन्द्वगर्भितबहुव्रीहिः ॥ ४३ ॥ दिवि स्वर्गे। रसायां पाताले। हे भुवनमङ्गल। वितानं वितानवत् सर्वदिक्षु व्याप्तम् अलङ्काररूपम् ॥ ४४ ॥ तत्र सभायाम्। तेषु यादवेषु जरासन्धविजिगीषया नारदोक्तं हस्तिनापुरगमनम् अगृह्णत्सु सत्सु कृष्णः उद्धवं प्राहेत्यन्वयः। वाचः पेशैः सुन्दरवचोभिः। 'पेशः सौन्दर्यचूर्णयोः' इति धरणिः ॥४५॥ चक्षुः चक्षुर्वदर्थप्रकाशकः। मन्त्राणां सन्धिविग्रहादीनामर्थमुपयोगं तत्त्वं परिणामं च वेत्तीति तथा। अत्रपक्षद्वये यथा अनुष्ठेयं तथा ब्रूहि। त्वदुक्तौ श्रद्दध्मः श्रद्धां करवामः तदेव करिष्याम च। उभयत्र भविष्यदर्थे लट्लोटौ ॥ ४६ ॥ उपामन्त्रितः पृष्टः। मुग्धवत् अज्ञातवत्। निदेशम् आज्ञाम् ॥ ४७ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायांदशमस्कन्धे उत्तरार्द्धे गूढार्थदीपिन्यां सप्ततितमोऽध्यायः ॥७०॥

## अथैकसप्ततितमोऽध्यायः

श्रीशुक उवाच

इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् । सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः ॥ १ ॥

उद्धव उवाच

यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया । कार्यं पैतृष्वसेयस्य रक्षा च शरणैषिणाम् ॥ २ ॥

यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो । अतो जरासुतजय उभयार्थो मतो मम ॥ ३ ॥

अस्माकं च महानर्थो ह्येतेनैव भविष्यति । यशश्च तव गोविन्द राज्ञो बद्धान् विमुञ्चतः ॥ ४ ॥

स वै दुर्विषहो राजा नागायुतसमो बले । बलिनामपि चान्येषां भीम समबलं विना ॥ ५ ॥

द्वैरथे स तु जेतव्यो मा शताक्षौहिणीयुतः ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित् ॥ ६ ॥

ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः । हनिष्यति न संदेहो द्वैरथे तव संनिधौ ॥ ७ ॥

---

एकसप्ततितमे प्रियायुतः सेनया च सममुद्धवोक्तितः ।
धर्मराजसुयशोऽभिवृद्धये शक्रपत्तनमगात्स माधवः ॥ १ ॥

देवर्षेर्मतं राजसूयगमनम् । सभ्यानां मतं राजरक्षा । कृष्णस्य तूभयम् ॥ १ ॥ यक्ष्यतः यागं करिष्यतः पितृष्वसुः पुत्रस्य युधिष्ठिरस्य त्वया साचिव्यं साहाय्यं शरणार्थिनां रक्षा च कार्येत्युभयमपेक्ष्यते । निर्णयमाह । दिक्चक्रजयिना राज्ञा यष्टव्यमतो दिग्जयं विना राजसूयो न स्यात् जरासन्धबधं विना दिग्जयो न स्यात् एवं प्रथमं राजसूयगमनमेवोचितं तेनैवोभयकार्यसिद्धिः एका क्रिया द्व्यर्थकरीप्रसिद्धेतिन्यायात् ॥२॥ चक्रमण्डलम् । उभयार्थः यज्ञाय रक्षणाय च अयमर्थः उभयार्थः । चतुर्थी तदर्थेति-अर्थेन समासो विशेष्यलिङ्गता चइत्यनुशासनात् ॥३॥एतेनैव यज्ञगमनेनैव महानर्थः जरासन्धवधरूपः यज्ञपूर्तित्वात् । राज्ञो विमुञ्चतः विमोचयतः तव यशोऽपि भविष्यति । अन्तर्भावितण्यन्तात् शतृप्रत्ययः ॥४॥ नागानां गजानामयुतेन समः । भीमं विना अन्येषां बलिनामपि दुर्विषहः । भीमादेव तस्य मृत्युरिति वृहस्पतेः सकाशादधीतज्यौतिः शास्त्रेण मयैव स्वयं विचारितं निश्चितं च । अयुतं दशसाहस्रम् ॥ ५ ॥ स तु जरासन्धः । द्वयोः रथयो रथिनोरिदं युद्धं द्वैरथं द्वन्द्वयुद्धमित्यर्थः । न प्रत्याख्याति न निराकरोति ॥ ६ ॥ वृकोदरो[1] भीमः । तं प्रति गत्वा भिक्षेत द्वन्द्वयुद्धमिति शेषः । वृकस्तत्संज्ञकोऽग्निः उदरे यस्य । वृकवत् कृशमुदरं यस्येति वा वलिष्ठता सूचिता ॥ ७ ॥ यथा विश्वस्य सृष्टिसंहारयोः ब्रह्मा शिवश्च परं केवलं निमित्तं कर्तृत्वं तु कालरूपस्य ईशस्य तवैव तथाऽत्रापि भीमो निमित्तमात्रं

---

१. वृको नाम हि यो वह्निः स सदा ह्युदरे मम ।
अतिवेलं यदश्नामि तदा स उपशाम्यति ॥ इति ब्रह्मवैवर्ते व्यासं प्रति भीमोक्तेः ।
भारतेऽपि तीक्ष्णश्चैव प्रचण्डश्च वृको नामाऽनलो मतः ।
स पाण्डवस्य जठरे तेन भीमो वृकोदरः ॥ इति ।

निमित्तं परमीशस्य विश्वसर्गनिरोधयोः। हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव ॥ ८ ॥

गायन्ति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च।
गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयं च ॥ ९ ॥

जरासंधवधः कृष्ण भूर्यर्थायोपकल्पते। प्रायः पापविपाकेन तव चाभिमतः क्रतुः ॥१०॥

श्रीशुक उवाच

इत्युद्धववचो राजन् सर्वतोभद्रमच्युतम्। देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूजयन् ॥११॥

अथादिशत् प्रयाणाय भगवान् देवकीसुतः। भृत्यान् दारुकजैत्रादीननुज्ञाप्य गुरून् विभुः ॥१२॥

निर्गमय्याऽवरोधान् स्वान् ससुतान् सपरिच्छदान्। संकर्षणमनुज्ञाप्य यदुराजं च शत्रुहन्।
सूतोपनीतं स्वरथमारुहद् गरुडध्वजम् ॥१३॥

ततो रथद्विपभटसादिनायकैः करालया परिवृत आत्मसेनया।
मृदङ्गभेर्यानकशङ्खगोमुखैः प्रघोषघोषितककुभो निराक्रमत् ॥१४॥

---

हन्ता तु त्वमेव ॥८॥ निगृहीतानां राज्ञां पत्न्यः ते विशदं विर्मलं यशः गायन्ति शिशुलालनपालनादौ। किं कर्म जरासन्धवधम् आत्मनां पतीनां मोक्षणं च। अत्र गोप्यश्चेति चकारात् चत्वारो दृष्टान्ताः। गोप्यो यथा शंखचूडवधं स्वमोक्षणं च। कुञ्जरपतेः गजेन्द्रस्य नक्रात् मोक्षणं तद्वधं च। सीताया मोक्षणं रावणवधं च। पित्रोः देवकी-वसुदेवयोः मोक्षणं कंसवधं च। मुनयः तथा लब्धशरणा वयमपि गायामः गास्याम इत्यर्थः ॥९॥ भूर्यर्थाय भूरि प्रयोजनाय। यज्ञसिद्धये राज्ञां रक्षासिद्धये च। शिशुपालादीनां वधसिद्धये च। अत्र पापविपाकेन इत्येव पाठः समीचीनः अन्यार्थस्यैतेनैव गतार्थत्वात् क्लिष्टकल्पनया मुख्यार्थबाधस्यानौचित्यात् पाकविपाकयोः[1] पर्याय-वाचित्वाच्च। पापविपाकेन जरासन्धस्य पापफलेन। विश्वनाथस्तु शिशुपालादीनां विनाशलक्षणपरिणामेन हेतुना इत्याह। प्रायोग्रहणात् न केवलं पापविपाक एव अपि तु तत्र तव दर्शनादिसत्त्वात् पुण्यविपाक एव। पच्यते इति पाकः कर्म इति व्युत्पत्तिरपि न सङ्गच्छते पंचधातोः करणार्थतापा क्वचित् दृश्यमानत्वात् अनुपयोगि-त्वाच्च। किञ्च अयं क्रतुः तव च तवापि अभिमतः कुरुवंशनाशसूचकदुर्योधनमानभङ्गेन शिशुपालादिदुष्टराजन्य-लक्षणभूभारहरणेन च। त्वयि तत्र गते सति सर्वमेतत् सम्पद्यते इति निर्विवादम् ॥ १० ॥ सर्वतोभद्रम् अभीष्ट-दम्। अच्युतं युक्तियुक्तं खण्डनानर्हं च। यदुवृद्धाः अक्रूरकृतवर्मादयः। यदुवृद्धा इति निर्देशेन अनिरुद्धादयो न। तेषां मतं तु राज्ञां बन्धनिवृत्त्यर्थं प्रथमं जरासन्धेन युद्धमेव ॥ ११ ॥ गुरून् वसुदेवदीन् अनुज्ञाप्य अनुज्ञां सम्प्रार्थ्य : दारुकः सारथिः तदादीन् आदिशत् आज्ञापयामास ॥ १२ ॥ स्वान् अवरोधान् अन्तःपुरस्त्रियः निर्गमय्य प्रयाणं कारयित्वा। यदुराजम् उग्रसेनं च पृष्ट्वा। सपरिच्छदान् ससामग्रीकान् ॥ १३ ॥ ततो रथारोहणोत्तरम्। भगवान् रथादिभिः करालया भीषणया आत्मसेनया परिवृतः निराक्रमत् निश्चक्राम। कुतः सकाशात्। मृदङ्गादिवाद्यैः प्रघोषेण घोषितायाः ककुभः दिशः सकाशात्। यद्वा। आपं चैव हलन्तानाम् इति नियमात् टाबन्तेन ककुभाशब्देन बहुव्रीहौ भगवद्विशेषणम्। ततः पुरीतो वा। इतः परं पञ्चसु रुचिरावृत्तम् ॥१४॥ सुव्रताः पतिव्रता रुक्मिण्याद्याः सहात्मजा नृभिः सुसंवृताः परिवेष्टिताः सत्यः अच्युतं पतिमनुययुरित्यन्वयः काभिः। नृवाजिभिः नरयानैः अश्वैः काञ्चनशिबिकाभिश्च। कथभूताः। वराणि अत्युत्तमानि अम्बरादीनि यासां ताः। कथंभूतैः नृभिः। असिचर्मणी पाणौ येषां तैः। यद्वा। नर एव वाजिवत् शीघ्रगा यत्र ॥ १५ ॥

---

१. 'पाकः परिणतौ शिशो इत्यमरः। विपाकः पाचने स्वेदे कर्मणो विसदृक्फले'। इति मेदिनी च।

नृवाजिकाञ्चनशिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता ययुः ।
वराम्बराभरणविलेपनस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः ॥१५॥
नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिः परिजनवारयोषितः ।
स्वलंकृताः कटकुटिकम्बलाम्बराद्युपस्करा ययुरधियुज्य सर्वतः ॥ १६ ॥
बलं बृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ।
दिवांशुभिस्तुमुलरवं बभौ रवेर्यथार्णवः क्षुभिततिमिङ्गिलोर्मिभिः ॥ १७ ॥
अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि विदधद् विहायसा ।
निशाम्य तद्व्यवसितमाहृतार्हणो मुकुन्दसंदर्शननिर्वृतेन्द्रियः ॥ १८ ॥

राजदूतमुवाचेदं भगवान् प्रीणयन् गिरा । मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ॥१९॥
इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् । तेऽपि संदर्शनं शौरेः प्रत्यैक्षन् यन्मुमुक्षवः ॥२०॥
आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः । गिरीन् नदीरतीयाय पुरग्रामव्रजाकरान् ॥२१॥
ततो दृषद्वतीं तीर्त्वा मुकुन्दोऽथ सरस्वतीम् । पञ्चालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ॥२२॥
तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् । अजातशत्रुर्निरगात् सोपाध्यायः सुहृद्वृतः ॥२३॥
गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा । अभ्ययात् स हृषीकेशं प्राणाः प्राणमिवादृतः ॥२४॥
दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पाण्डवः । चिराद् दृष्टं प्रियतमं सस्वजेऽथ पुनःपुनः ॥२५॥

---

किञ्च परिजनवारयोषितः पारिवारिककुलाङ्गनाः नरोष्ट्रादिभिर्यानैः सुष्ठु अलङ्कृताः सत्यः सर्वतो ययुरित्यन्वयः । कथंभूताः । कटकुट्यादयः उपस्करा शिविरादिसाधनभूताः यासां ताः । किं कृत्वा । तानेव उपस्करान् अधियुज्य बलीवर्दादिषु आरोप्य । खरोऽत्र भारवाहकत्वेन निर्दिष्टः । अश्वतरी गर्दभादश्वायां जाता । अनः शकटम् । करेणुः गजी । कटकुटयः उशीरादितृणनिर्मितगृहाः ॥ १६ ॥ भगवतः तद्बलं रवेः अंशुभिः दिवा बभौ इत्यन्वयः । यथा क्षुभितैः तिमिङ्गिलादिभिः अर्णवः भाति तद्वत् । कैर्बभौ । बृहद्ध्वजादिभिः वरायुधादिभिश्च । कथंभूतम् । तुमुलरवम् मिश्रितध्वनिम् ॥ १७ ॥ अथो अनन्तरं यदुपतिना कृष्णेन सत्कृतो मुनिः तद्व्यवसितं कृष्णनिश्चितं निशाम्य विहायसा आकाशमार्गेण ययौ इति क्रियाशेषः । कथंभूतः । आहृतं समर्पितम् अर्हणमर्घ्यं यस्मै सः । पुनश्च । मुकुन्दस्य सन्दर्शनेन निर्वृतानि सुखितानि इन्द्रियाणि यस्य । तं विदधत् ध्यायन् ययौ ॥१८॥ प्रीणयन् सन्तोषयन् । भैष्टेति बहुवचनं राजाभिप्रायेण । मागधं जरासन्धम् ॥१९॥ तेऽपि नृपा अपि प्रत्यैक्षन् प्रतीक्षितवन्तः । यतो बन्धनात् मुमुक्षव आसन् ॥२०॥ हरिः आनर्तादीन् देशान् विनशनं कुरुक्षेत्रं च तीर्त्वा मार्गस्थान् गिरीन् नदीश्च अतीयाय अतिक्रम्य ययौ ॥ २१ ॥ ततो मुकुन्दः अन्या अपि नदीः देशांश्च तीर्त्वा अथशक्रप्रस्थमागमत् । अत्र पाञ्चालविनशनसंज्ञौ 'अन्यावेव देशौ नतुप्रसिद्धौ इति सन्दर्भः ॥२२॥ प्रीतः सन् तमानेतुं पुरात् निरगादित्यन्वयः । दुर्लभं दर्शनं यस्य दुर्दर्शनम् ।२३। भूयसा महता वेदध्वनिना सह । आदृतः सादरः सन् सम्मुखमगात् । प्राणमागतं प्राणा इन्द्रियाणीव ॥ २४ ॥ स्नेहेन विक्लिन्नहृदयः आर्द्रहृदयः पाण्डवः अथ दर्शनानन्तरं पुनः पुनः सस्वजे आलिङ्गितवान् ॥२५ ॥ नृपतिः मुकुन्दगात्रं परिष्वज्य अश्रुलोचनः सन् परां निर्वृतिं निरतिशयसुखं लेभे इत्यन्वयः । कथंभूतम् । रमाया निर्दोषमालयम् ॥ कथंभूतः नृपतिः

दोर्भ्यां परिष्वज्य रमामलालयं मुकुन्दगात्रं नृपतिर्हताशुभः ।
लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २६ ॥
तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन् प्रेमजलाकुलेन्द्रियः ।
यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥ २७ ॥
अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः । ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथार्हतः ॥२८॥
मानितो मानयामास कुरुसृञ्जयकैकयान् । सूतमागधगन्धर्वा वन्दिनश्चोपमन्त्रिणः ॥२९॥
मृदङ्गशङ्खपटहवीणापणवगोमुखेः । ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः ॥३०॥
एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः । संस्तूयमानो भगवान् विवेशालंकृतं पुरम् ॥३१॥
संसिक्तवर्त्म करिणां मदगन्धतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुम्भैः ।
मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥३२॥
उद्दीप्तदीपबलिभिः प्रतिसद्मजालनिर्यातधूपरुचिरं विलसत्पताकम् ।
मूर्धन्यहेमकलशं रजतोरुशृङ्गैर्जुष्टं ददर्श भवनैः कुरुराजधाम ॥३३॥

---

हृष्यन्ती रोमाञ्चिता तनुः यस्य । पुनश्च विस्मृतो लोकव्यवहारो येन सः ॥ २६ ॥ भीमः तं परिरभ्य निर्वृतः आनन्दितो बभूव । कथंभूतः । प्रेमजलैः प्रेमाश्रुभिः आकुले व्याप्ते इन्द्रिये लोचने यस्य सः । यमौ किरीटी अर्जुनश्च त्रयोऽपि परिरेभिरे आलिङ्गितवन्तः । प्रवृद्धानि वाष्पाणि अश्रूणि येषां ते तथाभूताः सन्तः ॥ २७ ॥ अर्जुनेनेति सार्द्धम् । परिष्वक्तः आलिङ्गितः । वृद्धब्राह्मणान् युधिष्ठिरादींश्च नमस्कृत्य कुवींदीन् मानयामास स्वयं तैर्मानितः सन् ॥२८॥ सूतेति[1] सार्द्धम् । सूतादयः मृदङ्गादिवाद्यैः सह श्रीकृष्णं ब्राह्मणाश्च तुष्टुवु नर्तक्यो ननृतु गायकाश्च जगु ॥२९॥ पुण्यः श्लोको यशो येषां युधिष्ठिरादीनां शिखोमणिः मुख्यः ॥३०॥ पुरं वर्णयति । कथंभूतम् । करिणां मदगन्धतोयैः संसिक्तानि वर्त्मानि यस्य तत् । पुनश्च चित्रध्वजादिभिः तथा मृष्टः आत्मा शरीरं येषां तैः गौरवर्णैः नृभिः तथाभूताभिः युवतिभिश्च विराजमानम् । कथभूतैः । नवा अभिनवा दुकूलादयो येषां तैः नृभिः । तोरणं वन्दनमालिका ॥३१॥ पुनश्च । नानाभवनैः जुष्टमलङ्कृतं कुरुराजस्य युधिष्ठिरस्य धाम[2] पुरं ददर्श । कोदृशम् । प्रतिसद्म उद्दीप्तैः प्रज्वालितैः दीपैः बलिभिः पुष्पादिभिश्च जुष्टम् । पुनश्च जालेभ्यो गवाक्षेभ्यो निर्गतैः धूपैः रुचिरम् । पुनश्च । विलसन्त्यः पताकाः यस्मिन् । मूर्ध्निभवा हेमकलशा यस्मिन् । रजतमयानि उरूणि बहूनि शृङ्गाणि कलशाधःस्थलानि यस्मिन् तथाभूतम् ॥ ३२ ॥ नरेन्द्रमार्गे राजमार्गे प्राप्तं श्रीकृष्णं निशम्य युवतयः सद्यः झटिति गृहकर्म तल्पे पतींश्च विसृज्य द्रष्टुं ययुरित्यन्वयः । स्म साश्चर्यम् । कथंभूतम् । लोचनानां पात्रम् अवलोकनविषयम् । कथमूताः युवतयः । औत्सुक्यात् विश्लथिता शिथिलीभूताः केशानां दुकूलानां च बन्धा ग्रन्थयो यासां ताः ॥ ३३ ॥ गृहारूढा नार्यः इभादिभिः सुसंकुले तस्मिन् राजमार्गे सभार्यं कृष्णमुपलभ्य दृष्ट्वा सुस्वागतं विदधुरित्यन्वयः । केन । उत्स्मयवीक्षितेन सस्मितनिरीक्षणेन । किं कृत्वा । कुसुमैः विकीर्य आच्छन्नं कृत्वा । मनसा उपगुह्य हृदि कृत्वा । गृहं प्रासादः इभां गजः । द्विपात्

---

१. सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः ।
वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥

२. 'धाम देहे गृहे पुरे' इति कोशात् ।

प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबन्धाः ।
सद्यो विसृज्य गृहकर्म पतींश्च तल्पे द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥३४॥
तस्मिन् सुसंकुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ।
नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुत्स्मयवीक्षितेन ॥३५॥
ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नीस्तारा यथोडुपसहाः किमकार्यमूभिः ।
यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ॥३६॥

तत्र तत्रोपसंगम्य पौरा मङ्गलपाणयः । चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः ॥३७॥
अन्तःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः । ससम्भ्रमैरभ्युपेतः प्राविशद् राजमन्दिरम् ॥३८॥
पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् । प्रीतात्मोत्थाय पर्यङ्कात् सस्नुषा परिषस्वजे ।३९।
गोविन्दं गृहमानीय देवदेवेशमादृतः । पूजायां नाविदत् कृत्यं प्रमोदोपहतो नृपः ॥४०॥
पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम् । स्वयं च कृष्णया राजन् भगिन्या चाभिवन्दितः ॥
श्वश्र्वा संचोदिता कृष्णा कृष्णपत्नीश्च सर्वशः । आनर्च रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा४२
कालिन्दीं मित्रविन्दां च शैब्यां नाग्नजितीं सतीम् । अन्याश्चाभ्यागता यास्तु वासःस्रङ्मण्डनादिभिः
सुखं निवासयामास धर्मराजो जनार्दनम् ।ससैन्यं सानुगामात्यं सभार्यं च नवं नवम् ॥४४॥
तर्पयित्वा खाण्डवेन वह्निं फाल्गुनसंयुतः । मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता ॥४५॥
उवास कतिचिन्मासान् राज्ञः प्रियचिकीर्षया । विहरन् रथमारुह्य फाल्गुनेन भटैर्वृतः ॥४६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे कृष्णस्येन्द्रप्रस्थगमनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

पदातिः ॥ ३४ ॥ यथा उडुपसहाः चन्द्रसहिताः ताराः तथा मुकुन्दपत्नीः पथि निरीक्ष्य स्त्रियः परस्परम् ऊचुरित्यन्वयः । अमूभिः स्त्रापि किं पुण्यम् अकारि । यासां चक्षुषां पुरुषोत्तमो भगवान् उत्सवम् आनन्दमातनोति । कया । उदारः आकर्षको यो हासः तद्युक्तलीलावलोकः दृष्टिपातः तस्य लेशेन । उडुपं सहन्ते इति उडुपसहाः ॥ ३५ ॥ तत्र तत्र स्थले स्थले । श्रेणीमुख्या नगरप्रधानाः पौराः पुरवासिनः । यद्वा । श्रेण्यः[1] एकशिल्पोपजीविनः । सपर्या पूजां चक्रुरित्यत्र हेतुः । हतैनसः पुण्यात्मानः । हतमेनः पापं येषां ते । मङ्गलं पूजनद्रव्यं पाणौ येषां ते ॥३६॥ अभ्युपेतः अभ्युत्थानेन सत्कृतः । संभ्रमः स्नेहवैवश्यम् ॥३७॥ पृथा कुन्ती । भ्रातुः वसुदेवस्य पुत्रं परिषस्वजे आलिङ्गितवती । स्नुषा पुत्रवधूः द्रौपदी तत्सहिता ॥३८॥ प्रमोदेन आगमनाह्लादे उपहतोऽभिभूतः । आदृतः सादरः । नाविदत् विस्मृतवान् । विन्दतेर्लुङ् ॥ ३९ ॥ पितृष्वसुः पृथायाः गुरुस्त्रीणां गुरूणां ब्राह्मणानाम् । कृष्णया द्रौपद्या । भगिन्या सुभद्राया ॥ ४० ॥ श्वश्र्वा कुन्त्या । कृष्णा द्रौपदी । सर्वशः सर्वा ॥ ४१ ॥ शैब्यो कल्याणमयीं मित्रविन्दामित्यस्या विशेषणं कार्यम् । शैब्ये रोहिणि लक्ष्मणे इति वक्ष्यमाणपद्ये शैब्ये मित्रविन्दे इति स्वामिचरणव्याख्यानात् । चकारोऽनुक्तसमुच्चयार्थ इति नियमात् च शब्देन लक्ष्मणा ग्राह्या । अतो नानुपपत्तिः । अन्या या आगता ता अपि आनर्चेति योज्यम् । मण्डनानि भूषणानि । मण्डनं भूषणे क्लीवम् ॥ ४२ ॥ प्रत्यहं नवं नवं यथा प्रतीयते यथा तथा निवासयामासेत्यन्वयः ॥ ४३ ॥ खाण्डवेन इन्द्रवनेन । फाल्गुनोऽर्जुनः ॥ ४४ ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे गूढार्थदीपिन्यामेकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

१. 'श्रेणी राजौ तथा संघ एकशिल्पोपजीविनाम्' । इति धरणिः ।

## अथ द्विसप्ततितमोऽध्यायः

श्रीशुक उवाच

एकदा तु सभामध्ये आस्थितो मुनिभिर्वृतः । ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः ॥१॥
आचार्यैः कुलवृद्धैश्च ज्ञातिसम्बन्धिबान्धवैः । शृण्वतामेव चैतेषामाभाष्येदमुवाच ह ॥२॥

युधिष्ठिर उवाच

क्रतुराजेन गोविन्द राजसूयेन पावनीः । यक्ष्ये विभूतीर्भवतस्तत् सम्पादय नः प्रभो ॥३॥

त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ।
विन्दन्ति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये ॥४॥
तद् देवदेव भवतश्चरणारविन्दसेवानुभावमिह पश्यतु लोक एषः ।
ये त्वां भजन्ति न भजन्त्युत वोभयेषां निष्ठां प्रदर्शय विभो कुरुसृञ्जयानाम् ॥५॥
न ब्रह्मणः स्वपरभेदमतिस्तव स्यात् सर्वात्मनः समदृशः स्वसुखानुभूतेः ।
संसेवतां सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न विपर्ययोऽत्र ॥६॥

श्रीभगवानुवाच

सम्यग् व्यवसितं राजन् भवता शत्रुकर्शन । कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति ॥७॥
ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो । सर्वेषामपि भूतानामीप्सितः क्रतुराडयम् ॥८॥

---

द्वासप्ततितमे यज्ञोपक्रमात् दिग्जये हरिः ।
द्वन्द्वयुद्धे च भीमेन जरासन्धमघातयत् ॥ १ ॥

एकदेति युग्मम् । एकदा सिंहासनमास्थितः मुन्यादिभिर्वृतः युधिष्ठिरः सर्वेषां शृण्वतां सतां कृष्णमाभाष्य संबोध्य इदं वक्ष्यमाणमुवाचेत्यन्वयः ॥ १ ॥ २ ॥ विभूतीः अंशान् इन्द्रादीन् यक्ष्ये पूजयिष्यामि नोऽस्माकं तत् अभीष्टम् ॥ ३ ॥ त्वत्पादुके परिचरन्ति सेवन्ते । छन्दसि व्यवहिताश्चेति नियमात् यच्छब्दव्यवधानं न दोषाय । अभद्रनशने अविद्यानिवर्तके ये मनसा ध्यायन्ति वचसा गृणन्ति ते एव भवस्य अपवर्गं मोक्षं विंदन्ति यदि ते आशिषः आशासते भोगान् इच्छन्ति तर्हि ता अपि विन्दन्ति नान्ये चक्रवर्तिनोऽपि । शुचयः श्रद्धालवः ॥४॥ तत् तस्मात् एष लोकः प्राणिसमूहः ते चरणसेवानुभावं साक्षात् पश्यतु । ये सृञ्जयाः पाण्डवाः अस्मदादयः त्वां भजन्ति । कुरवो दुर्योधनादयस्तु न भजन्ति तेषामुभयेषां निष्ठां बलम् उत्कर्षापकर्षौ लोकान् प्रदर्शय ॥ ५ ॥ यद्यपि ब्रह्मणः तव स्वः पर इति भेदमतिनास्ति तथापि त्वां संसेवतां पुंसां कल्पवृक्षस्येव ते प्रसादो भवति तदनुरूपः उदयः फलं च भवति अत्र विपर्ययः अन्यथाभावः वैषम्यादिदोषो नास्ति । समदृशः इत्यत्र हेतुः सर्वात्मनः । स्वसुखेति रागाद्यभावे हेतुः ॥ ६ ॥ व्यवसितं निश्चितं । अनुभविष्यति लोकेषु व्याप्ता भविष्यति । शत्रुकर्शनेति संबोधनेन तस्य हृदि विजयशक्तिं स्फोरयति ॥ ७ ॥ क्रतुराट् राजसूयः

विजित्य नृपतीन् सर्वान् कृत्वा च जगतीं वशे। सम्भृत्य सर्वसम्भारानाहरस्व महाक्रतुम् ॥ ९ ॥
एते ते भ्रातरो राजन् लोकपलांशसम्भवा:। जितोऽस्म्यात्मवता तेऽहं दुर्जयो योऽकृतात्मभिः १०
न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया। विभूतिभिर्वाभिभवेद् देवोऽपि किमु पार्थिवः॥११॥

श्रीशुक उवाच

निशम्य भगवद्गीतं प्रीतः फुल्लमुखाम्बुजः। भ्रातॄन् दिग्विजयेऽयुङ्क्त विष्णुतेजोपबृंहितान् १२
सहदेवं दक्षिणस्यामादिशत् सह सृञ्जयैः। दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम्।
प्राच्यां वृकोदरं मत्स्यैः केकयैः सह मद्रकैः ॥१३॥
ते विजित्य नृपान् वीरा आजह्रुर्दिग्भ्य ओजसा। अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥१४॥
श्रुत्वाऽजितं जरासंधं नृपतेर्ध्यायतो हरिः। आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥१५॥
भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिङ्गधरास्त्रयः। जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥१६॥
ते गत्वाऽऽतिथ्यवेलायां गृहेषु गृहमेधिनम्। ब्रह्मण्यं समयाचेरन् राजन्या ब्रह्मलिङ्गिनः ॥१७॥
राजन् विद्धचतिथीन् प्राप्तानर्थिनो दूरमागतान्। तन्नः प्रयच्छ भद्रं ते यद् वयं कामयामहे १८॥
किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः। किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥१९॥
योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम्। नाचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः २०
हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः। व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः।२१॥

---

ईप्सितः अभीष्टः ॥ ८ ॥ संभारान् सामग्रीः संभृत्य सम्पाद्य महाक्रतुम् आहरस्व कुरुष्व ॥ ९ ॥ आत्मवता मन्निष्ठेन। न कृतः मयि नार्पितः आत्मा यैः तैः बहिर्मुखैरित्यर्थः ॥१०॥ अहमेव परः आराध्यो यस्त तं मत्परं देवोऽपि न अभिभवेत् पराभिवतुं न शक्नुयात् किमुत पार्थिवः। विभूतिभिः अस्त्रशस्त्रसैन्यादिधिसाधनैः ॥११॥ फुल्लं विकसितं मुखाम्बुजं यस्य सः नृपः दिग्विजये निर्मिते अयुङ्क्त नियुक्तवान्। उपवृंहितान् वर्धितान् ॥१२॥ सहेति सार्द्धम्। सहदेवं सृञ्जयैः भीमं मत्स्यैः नकुलं कैकयैः सव्यसाचिनमर्जुनं मद्रकैश्च सहेति योज्यम्। आदिशत् प्रैषयत्। सव्येन वामेनापि साचितुं धनुः संधातु शीलमस्येति सव्यसाचिशब्दार्थः ॥ १३ ॥ ते सहदेवादयः ओजसा बलेन नृपान् विजित्य यक्ष्यते यागं क्वरिष्यमाणाय युधिष्ठिराय भूरि द्रविणं धनमाजह्रुः समर्पयामासुः ॥१४॥ आद्यो हरिः श्रीकृष्णः। ह स्पष्टम् ॥१५॥ लिङ्गं वेषः। हे तात परीक्षित्! यतः यत्र। गिरिव्रजं राजधानीम् ॥ १६ ॥ गृहेषु गत्वा तत्र वर्तमानं गृहमेधिनं सद्गृहस्थं तं समयाचेरन् सम्यगयाचन्त। ब्रह्मलिङ्गिनः ब्रह्मवेषिण।। राजन्याः क्षत्रियाः ॥ १७ ॥ यत् कामयामहे तत् वस्तु नोऽस्मभ्यं प्रयच्छ देहि ॥१८॥ तितिक्षूणां सहनशीलानां किं दुमर्षं किं दुःसहं न किमपि। किमकार्यं न किमपि। वदान्यानाम् अत्युदाराणां किमदेयं न किमपि। कः परः परकीयः न कोऽपि। परः शत्रुर्वा ॥ १९ ॥ ध्रुवं नित्यं यशः नांचिनोति न सम्पादयति स्वयं कल्पः समर्थोऽपि स वाच्यः निन्द्यः। साधुभिः शोचनीयश्च जन्मवैफल्यात् ॥ २० ॥ हरिश्चन्द्रस्य कथा स्पष्टैव। रन्तिदेवोऽष्टचत्वारिंशत् दिनाति सकुटुम्बो निराहारः कथञ्चिल्लब्धान्नजलादि याचकेभ्यो दत्त्वा ब्रह्मलोकं गतः। उञ्छवृत्तिः मुद्गलः षण्मासं सोदतकुटुम्बोऽप्यातिथ्येन ब्रह्मलोकं गतः। शिविः शरणागतकपोत रक्षार्थं श्येनाय स्वमांसे दत्त्वा स्वर्गं गतः। बलेः कथाऽष्टमस्कन्धे स्पष्टा। कपोतः व्याधाय कपोत्या सहात्मभांसं दत्त्वा दिवं गतः। व्याधस्तयोर्धैर्यमातिथ्यं च वीक्ष्य वनाग्निदग्धदेहो दिवं गतः एवमन्येऽपि बहवोऽध्रुवेण शरीरेण

श्रीशुक उवाच

स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि । राजन्यबन्धून् विज्ञाय दृष्टपूर्वानचिन्तयत् ॥२२॥
राजन्यबन्धवो ह्येते ब्रह्मलिङ्गानि बिभ्रति । ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥२३॥
बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा । ऐश्वर्याद् भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥२४॥
श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे । जानन्नपि महीं प्रादाद् वार्यमाणोऽपि दैत्यराट् ॥२५॥
जीवता ब्राह्मणार्थाय को न्वर्थः क्षत्रबन्धुना । देहेन पतमानेन नेहता विपुलं यशः ॥२६॥
इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् । हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥२७॥

श्रीभगवानुवाच

युद्धं नो देहि राजेन्द्र द्वन्द्वशो यदि मन्यसे । युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकाङ्क्षिणः २८॥
असौ वृकोदरः पार्थस्तस्य भ्रातार्जुनो ह्ययम् । अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ।२९।
एवमावेदितो राजा जहासोच्चैः स्म मागधः । आह चामर्षितो मन्दा युद्धं तर्हि ददामि वः ।३०।
न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा । मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥३१॥
अयं तु वयसाऽतुल्यो नातिसत्त्वो न मे समः । अर्जुनो न भवेद् योद्धा भीमस्तुल्यबलो मम ॥३२॥
इत्युक्त्वा भीमसेनाय प्रादाय महतीं गदाम् । द्वितीयां स्वयमादाय निर्जगाम पुराद् बहिः ॥३३॥
ततः समे खले वीरौ संयुक्ताावितरेतरौ । जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥३४॥
मण्डलानि विचित्राणि सव्यं दक्षिणमेव च । चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः ॥३५॥

---

ध्रुवं लोकं गताः ॥ २१ ॥ स्वरैः गम्भीरैः आकृतिभिः हृष्टपुष्टाङ्गैः । ज्या प्रत्यञ्चाख्या । प्रकोष्ठः कलाई-संज्ञकः राजन्यबन्धून् निकृष्टक्षत्रियान् विप्रवेषेण याचनापरत्वेन । दृष्टपूर्वान् पूर्वं दृष्टान् द्रौपदीस्वयम्बरादिषु । तान् अर्थिनः ॥ २२ ॥ एतेऽर्थिनः आत्मानपि शरीरमपि ॥ २३ ॥ बलेरिति युग्मम् । इन्द्रस्य श्रियं-जिहीर्षता विष्णुना वामनेन भ्रंशितस्यापि बलेः नु अहो अकल्मषा निर्दोषा कीर्तिः श्रूयते । यतः शुक्रेण वार्यमाणोपि दैत्यराट् वलिः अयं विष्णुरिति जानन्नपि द्विजरूपिणे वामनाय महीं प्रादादिति द्वयोरन्वयः ॥२४॥ ॥२५॥ पतमानेन देहेन ब्राह्मणार्थाय विपुलं यशो नेहता न सम्पादयता अथापि जीवता क्षत्रबन्धुना की नु अर्थः किं प्रयोजनं न किमपि तस्य मरणमेव वरमित्यर्थः ॥२६॥ कामोऽभीष्ट पदार्थ । द्वद्वशः द्वन्द्वयुद्धम् । शस् प्रत्यय आर्षः ॥२८॥ असाविति अङ्गुल्या निर्देशेन परिचिनोति ॥२९॥ स्म आह इत्यत्रान्वेति । अमर्षितः क्रुद्धः सन् । हे अमन्दाः इतिच्छेदः युद्धे आलस्यरहिताः । युद्धनिपुणा वा ॥३०॥वस्तुतस्तु अभीरुणा निर्भयेन त्वया विक्लवचेतसा युक्तोऽहं न योत्स्ये । मथुरामुपलक्षणतया द्वारकां त्यक्त्वा सैन्यरहित एव त्वं मां हन्तुं समुद्रं प्राकारादि कृतमुद्रणयुक्तं मदीयं शरणं गृहं प्राप्तोऽसि ॥३१॥ नीतिसत्त्वः न प्रशस्तपराक्रमः ॥ ३२ ॥ पुरात् गिरिव्रजात् ॥३३॥ समे खले[1] युद्धीय समतलभूमौ । इतरेतरं परस्परं संयुक्तौ मिलितौ । दुर्मतौ उन्मत्तौ ॥३४॥ मण्डलानि गदायुद्धीयपादविक्षेपान् । पैंतरासंज्ञकान् । चरतोः कुर्वतोः द्वयोर्युद्धम् रङ्गिणोः रङ्गभूमि गतयो र्नटयोरिव ॥३५॥

---

१. खलः कल्वो भुवि स्थाने इत्यमरः ।

ततश्चटचटाशब्दो वज्रनिष्पेषसंनिभः । गदयोः क्षिप्तयो राजन् दन्तयोरिव दन्तिनोः ॥३६॥

ते वै गदे भुजजवेन निपात्यमाने अन्योन्यतोंऽसकटिपादकरोरुजत्रून् ।
चूर्णीबभूवतुरुपेत्य यथार्कशाखे संयुध्यतोर्द्विरदयोरिव दीप्तमन्व्वोः ॥३७॥
इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैरपिष्टाम् ।
शब्दस्तयोः प्रहरतोरिभयोरिवासीन्निर्घातवज्रपरुषस्तलताडनोत्थः ॥३८॥

तयोरेवं प्रहरतोः समशिक्षाबलौजसोः । निर्विशेषमभूद् युद्धमक्षीणजवयोर्नृप ॥३९॥
एवं तयोर्महाराज युध्यतोः सप्तविंशतिः । दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः ॥४०॥
एकदा मातुलेयं वै प्राह राजन् वृकोदरः । न शक्तोऽहं जरासंधं निर्जेतुं युधि माधव ॥४१॥
शत्रोर्जन्ममृती विद्वान् जीवितं च जराकृतम् । पार्थमाप्याययन् स्वेन तेजसाऽचिन्तयद्धरिः ॥४२॥
सञ्चिन्त्यारिवधोपायं भीमस्यामोघदर्शनः । दर्शयामास विटपं पाटयन्निव संज्ञया ॥४३॥
तद् विज्ञाय महासत्त्वो भीमः प्रहरतां वरः । गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥४४॥
एकं पादं पदाऽऽक्रम्य दोर्भ्यामन्यं प्रगृह्य सः । गुदतः पाटयामास शाखामिव महागजः ॥४५॥
एकपादोरुवृषणकटिपृष्ठस्तनांसके । एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः ॥४६॥
हाहाकारो महानासीन्निहते मगधेश्वरे । पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥४७॥
सहदेवं तत्तनयं भगवान् भूतभावनः । अभ्यषिञ्चदमेयात्मा मगधानां पतिं प्रभुः ॥४८॥
मोचयामास राजन्यान् संरुद्धा मागधेन ये ॥४९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे जरासंधवधो नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

प्रक्षिप्तयोः गदयोः शब्दः वज्रपातसदृशोऽभूत् । दन्तिनोः हस्तिनोः दन्तयोर्यथा भवति । 'दन्ती दन्तावलो हस्ती इत्यमरः ॥३६॥ भुजवेगेन हस्तकौशलेन प्रक्षिप्यमाणे ते गदे अन्योन्यतः परस्परम् अंसादीन् उपेत्य प्राप्य चूर्णीबभूवतुरित्यन्वयः । अर्कशाखाभ्यां युद्धचतोः गजयोः अङ्गानि प्राप्य यथा अर्कशाखे चूर्णीभवतस्तथा । दीप्तमन्व्वोः क्रोधपूर्णयोः द्विरदयोः गजयोः । द्वौ रदौ दन्तौ यस्येति द्विरदशब्दार्थः। अंसः स्कन्धः तदुभयतः संलग्ने अस्थिनी जत्रुणी ॥ ३७ ॥ इत्थं गदयोः प्रहृतयोः भग्नयोः सत्योः क्रुद्धौ नृवीरौ स्वमुष्टिभिरन्योन्यम् अपिष्टां ताडयामासतुः । अयोवत् लोहवत् कठोरः स्पर्शो येषां तैः । गजयोरिव प्रहरतोः तयोः शब्दः निरभ्रवज्रपातवत् परुषः कठोरः भीषण आसीत् । तल चपेटः ॥३८॥ समानि शिक्षादीनि ययोः । बलं शारीरम् । ओजः ऐन्द्रियम् । निर्विशेषम् अनुपमम् । विशेषो भेदतुल्ययोः इति धरणिः । जवोऽत्र बलम् ॥ ३९ ॥ निरगमन् व्यतीतानि ॥ ४० ॥ वै एवार्थे । न वै नैव शक्तोऽहमिति योज्यम् ॥ ४१ ॥ जन्म खण्डद्वयरूपं मृतिश्च खण्डयोः पृथक्करणं जीवितं च खण्डद्वयसन्धानेन जराराक्षस्या कृतमिति जानन् हरिः पार्थम् स्वेन तेजसा आप्याययन् संवर्धयन् प्रबलीकुर्वन् सन् अचिन्तयत् । किमिति । भीमः खण्डयोः पृथक्करणं कथं जानीयादिति ॥ ४२ ॥ अमोघदर्शनः यथार्थज्ञः विटपं शाखां पाटयन्निव भीमं दर्शयामास। संज्ञया संकेतेन । यथाऽहं शाखां पाटयामि तथा त्वमपि एनं मध्यतः पाटयेति वधोपायं दर्शयामासेत्यर्थः ॥ ४३ ॥ महासत्त्वो महाबलः ॥ ४४॥ एकमिति स्पष्टम् ॥ ४५ ॥ एकैकः पादादिर्यस्मिन् । तथा एकैकः बाह्वादिर्यस्मिन् । शकले खण्डद्वयम् ॥ ४६ ॥ जयाच्युतौ अर्जुनकृष्णौ पूजयामासतुः आदरं चक्रतुः । परिरभ्य आलिङ्गच ॥ ४७ ॥ तत्तनयं जरासन्धपुत्रम् । मगधानां देशानाम् ॥ ४८ ॥ मोचयेत्यर्द्धम् ॥ मा गधेन ये संरुद्धाः तान् मोचयामास ।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## अथ त्रिसप्ततितमोऽध्यायः

श्रीशुक उवाच

अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः ।
ते निर्गता गिरिद्रोण्यां मलिना मलवाससः । क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः ॥ १ ॥
ददृशुस्ते घनश्यामं पीतकौशेयवाससम् । श्रीवत्साङ्कं चतुर्बाहुं पद्मगर्भारुणेक्षणम् ॥ २ ॥
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् । पद्महस्तं गदाशङ्खरथाङ्गैरुपलक्षितम् ॥ ३ ॥
किरीटहारकटककटिसूत्राङ्गदाचितम् । भ्राजद्वरमणिग्रीवं निवीतं वनमालया ॥ ४ ॥
पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया । जिघ्रन्त इव नासाभ्यां रम्भन्त इव बाहुभिः ॥ ५ ॥
प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः । कृष्णसन्दर्शनाह्लादध्वस्तसंरोधनक्लमाः ॥ ६ ॥
प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः ।

राजान ऊचुः

नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय । प्रपन्नान् पाहि नः कृष्ण निर्विण्णान् घोरसंसृतेः ॥ ७ ॥
नैनं नाथान्वसूयामो मागधं मधुसूदन । अनुग्रहो यद् भवतो राज्ञां राज्यच्युतिर्विभो ॥ ८ ॥
राज्यैश्वर्यमदोन्नद्धो न श्रेयो विन्दते नृपः । त्वन्मायामोहितोऽनित्या मन्यते सम्पदोऽचलाः ॥९॥
मृगतृष्णां यथा बाला मन्यन्त उदकाशयम् । एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥१०॥

---

प्राक् त्रिसप्ततितमे कृपानिधिः संविमोच्य नृपतीन् स्तुतस्तु तैः ।
प्रैषयत् सुविभवैः प्रतोष्य तान् राजसद्म पुनरागमद्धरिः ॥ १ ॥

अयुते इति सार्द्धम् । गिरिद्रोणी दुर्गः तस्याः सकाशात् निर्गताः । स्वरूपतो मलिनाः मलिनवस्त्राश्च । क्षुधा क्षामा दुर्बलाः अयुतं दशसाहस्रम् ॥ १ ॥ ददृशुरिति त्रिकम् । पीते कौशेयवाससी यस्य । श्रीवत्साङ्को भृगुलता[1] वक्षसि यस्य । पद्मगर्भवत् अरुणे ईक्षणे यस्य स्फुरतो मकराकृती कुण्डले यस्य । उपलक्षितं शोभितम् । किरीटादिभिः आचितमलङ्कृतम् । भ्राजन् वरमणि कौस्तुभो यया सा ग्रीवा यस्य । निवीतं वेष्टितम् । रथाङ्गं चक्रम् ॥ २ ॥ ३ ॥ ४ ॥ पिबन्त इति सार्द्धम् । पिबन्त इव लिहन्त इव जिघ्रन्त इव बाहुभ्यां रम्भन्तः आलिङ्गन्त इव मुक्ताः नृपा मूर्धभिः पादयोः प्रणेमुरित्यन्वयः ॥ ५ ॥ कथंभूताः । कृष्णसन्दर्शनाह्लादेन ध्वस्तो निवृत्तः संरोधखेदो येषां ते । गीर्भिः वचोभिः प्रशशंसुः ॥ ६ ॥ संरोधात् रक्षितानस्मान् घोरायाः संसृतेः संसारादपि निर्विण्णान् खिन्नान् पाहि । प्रपन्नानां शरणागतानामार्ति हरतीतितत्सम्बुद्धौ ॥ ७ ॥ हे नाथ एनं मागधं जरासन्धं न अन्वसूयामः दोषदृष्ट्या न पश्यामः । कुतः । यत् यस्मात् अस्माकं राज्यच्युतिरिति भवतोऽनुग्रह एव जातः ॥ ८ ॥ राज्यम् ऐश्वर्यं च ताभ्यां मदेन उन्नद्धः उच्छृङ्खलो नृपः अनित्या अपि सम्पदः अचलाः शाश्वतीः मन्यते ॥ ९ ॥ बाला अज्ञा यथा मृगतृष्णां मरुमरीचिकाम् उदकाशयं सरोवरं मन्यन्ते । एवमयुक्ता अविवेकिनः वैकारिकीं विकारोत्पादिकां मायां भोगसम्पत्ति वस्तु वस्तुत्वेन परमार्थत्वेन चक्षते

---

१. वक्षसि भृगुपादाङ्कं कैश्चित् श्रीवत्समुच्यते । रोमरेखारूपा वा ।

वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयास्या इतरेतरस्पृधः ।
घ्नन्तः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वाऽविगणय्य दुर्मदाः ॥११॥
त एव कृष्णाद्य गभीररंहसा दुरन्तवीर्येण विचालिताः श्रियः ।
कालेन तन्वा भवतोऽनुकम्पया विनष्टदर्पाश्चरणौ स्मराम ते ॥१२॥
अथो न राज्यं मृगतृष्णिरूपितं देहेन शश्वत् पतता रुजां भुवा ।
उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ॥१३॥
तं नः समादिशोपायं येन ते चरणाब्जयोः । स्मृतिर्यथा न विरमेदपि संसरतामिह ॥१४॥
कृष्णाय वासुदेवाय हरये परमात्मने । प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥१५॥

श्रीशुक उवाच

संस्तूयमानो भगवान् राजभिर्मुक्तबन्धनैः । तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥१६॥

श्रीभगवानुवाच

अद्यप्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे । सुदृढा जायते भक्तिर्बाढमाशंसितं तथा ॥१७॥
दिष्टया व्यवसितं भूपा भवन्त ऋतभाषिणः । श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् ॥१८॥
हैहयो नहुषो वेनो रावणो नरकोऽपरे । श्रीमदाद् भ्रंशिताःस्थानाद् देवदैत्यनरेश्वराः ॥१९॥
भवन्त एतद् विज्ञाय देहाद्युत्पाद्यमन्तवत् । मां यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षथ ॥२०॥
संतन्वन्तः प्रजातन्तून् सुखं दुःखं भवाभवौ । प्राप्तं प्राप्तं च सेवन्तो मच्चित्ता विचरिष्यथ ॥२१॥

---

पश्यन्तीत्यर्थः ॥ १० ॥ वयमिति युग्मम् । हे प्रभो ! पुरा राज्यकाले अस्या भूमेः विजिगीषया पुरो वर्तमानं मृत्युरूपं त्वामपि अविगणय्य तुच्छीकृत्य प्रजा ध्वन्तः करादिना पीडयन्तः ये वयं दुर्मदा मदोन्मत्ता जाताः हे कृष्ण ते एव वयमद्य कालेन विनष्टदर्पाः सन्तः ते चरणौ स्मराम स्मर्तुमाशास्महे इति द्वयोरन्वयः। आशिषि लोट् । घ्नन्त इत्यत्र हेतुः । अतिनिर्घृणाः अतिनिर्दयाः। कुतः। श्रीमदेति । तत्कुतः। रंहसा अलक्ष्यवेगेन कालेन श्रियो विचालिता पृथक् कृताः । दुरन्तमनन्तम् ॥ ११ ॥ १२ ॥ अत एव अथो अनन्तरं रुजां रोगाणां भुवा जन्मक्षेत्रेण देहेन उपासितव्यं सेव्यं मृगतृष्णासदृशं राज्यं न स्पृहयामहे प्रेत्य परलोके च सेव्यं क्रियाफलं स्वर्गादिभोगमपि न स्पृहयामहे । कथंभूतम् । कर्णयोः रोचनं केवलं रुच्युत्पादकम् । शश्वत्पतता प्रतिक्षणं क्षीयमाणेन देहेन ॥ १३ ॥ इह संसारे संसरतां नानायोनिषु भ्रमतामपि यथा स्मृति न विरमेत न च लुप्येत तमुपायं समादिश बोधय ॥१४॥ प्रणतानां शरणागतानां क्लेशं नाशयतीति तथा ॥ १५ ॥ श्लक्ष्णमा मधुरया ॥ १६ ॥ यथा भवद्भिः आशंसितं प्रार्थितं तथा वो युष्माकं मयि भक्तिः जायतां वाढं निश्चितम् ॥ १७ ॥ हे भूपा भवन्तः सत्यभाषिणः अतः यत् भवतां व्यवसितं संकल्पितं तत् दिष्टचा शोभनमेव यतः श्रिया हेतुभूतेन नृणाम् ऐश्वर्यमदाभ्यामुन्नाहम् मर्यादोल्लङ्घनम् उन्मादकं पश्ये पश्यामि स्वार्थे कः ॥ १८ ॥ हैहयादयः श्रीमदात् हेतोः स्थानात् भ्रंशिताः तथा अपरेऽपि त्रिशंक्वादयः। हैहयः कार्तवीर्यः वसिष्ठस्य कामधेनुहरणात् परशुरामेण सपुत्रो हतः । नहुषः शचीमभिलषन् अजगरत्वं प्राप्तः । वेनो धर्मं ब्राह्मणांश्च अधिक्षिपन् हुङ्कारैर्हतः । रावणः सीतामभिलषन् रामेण हतः । नरकस्तु अदितिकुण्डलाहरणान्मयैव हतः ॥ १९ ॥ हे भवन्तः । एतत् उत्पाद्यं जन्यं यत् देहादि तत् अन्तवत्

उदासीनाश्च देहादावात्मारामा धृतव्रताः । मय्यावेश्य मनः सम्यङ् मामन्ते ब्रह्म यास्यथ ॥२२॥

श्रीशुक उवाच

इत्यादिश्य नृपान् कृष्णो भगवान् भुवनेश्वरः । तेषां न्ययुङ्क्त पुरुषान् स्त्रियो मज्जनकर्मणि ।२३

सपर्यां कारयामास सहदेवेन भारत । नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥२४॥

भोजयित्वा वरान्नेन सुस्नातान् समलङ्कृतान् । भोगैश्च विविधैर्युक्तांस्ताम्बूलाद्यैर्नृपोचितैः ।२५

ते पूजिता मुकुन्देन राजानो मृष्टकुण्डलाः । विरेजुर्मोचिताः क्लेशात् प्रावृडन्ते यथा ग्रहाः ।२६।

रथान् सदश्वानारोप्य मणिकाञ्चनभूषितान् । प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान् प्रत्ययापयत् ।२७।

त एवं मोचिताः कृच्छ्रात् कृष्णेन सुमहात्मना । ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः ॥२८॥

जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् । यथान्वशासद् भगवांस्तथा चक्रुरतन्द्रिताः ॥२९॥

जरासंधं घातयित्वा भीमसेनेन केशवः । पार्थाभ्यां संयुतः प्रायात् सहदेवेन पूजितः ॥३०॥

गत्वा ते खाण्डवप्रस्थं शङ्खान् दध्मुर्जितारयः । हर्षयन्तः स्वसुहृदो दुर्हृदां चासुखावहाः ॥३१॥

तच्छ्रुत्वा प्रीतमनस इन्द्रप्रस्थनिवासिनः । मेनिरे मागधं शान्तं राजा चाप्तमनोरथः ॥३२॥

अभिवन्द्याथ राजानं भीमार्जुनजनार्दनाः । सर्वमाश्रावयांचक्रुरात्मना यदनुष्ठितम् ॥३३॥

निशम्य धर्मराजस्तत् केशवेनानुकम्पितम् । आनन्दाश्रुकलां मुञ्चन् प्रेम्णा नोवाच किंचन ॥३४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे कृष्णाद्यागमने त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

विज्ञाय यज्ञैः मां यजन्तः प्रजा रक्षत यूयमिति शेषः। सामीप्ये लट् ॥२०॥ प्रजातन्तून् पुत्र-पौत्रादिसन्ततीः सन्तन्वन्तः विस्तारयन्तः सुखदुःखे भवाभवौ सम्पद्विपदौ च सेवन्तः मच्चित्ताः सन्तः विचरिष्यथ कालं यापयिष्यथ ॥२१॥ उदासीनाः आसक्तिरहिताः । सम्यक् निर्वासनम् मनः । अन्ते देहावसाने मां प्राप्स्यथ ॥ २२ ॥ मज्जनकर्मणि स्नानादिकर्मणि स्त्रींश्च नियुक्तवान् ॥ २३ ॥ सहदेवेन जरासन्धपुत्रेण प्रयोज्यकर्त्रा सपर्यां सत्कारम् ॥२४॥ वरान्नेन पायसादिना । अमृतं क्षीरभोजनम्' इत्युक्तेः ॥ २५ ॥ ते राजानः विरेजुः प्रावृडन्ते शरत्काले यथा ग्रहाः चन्द्रादयः विराजन्ते तथा । प्रावृट् वर्षर्तुः ॥२६॥ राज्ञः रथान् आरोप्य रथेषूपवेश्य सूनृतैः मधुरवाक्यैः प्रीणय्य हर्षयित्वा च स्वस्वदेशान् प्रत्ययापयत् प्रेषयामास ॥ २७ ॥ सुमहान् अतिदयालुः आत्मा चित्तं स्वभावो वा यस्य तेन कृष्णेन मोचितास्ते नृपाः तमेव ध्यायन्तः तस्य कृतानि चरितानि गायन्त ययुरित्यन्वयः । ॥२८॥ ते नृपा :प्रकृतिभ्यः अमात्यादिभ्यः चेष्टितम् ऊचुः यथा च अन्वशासत् शिक्षितवान् तथा चक्रुः अतन्द्रिताः आलस्यरहिताः सन्तः ॥२९॥ भीमसेनेन प्रयोज्यकर्त्रा पार्थाभ्यां भीमार्जुनाभ्यां संयुतः कृष्णः इन्द्रप्रस्थं प्रायात् प्रत्यागमत् ॥ ३० ॥ ते कृष्णार्जुनभीमाः खाण्डवप्रस्थम् इन्द्रप्रस्थं गत्वा दुर्हृदां शत्रूणाम् असुखं दुःखमावहन्ति प्रापयन्तीति तथा । शंखान् दध्मुः ध्वनयामासुः ॥३१॥ शान्तं मृतम् । आप्तमनोरथः पूर्णमनोरथो जातः ॥ ३२॥ आत्मना यत् अनुष्ठितं तत्सर्वमित्यन्वयः ॥ ३३ ॥ केशवेन अनुकम्पितं कृपया सम्पादितम् । प्रेम्णा किञ्चित् नोवाच मनोरथ साफल्यात् तूष्णीमासेत्यर्थः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे गूढार्थदीपिन्यां त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

## अथ चतुःसप्ततितमोऽध्यायः

### श्रीशुक उवाच

एवं युधिष्ठिरो राजा जरासंधवधं विभोः। कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥१॥

### युधिष्ठिर उवाच

ये स्युस्त्रैलोक्यगुरवः सर्वे लोकमहेश्वराः। वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥२॥

स भवानरविन्दाक्षो दीनानामीशमानिनाम्। धत्तेऽनुशासनं भूमंस्तदत्यन्तविडम्बनम् ॥३॥

न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः। कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥४॥

न वै तेऽजित भक्तानां ममाहमिति माधव। त्वं तवेति च नानाधीः पशूनामिव वैकृती ॥५॥

### श्रीशुक उवाच

इत्युक्त्वा यज्ञिये काले वव्रे युक्तान् स ऋत्विजः। कृष्णानुमोदितः पार्थो ब्राह्मणान् ब्रह्मवादिनः

द्वैपायनो भरद्वाजः सुमन्तुर्गौतमोऽसितः। वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥७॥

विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः। पैलः पराशरो गर्गो वैशम्पायन एव च ॥८॥

अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः। वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः ॥९॥

उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः। धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥१०॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः। तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ॥११॥

ततस्ते देवयजनं ब्राह्मणाः स्वर्णलाङ्गलैः। कृष्ट्वा तत्र यथाम्नायं दीक्षयाञ्चक्रिरे नृपम् ॥१२॥

---

चतुर्युक्सप्ततितमे श्रीकृष्णस्याग्रपूजनम्।
यज्ञे चैद्यवधः पश्चात् द्वारकागमनं हरेः ॥ १ ॥

कृष्णस्य चानुभावमिति चकारात् तस्य स्वाज्ञानुवर्तित्वं चालक्ष्येत्यर्थः। तं श्रीकृष्णम् ॥१॥ ये गुरवः पूज्या ब्रह्मादयः ये च लोकपाला महेश्वरा इन्द्रादयः ते सर्वे तव अनुशासनं वहन्ति पालयन्ति ॥२॥ स भवान् दीनानामज्ञानाम्। हे अस्माकमनुशासनं धत्ते अनुसरति तत् अत्यन्तविडम्बनमननुरूपमेव वात्सल्यद्योतकत्वात्। दीनानामज्ञानाम्। हे भूमन् अपरिच्छिन्नमहिमन् ।३। तव तेजः कर्मभिः उत्कृष्टनिकृष्टैः न वर्धते न च ह्रसति यथा रवेरुदयास्तमर्यादि 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतेः ॥ ४ ॥ हे अजित ! यथा पशूनामज्ञानां वैकृती शरीर-कर्मभिः। वैकृतीति पाठः प्रशस्तः ॥५॥ यज्ञिये विषया नाना धीः भवति तथा तव भक्तानां तु न वै नैव किमुत तवेत्यर्थः वैकृतीति पाठः प्रशस्तः ॥५॥ यज्ञिये यज्ञार्हे वसन्तादिकाले युक्तान् अभियुक्तान् वव्रे वरणीकृतवान्। ऋत्विजः होतृप्रमुखान्। ब्रह्मविदः वेदज्ञान्। ॥ ६ ॥ ऋत्विजो नामतो निर्दिशिति। द्वैपायन इति त्रयेण। अकृतव्रणान्ता ऋत्विजो वृताः। भार्गवो भृगुवंशोयो रामः परशुरामः इत्येकं नाम ॥ ७ ॥ ८ ॥ ९ ॥ उपहूता इति युग्मम्। प्रकृतयोऽमात्यादयः। ईयुः आजग्मुः ॥ १० ॥ ११ ॥ देवा इज्यन्तेऽस्मिन्निति देवयजनं यज्ञस्थलं कृष्ट्वा कर्षणादिना संशोध्य नृपं यज्ञीय-दीक्षासङ्कल्पयुक्तमकुर्वन्। यथाम्नायं यथाशास्त्रम् ॥१२॥ हैमा इत्यर्द्धम्। हैमाः स्वर्णमयाः पात्रादयः यथा

हैमाः किलोपकरणा वरुणस्य यथा पुरा । ॥१३॥

इन्द्रादयो लोकपाला विरिञ्चभवसंयुताः । सगणाः सिद्धगन्धर्वा विद्याधरमहोरगाः ॥१४॥

मुनयो यक्षरक्षांसि खगकिन्नरचारणाः । राजानश्च समाहूता राजपत्न्यश्च सर्वशः ॥१५॥

राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै । मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ॥१६॥

अयाजयन् महाराजं याजका देववर्चसः । राजसूयेन विधिवत् प्रचेतसमिवामराः ॥१७॥

सौत्येऽहन्यवनीपालो याजकान् सदसस्पतीन् । अपूजयन्महाभागान् यथावत् सुसमाहितः ॥१८॥

सदस्याग्र्यार्हणार्हं वै विमृजन्तः सभासदः । नाध्यगच्छन्ननैकान्त्यात् सहदेवस्तदाब्रवीत् ॥१९॥

अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान् सात्वतां पतिः । एष वै देवताः सर्वा देशकालधनादयः ॥२०॥

यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः । अग्निराहुतयो मन्त्राः सांख्यं योगश्च यत्परः ॥२१॥

एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् । आत्मनाऽऽत्माश्रयः सभ्याः सृजत्यवति हन्त्यजः ॥

विविधानीह कर्माणि जनयन् यदवेक्षया । ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम् ॥२३॥

तस्मात् कृष्णाय महते दीयतां परमार्हणम् । एवं चेत् सर्वभूतानामात्मनश्चार्हणं भवेत् ॥२४॥

सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने । देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता ॥२५॥

इत्युक्त्वा सहदेवोऽभूत् तूष्णीं कृष्णानुभाववित् । तच्छ्रुत्वा तुष्टुवुः सर्वे साध्विति सत्तमाः २६॥

श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम् । समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः ॥२७॥

---

वरुणस्य राजसूये तथाऽत्राप्यासन् ॥ १३ ॥ इन्द्रादय इति त्रयम् । ये समीयुः आजग्मुः ते सर्वे राजसूयं सूपपन्नं सुसम्पन्नं मेनिरे स्म प्रसिद्धौ वै एवार्थे ॥ १४ ॥ १५ ॥ १६ ॥ याजका ऋत्विजः । यथा अमरा प्रचेतसं वरुणम् । अयमेव पाठः न तु प्राचेतसमिति ॥ १७ ॥ षुञ् अभिषवे इत्यस्मात् सुत्यं तस्मिन्नहनि सोमलताभिषेकदिने । अयं दिव्यौषधिः सम्प्रति विरलैरेव भिषग्भिर्दृश्यो भवति । अवनीपालो युधिष्ठिरः ॥ १८ ॥ सदसि अग्रार्हणमग्रपूजायोग्यं विचारयन्तोऽपि सभ्या यदा तं नाध्यगच्छन् न निश्चितवन्तः । कुतः । अनैकान्त्यात् योग्यबाहुल्येन एकस्यानिश्चयात् तदा सहदेवः माद्रीपुत्रः पूजायां प्राप्ताधिकारत्वात् व्यासाज्ञया अब्रवीत् । अग्र्येति यकारघटितोऽपपाठः । स्वेनैव स्वीयप्रशंसाया अनौचित्यात् स्वारस्यभङ्गाच्च जरासन्धपुत्र एव ग्राह्यः इति केचित् । 'अन्तो निश्चये इति हेमः । स्वार्थे व्यम् ॥ १९ ॥ श्रेष्ठस्येदं श्रैष्ठ्यमग्रपूजनम् । सात्वतां ब्रह्मविदाम् । देवता देवतादिरूपः एतच्छब्दस्यैण तेषां देवादित्वम् ॥ २० ॥ यदात्मकं यत्स्वरूपम् । यत्परः यत्प्रतिपादनपरः ॥ २१ ॥ हे सभ्याः एक एव असौ अजः स्वयमात्मना स्वशक्त्या इदं जगत् सृजति अतो जगत् एतच्छक्त्या कार्यत्वादैतदात्म्यम् । एष श्रीकृष्णः आत्मा यस्य तत् एतदात्मम् एतत्स्वरूपमेव स्वार्थे ष्यम् आत्माश्रयः स्वतन्त्रः अद्वितीयः सजातीयविजातीयभेदरहितः ॥ २२ ॥ यस्य अवेक्षया प्रेरणया अनुग्रहेण वा सर्वोऽपि जनः कर्माणि कुर्वन् यस्यादेव धर्मादेः श्रेय फलमीहते साधयति प्राप्नोतीतात्पर्यः ॥२३॥ यतोऽसौ कर्मफलदाता तस्मात् हेतोः कृष्णाय परमार्हणमग्रपूजनं दीयताम् एवं चेत् आत्मनः पूजकस्य च अर्हणं तृप्तिजनकं भवेत् ॥ २४ ॥ आत्मभूताय अन्तर्यामिणे । अनन्यदर्शिने भेददृष्टिरहिताय । आनन्त्यम् अक्षयत्वमिच्छता ॥२५॥ साधूक्तं साधूक्तमिति वदन्त सर्वे सत्तमा श्रेष्ठा-मुन्यादयः अन्वमोदन् तुष्टुवुश्च ॥ २६ ॥ हार्दं हृद्गताभिप्रायम् ।

तत्पादाववनिज्यापः शिरसा लोकपावनीः । सभार्यः सानुजामात्यः सकुटुम्बोऽवहन्मुदा २८
वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः । अर्हयित्वाश्रुपूर्णाक्षो नाशकत् समवेक्षितुम् २९
इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः । नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः ॥३०॥

इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावयन् भगवते परुषाण्यभीतः ॥३१॥

ईशो दुरत्ययः काल इति सत्यवती श्रुतिः । वृद्धानामपि यद् बुद्धिर्बालवाक्यैर्विभिद्यते ॥३२॥
यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् । सदसस्पतयः सर्वे कृष्णो यत् सम्मतोऽर्हणे॥३३॥
तपोविद्याव्रतधरान् ज्ञानविध्वस्तकल्मषान् । परमर्षीन् ब्रह्मनिष्ठान् लोकपालैश्च पूजितान्॥३४॥
सदस्पतीनतिक्रम्य गोपालः कुलपांसनः । यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥३५॥
वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः । स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥३६॥
ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् । वृथापानरतं शश्वत् सपर्यां कथमर्हति ॥३७॥
ब्रह्मर्षिसेवितान् देशान् हित्वैतेऽब्रह्मवर्चसम् । समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥३८॥

---

संमार्हयत् पूजयामास ॥ २७ ॥ राजा सकुटुम्बः पादौ प्रक्षाल्य ताः अपः शिरसा अवहत् धारयामास ॥ २८ ॥ महाधनैः बहुमूल्यैः भूषणैः अर्हयित्वा पूजयित्वा द्रष्टुं न शशाक यतोऽश्रुपूर्णाक्षः ॥ २९ ॥ कृष्णं सभाजितं पूजितं वीक्ष्य सर्वे प्राञ्जलयः सन्तः नमो नमो जय जय इति वदन्तः नेमुः । तदैव खात् आकाशात् पुष्पवृष्टयश्च-पेतुः ॥ ३० ॥ इत्थं निशम्य दमघोषसुतः शिशुपालः बाहुमुत्क्षिप्य सदसि अभीतः सन् इदं वक्ष्यमाणमाहेत्यन्वयः । किं कुर्वन् सन्। भगवते परुषाणि कटुवचनानि संश्रावयन् । कथंभूतः । कृष्णगुणवर्णनेन जातो मन्युर्यस्य सः अमर्षी प्रशंसाम् असहमानः ॥३१॥ कालः ईशः सर्वसमर्थः दुरत्ययोऽनुलङ्घ्यः । बालवाक्यैः अज्ञवाक्यैः विभिद्यते विपरीता क्रियते ॥ ३२ ॥ हे सदसस्पतयः । सर्वे यूयम् बालभाषितं मा मन्यध्वं किन्तु सत्यमेव । यत् अर्हणे सम्मत एव ॥३३॥ तप इति युग्मम् । कुलं क्षत्रियकुलं पांसयति समाघातयति । पसि समाघाते धातुः । यद्वा । कुलस्य पांसुं धूलिं करोतीति । पांसुशब्दात् तत्करोतीति णिच् ल्युट् । पुरोडाशं देवभोग्यम् । तण्डुलपिष्टनिर्मित-कूर्माकारो बलिः पुरोडाश उच्यते । वस्तुतस्तु कुत्सितं वेदविपरीतं लयन्तीति कुलपाःपाखण्डाः तान् अंसयति समाघातयतीति तथा । अंस समाघाते धातुः । यथा यथावत् गोपालः वेदपालकः । न विद्यते कं सुखमकं दुःखं च यस्य स काकः पूर्णकामः स सपर्यामात्रं कथमपि तु आत्मसर्पणमपि ॥३४॥३५॥ निन्दाभ तु स्पष्टैव । स्तुतिस्तु । अपेतो हीनो निर्गुणत्वात् ब्रह्मत्वाच्च 'अनामगोत्रम्' इति श्रुतेः । अत एव अनधिकारित्वात् बहिष्कृतः । अत एव च जीवभोग्यं तुच्छं सपर्यामात्रं कथमर्हति ॥३६॥ ययातिना शप्तमपि कुलं किं बहिष्कृतं नेत्यर्थः । अपितु शिरसा धृतम् । पाने पृथ्वीपालने रतमासक्तम् । वृथा कथमपि तु सफलमेव । निन्दापक्षे तु वृथा[1]पाने मद्यपाने ॥ ३७ ॥ देशान् मथुराप्रदेशान् हित्वा अब्रह्मवर्चसं ब्रह्मतेजोनाशकं दुर्गं दुर्गमं समुद्रमाश्रित्य दस्यव इव यादवा प्रजा बाधन्ते । वस्तुतस्तु देशान् हित्वा[2] पोषयित्वा ब्राह्मतेजश्च सम्पोष्य समुद्रं दुर्गं द्वारकामाश्रित्य दस्युरूपा मादृश्यः दुष्टाः प्रजाः ता एव बाधन्ते दण्डयन्ति अत एव दस्युनाशात् स्वयम् अदस्यवः दस्युरहिता जाता 'सरसामपि सागरः' इति गीतोक्तेः समुद्रस्य भगवद्रूपत्वात् ब्रह्मतेजस्त्वं सुस्थिरमेव ॥ ३८ ॥

---

१. वृथापानं तु देवेशि सुरापानं प्रकीर्तितम् । तन्महापातकं ज्ञेयमिति वेदे निरूपितम् ॥ इति मेरुतन्त्रे ।
२. 'डुधाञ् धारणपोषणयोः' धातुः ।

एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः । नोवाच किञ्चिद् भगवान् यथा सिंहः शिवारुतम् ॥
भगवन्निन्दनं श्रुत्वा दुःसहं तत्सभासदः । कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा ॥४०॥
निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा । ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः॥४१।
ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकयसृञ्जयाः । उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥४२॥
ततश्चैद्यस्त्वसम्भ्रान्तो जगृहे खड्गचर्मणी । भर्त्सयन् कृष्णपक्षीयान् राज्ञः सदसि भारत ॥४३॥
तावदुत्थाय भगवान् स्वान् निवार्य स्वयं रुषा । शिरः क्षुरान्तचक्रेण जहारापततो रिपोः॥४४॥
शब्दः कोलाहलोऽप्यासीत् शिशुपाले हते महान् । तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः॥४५॥
चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् । पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥४६॥
जन्मत्रयानुगुणितवैरसंरब्धया धिया । ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ॥४७॥
ऋत्विग्भ्यः ससदस्येभ्यो दक्षिणां विपुलामदात् । सर्वान् सम्पूज्य विधिवच्चक्रेऽवभृथमेकराट्।४८।
साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः । उवास कतिचिन्मासान् सुहृद्भिरभियाचितः॥४९॥
ततोऽनुज्ञाप्य राजानमनिच्छन्तमपीश्वरः । ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः ॥५०॥
वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् । वैकुण्ठवासिनोर्जन्म विप्रशापात् पुनः पुनः ॥५१॥
राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः । ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥५२॥
राज्ञा सभाजिताः सर्वे सुरमानवखेचराः । कृष्णं क्रतुं च शंसन्तः स्वधामानि ययुर्मुदा ॥५३॥

---

नष्टमङ्गलः नष्टपुण्यः । शिवारुतं शृगालीशब्दं श्रुत्वा यथा सिंहो न किञ्चित् ब्रूते ॥ ३९ ॥ तत्सभायां सीदन्तीति तथा । चेदिपं शिशुपालं शपन्तः म्रियतामयं दुरात्मा इत्याक्रोशन्तः ततः सभातः निर्जग्मुः ॥ ४० ॥ तत्परस्य भगवद्भक्तस्य । ततः स्थानात् नापैति नापगच्छति सोऽपि तद्भक्तहरिनिन्दाश्रोताऽपि अधो नरकं याति निन्दकस्तु यात्येव ॥ ४१ ॥ जिघांसवः शिशुपालं हन्तुमिच्छवः । ततो निन्दाश्रवणात् मत्स्यादयः पाण्डवपक्षीयाः ॥ ४२ ॥ असंभ्रान्तो निर्भयः ॥ ४३ ॥ तावत् तत्क्षणमेव आपततः हन्तुमागच्छतः रिपोः शिरः जहार चिच्छेद । केन । क्षुरस्येव अन्तो धारा यस्य तेन चक्रेण । एष मत्पार्षदो महाबलः सर्वानेव हन्यादतो मयैव हन्तव्य इति तावदित्यस्य तात्पर्यम् ॥४४॥ शब्द इति स्पष्टम् ॥ ४५ ॥ ज्योतिः जीवाख्यम् । यथा खात् आकाशात् च्युता उल्का[1] ज्वाला भुवि प्रविशति तद्वत् ॥ ४६ ॥ जन्मत्रये अनुगुणितं दृढीकृतं यत् वैरं तेन संरब्धया आविष्टया धिया कृष्णं ध्यायन् तन्मयतां तत्सरूपतां पार्षदभावम् प्राप्तः । भावो भावना भवस्य जन्मनः कारणम् । यं यं वापि स्मरन् भावम् इति गीतोक्तेः । अत्र पेशस्कारिदृष्टान्तोऽनुसर्तव्यः ॥ ४७ ॥ दिग्विजयत्वात् एक एव राजते इत्येकराट् चक्रवर्ती युधिष्ठिरः । अवभृथं यज्ञान्तस्नानं चक्रे ॥ ४८ ॥ साधयित्वा सम्पन्नं कृत्वा ॥४९॥ स्वपुरं द्वारकाम् अनुज्ञाप्य पृष्ट्वा ॥ ५० ॥ वैकुण्ठवासिनोः जयविजययोः ॥ ५१ ॥ आवभृथ्येन यज्ञसम्बन्धिस्नानेन । सुरराट् इन्द्र इव ॥ ५२ ॥ सभाजिताः सम्पूजिताः खे आकाशे चरन्तीति खेचराः प्रमथादयः । शसन्तः प्रशंसन्तः ॥ ५३ ॥ दुर्योधनम् ऋते विना सर्वे प्रशंसन्तःययुरिति पूर्वेणान्वयः ।

---

१. 'उल्का स्यान्निर्गतज्वाला' इत्यमरः ।

दुर्योधनमृते पापं कलिं कुरुकुलामयम् । यो न सेहे श्रियं स्फीतां दृष्ट्वा पाण्डुसुतस्य ताम् ॥५४॥
य इदं कीर्तयेद् विष्णोः कर्म चैद्यवधादिकम् । राजमोक्षं वितानं च सर्वपापैः प्रमुच्यते ॥५५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे शिशुपालवधो नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

कुरुकुलस्य आमयं रोगवन्नाशकम् । कलिं कलेरंशम् । पापं पापिनम् अर्शआद्यजन्तः । यो दुर्योधनः स्फीतां समृद्धां दृष्ट्वा न सेहे । स्फायी ओप्यायी वृद्धौ इति धातुः ॥ ५४ ॥ वितानं यज्ञं च । 'क्रतुविस्तारयोरस्त्रीवितानम्' इत्यमरः । राज्ञां जरासन्धनिरुद्धानां राज्ञां मोक्षम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## अथ पञ्चसप्ततितमोऽध्यायः

### राजोवाच

अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् । सर्वे मुमुदिरे ब्रह्मन् नृदेवा ये समागताः ॥१॥
दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः । इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥२॥

### ऋषिरुवाच

पितामहस्य ते यज्ञे राजसूये महात्मनः । बान्धवाः परिचर्यायां तस्यासन् प्रेमबन्धनाः ॥३॥
भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः । सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥४॥

---

पञ्चसप्ततितमे क्रतुराजस्नानदानसुमहोत्सव उक्तः ।
दृग्भ्रमात्सदसि संपततोऽस्यातोषहेतुरिह मानविभङ्गात् ॥ १ ॥

अजातशत्रोरिति युग्मम् । नृदेवा राजानः नरश्च देवाश्चेति वा । अजामविद्यां कलहं तनोति विस्तारयतीति अजातः कलिः तद्रूपो दुर्योधनः शत्रुः यस्य । यद्वा । अजातः श्रीकृष्णः तेन हताः शत्रवो यस्य सः । मध्यमपदलोपी समासः । यद्वा । शत्रुरिति भावप्रधानो निर्देशः न जातं शत्रुत्वं यस्य सः । वस्तुतस्तु । 'दुर्योधनादयः सर्वे त्वजाता जज्ञिरे घटात्' इति भारतोक्तेः 'अजाता दुर्योधनादयः शत्रवो यस्येति । ये समागतास्ते सर्वे मुमुदिरे एकं वर्जयित्वा इति नोऽस्माभिः त्वत्तः श्रुतं तत्र दुर्योधनस्य असन्तोषे कारणमुच्यताम् ॥ १ ॥ २ ॥ तदेव स्पष्टयति-पितेत्यादिना । महात्मनः उदारचित्तस्य 'उदारो दातृमहतोः' इति कोशः ॥३॥ महानसं[1] पाकशाला । धनाध्यक्षः दुर्योधनः तद्धस्ते धनवर्द्धिनी रेखाऽऽसीदतः श्रीकृष्णाज्ञया स एवात्र नियुक्तः इति रहस्यं तद्धस्तगतधनस्याक्षयत्वादिति वंशीधरी । साधने यज्ञीवस्तुसम्पादने ॥ ४ ॥ जिष्णुः

---

१. 'महानसं पाकशाला प्रभूतशकटालये' इति निरुक्तिः ।

गुरुशुश्रूषणे जिष्णुः कृष्णः पादावनेजने । परिवेषणे द्रुपदजा कर्णो दाने महामनाः ॥५॥
युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः । बाह्लीकपुत्रा भूर्याद्या ये च सन्तर्दनादयः ॥६॥
निरूपिता महायज्ञे नानाकर्मसु ते तदा । प्रवर्तन्ते स्म राजेन्द्र राज्ञः प्रियचिकीर्षवः ॥७॥

ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः ।
चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥८॥

मृदङ्गशङ्खपणवधुन्धुर्यानकगोमुखाः । वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥९॥
नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः । वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥१०॥
चित्रध्वजपताकाग्रैरिभेन्द्रस्यन्दनार्वभिः । स्वलङ्कृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥११॥
यदुसृञ्जयकाम्बोजकुरुकेकयकोसलाः । कम्पयन्तो भुवं सैन्यैर्यजमानपुरःसराः ॥१२॥
सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा । देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ॥१३॥
स्वलङ्कृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः । विलिम्पन्त्योऽभिषिञ्चन्त्यो विजह्रुर्विविधै रसैः ॥
तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः । पुम्भिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः ॥१५॥

गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद् देव्यो यथा दिवि विमानवरैर्नृदेव्यः ।
ता मातुलेयसखिभिः परिषिच्यमानाः सव्रीडहासविकसद्वदना विरेजुः ॥१६॥
ता देवरानुत सखीन् सिषिचुर्दृतीभिः क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ।
औत्सुक्यमुक्तकबराच्च्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥१७॥

---

अर्जुनः । पादावनेजने पादप्रक्षालने । णिजिर' शौचे धातुः ल्युट् ॥५॥ युयुधानः सात्यकिः विकर्णो दुर्योधनभ्राता । हार्दिक्यः कृतवर्मा । सन्तर्दनः पृथाभागिनेयः ॥ ६ ॥ ७ ॥ ऋत्विगादिषु सूनृतादिभिः स्विष्टेषु सम्यक् पूजितेषु सत्सु सर्वे द्युनद्यां[1] गत्वा अवभृथस्नपनं यज्ञान्तस्नानं चक्रुरित्यन्वयः । कदा । चैद्ये शिशुपाले सात्वतपतेः यदुपतेः श्रीकृष्णस्य चरणं प्रविष्टे सति । सूनृतं मधुरवाणी । समर्हणमलङ्कारादि ॥ ८ ॥ अवभृथसम्बन्धिनि उत्सवे धुन्धुरी वाद्यभेदः ॥९॥ तेषां तासां च तेषाम् । 'पुमान् स्त्रिया' इत्येकशेषः तेषां वाद्यानां वा दिवमन्तरिक्षम् ॥१०॥ इभेन्द्रैः स्यन्दनैः अर्वभिः अश्वैः भटैश्च एवं चतुरङ्गैः सैन्यैः सह ते भूपाः स्नानार्थं निर्ययुरित्यन्वयः । पताका जयशब्दाङ्किता ध्वजस्तत्सहितः रुक्मं सुवर्णम् । व्रीह्यादित्वादिनिः ॥११॥ यजमानो युधिष्ठिरः तत्पुरःसराः तेऽपि सैन्यैःसह निर्ययुरिति पूर्वेणान्वयः ॥१२॥ द्विजश्रेष्ठा अपि भूयसा महता ब्रह्मघोषेण वेदध्वनिना सह निर्ययुः ॥१३॥ विविधैः रसैः केशरजलादिभिः नरा नार्यश्च परस्परं अभिषिञ्चन्त्यः विजह्रुः । कुङ्कुमादिभिः मुखं विलिम्पन्त्यः ॥ १४ ॥ किञ्च सान्द्रकुङ्कुमादिभिः पुम्भिर्लिप्ताः तान् प्रलिम्पन्त्यो वारयोषितो देवाङ्गना अप्सरसो वा न तु वेश्या विजह्रुः ॥१५॥ यथा एतत् अवभृथस्थानम् उपलब्धुं द्रष्टुं विमानैः दिवि आकाशे देव्यो देवाङ्गना निर्जग्मुः तथा नृभिः भटैः गुप्ता नृदेव्यो युधिष्ठिरपत्न्योऽपि रथादिभिः निरगमन्नित्यन्वयः । कथंभूताः नृदेव्यः । मातुलेयैः मातुलपुत्रैः कृष्णगदादिभिः सखिभिः भीमादिभिश्च परिषिच्यमानाः अत एव सव्रीडेन हासेन विकसन्ति प्रफुल्लानि वदनानि यासां ता विरेजुः ॥ १६ ॥ ता नृदेव्यः देवरान् प्रति भ्रातॄन् उत अपि सखीनपि दृतीभिः सेचनवंशिकाभिः[2] सिषिचुरित्यन्वयः । कथंभूताः । क्लिन्नाम्बराः आर्द्रशाटिकाः ।

---

१. गङ्गायामेव तस्य विधानात् । अनेन गंगाया आविर्भावादलौकिकसामर्थ्यं च ध्वनितम् । २. पिचकारी इति ।

स सम्राड् रथमारूढः सदश्वं रुक्ममालिनम् । व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव॥१८॥

पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः । आचान्तं स्नापयांचक्रुर्गङ्गायां सह कृष्णया ॥१९॥

देवदुन्दुभयो नेदुर्नरदुन्दुभिभिः समम् । मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥२०॥

सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः । महापातक्यपि यतः सद्यो मुच्येत किल्बिषात् ॥२१॥

अथ राजाहते क्षौमे परिधाय स्वलंकृतः । ऋत्विक्सदस्यविप्रादीनानर्चाभरणाम्बरैः ॥२२॥

बन्धुज्ञातिनृपान् मित्रसुहृदोऽन्यांश्च सर्वशः । अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥२३॥

सर्वे जनाः सुररुचो मणिकुण्डलस्रगुष्णीषकञ्चुकदुकूलमहार्घ्यहाराः ।

नार्यश्च कुण्डलयुगालकवृन्दजुष्टवक्त्रश्रियः कनकमेखलया विरेजुः ॥२४॥

अथर्त्विजो महाशीलाः सदस्या ब्रह्मवादिनः । ब्रह्मक्षत्रियविट्शूद्रा राजानो ये समागताः ॥२५॥

देवर्षिपितृभूतानि लोकपालाः सहानुगाः । पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥२६॥

हरिदासस्य राजर्षे राजसूयमहोदयम् । नैवातृप्यन् प्रशंसन्तः पिबन् मर्त्योऽमृतं यथा ॥२७॥

ततो युधिष्ठिरो राजा सुहृत्सम्बन्धिबान्धवान् । प्रेम्णा निवासयामास कृष्णं च त्यागकातरः ॥

भगवानपि तत्राङ्ग न्यवात्सीत्तत्प्रियङ्करः । प्रस्थाप्य यदुवीरांश्च साम्बादींश्च कुशस्थलीम् ॥२९॥

---

पुनश्च । विवृतं व्यक्तीभवत् गात्रं कुचौ ऊरू मध्यभागश्च यासां ताः । पुनश्च । क्रीडौत्सुक्यात् मुक्तकवरेभ्यः शिथिलकेशपाशेभ्यः च्यवमानानि गलितीभवन्ति माल्यानि पुष्पाणि यासां ताः । एवं विहारैः मलधियां कामिनां दुर्योधनादीनां क्षोभं दधुः कामोद्वेगं चक्रुः । मला मलिना कामासक्ता धीर्येषां तेषाम् ॥ १७ ॥ स युधिष्ठिरः सन्त श्रेष्ठाः अश्वा यस्मिन् तं रथमारूढः तथा व्यरोचत यथा क्रतुराट् राजसूयः क्रियाभिः प्रयाजादिभिः विरोचते । रुक्ममालाः स्वर्णमाला अस्य सन्तीति तथा ॥ १८ ॥ पत्नीसंयाजो यागविशेषः अवभृथसम्बन्धिकर्माणि च तैः[1] चरित्वा तानि अनुष्ठाय तं युधिष्ठिरं कृष्णया द्रौपद्या सह स्नापयाञ्चक्रुः । आचान्तं कारिताचमनम् । णिजन्ताच्चमेः क्तः ॥१९॥ समं सह ॥ २० ॥ तत्र सर्वे गङ्गायां सस्नुः स्नानं चक्रुः ॥ २१ ॥ अथ स्नानोत्तरम् । राजा अहते नूतने वाससी । क्षौमे क्षुमा अतसी तन्निर्मिते वस्त्रे परिधाय ऋत्विगादीन् आनर्च भूषणवस्त्रैः ॥ २२ ॥ किं बहुना सर्वशः सर्वानेव ॥ २३ ॥ सर्वे जनाः तथा सर्वा नार्यश्च विरेजुरित्यन्वयः । कथंभूता नराः । सुराणामिव रुक् कान्तिर्येषां ते । पुनश्च मणिकुण्डलैः सहिताः स्रगादयो येषां ते तथाभूताः । कथंभूता नार्यश्च । कुण्डलयुगेन अलकवृन्देन च जुष्टा संवृक्ता मुखश्रीः यासां ताः । कया विरेजुः कनकमेखलया । कञ्चुकः[2] चोलकः कवचं वा ॥ २४ ॥ अथेति युग्मम् महाशीलाः सरलस्वभावाः । महाशाला इति पाठे परमकुलीनाः ये समागताः पूजिताश्च ते सर्वे तं राजानम् अनुज्ञाप्य पृष्ट्वा स्वधामानि ययुरित्यन्वयः ॥ २५ ॥ २६ ॥ महोदयं महोत्सवम् । यथा मर्त्यः मरणधर्मा अमृतं पिबन् न तृप्यति तथा तं प्रशंसन्तः नैवाऽतृप्यन् ॥ २७ ॥ त्यागात् वियोगात् कातरः विह्वलः सन् कृष्णमपि ॥ २८ ॥ अङ्ग हे राजन् ! कुशस्थलीं द्वारकाम् ॥२९॥ कृष्णेन सहायीभूतेन गतज्वरः निश्चिन्तः । ज्वरः सन्तापे धातुः ।

---

१. छान्दसत्वात् कर्मणि तृतीया ।

२. कञ्चुको वारबाणे स्यान्निर्मोके कवचेऽपि च । चोलके च इति विश्वः ।

इत्थं राजा धर्मसुतो मनोरथमहार्णवम् । सुदुस्तरं समुत्तीर्य कृष्णेनासीद् गतज्वरः ॥३०॥
एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् । अतप्यद् राजसूयस्य महित्वं चाच्युतात्मनः ॥३१॥

यस्मिन् नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्मीर्नाना विभान्ति किल विश्वसृजोपक्लृप्ताः ।
ताभिः पतीन् द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥३२॥

यस्मिंस्तदा मधुपतेर्महिषीसहस्रं श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ।
मध्ये सुचारु कुचकुङ्कुमशोणहारं श्रीमन्मुखं प्रचलकुण्डलकुन्तलाढ्यम् ॥३३॥

सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट् । वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥३४॥
आसीनः काञ्चने साक्षादासने मघवानिव । पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च बन्दिभिः ॥३५॥
तत्र दुर्योधनो मानी परीतो भ्रातृभिर्नृप । किरीटमाली न्यविशदसिहस्तः क्षिपन् रुषा ॥३६॥
स्थलेऽभ्यगृह्णाद् वस्त्रान्तं जलं मत्वा स्थलेऽपतत् । जले च स्थलवद् भ्रान्त्या मयमायाविमोहितः ॥
जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयोऽपरे । निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः॥३८॥

स व्रीडितोऽवाग्वदनो रुषा ज्वलन् निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ।
हाहेति शब्दः सुमहानभूत् सतामजातशत्रुर्विमना इवाभवत् ॥३९॥

---

मनस्ताप एव चिन्तापदार्थः ॥ ३० ॥ अच्युते आत्मा मनो यस्य तस्य राज्ञः श्रियं राज्यलक्ष्मीं महित्वं यज्ञवैभवं च वीक्ष्य दुर्योधनः अतप्यत स्वस्य तथाभावादित्यर्थः ॥ ३१ ॥ यस्मिन् अन्तःपुरे विश्वसृजा मयेन दानवेन उपक्लृप्ता रचिताः नरेन्द्रादीनां लक्ष्मीः लक्ष्म्यः विभूतयो नाना भान्ति ताभिः सह द्रुपदसुता द्रौपदी तान् पतीन् उपतस्थे सेवितवती । यस्यां द्रौपद्यामासक्तहृदयः दुर्योधनोऽतप्यदित्यन्वयः ॥ ३२ ॥ तदा महोत्सवे । यस्मिन् अन्तःपुरे मधुपतेः श्रीकृष्णस्य महिषीसहस्रमशोभतेति शेषः । कीदृशम् । तस्य षड् विशेषणानि क्रमेण योज्यानि । तथाहि । श्रोणीभरेण भारेण शनैः शनैः गच्छत् । पुनः । क्वणद्भिः नूपुरैः अङ्घ्रिशोभा यस्य तत् । पुनश्च । मध्ये सुचारु चारुमध्यमित्यर्थः । एदन्तत्वं निपातनात् । पुनः । कुचकुङ्कुमैः शोणा लोहिता हारा यस्य तत् । पुनः । श्रीमन्ति सुन्दराणि मुखानि यस्य तत् । पुनश्च । प्रचलैः कुण्डलैः कैशैश्च आढ्यं सम्पन्नम् ॥३३॥ सभायामिति युग्मम् । क्वापि कदाचित् धर्मसुतो युधिष्ठिरः सभायां काञ्चने सिंहासने आसीनः मघवानिव रेजे इति शेषः । कथंभूतः । चक्षुषा सत्परामर्शदात्रा । कृष्णेन बन्धुभिश्च वृतः । पुनश्च । पारमेष्ठ्यश्रिया राजलक्ष्या जुष्टः सेवितः स्तूयमानश्च । क्लृप्तायां रचितायाम् वन्दिनः स्तुतिपाठकाः ॥ ३४ ॥ ३५ ॥ तत्र सभायां मानी अभिमानी न्यविशत् । किं कुर्वन् । रुषा द्वारपान् क्षिपन् निर्भर्त्सयन् सन् । किरीटं माला च विद्यते यस्य । यद्वा किरीटं मुकुटं मलते धारयतीति तथा । प्रशंसायामिनिः । 'मल मल्ल' धारणे धातुः ॥ ३६ ॥ स्थले जलं मत्वा जले च स्थलं मत्वा अपतद् । किन्च तत्रैव स्थले वस्त्रम् उपर्याकृष्टवान् जले च अधः कृतवानित्येवमार्द्रत्वात् स्पष्टमेव हास्यविषयः ॥ ३७ ॥ निवार्यमाणा अपि सर्वे जहसुः । कुतः । कृष्णेन अनुमोदिताः कटाक्षेण प्रेरिताः सन्तः ॥ ३८ ॥ दुर्योधनः व्रीडितः सन् अधोमुखो भूत्वा समातो निष्क्रम्य तूष्णीमेव गजाह्वयं हस्तिनापुरं प्रययौ । तदा सतां हाहेति भाव्यनर्थसूचकः शब्दोऽभूत् । युधिष्ठिरस्तु अजातशत्रुत्वात् तद्दुःखेन दुःखितमना एवाभवत् । एवार्थे इव शब्द ॥ ३९ ॥ बभूवेत्यर्द्धम् । भगवांस्तु तूष्णींबभूव

बभूव तूष्णीं भगवान् भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥४०॥
एतत्तेऽभिहितं राजन् यत् पृष्टोऽहमिह त्वया । सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥४१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे दुर्योधनमानभङ्गो नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

किञ्चन्नोवाच । भीमं हास्यान्न निवारितवान् दुर्योधनं च न सान्त्वितवान् । कुतः । भुवो भारं कलहबीजेन सम्यक् उद्धर्तुमिच्छुः । दुर्योधनस्तु यस्य भगवतो दृशा भ्रमति स्म भ्रान्तिं प्राप मयदानवमाया तु निमित्तमात्रम् ॥४०॥ राजसूये सुयोधनस्य दौरात्म्यमसन्तोषकारणमुद्दिश्य यत् त्वयाऽहं पृष्टः तत् एतदिति योज्यम् ॥४१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां सहितायां दशमस्कन्धोउत्तरार्द्धे गूढार्थदीपिन्यां पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## अथ षट्सप्ततितमोऽध्यायः

श्रीशुक उवाच

अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप । क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥१॥
शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः । यदुभिर्निर्जितः संख्ये जरासंधादयस्तथा ॥२॥
शाल्वः प्रतिज्ञामकरोत् शृण्वतां सर्वभूभुजाम् । अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥३॥
इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम् । आराधयामास नृप पांसुमुष्टिं सकृद् ग्रसन् ॥४॥
संवत्सरान्ते भगवानाशुतोष उमापतिः । वरेणच्छन्दयामास शाल्वं शरणमागतम् ॥५॥
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् । अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥६॥
तथेति गिरिशादिष्टो मयः परपुरञ्जयः । पुरं निर्माय शाल्वाय प्रादात् सौभमयस्मयम् ॥७॥

---

षट्सप्ततिमे शाल्वो वृष्णिभिर्युयुधे द्युमान् ।
प्रद्युम्नं प्राहरत्सूतो मूर्च्छितं तमपानयत् ॥ १ ॥

अथ राजसूयानन्तरम् । क्रीडार्थं नरशरीरं यस्य तस्य । सौभं तत्संज्ञकं विमानात्मकं पुरं तस्य पतिः । शाल्वः ॥ १ ॥ संख्ये युद्धे । तथा जरासन्धादयोऽपि निर्जिता इति योज्यम् ॥ २ ॥ अयादवीं यदुशून्यां क्ष्मां पृथ्वीं करिष्ये । वस्तुतः । अयः शुभावहो विधिः तेन दैवेन अदवीं तापरहिताम् । 'टुदु' उपतापे धातुः । अपौरुषमितिच्छेदः ॥ ३ ॥ पांसुः धूलिः तस्य मुष्टिं ग्रसन् भक्षयन् ॥ ४ ॥ छन्दयामास वरार्थं प्रेरयामास ॥५॥ कामं यथेच्छं कामेन वा गच्छतीति कामगम् । यानं गमनवत्पुरम् इति धरणिः । वृष्णयो यदुवंशीयाः । अभेद्यं[1] ॥ ६ ॥ सौभं सौभसंज्ञकम् । अयस्मयं लोहमयम् । 'अयस्मयादीनिच्छन्दसि' इति नियमात् सुट् ॥ ७ ॥

---

१, अकारो वासुदेवः तेन भेद्यं च अत एव तत्कृष्णहस्तेरितया विचूर्णितमिति वक्ष्यमाणोक्तेर्न विरोधः ।

स लब्ध्वा कामगं यानं तमोधाम दुरासदम् । ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ॥८॥
निरुध्य सेनया शाल्वो महत्या भरतर्षभ । पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः ॥९॥
सगोपुराणि द्वाराणिप्रासादाट्टालतोलिकाः । विहारान् स विमानाग्र्यान्निपेतुः शस्त्रवृष्टयः ।
शिला द्रुमाश्चाशनयः सर्पा आसारशर्कराः ॥१०॥
प्रचण्डश्चक्रवातोऽभूद् रजसाऽऽच्छादिता दिशः ॥११॥
इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् । नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥१२॥
प्रद्युम्नो भगवान् वीक्ष्य बाध्यमाना निजाः प्रजाः । मा भैष्टेत्यभ्ययाद् वीरो रथारूढो महायशाः ॥
सात्यकिश्चारुदेष्णश्च साम्बोऽक्रूरः सहानुजः । हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ ॥१४॥
अपरे च महेष्वासा रथयूथपयूथपाः । निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः ॥१५॥
ततः प्रववृते युद्धं शाल्वानां यदुभिः सह । यथाऽसुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥१६॥
ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः । क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥१७॥
विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः । शाल्वस्य ध्वजिनीपालं शरैः संनतपर्वभिः ॥१८॥
शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान् । दशभिर्दशभिर्नेतॄन् वाहनानि त्रिभिस्त्रिभिः ॥१९॥
तदद्भुतं महत् कर्म प्रद्युम्नस्य महात्मनः । दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः ॥२०॥
बहुरूपैकरूपं तद् दृश्यते न च दृश्यते । मायामयं मयकृतं दुर्विभाव्यं परैरभूत् ॥२१॥
क्वचिद् भूमौ क्वचिद् व्योम्नि गिरिमूर्ध्नि जले क्वचित् ।
अलातचक्रवद् भ्राम्यत् सौभं तद्दुरवस्थितम् ॥२२॥

---

स शाल्वः । तमोधाम अन्धकारपूर्णम् अत एव दुरासदम् अन्यैर्दुष्प्रापम् ॥ ८ ॥ निरुध्येति सार्द्धद्वयम् । पुरीं निरुध्य स शाल्वः उपवनादानि सर्वाणि बभंज भङ्क्तुमुद्यतवान् । उपवनं फलप्रधानम् । उद्यानं पुष्पप्रधानम् । गोपुरं नगरद्वारम् । प्रासादो देवभूभुजाम् । तोलिका अट्टालिकाभित्तीः । विहारान् क्रीडास्थाननि । विमानाग्र्यात् श्रेष्ठविमानात् । शिलादयोऽपि पेतुः । आसारशर्कराः धारासम्पातवत् जलीयपाषाणाः ॥ ९ ॥ ॥ १० ॥ प्रचण्ड इत्यर्द्धम् ॥ ११ ॥ सौभेन सौभस्थशाल्वेन अर्द्यमाना पीड्यमाना नगरी शं सुख न प्राप । त्रिपुरेण त्रिपुरासुरेण यथा मही तत्रस्थिता जनता ॥ १२ ॥ अभ्ययात् अभ्यधावत् । इत्येव पाठः ॥ १३ ॥ चारुदेष्णः प्रद्युम्नानुजः । भानुविन्दो भानुः सत्यभामाज्येष्ठसुतः । शुकनामा यादवः । सारणः रौहिणेयः । महान्त इष्वासा धनूंषि येषां ते । यूथपा विशिष्टसेनापतयः । दंशिता धृतकवचाः । रथेति चतुरंगसैन्यैः गुप्ताः सन्तः निर्ययु ॥ १४ ॥ १५ ॥ तुमुलं घोरं लोमहर्षणं रोमाञ्चकारि ॥ १६ ॥ सौभपतेः शाल्वस्य ताः शस्त्रवृष्ट्यादिरूपा मायाः प्रद्युम्नः क्षणेन नाशयामास उष्णगुः सूर्यः यथा नैशं निशायां भवं तमः नाशयति । उष्णाः तीक्ष्णाः गावः किरणा यस्यति ॥ १७ ॥ प्रद्युम्नः पञ्चविंशत्या शरैः शाल्वस्य ध्वजिनीपालं सेनापतिं विव्याधेतिःयोज्यम् । पुंखाः मूलप्रान्ताः । सन्नतानि निम्नीभूतानि पर्वाणि ग्रन्थयो येषां तैः शरैः ॥१८॥ नेतॄन् सारथीन् अताडयत् ॥ १९ ॥ महात्मनः महाबलिनः । उभयपक्षीयाः सैनिकाः पूजयामासुः प्रशशंसुः ॥ २० ॥ परैः शत्रुभिः दुर्विभाव्यमतर्क्यमभूत् ॥ २१ ॥ मूर्ध्नि शिखरे । अलातचक्रं ज्वलत्काष्ठं तद्वत् भ्राम्यत् तत सौभं विमानं दुरवस्थितं सर्वथाऽस्थिरमभूत् ॥ २२ ॥ ससौभः सौभेन सहितः शाल्वः । ततस्ततः तत्र तत्र सात्वत-

यत्र यत्रोपलक्ष्येत ससौभः सहसैनिकः । शाल्वस्ततस्ततोऽमुञ्चन् शरान् सात्वतयूथपाः ॥२३॥
शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः । पीड्यमानपुरानीकः शाल्वोऽमुह्यत् परेरितैः ॥२४॥
शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः । न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः ॥२५॥
शाल्वामात्यो द्युमान् नाम प्रद्युम्नं प्राक् प्रपीडितः । आसाद्य गदया मौर्व्या व्याहत्य व्यनदद् बली ॥
प्रद्युम्नं गदया शीर्णवक्षःस्थलमरिन्दमम् । अपोवाह रणात् सूतो धर्मविद् दारुकात्मजः ॥२७॥
लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् । अहो असाध्विदं सूत यद् रणान्मेऽपसर्पणम् ॥२८॥
न यदूनां कुले जातः श्रूयते रणविच्युतः । विना मत् क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात्॥२९॥
किं नु वक्ष्येऽभिसङ्गम्य पितरौ रामकेशवौ । युद्धात् सम्यगपक्रान्तः पृष्टस्तत्रात्मनः क्षमम्॥३०॥
व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः । क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ।३१।

सारथिरुवाच

धर्मं विजानताऽऽयुष्मन् कृतमेतन्मया विभो । सूतः कृच्छ्रगतं रक्षेद् रथिनं सारथिं रथी ॥३२॥
एतद् विदित्वा तु भवान् मयापोवाहितो रणात् । उपसृष्टः परेणेति मूर्च्छितो गदया हतः ॥३३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे शाल्वयुद्धे
षष्ट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

यूथपाः यदूनां सेनापतयः ॥२३॥ परैः यदुभिः ईरितैः प्रक्षिप्तैः शरैः पीड्यमानं पुरम् अनीकानि सेनाश्च यस्य स शाल्वः अमुह्यत् किंकर्तव्यमूढोऽभूत् । अग्निवत् दाहकः अर्कवत् सर्वत्र विततः स्पर्शो येषां तैः । आशीविषः स्पर्शमात्रेण मारकः सर्पः तद्वत् दुरासदैः दुःसहैः । आशिषि दंष्ट्रायां विषं यस्येति विग्रहः । 'आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति' इति सर्पशास्त्रम् ॥ २४ ॥ शाल्वस्य अनीकपाः सेनापतयः तेषां शस्त्राघैः भृशमर्दिता अपि वीराः रणं रणभूमिं न तत्यजुः ॥ २५ ॥ प्राक् प्रपीडितः द्युमान् प्रद्युम्नमासाद्य गदया व्याहत्य प्रहृत्य व्यनदत् । मौर्व्या लोहमय्या ॥ २६ ॥ सूतः सारथिः प्रद्युम्नं रणात् अपोवाह अपसारयामास दूरे नीतवानित्यर्थः । वस्तुतः अशीर्णेति पदच्छेदः । शीर्णं विदीर्णम् धर्मवित् । सूतः कृच्छ्रगतं रक्षेत् रथिनं सारथिं रथी इति धर्मशास्त्रम् ॥ २७ ॥ कार्ष्णिः कृष्णपुत्रः प्रद्युम्नः रणात् यत् मे मम अपसर्पणं पलायनं तदिदमसाधु अनुचितं कृतम् । अहो खेदे ॥ २८ ॥ मत् मत्तो विना यदुकुले जातः कोऽपि रणात् विच्युतः पलायितः न श्रूयते इत्यन्वयः । कथंभूतात् । सूतेन निमित्तभूतेन त्वया प्राप्तं किल्विषमपवादो येन तस्मात् । क्लीबमधीरम् । 'कल्मषं पापनिन्दयोः' इति निघण्टुः ॥ २९ ॥ पितरौ अभिसंगम्य मिलित्वा ताभ्यां पृष्टः सन् तत्र आत्मनः क्षमम् उचितवृत्तं किं नु वक्ष्ये । पलायितोऽहमित्येव किम् ॥ ३० ॥ जामयः भ्रातृभार्या व्यक्तं निश्चितं मे क्लैब्यं नपुंसक त्वं कथयिष्यन्ति । तदेवा हत्वं मृधे संग्रामे अन्यैः शत्रुभिः सह युद्धे कथं पलायितोऽसि कथं पलायितांऽसीति मे क्लैब्यमधीरतामित्यर्थः । विस्मये द्विरुक्तिः ॥ ३१ ॥ हे आयुष्मन् । नित्ययोगे मतुप् । एतत् अपसारणम् कृतम धर्मस्वरूपमाह–सूत इति ॥३२॥ परेण शत्रुणा हतः उपसृष्टः पीडां प्राप्तः मूर्च्छितश्च भवान् जातः एतत् विदित्वैव मया रणात् अयोवाहितः पृथक्नीतः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्धे गूढार्थदीपिन्यां
षट्सप्ततिमोऽध्यायः ॥ ७६ ॥

## अथ सप्तसप्ततितमोऽध्यायः

### श्रीशुक उवाच

स तूपस्पृश्य सलिलं दंशितो धृतकार्मुकः । नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥१॥
विधमन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः । प्रतिहत्य प्रत्यविध्यन्नाराचैरष्टभिः स्मयन् ॥२॥
चतुर्भिश्चतुरो वाहान् सूतमेकेन चाहनत् । द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः ॥३॥
गदसात्यकिसाम्बाद्या जघ्नुः सौभपतेर्बलम् । पेतुः समुद्रे सौभेयाः सर्वे संछिन्नकन्धराः ॥४॥
एवं यदूनां शाल्वानां निघ्नतामितरेतरम् । युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्वणम् ॥५॥
इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना । राजसूयेऽथ निर्वृत्ते शिशुपाले च संस्थिते ॥६॥
कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम् । निमित्तान्यतिघोराणि पश्यन् द्वारवतीं ययौ ॥७॥
आह चाहमिहायात आर्यमिश्राभिसङ्गतः । राजंन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥८॥
वीक्ष्य तत् कदनं स्वानां निरूप्य पुररक्षणम् । सौभं च शाल्वराजं च दारुकं प्राह केशवः ॥९॥
रथं प्रापय मे सूत शाल्वस्यान्तिकमाशु वै । सम्भ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥१०॥
इत्युक्तश्चोदयामास रथमास्थाय दारुकः । विशन्तं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥११॥
शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः । प्राहरत् कृष्णसूताय शक्तिं भीमरवां मृधे ॥१२॥

---

सप्तसप्ततितमे नृपधान्या द्वारकां कुशकुनात् समुपेत्य ।
मायिनं सपुरमुद्धतशाल्वं चक्रतो निहतवान् स मुकुन्दः ॥ १ ॥

स प्रद्युम्नः उपस्पृश्य आचम्य वीरस्य द्युमतः पार्श्वं मा नयेति सारथिमाहेत्यन्वयः : दंशितो धृतकवचः ॥ १ ॥ विधमन्तं[1] नाशयन्तं तं द्युमन्तं प्रतिहत्य प्रतिरुध्य अष्टभिः नाराचैः बाणैः प्रत्यविध्यत् अताडयत् स्मयन् सकोपं हसन् सन् ॥ २ ॥ वाहान् अश्वान् । सूतं सारथिम् । द्युमतः शिरश्चिच्छेदः ॥३॥ सौभपतेः शाल्वस्य बलं सैन्यम् । सौभेयाः सौभस्थसैनिकाः संछिन्ना कन्धरा ग्रीवा येषां ते पेतुः ॥४॥ इतरेतरं परस्परम् । त्रिणवरात्रं[2] सप्तविंशत्यहोरात्रम् । तुमुलं व्याकुले रणे । उल्वणं भीषणम् ॥ ५ ॥ निर्वृत्ते समाप्ते । संस्थिते मृते सति ॥ ६ ॥ कुरुवृद्धानिति युग्मम् । अनुज्ञाप्य पृष्ट्वा । अतिघोराणि भयसूचकानि निमित्तानि अपशकुनान् पश्यन् आर्यो ज्येष्ठः श्रीबलदेवः स एव मिश्रः पूज्यः तेन संगतः तत्सहितः । हन्युः नाशयेयुः । संभावनायां लिङ् । आह स्वमनस्येव ॥ ७ ॥ ८ ॥ कदनं[3] मर्दनं । पुररक्षणं प्रति रामं निरूप्य सौभादिकं च वीक्ष्य दारुकं सारथिं प्राहेत्यन्वयः ॥ ९ ॥ संभ्रमो भयम् । 'संभ्रमः साध्वसेऽपि स्यात्' इति मेदिनी । सौभराट् सौभेन राजते इति शाल्वः ॥१०॥ स्वे परे स्वकीयाः परकीयाश्च सर्वे सैनिकाः रणे प्रविशन्तं ध्वजस्थमरुणानुजं गरुडं ददृशुः ॥११॥ हतप्रायस्य बलस्य सैन्यस्य ईश्वरः शाल्वः कृष्णसूतं हन्तुं शक्तिं प्राहरत् चिक्षेप ॥ १२ ॥ महोल्कां निर्गत-

---

१. उपसर्गवशात् धमधातुरत्र नाशने । शतृप्रत्ययः ।

२. नवानां रात्रीणां समाहारो नवरात्रं त्रयाणां नवरात्राणां समाहारः त्रिणवरात्रम् ।

३. 'कदनं मर्दपापयोः' इति मेदिनी ।

तामापतन्तीं नभसि महोल्कामिव रंहसा । भासयन्तीं दिशः शौरिः सायकैः शतधाच्छिनत् ।१३।
तं च षोडशभिर्विद्ध्वा बाणैः सौभं च खे भ्रमत् । अविध्यच्छरसन्दोहैः खं सूर्य इव रश्मिभिः ॥
शाल्वः शौरेस्तु दोःसव्यं सशार्ङ्गं शार्ङ्गधन्वनः । बिभेद न्यपतद्धस्तात् शार्ङ्गमासीत् तदद्भुतम् ॥
हाहाकारो महानासीद् भूतानां तत्र पश्यताम् । विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥१६॥
यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम् । प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा ।१७॥
तं त्वाद्य निशितैर्बाणैरपराजितमानिनम् । नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥१८॥

श्रीभगवानुवाच

वृथा त्वं कत्थसे मन्द न पश्यस्यन्तिकेऽन्तकम् । पौरुषं दर्शयन्ति स्म शूरा न बहुभाषिणः ॥१९॥
इत्युक्त्वा भगवाञ्छाल्वं गदया भीमवेगया । तताड जत्रौ संरब्धः स चकम्पे वमन्नसृक् ॥२०॥
गदायां सन्निवृत्तायां शाल्वस्त्वन्तरधीयत । ततो मुहूर्त आगत्य पुरुषः शिरसाच्युतम् ।
देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् ॥२१॥
कृष्ण कृष्ण महाबाहो पिता ते पितृवत्सल । बद्ध्वापनीतः शाल्वेन सौनिकेन यथा पशुः ॥२२॥
निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः । विमनस्को घृणी स्नेहाद् बभाषे प्राकृतो यथा॥२३॥

ज्वालामिव रंहसा वेगेन आपतन्तीं तां नभसि आकाशे एव बाणैः अच्छिनत् । शौरिः श्रीकृष्णः ॥ १३ ॥ तं शाल्वं षोडशभिः बाणैः आकाशे भ्रमत् सौभं विमानं च शरसन्दोहैः बाणसमूहैः अविध्यत् । यथा सूर्यो रश्मिभिः आकाशमाच्छादयति तद्वत् । अत्राकाशस्थानीयं सौभं रश्मिस्थानीयाः शराः सूर्यस्थानीयो भगवान् श्रीकृष्ण इति सादृश्यमवधेयम् ॥१४॥ शौरेः श्रीकृष्णस्य सव्यं दोः[1] वामं भुजं बिभेद शरेण विव्याध ततः तस्य हस्तात् शार्ङ्गं न्यपतत् । तत् पतनमाश्चर्यजनकमासीत् अभूतपूर्वत्वात् पतनं च तस्य वीर्यख्यापनाय ॥१५॥ तत्र युद्धे । सौभराट् शाल्वः विनद्य गर्जित्वा इदं वक्ष्यमाणमाह ॥ १६ ॥ यत् यस्मात् नोऽस्माकमीक्षतां सतां सख्युः भ्रातुश्च शिशुपालस्य भार्या हृता अथ च स व्यापादितः मारितश्च भ्रातुरिति सखित्वादेवोक्तम् । हे अमूढ ! सर्वज्ञ सख्युः शिशुपालस्य नोऽस्माकं च ईक्षतां तं च अस्मांश्च अनादृत्य लक्ष्मीत्वात् स्वस्यैव भार्या आहृता आनीता । प्रमत्तः अनधिकारचेष्टायुक्तत्वात् स निहतश्चेति वागर्थः ॥ १७ ॥ तं त्वा त्वामद्य अपराजितं मन्यमानम् अपुनरावृत्तिं मृत्युं नेष्यामि यदि मम अग्रतः तिष्ठेः स्थास्यसि । वस्तुतः । त्वदीयैरेव बाणैः अपुनरावृत्तिं मोक्षप्रदं त्वां प्राप्स्यामि यदि कृपया ममाग्रतः तिष्ठेः । नास्ति पुनरावृत्तिर्यस्मात् तम् । अराजितश्चासौ मानी आदरवांश्च ॥ १८ ॥ कत्थसे श्लाघसे । अन्तिके शिरसि अन्तकं मृत्युं न पश्यसि । पौरुषं पुरुषार्थं प्रदर्शयन्ति । बहुभाषिणः आत्मश्लाघिनः नैवेत्यर्थः स्म एवार्थे ॥ १९ ॥ जत्रौ कण्ठमूले तिर्यगस्थिनि तताड संरब्धः क्रुद्धः सन् स शाल्वः असृक् रक्तं वमन् उद्गिरन् चकम्पे । न सृजति शरीरमिति असृक् इति विग्रहः । 'टुवमु' उद्गिरणे धातुः । भीमवेगया तीव्रवेगया ॥ २० ॥ गदायामिति सार्द्धम् । मुहूर्ते घटिकाद्वये व्यतीते सति । नत्वा रुदन् सन् वचः प्राह अहं देवक्या प्रहितोऽस्मीति । देवीमतेऽप्रहित इति च्छेदः ॥ २१ ॥ सौनिकेन पशुघातिना यथा पशुः अपनीयते तथा ॥ २२ ॥ विप्रियं निशम्यापि अमानुषीमैश्वरीमेव प्रकृतिं स्थितः । विशिष्टं सर्वज्ञं मनो

1. ककुद्दोषणी इति भाष्यप्रयोगात् दोः शब्दस्य क्लीबत्वम् ।

कथं राममसम्भ्रान्तं जित्वाजेयं सुरासुरैः । शाल्वेनाल्पीयसा नीतः पिता मे बलवान् विधिः ॥२४॥
इति ब्रुवाणे गोविन्दे सौभराट् प्रत्युपस्थितः । वसुदेवमिवानीय कृष्णं चेदमुवाच सः ॥२५॥
एष ते जनिता तातो यदर्थमिह जीवसि । वधिष्ये वीक्षतस्तेऽमुमीशश्चेत पाहि बालिश ॥२६॥
एवं निर्भर्त्स्य मायावी खड्गेनानकदुन्दुभेः । उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥२७॥

ततो मुहूर्तं प्रकृतावुपप्लुत स्वबोध आस्ते स्वजनानुषङ्गतः ।
महानुभावस्तदबुद्ध्यदासुरीं मायां स शाल्वप्रसृतां मयोदिताम् ॥ २८ ॥

न तत्र दूतं न पितुः कलेवरं प्रबुद्ध आजौ समपश्यदच्युतः ।
स्वाप्नं यथा चाम्बरचारिणं रिपुं सौभस्थमालोक्य निहन्तुमुद्यतः ॥२९॥

एवं वदन्ति राजर्षे ऋषयः के च नान्विताः । यत् स्ववाचो विरुध्येत नूनं ते न स्मरन्त्युत ॥३०॥
क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसम्भवाः । क्व चाखण्डितविज्ञानज्ञानैश्वर्यस्त्वखण्डितः ३१

यत्पादसेवोर्जितयाऽऽत्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ।
लभन्त आत्मीयमनन्तमैश्वरं कुतो नु मोहः परमस्य सद्गतेः ॥३२।

तं शास्त्रपूगैः प्रहरन्तमोजसा शाल्वं शरैः शौरिरमोघविक्रमः ।
विद्ध्वाच्छिनद् वर्म धनुः शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह ॥३३॥

---

यस्य । अप्राकृतः यथा यथावत् । घृणी दयावान् ॥ २३ ॥ मे पिता कथं नीतः नैव नीतः । विधिरपि मत्पुरतः अबलवान् अकिञ्चित्करः ॥ २४ ॥ इवेत्यनेन न वसुदेवं किन्तु मापिकम् ॥ २५ ॥ यदर्थमिह जीवसि स एष ते अजनिता जनको न । अकारः पृथक् पदं सादृश्ये अतातः तातसदृशः अतः वीक्षतस्ते कौतुकार्थममुं वधिष्ये । अतोऽनेन कौतुकेन प्रसन्नश्चेत् मां 'पाहि' संसारादुद्धरेत्यर्थः । बालाः सन्ति येषां ते बालिनः मूर्खपतयः तान् श्यति क्षिणोति नाशयतीति तथा ॥ २६ ॥ निर्भर्त्स्य आत्मानम् । आनकदुन्दुभेः मायिकवसुदेवस्य शिर उत्कृत्य छित्वा खस्थमाकाशस्थं सौभं विमानं समाविशत् ॥ २७ ॥ प्रकृतौ मनुष्यप्रकृतौ उपप्लुतो निमग्नः सुष्ठु अबोध इव लीलया आस्ते स्वजनसम्बन्धात् । वस्तुतः तदपि स्वप्रकृतौ स्वबोध एवास्ते यतो महानुभावः अचिन्त्यप्रभावः मयोदितां मयेन प्रवर्तितां शाल्वेन प्रसारितां आसुरीं मायामबुध्य त ॥ २८ ॥ पूर्वमेव प्रबुद्धः । आजौ संग्रामे । यथा प्रबुद्धः पुरुषः स्वप्नप्रपञ्चं न पश्यति तथा । ततश्च आकाशे चरन्तं रिपुं हन्तुमुद्यतोऽभूत् ॥ २९ ॥ के च केचित् एवं वदन्ति ते नान्विताः पूर्वपरानुसन्धानरहिताः । यत् स्वस्यैव वाचः परस्परं विरुध्येरन् तत् नानुस्मरन्ति संकर्षणमनुज्ञाप्य निरुध्य पुररक्षणमित्यादिकाः आह चाहमिहायात आर्यमिश्राभिसंगतः इत्यादिकया । यद्वा । किंभूता वाचः । नान्विताः अनु पश्चादुक्ति संकर्षणमनुज्ञाप्येति न इता न ज्ञातवन्तः । यद्वा विरुध्येतेति पाठः तत्र भावे लिङ् । उपसर्गवशात् रुधेरकर्मकत्वम् इति वंशीधरी ॥ ३० ॥ विरोधमेव दर्शयति अज्ञसंभवाः शोकादयः क्व । अखण्डितानि विज्ञानादीनि यस्य सः भगवांश्च क्व । तत्र शोकः प्रकृतावुपप्लुत इत्यनेन मोहः स्वजनानुषङ्गतः इत्यनेन । स्नेहः स्नेहाद्बभाषे इत्यनेन । भयं च निमित्तान्यतिघोराणि इत्यनेन । स्वबोधेन ज्ञानविज्ञाने उक्ते । तत्र ज्ञानं बाह्यविषयं विज्ञानं स्वरूपविषयकम् ऐश्वर्यं तु महानुभाव इत्यनेन विरोधः स्पष्ट एव ॥ ३१ ॥ यस्य पादसेवया ऊर्जितया तीव्रया आत्मविद्यया अनादि दुर्निवारंमात्मनो विपरीतबोधं देहाध्यासलक्षणं हिन्वन्ति त्यजन्ति आत्मीयमक्षुण्णम् ऐश्वरं पदं च लभन्ते तस्य सतां गतेः कुतो नु मोहः मोहाभावे च कुतः शोकादयः अतस्तेषां वचोऽनन्वितमेवेति योज्यम् ॥ ३२ ॥ ओजसा बलेन शस्त्रपूगैः प्रहरन्तं तं शाल्वं शौरिः श्रीकृष्णः शरैः विद्ध्वा तस्य वर्म कवचं धनुः शिरोमणिं च

तत् कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा ।
विसृज्य तद् भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद् द्रुतम् ॥३४॥
आधावतः सगदं तस्य बाहुं भल्लेन छित्त्वाथ रथाङ्गमद्भुतम् ।
वधाय शाल्वस्य लयार्कसन्निभं बिभ्रद् बभौ सार्क इवोदयाचलः ॥३५॥
जहार तेनैव शिरः सकुण्डलं किरीटयुक्तं पुरुमायिनो हरिः ।
वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हाहेति वचस्तदा नृणाम् ॥३६॥
तस्मिन् निपतिते पापे सौभे च गदया हते । नेदुर्दुन्दुभयो राजन् दिवि देवगणेरिताः ।
सखीनामपचितिं कुर्वन् दन्तवक्त्रो रुषाभ्यगात् ॥३७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे सौभवधो नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

अच्छिनत् गदया सौभं विमानं च रुरोज बभज भग्नमकरोत् । अमोघविक्रमः सफलपराक्रमः । पूगः समूहः ॥३३॥ कृष्णहस्तेन ईरितया प्रक्षिप्तया गदया सहस्रधा विचूर्णितं सत् तत् सौभं जले पपात । ततः शाल्वः तत् विसृज्य गदामुद्यम्य अच्युतमभ्यधावत् ॥ ३४ ॥ आधावतः तस्य बाहुं भल्लेन छित्वा अथ तस्य वधाय रथाङ्गं बिभ्रत् हरिः बभौ इत्यन्वयः । यथा सार्कः उदयाचलो भाति तथा । कथंभूतं रथाङ्गम् । लयार्कः प्रलयकालिकसूर्यः तत्सदृशम् ॥ ३५ ॥ हरिः तेनैव चक्रेण तस्य सकुण्डलं शिरो जहार चिच्छेद यथा इन्द्रो वृत्रस्य तदा नृणां विपक्षीयाणां हाहेति दुःखसूचकः शब्द आसीत् । पुरुमायी महामायावी ॥ ३६ ॥ तस्मिन्निति सार्द्धम् । शाल्वे पापे पापिनि निपतिते । अर्श आद्यजन्तः । सौभे विमाने च हते सति देवगणैः ईरिता वादिताः । सखीनां मृतानाम् अपचितिमानृण्यम् कुर्वन् दन्तवक्त्रः योद्धुमभ्यगात् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अथाष्टसप्ततितमोऽध्यायः

### श्रीशुक उवाच

शिशुपालस्य शाल्वस्य पौण्ड्रकस्यापि दुर्मतिः । परलोकगतानां च कुर्वन् पारोक्ष्यसौहृदम् ॥१॥
एकः पदातिः संक्रुद्धो गदापाणिः प्रकम्पयन् । पद्भ्यामिमां महाराज महासत्त्वो व्यदृश्यत ॥२॥

---

अष्टसप्ततितमे युधि दन्तवक्त्रमत्र सविदूरथमीशः ।
तं निहत्य मुमुदे पुरि रामो नैमिषे समवधीदथ सूतम् ॥ १ ॥

शिशुपालेति युग्मम् । पौण्ड्रको मिथ्यावासुदेवः तस्य । दुर्मतिः दन्तवक्त्रः एक एत क्रुद्धः सन् पद्भ्यामिमां पृथ्वीं कम्पयन् युद्धे व्यदृश्यतेति द्वयोरन्वयः । कथंभूतः । पारोक्ष्यसौहृदं परोक्षे सुहृत्कृत्यं कुर्वन् कर्तुकामः । ताच्छीलिकः शतृप्रत्ययः । परोक्ष्यं स्वार्थे ष्यञ् । महासत्त्वो महाबलः इमां पृथ्वीम् ॥१।२॥ तथा यान्तं सगदम् ॥

तं तथाऽऽयान्तमालोक्य गदामादाय सत्वरः । अवप्लुत्य रथात् कृष्णः सिन्धुं वेलेव प्रत्यधात् ॥३॥
गदामुद्यम्य कारूषो मुकुन्दं प्राह दुर्मदः । दिष्टया दिष्टया भवानद्य मम दृष्टिपथं गतः ॥४॥
त्वं मातुलेयो नः कृष्ण मित्रध्रुङ् मां जिघांससि । अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया ॥५॥
तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः । बन्धुरूपमरिं हत्वा व्याधिं देहचरं यथा ॥६॥
एवं रूक्षैस्तुदन् वाक्यैः कृष्णं तोत्त्रैरिव द्विपम् । गदयाऽताडयन्मूर्ध्नि सिंहवद् व्यनदच्च सः ॥७॥
गदयाभिहतोऽप्याजौ न चचाल यदूद्वहः । कृष्णोऽपि तमहन् गुर्व्या कौमोदक्या स्तनान्तरे ॥८॥
गदानिर्भिन्नहृदय उद्वमन् रुधिरं मुखात् । प्रसार्य केशबाह्वङ्घ्रीन् धरण्यां न्यपतद् व्यसुः ॥९॥
ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् । पश्यतां सर्वभूतानां यथा चैद्यवधे नृप ॥१०॥
विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः । आगच्छदसिचर्मभ्यामुच्छ्वसंस्तज्जिघांसया ॥११॥
तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना । शिरो जहार राजेन्द्र सकिरीटं सकुण्डलम् ॥१२॥
एवं सौभं च शाल्वं च दन्तवक्त्रं सहानुजम् । हत्वा दुर्विषहानन्यैरीडितः सुरमानवैः ॥१३॥
मुनिभिः सिद्धगन्धर्वैर्विद्याधरमहोरगैः । अप्सरोभिः पितृगणैर्यक्षैः किन्नरचारणैः ॥१४॥
उपगीयमानविजयः कुसुमैरभिवर्षितः । वृतश्च वृष्णिप्रवरैर्विवेशालङ्कृतां पुरीम् ॥१५॥

---

त्वरया सहितः कृष्णः रथात् अवप्लुत्य तं प्रत्यधात् प्रातिकूल्येन रुरोध । वेला तीरं यथा समुद्रवेगं रुणद्धि तथा ॥ ३ ॥ करूषो विहारप्रदेशः तस्य राजा । जन्मत्रयेऽन्विष्यमाणो भवान् मम स्वामी अद्य शापावसाने दृष्टिपथं गतः एतत् दिष्टया[1] भद्रं भद्रम् । हर्षाधिक्ये वीप्सा ॥ ४ ॥ नोऽस्माकं मातुलेयः दन्तवक्त्रमातुः श्रुतदेवाया वसुदेवभगिनीत्वात् । मित्राणि शिशुपालादानि द्रुह्यतीति । त्वदीयया गदया त्वामेव हनिष्ये प्राप्स्यामि । हन् हिंसागत्योः धातुः । वस्तुतः मित्रध्रुक् चासौ अहं च मित्रध्रुङ्मां जिघांससि हन्तुं गन्तुं स्वीकर्तुमिच्छसि । अतो हे अमन्द सर्वसहनेश । अवज्रकल्पया[2] उत्पलवत् अतिकोमलया ॥५॥ न विद्यते ज्ञो यस्मात् हे अज्ञ सर्वज्ञ । शापादरि शत्रुत्वेन प्रतीतं विगतः आधिर्यस्मात् तं देहचरमन्तर्यामिणं त्वा यथा यथावत् हत्वा[3] ज्ञात्वा आनृण्यमुपैमि । 'न किंकरो नायमृणी च राजन्' इत्युक्तेः ॥ ६ ॥ रूक्षैः प्रातीतिकार्थेन । स दन्तवक्त्रः । तोत्रैः अङ्कुशैः यथा द्विपम् ॥७॥ यदून् उद्वहति पालयतीति तथा कृष्णः । तं दन्तवक्त्रं स्तनान्तरे वक्षसि अहन् । गुर्व्या गदया । आजौ संग्रामे ॥ ८ ॥ गदया निर्भिन्नं विदीर्णं हृदयं यस्य सः अत एव व्यसुः गतप्राणः सन् रुधिरम् उदिगरन् धरण्यां न्यपतत् । केशादीन्[4] प्रसार्य ॥ ९ ॥ ज्योतिः जीवाख्यम् । चैद्यः चेदिदेशीयः शिशुपालः ॥ १० ॥ तद्भ्राता दन्तवक्त्रानुजः । तज्जिघांसया कृष्णहननेच्छया । चर्म ( ढाल ) इति ॥ ११ ॥ आपततः तस्य विदूरथस्य शिरः चक्रेण जहार चिच्छेद । कथंभूतेन । क्षुरस्येव नेमिः धारा यस्य तेन ॥ १२ ॥ एवमिति त्रयम् । एवं शाल्वादीन् हत्वा सुरादिभिः ईडितः मुनिभिः उपगीयमानविजयः तैरेव कुसुमैः अभिवर्षितश्च भगवान् अलङ्कृतां पुरीं विवेशेति त्रयाणामेकान्वयः ॥ १३ ॥ १४ ॥ १५ ॥ जयतीति इति शब्दोऽवधारणे ।

---

१. दिष्टचेति भद्रार्थेऽव्ययम् । २, अङ्घ्रचोऽज्यते प्राप्यते इत्यवज्रमुत्पलम् अप्यूर्वादजते रो बाहुलकात् ततः कल्पप्रत्यये रूपमिदं ज्ञेयमिति वंशीधरी ।

३. हन्ते र्गत्यर्थस्य ज्ञानार्थतापीति वामनादयः ।

४. सेनाङ्गतूर्यप्राण्यङ्गानां द्वन्द्वे एकवद्वा इति नियमात् एकवचनपि साधु । केशवाह्वङ्घ्रीति ।

एवं योगेश्वरः कृष्णो भगवाञ्जगदीश्वरः। ईयते पशुदृष्टीनां निर्जितो जयतीति सः ॥१६॥
श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः। तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥१७॥
स्नात्वा प्रभासे संतर्प्य देवर्षिपितृमानवान्। सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः ॥१८॥
पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनम्। विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम् ॥१९॥
यमुनामनु यान्येव गङ्गामनु च भारत। जगाम नैमिषं यत्र ऋषयः सत्रमासते ॥२०॥
तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः। अभिनन्द्य यथान्यायं प्रणम्योत्थाय चार्चयन् ॥२१॥
सोऽर्चितः सपरीवारः कृतासनपरिग्रहः। रोमहर्षणमासीनं महर्षे शिष्यमैक्षत ॥२२॥
अप्रत्युत्थायिनं सूतमकृतप्रह्वणाञ्जलिम्। अध्यासीनं च तान् विप्रांश्चुकोपोद्वीक्ष्य माधवः॥२३॥
कस्मादसाविमान् विप्रानध्यास्ते प्रतिलोमजः। धर्मपालांस्तथैवास्मान् वधमर्हति दुर्मतिः ॥२४॥
ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च। सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥२५॥
अदान्तस्याविनीतस्य वृथा पण्डितमानिनः। न गुणाय भवन्ति स्म नटस्येवाजितात्मनः ॥२६॥
एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः। वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः॥२७॥
एतावदुक्त्वा भगवान् निवृत्तोऽसद्वधादपि। भावित्वात् तं कुशाग्रेण करस्थेनाहनत् प्रभुः ॥२८॥

---

जयत्येव नात्र सन्देहः किन्तु पशुदृष्टीनाम् अविवेकिनां कारणाज्ञानात् कदाचित् निर्जितोऽपि ईयते प्रतीयते जरासन्धादिभिः ॥ १६ ॥ मध्यस्थः उदासीनः उभयपक्षत्यागी ॥ १७ ॥ प्रभासे क्षेत्रे। प्रतिस्रोतं प्रवाहाभिमुखं यथा भवति तथा सरस्वती तत्तीरम् ॥ १८ ॥ पृथूकादीन् तत्तन्नाम्ना तीर्थविशेषान् ययौ। पृथूदकं कुरुक्षेत्रवर्ति पृथोरश्वमेधस्थानम्। बिन्दुसरः कर्दमाश्रमं गुर्जरदेशस्थम्। त्रितकूपं त्रितऋषेस्तीर्थं सरस्वत्यन्तर्वति। सुदर्शनतीर्थमपि तत्रैव। विशालं सरस्वत्यन्तर्वर्ति। अग्रे द्वयमपि तथैव। प्राचीति[1] महाफलश्रवणात् ॥ १९ ॥ यमुनामनु यमुनातीरे गङ्गायामनु गंगातीरे यानि तीर्थानि तानि सर्वाणि निषेव्य नैमिषारण्यं जगाम। आसते[2] कुर्वते। कृञर्थस्य सर्वधातुष्वनुस्यूततत्वात् ॥ २० ॥ अभिप्रेत्य बलराम इति ज्ञात्वा। दीर्घं सहस्रवर्षपर्यन्तं सत्रमस्ति येषां ते। यथान्यायं यथोचिम् अर्चयन् पूजितवन्तः ॥ २१ ॥ सपरिवारः विप्रादिसहितः महर्षेः व्यासस्य ॥ २२ ॥ अप्रत्युत्थापिनं प्रत्युत्थानमकुर्वन्तम्। न कृतं प्रह्वणं शिरसा नतिर्येन तम्। प्रह्वत्वं शिरसा नतिः। तान् विप्रान् अध्यासीनं वीक्ष्य माधवः मधोर्वंशजः बलरामः चुकोप। तानिति आधारस्य कर्मत्वम् अधिशीङ्स्थासां कर्म इति नियमात्। प्रह्वशब्दादाचारक्विबन्तात् ल्युट् ॥ २३ ॥ धर्मपालान् विप्रान् अस्मांश्च कस्मादध्यास्ते उच्चासनमधितिष्ठति। यतः प्रतिलोमजः विलोमसंकरः। ब्राह्मण्यां क्षत्रियाज्जातः सूत इत्यभिधीयते इति वचनात्। वस्तुतस्तु नैतादृशोऽयं जातिसूतः किन्तु अग्निकुण्डसमुद्भूत सूत निर्मलमानस इत्युक्तेः। पृथोर्यज्ञे क्षत्रियेन्द्रस्य हविषा ब्राह्मणबृहस्पतेर्हविषः सम्पृक्तत्वात् तत एव कुण्डादुत्पन्नत्वेन जातिसूतत्वाभावेऽपि चरुनिक्षेपवैपरीत्यात्प्रतिलोमज इत्युक्तम् ॥ २४ ॥ न गुणाय अपि तु दोषायैव भवन्ति शास्त्राध्ययनादीनिति शेष ॥ २५ ॥ २६ ॥ धर्मध्वजिनः[3] दाम्भिकाः ॥ २७ ॥ भवित्वात् भवितव्यस्य अपरिहार्यत्वात्

---

१. नूनं प्राचीनपापानि मेरुतुल्यानि भारत। सद्यो दहति निस्नाता प्रातः प्राची सरस्वती ॥ इ पुराणान्तरात्
२. सर्वेषामेष धातूनामन्तर्भूतकृतर्थता सा वाच्या प्रत्ययार्थेन ह्येवं भाट्टादयो जगुः। इति
३. नीचाः सन्तोऽपि उत्तमजातिचिह्नधारिणः।

हाहेति वादिनः सर्वे मुनयः खिन्नमानसाः । ऊचुः सङ्कर्षणं देवमधर्मस्ते कृतः प्रभो ॥२९॥

अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन । आयुश्चात्माक्लमं तावद् यावत् सत्रं समाप्यते ।
अजानतैवाचरितस्त्वया ब्रह्मवधो यथा ॥३०॥

योगेश्वरस्य भवतो नाम्नायोऽपि नियामकः । यद्येतद् ब्रह्महत्यायाः पावनं लोकपावन ।
चरिष्यति भवाँल्लोकसंग्रहोऽनन्यचोदितः ॥३१॥

श्रीभगवानुवाच

करिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया । नियमः प्रथमे कल्पे यावान् स तु विधीयताम् ॥३२॥

दीर्घमायुर्बतैतस्य सत्त्वमिन्द्रियमेव च । आशासितं यत्तद् ब्रूत साधये योगमायया ॥३३॥

ऋषय ऊचुः

अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च । यथा भवेद् वचः सत्यं तथा राम विधीयताम् ॥३४॥

श्रीभगवानुवाच

आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् । तस्मादस्य भवेद् वक्ता आयुरिन्द्रियसत्त्ववान् ॥३५॥

किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ । अजानतस्त्वपचितिं यथा मे चिन्त्यतां बुधाः ॥३६॥

ऋषय ऊचुः

इल्वलस्य सुतो घोरो बल्वलो नाम दानवः । स दूषयति नः सत्रमेत्य पर्वणि पर्वणि ॥३७॥

तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् । पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम् ॥३८॥

---

कुशाग्रेण चालनमात्रेण ॥ २८ ॥ ते त्वया ॥ २९ ॥ अस्येति सार्द्धम् । आत्मनो देहस्य नास्ति क्लमः क्लेशो ग्लानिर्वा यत्र तथाभूतमायुः । इव यथा शब्दाभ्यां जानतैव ब्रह्मवधः कृत इति प्रतीयते ॥ ३० ॥ योगेश्वरेति सार्द्धम् । आम्नायः वेदोऽपि नियामकः आदेशकर्ता न । तथापि यदि अनन्यचोदितः सन् स्वयमेव पावनं प्रायश्चित्तं करिष्यति तदा लोकसंग्रहो भविष्यति । लोका अपि एवं करिष्यन्ति नान्यथेति ॥ ३१ ॥ वधस्य निर्वेशं प्रायश्चित्तम् । अनुग्रहः संग्रहः । प्रथमे कल्पे मुख्यपक्षे यावान् नियमः मुख्यं प्रायश्चित्तं स तु विधीयताम्[1] उपदिश्यताम् ॥ ३२ ॥ बत हर्षे । अस्य दीर्घायुरादि तथा अन्यच्च यत् भवतामाशंसितम् अपेक्षितं तत् स्पष्टं यूयं ब्रूत अहं तमापादयिष्यामि । सत्त्वं बलम् । इन्द्रियपाटवं च ॥ ३३ ॥ वीर्यस्य प्रभावस्य । अस्माकं वचः यावत्सत्रं पुराणवक्ता भवतु इत्येवंविधम् ॥ ३४ ॥ वै एवार्थे । अस्य पुत्रः उग्रश्रवाः । एवं सति सर्वं सम्पन्नं स्यात् ॥ ३५ ॥ किञ्च हे बुधा । वः युष्माकं किंविषयकः कामः संकल्पो वर्तते तमपि ब्रूत अहं तत् अथ अनन्तरमेव करवाणि । हे मुनिश्रेष्ठाः अजानतो मे अपचितिः प्रायश्चित्तं चिन्त्यतां विचार्य कथ्यताम् ॥ ३६ ॥ पर्वणि अमायां पौर्णमास्यां च । सत्रं यागम् ॥ ३७ ॥ हे दाशार्ह दशार्हवंशोद्भव । पापं पापिनम् । पूयादीन् अभितो वर्षतीति तथा ॥ ३८ ॥ ततो बल्वलवधोत्तरम् परीत्य प्रदक्षिणीकृत्य विशुध्यसे

---

१. उपसर्गवशात् दधातेरुपदेशार्थत्वम् ।

ततश्च भारतं वर्षं परीत्य सुसमाहितः । चरित्वा द्वादश मासांस्तीर्थस्नायी विशुद्ध्यसे ॥३९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे बलदेवचरित्रे बल्वलवधोपक्रमो नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

पापमुक्तो भविष्यसि । 'ननु द्वादशाब्दानिति चरेद् ब्रह्मघ्नस्तत्कपालभृत् इति स्मृतेः कथं द्वादशमासानित्युक्तं सेन्द्रियमनसः सुसमाहितत्वेन गुणविशेषसंबन्धादेकाब्दोऽपि द्वादशाब्दतुल्यो भवति अतः स्मृत्या न विरोधः । यथा युधिष्ठरकृतैकाश्वमेधस्य दक्षिणादिगुणविशेषसम्बन्धात् त्रित्वं संपद्यते तथाऽत्रापि ।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्या-मष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

## अथैकोनाशीतितमोऽध्यायः

### श्रीशुक उवाच

ततः पर्वण्युपावृत्ते प्रचण्डः पांसुवर्षणः । भीमो वायुरभूद् राजन् पूयगन्धस्तु सर्वशः ॥१॥

ततोऽमेध्यमयं वर्षं बल्वलेन विनिर्मितम् । अभवद् यज्ञशालायां सोऽन्वदृश्यत शूलधृक् ॥२॥

तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमम् । तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखम् ॥३॥

सस्मार मुसलं रामः परसैन्यविदारणम् । हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः ॥४॥

तमाकृष्य हलाग्रेण बल्वलं गगनेचरम् । मुसलेनाहनत् क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ॥५॥

सोऽपतद् भुवि निर्भिन्नललाटोऽसृक् समुत्सृजन् । मुञ्चन्नार्तस्वरं शैलो यथा वज्रहतोऽरुणः ॥६॥

संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः । अभ्यषिञ्चन् महाभागा वृत्रघ्नं विबुधा यथा ॥७॥

---

ऊनाशीतितमे हत्वा बल्वलं सबलं बलः ।
तीर्थाभिषेकतो ब्राह्मीं सूतहत्यांव्यवारयत् ॥ १ ॥

उपावृत्ते प्राप्ते सति पांसुं धूलिं वर्षतीति । पूयस्येव गन्धो दुर्गन्धो यस्मिन् । सर्वशः सर्वतः । पूयं ( पीव ) इति ॥ १ ॥ अमेध्यमयं विष्ठामूत्रमयम् । स बल्वलोऽपि । धृक् 'धृजे' क्विप् ॥ २ ॥ तमिति युग्मम् । रामः तं विलोक्य मुसलं हलं च सस्मार ते तूर्णमुपतस्थतुः समीपमाजग्मतुः । कथंभूतम् । भिन्नः विदीर्णः योऽञ्जनचयः कज्जलगिरिः तद्वत् उपमा यस्य तम् अतिकृष्णम् । पुनश्च । तप्तताम्रवत् शिखाः श्मश्रूणि च यस्य । पुनश्च दंष्ट्राभिः उग्रं भीषणं भ्रुकुटीयुक्तं मुखं यस्य तम् । परसैन्यं विदारयतीति तथा मुसलविशेषणम् ॥ ३ ॥ ४ ॥ गगनेचरं सप्तम्या अलुक् । अहनत् अहन् ॥ ५ ॥ स बल्वलः । निर्भिन्नं विदारणं ललाटं यस्य सः । आर्तस्वरं पीडासूचकशब्दं मुञ्चन् भुवि अपतत् । असृक् रक्तम् उद्गिरन् । गैरिकादिधातुभिः अरुणः शैलः यथा पतति तथा ॥ ६ ॥ अवितथाः सत्या आशिषः आशीर्वादान् प्रयुज्य दत्त्वा । विबुधा देवाः यथा वृत्रघ्नमिन्द्रम् ॥ ७ ॥

वैजयन्तीं ददुर्मालां श्रीधामाम्लानपङ्कजाम् । रामाय वाससी दिव्ये दिव्यान्याभरणानि च ॥८॥
अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः । स्नात्वा सरोवरमगाद् यतः सरयुरास्रवत् ॥९॥
अनुस्रोतेन सरयूं प्रयागमुपगम्य सः । स्नात्वा संतर्प्य देवादीन् जगाम पुलहाश्रमम् ॥१०॥
गोमतीं गण्डकीं स्नात्वा विपाशां शोण आप्लुतः । गयां गत्वा पितॄनिष्ट्वा गङ्गासागरसङ्गमे ११
उपस्पृश्य महेन्द्राद्रौ रामं दृष्ट्वाभिवाद्य च । सप्तगोदावरीं वेणां पम्पां भीमरथीं ततः ॥१२॥
स्कन्दं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् । द्रविडेषु महापुण्यं दृष्ट्वाद्रिं वेङ्कटं प्रभुः १३॥
कामकोष्णीं पुरीं काञ्चीं कावेरीं च सरिद्वराम् । श्रीरङ्गाख्यं महापुण्यं यत्र सन्निहितो हरिः १४
ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा । सामुद्रं सेतुमगमन्महापातकनाशनम् ॥१५॥
तत्रायुतमदाद् धेनूर्ब्राह्मणेभ्यो हलायुधः । कृतमालां ताम्रपर्णीं मलयं च कुलाचलम् ॥१६॥
तत्रागस्त्यं समासीनं नमस्कृत्याभिवाद्य च । योजितस्तेन चाशीर्भिरनुज्ञातो गतोऽर्णवम् ।
दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः ॥१७॥
ततः फाल्गुनमासाद्य पञ्चाप्सरसमुत्तमम् । विष्णुः सन्निहितो यत्र स्नात्वास्पर्शद् गवायुतम्॥१८॥
ततोऽभिव्रज्य भगवान् केरलांस्तु त्रिगर्तकान् । गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥१९॥
आर्यां द्वैपायनीं दृष्ट्वा शूर्पारकमगाद् बलः । तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्याथ दण्डकम् २०

श्रियो धामानि अम्लानि विकसितानि पङ्कजानि यस्यां ताम् । वैजयन्ती विजयकरीम् । मुनयो ददुरिति योज्यम् । वाससी वस्त्रे ॥ ८ ॥ तैः मुनिभिः अनुज्ञातो रामः ब्राह्मणैः पुरोहितादिभिः सह सरोवरं मानसमगात् । यतः सरोवरात् सरयुर्नदी आस्रवत् निरगात् ॥ ९ ॥ सरयूमनुलोमेन प्रवाहानुसारेण प्रयागमुपगम्य पुलहाश्रमं गण्डकीतटं जगाम ॥ १० ॥ क्त्वान्तानां सामुद्रं सेतुमगमदिति षष्ठेनान्वयः । विपाशा नदी । शोणो नदः पितॄनिष्ट्वा। ननु जीवत्पितृकेण रामेण कथं पितृयागः कृतः इति चेत् तत्राह। वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात् तेभ्यो दद्यात् स्वयं सुतः इति वचनात् श्राद्धेऽधिकारोऽस्ति । यच्चोक्तं अमाश्राद्धं गयाश्राद्धं न कुर्यात् सपिता पुमान् । तत्तु जीवत्पितृकेण गयामुद्दिश्य न गन्तव्यमित्येवंपरम् । प्रसङ्गात्प्राप्तौ तु श्राद्धं कार्यमेवेति तत्त्वम् । संगमे उपस्पृश्य आचमनपूर्वकं स्नात्वेति पूर्वान्वयि । रामं परशुरामम् । सप्तशाखाभेदेन समुद्रं गताऽतः सप्तगोदावरी तीर्थम् । वेङ्कटमद्रिम् । कामकोष्णीं शिवकाञ्चीम् । पंपाख्यं सरः । यत्र श्रीरङ्गक्षेत्रे दक्षिणा मथुरा व्रजादन्येयम् ॥ ११ ॥ १२ ॥ ॥ १३ ॥ १४ ॥ १५ ॥ तत्रेति युग्मम् । तत्र सामुद्रसेतौ हलायुधः श्रीरामः गवामयुतं दशसहस्रमदात् । पुनः मलयं चागमदित्यनुषङ्गः । तत्र मलये । दक्षिणमर्णवं गतः इति योज्यम् ॥ १६ १७ ॥ दक्षिणमिति सार्द्धम् । तत्र दक्षिणार्णवतटे । स बलदेवः । फाल्गुनम् । फाल्गुनेन अर्जुनेन ग्राहभावं प्राप्तानां पञ्चाप्सरसामुद्धरणात् तन्नाम्नैव प्रसिद्धमेतत् । यत्र सरसि । अस्पर्शत् अस्पृशत् ददौ । गुण आर्षः ॥ १८ ॥ यत्र गोकर्णक्षेत्रे । धूर्जटेः[1] शिवस्य । केरलान् देशान् ॥ १९ ॥ आर्यामिति युग्मम्। आर्यां दुर्गां द्वैपायिनीं[2] द्वीपवासिनीं । व्यासस्थापितां वा

१. धूर्भारभूता जटिर्यस्य । यद्वा । धूर्गङ्गा जटिषु अस्य । 'ज ् झट् संघाते धातुः । 'सर्वधातुभ्यः' इति औणादिक इन् प्रत्ययः ।

२. द्वीपमयनं यस्याः सा द्वीपायना सैव द्वैपायनी । स्वार्थेऽण् ङीप् च ।

प्रविश्य रेवामगमद् यत्र माहिष्मती पुरी । मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥२१॥
श्रुत्वा द्विजैः कथ्यमानं कुरुपाण्डवसंयुगे । सर्वराजन्यनिधनं भारं मेने हृतं भुवः ॥२२॥
स भीमदुर्योधनयोर्गदाभ्यां युद्धतोर्मृधे । वारयिष्यन् विनशनं जगाम यदुनन्दनः ॥२३॥
युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि । अभिवाद्याभवंस्तूष्णीं किंविवक्षुरिहागतः २४
गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ । मण्डलानि विचित्राणि चरन्ताविदमब्रवीत् २५
युवां तुल्यबलौ वीरौ हे राजन् हे वृकोदर । एकं प्राणाधिकं मन्ये उतैकं शिक्षयाधिकम् २६
तस्मादेकतरस्येह युवयोः समवीर्ययोः । न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः २७
न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् । अनुस्मरन्तावन्योन्यं दुरुक्तं दुष्कृतानि च ॥२८॥
दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ । उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः ॥२९॥
तं पुनर्नैमिषं प्राप्तमृषयोऽयाजयन् मुदा । क्रत्वङ्गं क्रतुभिः सर्वैर्निवृत्ताखिलविग्रहम् ॥३०॥
तेभ्यो विशुद्धविज्ञानं भगवान् व्यतरद् विभुः । येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः॥३१॥
स्वपत्न्यावभृथस्नातो ज्ञातिबन्धुसुहृद्वृतः । रेजे स्वज्योत्स्नयेवेन्दुः सुवासाः सुष्ठ्वलङ्कृतः ३२॥
ईदृग्विधान्यसंख्यानि बलस्य बलशालिनः । अनन्तस्याप्रमेयस्य मायामर्त्यस्य सन्ति हि ॥३३॥
योऽनुस्मरेत रामस्य कर्माण्यद्भुतकर्मणः । सायं प्रातरनन्तस्य विष्णोः स दयितो भवेत्॥३४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे बलदेवतीर्थयात्रानिरूपणं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

शूर्पारकं क्षेत्रम् । दण्डकमुत्तरेणान्वेति ॥ २० ॥ रेवां नर्मदाम् । यत्र रेवातीरे । मनुतीर्थं ब्रह्मावर्ते मनोः क्षेत्रे ॥ २१ ॥ २२ ॥ मृधे संग्रामे । वारयिष्यन् वारयितुं । हेतौ शतृप्रत्ययः । विनशनं कुरुक्षेत्रम् । विशेषेण नश्यन्ति पापानि यत्र तत् विनशनम् । भीमेति शेषे षष्ठी ॥२३॥ किं किञ्चित् विवक्षतीति वा आगतः ॥२४॥ संरब्धौ क्रुद्धौ । मण्डलानि पादविक्षेपात् ( पैंतरासंज्ञकान् ) ॥ २५ ॥ एकं भीमं प्राणाधिकं बलाधिकम् । 'प्राणो हृन्मारुते बले' इति धरणिः । शिक्षया मद्दत्तया अधिकम् । उत अप्यर्थे ॥२६॥ अन्यः पराजयो वा न लक्ष्यते अतो रणः विरमतु ॥ २७ ॥ हे नृप अर्थवत् युक्तियुक्तम् दुरुक्तं । दुर्वचनं द्रौपदीमालक्ष्य । दुष्कृतानि लाक्षाभवनदाहादीनि ॥ २८ ॥ तत् वाक्याग्रहणं दिष्टं दैवकृतम् । समुपागतः ज्ञातिभिः सह सम्मिलितः ॥ २९ ॥ क्रत्वङ्गं यज्ञमूर्ति श्रीरामम् अयाजयन् । निवृत्तोऽखिलो विग्रहः[1] पापं यस्य तम् ॥ ३० ॥ आत्मनि अदो विश्व विश्वगं च आत्मानं येन विदुः तत् विशुद्धविज्ञानं संशयविपर्ययादिरहितं तेभ्यो मुनिभ्यःव्यतरत् ददौ इत्यन्वयः । विभुः सर्वसमर्थो रामः ॥ ३१ ॥ स्वपत्न्या रेवत्या सह अवभृथेन यज्ञान्तस्नानेन स्नातः कृतस्नानः सन् रेजे । यथा ज्योत्स्नया चन्द्रिकया इन्दुः राजते ॥ ३२ ॥ बलेन शालते शोभते तस्य । मायया कृपया मर्त्यस्य मनुष्यभावं प्राप्तस्य सन्ति कर्माणीति शेषः ॥३३॥ अनन्तस्य शेषावतारस्य भगवतः दयितः प्रियो भवेत् ॥३४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे गूढार्थदीपिन्यामेकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

१. 'कामे तापे तथा पापे विरोधे विग्रहो गृहे' । इति निरुक्तिः ।

## अथाशीतितमोऽध्यायः

### राजोवाच

भगवन् यानि चान्यानि मुकुन्दस्य महात्मनः । वीर्याण्यनन्तवीर्यस्य श्रोतुमिच्छामहे प्रभो॥ १ ॥

को नु श्रुत्वा सकृद् ब्रह्मन्नुत्तमश्लोकसत्कथाः । विरमेत विशेषज्ञो विषण्णः काममार्गणैः ॥ २ ॥

सा वाग् यया तस्य गुणान् गृणीते करौ च तत्कर्मकरौ मनश्च ।
स्मरेद् वसन्तं स्थिरजङ्गमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥ ३ ॥
शिरस्तु तस्योभयलिङ्गमानमेत् तदेव यत् पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णोरथ तज्जनानां पादोदकं यानि भजन्ति नित्यम् ॥ ४ ॥

### सूत उवाच

विष्णुरातेन सम्पृष्टो भगवान् बादरायणिः । वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥ ५ ॥

### श्रीशुक उवाच

कृष्णस्यासीद् सखा कश्चिद् ब्राह्मणो ब्रह्मवित्तमः । विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥
यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी । तस्य भार्या कुचैलस्य क्षुत्क्षामा च तथाविधा॥ ७ ॥

---

गत्वाऽशीतितमेऽर्थेप्सुः सुदामा द्वारकापुरीम् ।
हरिणा सत्कृतस्तत्र चक्रतुस्तौ कथां मिथः ॥ १ ॥

हे प्रभो यानि अन्यानि वीर्याणि चरित्राणि तानि श्रोतुमिच्छाम । प्रार्थनायां लोट् ॥ १ ॥ हे ब्रह्मन् ! सकृत् एकवारमपि यस्य सत्कथाः श्रुत्वा विशेषज्ञः विवेकी चेत् को नु विरमेत विरक्तो भवेत् न कोऽपीत्यन्वयः । काममार्गणैः कामवाणैः विषयान्वेषणैर्वा विषण्णः खिन्नः सन् उत्तमः श्लोकः[1] यशो यस्य । उत्तमैनरिदादिभिः श्लोक्यते स्तूयते वा ॥२॥ यया गुणान् गृणीते वर्णयति सा वाक् । यौ कर्मकरौ तौ करौ । यत् स्थावरादिषु वसन्तं भगवन्तं स्मरेत् तन्मनः । यश्च कथाः शृणोति स कर्णः । अत्र वक्तीति वाक् । करोतीति करः । मन्यते जानातीति मनः कर्णयति शृणोतीति कर्णः क्रमात् वचिकृञ्मनिकर्णीनां धातूनामेतेऽन्वर्थकाः प्रयोगा ज्ञेयाः ॥ ३ ॥ उभयलिङ्गं स्थावरजङ्गमात्मकं तस्यैव लिङ्गं मूर्तिरिति[2] मत्वा यत् आनमेत् तदेव शिरः । एतदेव यत् पश्यति तद्धि तदेव चक्षुः।विष्णोरथ च तद्भक्तानां पादोदकं यानि भजन्ति धारयन्ति तान्येव अङ्गानि । अंगन्ति सेवां प्राप्नुवन्तीति अंगानि । श्रिञ् सेवायाम् इति नमनलक्षणसेवायां शिर इति निपात्यते । चष्टे पश्यतीति चक्षुः । चक्षिर्दर्शनेऽप्यस्ति । एतेषामपि अन्वर्थता ज्ञेया ॥ ४ ॥ विष्णुरातेन परीक्षिता । बादरायणिः श्रीशुकः ॥ ५ ॥ कश्चित् सुदामेति इन्द्रियार्थेषु विषयेषु । साक्षात् तन्नाम तु श्रीकृष्णस्य ज्येष्ठगुरुभ्रातृत्वेव गुरुत्वादेव श्रीशुकेन नोपात्तम् । सुदामश्रीदाम्नोः पर्यायवाचित्वं च ज्ञेयम् ॥ ६ ॥ सुष्ठश्रीशब्दावपि पर्यायवाचिनौ । सुष्ठु श्रियं वा ददातीति सुदामा श्रीदामेति । यदृच्छया देवेच्छया प्राप्तेन अन्नेन वर्तमानो जीविकां कुर्वन् आसीत् । तथाविधा क्षुद्दुर्बला

---

१. 'पद्ये यशसि च श्लोकः' इति कोशः ।

२. लिङ्गं चिन्हेऽनुमाने च मूर्तिप्रकृतिहेतुषु । इति निरुक्तिः

पतिव्रता पतिं प्राह म्लायता वदनेन सा । दरिद्रा सीदमाना सा वेपमानाभिगम्य च ॥ ८ ॥
ननु ब्रह्मन् भगवतः सखा साक्षाच्छ्रियः पतिः । ब्रह्मण्यश्च शरण्यश्च भगवान् सात्वतर्षभः ॥ ९ ॥
तमुपैहि महाभाग साधूनां च परायणम् । दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने ॥ १० ॥
आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः । स्मरतः पादकमलमात्मानमपि यच्छति ।
किं न्वर्थकामान् भजतो नात्यभीष्टाञ्जगद्गुरुः ॥११॥
स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदु । अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ।
इति सञ्चिन्त्य मनसा गमनाय मतिं दधे ।१२। अप्यस्त्युपायनं किञ्चिद् गृहे कल्याणि दीयताम्।१३।
याचित्वा चतुरो मुष्टीन् विप्रान् पृथुकतण्डुलान् । चैलखण्डेन तान् बद्ध्वा भर्त्रे प्रादादुपायनम् १४।
स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल । कृष्णसंदर्शनं मह्यं कथं स्यादिति चिन्तयन्॥ १५॥
त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च सद्विजः । विप्रोऽगम्यान्धकवृष्णीनां गृहेष्वच्युतधर्मिणाम् ॥
गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः । विवेशैकतमं श्रीमद् ब्रह्मानन्दं गतो यथा ॥१७॥
तं विलोक्याच्युतो दूरात् प्रियापर्यङ्कमास्थितः । सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ।१८।
सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः । प्रीतो व्यमुञ्चदब्बिन्दून् नेत्राभ्यां पुष्करेक्षणः ॥१९॥
अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम् । उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ।
अग्रहीच्छिरसा राजन् भगवाँल्लोकपावनः ॥२०॥
व्यलिम्पद् दिव्यगन्धेन चन्दनागुरुकुङ्कुमैः ॥२१॥
धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा । अर्चित्वाऽऽवेद्य ताम्बूलं गां च स्वागतमब्रवीत् ॥२२॥

---

कुचैला भार्या च आसीत् ॥ ७ ॥ चकारोऽनुक्तसमुच्चयार्थः । एकदा म्लायता शुष्यता वदनेन उपलक्षिता सती सा पतिमभिगम्य प्राहेत्यन्वयः । अवसीदमाना भोग्यवस्तुनोऽभावात् क्लिश्यन्ती वेपमाना कम्पमाना च ॥ ८ ॥ सात्वतेषु यादवेषु श्रेष्ठः ॥ ९ ॥ तमिति सार्द्धम् । तं श्रीकृष्णमुपेहि गच्छ । सीदते दरिद्राय । भोजेति यादवानामवान्तरभेदाः ॥१०॥ स्मरतः स्मरते भजते आत्मनं स्वरूपमपि यच्छति ददाति तदा नात्यभीष्टान् अतितुच्छान् अर्थकामान् यच्छतीति किन्नु वक्तव्यम् ॥ ११ ॥ स इति सार्द्धम् । मृदु क्रियाविशेषणम् । मतिं दधे चकार ॥ १२ ॥ अपीत्यर्द्धम् । अपि यदि उपायनम् अस्ति तर्हि दीयताम् ॥ १३ ॥ नवार्द्धभ्रष्टधान्यकुट्टनाज्जाता पृथुकतण्डुलाः । अप्यस्ति किमस्तीति प्रश्नः । पृथुकः स्याच्चिपिटिके इत्यमरः । चैलखण्डेन चीरेण ॥ १४ ॥ अग्र्यः श्रेष्ठः । मह्यं मम ॥ १५ ॥ त्रीणि इत्यर्द्धम् । गुल्मानि सैन्यस्थानानि । कक्षा प्रतोलीः सद्विजः द्विजैः सहितः । अतीयाय अतिक्रम्य जगाम ॥ १६ ॥ विप्र इति सार्द्धम् । विप्रः सुदामा दुर्गमेषु वृष्णीनां गृहेषु मध्ये हरेर्महिषीणामेकतमं गृहं विवेशेत्यन्वयः । तदा स द्विजः ब्रह्मानन्दं गतो यथा भवति तथा बभूवेति शेषः । एवमन्वयभेदात् द्विज इत्यस्य न पौनरुक्त्यम् ॥ १७ ॥ अच्युतः त दूरात् विलोक्य सहसा उत्थाय अभ्येत्य तत्समीपम् आगत्य दोर्भ्यां बाहुभ्यां पर्यग्रहीत् आलिङ्गितवानित्यन्वयः ॥ १८ ॥ सख्युः अङ्गसंगेन अतिनिर्वृतः आनन्दितः कमलेक्षणः भगवान् प्रीतः सन् नेत्राभ्याम् अब्बिन्दून् आनन्दाश्रूणि व्यमुञ्चत् ॥ १९ ॥ अथेति सार्द्धम् । अथ भगवान् तं स्वपर्यङ्के उपवेश्य सख्युः समर्हणमुपायनम् उपहृत्य समर्घ्यं स्वयमस्य पादौ अवनिज्य प्रक्षाल्य पादावनेजनीः पादप्रक्षालिताः अपः शिरसा अग्रहीत् दधारेत्यन्वयः ॥ २० ॥ व्यलिम्पदित्यर्द्धम् । स्पष्टम् ॥ २१ ॥ धूपादिभिः मित्रमर्चित्वा गां धेनुं मधुरवाणीं वा भोजनान्ते ताम्बूलं च आवेद्य स्वागत-

कुचैलं मलिनं क्षामं द्विजं धमनिसंततम् । देवी पर्यचरत् साक्षाच्चामरव्यजनेन वै ॥२३॥
अन्तःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना । विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम् ॥२४॥
किमनेन कृतं पुण्यमवधूतेन भिक्षुणा । श्रिया हीनेन लोकेऽस्मिन् गर्हितेनाधमेन च ॥२५॥
योऽसौ त्रिलोकगुरुणा श्रीनिवासेन सम्भृतः । पर्यङ्कस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा॥२६॥
कथयाञ्चक्रतुर्गाथाः पूर्वा गुरुकुले सतोः । आत्मनो ललिता राजन् करौ गृह्य परस्परम् ॥२७॥

श्रीभगवानुवाच

अपि ब्रह्मन् गुरुकुलाद् भवता लब्धदक्षिणात् । समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा ॥२८॥
प्रायो गृहेषु ते चित्तमकामविहतं तथा । नैवातिप्रीयसे विद्वन् धनेषु विदितं हि मे ॥२९॥
केचित् कुर्वन्ति कर्माणि कामैरहतचेतसः । त्यजन्तः प्रकृतीर्दैवीर्यथाहं लोकसंग्रहम् ॥३०॥
कच्चिद् गुरुकुले वासं ब्रह्मन् स्मरसि नौ यतः । द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते ॥३१॥
स वै सत्कर्मणां साक्षाद् द्विजातेरिह सम्भवः । आद्योऽङ्ग यत्राश्रमिणां यथाहं ज्ञानदो गुरुः ॥३२॥
नन्वर्थकोविदा ब्रह्मन् वर्णाश्रमवतामिह । ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम् ॥३३॥
नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा । तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥३४॥
अपि नः स्मर्यते ब्रह्मन् वृत्तं निवसतां गुरौ । गुरुदारैश्चोदितानामिन्धनानयने क्वचित् ॥३५॥

---

मत्रवोत् अकरोदित्यर्थः ॥ २२ ॥ क्षामं दुर्बलम् । धमनीभिः गलस्थशिरानाडीभिः सन्ततं व्याप्तम् तं साक्षात् देवी रुक्मिणी पर्यचरत् वीजयामास व्यजनेन सेवितवती । अत्र शैब्येत्यपपाठः स तु रुक्मिण्यन्तःपुरद्वारि क्षणं स्थितः इति पाद्मोत्तरखण्डोक्तिविरोधात् अतो न श्रीधरसम्मतः ॥ २३ ॥ अवधूतं मलिनवेषम् । सभाजितं सत्कृतम् ॥ २४ ॥ अधमेन इति वेषत्वेन तथा प्रतीति नँ वस्तुतः । अनेन किमनिर्वचनीयं पुण्यं कृतम् ॥ २५ ॥ संभृतः संमानितः परिष्वक्तः आलिङ्गितश्च । यथा अग्रजो बलरामः तथा ॥ २६ ॥ गुरुकुले सतोः वर्तमानयोः परस्परं आत्मनोः निजयोः ललिताः पूर्वाः गाथाः परस्परं चक्रतुरित्यन्वयः । करौ गृह्य गृहीत्वा ॥२७॥ गुरुकुलात् समावृत्तेन समाप्तब्रह्मचर्येण भवता अपि किं भार्या ऊढा परिणीता नवेति गार्हस्थ्यसूचकोष्णीषादिदर्शनात् संशयादिव प्रश्नः ॥ २८ ॥ उत्तरादानात् विवाहं मत्वाऽऽहः–प्राय इति यथा अन्यस्य तथा ते चित्तं प्रायः कामैः विषयैः विहतमाकृष्टं न भवतीति मे विदितम् । अतो धनेष्वपि नैवातिप्रीयसे । विवेकिनस्तवैतदुचितमिति भावः ॥२९॥ केचित् कामैः अनाकृष्टचेतसः लोकसंग्रहार्थं कर्माणि कुर्वन्ति दैवीः प्रकृतीः विषयवासना त्यजन्तः यथाऽहं करोमि । लोकसंग्रहमिति क्रियाविशेषणम् ॥३०॥ यद्वा । गुरुकुलेवासमित्येकपदम् । नौ आवयोः । गुरुकुले वासो यस्मिन् तं ब्रह्मचर्याश्रमं तद्वृत्तं च स्मरसि । यतो गुरोः वासात् विज्ञेयं भगवत्तत्त्वं विज्ञाय द्विजः तमसः संसारस्य पारं मोक्षमश्नुते प्राप्नोति ॥३१॥ यत्र संभवो जन्ममात्रं स पिता तावत् आद्यो गुरुः । द्विजातेः सतः सत्कर्मणां यत्र संभवः उपनीय वेदाध्यापकः स द्वितीयो गुरुः सर्वेषामाश्रमिणां साक्षात् ज्ञानदः स तु साक्षात् अहमेवेत्यन्वय । अङ्ग हे मित्र ॥ ३२ ॥ वर्णाश्रमवतां मध्ये ननु निश्चयेन ते अर्थकोविदाः पुरुषार्थकुशलाः । के । ये मया गुरुणा प्रयोक्त्रा वाचा उपदेशमात्रेण अञ्जः सुखेन भवार्णवं तरन्ति ते ॥३३॥ इज्या यागादिः गृहस्थधर्मः । प्रजातिः प्रकृष्टं जन्म उपनयनं ब्रह्मचारिधर्मः ताभ्यां तपसा वानप्रस्थेन । उपशमेन यतिधर्मेण च अहं नैव तुष्येयं यथा गुरुसेवया ॥३४॥ गुरौ गुरुसमीपे निवसताम् अत एव क्वचित् कदाचित् गुरुदारैः इन्धनानयने प्रेरितानां नोऽस्माकं यत् वृत्तं जातं तत् अपि किं स्मर्यते । बहुत्वं रामाद्यपेक्षमा ॥ ३५ ॥ अपगते ऋतौ

प्रविष्टानां महारण्यमपर्तौ सुमहद् द्विज । वातवर्षमभूत् तीव्रं निष्ठुराः स्तनयित्नवः ॥३६॥

सूर्यश्चास्तं गतस्तावत् तमसा चावृता दिशः । निम्नं कूलं जलमयं न प्राज्ञायत किञ्चन ॥३७॥

वयं भृशं तत्र महानिलाम्बुभिर्निहन्यमाना मुहुरम्बुसम्प्लवे ।
दिशोऽविदन्तोऽथ परस्परं वने गृहीतहस्ताः परिबभ्रिमातुराः ॥३८॥

एतद् विदित्वा उदिते रवौ सान्दीपनिर्गुरुः । अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान् ॥३९॥

अहो हे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः । आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥४०॥

एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् । यद् वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥४१॥

तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः । छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥४२॥

इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु । गुरोरनुग्रहेणैव पुमान् पूर्णः प्रशान्तये ॥४३॥

ब्राह्मण उवाच

किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो । भवता सत्यकामेन येषां वासो गुरावभूत् ॥४४॥

यस्यच्छन्दोमयं ब्रह्म देह आवपनं विभो । श्रेयसां तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥४५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे
श्रीदामचरितेऽशीतितमोऽध्यायः ॥ ८० ॥

---

अपि अस्माकं समक्षे तीव्रं वातवर्षमभूत् स्तनयित्नवो गर्जितवन्तो मेघाश्च आसन् ॥३६॥ तमसा अन्धकारेण । अत एव सर्वं जलमयं प्रचुरजलमासीत् । प्राचुर्ये मयट् । नतं नोचस्थानं कूलं तटमुन्नतस्थानं च न प्राज्ञायत ॥३७॥ वयं तत्र वने तीव्रैः अनिलैः जलैश्च मुहुः निहन्यमानाः पीड्यमानाः गृहीतहस्ताः सन्तः इतस्ततःपरिबिभ्रिमेत्यन्वयः । कथभूते । अम्बूनां संप्लवः प्रवाहो यस्मिन् तस्मिन् एकोदके । बभ्रमिम इति वक्तव्यम् भ्रमेष्टिलोप आर्षः ॥ ३८ ॥ एतत् इन्धनानयनार्थमस्मत्प्रेषणम् । नोऽस्मान् अन्वेषमाणः आतुरान् क्लिष्टान् अपश्यत् । एष्ट गतौ धातुः ॥ ३९ ॥ अनादृत्य उपेक्ष्य अगणय्य मत्पराः मत्सेवाऽनुरक्ता जाताः । हे पुत्रकाः अनुकम्पयां कन् ॥ ४० ॥ निष्कृतं प्रत्युपकारः ऋणशोधनमित्यर्थः । सर्वे अर्था धर्मादयः यस्मात् स चासौ आत्मा देहः तस्य अर्पणम् । यद्वा । सर्वार्थस्य वस्तुनः आत्मनश्च अर्पणम् । भावेन कापटचराहित्येन ॥ ४१ ॥ सत्याः सफलाः सन्तु । छन्दांसि पठितानि[1] अयातयामानि अविस्मृतानि भवन्तु ॥ ४२ ॥ अनेकानि वृत्तानि सन्ति तानि त्वया किं स्मर्यन्ते इति शेषः । पूर्णः कृतकृत्यः प्रशान्तये मोक्षाय भवति मोक्षाधिकारी भवतीत्यर्थः ॥ ४३ ॥ येषामस्माकं सत्यकामेन सत्यसंकल्पेन भवता सह गुरुसमीपे वासोऽभूत् तैरस्माभिः किमनिर्वृत्तं किमसम्पन्नं न किमपि । अपि तु सर्वं सम्पन्नं पूर्णमेवेत्यर्थः । गुराविति । सामीपिकाधारे सप्तमी ॥ ४४ ॥ यस्य देहः श्रेयसां धर्मादिफलानामावपनम्[2] उत्पत्तिस्थानं तस्य गुरुषु वासः अत्यन्तविडम्बनम् अस्मदादीनां शिक्षार्थंमनुकरणमात्रमेव लोका अपि एवं कुर्युरिति । कथंभूतो देहः छन्दोमयं वेदमयं ब्रह्मैव ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यामशीतितमोऽध्यायः ॥ ८० ॥

---

१. यातः गतः यामः प्रहरो यस्यान्नस्य तदन्नं गतसारं भवति तद्वदन्यदपि तद्विपरीतमयातयामम् । अयातयामः साफल्ये इति कोशः । जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् । इत्यमरः ।

२. टुवप् बीजसन्ताने धातुः आसमन्तादुप्यतेऽस्मिन्निति आवपनम् अधिकरणे ल्युट् ।

## अथैकाशीतितमोऽध्यायः

**श्रीशुक उवाच**

स इत्थं द्विजमुख्येन सह संकथयन् हरिः । सर्वभूतमनोऽभिज्ञः स्मयमान उवाच तम् ॥१॥
ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान् प्रहसन् प्रियम् । प्रेम्णा निरीक्षणेनैव प्रेक्षन् खलु सतां गतिः ॥२॥

**श्रीभगवानुवाच**

किमुपायनमानीतं ब्रह्मन् मे भवता गृहात्। अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ।
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥३॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥४॥
इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः । पृथुकप्रसृतिं राजन् न प्रायच्छदवाङ्मुखः ॥५॥
सर्वभूतात्मदृक् साक्षात् तस्यागमनकारणम् । विज्ञायाचिन्तयन्नायं श्रीकामो माभजत् पुरा ॥६॥
पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया । प्राप्तो मामस्य दास्यामि सम्पदोऽमर्त्यदुर्लभाः ॥७॥
इत्थं विचिन्त्य वसनाच्चीरबद्धान् द्विजन्मनः । स्वयं जहार किमिदमिति पृथुकतण्डुलान् ॥८॥
नन्वेतदुपनीतं मे परमप्रीणनं सखे । तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुलाः ॥९॥
इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे । तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः ॥१०॥
एतावतालं विश्वात्मन् सर्वसम्पत्समृद्धये । अस्मिँल्लोकेऽथवामुष्मिन् पुंसस्त्वत्तोषकारणम् ॥११॥

---

एकाशीतितमे भुक्त्वा सुदाम्नः पृथुकान् हरिः ।
दत्त्वाऽप्यलौकिकीं लक्ष्मीं कृतार्थं स्व न मन्यते ॥ १ ॥

द्विजमुख्येन सुदाम्ना सह संकथयन् अभिज्ञः धनार्थमागतः इति ज्ञानवान् स्मयमानः ईषद्धसन् ॥ १ ॥ प्रहसन् स्वप्रसन्नतां द्योतयन् । प्रेम्णा प्रियं मित्रं प्रेक्षंश्च सन्तोषयंश्च तमुवाचेति पूर्वेणान्वयः । प्रहसन् क्ष्वेली[1] कुर्वन्वा ॥ २ ॥ अणु अपि उपाहृतं समर्पितम् ॥ ३ ॥ प्रयतात्मनः शुद्धचित्रस्य भक्तस्य भक्त्या अपहृतं समर्पितं यत् पत्रादि तत् अहम् अश्नामि । अत्र विदुरस्य पत्रं गजेन्द्रस्य पुष्पं शवर्याः फलं रन्तिदेवस्य तोयम् । इत्यवगन्तव्यम् । वनवासकाले द्रौपद्या पत्रं गृहीतम् ॥ ४ ॥ प्रसृतिमर्धाञ्जलिं न प्रायच्छत् न ददौ किन्तु अधोमुखोऽभूत् । अर्द्धाञ्जलौ तु प्रसृतिः' । इति यादवः ॥ ५ ॥ सर्वभूतानां प्राणिमात्राणाम् अन्तःकरणसाक्षी । पुरा पूर्वजन्मनि श्रीकामः सन् मा मां न अभजदित्यन्वयः ॥ ६ ॥ पतिव्रतायास्तु । अत्र तु शब्देनारुचिः प्रकटिता ॥ ७ ॥ तव कुक्षिस्थमिदं किमिति बिचिन्त्य द्विजन्मनो जीर्णवस्त्रात् पृथुकान् स्वयं जहारेत्यन्वयः कथभूतात् वसनात् । चीरेण वस्त्रखण्डेन बद्धात् इति पञ्चम्यन्तपाठ एवं साधुः ॥ ८ ॥ एतत् उपनीतम् उपायनं मे परमप्रीणनं तृप्तिकरम् । मां तर्पयन्ति । अङ्ग हे सखे ॥ ९ ॥ सकृत् एकां मुष्टिम् । जग्धुमत्तुम् । तत्परा तादृक्कुत्सितान्नभोजनादि सोढुमशक्तेत्यर्थः ॥ १० ॥ तव तोषस्य कारणं सर्वसम्पत् समृद्धये एतावतैव एक मुष्टप्रदानेनेव अलं पर्याप्तं नातः परं किञ्चिदपेक्ष्यते । इह लोके परलोके च द्वितीयया मामपि एतदधीनां

---

१. क्ष्वेली स्यात्सवयोहास्ये इति निरुक्तिः ।

ब्राह्मणस्तां तु रजनीमुषित्वाच्युतमन्दिरे । भुक्त्वा पीत्वा सुखं मेने आत्मानं स्वर्गतं यथा ॥१२॥

श्वोभूते विश्वभावेन स्वसुखेनाभिवन्दितः । जगाम स्वालयं तात पथ्यनुव्रज्य नन्दितः ॥१३॥

स चाऽलब्ध्वा धनं कृष्णान्न तु याचितवान् स्वयम् । स्वगृहान् व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः ॥१४॥

अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया । यद् दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि ॥१५॥

क्वाहं दरिद्रः पापीयान् क्व कृष्णः श्रीनिकेतनः । ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः १६

निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा । महिष्या वीजितः श्रान्तो वालव्यजनहस्तया ॥१७॥

शुश्रूषया परमया पादसंवाहनादिभिः । पूजितो देवदेवेन विप्रदेवेन देववत् ॥१८॥

स्वर्गापवर्गयोः पुसां रसायां भुवि सम्पदाम् । सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥१९॥

अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् । इति कारुणिको नूनं धनं मेऽभूरि नाददात् ॥२०॥

इति तच्चिन्तयन्नन्तः प्राप्तो निजगृहान्तिकम् । सूर्यानलेन्दुसंकाशैर्विमानैः सर्वतो वृतम् ॥२१॥

विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः । प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलवारिभिः ॥२२॥

जुष्टं स्वलंकृतैः पुम्भिः स्त्रीभिश्च हरिणाक्षिभिः । किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् २३

एवं मीमांसमानं तं नरा नार्योऽमरप्रभाः । प्रत्यगृह्णन् महाभागं गीतवाद्येन भूयसा ॥२४॥

---

करिष्यति किम् ? ॥ ११ ॥ मन्दिरे राजभवने भक्ष्यं भुक्त्वा पेयं दुग्धादि पीत्वा स्वर्गवासिनमिव सुखिनं मेने । इति लोकोक्तिमात्रं नहि नश्वरसुखेनास्य साम्यं विवक्षितम् ॥ १२ ॥ श्वोभूते आगामिदिने सूर्योदये हे तात इति शुकोक्तिः । भगवता विश्वभावेन सर्वप्रकारेण पथि अनुव्रज्य पृष्ठतो गत्वा नन्दितः[1] सन्तोषितः अभिवन्दितश्च स जगामेत्यन्वयः । स्वसुखेन आनन्दरूपेण भगवता ॥ १३ ॥ व्रीडितः कार्पण्येन महतः श्रीकृष्णस्य दर्शनेन निर्वृतः आनन्दितः ॥१४॥ यत् यस्मात् दरिद्रतमोऽपि अहं भगवता आश्लिष्टः।आलिङ्गितः । कथंभूतेन । उरसि लक्ष्मी बिभ्रता ॥ १५ ॥ इतिरप्यर्थे । स्मेत्याश्चर्ये । बन्धुरधमोऽपि ॥ १६ ॥ जुष्टे सेविते पर्यङ्के निवासितः उपवेशितः । यथा भ्रातरः । एकवचनान्तम् । भ्रा भारः तोर्यतेऽनेनेति भ्रातरः । 'ऋदोरप्' इत्यप् प्रत्ययः । भ्राता भ्रा प्रकटो भार 'इति सौभरिः' भ्रातर इत्यदन्तोऽपि । शंकरप्रोक्तव्याकरणार्णवग्रन्थे । इति वंशीधरी ॥ १७ ॥ संवाहनं पाद संमर्दनम् ॥ १८ ॥ स्वर्गादीनां सर्वासां सिद्धीनां च मूलं कारणं तच्चरणार्चनमेव । रसायां पाताले ॥ १९ ॥ माद्यन् उन्मत्तः सन् न स्मरेत् अपि तु ततो भ्रश्येदित्यभिप्रेत्य अभूरि स्वल्पमपि नाददात् यद्वा न अददात् तदेव भूरि नु निश्चितम् ऊनमल्पं न अपितु भूरि तथाज्ञानादिति वा ॥ २० ॥ इतीति सार्धयुग्मम् । इति अन्तर्हृदि चिन्तयन् निजगृहस्य अन्तिकं प्राप्त इत्यन्वयः । कथंभूतम् । सूर्यादिसंकाशैः सदृशैः विमानैः सप्तभूमिकप्रासादैः वृतम् । तथा विचित्रोपवनादिभिश्च वृतम् । कथंभूतैः । कूजद्भिः द्विजकुलैः पक्षिभिः आकुलैः व्याप्तैः । तथा प्रोत्फुल्लानि कुमुदादीनि येषु तानि वारीणि येषु तैः सरोभिः रिति विशेष्यमध्याहार्यम् । पुंभिः स्त्रीभिश्च जुष्टम् । हरिणेति[2] ॥२१॥२२॥ किमिदमित्यर्द्धम् । इदं स्थानं तत् द्वारकासदृशम् कथमभूत् ॥२३॥ एवं मीमांसमानं विचार्यमाणम् । भूयसा महता ॥२४॥ उत्पन्नो हर्षोऽति-

---

१. पुनः आगन्तव्यमिति विनयेन ।

२. हरिणानामिव अक्षीणि यासां ताभिरित्युभयविशेषणत्वान्न समासान्त इति तोषिणी । वस्तुतस्तु 'पुमान् स्त्रिया' इत्यनेन पुंसः शेषात् हरिणाक्षैरिति भाव्यम् ।

पतिमागतमाकर्ण्य पत्न्युद्धर्षातिसम्भ्रमा । निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात् ॥२५॥
पतिव्रता पतिं दृष्ट्वा प्रेमोत्कण्ठाश्रुलोचना । मीलिताक्ष्यनमद् बुद्ध्या मनसा परिषस्वजे ॥२६॥
पत्नीं वीक्ष्य विस्फुरन्तीं देवीं वैमानिकीमिव । दासीनां निष्ककण्ठीनां मध्ये भान्तीं स विस्मितः ॥
प्रीतः स्वयं तया युक्तः प्रविष्टो निजमन्दिरम् । मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा ॥२८॥
पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः । पर्यङ्का हेमदण्डानि चामरव्यजनानि च ॥२९॥
आसनानि च हैमानि मृदूपस्तरणानि च । मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥३०॥
स्वच्छस्फटिककुडयेषु महामारकतेषु च । रत्नदीपा भ्राजमाना ललनारत्नसंयुताः ॥३१॥
विलोक्य ब्राह्मणस्तत्र समृद्धीः सर्वसम्पदाम् । तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥३२॥

नूनं बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ।
महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥३३॥

नन्वब्रुवाणो दिशते समक्षं याचिष्णवे भूर्यपि भूरिभोजः ।
पर्जन्यवत्तत् स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे ॥३४॥

किंचित्करोत्युर्वपि यत् स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारी ।
मयोपनीतां पृथुकैकमुष्टिं प्रत्यग्रहीत् प्रीतियुतो महात्मा ॥३५॥

---

संभ्रमः अत्यादरश्च यस्याः । उत्पन्नहर्षेण आकुलता वा यस्याः सा आलयात् कमलवनात् रूपधारिणी श्रीरिव ॥ २५ ॥ परिषस्वजे आलिङ्गितवती प्रेमाधिक्येन अश्रूणि लोचनयोः यस्याः सा ॥२६॥ वैमानिकीं विमानारूढां देवाङ्गनामिव । निष्कं ग्रैवेयकभूषणं कण्ठे यासां तासाम् ॥२७॥२८॥ यत्र मन्दिरे शय्याद्या अलौकिकीः समृद्धीः वीक्ष्य ताम् अहैतुकीम् आकस्मिकीं समृद्धिं प्रति निर्व्यग्रः सन् तर्कयामास कुतः आगतैषेति चतुर्थेनान्वयः । शय्यादयः सन्तीति सर्वत्र क्रियाशेषः । कथंभूताः । दान्ता गजदन्तनिर्मिताः । रुक्मं सुवर्णं तन्मयाः परिच्छदाः सामग्र्यो यासां ताः । पर्यङ्का अपि तथा । आस्यतेऽस्मिन्निति आसनम् । आसु उपवेशने धातु ॥२९॥ आसनानि चौकी प्रभृतीनि मृदूनि कोमलानि आस्तरणानि येषु तानि । मुक्तानां दामानि विलम्बन्ते येषु तानि । वितानं चन्द्रातपः- (चांदनी) ॥ ३० ॥ कुडयेषु भित्तिषु । कथंभूतेषु । मरकता इन्द्रनीलमणयः जटिताः येषु तेषु । ललनारत्नैः संयुताः भ्राजमानाः रत्नदीपाश्च सन्ति । प्रथमान्तम् ॥ ३१ ॥ ३२ ॥ बत हर्षे नूनं निश्चितमेतत् एष चासौ अहं च तस्य एतन्मम समृद्धिहेतुः य दूत्तमस्य अवलोकतः कृपाकटाक्षादन्यो नैव उपपद्येत नैव संभाव्येत । दुर्भगस्य मन्दभाग्यस्य । शश्वत् सर्वदा ॥ ३३ ॥ ननु निश्चयेन मे सखा श्रीकृष्णः समक्षमब्रुवाण एव याचिष्णवे याचकाय भूर्यपि बह्वपि दिशते ददाति । यतो भूरिभोजः बहुभोगवान् । अतः पर्जन्यवत् तत् सर्वं प्राणिजातं स स्वयमीक्षमाणः सन् अभिलषितं ददाति । यथा पर्जन्यः समक्षं बह्वपि वर्षमल्पमेव मन्यमानो रात्रौ कर्षके निद्राणे सति असमक्षं तत्क्षेत्रं जलैराप्लावयति एवं श्रीकृष्णोऽपि तथैव करोति । दाशार्हकाणां यादवानां श्रेष्ठः ॥ ३४ ॥ भगवान् स्वदत्तम् उरु बह्वपि यत् वत् किञ्चित् करोति अल्पं मन्यते । भक्तकृतं फल्ग्वपि भूरि करोतीति बहु मन्यते । मया उपनीतां समीपं प्रापिताम् प्रत्यग्रहीत् सादरं

तस्यैव मे सौहृदसख्यमैत्री दास्यं पुनर्जन्मनि जन्मनि स्यात् ।
महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः ॥३६॥
भक्ताय चित्रा भगवान् हि सम्पदो राज्यं विभूतीर्न समर्थयत्यजः ।
अदीर्घबोधाय विचक्षणः स्वयं पश्यन् निपातं धनिनां मदोद्भवम् ॥३७॥
इत्थं व्यवसितो बुद्धया भक्तोऽतीव जनार्दने । विषयाञ्जायया त्यक्ष्यन् बुभुजे नातिलम्पटः ॥३८॥
तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः । ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥३९॥
एवं स विप्रो भगवत्सुहृत्तदा दृष्ट्वा स्वभृत्यैरजितं पराजितम् ।
तद्धयानवेगोद्ग्रथितात्मबन्धनस्तद्धाम लेभेऽचिरतः सतां गतिम् ॥४०॥
एतद् ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः । लब्धभावो भगवति कर्मबन्धाद् विमुच्यते ॥४१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे पृथुकोपाख्यानं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

---

गृहीतवान् ॥३५॥ मे मम प्रतिजन्म तस्यैव सौहृदादिकं तत्पुरुषाणां भक्तानां प्रकृष्टो महत्वपूर्णः सङ्गश्च स्यादित्यन्वयः । कथंभूतस्य मे । तत्रैव गुणालयेन भगवता विषज्जतः विशिष्टं संगं प्राप्नुवतः । सौहृदं प्रेम सख्यं विश्वासः मैत्री उपकारकत्वं सेवकत्वं चेति क्रमेणार्थाः सर्वेषां समाहारद्वन्द्वैक्यम् ॥ ३६ ॥ अजो भगवान् भक्ताय संपदो राज्यं विभूतीश्च न समर्थयति न ददाति यतः ताः सर्वा अपि दीर्घबोधाय विवेकाय न भवन्ति किन्तु पतनाय । कुतः । धनिनां मदोद्भवं निपातं पश्यन पश्यतीति हेतोः । अत एव भगवान् विचक्षणः परिणामदर्शी । अर्थयतेः हेतुमण्णिच् । समर्द्धयतीति पाठे ऋध्यतेः ऋध्वोतेर्वा णिच् । उभयत्र दाने तात्पर्यम् । चित्रा विविधा ॥ ३७ ॥ बुद्धया एवंव्यवसितः कृतनिश्चयः यतो भक्तः अत एव विषयान् त्यक्ष्यन् त्यक्तुमिच्छन् नातिलम्पटः अनासक्तः सन् तान् बुभुजे इत्यन्वयः ॥ ३८ ॥ प्रभोः सर्वेश्वरस्यापि भगवतः ब्राह्मणाः प्रभवः स्वामिनः दैवं देववत् पूज्यं च । तेभ्यः परमुत्कृष्टमन्यत् न विद्यते ॥ ३९ ॥ एवं स विप्रः भृत्यैः पराजितं भगवन्तं दृष्ट्वा अचिरतः शीघ्रमेव तत् धाम लेभे इत्यन्वयः । कथंभूतः । तस्य ध्यानवेगेन उद्ग्रथितम् उन्मोचितम् आत्मबन्धनं यस्य सः । अन्यैः अपराजितमपि ॥४०॥ ब्रह्मणिः साधु ब्रह्मण्यः स चासौ देवस्तस्य ब्रह्मण्यतां ब्राह्मणभक्तिम् । कर्मबन्धात् संसारात् ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां सहितायां दशमस्कन्धोउत्तरार्द्धे गूढार्थदीपिन्यामेकाशीतितमोऽध्यायः ॥ ८१ ॥

## अथ द्व्यशीतितमोऽध्यायः

### श्रीशुक उवाच

अथैकदा द्वारवत्यां वसतो रामकृष्णयोः। सूर्योपरागः सुमहानासीत् कल्पक्षये यथा ॥ १ ॥
तं ज्ञात्वा मनुजा राजन् पुरस्तादेव सर्वतः। समन्तपञ्चकं क्षेत्रं ययुः श्रेयोविधित्सया ॥ २ ॥
निःक्षत्रियां महीं कुर्वन् रामः शस्त्रभृतां वरः। नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥ ३ ॥
ईजे च भगवान् रामो यत्रास्पृष्टोऽपि कर्मणा। लोकस्य ग्राहयन्नीशो यथान्योऽघापनुत्तये ॥ ४ ॥
महत्यां तीर्थयात्रायां तत्रागन् भारतीः प्रजाः। वृष्णयश्च तथाक्रूरवसुदेवाहुकादयः।
ययुर्भारत तत् क्षेत्रं स्वमघं क्षपयिष्णवः ॥ ५ ॥
गदप्रद्युम्नसाम्बाद्याः सुचन्द्रशुकसारणैः। आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ॥ ६ ॥
ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः। गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ॥ ७ ॥
व्यरोचन्त महातेजाः पथि काञ्चनमालिनः। दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः खेचरा इव ॥ ८ ॥
तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः। ब्राह्मणेभ्यो ददुर्धेनूर्वासःस्रग्रुक्ममालिनीः ॥९॥
रामह्रदेषु विधिवत् पुनराप्लुत्य वृष्णयः। ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ।१०।

---

द्व्यशीतितमके गत्वा कुरुक्षेत्रं रविग्रहे।
मिलितो बन्धुभिर्गोपीर्ज्ञानिनाऽसान्त्वयद्धरिः ॥ १ ॥

वसतोः सतोः। कल्पक्षये प्रलये यथा सुमहान् सर्वग्रासः तथा सूर्योपरागः सूर्यग्रहणमासीत् ॥ १ ॥ तम् उपरागं ज्ञात्वा मनुजाः श्रेयः पुण्यं विधातुमिच्छया समन्तक्षेत्रं ययुः। परशुरामकृतह्रदपञ्चकस्य समन्ते समीपे वर्तमानो देशः समन्तपञ्चकः कुरुक्षेत्रदेशः अष्टचत्वारिंशत्क्रोशात्मकस्तम्। यत्र समन्तपञ्चके। अत्र यकारघटितोऽपपाठः। समन्ततः चक्रे अतः समन्तपञ्चकं[1] नाम ॥ २ ॥ यत्र समन्तपञ्चके ॥ ३ ॥ कर्मणा पापेन अस्पृष्टोऽपि ईशः समर्थोऽपि यत्र ईजे च तत्क्षेत्रं ययुरिति पूर्वेण संबन्धः। लोकं ग्राहयन् अन्येऽप्येवं कुर्युरिति शिक्षयितुम् ॥४॥ महत्यामिति सार्द्धम्। भारतीः भारत्यः प्रजाः अगन् अगमन्। तत्र वृष्णयः कृष्णरामादयस्तथेति योज्यम्। क्षपयितुं नाशयितुमिच्छवः ॥ ५ ॥ सुचन्द्रादिभिः सह अनिरुद्धो द्वारकाया रक्षायामस्ते इति योज्यम्। सुचन्द्रो रुक्मिणीपुत्रः शुकसारणौ यादवौ ॥६॥ ते इति युग्मम्। ते वृष्णयः पथि खेचरा देवा इव व्यरोचन्त। कैः। रथादिभिः। देवधिष्ण्यं देवविमानं तत्सदृशैः। तरलास्तरङ्गास्तद्वत्प्लवो गतिर्येषां तैः। अभ्राभैः नीलमेघसदृशैः। द्युः द्युतिः। महातेजाः इति समासान्तोऽप्रत्ययः। दिव्यस्रगादीनां सन्नाहः सुन्दरबन्धो येषां ते। 'नह' बन्धने धातुः। सन्नाहः सन्निबन्धः। सजावट इति ॥ ७ ॥ ८ ॥ रुक्मं स्वर्णम्। वासः स्रक् रुक्मभूषणानि मलन्ते धारयन्तीति तथा। 'मल मल्ल' धारणे धातुः ॥९॥ पुनः आप्लुत्य मुक्तिस्नानं कृत्वा स्वन्नं क्षीरान्नं ददुः। कृष्णे नोऽस्माकं भक्तिरस्तु इति संकल्प्य। आदौ स्नानं तथा चान्ते मध्ये दानं प्रकीर्तितम् इति स्मृतेः ॥१०॥ ते वृष्णयः स्वय-

---

१. सरसां पञ्चकं तत्र खानयित्वा भृगूद्वहः सुखावगाहतीर्थानि तानि चक्रे समन्ततः ॥
समन्तपञ्चकमिति ततः प्रोक्तं हि नाम तत्। ( इति ब्रह्माण्डपुराणे )।

स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः । भुक्त्वोपविविशुः कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु ॥
तत्रागतांस्ते ददृशुः सुहृत्सम्बन्धिनो नृपान् । मत्स्योशीनरकौसल्यविदर्भकुरुसृञ्जयान् ॥१२॥
काम्बोजकैकयान् मद्रान् कुन्तीनानर्तकेरलान् । अन्यांश्चैवात्मपक्षीयान् परांश्च शतशो नृप ॥
नन्दादीन् सुहृदो गोपान् गोपीश्चोत्कण्ठिताश्चिरम् ॥१३॥
अन्योन्यसंदर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ।
आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥१४॥
स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापाङ्गदृशोऽभिरेभिरे ।
स्तनैः स्तनान् कुङ्कुमपङ्करूषितान् निहत्य दोर्भिः प्रणयाश्रुलोचनाः ॥१५॥
ततोऽभिवाद्य ते वृद्धान् यविष्ठैरभिवादिताः । स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथा मिथः १६
पृथा भ्रातॄन् स्वसॄर्वीक्ष्य तत्पुत्रान् पितरावपि । भ्रातृपत्नीर्मुकुन्दं च जहौ संकथया शुचः ॥१७॥

कुन्त्युवाच

आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम् । यद् वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥१८॥
सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि । नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम् ॥१९॥

---

मपि कामं यथेच्छं भुक्त्वा वृक्षमूलेषु उपविविशुः । तैः अनुज्ञाताः दत्ताज्ञाः सन्तः । स्निग्धाः शीतला छाया येषां ते एवंभूता ये वृक्षास्तेषां मूलेषु ॥ ११ ॥ तत्रेति सार्द्धद्वयम् । तत्र कुरुक्षेत्रे ते यदवः मत्स्यादयः तत्तद्देशीस्तान् ॥ १२ ॥ अन्यांश्चैव ददृशुरिति योज्यम् । आत्मपक्षीयाः पाण्डवाद्याः । पराश्च शत्रवः दुर्योधनाद्या गान्धाराद्याः तान् मत्स्यादीन् राज्ञः नन्दादीन् गोपान् गोपीश्च ददृशुरिति योज्यम् ॥ १३ ॥ पूर्वोक्ता मत्स्यादयः परस्परं गाढमालिङ्ग्य मुदं ययुरित्यन्वयः । तेषां चत्वारि विशेषणानि क्रमेण योज्यानि । तथाहि—अन्योऽन्यसन्दर्शजन्य-हर्षाधिक्येन प्रोत्फुल्लैः हृद्वक्त्रसरोरुहैः श्रीः शोभा येषां ते । पुनः । नयनैः स्रवन्ति जलानि येषाम् । पुनश्च हृष्यन्त्यः रोमाञ्चिता त्वचो येषाम् । पुनश्च । रुद्धा गद्‌गदा गिरो येषां ते तथोक्ताः ॥ १४ ॥ स्त्रियोऽपि मिथः परस्परं संमीक्ष्य स्वस्तनैः स्तनान् निहत्य संयोज्य दोर्भिः बाहुभिः अभिरेभिरे आलिङ्गितवत्यः । कुङ्कुमपंकेन रूषितान् भूषितान्[1] । कथंभूताः स्त्रियः । अतिसौहृदेन यत् स्मितं मन्दहासः तेन अमला आसर्षका अपाङ्ग-युक्ता कटाक्षयुक्ता दृष्टयो यासां ताः । पुनश्च । प्रणयेन अश्रूणि लोचनयोर्यासां ताः ॥ १५ ॥ ततश्च स्त्री मेलापोत्तरम् । ते यादवाः मत्स्यादयश्च यविष्ठैः कनिष्ठैः अभिवादिताः सन्तः वृद्धान् अभिवाद्य कुशल च पृष्ट्वा मिथः कथाश्चक्रुरित्यन्वयः ॥ १६ ॥ पृथा कुन्ती । स्वभ्रातॄन् वसुदेवादीन् । स्वसॄः श्रुतदेव्याद्याः । तत्पुत्रान् रामादीन् । पितरौ शूरं तत्पत्नीं भोज्यां च । भ्रातृपत्नीः देवक्याद्याः वीक्ष्य शुचः[2] शोकान् अश्रूणि च जहौ । कया । संकथया[3] प्रेमगोष्ठ्या ॥१७॥ तामेव वसुदेवपृथयोः संकथामाह आर्येति चतुर्भिः । हे भ्रातः । सत्तमा श्रेष्ठा अपि यूयं यत् मद्वार्तां नानुस्मरथ ततो हेतोः अहम् आत्मानमकृताशिषम् अकृतपुण्यं भाग्यहीन-मित्यर्थः मन्ये । वै अप्यर्थे । आपत्स्वपि ॥ १८ ॥ अदक्षिणं प्रतिकूलम् ॥ १९ ॥ अम्ब हे स्वसः । अस्मान् मा

---

१. 'रूष भूष' भूषायां धातुः ।
२. 'शोकेऽस्त्रे शुक् तथा शुद्धौ' इति निरुक्तिः । ३. गाथयां च पुराणादेः प्रेमगोष्ठ्यां च संकथा । इति च ।

वासुदेव उवाच

अम्ब मास्मानसूयेथा दैवक्रीडनकान् नरान् । ईशस्य हि वशे लोकः कुरुते कार्यतेऽथवा ॥२०॥
कंसप्रतापिताः सर्वे वयं याता दिशं दिशम् । एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥२१॥

श्रीशुक उवाच

वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः । आसन्नच्युतसंदर्शपरमानन्दनिर्वृताः ॥२२॥
भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा । सदाराः पाण्डवाः कुन्ती सृञ्जयो विदुरः कृपः ॥
कुन्तिभोजो विराटश्च भीष्मको नग्नजिन्महान् । पुरुजिद् द्रुपदः शल्यो धृष्टकेतुः सकाशिराट् ॥
दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ । युधामन्युः सुशर्मा च ससुता बाह्लिकादयः ॥२५॥
राजानो ये च राजेन्द्र युधिष्ठिरमनुव्रताः । श्रीनिकेतं वपुः शौरेः सस्त्रीकं वीक्ष्य विस्मिताः ।२६।
अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः । प्रशशंसुर्मुदा युक्ता वृष्णीन् कृष्णपरिग्रहान् ॥२७॥
अहो भोजपते यूयं जन्मभाजो नृणामिह । यत् पश्यथाऽसकृत् कृष्णं दुर्दर्शमपि योगिनाम् ॥२८॥

यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति पादावनेजनपयश्च वचश्च शास्त्रम् ।
भूः कालभर्जितभगापि यदङ्घ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्थान् ॥२९॥
तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौनसपिण्डबन्धः ।
येषां गृहे निरयवर्त्मनि वर्ततां वः स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥३०॥

श्रीशुक उवाच

नन्दस्तत्र यदून् प्राप्तान् ज्ञात्वा कृष्णपुरोगमान् । तत्रागमद् वृतो गोपैरनःस्थार्थैर्दिदृक्षया ॥३१॥

---

असूयेथाः दोषदृष्ट्या मा द्राक्षीः यतो दैवक्रीडनकान् । सर्वोऽपि लोकः कालस्य वशे वर्तते । तत्प्रेरितः सन् कुरुते तेन कार्यते च । 'स्वसरि मातरि चाम्बा स्यात्' इति व्याडिः ॥ २० ॥ याताः पलायिताः । एतर्हि इदानीमेव स्वस्थानम् पुनः आसादिताः प्रापिताः ॥ २१ ॥ ते समागता नृपाः कुरुमत्स्यादयः अर्चिताः सन्तः अच्युतस्य सन्दर्शनजन्यपरमानन्देन निर्वृताः आनन्दिता आसन् ॥ २२ ॥ भीष्म इति चतुष्कम् । ये च राजानः ते सर्वे शौरे श्रीकृष्णस्य वपुः वीक्ष्य विस्मिता आसन् । अम्बिकापुत्रो धृतराष्ट्रः सुतैः दुर्योधनादिभिः सहितः ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ समर्हणं सत्कारः । कृष्णेन स्वीयत्वेन परिगृह्यन्ते तान् वृष्णीन् यदुवंशीयान् प्रशशंसुः ॥२७॥ भोजपते उग्रसेन । यूयं जन्मभाजः सफलजन्मानः यत् असकृत् निरन्तरं कृष्णं पश्ययेति ॥ २८ ॥ यदिति पृथक् पदं षष्ठ्यर्थेऽव्ययम् । श्रुतिभिः वेदैः नुता स्तुता यस्य विश्रुतिः कीर्तिः तथा पादावनेजनपयः पादप्रक्षालितजलं श्रीगङ्गा वचः वेदगीतादिशास्त्रं च इदं विश्वं पुनाति किञ्च यदङ्घ्रिस्पर्शेन आविर्भूतशक्तिः भूरपि[1] नोऽखिलार्थान् अभिवर्षति तेन कृष्णेन सह दर्शनाद्युपलक्षितः संबन्धः येषां वो युष्माकमस्ति स च स्वयं युष्माकं गृहे आस आविरासीत् अतो यूयं जन्मभाज इति योज्यम् । कथंभूतानाम् । निरयवर्त्मनि प्रवृत्तिमार्गे वर्तनां वर्तमानानाम् । कथंभूतो विष्णुः । स्वर्गापवर्गयोः विशेषेण रमणमनुभवो यस्मात्सः । 'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः' इति श्रुतेः । अनुपथोऽनुगमनं च प्रजल्पो गोष्ठी च शय्या शयनं च आसनमुवेशनम् च अशनं भोजनं चेति इतरेतरद्वन्द्वः । यौनं विवाहसंबन्धः तेन सह वर्तमानः सपिण्डबन्धो दैहिकसंबन्धः । यद्वा । तत् स विष्णुः ॥२९॥३०॥ तत्र कुरुक्षेत्रे । अनःसु शकटेषु स्थापितैः अर्थैः नानासामग्रीभिः सह कृष्णादीन् दिदक्षया तत्र पार्श्वे अगमत्

---

१. कालेन भर्जितं दग्धं भगम् ऐश्वर्यं शक्तिर्वा यस्याः सा ।

तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः । परिषस्वजिरे गाढं चिरदर्शनकातराः ॥३२॥
वसुदेवः परिष्वज्य सम्प्रीतः प्रेमविह्वलः । स्मरन् कंसकृतान् क्लेशान् पुत्रन्यासं च गोकुले ॥३३॥
कृष्णरामौ परिष्वज्य पितरावभिवाद्य च । न किंचनोचतुः प्रेम्णा साश्रुकण्ठौ कुरूद्वह ॥३४॥
तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च । यशोदा च महाभागा सुतौ विजहतुः शुचः ॥३५॥
रोहिणी देवकी चाथ परिष्वज्य व्रजेश्वरीम् । स्मरन्त्यौ तत्कृतां मैत्रीं वाष्पकण्ठ्यौ समूचतुः ॥
का विस्मरेत वां मैत्रीमनिवृत्तां व्रजेश्वरि । अवाप्याप्यैन्द्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥३७॥

एतावदृष्टपितरौ युवयोः स्म पित्रोः सम्प्रीणनाभ्युदयपोषणपालनानि ।
प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्न्यस्तावकुत्रचभयौ न सतां परः स्वः ॥३८॥

श्रीशुक उवाच

गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति ।
दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापम् ॥३९॥

भगवांस्तास्तथाभूता विविक्त उपसंगतः । आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥४०॥
अपि स्मरथ न सख्यः स्वानामर्थचिकीर्षया । गतांश्चिरायिताञ्शत्रुपक्षक्षपणचेतसः ॥४१॥
अप्यवध्यायथास्मान् स्विदकृतज्ञाविशङ्कया । नूनं भूतानि भगवान् युनक्ति वियुनक्ति च ॥४२॥

---

॥ ३१ ॥ वृष्णयः नन्दं दृष्ट्वा कातरा व्याकुलाः सन्तः गाढं यथा स्यात्तथा आलिङ्गितवन्तः ॥ ३२ ॥ वसुदेवः नन्दं परिष्वज्य क्लेशान् पुत्रन्यासं च स्मरन् प्रेमविह्वलो बभूवेत्यन्वयः ॥३३॥ हे कुरूद्वह परीक्षित् । कृष्णरामौ कर्तृभूतौ पितरौ कर्मभूतौ यशोदानन्दौ अभिवाद्य किञ्चन किमपि नोचतुः । कुतः । साश्रुकण्ठौ साश्रुः अश्रुपूर्णः कण्ठो ययोस्तौ ॥३४॥ यशोदा चात् नन्दश्च तौ आत्मासनं स्वाङ्कमारोप्य शुचः शोकान् अश्रूणि वा मुमुचतुः ॥३५॥ व्रजेश्वरीं यशोदाम् मैत्रों पुत्रपालनादिरूपाम् । बाष्पमानन्दाश्रु कण्ठे ययोस्ते ॥ ३६ ॥ वां युवयोः मैत्रीं का विस्मरेत् न कापीत्यन्वयः । अनिवृत्तां प्रत्युपकारेणापि ॥३७॥ हे भवति यशोदे एतौ रामकृष्णौ जन्मत एव अदृष्टपितरौ युवयोरेव पार्श्वे न्यस्तौ च अत एव युवाभ्यामेव सम्प्रीणनादीनि प्राप्य कुत्रचिदपि भयरहितौ सन्तौ ऊषतुः निवासं चक्रतुरित्यन्वयः । उचितं चैतत् यतः सता[1]मुदाराणां स्वकीयः परकीय इति भेदो नास्ति । कथंभूतयोः युवयोः । अक्ष्णोः नेत्रयोः पक्ष्म यद्वत् रक्षकं तथा रक्षकयोः । अत्र कुत्र चेत्यव्ययम् 'किमः सामान्ये' इति चान्तं कुत्रार्थे । ततो नञ्समासः । तथा च न कुत्र च भयं ययोस्तौ इति अकुत्रचभयौ । हेति हर्षे ॥ ३८ ॥ यत् यस्य श्रीकृष्णस्य प्रेक्षणे दृष्टिषु व्यवधायकं पक्ष्मकृतं विधातारं शपन्ति आक्रोशन्ति ता गोप्योऽपि चिरात् कृष्णमुपलभ्य हृदीकृतं तम् अलं परिरभ्य गाढमालिङ्ग्य च तद्भावं तत्स्वरूपतामापुरित्यन्वयः । नित्ययुजाम् आरूढयोगिनामपि दुरापम् । अभीष्टं प्रेमास्पदम् । प्रेक्षणे प्रेक्षणार्थं तादर्थ्ये सप्तमी ।३९। तथाभूताः प्रेमरताः इदं वक्ष्यमाणम् । अनामयम् आरोग्यम् । विविक्ते एकान्ते ॥४०॥ हे सख्यः । अपि किं नोऽस्मान् स्मरथ । कथंभूतान् । अर्थचिकीर्षया कार्यं कर्तुमिच्छया व्रजात् गतान् चिरायितान् जातविलम्बांश्च । कुतः शत्रुपक्षस्य क्षपणे विनाशने चेतो येषां तान् ॥ ४१ ॥ अकृतज्ञाः कृतघ्ना एते इति आविशंकया ईषच्छंकया अस्मान् अवध्यायथ अवजानीत अपि किम् । नास्माकं दोषः यतो भगवानेव प्राणिनः संयोजयति वियोजयति च ॥ ४२ ॥ यथा वायुः घनानीकं

---

१. 'उदारचरितानां तु वसुधैव कुटुम्बकम्' इति न्यायात् ।

वायुर्यथा घनानीकं तृणं तूलं रजांसि च । संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ॥४३॥
मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते । दिष्टया यदासीन्मत्स्नेहो भवतीनां मदापनः ॥४४॥
अहं हि सर्वभूतानामादिरन्तोऽन्तरं बहिः । भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरङ्गनाः ॥४५॥
एवं ह्येतानि भूतानि भूतेष्वात्माऽऽत्मना ततः । उभयं मय्यथ परे पश्यताभातमक्षरे ॥४६॥

श्रीशुक उवाच

अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः । तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥४७॥
आहुश्च ते नलिननाभ पदारविन्दं योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं गेहञ्जुषामपि मनस्युदियात् सदा नः ॥४८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे वृष्णिगोपसङ्गमो नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

मेघमण्डलं तृणादीनि च संयोज्य मेलयित्वा भूयः आक्षिपते वियोजयति तथा भूतकृत् कालः भूतानि ॥ ४३ ॥ मयि भक्तिः अमृतत्वाय मोक्षाय कल्पते । यदुत यदपि मयि भवतीनां पूर्णस्नेहः आसीत् तत् दिष्टया अतिभद्रम् । यतो मत्प्रापणः । माम् आपयति प्रापयतीति तथा ॥ ४४ ॥ हे अङ्गनाः । यथा भौतिकानां घटशरावादीनाम् आकाशादीनि पञ्च भूतानि आद्यन्तादिरूपाणि सन्ति एवं सर्वभूतानां जरायुजादीनामहमपि अतो व्यापकं मां भवत्यः प्राप्ता एवेति ॥ ४५ ॥ एवंभूतानि आकाशादीनि भूतेषु देहेषु । आत्मा जीवश्च आत्मना स्वरूपेण चिदात्मकेन ततो विस्तृतः देहव्यापकः सन् वर्तते इत्यर्थः । उभयं देहं जीवं च मयि आभातं पश्यत अतः कुतो वियोगः ॥ ४६ ॥ एवं शिक्षिता गोप्यः तं श्रीकृष्णम् अध्यगन् प्रापुः । कथंभूताः । तस्य आत्मतत्त्वस्य अनुस्मरणेन ध्वस्तो जीवकोशो लिङ्गशरीरं यासां ताः ॥ ४७ ॥ ता आहुश्च । किम् । हे नलिननाभ ते पदारविन्दं गेहंजुषामपि गृहसेविनामपि नोऽस्माकं मनसि सदा उदियात् आविर्भवेदित्यन्वयः । कथंभूतम् । योगेश्वरैः सनकाद्यैः हृदि विचिन्त्यम् । पुनश्च । संसारकूपपतितानां निःसारणाय अवलम्बं हस्ताधारम् । नलिनं कमलम् ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## अथ त्र्यशीतितमोऽध्यायः

श्रीशुक उवाच

तथानुगृह्य भगवान् गोपीनां स गुरुर्गतिः । युधिष्ठिरमथापृच्छत् सर्वांश्च सुहृदोऽव्ययम् ॥१॥

---

प्राक् त्र्यशीतितमे कृष्णं संस्तुवत्सु निरूपिता ।
द्रौपद्यै कृष्णभार्याभिः स्वस्ववैवाहिकी कथा ॥ १ ॥

तथा प्रार्थनानुसारेण ताः गोपीः अनुगृह्य स कृष्णः सर्वांश्च अव्ययं कुशलमपृच्छदित्यन्वयः गुरुः उपदेष्टा

त एवं लोकनाथेन परिपृष्टाः सुसत्कृताः । प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥२॥

कुतोऽशिवं त्वच्चरणाम्बुजासवं महन्मनस्तो मुखनिःसृतं क्वचित् ।
पिबन्ति ये कर्णपुटैरलं प्रभो देहम्भृतां देहकृदस्मृतिच्छिदम् ॥३॥

हित्वाऽऽत्मधामविधुतात्मकृतत्र्यवस्थमानन्दसम्प्लवमखण्डमकुण्ठबोधम् ।
कालोपसृष्टनिगमावन आत्तयोगमायाकृतिं परमहंसगतिं नताः स्म ॥४॥

ऋषिरुवाच

इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वन्धककौरवस्त्रियः ।
समेत्य गोविन्दकथा मिथोऽगृणंस्त्रिलोकगीताः शृणु वर्णयामि ते ॥५॥

द्रौपद्युवाच

हे वैदर्भ्यच्युतो भद्रे हे जाम्बवति कौसले । हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्ष्मणे ॥६॥

हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान् स्वयम् । उपयेमे यथा लोकमनुकुर्वन् स्वमायया ॥७॥

रुक्मिण्युवाच

चैद्याय मार्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरिताङ्घ्रिरेणुः ।
निन्ये मृगेन्द्र इव भागमजावियूथात् तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥८॥

---

गतिः फलप्रदश्च ॥ १ ॥ एवं कृष्णेन परिपृष्टाः युधिष्ठिरादयः तं प्रति ऊचुः । कथंभूताः । तस्य पादेक्षया हतमंहः पापं येषां ते ॥ महतां व्यासादीनां मनस्तः मुखद्वारा निःसृतं चरणाम्बुजासवं तन्महत्त्वबोधकं कथामृतं ये कर्णपुटैः अलमतिशयेन पिबन्ति तेषां कुतः अशिवमित्यन्वयः । कथंभूतम् । देहकृत् या अस्मृतिः अविद्या तां छिनत्तीति तम् । देहकृत् ईश्वरः तद्विषयकमज्ञानं वा । देहंभृतां देहधारिणाम् । तदर्हमिति ज्ञापकात् द्वितीया ॥३॥ हि एवार्थे । परमहंसानां गतिं त्वामेव वयं नताः स्म इत्यन्वयः । कथंभूतं त्वाम् । आत्मधाम्ना स्वरूपावस्थानेन विधुता निराकृता आत्मकृता बुद्धिनिमित्ता तिस्रोऽवस्था[1] येन तम् । पुनश्च । क्रमेण चत्वारि विशेषणानि योज्यानि । तथा हि आनन्दसंप्लवम् आनन्दघनम् । कालेन उपसृष्टा विलुप्ता ये निगमाः तेषामवने रक्षणार्थम् आत्ता गृहीता योगमायया आकृतिः श्रीविग्रहो येन तम् । यद्वा । हित्वेति[2] क्त्वान्तम् । हित्वा । किम् । आत्मधाम शरीरं गृहं च देहदैहिकसंबन्धं परित्यज्येत्यर्थः । अहन्ताममते वा । त्वामिति प्रकरणात् लभ्यम् । परमहंसानां ज्ञानिनां गतिं प्राप्यम् ॥४॥ इति शिखामणिं श्रीकृष्णं स्तुवत्सु सत्सु स्त्रियः मिथः समेत्य कथा अगृणन् अवर्णयन् तास्ते तुभ्यं वर्णयामि त्वं शृणु इत्यन्वयः । गीताः प्रसिद्धाः अन्धको यादवः ॥५॥ हे वैदर्भि ! हे रुक्मिणि अच्युतो वः युष्मान् यथा उपयेमे विवाहितवान् तदेतत् नोऽस्मान् ब्रूहि । कोसले कोसलदेशीया सत्या । शैब्ये मित्रविन्दे । रोहिणी भौमाहृतानां मध्ये मुख्या ॥६॥ चैद्याय[3] शिशुपालाय मा माम् अर्पयितुम् उद्यतकार्मुकेषु राजसु जरासन्धादिषु सत्सु यः अजावियूथात् मृगेन्द्र इव स्वभागं मा निन्ये आनीतवान् तस्य श्रीनिकेतस्य चरणः मम अर्चनाय अस्तु इत्यन्वयः । कथंभूतो भगवान् । अजेया ये भटाः तेषां शेखरिता मस्तकोपरि कृताः स्वीयाः चरणरेणवो

---

१. जाग्रत्स्वप्नसुषुप्तिलक्षणाः ।

२. पादादौ न प्रयोक्तव्या प्रायशश्चादयो बुधैः । इत्यालङ्कारिकाः ।　　　३. चैद्यः चेदिदेशीयः ।

सत्यभामोवाच

यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ।
जित्वर्क्षराजमथ रत्नमदात् स तेन भीतः पिताऽदिशत मां प्रभवेऽपि दत्ताम् ॥९॥

जाम्बवत्युवाच

प्राज्ञाय देहकृदमुं निजनाथदेवं सीतापतिं त्रिणवहान्यमुनाभ्ययुध्यत् ।
ज्ञात्वा परीक्षित उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी ॥१०॥

कालिन्द्युवाच

तपश्चरन्तीमाज्ञाय स्वपादस्पर्शनाशया । सख्योपेत्याग्रहीत् पाणिं योऽहं तद्गृहमार्जनी ॥११॥

मित्रविन्दोवाच

यो मां स्वयंवर उपेत्य विजित्य भूपान् निन्ये श्वयूथगमिवात्मबलिं द्विपारिः ।
भ्रातॄंश्च मेऽपकुरुतः स्वपुरं श्रियौकस्तस्यास्तु मेऽनुभवमङ्घ्र्यवनेजनत्वम् ॥१२॥

सत्योवाच

सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृङ्गान् पित्रा कृतान् क्षितिपवीर्यपरीक्षणाय ।
तान् वीरदुर्मदहनस्तरसा निगृह्य क्रीडन् बबन्ध ह यथा शिशवोऽजतोकान् ॥१३॥
य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम् । पथि निर्जित्य राजन्यान् निन्ये तद्दास्यमस्तु मे ॥

---

येन सः । तेषां मूर्ध्नि पदं दधदित्यर्थः । अजानामवीनां च यूथात् । अजः छागः । अवि मेषः ॥ ८ ॥ मे ततेन पित्रा संप्राजितेन लिप्तमभिशापमपकीर्तिम् अपमार्ष्टुं दूरीकर्तुं यः ऋक्षराजं जित्वा रत्नमुपाजहार आनीतवान् अथ अनन्तरं मत्पित्रे च तत् अदात् तेन भीतः मे पिता प्रभवे श्रीकृष्णाय माम् अदिशत् दत्तवान् । कथंभूतेन ततेन । सनाभिः[1] सहोदरभ्राता प्रसेनः तस्य वधेन सिंहकृतेन तप्तं हृत् यस्य तेन । दत्तामक्रूरादिभ्यः प्रतिश्रुतामपि । 'सकृत् प्रदीयते कन्या' इति स्मृतिस्तु जलदत्तापरेति अतो न दोषः ॥ ९ ॥ देहकृत् मम पिता जाम्बवान् अमुं श्रीकृष्णं सीतापतिम् अविज्ञाय अमुना सह अभ्ययुध्यत् । त्रिणवाहानि[2] सप्तविंशतिदिनानि । पुनः परीक्षितः कृतपरीक्षः सन् तं ज्ञात्वा पादौ गृहीत्वा च मणिना सह माम् अर्हणम् उपाहरत् अर्घ्यतया समर्पितवान् । अतोऽहममुस्य दासी ॥ १० ॥ स्वस्य भगवतः पादस्पर्शनं चरणसंवाहनं तस्य आशया तपः कुर्वतीं मामाज्ञाय सख्या अर्जुनेन सह समागत्य यः पाणिमग्रहीत् तस्य गृहमार्जनीव अहमस्मि । लुप्तोपमा ॥११॥ यो मम स्वयंवरे उपेत्य भूपान् अपकुर्वतः विन्दानुविन्दादीन् भ्रातॄंश्च विजित्य स्वपुरं द्वारकां निन्ये तस्य अङ्घ्र्यवनेजनत्वं पादप्रक्षालनकर्तृत्वं मे अनुभवं प्रतिजन्म अस्तु इत्यन्वयः । कः कमिव निन्ये । यथा द्विपारिः सिंहः शुनां यूथगम् आत्मबलिं स्वभागं नयति तथा । पुरं कीदृशम् श्रिया पूर्णम् ओकः स्थानम् ॥१२॥ क्षितिपवीर्यपरीक्षणाय पित्रा नग्नजिता कृतान् नियोजितान् सप्त उक्षणः वृषभान् यो निगृह्य क्रीडन्निव तरसा वेगेन बबन्ध तस्य दास्यं मे अस्तु इत्युत्तरेणान्वयः । कथंभूतान् । अत्यधिकं बलं वीर्यं तीक्ष्णशृङ्गाणि च येषां तान् । पुनश्च । वीराणां दुर्मदं घ्नन्तीति तथाभूतान् । ह हर्षे । यथा तोकान् अपत्यानि बध्नन्ति ॥ १३ ॥ इत्थं पथि राजन्यान् निर्जित्य यो दासीभिः सह मां निन्ये तद्दास्यमित्यन्वयः । चतुरङ्गिणीसेनायुक्तां

---

१. समानो नाभिः कुक्षिर्यस्य । समानस्य सादेशः ।

२. 'आसीत्तदष्टाविंशाहम्' इत्युक्तिस्तु समाप्तिदिनमादायेति ज्ञेयम् ।

भद्रोवाच

पिता मे मातुलेयाय स्वयमाहूय दत्तवान् । कृष्णे कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः ॥१५॥

अस्य मे पादसंस्पर्शो भवेज्जन्मनि जन्मनि । कर्मभिर्भ्रम्यमाणाया येन तच्छ्रेय आत्मनः ॥१६॥

लक्ष्मणोवाच

ममापि राज्ञ्यच्युतजन्मकर्म श्रुत्वा मुहुर्नारदगीतमास ह ।

चित्तं मुकुन्दे किल पद्महस्तया वृतः सुसम्मृश्य विहाय लोकपान् ॥१७॥

ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः । बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥१८॥

यथा स्वयंवरे राज्ञि मत्स्यः पार्थेप्सया कृतः । अयं तु बहिराच्छन्नो दृश्यते स जले परम् ॥१९॥

श्रुत्वैतत् सर्वतो भूपा आययुर्मत्पितुः पुरम् । सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः ॥२०॥

पित्रा सम्पूजिता सर्वे यथावीर्यं यथावयः । आददुः सशरं चापं वेद्धुं पर्षदि मद्धियः ॥२१॥

आदाय व्यसृजन् केचित् सज्यं कर्तुमनीश्वराः । आकोटिं ज्यां समुत्कृष्य पेतुरेकेऽमुना हताः ॥२२॥

सज्यं कृत्वापरे वीरा मागधाम्बष्ठचेदिपाः । भीमो दुर्योधनः कर्णो नाविन्दंस्तदवस्थितिम् ॥२३॥

मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितिम् । पार्थो यत्तोऽसृजद् बाणं नाच्छिनत् पस्पृशे परम् ॥

राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु । भगवान् धनुरादाय सज्यं कृत्वाथ लीलया ॥२५॥

तस्मिन् संधाय विशिखं मत्स्यं वीक्ष्य सकृज्जले । छित्त्वेषुणापातयत्तं सूर्ये चाभिजिति स्थिते २६॥

दिवि दुन्दुभयो नेदुर्जयशब्दयुता भुवि । देवाश्च कुसुमासारान् मुमुचुर्हर्षविह्वलाः ॥२७॥

---

माम् ॥१४॥ मे पिता धृष्टकेतुः मातुलेयाय वसुदेवपुत्राय मां सेनया सह दत्तवान् । तच्चित्तां कृष्णचित्ताम् । हे कृष्णे द्रौपदि ॥१५॥ येन पादस्पर्शेन आत्मनो मे मम तत् कैवल्याख्यं श्रेयः स्यात् ॥१६॥ हे राज्ञि ! यथा मित्रविन्दायास्तथा ममापि चित्तं मुकुन्दे आसेत्यन्वयः । किं कृत्वा । नारदगीतम् अच्युतस्य जन्म कर्म च श्रुत्वा । ततः पद्महस्तया लक्ष्म्या इव मयाऽपि स वृतः । हेति हर्षे ॥ १७ ॥ तत्र श्रीकृष्णप्राप्तौ ॥ १८ ॥ अयं तु पार्थेप्सया कृतो मत्स्यः बहिरेव आच्छन्नः नान्तः अतः स्तम्भलग्नया ऊर्ध्वदृष्ट्या संलक्ष्यते । मत्पित्रा कृतस्तु न तथा किन्तु स्तम्भमूले निहितकलशजले एव परं केवलं दृश्यते अतो दृष्टिरधस्तात् उपरि च लक्ष्यमिति श्रीकृष्ण-व्यतिरेकेण न कस्यापि भेद्यो भवेत् ॥ १९ ॥ अस्त्रं मन्त्राभिमन्त्रितम् । शस्त्रं तद्रहितम् ॥२०॥ पर्षदि सभायां मत्स्यं वेद्धुं चापमाददुः । मद्धिय इत्यनेन अन्यनिष्ठचित्तत्वात् लक्ष्याभेद्यत्वं सूचितम् ॥२१॥ सज्यं कर्तुमनी-श्वरा असमर्थाः केचित् धनुरादायैव व्यसृजन् तत्यजुः । आकोष्ठम् आकोटिं वा पाठः अर्थः सम एव । धनुरग्रभागः कोटिः तत्पर्यन्तं द्वितीयकोटौ योजयितुं ज्यां समुत्कृष्य स्थिता अपि एके अमुना धनुषा हताः भुवि पेतुः ॥२२॥ मागधो जरासन्धः तदादयः कर्णान्ता वीराः तदवस्थितिं मत्स्यस्थितिम् नाविन्दन् ॥२३॥ पार्थोऽर्जुनः । यत्तः प्रयत्नवान् सन् । यती प्रयत्ने धातुः ॥२४॥ राजेति द्वयम् । तस्मिन् धनुषि विशिखं बाणम् । इषुणा छित्वा मत्स्यमपातयत् । अभिजिति सर्वार्थसाधके मुहूर्ते । मध्याह्नात्परतो घटिकैका यावत् तावदभिजित्[1] ॥२५॥ २६ ॥ देवाः कुसुमासारान् धारासंपातवत् पुष्पवृष्टीः मुमुचुः ॥ २७ ॥ तत् तदा अहं नूत्ने कौशिकाग्र्ये उत्तमकौशे-

---

१. मध्याह्ने तु यदा शंकोर्मूले छाया प्रजायते ।
सर्वार्थसाधनो चैकाऽभिजदाख्या घटी स्मृता । इति ज्योतिःशास्त्रम् ।

तद् रङ्गमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ।
नूत्ने निवीय परिधाय च कौशिकाग्र्ये सव्रीडहासवदना कबरीधृतस्रक् ॥२८॥
उन्नीय वक्त्रमुरुकुन्तलकुण्डलत्विड्गण्डस्थलं शिशिरहासकटाक्षमोक्षैः ।
राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥२९॥

तावन्मृदङ्गपटहाः शङ्खभेर्यानकादयः । निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥३०॥
एवं वृते भगवति मयेशे नृपयूथपाः । न सेहिरे याज्ञसेनि स्पर्धन्तो हृच्छयातुराः ॥३१॥
मां तावद् रथमारोप्य हयरत्नचतुष्टयम् । शार्ङ्गमुद्यम्य सन्नद्धस्तस्थावाजौ चतुर्भुजः ॥३२॥
दारुकश्चोदयामास काञ्चनोपस्करं रथम् । मिषतां भूभुजां राज्ञि मृगाणां मृगराडिव ॥३३॥
तेऽन्वसज्जन्त राजन्या निषेद्धुं पथि केचन । संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम् ॥३४॥
ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वङ्घ्रिकन्धराः । निपेतुः प्रधने केचिदेके संत्यज्य दुद्रुवुः ॥३५॥
ततः पुरीं यदुपतिरत्यलंकृतां रविच्छदध्वजपटचित्रतोरणाम् ।
कुशस्थलीं दिवि भुवि चाभिसंस्तुतां समाविशत्तरणिरिव स्वकेतनम् ॥३६॥

---

यवस्त्रे निवीय उपरि प्रावृत्य अधश्च परिधाय मालां च प्रगृह्य पद्भ्यां रङ्गं सभामण्डपमहं प्राविशमित्यन्वयः । कथंभूताभ्याम् पद्भ्याम् । कलौ मधुरस्वनौ नूपुरौ ययोस्ताभ्याम् । कनकेन उज्ज्वलां रत्नमालाम् । कथंभूता सा लक्ष्मणा । सव्रीडो हासो यस्मिन् तादृशं वदनं यस्याः सा । पुनश्च कबर्यां केशपाशे धृताः स्रजो यया सा ॥ २८ ॥ ततः अनुरक्तहृदया अहं स्ववक्त्रमुन्नीय उपरि उत्थाप्य शनकैः मुरारेः अंसे स्वमालां निदधे इत्यन्वयः । किं कृत्वा । शिशिरः सन्तापहरो हासो येषु तैः एवंभूतैः कटाक्षपातैः राज्ञो निरीक्ष्य । कथंभूतं वक्त्रम् । उरवः कुन्तलाः वक्रकेशा यस्मिन् । कुण्डलयोः त्विषः ययोस्ते एवंभूते गण्डलस्थले च यस्मिन् तच्च तच्च । लज्जातिरेकात् स्कन्धे एव निहिता न तु कण्ठे ॥२९॥ तावत् तदा मृदङ्गादयः नितरां नेदुः ॥३०॥ मया ईशे कृष्णे वृते सति नृपयूथपाः सेनापतयः स्पर्धमानाः सन्तः तन्न सेहिरे हे याज्ञसेनि द्रौपदि । हृच्छयः कामः तेन पीडिताः । ॥३१॥ तावत् तदा भगवान् मां रथमारोप्य शार्ङ्गंधनुः उत्थाप्य चतुर्भुजः सन् आजौ संग्रामे तस्थौ । हयरत्नानां चतुष्टयं यस्मिन् । सन्नद्धः धृतकवचः । भीताया मम द्वाभ्यामालिङ्गनं द्वाभ्यां च धनुर्धारणम् एवं चतुर्भुजत्वमिति ॥ ३२ ॥हे राज्ञि ! राज्ञां मिषतां पश्यतां सताम् । अनादरे षष्ठी । दारुकः सारथिः रथं चालयामास । काञ्चनोपस्करं सुवर्णालङ्कृतम् ॥ ३३ ॥ ये तत्रागतास्ते अन्वसज्जन्त पृष्ठतः संलग्ना बभूवुः । केचन पथि अग्रे गत्वा निषेद्धुं निरोद्धुं संयत्ताः प्रयत्नशीला बभूवुः मार्गं रुरुधुरित्यर्थः । यथा ग्रामसिंहाः श्वानः हरिं सिंहम् । उद्धृता उत्थापिता इष्वासो धनूंषि यैस्ते ॥३४॥ शार्ङ्गधनुषःच्युतैः बाणसमूहैः कृत्ताः छिन्नाः बाह्वादयो येषां ते । कृती छेदने धातुः । कन्धरा ग्रीवा । प्रधने संग्रामे ॥ ३५ ॥ ततः जयोत्तरं यदुपतिः श्रीकृष्णः दिवि भुवि च संस्तुतां कुशस्थलीं[1] द्वारकां समाविशदित्यन्वयः । यथा तरणिः सूर्यं स्वनिकेतनमस्ताचलं प्रविशति तथा । कीदृशीम् । रविं छादयन्तीति रविच्छदाः ध्वजेषु पटा यस्यां चित्रविचित्राणि तोरणानि वन्दनमालिका यस्यां सा च सा च ताम् । केतनम् । 'कित् निवासे धातुः ल्युट् । रुचिरावृत्तम् ॥३६॥

---

१. कौ पृथिव्यां शेते इति कुशं जलं तदेव स्थलं यस्यां सा ।

पिता मे पूजयामास सुहृत्सम्बन्धिबान्धवान् । महार्हवासोऽलंकारैः शय्यासनपरिच्छदैः ॥३७॥
दासीभिः सर्वसम्पद्भिर्भटेभरथवाजिभिः । आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः॥३८॥
आत्मारामस्य तस्येमा वयं वै गृहदासिकाः । सर्वसङ्गनिवृत्त्याद्धा तपसा च बभूविम ॥३९॥

महिष्य ऊचुः

भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाथ नः क्षितिजये जितराजकन्याः ।
निर्मुच्य संसृतिविमोक्षमनुस्मरन्तीः पादाम्बुजं परिणिनाय य आप्तकामः ॥४०॥
न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत । वैराज्यं पारमेष्ठ्यं च आनन्त्यं वा हरेः पदम् ॥
कामयामह एतस्य श्रीमत्पादरजः श्रियः । कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥४२॥
व्रजस्त्रियो यद् वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः । गावश्चारयतो गोपाः पादस्पर्शं महात्मनः॥४३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

मे पिता बृहत्सेनः । महार्हैः बहुमूल्यैः । परिच्छदाः सामग्र्यः ॥ ३७ ॥ दास्यादिभिः सह आयुधानि पूर्णस्यापि आप्तकामस्यपि भक्तितः ददौ । इभो गजः ॥ ३८ ॥ इमा अष्टौ वयं अद्धा साक्षात् तस्यैव दासिकाः । वै एवार्थे सर्वसंगनिवृत्या अनन्यनिष्ठया बभूविम ॥ ३९ ॥ महिष्यः शतोत्तरषोडशसहस्रसंख्याकाः । अथ भौमासुरमरणानन्तरम् । क्षितिजये दिग्विजये युधि जितानां राज्ञां कन्याः तेन भौमेन रुद्धा नः अस्मान् ज्ञात्वा ततो निर्मुच्य मोचयित्वा च यः परिणिनाय उपयेमे आप्तकामोऽपि तस्यैव वयं गृहदासिका इति पूर्वेणान्वयः । किं कृत्वा । सगणं ससैन्यं भौमं निहत्य । कथंभूताः नः । संसृतेर्मोक्षो यस्मात् तत् पादाम्बुजमनुस्मरतीः ॥ ४० ॥ हे साध्वि ! वयं साम्राज्यादि न कामयामहे किन्तु एतस्य गदाभृतः भगवतः श्रीमत्पादरजः मूर्ध्ना वोढुं धर्तुं कामयामहे इति द्वयोरन्वयः । साम्राज्यं चक्रवर्तिपदम् । स्वाराज्यमैन्द्रपदम् । भोज्यं तदुभयभोगसेवित्वम् । वैराज्यमणिमादि[1] । पारमेष्ठ्यं परमेष्ठिनः इदं ब्रह्मपदम् । किं बहुना आनन्त्यं मोक्षं वा न ॥ ४१ ॥ ४२ ॥ यत् यथा गाश्चारयतः भगवतः पादस्पर्शं[2] गोप्यादयः वाञ्छन्ति तद्वद् वयमपीत्यन्वयः । पुलिन्द्यः शबराङ्गना ग्राम्याः । तृणादयो जडा अपि । या गावस्ता इति योज्यम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

१. विविधं राजते इति विराट् तस्य भावो वैराज्यम् ।
२. पादैः स्पृश्यते इति पादस्पर्शं पादरज एवेत्यर्थः ।

## अथ चतुरशीतितमोऽध्यायः

### श्रीशुक उवाच

श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः।
कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं सर्वा विसिस्म्युरलमश्रुकलाकुलाक्ष्यः ॥१॥

इति सम्भाषमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु। आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥२॥
द्वैपानयो नारदश्च च्यवनो देवलोऽसितः। विश्वामित्रः शतानन्दो भरद्वाजोऽथ गौतमः ॥३॥
रामः सशिष्यो भगवान् वसिष्ठो गालवो भृगुः। पुलस्त्यः कश्यपोऽत्रिश्च मार्कण्डेयो बृहस्पतिः ॥
द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रस्तथाङ्गिराः। अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥५॥
तान् दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः। पाण्डवाः कृष्णरामौ च प्रणेमुर्विश्ववन्दितान् ॥६॥
तानानर्चुर्यथा सर्वे सहरामोऽच्युतोऽर्चयत्। स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥७॥
उवाच सुखमासीनान् भगवान् धर्मगुप्तनुः। सदसस्तस्य महतो यतवाचोऽनुशृण्वतः ॥८॥

### श्रीभगवानुवाच

अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम्। देवानामपि दुष्प्रापं यद् योगेश्वरदर्शनम् ॥९॥
किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम्। दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥१०॥

---

चतुरशीतितमे तु परस्पर मुनिहरिस्तुतिरत्र विधानतः।
पुनरहो वसुदेवमखोत्सवः स्वजनयाजनयापनमुच्यते ॥१॥

पृथाद्या उत अपि स्वगोप्यः कृष्णभक्ता हरौ दुःखहरे कृष्णे तद्भार्याणां प्रणयानुबन्धं प्रेमोद्रेकं श्रुत्वा सर्वा अलं विसिस्म्युः विस्मिता[1] बभूवुरित्यन्वयः। पृथा कुन्ती। सुबलपुत्री गान्धारी। माधवी सुभद्रा। याज्ञसेनी द्रौपदी। कथंभूताः। अश्रुकलाभिः प्रेमाश्रुबिन्दुभिः आकुले पूर्णे अक्षिणी नेत्रे यासां ताः ॥ १ ॥ तत्र रामकृष्णसमीपे ॥२॥ त्रिकम्। रामः परशुरामः। द्वितादयः त्रयः सहोदराः। अपरे धौम्यकृपादयश्च आययुरिति पूर्वेणान्वयः। ब्रह्मपुत्रः अङ्गिरा इत्यत्रान्वेति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ यथा सर्वे तान् आनर्चुः तथा स्वागतादिभिः अच्युतोऽपि अर्चयत्। मालासु भवानि माल्यानि पुष्पाणि ॥ ७ ॥ तस्य महतः सदसः शृण्वतः सतः भगवान् आसीनान् तान् मुनीन् उवाचेत्यन्वयः। कथंभूतो भगवान् धर्मगोप्त्री तनुर्यस्य। गुपू रक्षणे धातुः। यतवाचो मौनीभूतस्य ॥८॥ जन्मभृतः सफलजन्मानः। कार्त्स्न्येन साकल्येन तत्फलं जन्मफलम् लब्धम्। किं तत्। यत् यस्मात् योगेश्वराणां भवतां दर्शनम् लब्धम् ॥९॥ अर्च्यते देवोऽस्यामिति अर्चा[2] प्रतिमा तस्यामेव देवः देवता इति चक्षुर्ज्ञानं येषां तेषामस्माकं भवतां दर्शनादिकं किम् असंभावितमित्यर्थः।

---

१. विसिष्मियरं इयङ् तव्वेरभावः आर्षं।
२. 'अर्चा पूजाप्रतिमयोः' इति हलायुधः।

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥११॥

नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ् मनः ।
उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्तसेवया ॥१२॥
यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ।
यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥१३॥

श्रीशुक उवाच

निशम्येत्थं भगवतः कृष्णस्याकुण्ठमेधसः । वचो दुरन्वयं विप्रास्तूष्णीमासन् भ्रमद्धियः॥१४॥
चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् । जनसंग्रह इत्यूचुः स्मयन्तस्तं जगद्गुरुम् ॥१५॥

मुनय ऊचुः

यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वराः ।
यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥१६॥
अनीह एतद् बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ।
भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥१७॥

---

प्रह्वः प्रणामः ॥ १० ॥ जलमयानि तीर्थानि शिलामया देवाश्च न सन्ति सन्त्येव किन्तु ते उरुकालेन दीर्घकालेन सेविताः सन्तः पुनन्ति । साधवस्तु दर्शनादेवेति ततो वैशिष्टयं दर्शितम् । वस्तुतस्तु उरुगुरुशब्दौ पर्यायौ । कलनं कालः ज्ञानम् । 'कल गतौ धातुः ।' गत्यर्थानां ज्ञानार्थतापीति वामनादयः । तथा हि उरुणा गुरुणा दत्तः कालः उरुकालः मध्यमपदलोपी समासः तेन गुरूपदिष्टज्ञानेनेत्यर्थः इति वंशीधरी ॥ ११ ॥ चिरकालमुपासिता अग्न्यादयः भेदकृतः भेदबुद्धिं कुर्वतः पुंसः अघं पापमूलमज्ञानं न घ्नन्ति न हरन्ति । विपश्चितः विवेकिनस्तु मुहूर्तेनैव । वाङ् मनश्चेति द्वयमुपासनाविषयकम् । यो वाचं ब्रह्म मनो ब्रह्म उपास्ते इति श्रुतेः श्वसनो वायुः ॥ १२ ॥ यस्य कुणपे शवतुल्ये शरीरे आत्मबुद्धिः अहमिति बुद्धिः । कलत्रादिषु स्वधीः स्वीया इति बुद्धिः । भौमे प्रतिमायाम् इज्यबुद्धिः पूज्यदेवताबुद्धिः । सलिले यत् यस्य तीर्थबुद्धिः । किन्तु अभिज्ञेषु तत्त्वज्ञेषु एताः पूर्वोक्ता बुद्धयः न सन्ति स गोष्वपि पशुषु खर एव । कथंभूते कुणपे । त्रिधातुके । त्रयो धातवः वातपित्तश्लेष्माणः यस्य तस्मिन् ॥ १३ ॥ इत्थं कृष्णस्य दुरन्वयम् अननुरूपं[1] वचः निशम्य विप्राः तूष्णीमासन्नित्यन्वयः । भ्रमन्ती अस्थिरा धीर्येषां ते । अकुण्ठमेधसः अप्रतिहतज्ञानस्य भगवतः ॥१४॥ ईशितव्यतां[2] दास्यभावेन मुनिसेवकतां विमृश्य जनसंग्रहे जनसंग्रहार्थमेतत् इत्यूचुः । स्मयन्तः हसन्तः सन्तः ॥१५॥ विश्वसृजां दक्षादीनामधीश्वराः तत्त्ववित्सु उत्तमा उपदेष्टारः अपि वयं यन्मायया मोहिताः सन्तः तदभिप्रायं न जानीमः । का माया । यत् यस्मात् ईहया नरचेष्टया गूढः सन् भगवान् । ईशितव्यापति दासवत् आचरति सैव । आचारे क्यङ् । निष्कर्षश्चायं तद्विचेष्टितं विचित्रमतर्क्यमित्यर्थः ॥ १६ ॥ अनीहो निष्क्रियः एकोऽपि यः एतत् जगत् बहुधा आत्मना उपादानभूतेन यथावत् सृजति रक्षति संहरते च तथापि न बध्यते । यथा भूमिः भौमैः भूविकारैः घटादिभिः बहुरूपिणी भवति । अतो विभूम्नः परिपूर्णस्य भगवतः चरित्रं विडम्बनमनुकरणमात्रं न तु तात्त्विकम् लोकशिक्षार्थमेवेत्यर्थः ॥ १७ ॥ जनसंग्रहमेवाहुः

---

१. दुर्ज्ञेयाभिप्रायम् ।　　२. ईशितव्यस्त्वनीशत्वे दास्ये च परिकीर्तितः ।

अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय च।
स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥१८॥

ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः। यत्रोपलब्धं सद् व्यक्तमव्यक्तं च ततः परम् ॥१९॥

तस्माद् ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्त्वमात्मनः। सभाजयसि सद्धाम तद् ब्रह्मण्याग्रणीर्भवान् ॥

अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः। त्वया संगम्य सद्गत्या यदन्तः श्रेयसां परः ॥२१॥

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे। स्वयोगमाययाच्छन्नमहिम्ने परमात्मने ॥२२॥

न यं विदन्त्यमी भूपा एकारामाश्च वृष्णयः। मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥२३॥

यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक्। नाममात्रेन्द्रियाभातं न वेद रहितं परम् ॥२४॥

एवं त्वा नाममात्रेषु विषयेष्विन्द्रियेहया। मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् ॥२५॥

तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः।
उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् ॥२६॥

---

अथापोति त्रिभिः। यद्यपि तव जन्मादि न संभवति अथापि त्वं सत्त्वं शुद्धसत्त्वात्मकं वपुः बिभर्षि स्वलीलया स्वाचारेण वेदपथं च बिभर्षि तत्कर्माणि च अनुतिष्ठसीति योज्यम्। काले यथावसरम्। यतो भवान् वर्णाश्रमप्रवर्तकः ॥ १८ ॥ ब्रह्म वेदाख्यं ते हृदयमन्तरङ्गं रूपम्। कुतः। यत्र ब्रह्मणि व्यक्तं कार्यम् अव्यक्तं कारणं ततः परं सद्रूपं ब्रह्म तप आदिभिः उपलब्धं साक्षात् दृष्टं भवति। तस्मात् वेदप्रवर्तकं ब्रह्मकुलं त्वं समाजयसि सत्करोषि तत एव च भवान् ब्रह्मण्यानां अग्रणी रुच्यते। कथंभूतं कुलम्। शास्त्रयोनेः वेदमूलभूतस्य तव सद्धाम श्रेष्ठम् उपलब्धिस्थानम् ॥ १९ ॥ २० ॥ अद्य सतां गत्या उपदेशेन त्वया सह संगम्य संगं प्राप्य जन्मनः साफल्यं जातम्। तथा विद्यादेश्च साफल्यं[1] जातम्। यत् यस्मात् त्वत्संग एव श्रेयसां फलानां परोऽन्तः परमावधिः मुख्यं फलमित्यर्थः ॥ २१ ॥ अकुण्ठा अप्रतिहता मेधा ज्ञानशक्तिर्यस्य तस्मै। महिमा स्वरूपम् ॥ २२ ॥ अमी भूपाः वृष्णयश्च एकारामा अपि यं श्रीकृष्णं न विदन्ति। कुतः। मायैव जवनिका तिरस्करिणी तया आच्छन्नं मायासमावृतम्। कालं कर्मप्रवर्तकम्। आरामः[2] सहवासः। जवनिका (पर्दा) ॥ २३ ॥ यथा शयानः पुरुषः स्वप्नान् पश्यन् नाममात्रं मिथ्याभूतमेव इन्द्रियेण मनसा आभातं सिंहादिरूपमात्मानं वेद तद्रहितं च न वेद। कुतः। गुणेषु स्वप्नविषयेषु तत्त्वदृक् सत्यत्वबुद्धिः। यद्वा। गुणं गुणकार्यं देहं तत्त्वरूपेण पश्यतीति तथा ॥ २४ ॥ एवं स्मृतेः विवेकस्य उपप्लवात् नाशात् हेतोः त्वामपि न वेद। कुतः। नाममात्रेषु मिथ्याभूतेषु विषयेषु इन्द्रियैः या ईहा प्रवृत्तिः सैव माया तया भ्रमच्चित्तं यस्य सः तथाभूतः ॥ २५ ॥ तस्य ते अङ्घ्रिम् अद्य ददृशिम दृष्टवन्तो वयम् अथो अतः अस्मान् अनुगृहाणेत्यन्वयः। यतो बहवोऽपि योगिनः भवद्गतिं मुक्तिम् अवापुः। कथंभूताः। उत्सिक्ता वृद्धिं गता या भक्तिः प्रेमलक्षणा तया उपहतः नष्टः आशयः अन्तःकरणरूपो जीवकोशो लिङ्गशरीरं येषां ते तथोक्ताः। कथंभूतम् अङ्घ्रिम्। अघौघस्य मर्षो नाशो यस्मात् तत् तीर्थं गंगा तस्य आस्पदम्।

---

१. साफल्यमिति समासान्तर्गतमपि आकृष्यमात्रान्वेति। 'भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्' इतिवत्।

२. आरामो वासनिलये क्रीडायां च वने तथा इति कोशात्। एकस्मिन्नेव स्थाने आरामो निवासो येषां ते।

श्रीशुक उवाच

इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम् । राजर्षे स्वाश्रमान् गन्तुं मुनयो दधिरे मनः ॥२७॥

तद् वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः । प्रणम्य चोपसंगृह्य बभाषेदं सुयन्त्रितः ॥२८॥

वसुदेव उवाच

नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ । कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥२९॥

नारद उवाच

नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया । कृष्णं मत्वार्भकं यन्नः पृच्छति श्रेय आत्मनः ॥३०॥

संनिकर्षो हि मर्त्यानामनादरणकारणम् । गाङ्गं हित्वा यथान्याम्भस्तत्रत्यो याति शुद्धये ॥३१॥

यस्यानुभूतिः कालेन लयोत्पत्त्यादिनास्य वै । स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति॥३२॥

तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ।
प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ॥३३॥

अथोचुर्मुनयो राजन्नाभाष्यानकदुन्दुभिम् । सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥३४॥

---

पुनश्च । योगिभिः हृदि कृतं चिन्तितम् ॥ २६ ॥ दशार्हः यदुवंशीयो राजा तद्वंशजं श्रीकृष्णम् अनुज्ञाप्य पृष्ट्वा । गन्तुं मनो दधिरे मनः चक्रुः ॥ २७ ॥ तत् तेषां गमनं वीक्ष्य तान् मुनीन् उपसंगृह्य पादौ गृहीत्वा सुयन्त्रितः स्थिरचित्तः सन् इदं बभाषे ॥२८॥ हे ऋषयः येन कर्मणा अनुष्ठितेन निर्हारो कर्मनाशः बन्धनिवृत्तिः स्यात् तत् नोऽस्मान् प्रति उच्यताम् । सर्वे देवा येषु तेभ्यः ऋषिभ्यो वः युष्मभ्यं नमः । यावतीर्वै देवतास्ताः सर्वाः वेदविदि ब्राह्मणे निवसन्ति[1] इति श्रुतेः ॥ २९ ॥ हे विप्राः इदम् अतिचित्रम् अत्याश्चर्यं नास्ति । किं तत् । वसुदेवो बोद्‌धुमिच्छया आत्मनः श्रेयःसाधनं यत् अस्मान् पृच्छति ॥ ३० ॥ सन्निकर्षः निरन्तरं सान्निध्यम् । तत्रत्यो गंगातीरवासी यथा गाङ्गं जलं हित्वा अनादृत्य आत्मशुद्धये अन्यतीर्थाम्भः प्रति याति ॥ ३१ ॥ यस्येति द्वयम् । यस्य अनुभूतिः ज्ञानं कालादिना कुतश्चिदपि न रिष्यति न नश्यति तम् अद्वितीयम् ईश्वरं श्रीकृष्णम् अयं प्राकृतो जनः क्लेशादिभिः उपगूढमाच्छन्नं मनुष्यं मन्यते इति द्वयोरन्वयः। अत्र दृष्टान्तः। यथा मेघतुषारराहुभिः आच्छन्नं सूर्यं मन्यते तथा। तत्र क्लेशा अविद्यादयः पञ्च । पुण्यपापात्मकानि । कर्माणि तत्परिपाके फले सुखदुःखे च गुणानां सत्त्वादीनां प्रवाहश्च तैः । तथा प्राणादिभिः प्राणमनोबुद्धिभिः लिङ्गशरीरघटकैः स्वविभवैः कार्यैश्च उपगूढम् । कालादिना जीवानामिव यस्य ज्ञानं न नश्यति तदेवाह-कालेन कर्कटिकाफलवत् । अस्य विश्वस्य लयोत्पत्त्यादिना । स्वतः विद्रिदादिवत् । अन्यस्मात् मुद्गरादेर्घटादिवत् गुणतो रूपान्तरोत्पत्तेः देहादिवत् ॥३२॥३३॥ अथ नारदवाक्यानन्तरं मुनयः आनकदुन्दुभिं वसुदेवमाभाष्य संबोध्य ऊचुरित्यन्वयः । सर्वेषां शृण्वतां सतां तथा रामकृष्णयोरपि शृण्वतोः सतोः ॥ ३४ ॥ कर्मणां निर्हारः कर्मजन्य-

---

१. इयमेव श्रुतिः विप्राणां तप्तमुद्राधारणाभावं द्योतयति ।
एतदभिप्रेत्यैव बृहन्नारदीये भगीरथं प्रति धर्मराजेनोक्तम् ।
ब्राह्मणस्य तनूर्ज्ञेया सर्वदेवसमन्विता । सा चेत्संतापिता राजन् किं वक्ष्यामि तदेनसः ॥ १ ॥
शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा । एकाजातेरयं धर्मो न जातु स्याद् द्विजन्मनः ॥ २ ॥
किञ्च— शंखचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा । स शूद्रवद्‌ बहिष्कार्यः सर्वस्मात् द्विजकर्मणः ॥ ३ ॥
—इत्याश्वलायनेनाप्युक्तम् । इति वंशीधरी ।

कर्मणा कर्मनिर्हार एष साधु निरूपितः । यच्छ्रद्धया यजेद् विष्णुं सर्वयज्ञेश्वरं मखैः ॥३५॥
चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा । दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥३६॥
अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः । यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥३७॥
वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् । आत्मलोकैषणां देव कालेन विसृजेद् बुधः ।
ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥३८॥
ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो । यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन् पतेत् ॥३९॥
त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते । यज्ञैर्देवर्णमुन्मुच्य निरृणोऽशरणो भव ॥४०॥
वसुदेव भवान् नूनं भक्त्या परमया हरिम् । जगतामीश्वरं प्रार्चः स यद् वां पुत्रतां गतः ॥४१॥

श्रीशुक उवाच

इति तद्वचनं श्रुत्वा वसुदेवो महामनाः । तानृषीनृत्विजो वव्रे मूर्ध्नाऽऽनम्य प्रसाद्य च ॥४२॥
त एनमृषयो राजन् वृता धर्मेण धार्मिकम् । तस्मिन्नयाजयन् क्षेत्रे मखैरुत्तमकल्पकैः ॥४३॥
तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः । स्नाताः सुवाससो राजन् राजानः सुष्ठ्वलंकृताः ॥४४॥
तन्महिष्यश्च मुदिता निष्ककण्ठ्यः सुवाससः । दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥४५॥

---

बन्धनिवृत्त्युपायः एष निरूपितः यत् मखैः विष्णुं यजेदिति ॥ ३५ ॥ चित्तस्य उपशमः उपरामहेतुः आत्मन ईश्वरस्य मुदावहः प्रीतिकरः सुगमो योगः मोक्षोपायः धर्मश्च अयमेव कविभिः दर्शितः अयमेव च गृहस्थस्य पन्था दर्शितः । कः । शुद्धेन वित्तेन न्यायार्जितेन श्रद्धया पूरुषः भगवान् इज्येत इति यत् अयमेव इति द्वयोरन्वयः । स्वस्ति क्षेमम् ऐहिकामुष्मिकमीयते प्राप्यतेऽनेनेति स्वस्त्ययनः । केन दर्शितः । शास्त्ररूपचक्षुषा ॥३६॥३७॥ वित्तफलभूतैः यज्ञैः दानैश्च वित्तेच्छां विसृजेत् त्यजेत् । गृहैः गृहोचितभोगैः दारादितृष्णां त्यजेत् तदनुभवेन औत्सुक्यनिवृत्तेः । आत्मनः स्वस्य स्वर्गादितृष्णां च कालेन क्षयानुसन्धानेन । देवशब्देन हे वसुदेव ग्रहणम् एकदेशिन्यायेन । बुधः सारासारवित् । यद्वा देवकालेनेत्येकपदम् । देवानामपि कालेन मृत्युहेतुभूतेन । ॥३८॥ ग्रामे इति सार्द्धम् । यज्ञेन देवानाम् अध्ययनेन ब्रह्मचर्येण ऋषीणां पुत्रैः पितॄणाम् ऋणैर्मुक्तो भवति । तानि ऋणानि अनिस्तीर्य अदूरीकृत्य गृहं त्यजन् पतेत् नरकं यातीत्यर्थः ॥ ३९ ॥ निरृणः निर्मुक्तऋणः । अशरणो भव गृहात् प्रव्रज । नास्ति शरणं[1] गृहं यस्य स तथाभूतः ॥ ४० ॥ हे वसुदेव ! त्वं भक्त्या हरिं प्रार्चः अर्चितवानसि । यत् यस्मात् स कृष्णः वां युवयोः पुत्रतां गतः । कथंभूतस्त्वं भवान् सकलत्रः[2] इति वसुदेवविशेषणम् । भं कलत्रं तदस्यास्तीति भवान् । इत्थमेव व्याख्येयमन्यथा प्रार्चं इति मध्यमपुरुषक्रियाया असंगतिः स्यादिति । किञ्च प्रार्चः इत्यनद्यतनातीतवाचिना लङा बहूनि जन्मानि सूचितानि । इति वंशीधरी ॥ ४१ ॥ वव्रे वरणीकृतवान् ॥४२॥ धर्मेण यथाविधि वृताः ते मुनयः एनं वसुदेवमयाजयन् । मखैरिति बहुवचनमिष्टयपेक्षया ज्ञेयम् । कल्प्यन्ते संपाद्यन्ते विधय आभिरिति कल्पकाः सामर्थ्यः उत्तमाः कल्पकाः येषु तैः मखैः ॥४३॥ तद्दीक्षायां यज्ञारम्भसंकल्परूपायाम् । वृष्णयः राजानः तन्महिष्यः तथा तस्य वसुदेवस्य महिष्यश्च वस्तुपाणयः[3] सत्यः दीक्षाशालामुपाजग्मुरित्यन्वयः । वस्तूनि मांगलिकद्रव्याणि पाणौ यासां ताः । निष्कं दीनारहारः कण्ठे यासां ताः । 'दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः । (दीनारः अशरफी) 'वक्षोऽलङ्कारणे तथा' इति मेदिनी च

---

१. 'शरणं गृहरक्षित्रोः' इत्यमरः । २. कलत्रोडुतेजसि स्याद् भं भो भ्रातरि भास्करे इति निरुक्तिः ।
३. हिरण्यं रजतं चापि गृहीत्वा क्रमुकं फलम् । यज्ञशालां विशेद् पत्नी शपेयुस्त्वन्यथा सुराः ॥ इत्युक्तेः ।

नेदुर्मृदङ्गपटहशङ्खभेर्यानकादयः । ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः ।
जगुः सुकण्ठचो गन्धर्व्यः संगीतं सहभर्तृकाः ॥४६॥

तमभ्यषिञ्चन् विधिवदक्तमभ्यक्तमृत्विजः । पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥४७॥

ताभिर्दुकूलवलयैर्हारनूपुरकुण्डलैः । स्वलंकृताभिर्विबभौ दीक्षितोऽजिनसंवृतः ॥४८॥

तस्यर्त्विजो महाराज रत्नकौशेयवाससः । ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥४९॥

तदा रामश्च कृष्णश्च स्वैः स्वैर्बन्धुभिरन्वितौ । रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥५०॥

ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः । प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥५१॥

अथर्त्विग्भ्योऽददात् काले यथाम्नातं स दक्षिणाः । स्वलंकृतेभ्योऽलंकृत्य गोभूकन्या महाधनाः ॥५२॥

पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः । सस्नू रामह्रदे विप्रा यजमानपुरःसराः ॥५३॥
स्नातोऽलंकारवासांसि वन्दिभ्योऽदात् तथा स्त्रियः ॥५४॥

ततः स्वलंकृतो वर्णानाश्वभ्योऽन्नेन पूजयत् । बन्धून् सदारान् ससुतान् पारिबर्हेण भूयसा ॥
विदर्भकोसलकुरून् काशिकेकयसृंजयान् । सदस्यर्त्विक्सुरगणान् नृभूतपितृचारणान् ॥
श्रीनिकेतमनुज्ञाप्य शंसन्तः प्रययुः क्रतुम् ॥५५॥५६॥

धृतराष्ट्रोऽनुजः पार्था भीष्मो द्रोणः पृथा यमौ । नारदो भगवान् व्यासः सुहृत्सम्बन्धिबान्धवाः ॥
बन्धून् परिष्वज्य यदून् सौहृदात् क्लिन्नचेतसः । ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥५८॥

---

॥४४॥४५॥ नेदुरिति सार्द्धम् । संगीतं मधुरगीतम् ॥ ४६ ॥ अक्तं नेत्रयोरञ्जनेन अभ्यक्तं सर्वाङ्गेषु नवनीतेन लिप्तं तं वसुदेवं पत्नीभिः सहितमभ्यषिञ्चन् । उडुभिः नक्षत्रैः सह यथा सोमराजं चन्द्रम् ॥ ४७ ॥ दुकूलादिभिः अलङ्कृताभिः ताभिः पत्नीभिः सह स बभौ इत्यन्वयः । अजिनं मृगचर्म ॥ ४८ ॥ तस्य वसुदेवस्य ऋत्विजः होत्राद्याः षोडश ते ये पूर्वं वृताः ते । वृत्रहणः इन्द्रस्य ॥४९॥ तदा यज्ञसमये । स्वस्य विभूतिभिः मूर्तिमद्भिः अणिमादिभिः । अत्र यथेति लुप्तोपमा बोध्या ॥ ५० ॥ अनुयज्ञं प्रतियज्ञम् अग्निहोत्रादिनामकैः सर्वैरेव प्राकृतादिभिः भगवन्तम् ईजे च । कथंभूतम् । द्रव्यादीनामीश्वरं स्वामिनं संचालकम् । तत्र द्रव्यं पुरोडाशः[1] । ज्ञानं मन्त्रः । क्रिया कर्म । प्राकृता ज्योतिष्टोमादयः वैकृताः सौरसत्रादयः ॥ ५१ ॥ स वसुदेवः । यथाम्नातं यथोदितं दक्षिणाः अददात् । तथा महान्ति धनानि यासु ताः रत्नरूपा गोभूकन्याश्च अददात् । स्वलङ्कृतेभ्यः आचारसम्पन्नेभ्यः विप्रेभ्यः ॥ ५२ ॥ पत्नीसंयाजः पत्नीभिः क्रियमाणः काश्चन देवता उद्दिश्य यजनम् अवभृथः समाप्तिकर्मस्नानम् । उभयत्र इष्टिविशेषाश्च भवन्ति । तैश्च कृत्वा ताश्च कृत्वेत्यर्थः । कर्मणि तृतीया । सस्नुः स्नानं चक्रुः । 'ष्णा शौचे धातुः ॥५३॥ स्नात इत्यर्द्धम् । स्नातो वसुदेवः अदात् तथा तस्य स्त्रियोऽपि अदुरिति योज्यम् ॥ ५४ ॥ तत इति सार्द्धयुग्मम् । ततः स्नोत्तरम् । आश्वभ्यः शुनः अभिव्याप्य सर्वानेव वर्णान् पूजयत् अपूजयत् । भूयसा पारिबर्हेण पूजाद्रव्येण च बन्ध्वादींश्च चारणान्तान् अपूजयदिति शेषः । ते च सर्वे श्रीकृष्णमनुज्ञाप्य पृष्ट्वा क्रतुं प्रशंसन्तः स्वाश्रमान् प्रययुरित्यन्वयः ॥ ५५॥५६॥ धृतराष्ट्रादयः तथा अपरे जनाः अपि बन्धून् परिष्वज्य स्वदेशान् प्रययुरिति योज्यम् । अनुजो विदुरः । यमौ

---

१. तण्डुलपिष्टनिर्मितकूर्माकारो बलिः पुरोडशः । इति वंशीधरी ।

नन्दस्तु सह गोपालैर्बृहत्या पूजयार्चितः । कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद् बन्धुवत्सलः ॥५९॥
वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम् । सुहृद्वृतः प्रीतमना नन्दमाह करे स्पृशन् ॥६०॥

वसुदेव उवाच

भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः । तं दुस्त्यजमहं मन्ये शूराणामपि योगिनाम् ॥६१॥
अस्मास्वप्रतिकल्पेयं यत् कृताज्ञेषु सत्तमैः । मैत्र्यर्पिताफला वापि न निवर्तेत कर्हिचित् ॥६२॥
प्रागकल्पाच्च कुशलं भ्रातर्वो नाचराम हि । अधुना श्रीमदान्धाक्षा न पश्यामः पुरः सतः॥६३॥
मा राज्यश्रीरभूत् पुंसः श्रेयस्कामस्य मानद । सुजनानुत बन्धून् वा न पश्यति ययान्धदृक् ॥६४॥

श्रीशुक उवाच

एवं सौहृदशैथिल्यचित्त आनकदुन्दुभिः । रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥६५॥

नन्दस्तु सख्युः प्रियकृत् प्रेम्णा गोविन्दरामयोः ।
अद्य श्व इति मासांस्त्रीन् यदुभिर्मानितोऽवसत् ॥६६॥

ततः कामैः पूर्यमाणः सव्रजः सहबान्धवः । परार्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥६७॥
वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः । दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ ॥६८॥
नन्दो गोपाश्च गोप्यश्च गोविन्दचरणाम्बुजे । मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः ॥६९॥
बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः । वीक्ष्य प्रावृषमासन्नां ययुर्द्वारवतीं पुनः ॥७०॥
जनेभ्यः कथयांचक्रुर्यदुदेवमहोत्सवम् । यदासीत्तीर्थयात्रायां सुहृत्संदर्शनादिकम् ॥७१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे तीर्थयात्रानुवर्णनं
नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

नकुलसहदेवौ । सौहार्देन क्लिन्नमार्द्रं चेतो येषां तान् ॥ ५७ ॥ ५८ ॥ कृष्णादिभिः अर्चितः नन्दस्तु तत्रैव न्यवात्सीत् यतो बन्धुषु बत्सलः स्नेहवान् ॥ ५९ ॥ अञ्जसा अनायासेन ॥ ६० ॥ हे भ्रातः यः पाशस्तं शूराणां बलेन योगिनां ज्ञानेनापि दुस्त्यजमित्यन्वयः ॥ ६१ ॥ सत्तमैः भवद्भिः अस्मासु अर्पिता कृता इयं मैत्री अफलापि प्रत्युपकारशून्यापि यस्मात् न निवर्तते तस्मादीशकृतः इत्यन्वयः । लडर्थे लिङ् । कथंभूतेषु । कृतमुपकारं न जानन्तीति तेषु अप्रतिमा अनुपमा ॥ ६२ ॥ प्राक् बन्धनदशायाम् अकल्पात् असामर्थ्यात् वो युष्माकं कुशलं प्रियं नाचराम न कृतवन्तो वयम् । अधुना पुरः सतः वर्तमानानपि न पश्यामः यतः श्रीमदेन अन्धाक्षाः ॥६३॥ सुजनान् इत्येव पाठः । गुरुजनान् आचार्यादीन् किं पुनः साधारणान् । यया श्रिया अन्धदृक् आवृतचक्षुः ॥६४॥ सौहृदेन प्रेमोद्रेकेण शैथिल्यमधीरं चित्तं यस्य सः । अश्रूणि लोचनयोर्यस्य सः ॥ ६५ ॥ अद्य सायं गन्तव्यं तद्व्यतीते सति श्वो गन्तव्यमित्येवं मानितः ॥६६॥ तत इति युग्मम् । कामैः नानाद्रव्यैः तदेवाह--परार्ध्येति । व्रजं गोष्ठसमूहः । परार्द्ध्याभरणानि श्रेष्ठभूषणानि क्षौमानि रेशमीवस्त्राणि नानाबहुमूल्यपरिच्छदाः सामग्र्यश्च तैः सह पारिबर्हं मान्येभ्यो देयद्रव्यमादाय यदुभिः यापितः प्रस्थापितः सन् ययौ ॥६७॥६८॥ क्षिप्तं लग्नं मनः पुनः हर्तुमाक्रष्टुमनीशा असमर्थाः सन्तः मथुरां ययुः ॥६९॥ प्रावृषं वर्षर्तुम् आसन्नां सन्निहिताम् ॥७०॥ यदुदेवस्य वसुदेवस्य महोत्सवं यज्ञादिलक्षणं यत् सुहृत्संदर्शनादिकं च आसीत् तत् सर्वं कथयाञ्चक्रुरित्यन्वयः ॥७१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्धे गूढार्थदीपिन्यां
चतुरशीतिमोऽध्यायः ॥ ८४ ॥

## अथ पञ्चाशीतितमोऽध्यायः

### श्रीवादरायणिरुवाच

अथैकदाऽऽत्मजौ प्राप्तौ कृतपादाभिवन्दनौ । वसुदेवोऽभिनन्द्याह प्रीत्या संकर्षणाच्युतौ ॥१॥

मुनीनां स वचः श्रुत्वा पुत्रयोर्धामसूचकम् । तद्वीर्यैर्जातविस्रम्भः परिभाष्याभ्यभाषत ॥२॥

कृष्ण कृष्ण महायोगिन् संकर्षण सनातन । जाने वामस्य यत् साक्षात् प्रधानपुरुषौ परौ ॥३॥

यत्र येन यतो यस्य यस्मै यद् यद् यथा यदा । स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥४॥

एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज । आत्मनानुप्रविश्यात्मन् प्राणो जीवो बिभर्ष्यजः ॥५॥

प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः । पारतन्त्र्याद् वैसादृश्याद् द्वयोश्चेष्टैव चेष्टताम् ॥

कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कर्क्षविद्युताम् । यत् स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ॥

तर्पणं प्राणनमपां देवत्वं ताश्च तद्रसः । ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥८॥

दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः । नादो वर्णस्त्वमोङ्कार आकृतीनां पृथक्कृतिः ॥

---

पञ्चाशीतितमे भक्त्या पितृभ्यां संस्तुतौ सुतौ ।
पित्रे सुनिर्मलं ज्ञानं मात्रेऽदातां मृतात्मजान् ॥ १ ॥

अथ तीर्थयात्रानन्तरम् । वसुदेवः आत्मजौ अभिनन्द्य संश्लाघ्य प्रीत्या आहेत्यन्वयः । कृतं पादयोरभिवन्दनं याभ्यां तौ ॥ १ ॥ स वसुदेवः धामसूचकम् धाम प्रभावः । तद्वीर्यैः कृष्णपराक्रमैः जातविश्वासः । परिभाष्य संबोध्य ॥ २ ॥ अस्य विश्वस्य यत् साक्षात् परं कारणं प्रधानपुरुषौ तयोरपि परौ कारणरूपौ वां युवामित्यहं जाने ॥ ३ ॥ यत्र यस्मिन् आधारे येन कर्त्रा करणेन च यतः उपादानकारणात् यस्य संबन्धेन यस्मै संप्रदानाय यद्विहारार्थं यत् यत् घटपटादिकं वस्तु जायते तदिदं सर्वं प्रपञ्चं षट्कारकादिसाध्यं भगवान् भगवत्कार्यमित्यर्थः ॥ ४ ॥ धारणपोषणकर्ताऽपि त्वमेवेत्याह । हे अधोक्षज ! एतत् नानाविधं देवतिर्यगादिरूपं विश्वं आत्मन् आत्मनि त्वय्येव आत्मना त्वया सृष्टम् अजस्त्वमेव बिभर्षि धारयसि पोषयसि च । कथम् । आत्मना अन्तर्यामिरूपेण अनुप्रविश्य । किंरूपः सन् । प्राणः क्रियाशक्तिः जीवो ज्ञानशक्तिश्च सन् । यद्वा । हे आत्मन् ॥५॥ प्राणः सूत्रं तदादीनां महदादीनां विश्वसृजां विश्वकारणानां याः शक्तयः ताः परस्य परमेश्वरस्यैव । कुतः । चेतनाचेतनत्वेन द्वयोः विसदृशत्वात् एषां चेतनपारतन्त्र्यं घटते तस्मात् चेष्टतां चेष्टमानानामेषां चेष्टैव न तु शक्तिः यथा वेधशक्तिर्न बाणस्य अपि तु पुरुषस्य तद्वदित्यर्थः ॥ ६ ॥ चन्द्रस्य कान्तिः अग्नेः तेजः अर्कस्य प्रभा । ऋक्षाणां नक्षत्राणां विद्युतां च सत्ता स्फुरणमात्रम् । भूभृतां पर्वतानां यत् स्थैर्यं भूमेः वृत्तिः आधारशक्तिः गन्धश्च इत्येतत् सर्वम् अर्थतः वस्तुतो भवानेव तवैव शक्तिरित्यर्थः । तमेव भान्तमनुभाति सर्वम् इति श्रुतेः ॥ ७ ॥ हे देव ! अपां तर्पणं तृप्तिजनकत्वम् प्राणनं जीवनहेतुत्वं ता आपः तासां रसश्च त्वमेव । वायोः ओजः सहो बलं क्रमेण इन्द्रियमनोदेहशक्तयः । चेष्टा व्यापारः गतिः गमनं च तवैव शक्तिः ॥ ८ ॥ दिशां मध्ये अवकाशः दिशः खं सामान्याकाशश्च त्वम् । तदाश्रयः आकाशाश्रयः स्फोटः परा वाणी शब्दतन्मात्रं त्वमेव । स्फुटति प्रकटीभवति अर्थोऽनेनेति स्फोटः ध्वनिविशेषावच्छिन्नं ब्रह्मैव स्फोटपदवाच्यमिति सिद्धान्तः । नादः पश्यन्ती । ओंकारो वर्णश्च मध्यमा आकृतीनां घटाद्याकाराणां पृथक्करणरूपा वर्णपदात्मिका वैखरी वाणी

इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहः । अवबोधो भवान् बुद्धेर्जीवस्यानुस्मृतिः सती ॥१०॥
भूतानामसि भूतादिरिन्द्रियाणां च तैजसः । वैकारिको विकल्पानां प्रधानमनुशायिनाम् ॥११॥
नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् । यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥१२॥
सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः । त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥१३॥
तस्मान्न सन्त्यमी भावा यर्हि त्वयि विकल्पिताः । त्वं चामीषु विकारेषु ह्यन्यदाऽव्यावहारिक. ॥
गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः । गतिं सूक्ष्मामबोधेन संसरन्तीह कर्मभिः ॥१५॥
यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम् । स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥१६॥
असावहं ममैवैते देहे चास्यान्वयादिषु । स्नेहपाशैर्निबध्नाति भवान् सर्वमिदं जगत् ॥१७॥
युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वरौ । भूभारक्षत्रक्षपण अवतीर्णौ तथाऽऽत्थ ह ॥१८॥

तत्ते गतोऽस्म्यरणमद्य पदारविन्दमापन्नसंसृतिभयापहमार्तबन्धो ।
एतावताऽलमलमिन्द्रियलालसेन मर्त्यात्मदृक् त्वयि परे यदपत्यबुद्धिः ॥१९॥
सूतीगृहे ननु जगाद भवानजो नौ संजज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ।
नानातनूर्गगनवद् विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम् ॥२०॥

---

च त्वमेव ॥ ९ ॥ इन्द्रियं विषयप्रकाशनशक्तिः देवाश्च इन्द्रियाधिष्ठातारः तदनुग्रहः अधिष्ठानशक्तिश्च त्वमेव । अवबोधः निश्चयात्मिका शक्तिः सतो अनुस्मृतिः यथार्थज्ञानरूपा शक्तिः भवानेव ॥१०॥ भूतानामाकाशादीनां कारणं भूतादिः तामसोऽहङ्कारस्त्वमसि । इन्द्रियाणां कारणं तैजसः राजसोऽहङ्कारस्त्वम् । विकल्पानां[1] देवानां मनसश्च कारणं वैकारिकः सात्त्विकोऽहङ्कारस्त्वमसि । अनुशायिनां जीवानां संसारकारणं प्रधानं प्रकृतिस्त्वमेव ॥ ११ ॥ इह प्रपञ्चे नश्वरेषु भावेषु देहादिषु यत् अनश्वरम् अवशिष्यमाणरूपं तत् त्वमसि । यथा द्रव्यस्य मृत्सुवर्णादेः विकारेषु कार्येषु घटकुण्डलादिषु नश्वरेष्वपि द्रव्यमात्रं मृत्सुवर्णादि सत्यम् । 'मृत्तिकेत्येव सत्यम्' इति श्रुतेः ॥ १२ ॥ तद्वृत्तयः तत्परिणामा महदादयः यास्ताः त्वयि कल्पिताः अद्धा साक्षात् रज्जौ सर्पवत् ॥ १३ ॥ यस्मात् कल्पितास्तस्मादिति योज्यम् । तथा हि यदि विकल्पितास्तर्हि तेषु त्वमपि कारणत्वेनानुगतः । अन्यदा स्वरूपावस्थायां तु अव्यावहारिकः सर्वव्यवहारातीतोऽविकल्पकः जीवेश्वरादिविकल्परहितः । तस्मान्न सन्त्येवेत्युच्यते ॥ १४ ॥ एतस्मिन् गुणप्रवाहे संसारे अखिलात्मनस्तव सूक्ष्मां गतिं दुर्ज्ञेयं शुद्धरूपम् अबुद्धा अजानन्तः अबोधेन[2] देहाभिमानेन कृतैः कर्मभिः इहैव संसरति भ्रमन्ति न च मुच्यन्ते इत्यर्थः ॥१५॥ यदृच्छया दैवेच्छया नृतां मनुष्ययोनिं प्राप्य स्वार्थे परमार्थे प्रमत्तस्य मे वयः आयुः वृथैव गतम् । सुकल्पां साधनसमर्थाम् ॥१६॥ अस्य देहस्य अन्वयादिषु पुत्रादिषु ममैव एते इति स्नेहपाशैः इदं जगत् बध्नाति ॥ १७ ॥ युवां नोऽस्माकं सुतौ न भवतः किन्तु साक्षादीश्वरौ भुवो भारभूतस्य क्षत्रस्य क्षपणार्थं विनाशार्थमवतीर्णौ इति ह स्फुटं स्वयमात्थ कथितवानसि जन्मकाले ॥ १८॥ हे दीनबन्धो तत् तस्मात् अद्य ते पदारविन्दम् अरणं शरणं गतोऽस्मीत्यन्वयः । कथंभूतम् । आपन्नानां शरणागतानां संसृतिभयमपहन्तीति तथाभूतम् । एतावता इन्द्रियलालसेन अलमलं न किञ्चित्प्रयोजनम् । यत् येन लालसेन मर्त्ये शरीरे अहंबुद्धिः

---

१. विविधं कल्पनं ज्ञानमेभिस्ते विकल्पाः देवाः ।

२. अयमेव पाठः समीचीनः ।

श्रीशुक उवाच

आकर्ण्येत्थं पितुर्वाक्यं भगवान् सात्वतर्षभः । प्रत्याह प्रश्रयानम्रः प्रहसञ्श्लक्ष्णया गिरा ॥२१॥

श्रीभगवानुवाच

वचो वः समवेतार्थं तातैतदुपमन्महे । यन्नः पुत्रान् समुद्दिश्य तत्त्वग्राम उदाहृतः ॥२२॥

अहं यूयमसावार्य इमे च द्वारकौकसः । सर्वेऽप्येवं यदुश्रेष्ठ विमृश्याः सचराचरम् ॥२३॥

आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः । आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥२४॥

खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् । आविस्तिरोऽल्पभूर्येको नानात्वं यात्यसावपि॥२५॥

श्रीशुक उवाच

एवं भगवता राजन् वसुदेव उदाहृतः । श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना अभूत् ॥२६॥

अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता । श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता ॥२७॥

कृष्णरामौ समाश्राव्य पुत्रान् कंसविहिंसितान् । स्मरन्ती कृपणं प्राह वैक्लव्यादश्रुलोचना॥२८॥

देवक्युवाच

राम रामाऽप्रमेयात्मन् कृष्ण योगेश्वरेश्वर । वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ ॥२९॥

कालविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम् । भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ॥३०॥

---

त्वयि परे परमेश्वरे च अपत्यबुद्धिरस्मि ॥ १९ ॥ हे उरुगाय[1] । अजो भवान् सूतीगृहे नौ आवाम् जगाद । किं तत् । अनुयुगं प्रतियुगं[2] धर्मगुप्त्यै संजज्ञे । एवमेव गगनवत् असंग एव त्वं नानातनूः विदधत् धारयन् जहासि अतो भूम्नः परिपूर्णस्य ते महिमानं को वेद न कोऽपीत्यन्वयः ॥ २० ॥ सात्वतर्षभः यादवश्रेष्ठः श्लक्ष्णया मधुरया गिरा तं पितरं प्रति आह ॥२१॥ हे तात । वः युष्माकम् एतत् वचः समवेतार्थं श्रुतिस्मृति-सम्मतार्थम् यथार्थं वा उपमन्यामहे । नोऽस्मान् उद्दिश्य तत्त्वग्रामः तत्त्वसंग्रह एवं उदाहृतः सम्यक् निरूपितः ॥२२॥ असौ आर्यः श्रीरामः सर्वेऽप्येवं विमृश्या ब्रह्मत्वेनैव द्रष्टव्याः किं बहुना सचराचरं जगदपि तथैव द्रष्टव्यम् ॥ २३ ॥ यथा खादिभूतानि तत्कृतेषु घटादिषु आविर्भावतिरोभावादिकं यान्ति एवमात्मापि एक-एव आत्मसृष्टैः प्रकृतिजन्यैः गुणैः तत्कृतेषु देवमनुष्यादिषु बहुधा ईयते पुनश्च यथाशयं यथोपाधि आविर्भावादि-रूपेण बहुधा प्रतीयते न वस्तुतः । कुतः । एकः अन्यः देहादिभ्योऽन्यः । निर्गुणश्च । तत्र मनुष्यादौ आविर्भावः वृक्षादौ तिरोभावः । मशकादौ अल्पत्वम् । गजादौ भूरित्वं महत्त्वम् । स्वतः एकत्वम् उपाधितो नानात्वम् ॥२४॥२५॥ श्रुत्वा आत्मैकत्वम् ॥ २६ ॥ अथ मंगलारम्भे । तत्र तदा । गुरोः सान्दीपनेः पुत्रमानीतं श्रुत्वा सुविस्मिता सती रामकृष्णौ समाश्राव्य संबोध्य वैक्लव्यात् पुत्रान् स्मरन्ती कृपणं दीनं वचः प्राहेति द्वयोरन्वयः भगवत श्रीकृष्णस्य आधारत्वात् सर्वदेवतेत्युक्तम् ॥ २७ ॥ २८ । अप्रमेयः अचिन्त्यः आत्मा स्वरूपं यस्य तत्संबुद्धौ । विश्वसृजां ब्रह्मादीनामपि ईश्वरौ वां युवामहं वेद्मि ॥ २९ ॥ भूमेः भारवदाचरतां राज्ञां क्षयाय मे मयि अवतीर्णौ इत्यन्वयः । कथंभूतानाम् । कालेन विध्वस्तं सत्त्वगुणकार्यं विवेकसाधुत्वादि

---

१. उरु बहुधा गीयते इति उरुगायः ।

२. सुतपा पृश्निरिति । कश्यपोऽदितिरिति । अधुना वसुदेवो देवकीति ।

यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः। भवन्ति किं विश्वात्मंस्तं त्वाद्याहं गतिं गता ॥३१॥
चिरान्मृतसुतादाने गुरुणा कालचोदितौ। आनिन्यथुः पितृस्थानाद् गुरवे गुरुदक्षिणाम् ॥३२॥
तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ। भोजराजहतान् पुत्रान् कामये द्रष्टुमाहृतान् ॥३३॥

ऋषिरुवाच

एवं संचोदितौ मात्रा रामः कृष्णश्च भारत। सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥३४॥

तस्मिन् प्रविष्टावुपलभ्य दैत्यराड् विश्वात्मदैवं सुतरां तथाऽऽत्मनः।
तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥३५॥
तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः।
दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्म पुनद् यदम्बु ह ॥३६॥
समर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः।
ताम्बूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥३७॥
स इन्द्रसेनो भगवत्पदाम्बुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया।
उवाच हानन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम् ॥३८॥

बलिरुवाच

नमोऽनन्ताय बृहते नमः कृष्णाय वेधसे। सांख्ययोगवितानाय ब्रह्मणे परमात्मने ॥३९॥

---

येषाम्। अत एव शास्त्रमुल्लङ्घ्य वर्तमानानाम् ॥ ३० ॥ हे आद्य यस्य अंशांशेन विश्वोत्पत्त्यादयो भवन्ति तं त्वां गतिं शरणं[1] गतास्मीत्यन्वयः। यस्य अंशः पुरुषः तस्यांशो माया तस्या अंशा गुणास्तेषां भागेन लेशेन ॥ ३१ ॥ चिरात् मृतसुतस्य आदाने आनीय दाने गुरुणा प्रेरितौ युवां पितृस्थानात् यमलोकात् दक्षिणारूपं पुत्रमानीतवन्तौ ॥ ३२ ॥ यथा गुरुकामं कृतवन्तौ तथा मेऽपीत्यन्वयः। आहृतान् आनीतान् पुत्रान् ॥ ३३ ॥ हे भारत परीक्षित्! सुतलं तृतीयं विवरम् ॥ ३४ ॥ तस्मिन् सुतले प्रविष्टौ तौ उपलभ्य दृष्ट्वा दैत्यराट् बलिः सद्यः समुत्थाय तौ ननामेत्यन्वयः। सान्वयः सपरिवारः। कथंभूतौ। विश्वेषामात्मनां जीवानां दैवं देवतावदादरणीयौ। आत्मनस्तु सुतरामिष्टदेवौ। कथंभूतो बलिः। तयोर्दर्शनेन य आह्लादः तेन परिप्लुतो व्याप्तः आशयोऽन्तःकरणं यस्य सः ॥ ३५ ॥ तयोः वरासनं समानीय तत्र दिविष्टयोस्तयोः रामकृष्णयोः पादौ अवनिज्य प्रक्षाल्य तज्जलं मुदा हर्षेण बलिः शिरसा दधारेत्यन्वयः। यत् अम्बु आब्रह्म ब्रह्मलोकमभिव्याप्य सर्वं जगत् पुनत् पवित्रीकुर्वत् वर्तते तत्। सवृन्दः सपरिवारः। ह प्रसिद्धमेतम्। पुनत् पुनातेः शत्रन्तः ॥३६॥ स बलिः विभूतिभिः ऐश्वर्यबोधकैः महार्हैः बहुमूल्यैः वस्त्रादिभिः ताम्बूलादिभिः स्वगोत्रादिसमर्पणेन च तौ समर्हयामास पूजयामासेत्यन्वयः। गोत्रं कुलम् आत्मा देहः। अमृतभक्षणं[2] रसायनभोजनम्। अनुलेपनं चन्दनम् ॥ ३७ ॥ स इन्द्रसेनो बलिः धिया भगवत्पदाम्बुजं बिभ्रद् धारयन् गद्गदाक्षरं यथा स्यात्तथा ह स्फुटम् तौउ वाचेत्यन्वयः। कथंभूतः। आनन्दजलैः प्रेमाश्रुभिः आकुले व्याप्ते ईक्षणे नेत्रे यस्य सः। प्रहृष्टरोमा रोमाञ्चयुक्तः। विभिन्नया आर्द्रया ॥ ३८ ॥ सांख्ययोगयोर्ज्ञानकर्मणोर्वितानो विस्तारो येन तस्मै। सांख्यशास्त्रकारिणे वा

---

१. 'शरणेऽपि गतिः स्मृता' इति कोशात्।

२. 'अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने' इति यादवः।

दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम् । राजस्तमःस्वभावानां यन्नः प्राप्तौ यदृच्छया ॥४०॥
दैत्यदानवगन्धर्वाः सिद्धविद्याध्रचारणाः । यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥४१॥
विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि। नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः ॥४२॥
केचनोद्बद्धवैरेण भक्त्या केचन कामतः । न तथा सत्त्वसंरब्धाः संनिकृष्टाः सुरादयः ॥४३॥
इदमित्थमिति प्रायस्तव योगेश्वरेश्वर । न विदन्त्यपि योगेशा योगमायां कुतो वयम् ॥४४॥

तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविन्दधिषणान्यगृहान्धकूपात् ।
निष्क्रम्य विश्वशरणाङ्घ्र्युपलब्धवृत्तिः शान्तो यथैक उत सर्वसखैश्चरामि ॥४५॥

शाध्यस्मानीशितव्येश निष्पापान् कुरु नः प्रभो । पुमान् यच्छ्रद्धयाऽऽतिष्ठंश्चोदनाया विमुच्यते ॥

श्रीभगवानुवाच

आसन् मरीचेः षट् पुत्रा ऊर्णायां प्रथमेऽन्तरे । देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् ॥४७॥
तेनासुरीमगन् योनिमधुनावद्यकर्मणा । हिरण्यकशिपोर्जाता नीतास्ते योगमायया ॥४८॥
देवक्या उदरे जाता राजन् कंसविहिंसिताः । सा ताञ्छोचत्यात्मजान् स्वांस्त इमेऽध्यासतेऽन्तिके
इत एतान् प्रणेष्यामो मातृशोकापनुत्तये । ततः शापाद् विनिर्मुक्ता लोकं यास्यन्ति विज्वराः ॥

॥ ३९ ॥ भूतानां प्राणिनां वां युवयोः दर्शनं दुर्लभमपि केषाञ्चित् अदुर्लभं सुलभं भवति । यत् यतः नोऽस्माकं तामसानामपि दैवेच्छया[1] प्राप्तौ ॥ ४० ॥ दैत्येति त्रयम् । दैत्यादयः नायकान्ताः ये वयम् अन्ये च ते सर्वे निबद्धवैराः त्वयि यथा सन्निकृष्टाः सान्निध्यं प्राप्ताः तथा सत्त्वाविष्टाः सुरादयः न सन्निकृष्टा इत्यन्वयः । उद्बद्धवैरेण दृढवैरेण या भक्तिस्तया । केचन शिशुपालादयः । कामतो भक्त्या गोप्यादयः । कथंभूते त्वयि । शास्त्रं वेदादिग्रन्थ एव शरीरं प्रतिमा यस्य तस्मिन् । 'शास्त्रं ग्रन्थनिदेशयोः' इति यादवः । अत एव श्रीभागवतं लक्ष्यीकृत्य स्कान्देऽप्युक्तम् । तेनेयं वाङ्मयी मूर्तिः प्रत्यक्षा वर्तते हरेः इति ॥४१॥४२॥४३॥ इदमिति निर्गुणरूपतः इत्थमिति सगुणरूपतश्च मायां न विदन्ति योगेशा नारदादयोऽपि कुतो वयं जानीमः ॥४४॥ तत् तथा नः प्रसीद यथा अहं गृहान्धकूपात् निष्क्रम्य शान्तः सन् एक एव चरामि उत अपि सर्वसखैः भक्तैः सह विचरामीत्यन्वयः । निरपेक्षैः विमृग्यं यत् युष्मत्पादारविन्दं तदेव धिषणमाश्रयः तस्मादन्यत् यत् गृहं तदेव अन्धकूपस्तस्मात् विनिष्क्रम्य । कथंभूतः सन् । विश्वस्य शरणं रक्षितारो ये वृक्षास्तेषामङ्घ्रिमूलेषु पतितैः फलादिभिः प्राप्ता जीविका येन स तथाभूतः सन् ॥४५॥ ईशितव्याः सेवका अस्मदादयस्तेषामीश । नोऽस्मान् शाधि आज्ञापय । यत् त्वदादिष्टमनुतिष्ठन् चोदनाया विधिनिषेधरूपायाः सकाशात् विमुच्यते ॥ ४६ ॥ प्रथमेऽन्तरे स्वायम्भुवमन्वन्तरे ऊर्णायां कलायां पत्न्यामासन् अस्या एव नामान्तरम् । ते देवा सुतां यभितुं मैथुनीकर्तुमुद्यतं कं ब्रह्माणं वीक्ष्य जहसुः ॥ ४७ ॥ तेनेति युग्मम् । तेन अवद्यकर्मणा निन्दितकर्मणा आसुरीं योनिमगमन् । ते योगमायया नीताः सन्तः देवक्या उदरे जाताः ते च कंसेन विहिंसिताः तान् आत्मजान् सा देवकी शोचति । इमे संमुखस्थाः ते अन्तिके अध्यासते तिष्ठन्ति ॥ ४८ ॥ ४९ ॥ इतः स्थानात् । लोकं देवलोकम् । विज्वराः सन्तापरहिताः । ज्वर संतापे धातुः[2] ॥ ५० ॥ स्मरेण सहित उद्गीथः इति मध्यमपदलोपी समासः । स्मरस्यैव पूर्वं कीर्ति-

१. 'दैवेच्छापि यदृच्छा स्यात्' इति हलायुधः ।
२. शापात् उपहासलक्षणपापात् । 'शापः पापाक्रोशे' इति निरुक्तिः ।

स्मरोद्गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृद् घृणी । षडिमे मत्प्रसादेन पुनर्यास्यन्ति सद्गतिम्॥५१॥
इत्युक्त्वा तान् समादाय इन्द्रसेनेन पूजितौ । पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम् ॥५२॥
तान् दृष्ट्वा बालकान् देवी पुत्रस्नेहस्नुतस्तनी । परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥
अपाययत् स्तनं प्रीता सुतस्पर्शपरिप्लुता । मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥५४॥
पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः । नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥५५॥
ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम् । मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम् ॥५६॥
तं दृष्ट्वा देवकी देवी मृतागमननिर्गमम् । मेने सुविस्मिता मायां कृष्णस्य रचितां नृप ॥५७॥
एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः । वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत ॥५८॥

सूत उवाच

य इदमनुशृणोति श्रावयेद् वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ।
जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥५९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे मृताग्रजानयनं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

मानिति नाम ॥ ५१ ॥ इन्दुसेनेन बलिना । मातुः मात्रे । अयच्छतां ददतुः ॥५२॥ पुत्रस्नेहेन स्नुतौ प्रस्रवन्तौ स्तनौ यस्याः सा । देवी देवकी अभीक्ष्णशः मुहुर्मुहुः ॥५३॥ परिप्लुता जाताह्लादा ॥ ५४ ॥ अमृतं मोक्षत्वापादकम् । नारायणस्य अङ्गस्पर्शेन प्रतिलब्धं पुनः प्राप्तम् आत्मज्ञानं स्वदेवत्वलक्षणं यैस्ते ॥ ५५ ॥ ते स्मरादयः पुत्राः मिषतां पश्यतां सताम् । धाम देवलोकम् ॥५६॥ मृतानामागमनं निर्गमनं च । मायां लीलाम् ॥ ५७ ॥ वीर्याणि चरित्राणि ॥ ५८ ॥ व्यासपुत्रैः वर्णितं मुरारेः चरितं यः पुमान् शृणुयात् अथवा श्रावयेत् वर्णयेत् स भगवति स्थिरचित्तः सन् तस्य क्षेमं मङ्गलमयं धाम वैकुण्ठं यातीत्यन्वयः । अमृतं मोक्षसुखं कीर्तौ यस्य । कथंभूतं चरितम् । अलं निःशेषं यथा स्यात्तथा जगतामघं भिनत्तीति तथा । तद्भक्तानां तु सत्कर्णपूरं श्रेष्ठं कर्णाभरणं परमसुखावहम् । पुत्रैरिति बहुवचनमादरार्थे । अमृतं मृत्युमयनिवर्तिका कीर्तिर्यस्येति वा ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्धे गूढार्थदीपिन्यां पञ्चाशीतितमोऽध्यायः॥८५॥

## अथ षडशीतितमोऽध्यायः

राजोवाच

ब्रह्मन् वेदितुमिच्छामः स्वसारं रामकृष्णयोः । यथोपयेमे विजयो या ममासीत् पितामही ॥१॥

---

षडशीतितमे जिष्णुः सुभद्रामहरद् बलात् ।
चक्रे चानुग्रहं कृष्णो मैथिलश्रुतदेवयोः ॥१॥

विजयोऽर्जुनः । उपयेमे विवाहितवान् ॥ १ ॥ तीर्थयात्रायाम्[1] । पृथ्वीं पर्यटन् प्रभासक्षेत्रं गतः ।

---

१. ब्राह्मणधनं रक्षितुमिच्छया युधिष्ठिरद्रौपदीगृहान्तर्गतधनुर्ग्रहणार्थं गतस्यार्जुनस्य पूर्वप्रतिज्ञातद्वादशवार्षिकतीर्थयात्रा प्राप्तेति स्फुटं महाभारते तदनुसारेणेदं बोध्यम् ।

श्रीशुक उवाच

अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः । गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥२॥
दुर्योधनाय रामस्तां दास्यतीति न चापरे । तल्लिप्सुः स यतिर्भूत्वा त्रिदण्डी द्वारकामगात् ॥३॥
तत्र वै वार्षिकान् मासानवात्सीत् स्वार्थसाधकः । पौरैः सभाजितोऽभीक्ष्णं रामेणाजानता च सः ॥४॥
एकदा गृहमानीय आतिथ्येन निमन्त्र्य तम् । श्रद्धयोपाहृतं भैक्ष्यं बलेन बुभुजे किल ॥५॥
सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् । प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥६॥
सापि तं चकमे वीक्ष्य नारीणां हृदयंगमम् । हसन्ती व्रीडितापाङ्गी तन्न्यस्तहृदयेक्षणा ॥७॥
तां परं समनुध्यायन्नन्तरं प्रेप्सुरर्जुनः । न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥८॥
महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम् । जहारानुमतः पित्रोः कृष्णस्य च महारथः ॥९॥
रथस्थो धनुरादाय शूरांश्चारुन्धतो भटान् । विद्राव्य क्रोशतां स्वानां स्वभागं मृगराडिव ॥१०॥
तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः । गृहीतपादः कृष्णेन सुहृद्भिश्चान्वशाम्यत ॥११॥
प्राहिणोत् पारिबर्हाणि वरवध्वोर्मुदा बलः । महाधनोपस्करेभरथाश्वनरयोषितः ॥१२॥

श्रीशुक उवाच

कृष्णस्यासीद् द्विजश्रेष्ठः श्रुतदेव इति श्रुतः । कृष्णैकभक्त्या पूर्णार्थः शान्तः कविरलम्पटः ॥१३॥
स उवास विदेहेषु मिथिलायां गृहाश्रमी । अनीहयाऽऽगताहार्यनिर्वर्तितनिजक्रियः ॥१४॥
यात्रामात्रं त्वहरहर्दैवादुपनमत्युत । नाधिकं तावता तुष्टः क्रियाश्चक्रे यथोचिताः ॥१५॥

---

तत्र मातुलकन्यां सुभद्रां रामो दुर्योधनाय वसुदेवादयस्तु तस्मै दातुं नेच्छन्तीति जनश्रुतिमशृणोत् । तल्लिप्सुः तां लब्धुमिच्छुः ॥ २ ॥ ३ ॥ तत्र द्वारकायाम् वै एवार्थे । स्वार्थं स्वविवाहं साधयितुमिच्छतीति गर्भितसन्नन्तः सभाजितः सत्कृतः । अप्यर्थे चकारः । अजानता रामेणापि ॥ ४ ॥ तमर्जुनम् । बलेन श्रद्धया उपानीतं भैक्ष्यं भिक्षान्नं बुभुजे ॥ ५ ॥ सोऽर्जुनः । तत्र गृहे । महतीं प्राप्तकिशोरावस्थाम् । वीराणां मनो हरतीति ताम् । प्रीत्या उत्फुल्ले विकसिते लोचने यस्य सः । भावेन रत्यभिप्रायेण क्षुब्धं चञ्चलं मनो दधे मनश्चकार ॥६॥ सापि कन्यापि तं चकमे कामयामास । व्रीडितौ लज्जायुक्तौ अपाङ्गौ कटाक्षौ यस्याः सा । तस्मिन्नेव न्यस्तं हृदयमीक्षणे च यया सा ॥ ७ ॥ परं केवलं तां कन्यामेव ध्यायन् अन्तरं हर्तुमवसरं प्रेप्सुः शं न लेभे इत्यन्वयः । कुतः । कामेन भ्रमत् अस्थिरं चित्तं यस्य सः ॥ ८ ॥ महत्यामिति युग्मम् । महारथोऽर्जुनः धनुरादाय रथस्थः सन् दुर्गात् प्राकारात् निर्गतां तां कन्यां जहारेति द्वयोरन्वयः । यथा मृगराट् सिंहः स्वभागं हरति तद्वत् । किं कुर्वतां स्वानां यदूनां क्रोशतां शपतां सताम् । किं कृत्वा । आ सर्वतो रुन्धतः शूरान् विद्राव्य पलायितान् कृत्वा ॥ ९ ॥ १० ॥ तत् हरणम् ॥ ११ ॥ बलः पारिबर्हाणि कन्यादेयद्रव्याणि प्राहिणोत् प्रेषयामास तथा महाधनोपस्काराः अनर्घ्यसामग्र्यः इभादयश्च तान् । नराः दासाः तान् योषितः दासीश्च प्राहिणोत् प्रेषयामास ॥ १२ ॥ अत्र शुक उवाचेति पुनरुक्तिः कथान्तरापेक्षया । कृष्णस्य कश्चित् श्रुतदेवो नाम भक्तः आसीत् । श्रुतो विख्यातः । अलम्पटः अनासक्तः ॥ १३ ॥ विदेहो देशः तत्रापि मिथिलायां नगर्याम् । कथंभूतः । अनीहया अनुद्योगेनैव आगतं यत् आहार्यं भोज्यं तेन निर्वर्तिता सम्पादिता निजा क्रिया भोजना-च्छादनादिरूपा नित्यनैमित्तिकी वा येन सः ॥ १४ ॥ अहरहः प्रतिदिनं यात्रामात्रं देहनिर्वाहमात्रं उपनमत्येव

तथा तद्राष्ट्रपालोऽङ्ग बहुलाश्व इति श्रुतः । मैथिलो निरहम्मान उभावप्यच्युतप्रियौ ॥१६॥
तयोः प्रसन्नो भगवान् दारुकेणाहृतं रथम् । आरुह्य साकं मुनिभिर्विदेहान् प्रययौ प्रभुः ॥१७॥
नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः । अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥१८॥
तत्र तत्र तमायान्तं पौरा जानपदा नृप । उपतस्थुः सार्घ्यहस्ता ग्रहैः सूर्यमिवोदितम् ॥१९॥

आनर्तधन्वकुरुजाङ्गलकङ्कमत्स्यपाञ्चालकुन्तिमधुकेकयकोसलार्णाः ।
अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥२०॥
तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन् ।
शृण्वन् दिगन्तधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् ॥२१॥

तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप । अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः ॥२२॥
दृष्ट्वा त उत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः । कैर्धृताञ्जलिभिर्नेमुः श्रुतपूर्वांस्तथा मुनीन् ॥
स्वानुग्रहाय सम्प्राप्तं मन्वानौ तं जगद्गुरुम् । मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥२४॥
न्यमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजैः । मैथिलः श्रुतदेवश्च युगपत् संहताञ्जली ॥२५॥
भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया । उभयोराविशद् गेहमुभाभ्यां तदलक्षितः ॥२६॥

---

मिलत्येव । उत एवार्थे । अधिकं नोपनमति न च इच्छति ॥ १५ ॥ अङ्ग हे राजन् । श्रुतः विख्यातः । मिथिलस्य जनकस्य वंशे भवः मैथिलः ॥ १६ ॥ तयोः प्रसन्नः सन् भगवान् मुनिभिः सह विदेहान् प्रययौ इत्यन्वयः । किं कृत्वा । दारुकेण सारथिना आहृतमानीतं रथमारुह्य ॥ १७ ॥ कृष्णो व्यासः । रामः परशुरामः । अहं शुकः । आदिना भृग्वादयः एतेऽपि प्रययुरिति व्यत्ययेनान्वयः ॥१८॥ तत्र तत्र मार्गे आयान्तं तं श्रीकृष्णं सर्वे उपतस्थुः पूजयामासुः ॥ १८ ॥ अर्घ्यसहिता हस्ता येषां ते । अत्र यकारघटितः पाठः । पौरा नागरिकाः । जानपदा अन्यदेशीयाः । ग्रहैः गुरुशुक्रादिभिः सह उदितं सूर्यं यथा जनाः पूजयन्ति तद्वत् ॥ १९ ॥ आनर्तादि[1] देशवासिन्यः नरो नार्यश्च अन्यदेशीयाश्च तस्य भगवतः मुखसरोजं दृशिभिः पपुः ददृशुरित्यन्वयः । कथंभूतम् । उदारः आकर्षकः हासो यस्मिन् स्निग्धमीक्षणं च यस्मिन् तच्च तच्च । अर्णोऽपि कश्चन देशः । हे नृप ॥२०॥ त्रिलोकगुरुः भगवान् तेभ्यो नृभ्य[2] अर्थदृशं तत्त्वज्ञानं तत्फलं क्षेमं भाविन मोक्षं च यच्छन् सुरैः गीतं स्वयशः शृण्वन् विदेहान् अगादित्यन्वयः । कथंभूतं यशः । दिगन्तान् दिग्भागान् धवलयति प्रकाशयतीति तथा । पुनश्च । अशुभघ्नं महापातकनाशनम् । कथंभूतेभ्यः नृभ्यः । स्ववीक्षणेन कृपादृष्ट्यैव विनष्टतमिस्रा विनष्टाज्ञाना दृक् बुद्धिः येषां तेभ्यः ॥ २१ ॥ ते मैथिलाः अच्युतं प्राप्तमाकर्ण्य मुदिताः सन्तः तस्मै तं पूजयितुमभीयुः संमुखं जग्मुरित्यन्वयः । कथंभूताः । अर्ह्यतेऽमेनेति अर्हणं पूजनद्रव्यं फलपुष्पादि गृहीतमर्हणं पाणौ यैस्ते ॥ २२ ॥ ते तं कृष्णं तथा श्रुतपूर्वान् मुनीश्च दृष्ट्वा कैः शिरोभिः नेमुरित्यन्वयः । धृतो बद्धोऽञ्जलिः येषु तैः । कथंभूतास्ते । प्रीत्या प्रफुल्लानि विकसितानि आननानि आशयाः अन्तःकरणानि च येषां ते ॥ २३ ॥ तं सम्प्राप्तं मन्वानौ तौ मैथिलः श्रुतदेवश्च पादयोः पेततुः ॥ २४ ॥ दशार्हवंशजत्वात् दाशार्हं श्रीकृष्णं युगपत् सहैव आतिथ्येन न्यमन्त्रयेतां भोजनार्थं प्रार्थयताम् । संहताञ्जली बद्धाञ्जली सन्तौ ॥ २५ ॥ तत् निमन्त्रणम् अभिप्रेत्य स्वीकृत्य उभाभ्यां रूपाभ्यां गेहमाविशत् । ताभ्यामलक्षितः सन् ॥ २६ ॥ श्रोतुमिति त्रयम् । महामना

---

१. 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायेन । २. 'पुमान् स्त्रिया' इत्येकशेषात् नृभ्यः नारीभ्यश्चेत्यर्थः ।

श्रोतुमप्यसतां दूरात् जनकः स्वगृहागतान् । आनीतेष्वासनाग्र्येषु सुखासीनान् महामनाः ॥२७॥
प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः । नत्वा तदङ्घ्रीन् प्रक्षाल्य तदपो लोकपावनीः ॥२८॥
सकुटुम्बो वहन् मूर्ध्ना पूजयांचक्र ईश्वरान् । गन्धमाल्याम्बराकल्पधूपदीपार्घ्यगोवृषैः ॥२९॥
वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् । पादावङ्कगतौ विष्णोः संस्पृशञ्छनकैर्मुदा ॥३०॥

राजोवाच

भवान् हि सर्वभूतानामात्मा साक्षी स्वदृग् विभो । अथ नस्त्वत्पदाम्भोजं स्मरतां दर्शनं गतः॥
स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान् । यदात्थैकान्तभक्तान्मे नानन्तः श्रीरजः प्रियः ॥३२॥
को नु त्वच्चरणाम्भोजमेवंविद् विसृजेत् पुमान् । निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः॥
योऽवतीर्य यदोर्वंशे नृणां संसरतामिह । यशो वितेने तच्छान्त्यै त्रैलोक्यवृजिनापहम् ॥३४॥
नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे । नारायणाय ऋषये सुशान्तं तप ईयुषे ॥३५॥
दिनानि कतिचिद् भूमन् गृहान् नो निवस द्विजैः । समेतः पादरजसा पुनीहीदं निमेः कुलम् ।३६।
इत्युपामन्त्रितो राज्ञा भगवाँल्लोकभावनः । उवास कुर्वन् कल्याणं मिथिलानरयोषिताम् ॥३७॥
श्रुतदेवोऽच्युतं प्राप्तं स्वगृहाञ्जनको यथा । नत्वा मुनीन् सुसंहृष्टो धुन्वन् वासो ननर्त ह॥३८॥

---

जनकः आसनेषु आसीनान् नत्वा तदङ्घ्रीन् प्रक्षाल्य तदपो मूर्ध्ना वहन् धारयन् ईश्वरान् समर्थान् तान् गन्धमाल्यादिभिः पूजयाञ्चक्रे इति त्रयाणामेकान्वयः । कथंभूतान् । असतामभक्तानां श्रोतुमपि दूरात् दूरे वर्तमानान् । जनकः कथंभूतः । उद्धर्षम् उत्पन्नहर्षं हृदयं यस्य अस्रैः आविले आर्द्रे ईक्षणे नेत्रे यस्य स चासौ स च तथा बहुव्रीहिगर्भितकर्मधारयः । ईश्वरश्च ईश्वराश्च तदंशा मुनयश्च इत्येकशेषः । यद्वा । ईश्वरो विद्यते येषु ते ईश्वराः । मत्वर्थीयोऽच् प्रत्ययः । ईश्वरसहितानित्यर्थः । आकल्पो भूषणम् । गोवृषैरिति मधुपर्काङ्गत्वेनोक्तम् । दर्शनमात्रं विहितम् । गोषु वाक्षु वृषैः श्रेष्ठैः वेदमन्त्रैरिति वा ॥ २७ ॥ २८ ॥ २९ ॥ प्रीणन्निति गर्भितण्यन्तः । वाचा प्रीणयन् प्रसादयन् अङ्कगतौ पादौ संस्पृशन् संमर्दयन् तानाहेत्यन्वयः ॥ ३० ॥ आत्मा अन्तर्यामी । स्वदृक् स्वप्रकाशस्वरूपः । स्वेषु भक्तेषु दृक् कृपादृष्टिर्यस्येति वा । अथ अतः स्मरतां नोऽस्माकं दर्शनं दृष्टिविषयं गतः ॥३१॥ यत् आत्थ ब्रवीषि तत् स्ववचः ऋतं सत्यं कर्तुमस्मद्दृग्गोचरो जातः । किं तत् । एकान्तभक्तात् ज्ञानिनः अन्यः प्रियो न अनन्तः बलरामः बन्धुरपि श्रीः भार्याऽपि अजो ब्रह्मा पुत्रोऽपि न । एकस्मिन्नन्तोऽध्यवसायो यस्याः सा एकान्ता सा चासौ भक्तिः तद्वान् एकान्तभक्तः[1] ज्ञानीत्यर्थः ॥ ३२ ॥ एवंवित् उक्तार्थवित् को नु विसृजेत् परित्यजेत् न कोऽपीत्यन्वयः । यतस्त्वं तेषामात्मानमपि ददासि वशीभूतो भवसि ॥ ३३ ॥ योऽवतीर्य संसरतां नृणां तच्छान्त्यै संसारनिवृत्तये यशो वितेने तस्मै तुभ्यं नमः इत्युत्तरेणान्वयः । त्रैलोक्यस्य त्रिलोकस्य वृजिनं पापं दुःखं वा अपहन्तीति तथा । स्वार्थे ष्यम् ॥ ३४ ॥ सुशान्तं परानुद्वेजकं तपः ईयुषे कुर्वते ते नमः । अकुण्ठा कालादिना अप्रतिहता मेधा ज्ञानशक्तिर्यस्य तस्मै ॥ ३५ ॥ हे भूमन् अपरिच्छिन्नमहिमन् । द्विजैः समेतः नोऽस्माकं गृहान् गृहेषु निवस निवासं कुरु इदं कुलं च पुनीहि ॥ ३६ ॥ उपामन्त्रितः प्रार्थितः । लोकान् भावयति पालयतीति तथा ॥३७॥ यथा जनकः तथा श्रुतदेवोऽपि स्वगृहान् प्रति प्राप्तं कृष्णं नत्वा ननर्त ह हर्षेण । वासो धुन्वन् ऊर्ध्वाधश्चालयन् अन्तर्भावितण्यर्थः ॥ ३८ ॥ स श्रुतदेवः आनीतेषु तृण-

---

१. प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । इति गीतोक्तेः ।

तृणपीठबृसीष्वेतानानीतेषूपवेश्य सः । स्वागतेनाभिनन्द्याङ्घ्रीन् सभार्योऽवनिजे मुदा ।।३९।।
तदम्भसा महाभाग आत्मानं सगृहान्वयम् । स्नापयांचक उद्धर्षो लब्धसर्वमनोरथः ।।४०।।

फलार्हणोशीरशिवामृताम्बुभिर्मृदा सुरभ्या तुलसीकुशाम्बुजैः ।
आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्धनान्धसा ।।४१।।

स तर्कयामास कुतो ममान्वभूद् गृहान्धकूपे पतितस्य संगमः ।
यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ।।४२।।

सूपविष्टान् कृतातिथ्यान् श्रुतदेव उपस्थितः । सभार्यस्वजनापत्य उवाचाङ्घ्र्यभिमर्शनः ।।४३।।

श्रुतदेव उवाच

नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः । यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ।।४४।।
यथा शयानः पुरुषो मनसैवात्ममायया । सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ।।४५।।
शृण्वतां गदतां शश्वदर्चतां त्वाभिवन्दताम् । नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ।।४६।।
हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् । आत्मशक्तिभिरग्राह्योऽप्यन्त्युपेतगुणात्मनाम् ।।४७।।

नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ।
सकारणाकारणलिङ्गमीयुषे स्वमाययासंवृतरुद्धदृष्टये ।।४८।।

---

पीठादिषु एतान् उपवेश्य अभिनन्द्य च तेषामङ्घ्रीन् अवनिनिजे[1] प्रक्षालयामासेत्यन्वयः । तृणेषु तन्निर्मित कटेषु पीठेषु बृषीसु[2] कुशासनेषु ।। ३९ ।। तदम्भसा तज्जलेन आत्मानं स्नापयाञ्चक्रे । गृहं गृहिणी अन्वयः पुत्रादिः ताभ्यां सहितम् । उत् उत्कटः हर्षो यस्य सः ।। ४० ।। स फलादिभिः तम् आराधयामासेत्यन्वयः । फलैः आमलकादिभिः । अर्हणेन चन्दनादिना उशीरैः खसवासितैः शिवैः अमृतवत्स्वादुभिः तीर्थजलैः । सुरभ्या कस्तूरीप्रमुखया । यथोपपन्नया अनायासेन प्राप्तया सपर्यया । सत्त्वविवर्धनं सात्विकं यत् अन्धः अन्नं नीवारादि तेन ।। ४१ ।। अन्धकूपे पतितस्य मम कृष्णेन अस्य आत्मनो मूर्तेः निवासभूतैः[3] भूसुरैश्च यः सङ्गमः सः कुतः अभूत् इति तर्कयामासेत्यन्वयः । अनु विस्मये । कथंभूतैः भूसुरैः । सर्वतीर्थानामास्पदं पादरेणुः येषां तैः ।।४२।। भार्यादिभिः सहितः श्रुतदेवः तान् मुनीन् उपस्थितः समीपे उपविष्टः सन् इदमुवाचेत्यन्वयः । कृतमातिथ्यम् अतिथिसत्कारो येषां तान् । कृष्णस्य अङ्घ्री अभिमृशति सम्मर्दयतीति तथा पादसंवाहनं कुर्वन् ।।४३ ।। परमपूरुषो भवान् नोऽस्माकम् अद्यैव दर्शनं दृष्टिगोचरं न प्राप्तः किन्तु यर्हि शक्तिभिः रजआदिभिः इदं जगत् सृष्ट्वा आत्मसत्तया चिच्छक्त्या प्रविष्टस्तदैव प्राप्तः ।।४४।। यथा एक एव शयानः पुरुषः आत्ममायया स्वाविद्यया मनसा हेतुभूतेन परं स्वाप्नं लोकं सृष्ट्वा तदनुविश्य नाना अवभासते तथा त्वमपि नाना अवभासि ।। ४५ ।। शश्वदिति पदं प्रत्येकं सम्बध्यते । त्वा त्वाम् अर्चतां शृण्वतां नृणामन्तर्हृद्येव भासि मम तु नेत्रगोचरस्त्वमित्यहो भाग्यमित्यर्थः ।। ४६ ।। कर्मभिः सकामैः दानादानादिभिः बहिर्मुखचेतसाम् अतिदूरस्थः । उपेतगुणः प्राप्त-कीर्तनादिसंस्कारः आत्मा अन्तः करणं येषां तेषां भक्तानां तु अन्ति समीपे वर्तसे । कथभूतः । आत्मशक्तिभिः जीवोपाधिभिः रागद्वेषादिभिः आग्राह्योपि ।। ४७ ।। हे स्वमायया असंवृत अलुप्तैश्चर्य ते तुभ्यं नमोऽस्तु । कथभूताय । अध्यात्मविदां ज्ञानिनां परात्मने परतत्त्वरूपेण मोक्षप्रदाय । अनात्मने देहाभिमानिने जीवाय तु

---

मूले अवनिजे । अभ्यासलोप आर्षः । २. 'वृतिनामासनं बृषी' इत्यमरः । ३. 'कित निवासे' धातुः ।

स त्वं शाधि स्वभृत्यान् नः किं देव करवाम हे। एतदन्तो नृणां क्लेशो यद् भवानक्षिगोचरः॥४९॥

श्रीशुक उवाच

तदुक्तमित्युपाकर्ण्य भगवान् प्रणतार्तिहा। गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह॥५०॥

श्रीभगवानुवाच

ब्रह्मंस्तेऽनुग्रहार्थाय सम्प्राप्तान् विद्ध्यमून् मुनीन्। संचरन्ति मया लोकान् पुनन्तः पादरेणुभिः॥

देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः। शनैः पुनन्ति कालेन तदप्यर्हत्तमेक्षया॥५२॥

ब्राह्मणो जन्मना श्रेयान् सर्वेषां प्राणिनामिह। तपसा विद्यया तुष्टया किमु मत्कलया युतः॥५३॥

न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम्। सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम्॥५४॥

दुष्प्रज्ञा अविदित्वैवमवजानन्त्यसूयवः। गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः॥५५॥

चराचरमिदं विश्वं भावा ये चास्य हेतवः। मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया॥५६॥

तस्माद् ब्रह्मऋषीनेतान् ब्रह्मन् मच्छ्रद्धयार्चय। एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः॥

श्रीशुक उवाच

स इत्थं प्रभुणाऽऽदिष्टः सहकृष्णान् द्विजोत्तमान्। आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम्॥

एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान्। उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात्॥५९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे श्रुतदेवानुग्रहो नाम षडशीतितमोऽध्यायः॥ ८६॥

---

स्वात्मनः सकाशात् विमुक्तः समर्पितः मृत्युलोकः संसारो येन तस्मै। पुनश्च। सकारणं महदादिकार्यम् अकारणं प्रकृतिः तदुभयलिङ्गमुपाधिम् ईयुषे प्राप्तवते। पुनश्च। रुद्धा अभक्तानामावृता दृष्टिः ज्ञानिशक्तिर्येन तस्मै। यद्वा। स्वमायया स्वस्य असंवृता अन्येषां रुद्धा दृष्टिर्येन तस्मै इत्येकं पदम्॥ ४८॥ स एवंभूतस्त्वं नोऽस्मान् भृत्यान् अनुशाधि आज्ञापय यत् यदा अक्षिगोचरो भवेत् एतत्पर्यन्त एव क्लेशो भवति ते सेवायामिति योज्यम्॥ ४९॥ तदुक्तं श्रुतदेवोक्तम्। प्रणतानामार्ति पीडां हरतीति तथा। ह हर्षे॥ मया हृदिस्थेन हेतुभूतेन लोकान् पुनन्तः संचरन्ति तानेतान् तव अनुग्रहार्थमेव प्राप्तान् जानीहि॥ ५१॥ ते देवादयः शनैः चिरकालसेवनेन पुनन्ति एते तु सद्य एव किञ्च देवादिषु यच्छोधनसामर्थ्यं तदपि अर्हत्तमानां ब्राह्मणानां मोक्षया अनुग्रहदृष्ट्यैव न स्वतः। अत्र अर्हतः कुलवृद्धाः अर्हत्तरा देवा अर्हत्तमा ब्राह्मणा इति तृतीयकोटौ तमब्घटितप्रयोगः॥ ५२॥ जन्मना श्रेमान्। कुतः। तपसा 'श्रेष्ठः' विद्यया श्रेष्ठतरः 'तुष्टया 'श्रेष्ठतमः' मत्कला मदुपासना[1] ज्ञानसाधनं तया युतः श्रेयानिति किमुत वक्तव्यमिति चतुर्थकोटौ ईयसुन् प्रत्ययः॥५३॥ किं बहुना ब्राह्मणात् अन्यत् एतत् रूपमपि मे दयितं प्रियं नास्ति। कुतः। सर्वेति योज्यम्॥ ५४॥ एवं मन्निश्चयम्ः असूयवः ब्राह्मणेषु दोषदर्शिनः अवजानन्ति तिरस्कुर्वन्ति। अर्चा प्रतिमा आदिपदेन तीर्थं तत्र इज्यदृष्टयः पूज्यबुद्धयः॥५५॥ इदं विश्वं तथा अस्य ये हेतवो महदादयः एतानि सर्वाणि मद्रूपाणि इति चेतसि आधत्ते। कया। मदीक्षया मद्दृष्टया॥ ५६॥ यतो विप्रार्चनमेव मदर्चनं तस्माद्धेतोः। एवम् अद्धा साक्षात् अहम र्चितोऽस्मि अन्यथा न॥ ५७॥ आदिष्टः श्रुतदेवो मैथिलश्च तान् सर्वान् आराध्य संपूज्य सद्गतिं भगवन्तं प्रापतुः वान्॥ ५८॥ भक्तेषु भक्तिमान् प्रीतिमान् भगवान् स्वभक्तयोः सतां वेदानां मार्गं ब्रह्मपरत्वमुपदिश्य कतिपयदिनानि मिथिलायामुषित्वा पुनः द्वारवतीमगात्॥ ५९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे गूढार्थदीपिन्यां षडशीतितमोऽध्यायः॥८६॥

---

१. 'कला ज्ञानप्रबोधनम्' इत्युक्तेः।

# अथ सप्ताशीतितमोऽध्यायः

परीक्षिदुवाच

**ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः। कथं चरन्ति श्रुतयः साक्षात् सदसतः परे ॥१॥**

श्रीशुक उवाच

**बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः। मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥२॥**

हे ब्रह्मन्! निर्गुणे गुणातीते शब्दातीते ब्रह्मणि गुणवृत्तयः शब्दात्मिकाः श्रुतयः त्रैगुण्यविषया वेदाः साक्षात् अव्यधानेन अभिधावृत्त्या कथं चरन्ति कथं प्रवर्तन्ते? शब्दात्मिकाः श्रुतयः शब्दातीतं ब्रह्म कथं प्रतिपादयन्तीत्यर्थः इति मे संशयं छिन्धीति वाक्यशेषः। कथम्भूते ब्रह्मणि। अनिर्देश्ये इदन्तया निर्देष्टुमशक्ये जातिद्रव्यगुणक्रियासु मध्ये ब्रह्म किमपि भवितुं नार्हतीति तस्यानिर्देश्यत्वम्। 'यत्तदद्रश्यम्' इति श्रुतेः। पुनश्च सदसतः स्थूलसूक्ष्मरूपात् कार्यकारणरूपाद्वा प्रधानात् प्रकृतेः परेऽसङ्गे। 'अस्थूलमनणु' इति श्रुतेः। अत्र अनिर्देश्यत्वे निर्गुणत्वं हेतुः, निर्गुणत्वे च सदसतः परत्वं हेतुः। गुणेषु सत्त्वादिषु तत्कार्येषु वा वृत्तिः प्रवृत्तिर्यासां ताः गुणवृत्तयः। अत्रेदमवधेयम् पूर्वाध्यायान्ते सता वेदानां मार्गं ब्रह्मप्रतिपादनपरत्वमादिश्य भगवानगादित्युक्तं तत्र श्रुतीनां शब्दात्मकत्वात्, शब्दानां च मुख्यालक्षणागौणीभेदेन त्रैवृत्तिकत्वात् मुख्याया अपि रूढियोगभेदेन; द्वैविध्याच्च रूढिः स्वरूपेव जात्या गुणेन वा निर्देशयोग्ये वस्तुनि डित्थः गौः शुक्लः इत्यादौ क्रमेण शब्दार्थयोः सङ्केतेन प्रवर्तते। ब्रह्मणि चाकारजातिगुणाभावान्न रूढ्या श्रुतीनां तत्र प्रवृत्तिः। योगवृत्तिश्च प्रकृतिप्रत्ययार्थयोर्योगेन 'पाचकः' 'पंकजम्' ओपगवः इत्यादौ प्रवर्तते। लक्षणा च 'गङ्गायां घोषः' इत्यादौ 'मुख्यार्थबाधे गौणार्थकल्पनमिति लक्षणात् सम्बन्धिविषयत्वेन तीरे प्रवर्तते। ब्रह्मणश्च सदसतः परत्वेनासङ्गत्वान्न तयोरपि तत्र प्रवृत्तिः। गौणी च सिंहे वर्तमानक्रौर्यादिगुणानां माणवके दृश्यमानत्वात् 'सिंहो माणवकः' इत्यत्र प्रवर्तते। ब्रह्मणि च न कस्यापि धर्मस्य सत्त्वान्न गौण्या अपि तत्र प्रवृत्तिः। एवञ्च सर्वविधवृत्त्यतीते निर्गुणे ब्रह्मणि गुणवृत्तयः श्रुतयः साक्षात् कथं चरन्तीति राज्ञः प्रश्नाभिप्राय इति संक्षेपः ॥१॥

उत्तरमाह—बुद्धीति। प्रभुः जनानां जीवानां मात्राद्यर्थं क्रमेण अर्थधर्मकाममोक्षार्थं तत्साधनभूतान् बुद्ध्यादीन् असृजत् इत्यन्वयः। बुद्धिं मात्रार्थं विषयभोगार्थम्; इन्द्रियाणि भवार्थं भवो जन्म तत्प्रभृतिधर्मसम्बन्धिकर्मकरणार्थं मन आत्मने आत्मलोकभोगार्थम्, प्राणम् अकल्पनाय मोक्षार्थं च असृजत्। यद्वा। बुद्ध्यादियुक्तान् देहान् असृजत्। नन्विदमुत्तरमपि अयुक्तमिव प्रतिभाति। क्व गच्छसीति प्रश्ने मया क्षीरान्नं भुक्तमिति वदिति चेन्न। उत्तरस्य अत्रैव गर्भितत्वात्। तथाहि प्रकर्षेण सगुणत्वेन भवति आविर्भवतीति प्रभुः सच्चिदानन्दविग्रहः सन् भगवानसृजत्। एवं योऽसृजत् तमेव श्रुतयः प्रतिपादयन्ति तात्पर्यवृत्त्या च निर्गुणमपि। वस्तुतस्तु इदमपि नोचितं मुख्यया वृत्त्या इत्येव वक्तव्यं यतः प्राकृतगुणरहितः निर्गुणः भगवान् श्रीकृष्ण एव अकारो वासुदेवस्तेन निर्देश्यश्च सदसतः प्रकृतेः परश्च तत्रैव श्रुतयः साक्षाच्चरन्तीति प्रश्नोत्तरयोः पूर्णा सङ्गतिः। यथोक्तमत्रैव 'हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः एवं सति प्राकृतबालवत् अप्राकृतबालमुकुन्दस्यापि चिक्रीडिषा सम्भवति; सा च स्वांशभूतजीवद्वारैव सम्पत्स्यते अतो जनानामित्युक्तम्। किञ्च 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इत्युक्तेर्नहि विरुद्धसृष्टिं विना जीवानां वास्तविकब्रह्मरसोपलब्धिः; रात्रिं विना दिनस्येव; अतो मात्रार्थमित्युक्तम्। मीयन्ते बुद्ध्या ज्ञायन्ते इति मात्राः अर्था

उक्तार्थमेव द्रढयितुं समाहात्म्यमितिहासमवतारयति—सैषेत्यादिनवभिः ।

सैषा ह्युपनिषद् ब्राह्मी पूर्वेषां पूर्वजैर्धृता । श्रद्धया धारयेद् यस्तां क्षेमं गच्छेदकिंचनः ॥३॥
अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् । नारदस्य च संवादमृषेर्नारायणस्य च ॥४॥
एकदा नारदो लोकान् पर्यटन् भगवत्प्रियः । सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥५॥
यो वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् । धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥६॥
तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः । परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥७॥
तस्मै ह्यवोचद् भगवानृषीणां शृण्वतामिदम् । यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥८॥

विषयाः; तदर्थम् । ताश्च मात्राः कर्मानुष्ठानं विना न स्युः; अतः भवार्थमित्युक्तम् । इन्द्रियैर्भवतीति भवः कर्म तदर्थम् । चकारो मात्राभवयोः परस्परं सम्बन्धं द्योतयतः । ततश्च कर्मफलभोगाय मनसा सह तत्र तत्र लोकेषु अतति सातत्येन गच्छतीति आत्मा; तदर्थम् आत्मार्थम् आत्मभोगार्थम् । एतेन कामभोगो दर्शितः; ततश्च तत्त्वज्ञानसहायीभूतप्राणोपासनया ईशभक्त्यैव ज्ञानवैराग्योदयेन भोगवैरस्यात् कल्पनं कल्पना माया तन्निवृत्तिसत्त्वान्मोक्षश्च घटते इत्यतोऽकल्पनायेत्युक्तम् । एवं चतुर्वर्गार्थमसृजदिति संक्षेपः । च आत्मने' इत्यत्र सन्ध्यभावो हि ऐहिकपारलौकिकविषयेषु सन्धिर्न कार्य इति द्योतनार्थम् । अग्रे सन्धिना च मोक्षे कार्य इत्यपि सूचितम् । यद्वा 'अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यते' इत्युक्तेर्नहि अध्यारोपं विना अपवादः सम्भवतीति उपाधिनिषेधद्वारैव श्रुतयो ब्रह्मणि चरन्तीत्युपाधिनिषेधार्थमेव बुद्ध्याद्युपाधीनसृजदित्युत्तरसङ्गतिः । केचित्तु कल्पनाय वासनायुक्ताय आत्मने जीवाय मात्रार्थं विषयार्थं भवार्थं कल्याणार्थं च तद्भोगमोक्षसिद्ध्यर्थमित्यर्थः । चकारद्वयं भोगमोक्षसाधनभूतौ अनुक्तौ अर्थधर्मौ समुच्चिनोतीत्याहुः ॥ २ ॥ या नारायणबुद्धिस्था सा एषा प्रश्नोत्तररूपा । यद्वा सा प्रसिद्धा एषा जय जयेत्यादि वक्ष्यमाणा । ब्राह्मी ब्रह्मप्रतिपादिका उपनिषद् रहस्यमयी विद्या । उप श्रीकृष्णसमीपं नि निश्चयेन सादयति प्रापयतीति तथाभूता । यद्वा । उपनिषद्यते प्राप्यते ब्रह्म यद्विचारेण सोपनिषत् इति निरुक्तेः । पूर्वेषां नारदादीनां पूर्वजैः सनकादिभिर्ब्रह्मादिभिर्वा धृता स्वान्तःकरणेषु । हि यस्मादेवं तस्मात् यस्तां श्रद्धया श्रवणादिना धारयेत् सोऽकिञ्चनः देहाद्युपाधिशून्यः सन् क्षेमं मोक्षं मङ्गलमयं श्रीकृष्णधाम वा प्राप्नुयात् । नास्ति किञ्चन प्रार्थनीयं यस्य सोऽकिञ्चनः विरक्तो वा । हि शब्दो हेतौ । यद्वा या पूर्वजैर्धृता सा एषा इत्यन्वयः ॥ ३ ॥ अत्र श्रुतयः कथं चरन्तीत्येतस्मिन्नर्थे श्रुतीनां ब्रह्मपरत्वे वा । ते तुभ्यं गाथां वर्णयिष्यामि । कीदृशीम् । नारायणः प्रवक्तृरूपेणान्वितो यस्यां ताम् । नारदस्य ऋषेः ऋषिवेषधरस्य नारायणस्य च संवादं संवादरूपाम् । यद्वा । तत्र गाथायामुभयोश्च यः संवादः तं वर्णयिष्यामीत्यन्वयः । नारायणः श्रीकृष्ण एवान्वितः उपक्रमोपसंहारादिषु अनुगतो यस्यां तां गाथामितिहासमिति तोषिणी । ऋषेरिति नारायणविशेषणम् क्षीरोदशायिनो व्यावृत्त्यर्थमुक्तम् । एकश्चकारः संबंधपरम्परां द्योतयति ॥ ४ ॥ एकदा भगवत्प्रियो नारदः लोकान् लोकेषु पर्यटन् सनातनमाद्यम् ऋषिं धर्मपुत्रं श्रीनारायणं द्रष्टुं तदाश्रमं बदरिकाश्रमं ययौ । भगवत्प्रिय इत्यत्र षष्ठीसमासो बहुव्रीहिर्वा ॥ ५ ॥ वै प्रसिद्धेऽस्मिन् भारतवर्षे नृणां क्षेमाय स्वस्तये भोगाय च यः तप आस्थितः आश्रित्य स्थितः तं द्रष्टुमित्यन्वयः । आकल्पाद् कल्पो ब्रह्मदिनं तदारभ्य अद्यावधि । एतच्च लोकशिक्षार्थमुक्तम् । धर्मो मद्भक्तिकृत् । ज्ञानं भगवद्विषयकम् । शमो वैराग्यं च तैरुपेतं युक्तम् ॥ ६ ॥ तत्र कलापग्रामे स्वाश्रमे तन्निवासिभिः ऋषिभिः सह उपविष्टम् आवृतं श्रीनारायणं नारदः प्रणतो भूत्वा इदमेव श्रुतयः कथञ्चरन्ती-त्येतदेव अपृच्छत् । हे कुरुद्वह परीक्षित् ! उद्वहो जन्म ॥ ७ ॥ पूर्वेषां सनन्दनादीनां यो ब्रह्मणि वेदे वादः

श्रीभगवानुवाच

स्वायम्भुव ब्रह्मसत्रं जनलोकेऽभवत् पुरा । तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥९॥
श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् । ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥१०॥
तत्र हायमभूत् प्रश्नस्त्वं मां यमनुपृच्छसि । [1]परिहारांश्च तान् सर्वान् वक्ष्येऽहं शृणु तेऽनघ॥११
तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः । अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥१२॥

सनन्दन उवाच

स्वसृष्टमिदमापीय शयानं सह शक्तिभिः । तदन्ते बोधयांचक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥१३॥
यथा शयानं सम्राजं वन्दिनस्तत्पराक्रमैः । प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥१४॥

तत्त्वजिज्ञासारूपः ब्रह्मप्रतिपादनविषयको निर्णयो वा, तदिदं तस्मै नारदाय अवोचत् अन्येषाम् ऋषीणां शृण्वतां सताम् । हीति प्रसिद्धार्थे । इदमिति लिङ्गवैषम्यं न दोषाय । 'यत्रोद्देश्यविधेयत्वं तत्रायं नियमो नहि' । रामदाराश्च सीतेयं करुणाभाजनं हरिः ॥ इति साहित्योक्तेः ॥ ८ ॥ हे स्वायम्भुव ब्रह्मपुत्र नारद ! पुरा कल्पादौ जनलोके मानसानां ब्रह्मणो मानसपुत्राणां मुनीनां सनन्दनादीनां ब्रह्मसत्रं वेदनिर्णयविषयको ज्ञानयज्ञोऽभूत् । कथम्भूतानाम् ? ऊर्ध्वरेतसां नैष्ठिकब्रह्मचारिणाम् । यत्र समाना एव साधवः वक्तृश्रोतृभावेन ब्रह्म वेदं वा मीमांसते विचारयन्ति तद् ब्रह्मसत्रम् ॥ ९ ॥ अहो मया तत्कथं न ज्ञातमित्याह—श्वेतेति । श्वेतद्वीपं क्षीरोदस्थानं त्वयि गतवति सति । भगवतोऽनिरुद्धस्य क्रीडासाधनमिति श्रीवल्लभाचार्याः । तदीश्वरमनिरुद्धं द्रष्टुम् । ब्रह्मवादः वेदः कं प्रतिपादयतीति विचारः सम्यक् प्रवृत्तः । यत्र वादे सर्वा अपि श्रुतयः शेरते निवृत्तव्यापराः सत्यः नेति नेति कृत्वा वक्तुमशक्ता अभवन्नित्यर्थः । यद्वा । ब्रह्मवादः श्रुतिनिर्णयः सुसम्पन्नः । यत्र श्रुतयः दिव्यविग्रहधारिण्यः सत्यः शेरते भगवता सह दिव्यशय्यायामिति शेषः । तत्स्पर्शसुखानुभवं चक्रुरित्यर्थः 'वयमपि ते समाः' इति वक्ष्यमाणोक्तेः तादृगिच्छासम्पन्नत्वादिति केचिदाहुः ॥ १० ॥ तत्र जनलोके । ह स्पष्टम् । अयं प्रश्नोऽभूत् यं प्रश्नं त्वं मामनुपृच्छसि अतः तान् सर्वानपि प्रश्नस्य परिहारान् उत्तराणि अहं ते वक्ष्ये त्वं शृणु । हे अनघ निर्मलमते ! अनु इत्युपसर्गेण ततः पश्चात् त्वां विना न केनापि अयं प्रश्नः कृतोऽस्तीति श्लाघा सूचिता ॥ ११ ॥ श्रुतं शास्त्रम् । तपः चित्तैकाग्रता । शीलं सुस्वभावः । स्वीया मित्राणि अरयः शत्रवः मध्यमा उदासीना उपेक्ष्याश्च तुल्यानि श्रुतादीनि येषां ते । तुल्याः स्वीयादयो येषां ते । एकं सनन्दनं प्रवचनं प्रवक्तारं चक्रुः अपरे त्रयः सनकादय शुश्रुषवः श्रोतारो बभूवुः । प्रवचनमिति कर्तरि ल्युः । यद्वा । प्रकृष्टं महत्त्वपूर्णं वचनं व्याख्यानम् उपदेशो वा यस्य तम् ॥ १२ ॥ स्वेन सृष्टमिदं विश्वं प्रलयसमये आपीय संहृत्य शक्तिभिः प्रकृत्यादिभिः रुक्मिण्यादिभिर्वा सह शयानं निद्राणमिव प्रतीयमानं परं ब्रह्म श्रीकृष्णं तदन्ते प्रलयान्ते श्रुतयः तन्निश्वासभूता वेदा बोधयाञ्चक्रुः । बोधयन्त्य इव तुष्टुवुरित्यर्थः । कैः तल्लिङ्गैः । तन्महत्त्वप्रतिपादकैर्वाक्यैः ॥ १३ ॥ अत्र दृष्टान्तः यथा अनुजीविनः सेवकाः वन्दिनः स्तुतिपाठकाश्च प्रत्यूषे प्रातःकालेऽभ्येत्य आगत्य सम्राजं चक्रवर्तिनं राजानं बोधयन्ति तद्वत् । कैः । तस्य पराक्रमा दिग्विजयादयो येषु तैः सुश्लोकैः सुमधुरपद्यैः । अनुजीविन इति वन्दिविशेषणं वा ॥ १४ ॥

१. कतिपयपुस्तकेषु अयं पाठः प्रमादाच्च्युतः प्रतिभाति पूर्वाचार्यैर्व्याख्यातत्वात् उपयुक्तत्वाच्चात्राङ्कितः ।

## अथ वेदस्तुतिः

तदेवं सर्वश्रुतीनां परब्रह्मस्वरूपश्रीकृष्णप्रतिपादने तात्पर्यं तत्र तत्र च सर्वा अपि श्रुतयः अष्टाविंशतितत्त्वजालाज्जीवराशीनुद्धर्तुं स्वस्ववर्गभेदेनाष्टाविंशतिधा भूत्वा अष्टाविंशत्या पद्यैः स्तुतिव्याजेन नानाकुमतानि खण्डयन्त्यः प्रधानमुखेन सर्वोपनिषदादिसारभूतां भक्तिमेव दर्शयन्त्यश्च आदौ श्रीकृष्णस्वरूपलक्षणमभिधाय वन्दिन इव जयोद्घोषपूर्वकमविद्यानिवृत्तिं नर्कुटकच्छन्दसा प्रार्थयन्ते—जय जयेत्यादिना ।

( श्रीकृष्णस्वरूपलक्षणपरेयम् )

श्रुतय ऊचुः

**जय जय जह्यजामजित दोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः ।**
**अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः ॥१५॥१॥**

पद्यानुवादः

समुपलब्धभगोऽसि यदात्मना जहि जयाऽजित दोषगुणामजाम् ।
स्वयमिमे नहि [1]तद्धनने क्षमा वदति ते क्षमतां श्रुतिरादितः ॥ १ ॥

---

संक्षिप्तसार्थान्वयः—हे अजित ! अगजगदोकसां स्थावरजङ्गमजीवानाम् अखिलशक्त्यवबोधक ! त्वं जय । अथ च दोषगृभीतगुणाम् अजाम् अविद्यां जहि त्वं जय । यत् यस्मात् त्वम् आत्मना स्वरूपणैव समवरुद्धसमस्तभगोऽसि; अतः निगमो वेदः ते त्वाम् अनुचरेत् प्रतिपादयेत् । कथंभूतस्य ते ? क्वचित् सर्गादौ अजया मायया सर्वदा च आत्मना स्वरूपशक्त्या च सह चरतः विहरतः ते । चरतस्ते इति शेषे कर्मणि षष्ठ्यौ चरन्तं त्वामित्यर्थः । हे अजित श्रीकृष्ण ! त्वं जय निजात्कर्षं प्रकटीकुरु । कथम् ? जीवानामजामविद्यां जहि नाशय इत्यतो जय । किञ्च हे शक्त्यवबोधक ! तेषां शक्त्युद्बोधं च कुरु इत्यतोऽपि जयेति द्विरुक्तिः साभिप्राया । यत् यस्मात् त्व तु आत्मना स्वरूपणैव समवरुद्ध-समस्तभगः आत्मनीति शेषः । समवरुद्धः समस्तो भगो येन स तथाभूतः सम्प्राप्तसमस्तैश्वर्योऽसि । कुतः ? हे अखिल ! पूर्णस्वरूप ! अतः निगमः श्रुतिसमूहः एवंविधं ते त्वामेव अनुचरेत् अनुचरति सदा सेवते प्रतिपादयतीत्यर्थः । लडर्थे लिङ् ? कथंभूतस्य ते । क्वचित् सृष्ट्यादिसमये अजया मायया बहिरङ्गशक्त्या सह चरतः चरन्तं विहरन्तम् । सर्वदा च आत्मना स्वरूपशक्त्या श्रीराधया वा सह विहरन्तं त्वाम् । चरतः ते इति कर्मणि षष्ठ्यौ संबंधद्योतनार्थे । कीदृशीमजाम् ? दोषाय ज्ञानाद्यावरणाय अभिमानप्रापणाय वा गृभीताः गृहीताः प्रकटिताः गुणा सत्त्वादयो यया ताम् । यद्वा । दोषा जीवानां दोषप्रापका गृहीता गुणा यया । दोषाय जीवानां तव भजनवैमुख्याय गृहीता गुणा ययेति वा । यद्वा । न जिताः दोषाः कामादयो यैस्तैरजितदोषैरज्ञानिभिः गृहीता भोग्यत्वेन स्वीकृता गुणाः शब्दादयो यस्या इत्येकं पदम् । अजितेत्यस्योभयथा संबंधः । कथंभूतानां जीवानाम् ? अगजगदोकसाम् । अगानि स्थावराणि जगन्ति जङ्गमानि च ओकांसि शरीराणि येषां तेषां स्थावरजङ्गमदेहवतामित्यर्थः । अखिलेत्येकं पदं वा । एतेन निर्गुणे श्रुतयः कथं चरन्तीति प्रश्नस्योत्तरमप्युक्तं भवति । तथा च निर्गुणशब्दस्य प्राकृतगुणराहित्यपरत्वाद् ब्रह्मणो जगज्जन्मादिकारणत्वोपयुक्तानन्तकल्याणगुणगणविशिष्टत्वात् सत्यज्ञानानन्दादिगुणनिधित्वाच्च सगुणश्रुतीनां निर्गुणब्रह्मप्रतिपादने न कोऽपि विरोध इति सर्वमनवद्यम् । केचित्तु जय जयेति आदरे हर्षे वा वीप्सेत्याहुः । परे तु जयति सर्वमिति व्युत्पत्त्या जयेति सम्बोधनमाहुः । गृभीतेत्यत्र हृग्रहोर्भश्छन्दसीति भकारः । इतः परं भवन्निधना इत्यन्तं सप्तभिर्दशभिश्च यतिसत्त्वान्नर्कुटकं नाम छन्दः । 'हयदशभिर्नजौ भजजला गुरु नर्कुटकम्' इति वृत्तरत्नाकरलक्षणात् ॥ १ ॥ १५ ॥

---

१. तद्धनने मायानिवारणे ।

ननु 'इन्द्रो यातोऽवसितस्य राजा' इत्यादिना इन्द्रादयः प्रतिपाद्यन्ते कथमहमिति चेदत्राहुः—बृहदिति ।

( अभेदोपासनापरेयम् )

**बृहदुपलब्धमेतदवयन्त्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदि वाऽविकृतात् ।**
**अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥१६॥२॥**

पद्यानुवादः

श्रुतिषु वर्णितमिन्द्रयमादि यत् त्वमसि शेषतया मृदि वाऽत्र सत् ।
त्वदुपगाः[1] श्रुतयोऽप्यपरा यथा क्व च न दत्तमदत्तपद भुवि ॥ २ ॥

संक्षिप्तसार्थान्वयः—हे भगवन् ! एतत् उपलब्धं दृष्टं सर्वमपि बृहद् ब्रह्म त्वमेव इति अवयन्ति ऋषयो जानन्ति अवशेषतया कुतः ? अविकृतात् । यतो ब्रह्मणः सकाशात् सर्वस्य उदयास्तमयौ भवतः । वा उपमार्थः । यथा विकृतेर्घटादेर्मृदि तद्वत् । अत ऋषयो वेदा मनोवचनाचरितं ध्यानकीर्तनादि त्वयि त्वन्निमित्तमेव दधुः प्रतिपादयामासुः, न पृथग्विकारेषु । यतो नृणां यत्र कुत्रापि दत्तपदानि भुवि कथमयथा भवन्ति अदत्तानि भवन्ति अतो यत्किमपि विकारजातं प्रतिपादयन्तो वेदास्त्वामेव प्रतिपादयन्तीत्यर्थः । एतत् उपलब्धं प्रतीयमान-मिन्द्रादि सर्वं बृहद् ब्रह्मैव तच्च त्वमित्येव श्रुतयोऽवयन्ति । कथम् ? ब्रह्मणस्तवैव अवशेषतया अवशिष्यमाण-त्वेन । कुतः ? यतो बृहतः त्वत्त एव सकाशात् सर्वस्य उदयास्तमयौ उत्पत्तिलयौ भवतः । सर्वोपादानत्वात् । अथापि अविकृतात् विकारशून्यात् इत्यद्भूतकारणत्वं तवेत्यर्थः । अत्र दृष्टान्तः । वा यथा विकृतेर्घटादेर्मृदि उदयास्तमयौ भवतस्तद्वत् तथा सति घटादिविकृतिर्मृदेव । अतः ऋषयो मन्त्राः तद्द्रष्टारो वा मनसा आचरितं ध्यानं, वचनाचरितं कीर्तनं च त्वय्येव त्वन्निमित्तमेव दधु चक्रुः प्रतिपादयामासुः न पृथगिन्द्रादिविकारेष्वि-त्यर्थः । युक्तं चैतत् । यतो नृणां भूतलचारिणां यत्र कुत्रापि मृत्पाषाणेष्टकादिषु वृक्षकुड्यप्रेङ्खनादिषु वा दत्तानि स्थापितानि पदानि भुवि कथमयथा भवन्ति अदत्तानि भवन्ति, न कथमपि, अतो यत्किमपि विकार-जातमाकाशादि वस्तु प्रतिपादयन्तो वेदास्तत्तद्द्वारा मुख्यविषयं सर्वान्तर्यामिणं सर्वकारणभूतं त्वामेव प्रतिपाद-यन्ति । सर्वे पादा हस्तिपादे निमग्नाः' इति न्यायादित्यर्थः । यद्वा । मनोवचनाचरितमिति समाहारैकवचनम् । मनो दधुरित्यनेन ध्यानमुक्तम् । वचनमित्यनेन कीर्तनमुक्तम् आचरितमित्यनेन पूजनञ्चोक्तम् । एवं च मनोवाक्कायैर्मुमुक्षुभिः भगवत आराधनीयत्वं सूचितम् । यत इति सार्वविभक्तिकःतसिः तेन पञ्चमीसप्तम्यो-रुभयोरपि तन्त्रेण निर्देशः, यस्मादुत्पत्तिः यस्मिंश्च लय इत्यर्थः ॥ २ ॥ १६ ॥

१. अपरा अन्यप्रतिपादनपरा अपि श्रुतयः त्वदुपगाः त्वामुपगच्छन्तीति त्वत्प्रतिपादनपरा एवेत्यर्थः । यथा क्व च यत्र कुत्रापि दत्तं पदं भुवि कथम् अदत्तपदं भवति न कथमपि तथेत्यन्वयः ।

उक्तमेवार्थं प्रकारान्तरेण पुनर्द्रढयन्त्य आहुः—इतीति ।

( भक्तिपरेयम् )

इति तव सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजन्ति ये पदमजस्रसुखानुभवम् ॥१७॥३॥

पद्यानुवादः

इति बुधा जनकलमषनाशिनीं तव निशम्य कथां विजहुर्व्यथाम ।
किमुत ये चरितास्तमनोगुणा जहति तां नु[1] भजन्ति पदं तव ॥ ३ ॥

संक्षिप्तसार्थान्वयः—हे त्र्यधिपते ! हे त्रिलोकाधिपते ! सूरयः इति हेतो तव अखिललोकमलक्षपणकथामृताब्धिम् अवगाह्य निषेव्य तपांसि दुःखानि जहुः । हे परम ये पुनः अजस्रसुखानुभवम् तव पदं स्वरूपं भजन्ति ते तपांसि जहति त्यजन्तीति किमुत वक्तव्यम् ? कथंभूता ये ? स्वधामविधुताशयकालगुणाः ।

हे त्र्यधिपते ! त्रयाणां गुणानां लोकानां वा अधिपते हे भगवन् ! त्वमेव परमार्थत्वाद् भजनीय इति हेतोः सूरयो विवेकिनः अखिललोकानां मलस्य पापस्य क्षपणा विनाशिका मलं क्षपयतीति वा या कथा सैव अमृताब्धि, तमवगाह्य प्रविश्य अत्यादरेण श्रुत्वेत्यर्थः । तपन्तीति तपांसि तापत्रयाणि आध्यात्मिकादीनि सर्वदुःखानि जहुः त्यक्तवन्तः । यदा एवं तदा हे परम परमेश्वर ! भगवन् ! ये पुनः तब पदं स्वरूपं श्रीविग्रहं भजन्ति ध्यायन्ति, ते तपांसि जहतीति किमुत वक्तव्यम् ! कथंभूतं पदम् ? अजस्रसुखानुभवं नित्यानन्दानुभवरूपम् केचित्तु गोपीभावेन अजस्रसुखस्य नित्यसुखस्य आश्लेषादेरनुभवो यस्मात्तत् । कथंभूता ये ? स्वधामविधुताशयकालगुणाः ! स्वधाम्ना तेजसा स्वरूपसाक्षात्कारेण वा । यद्वा । स्वस्य भगवतः धामानि आश्रयीभूतलीलाचरितानि, तैर्विधुताः दूरीकृता आशयगुणा अन्तःकरणधर्मा रागद्वेषाद्यः कालगुणाः जरादयश्च यैस्ते तथाभूताः दिव्यविग्रहाः सन्तः । यद्वा । परा सर्वोत्कृष्टा मा राधाशक्तिर्यस्य तत्संबुद्धौ । केचित्तु मा न परोऽधिको यस्मात्स परम इत्याहुः । तपांसि इति तप सन्तापे इत्यस्मात् ॥३॥१७॥

सम्प्रति पूर्वपद्योक्तकथाश्रवणभगवत्स्वरूपचिन्तनोभयविधभजनहीनान् साक्रोशं निन्दन्त्य आहुः—दृतय इति ।

( उपदेशपरेयम् )

दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥१८॥४॥

पद्यानुवादः

न दृतिवद्विफलश्वसना[2] जनास्तव यतो महदाद्यसृजज्जगत् ।
स पुरुषोऽखिलकोशगतोऽन्तिमः सदसतः पर एष्ववशिष्यते ॥ ४ ॥

संक्षिप्तसार्थान्वयः । हे भगवन् ! असुभृतो जीवा यदि तेऽनुविधा अनुवर्तिनो भक्ताः, तर्हि श्वसन्ति सफलश्वासा भवन्ति, अन्यथा अभक्ताश्चेत्तदा दृतयः भस्त्रा इव श्वसन्ति वृथाश्वासाः जीवन्तोऽपि मृतका

१. नु अहो ये तव पदं भजन्ति ते तां व्यथां जहतीति किमुत वक्तव्यमित्यर्थः ।

२. तव जना भक्तजनाः । यतो यदनुग्रहात् महदादि कर्तृ जगत् कर्म असृजत् सोऽन्तिमः आनन्दमयः पुरुषः सेव्यः । कथंभूतः ? सः सदसतः अन्नमयादेः कोशात् परः । सर्वेषु लीयमानेषु अवशिष्यते अवशिष्यमाणश्च ।

एवेत्यर्थः। किं बहुना यदनुग्रहतः लब्धसामर्थ्या सन्तः महदहमादयोऽण्डम् ब्रह्माण्डमसृजन् समष्टिव्यष्टिरूपं देहमुत्पादयामासुरित्यर्थः। अथ अतः स त्वमेक एव सेव्य इति वाक्यशेषः। कुतः ? अन्नमयादिषु पञ्चसु कोशेषु पुरुषविधः पुरुषसंज्ञकः सन् योऽन्वयः अनुप्रविष्टः अत्र एषु चरमोऽन्तिमः आनन्दमयश्च। किञ्च सदसतः परं सर्वेषु एषु लीयमानेषु अवशेषम् ऋतं सत्यं च यद् ब्रह्म तदेव त्वं नित्यानन्दमयत्वात्तव सेव्यत्वमित्यर्थः। महत् महत्तत्वम् अहङ्कारश्च आदिर्येषां ते।

हे भगवन्! यदि ते तव अनुक्षणं सेवां विदधति कुर्वन्तीति अनुविधाः भक्ताः; तर्हि असुभृतः सार्थकमसून्बिभ्रतीति सफलश्वासा इत्यर्थः। अन्यथा भक्त्यभावे दृतयः भस्त्रा इव श्वसन्ति निष्फलश्वासा इत्यर्थः। किं बहुना यस्य तव अनुग्रहात् जगद्धेतवो महदहङ्कारादयो ब्रह्माण्डमसृजन् उत्पादयामासुः। अथ अतः अन्नमयादिषु शरीरान्तर्वर्तिषु पञ्चसु कोशेषु मध्ये पुरुषविधः पुरुषस्य अन्नमयादेः कोशस्य विधेव विधां आकारो यस्य सः अन्तर्यामिसंज्ञकः योऽन्वयः अनुप्रविष्टः सन् चेतयते स त्वम्। अत्र एषु चरमोऽन्तिम आनन्दमयश्च स त्वमेक एव सेव्य इति वाक्यशेषः। कुतः ? सदसतः स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तमसङ्गम् किञ्च एषु सर्वेषु लीयमानेषु अवशिष्यते इत्यवशेषम् अतः ऋतं सत्यं च यत् वेदान्तिनां ब्रह्म तदेव त्वमित्यन्वयः। अनु पश्चात् कारणत्वेन एति प्रविशतीति अन्वयः। आनन्दमयः इत्यत्र प्राचुर्ये मयट् अनन्दनिधिः। पञ्चकोशास्तु अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्या ज्ञेयाः। केचित्तु 'अनु हीने च सादृश्ये इति विश्वकोषात् अनुशब्दो हीनार्थकः। विधीयन्ते शास्त्रेणेति विधाः भगवद्भजनाद्यास्ताभिहीना अनुविधाः। तथाहि असुभृतो जीवाः यदि तेऽनुविधाः विमुखाः तर्हि दृतय इव श्वसन्तीति एकान्वयमाहुः। यद्वा। जना यदि विधा भजनादिप्रकारान् अनुलक्ष्य तेषाम् असुभृतः सुष्ठु भृतः धारका न भवन्ति तदा दृतय इव श्वसन्तीत्यर्थः। नीलकण्ठस्तु महदहमादयस्तवानुग्रहतः यदण्डमसृजन् तदनुविधाः तत्प्रपञ्चासक्ता यदि असुभृतः जीवाः स्युः तर्हि दृतय इव श्वसन्तीत्यन्वयमाह॥ १८॥ ४॥

---

उपासनाया नानाप्रकारत्वाद् योगोपासनया भगवत्प्राप्तिं दर्शयन्त्य आहुः—उदरमिति।

( योगपद्धतिपरेयम् )

**उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदयमारुणयो दहरम्।**
**तत उदगादनन्त तव धाम शिरः परमं पुनरिह यत् समेत्य न पतन्ति कृतान्तमुखे॥१९॥५॥**

पद्यानुवादः

[1]तनुदृशो मणिपूरगतं हरिं हृदयमारुणयः समुपासते।
इति तवोर्ध्वमवाप्य सुषुम्णया परपदं न पतन्ति भवाम्बुधौ॥ ५॥

---

संक्षिप्तसार्थान्वयः—हे भगवन्! ऋषीणां वर्त्मसु सम्प्रदायमार्गेषु ये कूर्पदृशः सूक्ष्मदृशो योगिनस्ते पूर्वम् उदरम् उदरस्थं ब्रह्म उपासते पश्चात् आरुणयः अरुणोदयवत्किञ्चित्प्रकाशोन्मुखाः सन्तः परिसरपद्धतिं सुषुम्णादिप्रसरणमार्गं दहरं सूक्ष्मं हृदयं हृदयस्थं ब्रह्म उपासते। हे अनन्त! ततो हृदयात् तव परमं धाम सुषुम्णाख्यं शिरः प्रति उदगात् ऊर्ध्वमगच्छत्। यत् धाम समेत्य प्राप्य पुनरिह कृतान्तमुखे संसारे न पतन्ति।

हे भगवन्! ऋषयोऽन्तर्गतिमन्तो योगिनस्तेषां वर्त्मसु दीक्षामार्गेषु ये कूर्पदृशः कूर्पेण शर्करया रजसा युक्ता दृशो दृष्टयो येषान्ते रजःपिहितदृष्टयः स्थूलदृष्टयः प्रथमदीक्षापन्नाः साधकाः इत्यर्थः। यद्वा। सूक्ष्मदृशः। 'कूर्पं मृत्कणिकासूक्ष्महिंसाविक्षेपणेषु च' इति निरुक्तेः। ते उदरस्थं नाभिचक्रस्थं वैश्वानररूपं ब्रह्म उपासते। मूलाधारान्नाभिचक्रपर्यन्तं गतिं कुर्वन्तीत्यर्थः। ये च अरुणस्य इमे अपत्यानि आरुणयः अरुणोदयवत्किञ्चित्-

---

१. तनुः सूक्ष्मा दृक् दृष्टिर्येषां ते। मणिपूरगतं नाभिचक्रस्थं ब्रह्म। हृदयम् अनाहतचक्रस्थम्। परपदम् आज्ञाचक्रस्थम्।

प्रकाशोन्मुखाः द्वितीयदाक्षीपन्ना इत्यर्थः। इदमर्थे संबन्धिनि अपत्यत्वारोपः। ते दहरं दुर्ज्ञेयत्वात् सूक्ष्मं हृदय हृदयस्थमनाहतचक्रस्थं ब्रह्म उपासते। तदुक्तं योगशास्त्रे। अनाहताख्यं तत्पदमं योगिभिः परिकीर्तितम्। आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम्। केचित्तु अरुणस्य सूर्यस्य तन्नामकस्य ऋषेर्वा इमे आरुणयः 'विवस्वान्मनवे प्राह' इति गीतावचनात् तत्संप्रदायवंशजा इत्याहुः। कथंभूतं हृदयम्। परिसरपद्धतिम्। परितः सरन्ति प्रसर्पन्तीति परिसराः सुषुम्णादिनाड्यः तासां पद्धतिम्। विशेषणस्य फलमाहुः—ततो हृदयात् हे अनन्त! तव धाम उपलब्धिस्थानं सुषुम्णाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरो मूर्धानं प्रति उदगात् ऊर्ध्वमगच्छत्। आक्रामत् वा। मूलाधारादारभ्य हृदयं मध्यमं कृत्वा ब्रह्मरन्ध्रं प्रत्युद्गतं धामैव स्थलत्रयं गतं बभूवेत्यर्थः। यत्परमं शिरःस्थं ब्रह्मरन्ध्रं समेत्य प्राप्य पुनरिह कृतान्तमुखे मृत्युमुखे अस्मिन् संसारे न पतन्ति। तन्निर्भिद्य गतस्य मोक्षाभ्युपगमात्। तथा च श्रुतिः—

'शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति'॥

एका सुषुम्णाख्या मूर्धानं ब्रह्मरन्ध्रं गता। अमृतत्वं मोक्षः। विष्वङ् नानागतयोऽन्या नाड्य उत्क्रमणे प्राणोत्क्रमणे संसारगमनद्वारभूता भवन्तीति तदर्थः। श्रीमज्जीवगोस्वामिनस्तु पूर्ववदेतत्पद्यमपि भक्तिपरकमेव योजयन्ति। तथाहि—हे अनन्त! ऋषयो भक्तास्तेषां वर्त्मसु ये कूर्पदृशः सूक्ष्मदृशः ते तप परिसरपद्धतिं क्रीडास्थानमुपासते अस्तु दूरतस्तव विग्रहः। तत्रापि केचित् उदरं मध्यवर्तित्वात् तव जन्मस्थलत्वाद्वा उदरं मथुरामुपासते इत्यर्थः। केचित् हृदयं बृन्दावनमुपासते। तत्कीदृशम्? आरुणयोत्। अरुणो रागस्तस्य समूह = आरुणं तस्य या[1] = प्राप्तिः तया उनत्ति क्लिन्नीभवतीति आरुणयोत् अनुरागवृन्दप्राप्तिमेदु[2]रमित्यर्थः। 'उन्दी क्लेदने' इत्यस्मात्? पुनः कीदृशम्। अहरम्। न ह्रियते न प्राप्यते इति अहरं दुरापमित्यर्थः। यद्वा। न विद्यते हरो हरणं कालादिना यस्य तत् शाश्वतमित्यर्थं। केचित् शिरः द्वारकारूपम्। कीदृशम्? परा मा लक्ष्मीर्यत्र। अतः कारणात् तव धाम क्रीडास्थानमुदगात् उपासकानामुपासनार्थमुदगादित्यर्थः। यत् धाम समेत्य पुनः इह कृतान्तमुखे न पतन्ति इति॥ १९॥ ५॥

---

ननु भगवतः प्रतिदेहगतत्वेन नानात्वात् देहतारतम्येन तारतम्याच्च जीवसाम्ये सति कथमुपास्यत्वमिति शङ्कां परिहरन्त्यः श्रुतयः आहुः—स्वकृतेति।

( स्वरूपनिरूपणपरेयम् )

**स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्यनलवत् स्वकृतानुकृतिः।**
**अथ वितथास्वमूष्ववितथं तव धाम समं विरजधियोऽनुयन्त्यभिविपण्यव एकरसम्॥२०॥६॥**

पद्यानुवादः

स्वकृतयोनिषु हेतुतया विशन्निव विभास्यसमं त्वमिहाग्निवत्।
सममुष्वसतीषु भवद्वपुः सदभियन्ति हरेऽमलबुद्धयः॥ ६॥

---

संक्षिप्तसार्थान्वयः—हे भगवन्! स्वकृतविचित्रयोनिषु उच्चनीचमध्यमासु योनिषु हेतुतया उपादानतया प्रागेव विद्यमानत्वेन मुख्यप्रवेशासंवाद् विशन्निव वर्तमानस्त्वम् तरतमतः न्यूनाधिकभावेन अनलवत् चकास्सि।

---

[1]. या धातोः सम्पादादित्वाद्भावे क्विप्। [2]. सान्द्रस्निग्धस्तु मेदुरः इत्यमरः।

कथंभूतस्त्वम् ? स्वकृतानुकृतिः । स्वकृता योनीः देवमनुष्यादिरूपाः अनुकरोति अनुसरतीति तथाभूतः । अथ अतः वितथासु मिथ्याभूतासु अमूषु योनिषु एकरसं समं तव धाम स्वरूपम् अवितथं सत्यमेव विरजधियोऽनुयन्ति जानन्ति । कथंभूताः ? अभिविपण्यवः सर्वतो व्यवहारातीताः ।

स्वकृतासु स्वेनैव कृतासु सृष्टासु विचित्रासु विविधासु योनिषु स्वाभिव्यक्तिस्थानेषु देवमनुष्यादिदेहेषु हेतुतया प्रयोजकतया अन्तर्यामितयेत्यर्थः । प्रवेशं कुर्वन्निव वर्तमानस्त्वं तरतमतः न्यूनाधिकभावेन चकास्सि प्रकाशसे । अज्ञैस्तथा प्रतीयसे इत्यर्थः । पूर्वमेव स्थितस्य मुख्यतया प्रवेशासंभवादिवेत्युक्तम् । कथंभूतस्त्वम् । स्वकृताः देवमनुष्यादियोनीरनुकरोतीति तथाभूतः सन् । किंवत् ? अनलवत् । यथाग्निः स्वतस्तारतम्यरहितोऽपि ह्रस्वदीर्घवक्रादिकाष्ठेषु तदनुसारेण यथा तथा भासते तद्वत् । यद्यप्येवम् अथ अथापि वितथासु मिथ्याभूतासु उपसंहृतासु सतीषु अमषु योनिषु तव धाम स्वरूपम् अवितथं सत्यं विरजधियो निर्मलमतयोऽनुयन्ति जानन्ति । सत्यत्वे हेतुः : समम् एकरूपम् । कार्यानुप्रवेशेऽपि तारतम्यरहितमित्यर्थः । कुतः ? एकरसं निर्विकारम् । मा राधा तया सहितं सममिति वा राधाकृष्णमयं जगत् इत्युक्तेः । विरजधिय इत्यत्र हेतुः । अभिविपण्यवः अभितः सर्वतोभावेन विगतो नष्टः पण्युर्व्यवहारो येषान्ते । यद्वा । अभितः सर्वतो विशिष्टाः पण्यवः स्तुतिकीर्तनादयो येषान्ते तथोक्ताः । पण् व्यवहारे स्तुतौ च इत्युभयार्थकः तस्यैव धातो रूपं पण्युरिति । एतेन स्वातन्त्र्यात्तवोपाधिकृततारतम्याभावादखण्डितैश्वर्यस्योपास्यत्वं सुदृढमिति द्योतितम् । नु इति पृथक्पदं वा । नु निश्चयेन यन्ति प्राप्नुवन्ति । अन्वयन्तीति पाठः प्रामादिकः । अनुपूर्वकेण्धातोः अनुयन्तीति पूर्वाचार्यव्याख्यानात् । अयधातुकल्पने तु तस्यात्मनेपदित्वादार्षकल्पनाया अगतिकगतित्वाच्च ॥ २० ॥ ६ ॥

---

अपि च कुतो नु इयमाशङ्का भगवतो देहाद्युपाधिकृतदोषप्रसङ्ग इति. यतोऽविद्यादिभिः संसरतस्त्वदात्मनी जीवस्यापि वस्तुतस्तत्कृतावरणादि न घटते कुतस्तव ? इत्याशयेनाहुः श्रुतयः स्वकृतेति ।

( अंशांशिभावपरेयम् )

**स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं तत्र पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् ।**
**इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः॥२१॥७॥**

पद्यानुवादः

[1]पुरकृतावरणं न तवात्मनः[2] सकलशक्तिधरस्य कुतस्तव ।
इति बुधा नृगतिं सुविविच्य ते भुवि पदं विपदन्तमुपासते[3] ॥ ७ ॥

---

संक्षिप्तसार्थान्वयः—हे भगवन् ! अमीषु स्वकृतपुरेषु वर्तमानं पुरुषं जीवम् अखिलशक्तिधृतः पूर्णस्य तव अंशकृतम् अंशमिव कृतं वदन्ति व्यासादयः । कीदृशं पुरुषम् ? अबहिरन्तरसंवरणं बाह्याभ्यन्तरावरणशून्यम् । इति नृगतिं जीवस्वरूपं विविच्य विशोध्य कवयः विश्वसिताः सन्तः भुवि भवतः अङ्घ्रिम् उपासते । कथंभूतम् अङ्घ्रिम् ? निगमावपनं ज्ञानोत्पादकम् । अत एव अभवं भवनिवर्तकं च । पुरं शरीरम् ।

हे भगवन् ! स्वकृतेषु स्वकर्मोपर्जितेषु अमीषु पुरेषु देवमनुष्यादिदेहेषु भोक्तृत्वेन वर्तमानं पुरुषं जीवं तव अंशमिव कृतम् त्वद्रूपम् । यद्वा । अंशेन लीलाशक्त्या कृतं पृथक् कृतमिव वदन्ति व्यासादयः । 'ममैवांशो जीवलोके–इत्यादिना गीतायामाह भगवानपि । कुतः ? अखिलशक्तिधृतः । अखिला नानाविधाः शक्तीर्धरतीति तथा-भूतस्य सर्वशक्त्याश्रयस्येत्यर्थः । कथंभूतं पुरुषम् ? अबहिरन्तरसंवरणम् । बहिः कार्यं देहादि अन्तरं

---

१. पुर शरीरम् अज्ञानं च । २. आत्मनः अंशभूतस्य जीवस्य । ३. विपदामन्तो यस्मात्तम् ।

कारणमज्ञानं ताभ्यां यत् आवरणं तन्न विद्यते यस्य । तयोरसत्त्वादित्यर्थः । इति पूर्वोक्तप्रकारेण नुर्जीवस्य गतिं तत्त्वं त्वदंशलक्षणं विविच्य विशोध्य विश्वसिताः कृतविश्वासा ये कवयो विवेकिनस्ते भवतोंऽशिस्वरूपस्य अङ्घ्रिमुपासते । अंशिभजनं विना अंशस्योद्धरणासम्भवादित्यर्थः । कथंभूतमङ्घ्रिम् । निगमावपनम् । निगमा वेदा आ समन्तात् उप्यन्ते समन्विताः क्रियन्ते यस्मिन् तादृशम् । सर्ववेदार्थत्वात्त्वमेव मुख्यतया सर्वेषां भजनीय इत्यर्थः । निगमो वेदस्तद्रूपे क्षेत्रे आ सम्यक्तया वपनं यस्येति कल्पतरुत्वादिति चक्रवर्ती । यद्वा । निगमानां वेदोक्तकर्मणामावपनं क्षेत्रं सर्वकर्मार्पणविषयमित्यर्थः । यद्वा । आ समन्तादुप्यतेऽत्रेत्यावपनं क्षेत्रं निगमस्य ज्ञानस्य आवपनं क्षेत्रं तत्वेन ज्ञानोत्पादकमित्यर्थः । अत एव न भवः संसारो यस्मात्तम् । भुवीत्यनेन मर्त्यलोके मुख्यविधया इदमेवोचितमिति सूचितम् ॥ ७ ॥ २१ ॥

---

सर्वसाधनेभ्यो भक्तेर्गरीयस्त्वं तन्निष्ठानां निस्पृहत्वं च द्योतयन्त्यः श्रुतय आहुः—दुरवगमेति ।

( भगवच्चरित्रमहत्तापरेयम् )

**दुरवगमात्मतत्त्वनिगमाय[1] तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।**
**न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसंगविसृष्टगृहाः ॥८॥२२॥**

**पद्यानुवादः**

कृततनोर्निजतत्त्वबिबोधने तव कथामृतपानगतक्लमाः[1] ।
अभिलषन्ति न मुक्तिमपीह हे भुवि जना [2]विजनाभिरताश्च ये ॥८॥

---

संक्षिप्तसार्थान्वयः - हे ईश्वर ! सर्वनियन्तः ! दुरवगमात्मतत्त्वनिगमाय दुर्ज्ञेयं यत् आत्मतत्त्वं तस्य प्रकाशनाय आत्ततनोः स्वीकृतमूर्तेः तव चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः । परिवर्तोऽवगाहः तेन गतश्रमाः केचित् विरलाः अपवर्गमपि न परिलषन्ति । ते के ? ये ते तव चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ते । चरणसरोजे हंसा इव सारग्राहिणो ये भक्तास्तेषां कुलं तत्संगेन विसृष्टगृहाः ।

हे ईश्वर ! कर्तुमकर्तुमन्यथाकर्तुं समर्थ हे भगवन् ! केचित् अनन्यभक्ता अपवर्गं मोक्षसुखमपि परि सर्वतोभावेन एकांशेनापीत्यर्थः न लषन्ति नेच्छन्ति किमुतान्यत् त्रैवर्गिकसुखमिन्द्रादिपदं वा । कथंभूतास्ते ? दुःखेनापि अवगन्तुं ज्ञातुमशक्यं दुरवगमं दुर्ज्ञेयं यत् आत्मतत्त्वम् । यद्वा । आत्मनस्तव तत्त्वं स्वरूपलीलादिमाधुर्यं तस्य निगमाय नितरां ज्ञापनाय प्रापणाय प्रकाशनाय वा आत्ततनोः आविष्कृतमूर्तेस्तव लीलाचरितमेव महामृताब्धिः निरतिशयसुखराशिस्तस्य परिवर्त्तनं श्रवणकीर्त्तनादिना पुनः पुनरावर्त्तनमालोडनं तेन परि गतं श्रमणं श्रमः संसारक्लेशो येषान्ते तथोक्ताः । यथोक्तम् 'यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमापहम्' इति । परिरत्र वर्जने । यद्वा । परिवर्तनम् आलोडनं तत्र परिश्रमणाः कृतपरिश्रमा इत्यर्थः । केचित्तु तत्र परिवर्तोऽवगाहनं स्नानपानस्थानीभूतेन श्रवणादिना सेवनं तनेत्याहुः । अत एव च ते तव चरणसरोजे हंसा इव रममाणाः सारासारविवेकिनो ये भक्तास्तेषां यत्कुलं समूहस्तस्य सङ्गेन विसृष्टाः त्यक्ता गृहाः स्त्रीपुत्रादिसुखानि यैस्ते तथाभूताः । श्रीमज्जीवगोस्वामिनस्तु हे दुरवगमात्मतत्त्व ! हे निगमाय ! इति संबोधने कृत्वा निगमानां वेदानां अय शुभावहविधे । यद्वा । आय आश्रय वेदाश्रय इति । तव कीदृशस्य ? आत्ता दोर्भ्यामालिङ्गनेन गृहीताः तनवः श्रीरुक्मिणीप्रभृतीनां शरीराणि येन । 'शयानं सह शक्तिभिः इत्युक्तेः एवम्भूतस्य तवेप्यर्थं इत्याहुः ॥ ८ ॥ २२ ॥

---

१. क्लमः शोकमोहादिरूपं दुःखम् । २. विजने एकान्ते अभितो रममाणाश्च ये ते जना इत्यन्वयः विजना भक्ता तेषु अनुरक्ता वा ।

विसृष्टगृहा इत्युक्तम्, अतो गृहासक्तान् भक्तिमकुर्वतो जनान्निन्दन्त्यः श्रुतयः आहु—त्वदनुपथमिति ।

( अभक्तदुर्गतिपरेयम् )

**त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।**
**न बत रमन्त्यहो असदुपासनयाऽऽत्महनो यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥९॥२३॥**

पद्यानुवादः

त्वदुपयोगि शरीरमिदं प्रभो चरति निघ्नतया[1] सुहृदादिवत् ।
असदुपासनयाऽत्र[2] रता न ते तव तनौ बत नौरिव तारिणी ॥ ९ ॥

संक्षिप्तसार्थान्वयः— हे भगवन् ! त्वदनुपथं त्वत्सेवोपयोगि इदं कुलायं शरीरम् आत्मसुहृत्प्रियवत् चरति स्ववशे वर्तते । हिते हितकरे प्रिये आत्मनि परमात्मनि त्वयि च उन्मुखे सदा जीवोन्मुखे न तु पराङ्मुखे तथापि अहो आश्चर्ये बत खेदे च ये त्वयि न रमन्ति ते असदुपासनया विषयभोगासक्त्या आत्महनः आत्मघातिनः । कुतः ? यदनुशया यद्विषयवासनायुक्ता कुशरीरभृतः सन्त उरुभये मृत्युभये संसारे भ्रमन्ति नतु मुच्यन्त इत्यर्थः ।

हे भगवन् ! त्वामनु पन्था यस्य तत् त्वदनुपथं त्वत्सेवायोग्यम् इदं कौ पृथिव्यां लीयते इति कुलायं शरीरम् । आत्मा च सुहृच्च प्रियश्च तद्वच्चरति । अहङ्कारास्पदत्वात् आत्मवत् । विषयसमर्पकत्वात् सुहृद्वत् । सर्वतः—प्रीतिविषयत्वात् प्रियवच्च चरति स्वाधीनतया वर्त्तते इत्यर्थः । तथा च तथापि त्वयि न रमन्ति प्रीतिं न कुर्वन्ति अहो आश्चर्ये बत खेदे च । दुर्लभं मानुष्यं जन्म लब्ध्वाऽपि त्वां न भजन्तीत्यस्माकमाश्चर्यं खेदश्च । किञ्च त्वयि आत्मनि न रमन्ते परस्मिन् विषयवर्गे च रमन्तीति सूचनाय परस्मैपदमपि साभिप्रायम् । एतेन विषयोत्कर्षजन्यः स्वार्थनाशो ध्वनितः । कथंभूते त्वयि ? उन्मुखे सदा भक्ताननुग्रहीतुमुत्कण्ठिते । प्रिये प्रियसखे । तत्कुतः ? आत्मनि अंशिनि अत एव हिते हितकरे च । एतैर्विशेषणैरंशिनः सर्वथाऽऽनुकूल्येऽप्यंशस्यैव वैमुख्यमित्यतो महान् दुःखोच्छ्वासः अत उक्तमहो बतेति । न रमन्तीत्यत्र हेतुः । असदुपासनया विषयसेवनेन आत्महनः आत्मघातिनः आत्मपतनहेतवः आत्मानं नानादुःखगर्तेषु पातनात् ध्नन्ति हिंसन्तीति आत्महन इत्यर्थः । यस्यामसदुपासनायामनुशयो वासना येषान्ते यदनुशयाः कुत्सितं निन्दितं शरीरं बिभ्रतीति कुशरीरभृतः शूकरकुक्कुरादियोनिगताः सन्तः उरुभये महाभये संसारे भ्रमन्ति नतु कदाचिदपि सुखलेशं प्राप्नुवन्तीत्यर्थः । कुलायो नीडमस्त्रियाम्' इत्यमरात् पक्षिनीडाकारत्वात्तद्व्यपदेशः । यद्वा । जीवेश्वरपक्षिणोर्नीडमेव तत् । कुं पृथ्वी लीयते श्लिष्यतीति कुलायं 'कर्मण्यण्' इति चक्रवर्त्ती । कुलं परम्परा तेन अयते संसरतीति सन्दर्भः । तव पन्थानं भक्तियोगमनुगतं त्वदनुपथं श्रोत्ररसनादिमत्त्वात् त्वच्छ्रवणकीर्तनाद्युपयोगीत्यर्थः ॥ ९ ॥ २३ ॥

१. स्वाधीनतया । २. विषयविषगर्ते । नौरिव तारिणी या तत्र तव तनौ ते न रता बत आत्मघातिन इत्यर्थः । बत खेदे ।

इदानीमात्मप्राप्तौ ध्यानमङ्गत्वेनोपदिशन्त्यः श्रुतयः आहुः —निभृतेति ।

( गोपीत्वप्रार्थनापरेयम् )

**निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ।**

**स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः॥२४॥१०॥**

पद्यानुवादः

**यदभजन्दृढयोगयुजो हरे तदरयोऽपि ययुः स्मरणात्तव ।**

**भुजविषक्तधियोऽपि[२] वयं पदे तव सुधावसुधाः किमु मा समाः ॥१०॥**

संक्षिप्तसार्थान्वयः—हे भगवन् ! मुनयो मननशीला हृदि यत् तत्त्वं ब्रह्माख्यम् उपासते अरयोऽपि स्मरणात् तत् तत्त्वं ययुः प्रापुः । स्त्रियः गोप्योऽपि तदेव तत्त्वं ययुः । अतः समदृशस्ते वयमपि समाः तुल्या एव जाताः कृपाविषयतया । कथमूताः ? ते अङ्घ्रिसरोजं सुष्ठु दधति धारयन्तीति तथाभूताः । कथंभूता मुनयः ? निभृतमरुन्मनोऽक्षदृढयोगयुजः । कथंभूताः स्त्रियः ? उरगेन्द्रभोगभुजदण्डविषक्तधियः । मरुत् प्राणः मनश्च अक्षाणि इन्द्रियाणि एतानिनिरुद्धानि यैस्ते ।

हे भगवन् ! मुनयो हृदि यत् ब्रह्मस्वरूपमुपासते ध्यायन्ति तदेव अरयः शिशुपालादयोऽपि वैरानुबन्धेन साकारस्य तव स्मरणात् ययुः प्रापुः । उपासते ययुरिति वर्तमानभूतप्रत्ययाभ्यां मुनय उपासीना एव वर्तन्ते तेषां तत्प्राप्तितः पूर्वमेवारयस्तत्प्रापुरिति व्यज्यते । स्त्रियः गोपिकाश्च कामतस्तदेव [१]तत्त्वं ययुः । अतो वयं श्रुत्यभिमानिन्यो देवता अपि समदृशस्ते समाः कृपाविषयीभूता एव । यथा मुनयोऽरयो गोप्यश्च तव कृपाविषये समाः, तथा वयं श्रुतयोऽपि तव समा एव त्वत्संयोगं प्राप्तुं योग्या एवेत्यर्थः । यतः तेऽङ्घ्रिसरोजं सुष्ठु दधति धारयन्ति चिन्तयन्तीति तथाभूता वयम् । कथंभूता मुनयः ? मरुत् प्राणः मनोऽन्तःकरणम् अक्षाणि इन्द्रियाणि च एतानि निभृतानि निरुद्धानि यैस्ते अत एव दृढं योगं युञ्जन्ति कुर्वन्तीति ते च ते च तथाभूताः । बहुव्रीहिगर्भितकर्मधारयः । कथंभूताः स्त्रियः ? उरगेन्द्रः शेषः तस्य भोगवत् देहवत् वर्तुलयोः सुकोमलयोश्च भुजदण्डयोर्विषक्ता अत्यासक्ता संलग्ना धीर्यासां तास्तथाभूताः । सुधेति 'डुधाञ्' धारणपोषणयोः इत्यस्मात् 'आतश्चोपसर्गे कः' । यद्वा अङ्घ्रिसरोजमेव सुधा भोग्यं वस्तु यासाम् । तवाङ्घ्रिसरोजमेव अस्माकं प्रकाश्यत्वेन भोग्यमित्यर्थः । अत्र सन्दर्भः । अरयोऽपि ययुरतः कैवल्यं तावन्न दुर्लभम् किन्तु तव चरणरतिरेव सुदुर्लभा इत्यत्र वयमेव प्रमाणं यतो ब्रह्मोपासनामवहेलयन्त्यस्त्वच्चरण-रतिप्राप्त्यर्थं श्रुतिरूपमपहाय व्रजे गोपाङ्गनाभावमासादिता इत्याहुः —स्त्रिय इति । वयं श्रुतयोऽपि ते भुज-दण्डयोर्विषक्तधियः सत्य स्त्रियो भूत्वा तेऽङ्घ्रिसरोजं सुष्ठु दधतीति तथाभूताः जाताः ते इत्युभयत्रान्वेति । चक्रवर्त्ती तु अत्र चत्वारो गणा वर्णिताः पूर्वार्द्धगतौ मुनिगणदैत्यगणौ यथा समप्राप्त्यौ तथैवोत्तरार्द्धगतौ गोपी-गणश्रुतिगणौ समप्राप्त्यौ इति पृथक् पृथगपिशब्दाभ्यामवगम्यते । अत्र बृहद्वामनोक्त इतिहासोऽपि द्रष्टव्यः; तथाहि—

ब्रह्मानन्दमयो लोको व्यापी वैकुण्ठसंज्ञितः । तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ॥ १ ॥

चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान् गिरा । तुष्टोऽस्मि ब्रूत भो प्राज्ञा वरं यन्मनसेप्सितम् ॥ २ ॥

---

१. श्रुति विशेषणं वा । समम् अपरिच्छिन्नं त्वां पश्यन्तीति तथा ।

२. भुज विषक्तधियः गोप्यः । वयमपि तथाभूता तव पदे स्थिता इति शेषः । कुतः । सुधा पदगतसुधैव वसु यद् दधति चिन्तयन्तीति तथा किमु मा समा न समाः अपि तु समा एवेत्यर्थः

श्रुतय ऊचुः

कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः । कामिनीभावमासाद्य स्मरक्षुब्धा न संशयः ॥ ३ ॥

यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः । भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा ॥ ४ ॥

श्रीभगवानुवाच

दुर्लभो दुर्घटश्चैव युष्माकं स मनोरथः । मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हति ॥ ५ ॥

आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते । कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥ ६ ॥

पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले । वृन्दावने भविष्यामि प्रेयान् वो रासमण्डले ॥ ७ ॥

जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम् । मयि सम्प्राप्य सर्वेऽपि कृतकृत्या भविष्यथ ॥ ८ ॥

ब्रह्मोवाच

श्रुत्वैतच्चिन्तयन्त्यस्ता रूपं भगवतश्चिरम् । उक्तकालं समासाद्य गोप्यो भूत्वा हरिं गताः ॥ ९ ॥ इति ।

वस्तुतस्तु ते इति त्रिष्वप्यन्वेति । ते भुजदण्डविषक्तधियः । तेऽङ्घ्रिसरोजसुधाः अत एव ते स्त्रियः भोग्या जाता इति । ते तादृशभुजदण्डविषक्तधियः इत्यनेन श्रुतीनां सहेतुको भगवत्यनुरागः । तेऽङ्घ्रिसरोजसुधा इत्यनेन भगवत्प्राप्त्युपायः ते स्त्रियो भोग्या गोपिका जाता इत्यनेन अपवर्गाधिकभगवद्भोग्यत्वरूपमहाफलावाप्तिश्च सूचितेति ॥ २४ ॥ १० ॥

---

कामक्रोधद्वेषभयादिभिः त्वत्पराणां विषमस्वभावकर्मणामपि सर्वेषां त्वत्प्राप्तिरूपमेकमेव मुख्यं फलं भवतीत्यतस्तव तत्त्वं दुर्ज्ञेयमिति वदन्त्यो ज्ञानं निरस्य भक्तिमेव दृढीकुर्वन्ति--क इहेति ।

( अनिर्वचनपरेयम् )

**क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगादृषिर्यमनु देवगणा उभये ।**
**तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥२५॥११॥**

पद्यानुवादः

क इह वेद भवन्तमनीश्वरो[1] विधिरथोभयदेवगणा यतः ।
यदि शयीत विकृष्य तदेतरत् भुवि न ते विनतेश स सेव्यताम् ॥११॥

---

संक्षिप्तसार्थान्वय—हे भगवन् ! यतः ऋषिर्ब्रह्मा वेदो वा उदगात् उत्पन्नः यं ब्रह्माणम् अनु पश्चात् उभये देवगणा उभयेन्द्रियाधिष्ठातारः उदगुः उत्पन्ना बभूवुः; तमग्रसरं पूर्वसिद्धं त्वाम् इह जगति अवरजन्मलयः आधुनिको जन्ममरणवान् को नु वेद ? न कोऽपीत्यन्वयः । बतेति विस्मये । यदा तु प्रलये सर्वमवकृष्य भवान् शयीत तर्हि सत् स्थूलं न, असत् सूक्ष्मं न, उभयं ताभ्यामारब्धं शरीरं न, कालजवश्च न, किं बहुना तत्र किमपि ज्ञापकं शास्त्रमपि नासीत् अतस्तदाऽपि को वेद ? न कोऽपीति ।

---

१. अनीश्वरः परतन्त्रः कः पुमान् ।

२. हे विनतेश विशेषेण भक्त्यादिना नता नम्रीभूता भक्तस्तेषामीश फलदाताः । यदि यदा सर्वमपि विकृष्य शयीत आस्ते तदा भुवि ते स्यात् इतरत् अन्यत् किमपि वस्तु न किन्तु भवानेन अतः स एव सर्वैः सव्यतामित्यन्वयः । शयीतेति संभावनायां लिङ् । एतच्च लोकदृष्टयोक्तम् । वस्तुतस्तु शयनस्य रजस्तमोगुणकार्यत्वेन तत्र सर्वथा तदभावात् स्वरूपेणास्ते इत्यर्थः कार्यः ।

बत अहो हे भगवन् ! इह जगति अग्रसरं पूर्वतो वर्तमानं त्वाम् अवरजन्मलयः आधुनिको जन्ममरणभागी को नु पुमान् वेद ? न कोऽपीत्यर्थः। नु इति सम्भ्रूमङ्ग वितर्के। यतः त्वत्तः ऋषिर्वेदः प्रथममुदगात् उत्पन्नः किञ्चित्तत्त्वज्ञ पकः प्रादुरभूत। य वेदमनु उभये देवगणा उभयेन्द्रियाधिष्ठातारः।

यद्वा। इन्द्रियाधिष्ठतारः दिग्वातार्कादयः। ब्रह्मलोकाद्यधिष्ठातारो ब्रह्मादयश्च उभये उदगुः उत्पन्ना बभूवुः। तस्मात्तेभ्योप्यवरजन्मलयस्तु जीवः सुतरामेव न वेदेत्यर्थः। यदा तु प्रलये सर्वमवकृष्य उपसंहृत्य भवान् शयीत स्वरूपेणास्ते। तर्हि तदा सत् स्थूलमाकाशादि नासीत्। असत् सूक्ष्मं महदादि च नासीत्। उभयं सदसद्भ्यासारब्धं शरीरं च नासीत्। कालजवः गुणक्षोभकारणभूता कालचेष्टा च नासीत्। शास्त्रं, ज्ञापकं शास्त्रं च नासीत्। किं बहुना तत्र तदा किमपि इन्द्रियप्राणादिकमपि नासीत् कुतो ज्ञानम् ? इत्यर्थः।

सृष्टिकाले देहाद्युपाधिकृतबहुव्यवधाने सत्यपि ज्ञापकस्य शास्त्रस्य साधनसमूहस्य च सत्त्वात् यत्किञ्चित्तत्त्वज्ञानं कदाचित्कस्यचिद्भवेदपि प्रलयकाले तु बहुतरव्यवधानाभावेऽपि शास्त्रस्य साधनसमूहस्य चासत्त्वान्न किञ्चिन्मात्रमपि तत्त्वज्ञानं संभवेदतो दुर्घटज्ञानाग्रहं त्यक्त्वा त्वद्भक्तिरेव कर्त्तुंयुज्यते इति फलितम्।

यद्वा यदा प्रलये सर्वं प्रपञ्चमवकृष्य भवान् शयीत तर्हि सत् आकाशादि किमपि अन्यद्वस्तु नासीत्। सृष्टेरादौ तु यतः ऋषिर्वेदः ब्रह्मा वा उदगात्। यमनु ब्रह्मानन्तरम् उभये प्रवृत्तिनिवृत्तिनिष्ठा देवा उदगुः। तं त्वामिह जगति को नु वेद ? न कोऽपीत्यन्वयः। नहि पितुरुत्पत्तिं पुत्रो जानातीत्यर्थः। कथंभूतं त्वाम् ? अग्रसरं ब्रह्मादिसर्वजगत्कारणत्वेन सृष्टे पूर्वमेव सिद्धम्। प्रवृत्तिनिष्ठा मरीच्यादयः। निवृत्तिनिष्ठाः सनकादयश्च ॥ ११ ॥ २५ ॥

---

किञ्चोपदेशकर्तॄणामाचार्याणामपि भ्रमबाहुल्यात्तव ज्ञानं दुष्करमेव अतस्तत्तन्मतानि प्रदर्श्य तानि युक्तियुक्तं खण्डयन्त्यो निर्दुष्टो भक्तिमार्ग एव सर्वैराश्रणीय इत्याहुः श्रुतयः जनिमसत इति।

( पञ्चवादिमतखण्डनपरेयम् )

**जनिमसत सतो मृतिमुतात्मनि ये च भिदां विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः।**
**त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयि न ततः परत्र स भवेदवबोधरसे ॥२६॥१२॥**

पद्यानुवादः

काणादा असतो जनिं, विधिबलाद ब्रह्मेति पातञ्जला
जीवस्ताभ्रवदत्र दुःखविरतिं मोक्षं च नैयायिकाः।
सांख्या आत्मनि भेदमाहुरिति वा भाट्टाः फले नित्यतां
पञ्चोक्ताः[1] कुमतप्रवर्तकतया भ्रान्ता इमे वादिनः
गुणमये पुरुषे मतसंगतिर्न तु तथा त्वदबोधकृता भिदा
त्वयि परे विदिते तु कुतो भ्रमो भजनतो जनतोत्तमभावतः[2] ॥१२॥

---

संक्षिप्तसार्थान्वय असतो जनिं काणादा वैशेषिकाः स्मरन्ति स्वप्नपदार्थवत् न तु विचार्य वदन्ति।

---

१ उक्ता पूर्वोक्ताः।
२. जनताया उत्तमभावतः श्रद्धाभक्तितः यद्भजनं तस्मात् त्वयि विदिते सति कुतो भ्रम इत्यन्वयः।

असत एव ब्रह्मत्वस्य जनिमुत्पत्ति पातञ्जलाः स्मरन्ति । सतः सत्यस्यैव दुखस्य मृतिं नाशं मोक्षं नैयायिकाः स्मरन्ति । उत अपि ये च सांख्यादयः आत्मनि भिदां स्मरन्ति । ये च मीमांसका विपणं कर्मफलव्यवहारम् ऋतं सत्यं स्मरन्ति ते सर्वे आरोपितैर्भ्रमैरेव उपदिशन्ति न तत्त्वदृष्ट्या । त्रिगुणमयः पुमानिति हेतुना भिदा पञ्चमतभेदः यस्य अबोधकृता तस्मिन् त्वयि विज्ञाते सति जीवानां सोऽवोधस्तन्मूलो भेदश्च न भवेत् न संभवति । कथंभूते त्वयि ! ततः अबोधात्परत्र परस्मिन् । पुनः अवबोधरसे ज्ञानघने च ।

अत्र काणादपातञ्जलनैयायिकसांख्यमीमांसकानां पञ्चानामपि मतानि प्रदर्श्य षष्ठेन वेदान्ताशास्त्रेण तानि खण्डयन्ति । तथाहि । काणादा वैशेषिकाः सप्तपदार्थवादिनो नवीनास्तार्किकाः हि उत्पत्तेः पूर्वं कार्यमात्रस्य प्रागभावोऽस्ति; स च तत्तत्प्रागभावस्तत्तत्कार्ये निमित्तकारणं उत्पन्ने कार्ये प्रागभावनाशः; एवमसत उत्पत्तेः प्रागविद्यमानस्य जगतः जनिमुत्पत्ति स्मरन्ति वदन्ति । तेषां मते सदेव सौम्येदमग्र आसीत्' इति श्रुतिविरोधः[1] ।

पातञ्जलाश्च यथा ताम्रादिकमसुवर्णमपि रसायनप्रभावात्सुवर्णं सम्पद्यते तथैव जीवेऽसत एव ब्रह्मत्वस्य योगादिना जनिमुत्पत्ति वदन्ति अब्रह्मभूतोऽपि जीवो योगप्रभावाद् ब्रह्म सम्पद्यत इत्यर्थः । तेषां मते 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादि श्रुतिविरोध[2] ।

किञ्च यज्जन्यं तद्विनाशीति व्याप्तेः जन्यब्रह्मत्वस्य नश्वरत्वापत्तिश्च । एवमसतो जनिमित्यनेन पक्षद्वयमुद्घोषितम् ।

नैयायिकाश्च सतो मृतिं स्मरन्ति । सत एकविंशतिप्रकारकस्य दुःखस्य सत्यस्यैव मृतिं ज्ञानान्नाशं मोक्षं वदन्ति । तेषां मते 'नाभावो विद्यते सतः । 'अनीशया शोचति मुह्य मानः इति गीताश्रुतिविरोधः[3] । एकविंशतिप्रकारं दुखं च—षडिन्द्रियाणि, षडिन्द्रियविषयाः, क्षुत्पिपासे, शोकमोहौ, जरामृत्यू[4] षडूर्मयः । शरीरं सुखं दुःखञ्चेति ।

उत अपि ये च सांख्यादयः आत्मनि भिदां भेदं वदन्ति । तत्र केचित् जीवानामन्योन्यभेदम् । जीवब्रह्मणोर्भेदम् । जीवजडयोर्भेदम् । ब्रह्मजडयोर्भेदम् । जडानां परस्परभेदं चेति पञ्चधा भेदं वदन्ति । तेषां मते 'एको देवः सर्वभूतेषु गूढः' इत्यादिश्रुतिविरोधः[5] ।

ये च मीमांसका विपणं व्यवहारं कर्मफलं स्वर्गाद्येव ऋतं सत्यं परमपुरुषार्थञ्च स्मरन्ति वदन्ति । 'अक्षय्यं ह वै चातुरर्मास्यस्ययाजिन सुकृतं भवति' इत्युक्तेः । तेषां मते नेह नानाऽस्ति किञ्चन' 'तद्यथेह

---

१. हे सौम्य श्वेतकेतो । अग्रे जगदुत्पत्तेः पूर्वम् इदं नामरूपात्मकं जगत् सदेव सूक्ष्मरूपेण सत्तादात्म्यात् सदेवासीत् अभावाद्भावोत्पत्तेरसंभवाच्च । तेनासत्कार्यवादिनः काणादा वैशेषिका निरस्ताः ।

२. ब्रह्मैव सन् इत्यज्ञानस्वरूपस्यैवाज्ञानेनावरणमात्रं तस्माज्ज्ञानात्पूर्वमपि सदेव ब्रह्म आवरणापगमे स्वस्वरूपं ब्रह्मैव प्राप्नोतीति तेन ब्रह्मत्वासत्ववादिनः पातञ्जला निरस्ताः ।

३. अनीशा माया तया मुह्यमानः शोचति दुःखी भवति इति मायिकमज्ञानकल्पितमेव दुखं न वस्तुतः सदिति तेन दुःखसत्यत्ववादिनो गौतमीया निरस्ताः ।

४, बुभुक्षा च पिपासा च प्राणस्य, मनसस्तथा । शोकमोहौ, शरीरस्य जरामृत्यू षडूर्मयः ॥

५. वस्तुत एक एवात्मा जीवात्मपरमात्मभेदजीवपरस्परभेदादिकं च घटाकाशमठाकाशादिभेदवदुपाधिकल्पितमेव न सत् तेन भेदवादिनो निरीश्वरसांख्यादयो निरस्ताः ।

कर्मचितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते' इत्यादि श्रुतिविरोधः[1] एवम् एते पञ्चापि मत-प्रवर्तका अन्धपरम्परया आरोपितैर्भ्रमैरेवोपदिशन्ति न तत्त्वदृष्ट्येति प्राञ्चः, यतः पुरुषस्य जीवस्य त्रिगुणमयत्वे सर्वमिदं[2] सङ्गच्छेत, न तु तदस्ति किन्तु स निर्गुण एवेति द्योतयन्त्य श्रुतयः आहुः–त्रिगुणमयः पुमान् जीव इति हेतुना या भिदा पञ्चमतभेदः सा यत् यस्मात् अबोधकृता अविद्याशक्तिकल्पिता न वस्तुतः। सा च जीवात्म-न्येव प्रभवति न त्वयीत्याहुः सः अबोधोऽविद्याशक्तिः त्वयि न भवेत् न प्रभवेत्। जीवस्यैवाऽविद्ययाऽऽवरणं घटते न तु तवेत्यर्थः। तत्र हेतुद्वयम् ततः अबोधात् अविद्याशक्तेः परत्र परेऽसङ्गे। तव मायातीतत्त्वादविद्या-याश्च मायावृत्तित्वात्त्वन्नियम्यत्वाच्चेति भावः। कुतः? अवबोधरसे=ज्ञानघने। यद्वा। भिदा=पञ्चमतभिदा यस्य तव अबोधकृता अज्ञानकृता तस्मिन् त्वयि विज्ञाते सति जीवानां सोऽबोधस्तन्मूलो वादभेदश्च न भवेद्, न संभवतीत्यन्वयः। कथंभूते त्वयि? तवोऽबोधात्परत्र परस्मिन्। पुनः। अवबोधरसे च। स्मरन्ति इत्यव वदन्तीति वक्तुमुचितेऽपि स्मरन्तीत्युक्त्या स्वाप्निकमिथ्यापदार्थस्मृतिवत् तेषां शास्त्रस्मृतिरपि अतात्त्विकी भ्रान्तिमूलैवेति सूचितम्। आरुपितैरित्यत्र गुणाभावेन च तेषूपदेषकेषु तदुपदेश्येषु च गुणाभावादन्धपरम्परा-न्यायेनोभयोरेव पातः संभवेद्, अतः सर्वैरेव विशेषतस्तार्किकैः कुतर्कादि विहाय भगवानेवाश्रयणीय इति ध्वनितम्। अद्वैतप्रतिपादनपरेयं वा ॥ १२ ॥ २६ ॥

---

तदेवम् असन्नोत्पद्यते त्रिगुणमयः पुरुषश्च न संभवति इति सिद्धम्, ततश्च जगत् जीवश्च ब्रह्मणः पृथङ् न स्त इत्युक्तं स्यात्। कथं तर्हि तयोः पृथक् सत्त्वेन प्रतीतिः? अत आहुः श्रुतयः सदिवेति।

( सृष्टिसत्यासत्यत्वपरेयम् )

**सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात् सदभिमृशन्त्यशेषमिदमात्मतयाऽऽत्मविदः।**
**न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम्॥२७॥१३॥**

**पद्यानुवादः**

**असदपि त्वयि सज्जगदाजनात्सदभियन्ति तदात्मतया विदः[3]।**
**कनककुण्डलवद् भगवन्निदं[4] तव सतो वशतो मितमात्मना ॥ १३ ॥ २७ ॥**

---

संक्षिप्तसार्थान्वयः –हे भगवन्! आमनुजात् मनुजं जीवमभिव्याप्य त्रिवृत् त्रिगुणात्मकम् अशेषम् इदं दृश्यमानं जगत् मनः मनःकल्पितम् असदपि त्वयि अधिष्ठाने सति सदिव विभाति न तु वस्तुतः सत्। आत्म-

---

१. अक्षय्यमिति श्रुतेः कर्मफलस्य स्वर्गादेश्चिरस्थायित्वश्रवणेऽपि क्षीयते इत्यग्रिमश्रुत्या तस्य नाशाङ्गीकारः सृष्टिप्रलययोः स्वीकारश्च, तेन कर्मफलस्य सत्यत्ववादिनो मीमांसका निरस्ताः।

२. अयं भावः –त्रिगुणमये हि जीवे गुणपरिणामरूपादृष्टवशादेव असतोऽपि वस्तुन उत्पत्तिरिति काणादमत सङ्गच्छेत। वस्तुतस्त्रिगुणमये हि जीवे ब्रह्मत्वासत्त्वसंभवात्पातञ्जलमतमपि सङ्गच्छेत। तथा वस्तुत-स्त्रिगुणमयस्यैव एक विंशतिदुःखसद्भाव इति गौतमीयमतं सङ्गच्छेत। एवं सांख्यमतेऽपि प्रकृतिगुण-सन्निधानादेव पुरुषस्य कर्तृत्वं गुणपरिणामरूपादृष्टवशादेव पुरुषस्य नानात्वसाध्यसिद्धिरिति तस्य त्रिगुण-मयत्वे एव तन्मतसङ्गतिः। तदुक्तं तैरेव 'तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः' इति। एव त्रिगुणमयस्यैव जीवस्य वास्तवकर्मफलभोगः संभवति न निर्गुण-स्येति तस्य त्रिगुणमयत्वे सत्येव मीमांसकमतसङ्गतिरिति संक्षेपः।

३. विद आत्मविदां सत् अभियन्ति सदिति जानन्ति।

४. अतः हे भगवन् इदं जगत् सतः सद्रूपस्य तव वशतो हेतुभूतान् आत्मना मितं परिमितम् परिपूर्णं व्याप्तमित्यर्थः।

विदस्तु अशेषम् इदम् जगत् आत्मतया सत् अभिमृशन्ति सदिति जानन्ति। हि यतः कनकस्य विकृतिं कटककुण्डलादिकं कनकार्थिनो न त्यजन्ति किन्तु तदात्मतया कनकरूपतया तद् गृह्णन्त्येव अतः स्वेन भगवता कृतमिदं विश्वं तत्र अनुप्रविष्टं जीवरूपं च आत्मतयैव अवसितं निश्चितम् आत्मविद्भिः।

हे भगवन्! मनः मनोमात्रविलसितमिदं त्रिवृत् त्रिभिर्गुणैर्वर्तते प्रवर्तते इति त्रिवृत् त्रिगुणात्मकमशेषमिदं जगत् असदेव त्यति अधिष्ठाने सति सदिव विभाति अधिष्ठानसत्तया सद्वत्प्रतीयते न वस्तुतः सदित्यर्थः। न केवलमिदमेव किन्तु आमनुजात् मनुजो जीवस्तमभिव्याप्येति जगतः जीवस्यापि च पृथक् प्रतीतिर्मनोमात्रविलसितेत्यर्थः। नन्वात्मविदमापि विश्वं सदेव स्फुरति, अतः कथमसत्? तत्राहुः— आत्मविदो ज्ञानिनस्तु। यद्वा। आत्मानं परमात्मानं श्रीकृष्णं विदन्तीति आत्मविदो भक्तास्तु अशेषं सम्पूर्णमिदं भोक्तृभोग्यात्मकं जगत् आत्मतया परमात्मस्वरूपतया सत् अभिमृशन्ति सदिति जानन्ति। आत्मकार्यत्वान्न ततः पृथगिति निश्चिन्वन्तीत्यर्थः। युक्तं चैतत्। हि यतः कनकस्य विकृति कटककुण्डलादिकं कनकार्थिनो न त्यजन्ति अपि तु तदात्मतया तद् गृह्णन्त्येवेति शेषः। अतः स्वकृतं स्वेन सृष्टमिदं जगत् तदनु पश्चात् प्रविष्टं जीवरूपं च आत्मतया तत्स्वरूपयैव अवसितं निश्चितं व्यासादिभिः। अनेन कथं तयोः सत्वेन प्रतीतिः? इति समाहितम्।

श्रीवल्लभाचार्यास्तु स्वेनैव कृतम् आत्मोपादानकम्। 'स आत्मानं स्वयमकुरुत' इति श्रुतेः। 'स्वेनैव चानुप्रविष्टम् तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः। अतो जगत् तत्र स्थिता च सामग्री भगवानिति। इदं सर्वमात्मतयैवावसितम्, ततः सर्वस्यापि ब्रह्मत्वात्कस्य दोषः कुत्र भवेत्? मतान्तर एव दोषाणां दोषत्वं ब्रह्मवादे तु ब्रह्मत्वमेवेति सर्वमविरुद्धम्। जीवानां ब्रह्मरूपत्वाद्दोषा अपि च मानसाः। जगच्च सकलं ब्रह्म ततो दोषः कथं हरौ' इत्याहुः ॥ १३ ॥ २७ ॥

---

ननु सत्यज्ञानानन्दादिस्वरूपेणैव भगवतः प्रतिपादनात् तस्य ज्ञानं सुकरमेव किं भक्त्येति जल्पतां दार्शनिकानामपि बन्धनं सूचयन्त्यः पुनर्भजनोत्कर्षमेव द्योतयन्ति श्रुतयः— तवेति।

( अभक्तदार्शनिकबन्धनपरेयम् )

**तव परि ये चरन्त्यखिलसत्त्वनिकेततया त उत पदाऽऽक्रमन्त्यविगणय्य शिरो निर्ऋतेः।**
**परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥१४॥२८॥**

**पद्यानुवादः**

**सकलजीवनिवासतया[1] जनास्तव भजन्ति जयन्ति मृतिं हरे।**
**अभजनान्विनिपात्य पशूनिव कविमुखान् विमुखानपि नह्यसि ॥१४॥**

---

संक्षिप्तसार्थान्वयः हे भगवन्! अखिलसत्वनिकेततया सकलजीवावासतया सर्वत्र त्वद्दृष्टयेत्यर्थः, ये तव परि ये त्वां परिचरन्ति सेवन्ते ते उत ते एव अविगणय्य तुच्छीकृत्य तिरस्कृत्य निर्ऋतेर्मृत्योः शिरः पदा आक्रमन्ति मृत्युं जयन्तीत्यर्थः। ये विमुखाः अभक्ताः तान् विबुधान् विशिष्टान् बुधान् दार्शनिकानपि गिरा वेदलक्षणाया वाचा पशूनिव त्वं परिवयसे बध्नासि। अतः खलु निश्चितमेतत् ये त्वयि कृतसौहृदाः ते सर्वं लोकमेव पुनन्ति किमुत आत्मानम्। अकृतसौहृदास्तु आत्मानमेव न पुनन्ति कुतो लोकम्।

---

१. तव जना भक्तजना ये त्वां भजन्ति ते मृतिं संसारं जयन्ति तरन्तीत्यर्थः। अभजनान् भक्तिशून्यान् अत एव त्वद्विमुखान् विद्वत्प्रमुखान् दार्शनिकानपि त्वं नह्यसि बध्नासि। णह बन्धने धातुः।

हे भगवन् ! तव भवतः, अखिलसत्त्वनिकेततया। अखिलसत्त्वान्येव निकेतो[1] निवासो यस्य तस्य भावस्तत्ता तया सर्वप्राणिनिवासतया ये तव ये त्वां कर्मणि षष्ठी परिचरन्ति सेवन्ते ते उत ते एव अविगणय्य अनादृत्य निर्ऋतेर्मृत्योः शिरः पदा पादेन आक्रमन्ति मर्दयन्ति मृत्युं जयन्तीत्यर्थः। ये पुनर्विमुखाः त्वदभक्ताः, तान् विशिष्टान् बुधान् दार्शनिकानपीति विश्वनाथः त्वं परिवयसे सर्वतो बध्नासि। कया। गिरा। त्वं ब्राह्मणः एवं कुरु, त्वं क्षत्रियः एवं कुरु इत्येवं वेदलक्षणया वाचा। अतः खलु एष निश्चितसिद्धान्तः, ये त्वयि कृतसौहृदाः सम्पादितस्नेहाः ते वासनामयसंसारात् आत्मानम् अन्यानपि पुनन्ति उद्धरन्तीत्यर्थः। अकृतसौहृदास्तु आत्मानमेव न पुनन्ति कुतोऽन्यानित्यर्थादायातम्। यद्वा। ये कृतसौहृदास्ते सर्वं लोकमेव पुनन्ति पवित्रयन्ति किमुत आत्मानम्। 'मद्भक्तियुक्तो भुवनं पुनाति' इत्येकादशोक्तेः। अतस्त्वद्भजनमेव मुख्यं न ज्ञानप्रयास इति भावः। गिरा परिवयसे इत्यत्र श्रुतिः 'तस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्'[2]। तस्येश्वरस्य विधिनिषेधलक्षणया दीर्घरज्जुतुल्यया वेदवाचा दामतुल्यैर्ब्राह्मणादिनामभिश्चेदं सर्वं जगत् सितं बद्धं ब्राह्मणस्त्वमेवं षट् कर्माणि कुरु क्षत्रियस्त्वं यजनादित्रयमित्याद्याज्ञया संबद्धमिति तदर्थः। परिचरन्तीति संबन्धे यच्छब्दव्यवधानमपि न दोषाय 'छन्दसि व्यवहिताश्च' इति नियमात्॥ १४॥ २८॥

---

त्वयि कृतसौहृदा इत्युक्तं तत्र त्वच्छब्दार्थं विवृण्वते—त्वमकरण इति।

( सर्वेश्वरत्वबोधनपरेयम् )

**त्वमकरणः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः।**
**वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः॥२९॥१५॥**

पद्यानुवादः

स्वयमनिन्द्रिय इन्द्रियचालको बलिनिदेशकरास्तव लोकपाः।
निखिलभूमिपतेरिव खण्डपाः प्रभवतो[3] भवतो भयशङ्किताः॥१५॥

---

संक्षिप्तसार्थान्वयः—हे भगवन् ! त्वम् अकरणः प्राकृतेन्द्रियरहितः स्वराट् स्वैरप्राकृतैरिन्द्रियै राजसे च अत एव अखिलकारकाणामिन्द्रियाणां शक्तीर्धारयति प्रवर्तयतीति तथाभूतः अत एव च अनिमिषाः देवाः तत्पूज्या विश्वसृजः ब्रह्मादयोऽपि अजया स्वस्वशक्त्या सह तव बलिं पूजा उद्वहन्ति कुर्वन्ति त्वदाज्ञां पालयन्तीत्यर्थः। स्वयं च मनुष्यैर्दत्तं बलिं समदन्ति। यत्र कर्मणि येऽधिकृता नियुक्ताः ते तत्तु कर्म भवतः चकिताः भीताः सन्तः विदधति कुर्वन्ति। वर्षभुजः खण्डमण्डलपतयः अखिलक्षितिपतेः यथा बलिं समर्पयन्ति तदाज्ञां पालयन्ति च तद्वत्।

हे भगवन् ! त्वम् अकरण इन्द्रियसम्बन्धरहितोऽपि अखिलकारकशक्तिधरः। अखिलानां प्राणिनां यानि कारकाणि इन्द्रियाणि तेषां शक्तीर्धारयति प्रवर्तयतीति तथाभूतस्त्वम् अखिलेन्द्रियशक्तिसञ्चालक इत्यर्थः। यतः स्वराट् स्वेनैव तेजसा अप्राकृतशक्त्या राजसे दीप्यसे तथा। तथा स्वतः सिद्धज्ञानशक्तिमांस्त्वं नेन्द्रियापेक्षा

---

१. 'कित् निवासे' इत्यस्मात्।

२. सितं बद्धम्। षिञ् बन्धने इत्यस्मात् क्तः।

३. प्रभवत्यस्मात्सर्वमिति प्रभवः ऋदोरप्। तस्मात्पञ्चम्यन्तात्तसिल् प्रभवतः सर्वसमर्थात् भवतः। शेषं स्पष्टम्।

तवेत्यर्थः । यद्वा । स्वाभाविकैः शक्तिज्ञानानन्दादिभिर्गुणैः राजसे इति तथा । अत एव अनिमिषा देवाः तत्पूज्या विश्वसृजो ब्रह्मादयोऽपि अजया स्वस्वशक्त्या सह तव तुभ्यं बलिं पूजोपहारम् उद्वहन्ति स्वयं च मनुष्यैर्दत्तं बलिं हव्यकव्यादिलक्षणं समदन्ति भक्षयन्ति । किञ्च त्वया यत्र कर्मणि येऽधिकृता नियुक्तास्ते तत्तु तच्च कर्म विदधति कुर्वन्ति । कथंभूताः । भवतस्त्वत्तश्चकिताः भीताः सन्तः ।

अत्र दृष्टान्तः यथा वर्षभुजः खण्डमण्डलपतयः अखिलक्षितिपतेश्चक्रवर्तिनो बलिं समर्पयन्ति तदाज्ञां च पालयन्ति तद्वदित्यर्थः । करणं कारकं चात्रेन्द्रियवाचकम् । करणं कारकं चेमे इन्द्रियेऽपि स्मृते पदे' इति निरुक्तेः ।

केचित्तु हे अजय ! भक्तिहीनैर्नानाविधवैदिकादिसाधनैः तत्सम्पन्नैः साधकैर्वा न जीयते इत्यजयस्तत्सम्बुद्धौ । 'नाहं वेदैर्न तपसा' भक्त्या त्वनन्यया शक्य' इति च गीतोक्तेः । त्वमकरण प्राकृतेन्द्रियरहितः 'अपाणिपादो जवनः' इति श्रुतेः । तर्हीमानि मन्नेत्रश्रोत्रादीनि कुतस्त्यानि तत्राहुः—स्वैः स्वाविकैरप्राकृतैः नेत्रश्रोत्रादीन्द्रियैः राजसे इति स्वराट् । अत एव अखिलकारकशक्तिधरः । खिलानि तुच्छानि प्राकृतानीत्यर्थः अखिलानि खिलभिन्नानि चिदानन्दमयस्वरूपभूतानीन्द्रियाणि शक्तीः प्राकृतेन्द्रियशक्तीश्च धरतीति तथा सः । न त्वं प्राकृतेन्द्रियो नाप्यनिन्द्रियः किन्तु पराख्यस्वरूपशक्तिमयेन्द्रियः सन् प्राकृतेन्द्रियेष्वपि श्रवणादिशक्त्याधायक इत्यर्थः । 'चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्' 'परास्य शक्तिर्विविधैव श्रूयते' 'स्वाभाविको ज्ञानबलक्रिया च' 'विश्वतश्चक्षुरुत विश्वतो मुखः' इत्यादिश्रुतेरित्याहुः शेषं पूर्ववत् ॥ १५ ॥ २९ ॥

---

इन्द्रियप्रवर्तकत्वादेव न केवलमीश्वरमजनमपि तु तदुत्पन्नत्वेन तत्परतन्त्रत्वादपीत्याशयेनाहुः श्रुतय—स्थिरेति ।

( जीवसृष्टिपरेयम् )

**स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्त ततः ।**
**न हि परमस्य कश्चिदपरो न परश्च भवेद् वियत इवापदस्य तव शून्यतुलां दधतः ॥३०॥१६॥**

**पद्यानुवादः**

**यदि विहार उदीक्षणतोऽजया तव भवन्ति चराचरयोनयः ।**
**निरुपमस्य समस्य विमुक्त कोऽप्यनपरो न परो वियदात्मनः ॥१६॥**

---

संक्षिप्तसार्थान्वयः—हे विमुक्त[1] ! ततः अजातः परस्य असङ्गस्य तव यदि अजया विहारो भवति तर्हि स्थिरचरजातयो स्थावरजङ्गमजातिमन्तो जीवाः स्युः भवन्ति । कथंभूताः । उदीक्षया ईक्षणलेशेन उत्थनिमित्तयुजः उत्थानि उत्थितानि निमित्तानि लिङ्गशराराणि तैर्युज्यन्ते तथाभूताः । हि यतः वियत आकाशस्य इव अपदस्य मनोवचनागोचरस्य परमस्य परमकारुणिकस्य तव कश्चित् अपरः स्वीयः परः परकीयश्च न भवेत् न संभवति । कथंभूतस्य तव शून्यतुलां शून्योपमां दधतः अतिसूक्ष्मस्य ।

हे विमुक्त ! मायातीत भगवन् ! यदि सृष्टिकाले तव अजया मायया सह उदीक्षया ईक्षणलेशेन विहरः विहारो भवति तर्हि स्थिरचरजातयः स्थावरजङ्गमजातिमन्तो जीवाः स्युः । कथंभूताः । उत्थानिमित्तयुजः । उदीक्षयैव उत्थानि उत्थितानि यानि निमित्तानि प्रारब्धकर्माणि तद्युक्तलिङ्गशरीराणि वा तैर्युज्यन्ते तथाभूताः ।

---

१. हे विमुक्त नित्यमुक्त भगवन् तव अजया मायया सह यदि विहारस्तदेत्यन्वयः । अपरः परकीयः न भवतीति अनपरः स्वीयः परः परकीयश्च कश्चिदपि न भवेत् ।

कथंभूतस्य तव। ततोऽजातः मायातः परस्य दूरे वर्तमानस्य असङ्गस्येत्यर्थः। अत एव हे विमुक्तेत्यस्य सङ्गतिः। ननु मदिच्छयैव ते भवन्तु किं निमित्तोत्थापनेनेत्याशङ्क्याहुः नहीति। पर उत्कृष्टः दयालुर्मा न विद्यते यस्मात्तस्य परमस्य। परा सर्वोत्कृष्टा मा कृपाशक्तिर्यस्येति वा वरमस्य परमदयालोस्तव कश्चिद् अपर आत्मीयो न, षरः परकीयश्च न भवेत् न संभवति। हीति निश्चितमेतत्। कुतः। वियत इव आकाशवत्समस्य अत एव अपदस्य वैषम्यानास्पदस्य। कुतः। शून्यतुलां दधतः शून्यस्य तुलामुपमां सादृश्यं धारयतः। अयं भावः।

यथा ब्राह्मणचाण्डालयोर्बाह्याभ्यन्तरे वर्तमानस्याप्याकाशस्य न तयोरुत्कर्षापकर्षाभ्यां संबन्धस्तद्वत्तवापि। एतेन त्वयि वैषम्याभावः सृष्टौ च वैषम्यमतो निमित्तोत्थापनस्यावश्यकत्वमिति सूचितम्। यद्वा। वियत इव अपदस्य इयत्ताज्ञानाविषयस्य। तत्र हेतुः। शून्यतुलां दधतः निरतिशयसूक्ष्मस्येत्यर्थः। 'अणोरणीयान्' इति श्रुतेः।

यद्वा। शून्यतुलां शून्योपमां दधतः अपदस्य निरालम्बनस्य वियत आकाशस्येव समस्येत्यन्वयः। अयं भावः—यथा आकाशस्य दूरं दूरतरं दूरतमम् अल्पं अल्पतरं अल्पतमं च समुत्पतन्तं खगसमुहं प्रति साम्यं सर्वस्यैव गगनस्य निरालम्बनत्वादिना साम्यात् तथा तवापि यथाशक्ति भजतः भक्तान् प्रति साम्यमेव न वैषम्यमिति। परे तु शून्यतुलां दधतः वियत इव अपदस्य सर्वागोचरस्य। यद्यपि वियत् खलु वस्त्वेव तथापि न केनचिद् ग्रहीतुं शक्यते तद्ग्रहणशक्त्यभावात् एवं सर्वागोचरस्वभावगुणो भवानपि न गृहते भक्त्यभावात् तस्माज्ज्ञानाग्रहं त्यक्त्वा भक्तिरेव करणीया। 'सुप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययम्' इत्यादिश्रुतेरित्यर्थमाहुः। विहर इति। अत्र विहरणमिति व्युत्पत्त्या विहार इति वक्तव्ये वृद्ध्यभावेन बहिरङ्गशक्त्या सह दृक्पातेन कादाचित्कोऽल्पकालिक एव वृद्धिरहितो विरहः अन्तरङ्गशक्त्या स्वप्रेयस्या तु सर्वाङ्गीणः सार्वकालिकोऽन्योन्यप्रेमाश्लेषयोर्वृद्धिकरः विहार इति सूचितम्। अथवा विहरतीति व्युत्पत्त्या पचाद्यच् अतो मूले न व्याकरणदोषः॥ १६॥ ३०॥

---

ननु स्थिरचरजातीनां त्वत्त एवोत्पन्नत्वादन्तर्यामितया नियन्तृत्वमपि तवैव तदा स्यात् यदा तार्किकाभिमतं जीवस्य विभुत्वादिरूपं खण्डितं स्यादन्यथा समत्वान्नियन्तृत्वं दुर्घटम् अतः पूर्वं तन्मतं खण्डयन्त्यस्तस्य नियन्तृत्वं सोपपत्तिकं श्रुतयो द्रढयन्ति—अपरमिता इति।

( तार्किकमतखण्डनपरेयम् )

**अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा।**
**अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत् सममनुजानतां यदमतं मतदुष्टतया॥३१॥१७॥**

पद्यानुवादः

बहुविभुध्रुवता[1] यदि जीवगा तव न शासकताऽजनि यद्यतः।
तदिह तस्य नियन्तृ विजानतामविदितं विदितं यदजानताम्॥१७॥

---

संक्षिप्तसार्थान्वयः—हे ध्रुव! तनुभृतो जीवा यदि अपरमिताः ध्रुवाः सर्वगताश्च स्युः तर्हि तेषां समत्वात् शास्यता न घटते इति कृत्वा नियमो नियमनं त्वया न स्यात् इतरथा समत्वाभावे च घटते। कुतः।

---

१. बहुत्वं विभुत्वं ध्रुवत्वं च यदि जीवगतं स्यात्तदा शासकता नेत्यन्वयः। शेषं स्पष्टम्।

यन्मयम् उपाधितो यद्विकारप्रायं जीवाख्यं वस्तु अजनि तत् अविमुच्य अपरित्यज्य समं ब्रह्मैव सर्वस्य नियन्तृ भवेत्। कथमूतं तत्। अनुजानतां वयं ब्रह्म जानीम इति वदतां वेदान्तिनां यत् अमतम् अज्ञातमेव दुर्ज्ञेयत्वात्। कथम्। मतदुष्टतया मतस्य ज्ञातस्य दोषग्रस्ततया। यद् ज्ञातं तद् ब्रह्म नेत्यर्थः।

हे ध्रुव नित्यमूर्ते! भगवन्! तार्किकमते तनुभृतो जीवा अपरिमिता बहवः ध्रुवा नित्याः सर्वगताः व्यापकाश्च यदि स्युः तर्हि तेषां समत्वात् शास्यता न घटते इति कृत्वा त्वया कृतः नियमः नियमनं न स्यात्। इतरथा अन्यथा तु अपरिमितत्वे अध्रुवत्वे असर्वगतत्वे च घटेत। यद्वा। तर्हि तेषां त्वत्साम्यात् शास्यतेति नियमो न स्यात्। इतरथा समत्वाभावे च न नियमः किन्तु स्यादेवेति काकुः। अथवा। शास्यता न स्यात्। भवत्वेवं का हानिरिति चेत्तत्राहुः—'शास्ता विष्णुरशेषस्य' इति शिष्टैः प्रमाणितो यो नियमः स च नेतरथा कदाप्यन्यथा न भवतीत्यर्थः। कथम्। यन्मयम् उपाधितो यद्विकारप्रायं यत् जीवाख्यमजनि जातं तत् समं कारणरूपं ब्रह्मैव तस्य स्वविकारस्य नियन्तृ नियामकं भवेत्। किं कृत्वा। अविमुच्य कारणतया तत् अपरित्यज्य। 'निर्दोषं हि समं ब्रह्म' इति गीतोक्तेः। यद्वा। मा राधा तया सहितं सममिति श्लेषोऽपि व्याख्येयः। कथमूतं तत् ब्रह्म। अनु अनुगतेन ज्ञानाहङ्कारेण जानतां 'वयं ब्रह्म जानीम' इति प्रलपतां वेदान्तिनां यत् अमतमज्ञातमेव अविषयत्वात्। कुतः। मतस्य ज्ञातस्य दुष्टतया घटादिज्ञानवदनात्मत्वेन 'अतोऽन्यदार्तम्' इति श्रुतेर्मिथ्यात्वापत्तिरूपदोषग्रस्ततया। यद् ज्ञातं तद् ब्रह्म नेत्यर्थः। तथाहि-यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विज्ञानतां विज्ञातमविजानताम्' इत्यादिश्रुतेः।

वस्तुतस्तु भक्तिपक्षेऽप्यस्य योजना कार्या तथाहि—यस्य येन भक्तेन अकारो वासुदेवस्तेन रूपेण मतं ब्रह्म ज्ञातं निश्चितमित्यर्थः तस्य मतमनुभूतिविषयः। यस्य येन शुष्कवेदान्तिना स्वयं देहाध्यासवताऽपि केवलं शब्दत एवाहं ब्रह्मास्मीति आत्मप्रवञ्चनद्वारा मतं स कोटिजन्मस्वपि न वेद भक्तिशून्यान्तःकरणत्वादित्यर्थः। फलितमाह-एवं विशिष्टेनाहङ्कारेण जानतां शुष्कवेदान्तिनाम् तत् अविज्ञातम् कदापि न ज्ञातम्। यद्वा। अल्पमपि ज्ञातं नेत्यर्थ। अत्राल्पार्थे नञ्। 'तदन्यत्वं तदल्पता' इति कारिकोक्तेः। अकारो वासुदेवस्तस्य विशिष्टेन भजनेन जानतां भक्तानां तु विशेषेण पूर्णरूपेण ज्ञातमिति गूढार्थः। अद्वैतवेदान्तिनस्तु वाङ्मनसागोचरत्वेन तन्निरूप्य तद्रसास्वादहीनाः सन्तो मुह्यन्ति तेषामेवायं श्रुतरादेशः भक्तिराश्रयणीयेति तत्त्वम्। तार्किका हि जीवस्वरूपमपरिमितादिरूपेण निर्दिशन्ति तस्योपपत्तिस्तु एवं ज्ञेया। तथाहि एकाऽविद्या एक एव जीवस्तर्हि एकमुक्तौ सर्वमुक्तिप्रसङ्गः यदि च नानाऽविद्यास्तर्हि तस्यैवांशान्तरेण संसारनिवृत्त्यभावादनिर्मोक्षः एकयाऽविद्यया मुक्तो जीवः पुनरन्यया बद्ध इत्थमनिर्मोक्षः स्यात् तस्मादपरिमिता जीवा मन्यन्ते। किञ्च तेषां जीवानां यदि अणुत्वं सूक्ष्मत्वं 'सूक्ष्माणामप्यहं जीव,' इति भगवदुक्तेः तर्हि देहस्य स्थूलत्वेन सर्वव्यापिचैतन्याभावात्। एवंभूतसूक्ष्मस्य स्थूलदेहैकप्रदेशे पिपीलिकादिस्पर्शजं चैतन्यं कथं स्यात् तस्मात्सर्वगताश्च मन्यन्ते। एवं देहपरिमाणत्वे च देहस्य मध्यमं हृदयं दशाङ्गुलपरिमाणम् 'अत्यतिष्ठद्दशाङ्गुलम्' इति श्रुतेः। हृदयपरिमाणानां जीवानां सावयवत्वादनित्यत्वं स्यात् तस्मात्परिमाणाभावाद् ध्रुवाः नित्याश्चेति केचन तार्किकाः मन्यन्ते तन्न सत् बन्धमोक्षप्रसङ्गे एकस्मिन्न बद्धे मुक्ते च सर्वबन्धमोक्षरूपो दोषो नास्ति। अविद्याभेदेन तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्थासंभवात्। ईश्वरस्य तु समष्ट्युपाधेरखण्डितत्वस्येश्वरत्वात् तस्य विद्याशक्तिप्रधानत्वान्न केनाप्यशेन संसारशङ्का। किञ्च श्रुतिषु आत्मैवयं प्रसिद्धमत इमं तार्किकपक्षं वेदो न सहते इति ॥ १७ ॥ ३१ ॥

ननु भगवतः सकाशाज्जीवानां जन्म तस्य नियामकत्वं चोक्तं तथा सति जीवानामनित्यत्वापत्त्या [1]कृतनाशाकृताभ्यागमादिदोषापतिरित्याशङ्क्य औपाधिकमेव जन्म न वस्तुतः इत्याहुः श्रुतयः—न घटत इति ।

( निरुपाधिलयपरेयम् )

**न घटत उद्भवः प्रकृतिपुरुषयोरजयोरुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ।**
**त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥३२॥१८॥**

पद्यानुवादः

प्रकृतिपूरुषयोगभवा इमे न च पृथग्जलबुद्बुदवज्जनाः ।
त्वयि विशन्ति रसा इव ते मधुन्युपरमे परमे सरितोऽर्णवे ॥ १८ ॥

संक्षिप्तसार्थान्वयः—हे भगवन् ! प्रकृतिपूरुषयोः उद्भवो जन्म न घटते न सङ्गच्छते । कुतः अजयोः जन्मरहितयोः । यद्यप्येवं तथापि असुभृतो जीवाः जलबुद्बुदवत् उभयमुजा प्रकृतिपुरुषसंयोगेन भवन्ति जायन्ते । यतो न वास्तवं जन्म ततो हेतोः ते इमे जीवाः विविधनामगुणैः सह त्वयि लिल्युः । तत्र दृष्टान्तद्वयम्—सुषुप्ति-प्रलययोः मधुनि अशेषरसा इव । मुक्तौ तु अर्णवे सरित इव लीयन्ते । उपाधिजन्मलयाभ्यामेव जीवानां जन्ममरणे भवतः न वस्तुत इति ।

यदि प्रकृतेर्जीवरूपेणोद्भवस्तर्हि प्रकृतेर्जडत्वात् जीवानां जडत्वापत्तिः । यदि च पुरुषस्य जीवरूपेणो-द्भवस्तर्हि निर्विकारपुरुषस्य विकारित्वप्रसक्तिः । एवं प्रकृतिपुरुषयोरुभयोरपि उद्भवो जन्म न घटते न सगच्छते । कुतः । अजयोः जन्मशून्यत्वात्तयोरित्यर्थः । 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति गीतोक्तेः । तर्हि कथं भवन्ति तत्राहुः—उभयस्य प्रकृतेः पुरुषस्य च युजा संयोगेनैव असुभृतः प्राणाद्युपाधिमन्तो जीवाः जायन्ते विविधनामगुणैः सह । जलबुद्बुदाः केवलेन जलेन अनिलेन वा न भवन्ति किन्तु ताभ्यां मिलिताभ्यामेव तद्वत् । तस्माज्जीवानामुपाधिजन्मनैव जन्म न वस्तुतः इत्युक्तम्, उपाधिलयेनैव पुनर्ब्रह्मणि तेषां लयश्रवणादपि न वास्तवं जन्मेत्याहुः—त्वयीति । यतो न वास्तवं जन्म ततो हेतोः ते इमे जीवा विविध-नामगुणैः सह परमे परा सर्वोत्कृष्टा मा शक्तिर्यस्य तस्मिन् परमे परमकारणे त्वयि श्रीकृष्णे लिल्युः लीना बभूवुः तत्र लयश्च द्विविधः । एकः सुषुप्तिप्रलययोः । तत्र दृष्टान्तः—मधुनि अशेषरसा इव । द्वितीयश्च मुक्तौ । तत्र दृष्टान्तः—अर्णवे सरित इवेति । अत्रेदं तत्त्वम् । यथा मधुमक्षिकाभिर्नीता अनेकपुष्परसाः मधुनि लीनाः सन्तोऽमुकस्य पुष्पस्यायं रस इति विशेषतोऽनुपलक्ष्यमाणा अपि सामान्यत उपलक्ष्यन्ते एव तद्वत्प्रकृतेऽपि प्रारब्धकर्मनीता जीवास्त्वयि लीनाः सन्तः सामान्यतोऽवशिष्टसंस्कारा लक्ष्यन्त एव यतः तदानीं संसारकारणी-भूताया अविद्याया विद्यमानत्वात् । अत एव जीवानां पुनर्जन्म । द्वितीयो दृष्टान्तः यथा मुक्तौ । तत्र ज्ञानेना-विद्याया अपि विलयात्तदा निरुपाधौ परमकारणे त्वयि सर्वे जीवाः समुद्रे गङ्गादिनद्य इव सामान्यविशेषा-भ्यामनुपलक्ष्यमाणा अनवशिष्टसंस्कारा एव लीयन्ते । अत एव न तेषां पुनर्जन्मेत्यर्थः । एवञ्चाविद्योपहृता-नामपि जीवानामनादित्वाद् वास्तवजन्ममरणाभावान्न कृतनाशाकृताभ्यागमादिदोषापत्तिरित्यवधेयं सुधीभिः ।

केचित्तु । हे प्रभो ! प्रकृतिपूरुषयोः जगतः मातापित्रोः श्रीसीतारामयोः, श्रीराधाकृष्णयोः, श्रीरुक्मि-

1. कृतानां कर्मणां विनैव फलभोगं नाशः अकृतानां पूर्वमसंपादितानामेव फलदानाय अभ्यागमः प्राप्तिश्च स्यादिति दोषः ।

णीवासुदेवयोर्वा उद्भवो जन्म न घटते । कुतः । अजयोः नित्यसिद्धत्वेन जन्मरहितयोः । इमे जीवास्तु ततः प्रागुक्तात् नियन्तुरीश्वरात् हेतुभूतात् उभययुजा मातापितृसंयोगेन जलवायुसंयोगजन्यजलबुद्बुदवत् असुभृतः क्षणविनाशिदेहधरा भवन्ति । एवंभूता अपि केचित् कृतपुण्यपुञ्जाः ते तव [१]विविधनामगुणैः श्रुतैः कीर्तितैश्च परमे मधुनि परममाधुर्यरूपे त्वयि लिल्युः लयं प्रापुः । त्वच्चरणकमलमाधुर्यानुभवं चक्रुः ।

ननु नानाभेदाः प्राणिनः कथं समानफलभाजस्तत्र दृष्टान्तमाहुः यथा अशेषरसा मधुरक्षारादिविविध-जलाः सरितः अर्णवे लिल्युस्तद्वदित्यर्थः । अभीष्टप्राप्तौ मार्गनिरोधकाभावेऽप्ययं दृष्टान्तो बोद्धव्यः । यद्वा । हे उभय ! युगलमूर्ते श्रीराधाकृष्ण ! असुभृतो देवमनुष्याद्या जीवा अजयोः आत् वासुदेवात् त्वत्तो जातयोः प्रकृतिपुरुषयोर्युजा संयोगेन जायन्ते । यथा जलवायुसंयोगेन बुद्बुदास्तद्वत् । ततो भक्तसंगात् ते इमे जीवा अशेषरसाः त्वयि पूर्णस्नेहाः सन्तः युगलमूर्तौ त्वय्येव विविधनामगुणैः सह लिल्युः समुद्रे नद्य इव । कथंभूते त्वयि । परा मा शोभा यस्य तस्मिन् अत एव मधुनि अमृतादपि मिष्टतमे ॥१८॥३२॥

---

एवं जीवानां जन्म ततः कर्माणि पुनस्तत्र लय इति संसारचक्रे परिभ्रमणमुक्तमिदानीं तन्निवृत्तये भयप्रदर्शनपूर्वकं भगवदनुरागमुपदिशन्त्यः श्रुतयः स्तुवन्ति—नृषु तवेति ।

( भगवदनुरागपरेयम् )

**नृषु तव मायया भ्रमममीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ।**
**कथमनुवर्ततां भवभयं तव यद् भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥ ३३॥१९॥**

पद्यानुवादः

भ्रममवेत्य हरे भुवि वादिनां विदधते तव भक्तिमनीश्वराः ।
सृजति कालबली विमुखेषु ते भयमसौ यमसौख्यकरोऽनिशम् ॥ १९ ॥

---

संक्षिप्तसार्थान्वयः—हे भगवन् ! अमीषु वादिषु नृषु तव मायया भृशं दुस्तरं भ्रमम् अवगत्य ज्ञात्वा सुधियः अनुप्रभवं प्रतिजन्मैव त्वयि भावं दधति प्रेम कुर्वन्ति । कथंभूते त्वयि अभवे भवनिवर्तके । यत् यतः त्रिणेमिः कालरूपा तव भ्रुकुटिः अभवच्छरणेषु भवच्छरणरहितेषु अभक्तेष्वित्यर्थः । मुहुः भयं सृजति करोति । अतः तव त्वामनुवर्ततां भक्तानां भवभयं संसारभयं कथं न कथमपीत्यर्थः ।

हे भगवन् ! अमीषु पूर्वोक्तेषु नृषु नानावादिषु तव मायया भ्रमं भ्रान्त्यैव नानामतकल्पनम् अवगत्य ज्ञात्वा सुधियो विवेकिनः अभवे संसारनिवर्तके त्वयि भृशमतिशयेन भावं भक्तिं दास्यादिभावं दधति कुर्वन्ति । अनुप्रभवं प्रतिजन्मैव । यद्वा । कथंभूतं भावम् । अनु अनुक्षणं प्रभव उल्लासो यस्मिन् तम् । यद्वा । अनुप्रभवं निरन्तरं प्रवर्धमानम् । यद्वा । अनु अनन्तरं प्रभवः भवतः प्रादुर्भावो यस्मात्तं शीघ्रं त्वत्प्रापकमित्यर्थः । स्वामिचरणास्तु अनु अनु प्रभवो जन्म यस्मिन् तमिति भ्रमविशेषणमाहुः । यद्वा । त्वयि भावं श्रवणकीर्त-नादिना मनोवृत्तिं दधति स्थापयन्ति । यत् यस्मात् तव भ्रुकुटिः कालरूपा अभवच्छरणेषु न भवान् शरणं रक्षक आश्रयो वा येषां तेषु त्वद्भजनविमुखेष्वेव भयं जन्ममरणादिदुःखं मुहुः वारं वारं सृजति उत्पादयति अतस्त्वामेव अनुवर्तमानानां भजतां भक्तानां भवभयं संसारभयं कथं स्यान्न कथंचिदपीत्यर्थः । कथंभूता

---

१. पृथक् न भवन्ति किन्तु मिलिताभ्यामेव यथा जलबुद्बुदाः । मधुनि रसा इव अर्णवे सरित इव त्वयि विशन्तीत्यन्वयः । परमे परमकारणरूपे त्वयि । कथंभूते । उप समीपे रमा यस्य तस्मिन् ।

भ्रुकुटिः । थिणेमि. । त्रयो गुणा नेमयश्चक्रधारावदावरका यस्यां सा । यद्वा । तिस्रो नेमयः भूतभविष्यद्वर्तमानाख्या यस्याम् । चक्रवर्ती तु भवभयं तेषां कथमनुवर्तताम् अनुवृत्तं भवतु । लोट् विद्यारम्भदशायामेव तस्यापगमादित्याहु । केचित्तु अमीषु भगवदाराधनपरेष्वपि नृषु पञ्चायतनमध्ये को देवः पूज्यः सेव्यश्चेति भ्रमं मनोभ्रमणात्मकं संशयमवगत्य प्राप्य तेषां निश्चयार्थं सुधियः श्रीनारदाद्यास्तव मायया कृपया । 'माया दम्भे कृपायां च' इति विश्वः । अभवे भवनिवर्तके त्वय्येव सर्वदेवेभ्यो मुख्यतया भावं सख्यदासादिकं प्रतिजन्म प्रतिक्षणं कुर्वन्तीत्यर्थं इत्याहुः ॥ १९ ॥ ३३ ॥

---

स च भगवति भावो गुरूपदेशसाध्यं मनोनिग्रहं बिना दुर्लभ इत्याहुः श्रुतयः—विजितेति ।

( गुरुशरणागतिद्योतनपरेयम् )

**विजितहृषीकवायुभिरदान्तमनस्तुरगं य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।**
**व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥३४॥२०॥**

पद्यानुवादः

विजितवायुभिरप्यदमं मनो जगति ये विनियन्तुमिहोद्यताः ।
अकृतनाविकवद्विपदब्धिगास्तव पदे वपदे[1] च गुरोर्विना: ॥ २० ॥

---

संक्षिप्तसार्थान्वयः—हे अज ! ये गुरोः चरणं समवहाय ईषदप्यनाश्रित्य विजितहृषीकवायुभिः निरुद्धेन्द्रियप्राणैः योगिभिरपि अदान्तमनस्तुरगम् अदान्तं दुर्निग्रहं वशीकर्तुमशक्यं मनोरूपमश्वं यन्तुं यतन्ति निरोद्धुं प्रयतन्ते ते उपायखिदः उपायेषु क्लिश्यन्तः व्यसनशतान्विताश्च सन्तः इह संसारे सन्ति तिष्ठन्ति । कुत्र के इव ? जलधौ अकृतकर्णधराः अकृतनाविका वणिज इव । अतिलोलम् अतिचञ्चलम् इति तुरगविशेषणम् ।

हे अज ! जन्मादिरहित हे भगवन् ! विजितानि हृषीकाणि इन्द्रियाणि वायुः प्राणवायुश्च यैस्तैः योगिभिरपि अदान्तं दुर्निग्रहं मनोरूपं तुरगं ये नराः गुरोश्चरणं समवहाय अनाश्रित्य । यद्वा । कर्णधारस्य गुरोस्तव चरणपरिचर्यां समवहाय आसनबन्धाद्यैरुपायैः खिद्यमानाः तैरेव यन्तुं निरोद्धुं यतन्ते यत्नं कुर्वन्ति ते व्यसनशतान्विताः असंख्यविपदाकुलाः सन्तः इह संसारसमुद्रे सन्ति तिष्ठन्ति । संसारसमुद्रे निमग्ना भवन्तीत्यर्थः । अत्र दृष्टान्तः-यथा; अकृतकर्णधरा अस्वीकृतनाविका वणिजः जलधौ सन्ति निमज्जन्ति तद्वत् । कर्णं धरतीति कर्मण्यण् ?[2] छन्दऽनुरोधेन ह्रस्वत्वम् । वस्तुतस्तु धरतीति धरः कर्णस्य धराः कर्णधराः । कर्णः नौपृष्ठस्थचालनकाष्ठम् । कथंभूतं तुरगम् ? अतिलोलम् अतिचञ्चलम् । 'कर्णधारस्तु नाविकः' इत्यमरः । उक्तञ्च श्रीवल्लभाचार्यैः 'अदान्ते मनसि ज्ञाते योगार्थं न यतेद् बुधः । गुरुसेवापरो भूत्वा भक्तिमेव सदाभ्यसेत् ।' इति । इन्द्रियैः प्राणैश्च विजितैः क्रियमाणैर्यैः यन्तुं यतन्त इति वा । एतेन योगमेव ये मुख्यं साधनं मन्यन्ते तेऽपि निरस्ताः । 'युञ्जनानामभक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन् ! दृश्यते पुनरुत्थितम् ॥' इति वचनात् ॥ २० ॥ ३४ ॥

---

१. वपनं वपः घञर्थे कः । बन्धनभूतसंसारबीजानां कर्मणां वपनम् आसक्तिपूर्वकमनुष्ठानं तद्यतः खण्डयतः । यद्वा । अकारपदच्छेदेन अवपदे रक्षास्थाने तव पदे विना द्वितीयाद्विवचनम् ।

२. कर्णधार इति स्यात् ।

गुरूपदेशो हि संसारे वैराग्यं जनयित्वा त्वयि भावम् उत्पादयति, तच्च वैराग्यं भक्तेरङ्गमित्याहुः श्रुतयः स्वजनेति ।

( वैराग्यबोधनपरेयम् )

**स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।**
**इति सदजानतां मिथुनतो रतये चरतां सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥३५॥२१॥**

पद्यानुवादः

तव पदं श्रयतो हृदयं गते भवति किं फलमस्य धनादिभिः ।
विषयिणः किमु वस्त्विह तोषयेदसदजासदजानदनात्मनः[1] ॥ २१ ॥

---

संक्षिप्तसार्थान्वयः—हे भगवन् ! श्रयतः त्वामाश्रयतः पुंसः त्वयि आत्मनि परमात्मनि सति हृदि स्फुरिते सति नृणामेतैः तुच्छैः स्वजनादिभिः कि फलं किं प्रयोजनम् ? न किमपि । इति सत् त्वन्नित्यसुखमजानतां मिथुनतो[2] मिथुनीभूय रतये रत्यर्थं चरताम् अजानतः चरतः पुरुषान् इस संसारे स्वजनादिषु मध्ये को नु अर्थः विषयः सुखयति ? न कोऽपि । कथंभूते इह संसारे ? स्वविहृते स्वत एव नश्वरे । पुनः । स्वनिरस्तभगे गतसारे च ।

हे भगवन् ! त्वां श्रयतः आश्रयतः सेवमानस्य पुंसः त्वयि आत्मनि परमात्मनि श्रीकृष्णे सति हृदि स्फुरिते सति नृणां तुच्छैरेतैः स्वजनादिभिः किं प्रयोजनम् ? न किमपीत्यर्थः । कथंभूते त्वयि ? सर्वरसे सर्वे रसाः सुखानि विद्यन्ते यस्मिन् तस्मिन् सर्वसुखनिधाने । इति इत्थं सत् त्वत्संबन्धि नित्यसुखम् । यद्वा । सत् परमार्थस्वरूपं त्वामजानताम् अत एव मिथुनतः स्त्रिया सह मिथुनीभूय रतये विषयोपभोगाय गृहे चरतां वर्तमानानां नृणामत्रापि योज्यम् । उभयत्र कर्मणि षष्ठयौ । अजानतः चरतः नॄन् इह संसारे स्वजनादिषु मध्ये अन्यतमः को नु अर्थः सुखयति आनन्दयति ? न कोऽपीत्यन्वयः । तस्मादात्मैव सर्वरस इत्यन्वेष्टव्य इत्यर्थः । कथंभूते संसारे ? स्वविहते स्वत एव विहते कालग्रस्तत्वान्नश्वरे । 'सर्वं चेदं क्षयिष्णु यथेमे दंशमशकादयः' इति श्रुतेः । पुनश्च । स्वनिरस्तभगे गतसारे च । यद्वा स्वेन निरस्तं भगमैश्वर्यादि यस्मात् तथाभूते । स्वविहतः स्वनिरस्तभग इति प्रथमान्तपाठे तु कोऽर्थ इत्यस्य विशेषणद्वयम् । स्वेनैव परिणामादिमत्त्वेन विहतः । स्वरूपेणैव जडत्वादिना निरस्तसारश्च । स्वजनाः बन्धुमित्रादयः । सुताः पुत्राः पुत्र्यश्च । आत्मा देहः । दारा भार्या । धनं स्वर्णरत्नादिसंपत् । धाम गृहम् । धरा पृथ्वी । असवः प्राणाः । रथशब्दो वाहनोपलक्षकः हस्त्यश्वादिश्च तैः । चक्रवर्ती तु असवः शारीरबलानीत्याह । केचित्तु नृणां मध्ये त्वां श्रयतः इत्यन्वयमाहुः । मिथुनत इति ल्यब्लोपे पञ्चमी ।

नु इनि सभ्रूभङ्गे । रे मूढाः ! एतद्विचारयत यस्मिन् संसारे सोऽपि कालग्रस्तत्वान्नश्वरः येन देहादिना सोऽपि जडत्वान्नश्वरो रोगग्रस्तश्च । येषां विषयाणामुपभोगस्तेऽप्यापातरमणीयत्वेन परिणामविरसाश्चेत्यतोऽत्र केन कस्य भोगः ? इति भ्रूभङ्गेन भर्त्सना व्यञ्जिता । एतेन ज्ञानादिप्रयासं विहाय त्वद्भजनमेव मुख्यतयो

---

१. असती या अजा माया तथा सत् परमार्थसुखम् अजानन्तो ये अनात्मनो देहाभिमानिनो जीवास्तान् विषयिणः इह जगति किमु वस्तु तोषयेत् किमपीत्यन्वयः ।

२. ल्यब्लोपे पञ्चमी ।

चित्तं तत्र च प्रथमं भक्तानां झटिति फलाभावेन व्यग्रता तत्र विश्वासाभावश्च पूर्वं स्फुरति तेषामाश्वासनं भगवत्या श्रुत्या क्रियते त्वयि सतीति। भगवान् सन्निहित एव धैर्यं मा त्यजत परीक्षणार्थमेवैष विलम्ब इत्यालोडयतां भक्तानामुर्याशु भगवत्कृपाशक्तिः आविर्भवति, तया च भक्तेर्दाढर्यं ततो भगवद्रसानुभूतिः स्वस्व-मतानुसारेणेति 'यो यच्छ्रद्धः स एव सः' इति गीतोक्तेः सर्वाचार्यमतानां सामञ्जस्यान्न पारस्परिकवि रोधले-क्षोऽपीति संक्षिप्य भागवतसिद्धान्तो ध्वनितः ॥ २१ ॥ ३५ ॥

---

एवं गुरूपदिष्टतत्त्वनिश्चायकः सत्सङ्गः सन्तश्च प्रायस्तीर्थेषु निवसन्ति अतः साधकहितार्थं तीर्थसेवा-मेवोपदिशन्ति श्रुतयः भुवीति।

( तीर्थसेवनपरेयम् )

**भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदास्त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः।**
**दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् ॥३६॥२२॥**

पद्यानुवादः

सकृदपि त्वयि ये दधते मनोऽगृहरता गुरुतीर्थपरायणाः[1]।
मुनिवरा भवदङ्घ्रिहृदोऽमला दिवि[2] भवान् विभवानुपभुञ्जते ॥ २२ ॥

---

संक्षिप्तसार्थान्वयः—हे भगवन्। नित्यसुखे आत्मनि परमात्मनि त्वयि ये सकृदपि मनो दधति धारयन्ति ते पुनः पुरुषसारहरावसथान् पुरुषस्य सारहरान् विवेकादिलोपकान् आवथान् गृहान् न उपासते। उत किन्तु ते भुवि पुरुपुण्यतीर्थसदनानि नानापुण्यतीर्थानि क्षेत्राणि च उपासते सेवन्ते। एवम् ऋषयो भक्ताः भूत्वा विमदाः विगतदेहाहङ्काराः सन्तः जीवन्मुक्ता भवन्तीत्यर्थः। कथम्भूतास्ते ? भवत्पदाम्बुजहृदः। पुनश्च। अघभिदङ्घ्रिजला अघभित् पापनिवर्तकम् अङ्घ्रिजलं येषां ते इति पदाभ्यां क्रमेण भक्तलक्षणं भक्तमहत्त्वं च द्योतितम्।

हे भगवन्! नित्यसुखे परमानन्दचिन्मूर्तौ आत्मनि परमात्मनि त्वयि सकृदपि एकवारमपि ये मनो दधति धारयन्ति ते पुरुषस्य सारहरान् विवेकादिलोपकान् गृहान् पुनर्न उपासते न सेवन्ते किन्तु ते उत ते एव ऋषयो भक्ताः सन्तः भुवि कर्मभूमौ यानि पुरूणि बहूनि पुण्यतीर्थानि गङ्गायमुनादीनि सदनानि क्षेत्राणि काशीवृन्दावनादीनि तान्येव उपासते तत्र निवसन्ति प्रायस्तत्रैव सत्संगो भवतीति। यद्वा। पुरु अधिकं पुण्यं भजनलक्षणं येषां तानि तीर्थानि गुरवो महान्तस्तेषां सदनानि आश्रमानित्यर्थः। तीर्यते संसारो यैरित्यर्थ-साम्यात् महान्तोऽपि तीर्थानि। कथंभूता ऋषयः-विमदाः विगतगर्वाः। तत्कुतः ? भवतः पदाम्बुजं हृदि येषां ते। अत एव स्वयमपि ते अघभिदंघ्रिजलाः अघानि पापानि भिनत्तीति अघभित् तादृशम् अंघ्रिजलं येषां ते तथाभूताः।

यद्वा। हे पुरुषसार! हे पुरुषोत्तम! ये मनो दधति ते तीर्थसदनानि उपासते किन्तु हरावसथान् रुद्राधिष्ठितान् क्रोधाहङ्कारादीन् न उपासते तद्वशा नैव भवन्ति। पुनश्च जन्मान्तरे हरस्य रुद्रस्य आवसथान् श्मशानभूमीश्च न सेवन्ते जन्ममरणशून्या भवन्तीत्यर्थः। यद्वा। ये मनो दधति ते गृहान् नोपासते किन्तु सदनानि क्षेत्राणि अधिवसन्तः ऋषयो भूत्वा विमदा मदहेतुभूतदेहादिसंस्कारान्मुक्ता भवन्तीत्यर्थः ॥२२॥३६॥

---

१. गुरुः तीर्थं च परमम् अयनमाश्रयो येषां ते। यद्वा। गुरुरेव तीर्थम्।

२. दिवि वैकुण्ठे। विभवान् अलौकिकभोगसम्पत्तीः।

एवं पूर्वं महत्सङ्गादिभिर्भगवद्भजनमुपपादितं तत्तु तदैव सङ्गच्छेत यदि वेदानां भगवत्परत्वं स्यात्। दृश्यतेऽत्र तेषां क्रियापरत्वं प्रतिपाद्यते च मीमांसकैस्तथैवातस्तन्मतखण्डनपूर्वकं वेदानां भगवत्परत्वमेव द्रढयन्त्यः स्तुवन्ति—सत इति।

( मीमांसकमतखण्डनपरेयम् )

**सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक्।**
**व्यवहृतये विकल्प इषितोऽन्धपरम्परया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥३७॥२३॥**

पद्यानुवादः

विश्वं सत् सत उत्थिताद्[1] यदि तदाऽभेदो न हेतुर्हतः
भेदो नेत्यनुमानतो व्यभिचरत्येतत्पितापुत्रयोः।
शुक्राद् भेद इतेऽपि रज्जुभुजगोपादानकार्यं मृषे-
त्यज्ञानोत्थमसत्तु चेज्जगददोऽविद्यासदुत्थं न सत्।
व्यवहृतिर्भ्रमतो वटभूतवच्छ्रुतिषु रुच्युदयाय फलश्रुतिः
सदिति कर्मजडभ्रमतो मतो जगदतो गदतो भवतो गिरा ॥ २३ ॥

संक्षिप्तसार्थान्वयः—सतः परमेश्वरात् उत्थितम् उत्पन्नमिदं विश्वं सत् इति चेत् त्वं मन्यसे ? तदा ते इदमनुमानं ननु निश्चयेन तर्कहतं तर्केण हतं दूषितम्। भेदसाधकेन हेतुना अभेदसाधनं युक्तिविरुद्ध-मित्यर्थः। सत इति भेदे पञ्चमी। यदि च कनककुण्डलवद् यत् यत उत्पन्नं तत्र तद्भेदो न दृश्यते इति कृत्वा भेदनिषेधः साध्यते तेन चाभेदात् जगति सत्यत्वं सुस्थिरमेव तत्राहुः—क्व च क्वापि पितापुत्रादौ व्यभिचरति। पितुरुत्पन्ने पुत्रे भेददर्शनात् त्वदुक्तं दोषग्रस्तं भवति अतो विश्वं न सदित्यर्थः। यदि च उत्पन्नपदेन उपादान-कारणजन्यत्वं गृह्यते तदुपादानं च वीर्यं तेन पित्रा सहाभेदात् पुनरपि जगतः सत्यत्वं तत्राहुः—क्व च मृषा। क्व च क्वचित् रज्जुसर्पादौ उपादानकार्यं मृषा दृश्यते। अत्र सर्पस्योपादानकारणं रज्जुस्तज्ज्ञाने सर्पस्य बाधात् रज्जुरेव शिष्यते तेनोपादानकार्यं मिथ्या भवतीत्यर्थः। अतो विश्वं न सदिति। यदि च अज्ञानयुक्तो-पादानकार्यं मृषा स्वीक्रियते तत्राहुः न तथोभययुक्। उभयेन अविद्यायुक्तेन ब्रह्मणा युज्यते क्रियते इत्युभययुक् अविद्यासंवलितसदुपादानकार्यमिदं विश्वमपि न तथा न सदित्यर्थः। यदि चार्थक्रियाकारित्वरूपव्यवहारार्थं विश्वं सदिति चेत् ? तदपि नेत्याहुः। व्यवहृतयेऽर्थक्रियार्थं तु अन्धपरम्परया कल्पितवटभूतवद् भ्रम इष्टोऽभिमत एव तेनैव कल्पितभूतभ्रमेण मूर्च्छामरणादिरूपार्थक्रिया दृश्यत एव अतो व्यवहारार्थमपि विश्वं न सदित्यर्थः। यदि च 'अक्षय्यं ह वै' इत्यादिश्रुत्या नित्यत्वप्रतिपादनाद्विश्वं सदेवेति तदपि नेत्याहुः—भ्रमयतीति। हे भगवन्! ते भारती वेदलक्षणा वाणी उरुवृत्तिभिर्नानागौणलक्षणादिवृत्तिभिः उक्थजडान्मीमांसकान् भ्रमयति विपरीतार्थबुद्धिम् असत्ये सत्यबुद्धि जनयति उत्पादयति तान् त्वमेवोद्बोधय, न हि तत्र नित्यत्वे तात्पर्यमपि तु प्रशंसायामतो विश्वं मिथ्यैवेति सिद्धम्। जगत्सत्यत्वखण्डनपरेयं वा।

१. नपुंसके भावे क्तः। इते गतेऽपि।
अविद्यया युक्तं यत् सत् ( ब्रह्म ) तस्मादुत्थम् उत्थितमिदं जगत् न सदित्यर्थः। व्यवहृतिः व्यवहारः। अतः गदतः भवतो गिरा वेदलक्षणया वाचा अदः इदं जगत् सत् इत्ययमुद्घोषः कर्मजडानां मीमांसकानां भ्रमादेव मतोऽभिमतः।

अथ वेदान्तिमतसिद्धमेव हेतुं क्रीडाकृत्य मीमांसकः पूर्वपक्षमारभते इदं विश्वं सत्। कुतः ? सतः परमेश्वरात् उत्थितमुत्पन्नमतः इति सता जगदभेदः साध्यते तदा वेदान्ती दूषयति—हे मीमांसक ! इति मन्यसे चेत् ? तर्हि ते इदमनुमानं ननु निश्चयेन तर्केण हतं दूषितम्। भेदसाधकेन हेतुनाऽभेदसाधनं युक्तिविरुद्धमित्यर्थः। यत्रापादाननिर्देशस्तत्र भेद इति नियमात्। पुनर्मीमांसक आक्षिपति—ननु नाभेदं साधयामः किन्तु यत् यतः उत्पन्नं तत्र तद्भेदो न दृश्यते इति कृत्वा भेदं प्रतिषेधामः,एवं च भेदनिषेधे सति जगति सदभेदात् सत्यत्वमेव सिद्ध्येत्ततो वेदान्ती पुनरत्र व्यभिचारं ददाति-क्व च व्यभिचरतीति। क्व च क्वापि पितापुत्रादिषु मुद्गरघटप्रध्वंसादिषु च त्वदुक्तं व्यभिचरति दोषग्रस्तं भवति भेददर्शनादिति भावः। त्वयोक्तं यत् यत उत्पन्नं तत्र भेदो न दृश्यते पितुः सकाशात्पुत्र उत्पन्नः मुद्गराद् घटप्रध्वंसो जातः, तत्र भेदो नास्ति किम् अस्त्येव। पितुर्द्विजत्वात् गौरत्वात् पुष्टत्वात् पुत्रस्य च तद्वैपरीत्यात्। एवं मुद्गरस्य भावरूपत्वात् घटप्रध्वंसस्याभावरूपत्वाद्भावाभावयोरैक्यानुपपत्तेरिति प्रत्यक्ष एव देदो दृश्यते अतो जगति न सत्यत्वम्।

पुनर्मीमांसक आक्षिपति—पितुः पुत्र उत्पन्नस्तत्र उत्पन्नत्वं तावत् किन्नाम ? उत्पन्नत्वञ्चात्र तदुपादानत्वं न तु तन्निमित्तत्वम्। अतो न व्यभिचारः। न हि पुत्रस्य पिता उपादानकारणं न वा घटध्वंसस्य मुद्गर उपादानकरणं किन्तु पिता मुद्गरश्च तत्र निमित्तकारणमेव पुत्रोपादानं वीर्यं घटध्वंसोपादानं तु कपालादि, तथा च व्यभिचाराभावात् जगति सत्यत्वं सुस्थिरमेव। पुनर्वेदान्ती दूषयति-क्व च मृषेति। क्व च क्वचित् रज्जुसर्पादौ उपादानकार्यमपि मृषा मिथ्या भवतीत्यर्थः। तथा च रज्जूपादानके सर्पे पुनरपि व्यभिचारः। यत्र रज्जौ अन्धकारे सर्पबुद्धिर्जाता तदुपादानकारणं रज्जुरेव, किन्तु तज्ज्ञाने सर्पबाधात् उपादानकार्यस्य मिथ्यात्वात् तेनैवाभेदं संसाध्य जगति यत्सत्यत्वं स्थाप्यते तन्निर्मूलमेव। सुस्थिरं च जगती मिथ्यात्वम्। पुनर्मीमांसक आक्षिपति-तत्र तु अज्ञानाद् रज्जौ सर्पबुद्धिर्जाता, अतो यत्राज्ञानयुक्तमुपादानं तत्कार्यस्य सर्पस्य मिथ्यात्वं मयापि स्वीक्रियते कोष दोषः ? वेदान्ती सहर्षं वदति सत्यं सत्यम् अस्मत्पक्ष एव त्वमायातोऽसि इत्यत आह न तथेति। अत्रापि अविद्यासंवलितस्यैव ब्रह्मणो जगदुपादानत्वं न केवलस्य सतः अतः उभाभ्यां सदविद्याभ्यां युक् युक्तमिदं जगत् त्वन्मतेऽपि न तथा न सदित्यर्थः, इति स्वोक्त्यैव परास्तो मीमांसकः।

पुनरपि किञ्चिद्विचार्य अधोवदनः सन् मीमांसक आक्षिपति-ननु माभूदनेन हेतुना प्रपञ्चस्य सत्यत्वम् ? अन्यहेतुना साधयामः। तथाहि इदं विश्वं सत् अर्थक्रियाकारित्वात् न यदेवं न तदेवं यथा शुक्तिरजतमित्यनुमानेन विश्वस्य सत्यत्वं साधयामः। तदा वेदान्ती पुनर्दूषयति – व्यवहृतये यति। व्यवहृतये व्यवहाराय अर्थक्रियार्थं तु अन्धपरम्परान्यायेन विकल्पो भ्रम एव इष्टोऽभिमत. तेनैवार्थक्रियाकारित्वरूपो व्यवहारः संपत्स्यते, यथा यक्षशून्येऽपि वटे श्रुत्वैव केनचिदन्धेन अन्ध उपदिष्टः अस्मिन्वटे यक्षोस्तीति तेनान्यः तेनान्य इत्यन्धपरम्परया भ्रमेण सिद्धस्य मिथ्यारोपितस्यापि यक्षस्य मूर्च्छामरणादिरूपार्थक्रियाकारिता दृश्यते। स्वप्नाङ्गनादेर्दर्शनस्पर्शनादिना वीर्यपातादिरूपार्थक्रियाकारिता दृश्यते कूटकार्षापणादिनाऽपि क्वचिद् व्यवहारो दृश्यते, अतः अर्थक्रियाकारित्वरूपो हेतुरप्रयोजक इति न तेन विश्वस्य सत्यत्वं सिद्ध्येत्, अतो विश्वं मिथ्यैवेति।

अथ पुनरप्येकां युक्तिमादाय मीमांसकः आक्षिपति—ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति, 'अपाम सोमममृता अभूम' इत्यादिभिः कर्मफलस्य नित्यत्वप्रतिपादनात् असत्त्वं न घटते, नहि नित्यं वस्तु असद्भवति, तस्माद्वेदप्रतिपादितत्वाद् द्वैतं सत्यमेव इत्याशङ्क्य पुनर्वेदान्ती भगवन्मतमालक्ष्य श्रुतिमुखेन खण्डयन्नुपसंहरति भ्रमयतीति। हे भगवन् ! ते भारती वेदलक्षणा वाणी उरुवृत्तिभिः बह्वीभिः गौणलक्षणादिवृत्तिभिर्मीमांसकान् भ्रमयति मोहयति अतस्तान् त्वमेवोद्बोधयेति वाक्यशेषः। कथंभूतान् ? उक्थजडान्।

उत्तिष्ठति स्वर्गादिफलं यस्मात्तत् उक्थं कर्म तत्र जडान् आग्रहपरान् वेदतात्पर्यानभिज्ञानित्यर्थः । यथोक्तं श्रीवल्लभाचार्यैः क्रियासक्ताः पदार्थान्न विचारयन्तीति ते उक्थजडा उच्यन्ते इति । अयमभिप्रायः । नहि वेदः कर्मफलस्य नित्यतां प्रतिपादयति, किन्तु लक्षणया तस्य प्राशस्त्यमात्रं बोधयति विध्येकवाक्यत्वात् । यतो मीमांसकमतेऽर्थवादानां प्राशस्त्ये लक्षणा तेषां स्वार्थपरित्यागेनैव विधिवाक्येऽन्वयश्च । तथा हि अक्षय्य मृत-पदयोर्यागप्राशस्त्ये जहल्लक्षणा यतश्चातुर्मास्ययागः प्रशस्तस्तस्माच्चातुर्मास्ययागेनेष्टं भावयेदित्येवमुक्तार्थ-वादयोश्चातुर्मास्येन यजेत इति विधिना एकवाक्यता । अन्यथा एकोद्देशेनानेकविधानरूपवाक्यभेदः स्यात् ।

चातुर्मास्ययागजनितस्वर्गादिफलमुद्दिश्य चातुर्मास्यनामा यागो विधीयते इत्येकं, स्वर्गादिफलस्य नित्यत्वं चेति द्वितीयमित्युभयविधाने स्पष्टतरो वाक्यभेदः स च वाक्यगत्वान्महादोषः । लक्षणा चामृतादि-पदगत्वादल्पदोषरूपा । तस्मादक्षय्यामृतपदयोः प्राशस्त्यमात्रलक्षणया प्राशस्त्ययागमात्रमेव कर्म स्वर्गादिफलो-द्देशेन विधीयते इत्येकस्यैव विधानान्न वाक्यभेद इत्यर्थः ।

किञ्च 'तद्यथेह कर्मचितो लोकः क्षीयते' एवमेवाऽमुत्र 'पुण्यचितो लोकः क्षीयते' इति श्रुत्यन्तरवि-रोधश्च तस्मान्नैतावतापि विश्वस्य सत्यत्वमपि तूक्तरीत्या मिथ्यात्वमेवेति निश्चितम् । अत्राऽद्वैतवादे तावद् यादृशमसत्यत्वं रज्जुसर्पवद् भ्रान्तिविषयत्वमङ्गीक्रियते तादृशमसत्यत्वं वैष्णवमते नाङ्गीक्रियते । किन्तु विनाशित्वरूपं सततैकस्वरूपाभाववत्त्वं वा असत्यत्वमिति । तस्माज्जगतोऽसत्यत्वप्रतिपादने न वैष्णवमत-विरोधोऽपीत्यलम् । एतच्च बालसुबोधार्थमुक्तम् ।

विदुषां मुदेऽधस्तनं व्याख्यानमवलोकनीयम्—

इदं[1] विश्वं सत् सत उत्पन्नत्वात् यत् यत उत्पन्नं तत्तदात्मकमेव दृष्टं यथा कनकादुत्पन्नं कुण्डलादि तदात्मकमेव तद्वत् । इदमनुमानं मीमांसकानां तत्र विश्वस्मिन् सदभेदः साध्यते चेत्तदा दोषमाह वेदान्ती तर्क-हतमिति । भेदसाधकेन हेतुनाऽभेदसाधनं युक्तिविरुद्धम् । हेतौ सत इति पञ्चम्या अपादानार्थकाया भेदप्रतीते-विरुद्धो हेतुः । साध्याभावव्याप्तो हेतुर्विरुद्धः, यथा शब्दो नित्यः कृतकत्वादित्यत्र कृतकत्वहेतुः साध्याभावेना-नित्यत्वेन व्याप्तस्तथाऽत्रापि सत उत्पन्नत्वरूपो हेतुरभेदरूपसाध्यस्याभावेन भेदेन व्याप्तः वृक्षात्पत्रं पततीत्या-दाविव यत्रापादाननिर्देशस्तत्र भेद इति नियमात् ।

पुनर्मीमांसक आक्षिपति ननु नाभेदं साधयामः किन्तु तदुत्पन्नत्वेन कुण्डलादिवद् भेदं प्रतिषेधामः, तद्भेदनिषेधे च जगति सत्यत्वं सिद्ध्येत्, एवं चापादाननिर्देशेन जाताऽपि भेदप्रतीतिर्न भेदनिषेधस्य विरोधिनी, यथा कनकात्कुण्डलमुत्पन्नमिति पञ्चम्या जाताऽपि भेदप्रतीतिः कारणकार्ययोः कनककुण्डलयोः सुवर्णत्वेन भेदनिषेधसाधने विरुद्धा न, तथा सत उत्पन्नत्वात् इत्यपादानपञ्चम्या जाताऽपि भेदप्रतीतिर्ब्रह्मजगतो सत्यत्वेन भेदनिषेधसाधने विरुद्धा नेति ।

तथा चेदमनुमानम्—विश्वं सद्भिन्नं न सत उत्पन्नत्वात् यत् यत उत्पन्नं तत्ततो भिन्नं न यथा कनकादुत्पन्नं कुण्डलं कनकाद्भिन्नं न अत्र हेतोः साध्याभावव्याप्तत्वाद्भावान्न विरुद्धो हेतुः, एवं चाभेद एव स्यादिति मीमांसकतर्कं पुनर्वेदान्तो अनैकान्तिकत्वेन दूषयति क्व च व्यभिचरति । सव्यभिचारोऽनैकान्तिकः । हेतुमति साध्याभावो व्यभिचारः । यथा पर्वतो वह्निमान् द्रव्यत्वादित्यत्र जलादौ द्रव्यत्वरूपहेतोः सत्त्वेपि वह्निरूपसाध्यस्यासत्त्वात् व्यभिचारस्तथाऽत्रापि पितुरुत्पन्ने पुत्रे मुद्गरप्रहारादुत्पन्ने घटध्वंसे च सत उत्पन्नत्व-

---

१. इदं विश्वं पक्षः । सदिति साध्यो धर्मः । सत उत्पन्नत्वत् इति हेतुः यत् यतः उत्पन्नंम् तत् तदात्मकमेव दृष्टं यथा कनकादुत्पन्नं कुण्डलादि तदात्मकं तद्वदिति दृष्टान्तः ।

रूपहेतोः सत्त्वेपि तद्भेदाभावरूपमुद्गरप्रहारभेदस्य प्रसिद्धत्वाज्जगतो मिथ्यात्वं सुस्थिरमेव। पुनर्मीमांसक आक्षिपति-ननु उत्पन्नत्वं तावत् किं नाम ? तदुपादानकत्वं तथा चेत्थमनुमानं-विश्वम् सतो भिन्नं न सदुपादान-कत्वात् यद् यदुपादानकं तत्ततो भिन्नं न अतो नात्र व्यभिचारः। पुत्रे पितृभेदाभावरूपस्य घटध्वंसस्य मुद्गर-भेदाभावरूपस्य साध्यस्य सत्वे तदुपादानकत्वरूपहेतोरप्यसत्त्वात्। न हि पुत्रस्य पिता घटध्वंसस्य मुद्गरो वा उपादानकारणं किन्तु पिता मुद्गरश्च तत्र निमित्तकारणमेव पुत्रोपादानं वीर्यं घटध्वंसोपादानं कपालादीत्यतो जगति सत्यत्वं सिद्धयेत्। पुनर्वेदान्तो तत्तर्कं खण्डयन् व्यभिचारं ददाति क्व च मृषेति। क्वचिदुपादानकार्यं मृषा मिथ्या भवतीत्यर्थः। तथा च रज्जूपादानके सर्पे पुनरपि व्यभिचारः। अत्र सर्पे रज्जूपादानकत्वरूपहेतोः सत्त्वेऽपि रज्जोर्भिन्ने सर्पे रज्जुभेदाभावरूपसाध्यस्यासत्त्वात् रज्जोर्व्यावहारिकसत्यत्वात् सर्पस्य च प्रातीतिक-त्वात् तत्र सर्पे रज्जुतो भेदो निराबाध एव अन्यथा रज्जुज्ञाने जाते सर्पस्य बाधो न स्यात्, इत्यतो जगति मिथ्यात्वं सिद्धचेत्। पुनर्मीमांसक आक्षिपति नन्वत्र सन्मात्रोपादानकत्वं हेतुः ? तथा चेदमनुमानम्। विश्वं सतो भिन्नं न सन्मात्रोपादानकत्वात् यत्सन्मात्रोपादानकं तत्ततो भिन्नं न तथा च न रज्जुसर्पे व्यभिचारः रज्जुभेदाभावः तदसाध्याभाववति मिथ्याभूते रज्जुसर्पेऽज्ञानयुक्तरज्जूपादानके रज्जुमात्रोपादानकत्वरूपहेतोर-भावात् जगति सत्यत्वं सिद्धमेव। पुनर्वेदान्ती खण्डयन्नाह—न तथोभययुक्। उभाभ्यां सदविद्याभ्यां युज्यते इति उभययुगपीदं जगत् न तथा न सदित्यर्थः। अत्रापि अविद्यासंवलितस्यैव ब्रह्मणो जगदुपादानत्वं न सन्मात्रस्येति सन्मात्रोपादानकत्वरूपो हेतुर्विश्वस्मिन् पक्षे नास्तीति स्वरूपासिद्धो हेतुः, पक्षे हेत्वभावः स्वरूपासिद्धः। एवं च रज्जुसर्पादिवत् विश्वस्यापि कल्पनमध्यासमूलकमेव अध्यस्तस्य च मिथ्यात्वात् विश्वं मिथ्यैवेति सिद्धम् इति स्वतर्केणैव परास्तो मीमांसकः। पुनरपि स किञ्चिद् विचार्याधोवदनः सन् प्रलपति-ननु माभूदनेन प्रपञ्चस्य सत्यत्वमन्यहेतुना-साधयामः, तथाहि-इदं विश्वं सत् अर्थक्रियाकारित्वात् न यदेवं न तदेवं यथा शुक्तिरजतम् इत्यतो जगति सत्यत्वं सिद्धचेत्। पुनर्वेदान्ती व्यभिचारं ददाति-व्यवहृतये इति। अर्थक्रियार्थं विकल्पो भ्रम इषित इष्ट एव मिथ्याभूतकृत्रिमरजतसुवर्णादेरप्यर्थक्रियाकारित्वात्। एवञ्चात्र सर्वत्र मिथ्याभूते सत्यत्वरूपसाध्यस्यानधिकरणेऽर्थक्रियाकारित्वरूपहेतोः सत्त्वाद्व्यभिचारः। अतो विश्वं मिथ्यैव इति वंशीधरी। शेषं पुनर्मीमांसक आक्षिपतीत्यादि पूर्ववत् योजनीयम्।

---

तदेवं विश्वस्य सत्यत्वे युक्त्यभावमुक्त्वा मिथ्यात्वे युक्तिमाहुः—नेति।

( जगन्मिथ्यात्वबोधनपरेयम् )

**न यदिदमग्र आस न भविष्यदतो निधनादनु मितमन्तरा त्वयि विभाति मृषैकरसे।**
**अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥३८॥२४॥**

पद्यानुवादः

जगदिदं न हि पूर्वमनन्तरं त्वयि विभाति मृषैकरसेऽन्तरा।
कनकवैकृतवन्न[1] बुधा विदन्त्यवितथं वितथं मनसो भ्रमम्[2] ॥ २४ ॥

---

संक्षिप्तसार्थान्वयः—हे भगवन्! यत् यस्मात् इदं जगत् अग्रे न आस। तथा निधनादनु प्रलयानन्तरं च न भविष्यत्। अतः अन्तरा मध्येऽपि एकरसे केवले त्वयि मृषा एव विभातीति मितं निश्चितम्। यत एवम् अतः श्रुत्या इदं जगत् द्रविणजातिविकल्पपथैः द्रविणजातीनां विकल्पपथैः घटकुण्डलादिभेदैः उपमीयते

---

१. कनकस्य वैकृतं विकृतिसमूहः तद्वदित्यर्थः। २. वितथम् असत्यं जगत् अवितथं सत्यं न विदन्तीत्यन्वयः।

तत्सदृशतया निरूप्यते। अथापि वितथं मिथ्याभूतमेव यतो मनोविलासम् इदं जगत् ऋतं सत्यमिति ये अवयन्ति जानन्ति तेऽबुधा अज्ञा एवेत्यन्वयः।

हे भगवन्! यत् यस्मात् इदं विश्वम् अग्रे सृष्टेः पूर्वं न आस न आसीत्। निधनात् अनु प्रलयानन्तरं च न भविष्यित् न भविष्यति। शत्रन्तं वा। अतः आद्यन्तयोरविद्यमानत्वात् अन्तरा मध्येऽपि एकरसे निर्विकारे त्वयि मृषा मिथ्यैव विभाति विकाररूपेण भातीति मितं निश्चितम्। 'आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा' इत्युक्तेः, शुक्तिरजतरज्जुसर्पादिवदित्यर्थः। विशब्दोऽत्र विकारार्थकः। यत एवमतः इद विश्वं द्रविणजातीनां मृत्सुवर्णादीनां विकल्पपथैः घटकुण्डलादिभेदैरुपमीयते तत्सदृशतया निरूप्यते असदेवेति निश्चीयते। यथा घटकुण्डलादि नाममात्रं, मृदाद्येव सत्यम्, एवमाकाशादिरूपं जगत् नाममात्रं, ब्रह्मैव सत्यमित्यर्थः। अथापि ये वितथमसत्यं च तत् मनोविलासं मनःकल्पनारूपम् इदं जगत् ये ऋतं सत्यमिति अवयन्ति जानन्ति तेऽबुधा अपण्डिता एव।

उक्तं च योगवासिष्ठे—'दीर्घस्वप्नमिमं विद्धि दीर्घं वा चित्तविभ्रमम्। दीर्घं वापि मनोराज्यं संसारं रघुनन्दन' इति। मिथ्याभूतं सद्वा इदं मनस्येव परमं प्रतिष्ठितं किञ्च वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिषु च। एतन्मूलकमनुमानमपि ज्ञेयम्। विवादास्पदं विश्वं मिथ्या आद्यन्तयोरसत्त्वात् विकारित्वात् दृश्यत्वाच्च शुक्तिरजतादिवत्। यत् आद्यन्तयोरविद्यमानं दृश्यं विकारि च तत् असत् यथा शुक्तिरजतम् इत्यन्वये दृष्टान्तः। यच्च आद्यन्तयोर्विद्यमानं न दृश्यं न च विकारि तत् असदपि न यथाऽऽत्मेति व्यतिरेके दृष्टान्तश्च। अत्र मतान्तरेषु जगत्सत्यासत्यत्वविषये नानाविधो विवादः स च बुद्धेर्भ्रान्तिकरत्वाद् भक्तैर्नादरणीयः मन्तव्यं च तावदेतावदेव सर्वत्र भगवद्दृष्ट्या असदपि सर्वं जगत् सदेव। तद्व्यतिरिक्तदृष्ट्या तु सदपि सर्वमसदेवेत्यार्षसिद्धान्त इत्यलम्॥ २४॥ ३८॥

---

नन्वविद्याकार्यरूपस्य जगतोऽसत्त्वे तेन सम्बन्धाभावाज्जीवस्य किन्निमित्तः संसारः? कथं वा ईश्वरस्यैव नित्यमुक्तता? इत्यपेक्षायां जीवेश्वरविशेषं दर्शयन्त्यः स्तुवन्ति—स यदेति।

(जीवेश्वरवैलक्षण्यपरेयम्)

**स यदजया त्वजामनुशयीत गुणांश्च जुषन् भजति सरूपतां तदनु मृत्युमपेतभगः।**
**त्वमुत जहासि तामहिरिव त्वचमात्तगो महसि महीयसेऽष्टगुणितेऽपरिमेयभगः॥३९॥२५॥**

पद्यानुवादः

यदजयाऽनुभजन् विषयान् जनो भजति जन्ममृती विवशस्ततः।
अहिरिव त्वचमत्र विहाय तामुपरि मेऽपरिमेय विराजसे॥ २५॥

---

संक्षिप्तसार्थान्वयः—स तु जीवः यत् यदा अजया अविद्यया अजां मायां देहरूपाम् अनुशयीत आश्रयेत तत् तदा गुणान् विषयान् जुषन् सरूपतां देहसाधर्म्यं भजति प्राप्नोति। तदनु अपेतभगः तिरोहितज्ञानः सन् मृत्युं संसारं च भजति। त्वम् उत त्वं तु अहिः त्वचमिव तामजां जहासि। यतः त्वम् आत्तभगः नित्यप्राप्तैश्वर्यः तत्रापि अपरिमेयभगः अपरिच्छिन्नैश्वर्यश्च सन् महसि स्वस्वरूपे महीयसे विराजसे। कथंभूते महसि? अष्टगुणिते अष्टसिद्धियुक्ते। यद्वा। यत् यस्मात् ततो गुणानिति योजना।

हे भगवन् ! स तु त्वदंशो जीवः यत् यदा अजया मोहितः सन् अजां प्रकृतिपरिणामरूपां देवमनुष्यादि-तनुम् अनुशयीत आलिङ्गति बिभर्तीत्यर्थः तत्तदा गुणान् विषयान् जुषन् सेवमानः सरूपतां देहसाधर्म्यं भजति प्राप्नोति देहाभिमानी भवतीत्यर्थः। तदनु तदनन्तरं मृत्युं जन्ममरणादिलक्षणं संसारं च भजतीति चकार-स्यान्वयः। एवं संसारभाक्त्वात् अपेतः अपगतः भगो ज्ञानैश्वर्यादिर्यस्य तथाभूत इव तिरोहितज्ञानो भवति। त्वमुत त्वं तु तामजां मायां जहासि उपेक्षस इत्यर्थः। यथा अहिः सर्पः त्वचं कञ्चुकं जहाति तद्वत्। यतः नित्यप्राप्तैश्वर्यः तत्राऽपि अपरिमेयभगः अपरिमितैश्वर्यः न जीववत्परिच्छिन्नैश्वर्यं इत्यर्थः। महसि स्वरूपे महीयसे विराजसे। कथंभूते ? अष्टगुणिते अणिमाद्यष्टसिद्धियुक्ते। अष्टौ गुणास्ते नित्यं सञ्जाता अस्येति तारकादित्वादितच्।

भावुकास्तु आत्तभगो नित्यप्राप्तैश्वर्यः महसि गौरतेजसि श्रीराधाविग्रहे एकीभूय विराजसे अत एव अपरिमेयभगस्त्वमिति सूचनार्थं पुनरुपादनम्। कीदृशे ? अष्टा व्याप्ता गुणा वात्सल्यादयो नित्यं सञ्जाता अस्येति 'अश' व्याप्तौ इत्यस्मात्। अपरिमितैश्वर्यस्य तव परिमितैश्वर्याज्जीवान्महान् विशेष उक्त इति भावः। तुशब्देन उभयत्र जीवस्य नित्यबद्धता ईश्वरस्य च नित्यमुक्तता सूचिता। आत्मगुणाननादृत्य परकीय-मायागुणान् जुषते इति द्योतनार्थं जुषंन्निति परस्मैपदम्। केचित्तु यत् यदा अजया हेतुभूतया अपेतभगो भवति तदैव अजामविद्यामनुशयीतेत्यन्वयमाहुः। भगशब्दार्थस्तु—ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा। इत्युक्तरूपो ज्ञेयः॥ २५॥ ३९॥

---

एवं भगवतो भजनमेव मुख्यं तेनैव संसारनिवृत्तिरन्यथा तत्र परिभ्रमणमित्युक्तम्। इदानीं तु ये साधनार्थं त्यक्तगृहा अपि पुनर्मठादिव्यापारासक्ता भवन्ति तान् शोचन्त्यो निन्दन्ति—यदि नेति।

( दाम्भिकसंन्यासिनिन्दापरेयम् )

**यदि न समुद्धरन्ति यतयो हृदि कामजटा दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः।**
**असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्ननपगतान्तकादनधिरूढपदाद् भवतः॥४०॥२६॥**

पद्यानुवादः

विषयलम्पटयत्यतिदुर्गमो हृदिगतोऽस्मृतकण्ठमणिर्यथा।
इह मृतेर्नरकात्परतोऽसतामुभयतो भयतोऽप्यसुखं नृणाम्॥ २६॥

---

संक्षिप्तभावार्थान्वयः—हे भगवन् ! ये यतयः हृदि वर्तमानाः कामजटाः कामवासना यदि न समुद्धरन्ति नोत्पाटयन्ति न परित्यजन्ति तेषामसतां हृदि गतोऽपि भवान् दुरधिगमः दुष्प्रापः। क इव ? अस्मृतकण्ठमणिरिव अतः असुतृपयोगिनाम् उभयतोऽपि असुखं दुःखमेव। अनपगतान्तकात् अनपगतश्चासौ अन्तकश्च तस्मात् इह मरणरूपम्। भवतोऽनधिरूढपदात् अप्राप्तपदत्वात् परत्र नरकरूपं च। असुतृपाः इन्द्रियतर्पणपराः।

हे भगवन् ! ये यतयः यतिवेषविडम्बकाः योगच्छद्मना मुण्डशिरस्काः हृदि स्थिताः कामवासनाः न समुद्धरन्ति नोन्मूलयन्ति। अन्तर्भोगवासना न त्यजन्ति तेषामसतां दाम्भिकानां हृदि गतोऽपि भवान् दुरधिगमः दुष्प्रापः। अत्र तदनुरूपो दृष्टान्तः—अस्मृतकण्ठमणिः। लुप्तोपमेयम्। कण्ठस्थोऽपि अस्मृतो विस्मृतो मणिरिव हृदि गतोऽपि विस्मृतः त्वं तैर्न ज्ञायस इत्यर्थः।

न केवलमियदेव, दुःखं किन्तु अन्यदपीत्याहुःअसुतृपेति। असूनेव तर्पयन्तीति असुतृपा इन्द्रियतर्पणपराः ये विषयासक्तयोगिनस्तेषाम् उभयतोऽपि इह परत्र च असुखं दुःखमेव। क्रमेण दर्शयन्ति-अनपगतात् अनिवृत्तात् अन्तकात् मृत्योः लोकाराधनधनोपार्जनादिक्लेशात् इह तावत् मरणरूपं दुःखम्। भगवन्निष्ठाभावेन निजधर्मातिक्रमात् परत्र च नरकप्राप्तिरूपं च दुःखम्। कुतः ? भवतः न अधिरूढं न प्राप्तं यत् पदं स्थानं तस्माद् हेतोः।

यद्वा। भवतोऽनधिरूढपदात् अप्राप्तपदत्वादिति बहुव्रीहेर्भावप्रधानो निर्देशः। तस्माद्भक्तिबलेन कामवासनानां समूलोन्मूलने यतमानस्यैव संन्यासिनो भगवत्स्वरूपानन्दलाभः कण्ठपणिवद्भवति नान्यथेति तात्पर्यम्। विश्वनाथस्तु अनपगतान्तकात् मृत्युपरम्परामयसंसारात् आध्यात्मिकादि दुःखम्। न अधिगतं नात्मोन्मुखीकृतं पदं चरणारविन्दं यस्य तस्मात् भवतस्तूपेक्ष्यारूपमित्याह। समुद्धरन्तीत्यत्र समुपसर्गेण त्रिविधैषणायास्त्यागो विवक्षितः। ताश्च लोकैषणावित्तैषणापुत्रैषणारूपा ज्ञेयाः। योगिनामित्यत्र अर्वाचीनयोगिनस्तु विषयेन्द्रियसंयोगो योग इत्यप्यपण्डितैः' इत्युक्तरूपा ज्ञेयाः ॥ २६ ॥ ४० ॥

---

अनन्यभक्तानां तु तत्र सांसारिकनानाविधदुःखाद्यभावः, परत्र मोक्षश्चेत्युभयतः सुखमेवेत्याहुः —त्वदवगमीति।

( भक्तसौख्यबोधनपरेयम् )

**त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः।**
**अनुयुगमन्वहं सगुण गीतपरम्परया श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥४१॥२७॥**

पद्यानुवादः

इह न वेद शुभाशुभयोः फलं विधिनिषेधगिरश्च भवत्परः।
श्रवणतश्च परत्र विमुक्तिदः सगुण हे गुणहेयतया धृतः ॥ २७ ॥

---

संक्षिप्तसार्थान्वयः—हे सगुण ! त्वदवगमी त्वज्जानवान् पुरुषः भवदुत्थशुभाशुभयोः गुणविगुणान्वयान् सुखदुःखसंबन्धान् न वेत्ति। तर्हि देहभृतां गिरश्च निन्दास्तुतिवाक्यानि च न वेत्ति इति का कथा। यतः अनुयुगं तत्रापि अन्वहं प्रतिदिनं मनुजैः भक्तैः सह गीतपरम्परया श्रवणभृतः त्वं तेषाम् अपवर्गगतिर्भवसि गिरो न वेत्तीत्यनेन ऐहिकं सुखम्। अपवर्गगतिरित्यनेन पारलौकिकसुखं चेति भक्तानामुभयतोऽपि सुखमुक्तमिति विशेषः।

हे सगुण ! हे वात्सल्यादिगुणयुक्त भगवन् ! त्वामवगच्छति जानातीति त्वदवगमी त्वद्भक्तः भवतः कर्मफलदातुः त्वत्तः ईश्वरात् हेतोः उत्थयोराविर्भूतयोः शुभाशुभयोः प्राचीनपुण्यपापकर्मणोः फलभूतान् गुणविगुणान्वयान् सुखदुःखसंबन्धान् न वेत्ति नास्य तेषां स्फूर्तिरिति भावः ! यद्येवं तर्हि देहभृतां देहाभिमानिनां गिरः विधिनिषेधलक्षणाः निन्दास्तुतिलक्षणा वा न वेत्तीति का कथा ! कुतः ? यतोऽनुयुगं प्रतियुगं मनुजैः भक्तैः सह सगुणस्य अनन्तकल्याणगुणगुणस्य तव या गीतपरम्परा उपदेशसन्ततिः तया अन्वहं प्रतिदिनं त्वं श्रवणभृतः श्रवणेन चेतसि भृतः धृतः अतः कथं तत्स्फूर्तिरित्यैहिकं सुखमुक्तम्। परत्र च तेषां त्वम् अपवर्गगतिः मोक्षप्रदश्चेति परलोकेऽपि सुखं तेन भक्तानां हस्तद्वयेऽपि मोदक इति लोकोक्तिः चरितार्था।

सगुणेति पृथक् पदं समागतञ्च । त्वां भजनीयत्वेन अवगन्तुं ज्ञातुं शीलं यस्येति त्वदवगमी त्वल्लीला-रसज्ञ इति वा । चक्रवर्ती तु अपकृष्टा वर्गा धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्था यतस्तथाभूता गतिर्भवसि प्रेमभक्तिप्रद इत्यर्थः । कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम्' इत्युक्तेरित्याह । यद्वा । स सर्वप्रसिद्धः त्वदवगमी न वेत्ति यतः सगुणगीतपरम्परया श्रवणभृत इत्यन्वयः ॥ २७ ॥ ४१ ॥

---

तदेवमानन्दसमुद्रस्य भगवतः स्तुतिव्याजेन लोकोपकारार्थं गूढतत्त्वं निरूप्य तदानन्दस्यापरिच्छिन्नता-मनुभवन्त्यो भावोद्रेकात्तदङ्घ्रिगा एव जाताः । तत्स्पर्शजन्यदिव्यसुखाद्विह्वलाः सत्यो भगवतोऽपरिमितमहिमानं निरूपयन्त्यः स्तुतिमुपसंहरन्ति—द्युपतय इति ।

( भगवत्सुखानन्त्यबोधनपरेयम् )

**द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराण्डनिचया ननु सावरणाः ।**
**ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः॥४२।२८॥**

पद्यानुवादः

न ययुरीश तवान्तमजादयस्त्वमपि नैषि यतोऽण्डचयाः कणाः ।
ख इव रोमसु वान्ति वयं जगन्निरसने रसनेन तवाङ्घ्रिगाः ॥ २८ ॥

---

संक्षिप्तसार्थान्वयः—हे भगवन् ! द्युपतयः स्वर्गादिलोकपतयः ते अन्तं न ययुः । किं बहुना अनन्तया त्वमपि आत्मनोऽन्तं न यासि । ननु अहो यदन्तरा यस्य तव अन्तरा मध्ये सावरणाः सप्तावरणयुक्ताः अण्ड-निचयाः ब्रह्माण्डसमूहाः वयसा कालचक्रेण सह एकदैव वान्ति परिभ्रमन्ति खे रजांसि इव । यत् यस्मात् तस्मात् श्रुतयः अतन्निरसनेन नेति नेति कृत्वा जगत्खण्डनद्वारा त्वयि हि त्वय्येव फलन्ति पर्यवस्यन्ति तात्पर्य-वृत्त्या त्वामेव प्रतिपादयन्ति न तु साक्षात् । कथंभूताः ? भवन्निधनाः भवत्पर्यवसायिन्यः ।

हे भगवन् ! द्युपतयः स्वर्गादिलोकपतय इन्द्रब्रह्मादयः ते तव स्वरूपानन्दस्य अन्तमवधिं पारं वा न ययुः न प्रापुः । तत्र वयं काः ? किं बहुना त्वमपि सर्वज्ञः आत्मनोऽन्तं न यासि न जानासि । तत्र हेतुमाहुः—अनन्ततया अन्ताभावेन । न हि शशविषाणखपुष्पाद्यज्ञानं सार्वज्ञं तदप्राप्तिर्वा सर्वशक्तिमत्तां वा निहन्ति । अनन्तत्वमेवाहुः—यस्य तव अन्तरा प्रत्येकरोमकूपमध्ये ननु अहो सावरणाः उत्तरोत्तरदशगुणित-पृथिव्यादिसप्तावरणसहिता अण्डनिचया ब्रह्माण्डसमूहा वयसा कालचक्रेण सह एकदैव न तु पर्यायेण वान्ति परिभ्रमन्ति । कस्मिन् कानीव ? खे आकशे रजांसि इव परमाणव इव । यस्मादेवं तस्मात् श्रुतयः त्वयि निर्गुणे गुणातीते ब्रह्मणि फलन्ति तात्पर्यवृत्त्या पर्यवस्यन्ति प्रतिपादयन्ति न तु साक्षात् । कथम् ? अतन्निरसनेन । तद् ब्रह्म न भवतीति अतत् मिथ्याभूतं जगत् तस्य निरससेन खण्डनद्वारा । 'सर्वं खल्विदं ब्रह्म', 'नेह नानास्ति किञ्चन' इत्यादि—श्रुतिकदम्बेनेत्यर्थः । यतो भवन्निधनाः भवन्निश्वासभूतत्वाद्भवत्येव सर्व-कारणरूपे त्वय्येव निधनं लयः पर्यवसानं यासान्ताः । निरवधिकनिषेधाभावादवधिभूतं त्वामेव लक्षयन्तीत्यर्थः ; सर्वे वेदा यत्पदमामनन्ति,' 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिवचनात् ।

अयं भावः—यथा सुवर्णहीरकादिक्षेत्रे मृत्पाषाणजलादिषु महता यत्नेन दूरीकृतेष्वेव सुवर्णहीरकादि-कमुपलभ्यते, एवमत्रापि मिथ्याभूतप्रपञ्चान्तर्गतविविधवस्तूनां निरासे कृते एव तत्पदार्थप्राप्तिर्जायते नान्यथेति ।

केचित्तु वयमपि ते समाः 'इत्युक्तेर्गोप्य इव ताद्दगिच्छासम्पन्नत्वाद्दिव्यातिदिव्यविग्रहधारिण्यः सत्यः त्वय्येव-कन्दर्पकोटि-लावण्ये श्रीकृष्ण एव फलन्ति समन्विता जाताः सफलमनोरथा बभूवुः । वर्तमानसामीप्ये भूते लट् । केन हेतुना ? ओ वासुदेवः स एव तत् पूर्णं ब्रह्म तस्य नि नितरां रसनेन आस्वादनेन हेतुना । यतो भवानेव नि निश्चितं धनं पतिरूपं यासान्ताः श्रुतय इति श्लिष्टोऽर्थः । अत्रार्थे प्रमाणं तु 'निभृतमरुन्मनो-क्षेति श्रुतिव्याख्यायामवगन्तव्यम् । एतेन निर्गुणे श्रुतयः कथं ? चरन्तीति प्रश्नोपक्रमस्य त्वयि हि फलन्तीत्युप संहारवाक्येन सोपपत्तिकं समाधानमभ्युक्तं भवति । हिशब्दोऽत्र साक्षादर्थकः । कथं चरन्ति इति ? प्रश्नस्य समाधानपरेयं वा श्रुतिः । सप्तावरणस्य उत्तरोत्तरदशगुणत्वे मानं तु वैष्णवे पराशरोक्तं द्रष्टव्यम् तथाहि—एते सप्त मया लोका मैत्रेय कथितास्तव । पतालानि च सप्तैव ब्रह्माण्डस्यैष विस्तरः ॥ १ ॥ एतदण्डकटाहेन तिर्यगूर्ध्वमधस्तथा । कपित्थस्य यथा बीजं सर्वतो वै समावृतम् ॥२॥ दशोत्तरेण पयसा मैत्रेयाण्डं च तद् वृतम् । स चाम्बुपरिवानोऽसौ वह्निना वेष्टितो बहिः ॥ ३ ॥ वह्निश्च वायुना वायुर्मैत्रेय नभसा वृतः । भूतादिना नभः सोऽपि महता परिवेष्टितः ॥ ४ ॥ दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै । महान्तं च समावृत्य प्रधानं सम वस्थितम् ॥ १५ ॥ अनन्तस्य न तस्यान्तः संस्यानं चापि विद्यते । तदनन्तमसंख्यानं प्रमाणं चापि वै यतः । हेतुभूतमशेषस्य प्रकृतिः सा परा मुने ॥ ६ ॥ इति ॥ २८ ॥ ४२ ॥

---

श्रीभगवानुवाच

**इत्येतद् ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम् । सनन्दनमथानर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ४३**

**इत्यशेषसमाम्नायपुराणोपनिषद्रसः । समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥४४॥**

---

इति इत्थम् ब्रह्मणः पुत्राः सनकादयः एतत् श्रुत्युक्तम् आत्मा जीवात्मा अनुशिष्यते शिक्ष्यते येन तन् आत्मानुशासनम् जीवहितोपदेशं श्रीकृष्णसंबन्ध्युपदेशं वा आ सम्यक् श्रुत्वा अथ अतः अस्मादेव आत्मनः श्रीकृष्णस्य गतिं स्वरूपं च ज्ञात्वा सिद्धाः पूर्णमनोरथाः सन्तः गुरुरूपं सनन्दनमानर्चुः पूजयामासुः । यद्वा । आत्मनः श्रीकृष्णस्य अनुशासनं लीलोपदेशमेव आत्मनो जीवस्य गतिं निस्तारहेतुमाश्रुत्य उपपत्त्वा निश्चित्य च सिद्धाः सन्तः । यद्वा । आ सम्यक् श्रुतिभिः कृतं यदात्मानुशासनं तदेव गतिर्जीवस्य भगवत्प्राप्त्युपायस्तमेव ज्ञात्वा सनन्दनम् अथ श्रीकृष्णं च आनार्चुः । इत्येतदिति नारदं प्रति नारायणवाक्यम् ॥ ४३ ॥

इति इत्थं पूर्वजातैः सनकादिभिः अशेषसमाम्नायानां समस्तवेदानां पुराणानाम् उपनिषदां च रसः सारः समुद्धृतः निर्णीय निष्कासितः तेषां सर्वेषामेव भगवद्भक्तिरसमयं तात्पर्यमित्युद्घाटितमित्यर्थः । कथंभूतैः महात्मभिः ? महान् अत्युदार आत्मा स्वभावः महति श्रीकृष्णे वा आत्मा चित्तं येषान्तैः । अत एव व्योमयानैः व्योम्ना आकाशमार्गेण यानं गमनं येषान्तैः । यद्वा । व्योम ब्रह्म तेन सह यानं विहारो येषां तैः । ब्रह्मपारङ्गतैर्वा इति तेषां सामर्थ्यं द्योतितम् । पुराणस्य वेदोपनिषदयोर्मध्यपातित्वेन न तेन विना तयोस्तात्पर्यावगतिरतस्त-दालोडनमपि नितान्तमावश्यकम् । किञ्च 'ऋचो यजूंषि सामानि पुराणं यजुषा सह । उच्छिष्टाज्जज्ञिरे' इत्यथर्ववेदीयश्रुत्या वेदवत्पुराणस्याप्यपौरुषेयत्वं विवक्षितम् । यजुषेत्यप्रधाने तृतीयया च वेदापेक्षया पुराणस्य प्राधान्यमाधिक्यं च द्योतितम् ।

यथोक्तं नारदीये 'वेदार्थादधिकं मन्ये पुराणार्थं वरानने । वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः । पुराणमन्यथा कृत्वा तिर्यग्योनिमवाप्नुयात् । सुदान्तोऽपि सुशान्तोऽपि न गतिं क्वचिदाप्नुयात्' । स्कान्द-

प्रभासखण्डेऽपि—वेदवन्निश्चलं मन्ये पुराणार्थं द्विजोत्तमाः । वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ॥ १ ॥ बिभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यति । इतिहासपुराणैस्तु निश्चलोऽयं कृतः पुरा ॥ २ ॥ यन्न दृष्टं हि वेदेषु तद् दृष्टं स्मृतिषु द्विजाः । उभयोर्यन्न दृष्टं हि तत्पुराणैः प्रगीयते ॥ ३ ॥ यो वेद चतुरो वेदान् साङ्गोपनिषदो द्विजाः । पुराणं नैव जानाति न च स स्याद्विचक्षणः ॥ ४ ॥ इत्यलमतिविस्तरेण । 'समुद्धृत इति' अर्थः स्थलत्रये गूढः पुराणोपनिषच्छ्रुतौ । सर्वतः सारमेतद्धि समुद्धृतमिहोच्यते, इति तद्विवरणम् ॥ ४४ ॥

---

**त्वं चैतद् ब्रह्मदायाद श्रद्धयाऽऽत्मानुशासनम् । धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ॥४५॥**

**श्रीशुक उवाच**

**एवं स ऋषिणाऽऽदिष्टं गृहीत्वा श्रद्धयाऽऽत्मवान् । पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः ॥४६॥**

**नारदउवाच**

**नमस्तस्मै भगवते कृष्णयामलकीर्तये । यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥४७॥**

**इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः । ततोऽगादाश्रमं साक्षात् पितुर्द्वैपायनस्य मे ॥४८॥**

---

हे ब्रह्मदायाद ब्रह्मपुत्र नारद ! त्वं च त्वमपि एतत् वेदस्तुतिरूपम् आत्मानुशासनं ब्रह्मसम्बन्ध्युपदेशं श्रद्धया हृदि मुखे च धारयन् कामं यथेच्छं गां पृथ्वीं तदुपलक्षितान् लोकान् चर विचर । कीदृशमनुशासनम् ? नृणां ये कामा नानावासनाः तेषां भर्जनं दाहकं निवर्तकमित्यर्थः । ब्रह्मणो दायं भागमत्तीति कर्मण्यण् । आदत्ते वा आतश्चोपसर्गे इति कः । दायादौ सुतबान्धवौ' इत्यमरः । यद्वा । ब्रह्मैव श्रीकृष्णभक्तिरसमेव अयत्नप्राप्तदायमिव अत्ति सेवते इति ब्रह्मदायादशब्दो विवृतः ॥ ४५ ॥

हे राजन् ! एवम् ऋषिणा श्रीनारायणेनोपदिष्टं तत्त्वं श्रद्धया गृहीत्वा पूर्णः निवृत्तसंशयः सन् स नारदः आह नारायणमिति शेषः । कथंभूतः ? वीराणामिव, जितेन्द्रियाणामिव नैष्ठिकं ब्रह्मचर्यं व्रतं यस्य स वीरव्रतः । वीरस्येव व्रतं दृढप्रतिज्ञा यस्येति वा । नैष्ठिकब्रह्मचारित्वात् स्थिरचित्त, अत एव श्रुतधरः श्रुतमात्रं शब्दतोऽर्थतश्च धारयतीति तथाभूतः न बहुकृत्व उपदेशमपेक्षते इत्यर्थः यतो मुनिर्मननशीलः । तत्कुतः ? आत्मवान् भगवन्निष्ठश्च ॥ ४६ ॥

यः सर्वभूतानां सर्वजीवानाम् अभवाय संसारनिवृत्तये मोक्षाय उशतीः कमनीयाः कलाः मूर्तीर्धत्ते तस्मै कृष्णाय नम इत्यन्वयः । कथंभूताय ? अमला निर्दोषा कीर्तिर्यस्य तस्मै यतो भगवते पूर्णैश्वर्याय । कर्षति अरीनपि स्वपदं प्रतीति कृष्णः । यद्वा । स्वगुणैर्वात्सल्यादिभिः कर्षति आकर्षति वशीकरोति भक्तानिति कृष्ण । तन्नमस्कारेण कृष्णपरैवेयं वेदस्तुतिरिति निश्चीयते । अमला असुरेभ्योऽपि मोक्षप्रदत्वादविद्याजन्यमालिन्यनिर्वर्तिका कीर्तिर्यस्येति वा ॥ ४७ ॥ इति इत्थं आद्यम् ऋषिं श्रीनारायणं, महात्मनः मृदुस्वभावा भगवन्निष्ठान् तच्छिष्यांश्च आनम्य प्रणम्य ततो नारायणाश्रमात् मे साक्षात् पितुः कृष्णद्वैपायनस्य श्रीव्यासस्य आश्रममगात् नारद इति शेषः । अग्निमथनावसरे कथञ्चिदरणिपतितस्य स्वरेतसो मथनादेव व्यासाच्छुको जातः तेन योनिव्यवधानं विनैव जनकत्वात् तस्य साक्षात्पितृत्वमुपपद्यते ।

ब्रह्मवैवर्ते तु श्रीशुकजन्मकथा प्रकारान्तरेणोक्ता । तथाहि श्रीव्यासपत्न्या उदरे श्रीशुको बहुकालं योगबलेन स्थितः पित्रा च मुहुर्मुहुः प्रार्थितोऽपि ततो न निर्गत उवाच च । हे भगवन्नहमितो न निर्गमिष्यामि निर्गते च मायाच्छन्नो भविष्यामीति कृष्णश्चेदत्रागत्यैव कथयेत् यत् शुकोपरि नैव मायाक्रमणं स्यादिति तदैव

अहं निर्गमिष्यामीति तच्छ्रुत्वा श्रीव्यासेन द्वारकात आनीतः श्रीकृष्णस्तमुवाच वत्स ! मा भैषीः शीघ्रं निर्गच्छ, तव माता दुःखिता मायालिप्तश्च त्वं न भविष्यसीति तच्छ्रुत्वा श्रीशुकः तत्क्षणाद्बहिर्निगत्य श्रीकृष्णं पितरौ च प्रणम्य परित्यज्य च सर्वं वनं जगामेति, अतः कल्पान्तरमाश्रित्योभयमपि समञ्जसमेव न विरोधः । वस्तुतस्तु अरणिरिति नाम्ना प्रसिद्धा व्यासपत्न्येव अतः सर्वमनवद्यम् । अत्र पक्षे साक्षादित्यस्य स्वयं नारद इत्यर्थः । यद्वा । साक्षादाश्रमं वदरीषण्डमण्डितमित्यत्रान्वेति ॥ ४८ ॥

---

**सभाजितो भगवता कृतासनपरिग्रहः । तस्मै तद् वर्णयामास नारायणमुखाच्छ्रुतम् ॥४९॥**

**इत्येतद् वर्णितं राजन् यन्नः प्रश्नः कृतस्त्वया । यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि श्रुतिश्चरेत्॥५०॥**

**योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो**

**यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः ।**

**यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा**

**तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥५१॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे नारायण नारदसंवादे वेदस्तुतिनाम सप्तशीतितमोऽध्यायः ॥ ८७ ॥

---

भगवता श्रीव्यासेन सभाजितः पूजितः कृतः आसनस्य परिग्रहः स्वीकारो येन तथाभूतः स नारदः यत् श्रुतं श्रुतीनां साक्षाद् ब्रह्मणि श्रीकृष्णे पर्यवसानं तत्सर्वं तस्मै मत्पित्रे व्यासाय वर्णयामास । एतेन श्रीनारायणान्नारदस्ततो व्यासस्तस्मादहं मत्तश्च त्वं प्राप्तवानसीति गुरूपदेशपरम्परा सूचिता तयैव तत्त्वस्फूर्ति-र्नान्यथेति ॥ ४९ ॥ उपसंहरति इतीति । हे राजन् ! नोऽस्मान्प्रति त्वया यत् यः प्रश्नः कृतः तत्र प्रश्ने एतदुत्तरं मया वर्णितम् । किमित्यपेक्षायामाह यथा साक्षात् ब्रह्मणि श्रीकृष्णेऽपि श्रुतिश्चरेत् तथा इत्येतत् वर्णितम् । कीदृशे, वेदान्तिनामनिर्देश्ये तथा मनना।तत्त्वास्फूर्तेरित्यर्थः । निर्गुणे गुणातीते च । भागवतमते तु अनन्तत्वात् साकल्येन निरूपणाशक्यत्वादनिर्देश्ये । यद्वा । ओ वासुदेवस्तेन रूपेण अङ्गुल्या निर्देश्ये । निर्गुणे प्राकृत-गुणरहितत्वाद्भक्तवात्सल्यादिदिव्यगुणगणविशिष्टे च ॥ ५० ॥

संक्षिप्तसार्थान्वयः । योऽस्य विश्वस्य आदिमध्यनिधने सृष्टिस्थितिप्रलये निमित्ते उत्प्रेक्षकः उत्प्रेक्षणेन निरीक्षणमात्रेण कर्ता । संकल्पमात्रेण वा । तदैक्षत बहु स्याम् प्रजायेय इत्यादिश्रुतेः । यश्च अव्यक्तजीवेश्वरः प्रकृतिपुरुषयोर्नियन्ता । किञ्च यः ऋषिणा ब्रह्मणा सह इदं जगत् सृष्ट्वा अनुप्रविश्य च पुरः सर्वजीवशरीराणि चक्रे निर्ममे । पुनस्ताः सर्वाः पुरः शास्ति भोगं ददत्स्वयं परिपालयति ।

किञ्च सुप्तो जनः यथा कुलायं देहाभिमानं त्यजति तथा यं सम्पद्य अनुशयी जीवः अजामविद्यां जहाति तमभयं भयनिवर्तकं हरिमजस्रं नित्यं ध्यायेत् । कथंभूतम् । कैवल्येन स्वरूपावस्थानेन निरस्ता दूरतः क्षिप्ता योनिर्मूलकारणमविद्या मायाशक्तिः येन तं कैवल्यनिरस्तयोनिम् ।

तं हरिम् अजस्रं निरन्तरं ध्यायेत् । तं कम् । यः अस्य सर्वस्य जगत उत्प्रेक्षक उत् उर्ध्वमुत्कृष्टं प्रेक्षते इत्युत्प्रेक्षकः कथमेते उद्धरणीया इत्युत्कृष्टविचारकः । कुतः । योऽस्य जगतः आदिमध्यावसाने वर्तमानः तत्रादौ कारणत्वेन मध्ये आश्रयत्वेन अन्तेऽवधित्वेन च वर्तते इत्यर्थः । किञ्च यः अव्यक्तजीवेश्वरः । अव्यक्तं प्रकृतिः जीवः पुरुषश्च तयोरपि ईश्वरः नियन्ता । एतेन यः सर्वोद्धारकत्वेन ज्ञानप्रदः । यश्च सर्वकारण-भूतः यश्च सर्वनियन्ता स एव ध्येय इत्येव श्रुतीनां निष्कर्षः । किञ्च यः इदं विश्वं चक्रे सृष्टवान् सृष्ट्वा

च पुनः ऋषिणा अन्तर्यामिरूपेण इदं विश्वं स्थावरजङ्गमात्मकमनुप्रविश्य ताः पुरः शरीराणि शास्ति भोगं ददत्परिपालयति । यद्वा । यश्चेदं सूक्ष्मसमष्टिरूपं ब्रह्मशरीरं सृष्ट्वाऽनुप्रविश्य च ऋषिणा ब्रह्मणा द्वारभूतेन पुरो विविधशरीराणि स्थूलानि चक्रे पुनस्ताः शास्ति च । यद्वा । यः ऋषिणा ब्रह्मणा सह इदं जगत् सृष्ट्वा पुरः जीवस्य भोगायतनानि चक्रे स्वयमन्तर्यामिरूपेण चानुप्रविश्य ताः शास्ति च । किञ्च यं सम्पद्य प्राप्य अनुशयी जीवः अजामविद्यां जहाति त्यजति संसारान्मुच्यते इत्यर्थः । अनु अनु पुनः पुनः दण्डवत्प्रणामैर्भगवतश्चरणमूले शेते इति अनुशयी भक्तिमान् जीवः । त्यागे दृष्टान्तः । यथा सुप्तः पुरुषः कौ पृथिव्यां लीयते इति कुलायं स्थूलशरीरं जहाति सन्निहितमपि तन्न स्मरति तद्वत् । य एवंभूतस्तं ध्यायेदिति विधिः । 'निदिध्यासितव्यः' इति श्रुतेः । कथभूतम् । कैवल्यसाधनीभूतया भक्त्या निरस्ता दूरीकृता योनिर्भक्तानामविद्या येन तम् । यद्वा । कैवल्येन शुद्धस्वरूपत्वेन हेतुना निरस्ता दूरे क्षिप्ता योनिर्जगत्कारणं माया यस्मात् । केचित्तु निरस्ता योनिः कारणं यस्य कारणशून्यः कैवल्यश्चासौ निरस्तयोनिश्चेति तम् । 'न तस्य कश्चित् जनिता न चाधिपः' केवलो निर्गुणश्च, इत्यादिश्रुतेरित्याहुः । अत एव अभयं मृत्युभयनिवर्तकम् । भक्तार्तिहरणशीलत्वाद् हरिरिति ।

अत्र अस्योत्प्रेक्षक इत्यादिना जगत्कारणत्वं योऽव्यक्तजीवेश्वर इत्यनेन परमेश्वरत्वं यः सृष्टवेत्यादिना स्वाभाविकदयालुत्वं यमित्यादिना भक्तवात्सल्यं हरिमिति परमसौन्दर्यादिना चित्ताकर्षकत्वं ध्यायेदिति लिङा मुख्यविधिना भगवत्प्राप्त्युपायश्च दर्शितः । तेन च सर्वशास्त्रनिष्कर्षोऽप्येतावानेवेत्यपि ध्वनितम् । उक्तं च आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा' ।। इति । केचितु अत्राभिन्ननिमित्तोपादानकारणत्वप्रतिपादनेन समन्वयाविरोधाध्यायार्थः संगृहीतः । अजस्रं ध्यायेदित्यनेन साधनाध्यायार्थः । जहात्यजामित्यनेन फलाध्यायार्थश्चेति सम्पूर्णा चतुरध्यायी ब्रह्ममीमांसा श्रीशुकेनैकस्मिन् श्लोके व्याख्याता इत्याहुः ।। ५१ ।।

---

इति वेदस्तुतेर्व्याख्या सर्वसन्देहभञ्जनी । कृता पौराणिकेनैषा भक्तिदा भक्ततोषिणी ।। १ ।।
वेदस्तुतिर्यथा क्लिष्टा तथैव सरलीकृता । यत्करग्रहलेखन्या तं नमामि गजाननम् ।। २ ।।
काश्यां भागीरथीतीरे ललितासन्निधौ मया । कृतेयं सरला व्याख्या प्रीयतां तेन मे प्रियः ।। ३ ।।

सततचिन्तनवीतभयाऽऽमया हरिदयाऽऽगतया सुधिया मया ।
इयमनन्तगले ग्रथितार्ऽपिताऽमुकुलिता स्रगिवाऽत्र विराजताम् ।। ४ ।।
नियमतो यमतो निजकर्मतो मननतो भगवत्यनुरागतः ।
श्रुतिगणेन निरुक्तमनुत्तमं [1]द्रुतविलम्बितवृत्त[2]मिहाप्यते ।। ५ ।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे नारायणनारदसंवादे वेदस्तुतिर्नाम सप्ताशीतितमोऽध्यायः ।। ८७ ।।

---

१. द्रुतं गतं विलम्बितं विलम्बो यस्य एवंभूतं यत् वृत्तं वर्तते सर्वत्र इति वृत्तं ब्रह्म श्रीकृष्णरूपमिहैव अस्मिन्नेव जन्मनि आप्यते प्राप्यते । किं कृत्वा । यमनियमादिसाधनैर्भगवति अनुरागमुत्पाद्येत्यर्थः । ल्यब्लोपे पञ्चमी ।

२. गत्यार्थाकर्मकेति कर्तरि क्तः ।

# अथाष्टाशीतितमोऽध्यायः

## राजोवाच

देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् । प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम् ॥१॥

एतद् वेदितुमिच्छामः संदेहोऽत्र महान् हि नः । विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिः ॥२॥

## श्रीशुक उवाच

शिवः शक्तियुतः शश्वत् त्रिलिङ्गो गुणसंवृतः । वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥३॥

ततो विकारा अभवन् षोडशामीषु कञ्चन । उपधावन् विभूतीनां सर्वासामश्नुते गतिम् ॥४॥

हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः परः । स सर्वदृगुपद्रष्टा तं भजन् निर्गुणो भवेत् ॥५॥

निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः । शृण्वन् भगवतो धर्मानपृच्छदिदमच्युतम् ॥६॥

स आह भगवांस्तस्मै प्रीतः शुश्रूषवे प्रभुः । नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोः कुले ॥७॥

## श्रीभगवानुवाच

यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः । ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखितम् ॥८॥

स यदा वितथोद्योगो निर्विण्णः स्याद् धनेहया । मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम् ॥९॥

---

अष्टाशीतितमे शम्भुः कृष्णस्योत्कार्षमीरयन् ।
वृककक्लेशादिवेशेन मोचितश्चेति वर्ण्यते ॥१॥

अशिवमुपेक्षितभोगम् । भोजा भोगसम्पन्नाश्च भवन्ति । प्रायःशब्देन न केवलं धनप्रदत्वमेव अपि तु शिवस्य मोक्षप्रदत्वमपीति ध्वनितम् । ये हरिं भजन्ति ते तु प्रायः न धनिनो न च भोजाः भोगसम्पन्नाः किन्तु निर्धना निर्भोगाश्च भवन्ति ॥१॥ विरुद्धं त्यागभोगलक्षणं सविभूतिकत्वं निर्विभूतिकत्वं वा स्वभावो ययोस्तयोः विरुद्धशीलयोः चरणौ इति शेषः भजतां विरुद्धा गतिः धनिकत्वनिर्धनत्वरूपा ॥२॥ शिवः शक्तियुतः तद्गुणैः संवृतश्च अत एव त्रिलिङ्गः त्रिविधाहङ्कारस्य अधिष्ठाता शिवः । ततोहङ्कारादेव षोडश विकारा भवन्ति । वैकारिकात् मनः राजसात् इन्द्रियाणि तामसात् भूतानि इत्येवं षोडश । अतः शिवस्य गुणमयत्वात् सम्पदामपि त्रिगुणमयत्वात् अमीषु सात्त्विकादिपदार्थेषु मध्ये यत् किञ्चन् किमपि सुखमुद्दिश्य शिवम् उपधावन् भजन् सर्वासां विभूतीनां गतिं फलमश्नुते प्राप्नोति अतो न विरोधे न च सन्देहावसरः॥४॥ हरिः विष्णुस्तु निर्गुणः साक्षात् प्रकृतेः परः स सर्वदृक् सर्वज्ञः उपद्रष्टा साक्षी च तं भजन् निर्गुणः गुणातीतः सन् मुक्त एव न च किञ्चिदिच्छति ध्रुवादेरिव संस्कारवशात् क्वचिदापतिता विभूतिरपि न तस्य बाधिका सत्त्वगुणस्यानावरकत्वादन्ते मुक्तिर्निश्चितमेवेति ॥५॥ अश्वमेधेषु । एकस्यैवाश्वमेधस्य त्रिगुणितदक्षिणादानाद्बहुत्वं न विरुद्धम् । युष्मत्पितामहो युधिष्ठिरः । इदं शिवविष्णूपासकानां क्रमेण धनित्वं दरिद्रत्वं च सूचितम् ॥ ६ ॥ तस्मै युधिष्ठिराय । योऽवतीर्णः स आहेत्यन्वयः ॥ ७ ॥ अनुगृह्णामि अनुग्रहं कर्तुमिच्छामि । त्यजन्ति अनादरं कुर्वन्ति । स्वजनाः पुत्रादयः । दुःखदुःखितमतीवदुःखितम् ॥८॥ वितथोद्योगः निष्फलोद्यमः । निर्विण्णः विरक्तो भवति । मत् मत्तः

तद् ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम्। अतो मां सुदुराराध्यं हित्वाऽन्यान् भजते जनः ।१०।।

ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः। मत्ताः प्रमत्ता वरदान् विस्मरन्त्यवजानते ।।११।।

श्रीशुक उवाच

शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः। सद्यःशापप्रसादोऽङ्ग शिवो ब्रह्मा न चाच्युतः ।।१२।।

अत्र चोदाहरन्तीममितिहासं पुरातनम्। वृकासुराय गिरिशो वरं दत्त्वाऽऽप संकटम् ।।१३।।

वृको नामासुरः पुत्रः शकुनेः पथि नारदम्। दृष्ट्वाऽऽशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ।।१४।।

स आह देवं गिरिशमुपाधावाशु सिद्ध्यसि। योऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति।।१५।।

दशास्यबाणयोस्तुष्टः स्तुवतोर्वन्दिनोरिव। ऐश्वर्यमतुलं दत्त्वा तत आप सुसंकटम् ।।१६।।

इत्यादिष्टस्तमसुर उपाधावत् स्वगात्रतः। केदार आत्मक्रव्येण जुह्वानोऽग्निमुखं हरम् ।।१७।।

देवोपलब्धिमप्राप्य निर्वेदात् सप्तमेऽहनि। शिरोऽवृश्चत् स्वधितिना तत्तीर्थक्लिन्नमूर्धजम् ।।१८।।

तदा महाकारुणिकः स धूर्जटिर्यथा वयं चाग्निरिवोत्थितोऽनलात्।
निगृह्य दोर्भ्यां भुजयोर्न्यवारयत् तत्स्पर्शनाद् भूय उपस्कृताकृतिः ।।१९।।
तमाह चाङ्गालमलं वृणीष्व मे यथाभिकामं वितरामि ते वरम्।
प्रीयेय तोयेन नृणां प्रपद्यतामहो त्वयाऽऽत्मा भृशमर्द्यते वृथा ।।२०।।

---

सकाशात् योऽनुग्रहः तम्। यद्वा। मम असाधारणमनुग्रहं करिष्ये करोमि। मत्परैः मद्भक्तैः ।। ९ ।। यत् सूक्ष्मं परमं ब्रह्म तन्मां हित्वा जनः अन्यान् देवान् भजते इत्यन्वयः। कथंभूतम्। सच्च अनन्तं च यत् कं सुखं तद्रूपम् ।। १० ।। यतो अन्यान् भजते ततो हेतोः ते वरदातॄन् विस्मरन्ति अवजानते च अवज्ञाविषयीकुर्वते। आशु तुष्यन्तीति आशुतोषाः रुद्रादयः तेभ्यः लब्धराजश्रिया उद्धताः उत्पथाः अतिक्रान्तमर्यादाः। मत्ताः गर्विताः प्रमत्ताः विवेकरहिताः ।। ११ ।। शापे प्रसादे च ईशाः समर्थाः। ब्रह्मा चेत्यन्वयः। अङ्ग हे राजन् ।। १२ ।। अत्र शिवस्य सद्यः प्रसादत्वे। आप प्राप्तवान् ।। १३ ।। शकुनेः पुत्रः वृकः पथि नारदं दृष्ट्वा त्रिषु देवेषु आशुतोषं पप्रच्छेत्यन्वयः ।। १४ ।। स नारदः। उपाधाव सेवस्व। तुष्यति। वर्तमानसमीपे भविष्यति लट् ।। १५ ।। बन्दिनोरिव स्तुवतोः तयोः तुष्टः सन् सुसंकटं बहुसंकटं कैलासोत्पाटनं पुरपालन रूपं च ।। १६ ।। इति आदिष्टः असुरः तं शिवमुपाधावत् आराधितवान्। किं कुर्वन् सन्। केदारक्षेत्रे स्वगात्रतः आत्मक्रव्येण आत्मछिन्नमांसेन हरं जुह्वानः। अग्निर्मुखं यस्य तम्। सर्वदेवानामग्निमुखत्वात् तमुद्दिश्य अग्नौ होमं कुर्वन्नित्यर्थः। आत्मना छिन्नं क्रव्यमात्मक्रव्यं तेन। मध्यमपदलोपी समासः ।। १७ ।। निर्वेदात् दुःखात् स्वधितिना[1] छुरिकया शिरोऽवृश्चत् छेत्तुमुद्यतोऽभूत्। तत्तीर्थेन क्लिन्ना आर्द्राः मूर्धजाः केशा यस्य तम् ।। १८ ।। तदा अनलात् अग्निकुण्डात् मूर्तिमान् अग्निरिव उत्थितः स धूर्जटिः[2] शिवः दोर्भ्यां तं भुजयोः निगृह्य न्यवारयदित्यन्वयः यथा वयं कश्चित् मर्तुकामं निवारयामः तद्वत्। स च शिवस्पर्शात् उपस्कृताकृतिः परिपूर्णदेहोऽभवत् ।। १९ ।। तं वृकासुरमाह—अङ्ग हे वृकासुर अलमलं शिरश्छेदनेन न किञ्चित्प्रयोजनमस्तीत्यर्थः। यथाभिकामं यथाभीष्टं मे मत्तो वरं वृणीष्व। अहं ते तुभ्यम्। अहं

---

१. स्वधितिश्छुरिका मता।

२. धूर्गङ्गा जटिषु अस्येति। 'जटिर्जटा' इति द्विरूपकोशः।

देवं स वव्रे पापीयान् वरं भूतभयावहम् । यस्य यस्य करं शीर्ष्णि धास्ये स म्रियतामिति ॥२१॥
तच्छ्रुत्वा भगवान् रुद्रो दुर्मना इव भारत । ओमिति प्रहसंस्तस्मै ददेऽहेरमृतं यथा ॥२२॥
इत्युक्तः सोऽसुरो नूनं गौरीहरणलालसः । स तद्वरपरीक्षार्थं शम्भोर्मूर्ध्नि किलासुरः ।
स्वहस्तं धातुमारेभे सोऽबिभ्यत् स्वकृताच्छिवः ॥२३॥
तेनोपसृष्टः संत्रस्तः पराधावन् सवेपथुः । यावदन्तं दिवो भूमेः काष्ठानामुदगादुदक् ॥२४॥
अजानन्तः प्रतिविधिं तूष्णीमासन् सुरेश्वराः । ततो वैकुण्ठमगमद् भास्वरं तमसः परम् ॥२५॥
यत्र नारायणः साक्षान्न्यासिनां परमा गतिः । शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः ॥२६॥
तं तथाव्यसनं दृष्ट्वा भगवान् वृजनार्दनः । दूरात् प्रत्युदियाद् भूत्वा वटुको योगमायया ॥२७॥
मेखलाजिनदण्डाक्षैस्तेजसाग्निरिव ज्वलन् । अभिवादयामास च तं कुशपाणिर्विनीतवत् ॥२८॥

श्रीभगवानुवाच

शाकुनेय भवान् व्यक्तं श्रान्तः किं दूरमागतः । क्षणं विश्रम्यतां पुंस आत्मायं सर्वकामधुक् ॥२९॥
यदि नः श्रवणायालं युष्मद्व्यवसितं विभो । भण्यतां प्रायशः पुम्भिर्धृतैः स्वार्थान् समीहते ॥

श्रीशुक उवाच

एवं भगवता पृष्टो वचसाऽमृतवर्षिणा । गतक्लमोऽब्रवीत् तस्मै यथापूर्वमनुष्ठितम् ॥३१॥

---

तु तोयेन जलमात्रेणापि प्रपद्यतां पूजयतां पुंसा प्रीयेय प्रीतो भवेयम् । त्वया तु वृथैव आत्मा देहः पीडयते । अहो खेदे ॥ २० ॥ देवं प्रतीति योज्यम् । पापीयानिति चतुर्थकोटिगतेन ईयसुना तस्य महापापित्वं ध्वनितम् । भूतानां प्राणिनां भयम् आवहति प्रापयतीति तथा ॥ २१ ॥ ओमिति स्वीकारार्थेऽव्ययम् तथास्तु इति वरं ददे । अमृतं[1] दुग्धम् ॥२२॥ इतीति सार्द्धम् । गौरीहरणे लालसा उत्कण्ठा यस्य सः । धातुं धर्तुम् । अबिभेत् इति पाठः । स्वकृतात् वरदानात् । इवेत्यनेन दौर्मनस्याभाव एव सूचितः ॥ २३ ॥ तेन असुरेण-उपसृष्टः अनुगतः स शिवः दिवो भूमेश्च यावदन्तं तावत्पर्यन्तं पराधावन् पलायमानः सन् काष्ठानां दिशाम् उत्तरतः सकाशात् उदगात् त्वरया जगाम श्वेतद्वीपेच्छयेत्यर्थः । सवेपथुः सकम्पः इति तु लीलासौन्दर्याय ॥ २४ ॥ प्रतिविधिं तत्प्रतीकारम् । तमसः प्रकृतेः परं वैकुण्ठं श्वेतद्वीपम् । अस्य पृथ्वीगतत्वेऽपि श्रीकृष्णविग्रहवदिति तोषिणी ॥ २५ ॥ यत्र वैकुण्ठे । यतः यत्र न्यस्तदण्डानां हिंसारहितानाम् ॥ २६ ॥ तथा तादृशं व्यसनं यस्य तम् । शिवं दूरादेव दृष्ट्वा मायया वटुको बालब्रह्मचारी भूत्वा प्रत्युदियात् तत्संमुखमाजगाम । वृजिनार्दनः दुःखनाशकः मेखलादिभिः उपलक्षितः स तं वृकासुरम् अभि निर्भयं यथास्यात्तथा वादयामास कथयामासेत्यन्वयः । अजिनं मृगचर्म । अक्षम् अक्षमाला । वतिना विनीतत्वाभावो द्योतितः वञ्चनप्रवृत्तत्वात् । यद्वा । आशिषं ब्रुवन् तमात्मानम् अभिवादयामास स्वं नमस्कारयामासेत्यर्थः ॥ २७ ॥ २८ ॥ हे शाकुनेय शकुनिनन्दन । व्यक्तं निश्चितम् । किं किमर्थम् । पुंसः अयम् आत्मा देहः सर्वान् कामान् दोग्धि पूरयतीति तथा अतो मा पीडयेति वाक्यशेषः ॥ २९ ॥ युष्माकं व्यवसितमभीष्टं निश्चितं वा यदि नोऽस्माकं श्रवणाय अलं योग्यं स्यात् तर्हि कथ्यताम् । यतो जनः धृतैः सहायकैः पुंभिः स्वार्थान् स्वकार्याणि समीहते सम्पादयितुं शक्नोति ॥ ३० ॥ अमृतमिव वर्षितुं शीलं यस्य तेन । गतक्लमो गतश्रमः ॥ ३१ ॥ पैशाच्यं पिशाचभावं

---

१. धृतक्षीरजलेऽमृतम् इति व्याडिः ।

श्रीभगवानुवाच

एवं चेत्तर्हि तद्वाक्यं न वयं श्रद्दधीमहि । यो दक्षशापात् पैशाच्यं प्राप्तः प्रेतपिशाचराट् ॥३२॥
यदि वस्तत्र विस्रम्भो दानवेन्द्र जगद्गुरौ । तर्ह्यङ्गाशु स्वशिरसि हस्तं न्यस्य प्रतीयताम्॥३३॥
यद्यसत्यं वचः शम्भोः कथंचिद् दानवर्षभ । तदैनं जह्यसद्वाचं न यद्वक्ताऽनृतं पुनः ॥३४॥
इत्थं भगवतश्चित्रैर्वचोभिः स सुपेशलैः । भिन्नधीर्विस्मृतः शीर्ष्णि स्वहस्तं कुमतिर्न्यधात् ॥३५॥
अथापतद् भिन्नशिरा वज्राहत इव क्षणात् । जयशब्दो नमः शब्दः साधुशब्दोऽभवद् दिवि॥३६॥
मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे । देवर्षिपितृगन्धर्वा मोचितः संकटाच्छिवः ॥३७॥
मुक्तं गिरिशमभ्याह भगवान् पुरुषोत्तमः । अहो देव महादेव पापोऽयं स्वेन पाप्मना ॥३८॥
हतः को नु महत्स्वीश जन्तुर्वै कृतकिल्बषः । क्षेमी स्यात् किमु विश्वेशे कृतागस्को जगद्गुरौ ॥
य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात् परमात्मनो हरेः ।
गिरित्रमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथारिभिः ॥४०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे रुद्रमोक्षणं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

प्राप्तः । न तद्वचः विश्वासार्हम् ॥ ३२ ॥ तत्र शिवे विस्रम्भः विश्वासः । अङ्ग हे दानवेन्द्र ! प्रतीयतां परीक्ष्यताम् ॥ ३३ ॥ असद्वाचं मिथ्यावादिनम् । यत् यतः पुनः अनृतं न वक्ता न वक्ष्यति ॥ ३४ ॥ चित्रैः भ्रमोत्पादकैः । सुपेशलैः मनोहरैः विस्मृतः विस्मृतवरदानः यतो भिन्नधीः भ्रंशितमतिः । न्यधात् स्थापितवान् ॥ ३५ ॥ अथ तत्क्षणमेव । साधु कृतं साधु कृतमिति हर्षसूचकाः शब्दाः अभवन् ॥ ३६ ॥ पापे पापिनि अर्शं आद्यजन्तः ॥ ३७ ॥ मुक्तमिति युग्मम् । अभ्याह संमुखमागत्य आह । पूर्ववदच्प्रत्ययः पापः हत इति योज्यम् । हे ईश महत्सु त्वद्भक्तेष्वपि कृतापराधः क्षेमी न स्यात् जगद्गुरौ त्वयि न स्यादिति किमुत वक्तव्यम् ॥ ३८ ॥ ३९ ॥ यः एवं गिरित्रमोक्षणरूपं हरेश्चरितं श्रोतरि सति कथयेत् वक्तरि सति शृणुयाच्च स संसृतिभिः नानायोनिसंचारैः तथा कामादिभिः अरिभिश्च विमुच्यते इत्यन्वयः । कथंभूतस्य हरेः । अव्याकृतानां प्रपञ्चातीतानां दिव्यशक्तीनाम् उदन्वतः समुद्रस्य समुद्रवदाधारस्य । परस्य प्रकृतेः परस्य । गिरिस्थः सन् विश्वं त्रायते इति गिरित्रशब्दार्थः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे गूढार्थदीपिन्यामष्टाशीतितमोऽध्यायः ॥ ८८ ॥

# अथैकोननवतितमोऽध्यायः

श्रीशुक उवाच

सरस्वत्यास्तटे राजन्नृषयः सत्रमासते । वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥ १ ॥
तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप । तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद् ब्रह्मणः सभाम् ॥२॥
न तस्मै प्रह्वणं स्तोत्रं चक्रे सत्त्वपरीक्षया । तस्मै चुक्रोध भगवान् प्रज्वलन् स्वेन तेजसा ॥३॥
स आत्मन्युत्थितं मन्युमात्मजायात्मना प्रभुः । अशीशमद् यथा वह्निं स्वयोन्या वारिणाऽऽत्मभूः ॥
ततः कैलासमगमत् स तं देवो महेश्वरः । परिरब्धुं समारेभे उत्थाय भ्रातरं मुदा ॥५॥
नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह । शूलमुद्यम्य तं हन्तुमारेभे तिग्मलोचनः ॥६॥
पतित्वा पादयोर्देवी सान्त्वयामास तं गिरा । अथो जगाम वैकुण्ठं यत्र देवो जनार्दनः ॥७॥
शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत् । तत उत्थाय भगवान् सह लक्ष्म्या सतां गतिः ॥८॥
स्वतल्पादवरुह्याथ ननाम शिरसा मुनिम् । आह ते स्वागतं ब्रह्मन् निषीदात्रासने क्षणम् ।
अजानतामागतान् वः क्षन्तुमर्हथ नः प्रभो ॥९॥
अतीव कोमलौ तात चरणौ ते महामुने । इत्युक्त्वा विप्रचरणौ मर्दयन् स्वेन पाणिना ॥१०॥
पुनीहि सहलोकं मां लोकपालांश्च मद्गतान् । पादोदकेन भवतस्तीर्थानां तीर्थकारिणा ॥११॥

---

नवाशीतितमे विष्णोः श्रेष्ठत्वं भृगुणेरितम् ।
कृष्णोऽर्जुनस्य रक्षार्थं मृतान् पुत्रानथाऽऽनयत् ॥ १ ॥

आसते इति लटा अद्यापि सत्रमस्त्येवेति बोध्यते इति वंशीधरी । वितर्कः[1] संशयो विचारो वा ॥ १ ॥ वै एवार्थे । ते ऋषयः तस्य महत्त्वस्य जिज्ञासया भृगुमेव[2] प्रेषयामासुरित्यन्वयः । किमर्थम् । लोकेषु तज्ज्ञप्त्यै महत्त्वख्यापनाय ॥ २ ॥ तस्मै ब्रह्मणे प्रह्वणं[3] नमस्कारं न चक्रे । सत्त्वं महत्त्वं गुणो वा । तेजसा ब्रह्मतेजसा ॥ ३ ॥ स आत्मभूः ब्रह्मा आत्मनि मनसि उत्थितं मन्युम् आत्मना विवेकवत्या बुद्ध्या शमयामास । यथा वारिणा वह्निं शमयति । कथंभूतेन वारिणा । स्वः वह्निः योनिः उत्पत्तिकारणं यस्य तेन स्वयोनिना । स्त्रीत्वमार्षम् 'अग्नेरापः इति श्रुतेः ॥४॥ तत इति सार्द्धम् । परिरब्धुम् आलिङ्गितुम् समारेभे स च भृगुः तत् नैच्छत् त्वमुत्पथगः कुमार्गगामी असि मां मा स्पृश इति ब्रुवन् सन् । ह विषादे रुद्रस्यापि ब्रह्मललाटोद्भूतत्वेन भ्रातृतेति ॥ ५ ॥ तं भृगुम् तिग्मलोचनः[4] रक्तलोचनः सन् हन्तुमारेभे । तं शिवम् ॥६॥ ७॥ अत्र शयाने तत्रापि उत्संगे तत्रापि वक्षसि तत्रापि पदा न तु हस्तादिना इत्यपराधस्य पराकाष्ठा दर्शिता ॥८॥ वः युष्मान् आगतान् अजानतां नोऽस्माकमपराधं क्षन्तुमर्हसि । आसने निषीद उपविश ॥९॥ तीर्थानां गङ्गादीनामपि तीर्थकारिणा पवित्रत्वकारिणा पादोदकेन मां पुनीहीति योज्यम् ॥ १० ॥ अतीव कोमलौ चरणौ वज्रवत्कठोरमद्वक्षःस्पर्शेन

---

१. तर्काभावे वितर्कः स्यात् संशये च विचारणे । इति निरुक्तिः ।

२. 'महर्षीणां भृगुरहम्' इत्युक्तेः तस्यैव तत्र योग्यत्वात् ।

३. प्रह्वशब्दाचारक्विबन्तात् ल्युट् ।

४. अग्निनेत्रो वा । 'तिग्मं तीक्ष्णत्रि रक्ताग्नितमोव्याप्तजनेषु च 'निरुक्तम्' ।

अद्याहं भगवल्लँक्ष्म्या आसमेकान्तभाजनम् । वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः ॥१२॥

श्रीशुक उवाच

एवं ब्रुवाणे वैकुण्ठे भृगुस्तन्मन्द्रया गिरा । निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कण्ठोऽश्रुलोचनः ॥१३॥

पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् । स्वानुभूतमशेषेण राजन् भृगुरवर्णयत् ॥१४॥

तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः । भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम् ॥१५॥

धर्मः साक्षाद् यतो ज्ञानं वैराग्यं च तदन्वितम् । ऐश्वर्यं चाष्टधा यस्माद् यशश्चात्ममलापहम् ॥

मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम् । अकिंचनानां साधूनां यमाहुः परमां गतिम्॥१७॥

सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः । भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः॥१८॥

त्रिविधाकृतयस्तस्य राक्षसा असुराः सुराः । गुणिन्या मायया सृष्टा सत्त्वं तत्तीर्थसाधनम्॥१९॥

श्रीशुक उवाच

एवं सारस्वता विप्रा नृणां संशयनुत्तये । पुरुषस्य पदाम्भोजसेवया तद्गतिं गताः ॥२०॥

सूत उवाच

इत्येतन्मुनितनयास्यपद्मगन्धपीयूषं भवभयभित् परस्य पुंसः ।
सुश्लोकं श्रवणपुटैः पिबत्यभीक्ष्णं पान्थोऽध्वभ्रमणपरिश्रमं जहाति ॥२१॥

श्रीशुक उवाच

एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः । जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत ॥२२॥

---

पीडिताविति शेषः । मर्दयन् सन् आहेति योज्यम् ॥ ११ ॥ एकान्तभाजनं मुख्यपात्रं निवासस्थानमित्यर्थः । यतः मे उरसि भूतिः लक्ष्मीः सदा वत्स्यति । भवत्पादेन हतंमहः पापं यस्य मे । एतच्च लोकसंग्रहार्थमिति-ज्ञेयम् ॥ १२ ॥ तस्य विष्णोः मन्द्रया गम्भीरया गिरा तर्पितः तृप्तिं प्रापितः सन् तूष्णीं बभूवेत्यन्वयः । एतत्कर्मणि भृगोरपराधस्तु न वाच्यः भगवदिच्छयैवैतल्लीलायां तस्य सहकारित्वात् ॥ १३ ॥ सत्रं यज्ञस्थलम् ॥ १४ ॥ भूयांसं सर्वोत्तमं श्रद्दधुः निश्चितवन्तः । यतो हेतोः अन्येषामपि शान्तिः अभयं भयाभावश्च ॥ १५ ॥ यतो यस्मात् धर्मः प्रवर्तते यं परमां गतिमाहुः यस्य सत्त्वं प्रिया मूर्तिरस्ति ब्राह्मणाश्च इष्टदेवताः तस्य त्रिविधा आकृतयः मूर्तयः सन्ति तासु तत् सत्त्वं सत्त्वमूर्तिः प्राप्तिसाधनमस्तीति चतुर्णामेकान्वयः । राक्षसाः तामस्यः असुरा राजस्यः सुराः सात्त्विक्यः । अनाशिषः निष्कामाः अष्टधा ऐश्वर्यम् अणिमादिभेदेन । यशः चरितं च आत्मनो मनसो मलं चाञ्चल्यमपहन्ति निवर्तयतीति तथा ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ सारस्वताः सरस्वती-तीरवासिनः । संशयः को महानिति तस्य नुत्तये निवृत्तये विष्णुं निर्णीयेति योज्यम् । तद्गतिं मुक्तिं प्रापु-रिति ॥ २० ॥ यः पान्थः संसारपथिकः परस्य पुंसः विष्णोः सुश्लोक्यं प्रशस्तं मेतत् यशः श्रवणपुटैः कर्णरन्ध्रैः इत्थं पिबति शृणोति स अध्वभ्रमणं नानायोनिषु गमनं तत्परिश्रमं च यातायातजन्यं जहाति मुक्तो भवतीत्यर्थः । कथंभूतं यशः । मुनितनयः श्रीशुकः तस्य आस्यपद्मं मुखकमलं तस्य गन्धः संबन्धो यस्मिन् तत् पीयुषममृतमिव स्वादु । पुनश्च । भवभयं मृत्युभयं भिनत्तीति तथा । अभीक्ष्णं पुनः पुनः ॥ २१ ॥ हे भारत परीक्षित् ॥ २२ ॥

विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः । इदं प्रोवाच विलपन्नातुरो दीनमानसः ॥२३॥
ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः । क्षत्रबन्धोः कर्मदोषात् पञ्चत्वं मे गतोऽर्भकः ॥२४॥
हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम् । प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः॥२५॥
एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च । विसृज्य स नृपद्वारि तां गाथां समगायत ॥२६॥
तामर्जुन उपश्रुत्य कर्हिचित् केशवान्तिके । परेते नवमे बाले ब्राह्मणं समभाषत ।।२७॥
किंस्विद् ब्रह्मंस्त्वन्निवासे इह नास्ति धनुर्धरः । राजन्यबन्धुरेते वै ब्राह्मणाः सत्र आसते ॥२८॥
धनदारात्मजापृक्ता यत्र शोचन्ति ब्राह्मणाः । ते वै राजन्यवेषेण नटा जीवन्त्यसुम्भराः ॥२९॥
अहं प्रजां वां भगवन् रक्षिष्ये दीनयोरिह । अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ।३०॥

ब्राह्मण उवाच

सङ्कर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः । अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥३१॥
तत्कथं नु भवान् कर्म दुष्करं जगदीश्वरैः । चिकीर्षसि त्वं बालिश्यात् तन्न श्रद्दधमहे वयम्॥३२॥

अर्जुन उवाच

नाहं सङ्कर्षणो ब्रह्मन् न कृष्णः कार्ष्णिरेव च। अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः॥३३॥
मावमंस्था मम ब्रह्मन् वीर्यं त्र्यम्बकतोषणम् । मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभो॥३४॥
एवं विस्रम्भितो विप्रः फाल्गुनेन परंतप । जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥३५॥

---

राज्ञः उग्रसेनस्य द्वारि ॥ २३ ॥ शठा वञ्चनपरा धर्मरहिता वा धीर्यस्य । क्षत्रबन्धोः क्षत्रियाधमस्य । कर्मदोषात् अनाचारात् । पञ्चत्वं मृत्युम् ॥२४॥ सीदन्ति क्लिश्यन्ति ॥२५॥ विसृज्य संस्थाप्य गाथां चर्चाम् राजन्यदोषरूपाम् ॥ २६ ॥ परेते मृते सति । तां गाथाम् ॥२७॥ हे ब्रह्मन् । त्वन्निवासे इह स्थाने किं कश्चित् धनुर्धरः राजन्यबन्धुः क्षत्रियाधमोऽपि नास्ति । स्वित् इति वितर्के । यथा सत्रे समाजे भोजनार्थं मिलिता ब्राह्मणा आसते एवमेते यदवोऽपि भोगमुद्दिश्यैव तिष्ठन्ति न च रक्षन्त्यहो कष्टमित्यर्थः । वै इवार्थे ॥२८॥ येषु राजन्येषु जीवत्सु सत्सु ब्राह्मणा शोचन्ति ते राजन्यवेषेण क्षत्रिया असुम्भराः असूनेव बिभ्रति पोषयन्ति नटा इव जीवन्ति जीविकां कुर्वन्ति न च स्वधर्मं पालयन्ति । कथंभूता ब्राह्मणाः । धनादिभिः अपृक्ता वियुक्ताः ॥ २९ ॥ इह द्वारकायां वां युवयोः स्त्रीपुंसयोः । अनिस्तीर्णं प्रतिज्ञः अपूर्णप्रतिज्ञश्चेदहमग्निं प्रवेक्ष्ये इत्यन्वयः । एवं सति हतकल्मषः प्रतिज्ञाभंगदोषरहितः स्याम् । अहतेति वा पाठः । मिथ्याप्रतिज्ञत्वात् ॥ ३० ॥ संकर्षण इति युग्मम् । संकर्षणादयः यत् मदपत्यं त्रातुं न शक्नुवन्ति तत् कर्म भवान् कर्तुं कथं नु शक्नुयात् किन्तु बालिश्यात् त्वं चिकीर्षसि तत् वयं न श्रद्दधमहे न विश्वसिम इति द्वयोरन्वयः । 'बालिशो बालमूर्खयोः' इति हलधरः । नास्ति प्रतिरथः प्रतियोद्धा यस्य ॥ ३१ ॥ ३२ ॥ कार्ष्णिः कृष्णपुत्रः प्रद्युम्नः अनिरुद्धश्च । वै द्वयं प्रसिद्धार्थे । एकोऽर्जुनेन द्वितीयो धनुषा संबध्यते ॥ ३३ ॥ मम वीर्यं पराक्रमं मावमंस्थाः मा निन्द । अविश्वासं मा कार्षीरित्यर्थः । त्रीणि अम्बकानि लोचनानि यस्य स त्र्यम्बकः शिवः । प्रधने संग्रामे ॥ ३४ ॥ विस्रम्भितः विश्वासं प्रापितः । फल्गुनी नक्षत्रं तत्र भवः फाल्गुनोऽर्जुनः । निशामयन् श्रवण्वन् श्रावयन्

प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः । पाहि पाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥३६॥

स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम् । दिव्यान्यस्त्राणि संस्मृत्य सज्यं गाण्डीवमाददे॥३७॥

न्यरुणत् सूतिकागारं शरैर्नानास्त्रयोजितैः । तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥३८॥

ततः कुमारः संजातो विप्रपत्न्या रुदन् मुहुः । सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥३९॥

तदाऽऽह विप्रो विजयं विनिन्दन् कृष्णसंनिधौ । मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम्॥४०॥

न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः । यस्य शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः ॥४१॥

धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः । दैवोपसृष्टं यो मौढ्यादानिनीषति दुर्मतिः॥४२॥

एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः । ययौ संयमनीमाशु यत्रास्ते भगवान् यमः ॥४३॥

विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात् पुरीम् । आग्नेयीं नैर्ऋतीं सौम्यां वायव्यां वारुणीमथ ।
रसातलं नाकपृष्टं धिष्णयान्यन्यान्युदायुधः ॥४४॥

ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः । अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥४५॥

दर्शये द्विजसूनूंस्ते मावज्ञात्मानमात्मना । कीर्तिं त एते विमलां स्थापयिष्यन्ति मानवाः॥४६॥

इति सम्भाष्य भगवानर्जुनेन सहेश्वरः । दिव्यं स्वरथमास्थाय प्रतीचीं दिशमाविशत् ॥४७॥

सप्तद्वीपान् सप्त सिन्धून् सप्तसप्तगिरीनथ । लोकालोकं तथातीत्य विवेश सुमहत्तमः ॥४८॥

तत्राश्वाः शैव्यसुग्रीवमेघपुष्पबलाहकाः । तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ ॥४९॥

तान् दृष्ट्वा भगवान् कृष्णो महायोगेश्वरेश्वरः । सहस्रादित्यसंकाशं स्वचक्रं प्राहिणोत् पुरः॥५०॥

तमः सुघोरं गहनं कृतं महत् विदारयद् भूरितरेण रोचिषा ।
मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥५१॥

---

उभयार्थकः ॥३५॥ आसन्ने सन्निकटे । आतुरः भयाक्रान्तः ॥३६॥ शुचि अम्भः मन्त्रपूतजलम् उपस्पृश्य आचम्य गाण्डीवम् आददे जग्राह ॥ ३७ ॥ अस्त्रं मन्त्राभिमन्त्रितम् । न्यरुणत् समन्तादावृतवान् । रुधिर आवरणे धातुः ॥ ३८ ॥ विहायसा आकाशमार्गेण । अदर्शनमापेदे देहोऽपि नावशिष्ट इत्यर्थः ॥ ३९ ॥ विजयमर्जुनम् । क्लीबस्य अर्जुनस्य कत्थनमात्मप्रशंसनं श्रद्दधे विश्वसितवान् ॥ ४० ॥ यस्य प्रजाः परित्रातुं न शेकुः न समर्था बभूवुः तत् तत्र अन्यः कोऽविता रक्षकः ईश्वरः समर्थः स्यात् न कोऽपीत्यन्वयः ॥ ४१ ॥ यः दैवेन उपसृष्टं नाशितम् आनिनीषति आनेतुमिच्छति ॥ ४२ ॥ विद्याम् सर्वसामर्थ्यदाम् । शपति आक्रोशति सति । शप् आक्रोशे धातुः । संयम्यन्ते प्रताड्यन्ते पापिनोऽत्रेति संयमनी यमपुरी । अधिकरणे ल्युट् टित्वात् ङीप् ? ॥४३॥ सौम्याम् उत्तरदिग्वर्तिनीम् अचक्षाणः अपश्यन् । धिष्ण्यानि ब्रह्मादिस्थानानि । अगात् उदायुधः उद्यतशस्त्रः सन् ॥४४॥ अनिस्तीर्णप्रतिश्रुतः अपूर्णीकृतप्रतिज्ञः । प्रतिषेधता निषेधं कुर्वता भगवता प्रत्युक्तः निवारितः ॥४५॥ आत्मना स्वयमात्मानं मावज्ञ मावमानं कुरु । आर्षोऽयम् । यद्वा । आत्मना आत्मानं प्रति अवज्ञा मा भवितुमर्हतीति योज्यम् । अत्र । 'कीर्तिं त एते विपुलां स्थापयिष्यन्ति मानवाः इति पाठस्तु सुगम इति वंशीधरी । मूले छन्दोभंगपाठस्तु नादरणीयः ॥ ४६ ॥ ईश्वरः श्रीकृष्णः प्रतीचीं पश्चिमाम् ॥ ४७ ॥ सप्त सप्त संख्याकाः गिरयो मर्यादापर्वता येषु तान् सप्तद्वीपानित्यस्य विशेषणम् । अतीत्य अतिक्रम्य ॥ ४८ ॥ तत्र तमसि अश्वा भ्रष्टगतयः भ्रष्टमार्गा बभूवुरित्यन्वयः । शैव्यादिनामानः चत्वारः अश्वाः ॥ ४९ ॥ तान् भ्रष्टगतीन् अश्वान् । संकाशं सदृशम् चक्रं प्राहिणोत् चिक्षेप ॥ ५० ॥ सुदर्शनं चक्रं भूरितरेण रोचिषा प्रकाशेन तमो विदारयत् तत्र

द्वारेण चक्रानुपथेन तत्तमःपरं परं ज्योतिरनन्तपारम् ।
समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षोऽपिदधेऽक्षिणी उभे ॥५२॥
ततः प्रविष्टः सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभीषणम् ।
तत्राद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम् ॥५३॥
तस्मिन् महाभीममनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः ।
विभ्राजमानं द्विगुणोल्वणेक्षणं सिताचलाभं शितिकण्ठजिह्वम् ॥५४॥
ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम् ।
सान्द्राम्बुदाभं सुपिशङ्गवाससं प्रसन्नवक्त्रं रुचिरायतेक्षणम् ॥५५॥
महामणिव्रातकिरीटकुण्डलप्रभापरिक्षिप्तसहस्रकुन्तलम् ।
प्रलम्बचार्वष्टभुजं सकौस्तुभं श्रीवत्सलक्ष्मं वनमालया वृतम् ॥५६॥

---

निर्विविशे इत्यन्वयः । चमू. रावणसेना. । सुघोरं भयानकम् गहनं दुष्प्रदेशम् । महत् विस्तृतम् कृतं भगवतैव प्रकृतिपरिणामरूपम् । अत्र कृतमित्युक्त्या आलोकाभावमात्रं तमः इत्येवं वदन्तस्ताकिकाः परास्ताः । गुणः प्रत्यश्चासंज्ञकः ॥ ५१ ॥ चक्रानुपथेन चक्रमनुगतेन द्वारेण[1] रन्ध्रभूतेन तमसः प्रकृतेः प्रकृत्यावरणात्[2] परं दूरे वर्तमानं परं श्रेष्ठं तत् भागवतं ज्योतिः समश्नुवानं सर्वत्र व्याप्नुवत् समीक्ष्य तेनैव प्रताडिताक्षः फाल्गुनोऽर्जुनः अक्षिणी पिदधे न्यमीलयदित्यन्वयः । कीदृशं ज्योतिः । अनन्तपारम् अन्तपाररहितम् ॥ ५२ ॥ ततो ज्योतिर्दर्शनोत्तरम् । सोऽर्जुनो भगवान् सलिलं प्रविष्टः तत्र सलिले अद्भुतमलौकिकं भवनं प्रविष्टः तस्मिन् भवने अनन्तं शेषं तथा तद्भोगसुखासनं विभुं श्रीनारायणं च ददर्शेति तृतीयेनान्वयः । कथंभूतं सलिलम् । बलीयसा प्रचण्डेन वायुना एजद्भिः कम्पमानैः उच्चलद्भिः बृहद्भिः विशालैः तरङ्गैः भीषणम्[3] । कथंभूतं भवनम् । द्युतिमत्सु दीप्तिमत्सु मध्ये श्रेष्ठतमम् । पुनश्च । भ्राजता मणिस्तम्भसहस्रेण उपशोभितम् । कथंभूतमनन्तम् । सहस्रं मूर्ध्नि भवा ये फणामणयस्तेषां द्युतिभिः विभ्राजमानम् । पुनश्च । द्विगुणानि द्विसहस्रसंख्याकानि उल्वणानि भयङ्कराणि नेत्राणि यस्य । सिताचलः स्फटिकपर्वतः तस्य आभा इव आभा यस्य तम् । पुनश्च । शितयो नीलाः कण्ठा जिह्वाश्च यस्य तम् । कथंभूतं विभुम् । सान्द्रस्य सघनस्य अम्बुदस्य आभा इव आभा यस्य । तस्य अनन्तस्य भोगो देह[4] एव सुखकरम् आसनं यस्य । रुचिरे आयते विशाले ईक्षणे यस्य । पुनः कीदृशं विभुम् । पुरुषेषु त्रिषु उत्तमो विष्णुः तस्मादपि उत्तम आदिपुरुषो नारायणस्तम् ॥ ५३ ॥ ५४ ॥ ॥ ५५ ॥ पुनश्च । महामणिसमूहा येषु ते किरीटकुण्डलास्तेषां प्रभाभिः परिक्षिप्ता अलङ्कृताः सहस्रमपरिमिता कुन्तलाः केशा यस्य । पुनश्च । प्रलम्बाः चारवो मनोहरा अष्टौ भुजा यस्य । श्रीवत्सो भृगुलता ॥५६॥ पुनश्च स्वपार्षदैः मूर्तिमद्भिः आयुधैः पुष्टयादिभिः शक्तिभिः अखिलर्द्धिभिः अणिमादिभिश्च नितरां सेव्यमानम् । पुनश्च ।

---

१. चक्रेणैव सप्तावरणभेदो ज्ञेयः ।

२. आवरणात् अष्टमात् ।

३. भीषणमिति पाठः प्रशस्तः ।

४. 'अहेः शरीरं भोगः स्यात्' इत्यमरः ।

सुनन्दनन्दप्रमुखैः स्वपार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः।
पुष्टया श्रिया कीर्त्यजयाखिलर्धिभिर्निषेव्यमाणं परमेष्ठिनां पतिम्॥५७॥
ववन्द आत्मानमनन्तमच्युतो जिष्णुश्च तद्दर्शनजातसाध्वसः।
तावाह भूमा परमेष्ठिनां प्रभुर्बद्धाञ्जली सस्मितमूर्जया गिरा॥५८॥
द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये।
कलावतीर्णाववनेर्भरासुरान् हत्वेह भूयस्त्वरयेतमन्ति मे॥५९॥
पूर्णकामावपि युवां नरनारायणावृषी। धर्ममाचरतं स्थित्यै ऋषभौ लोकसंग्रहम्॥६०॥
इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना। ओमित्यानम्य भूमानमादाय द्विजदारकान्॥६१॥
न्यवर्ततां स्वकं धाम सम्प्रहृष्टौ यथागतम्। विप्राय ददतुः पुत्रान् यथारूपं यथावय॥६२॥
निशाम्य वैष्णवं धाम पार्थः परमविस्मितः। यत् किंचित् पौरुषं पुंसां मेने कृष्णानुकम्पितम्॥६३॥
इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन्। बुभुजे विषयान् ग्राम्यानीजे चात्यूर्जितैर्मखैः॥६४॥
प्रववर्षाखिलान् कामान् प्रजासु ब्राह्मणादिषु। यथाकालं यथैवेन्द्रो भगवाञ्छ्रैष्ठ्यमास्थित॥६५॥
हत्वा नृपानधर्मिष्ठान् घातयित्वार्जुनादिभिः। अञ्जसा वर्तयाभास धर्मं धर्मसुतादिभिः॥६६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे द्विजकुमारानयनं नाम एकोननवतितमोऽध्यायः॥ ८९॥

---

परमेष्ठिनां द्विपरार्धान्ते मुक्तानां समस्तब्रह्मणां पतिम्॥ ५७॥ अच्युत आत्मानं ववन्दे जिष्णुः अर्जुनोऽपि ववन्दे। ततो भूमा सर्वेश्वरः बद्धाञ्जली तौ ऊर्जया गम्भीरया गिरा सस्मितम् आहेत्यन्वयः। कथंभूतः। तस्य दर्शनेन जातं साध्वसं हर्षोद्रेको यस्य॥५८॥ धर्मगुप्तये भुवि हे कलावतीर्णौ। युवयोः दिदृक्षुणा मया द्विजात्मजा उपनीताः समीपमानीताः। अतो मे मम पादभूताया अवनेः भरासुरान् भारभूतान् असुरान् हत्वा युवां त्वरया झटिति मे अन्ति मम समीपम् इतमागच्छतम्। 'इण् धातोर्लोट्' मध्यमपुरुषद्विवचनम्। यद्वा। त्वरेर्ण्यन्तात् लिङि रूपं मित्त्वात् ह्रस्वत्वम्। कलाभिः शक्तिभिः। यद्वा। कं सुखं लाति ददातीति कला रक्षा तदर्थमवतीर्णौ। मे कलेत्यन्वयो न कार्यः अन्यथा 'कृष्णस्तु भगवान् स्वयम्' ववन्द आत्मानम् इत्यनेन च विरोधः स्यादित्य-वधेयम्॥ ५९॥ स्थित्यै रक्षणाय युवां धर्ममाचरतम्। इत्येव पाठः। कीदृशम्। लोकाः जनाः संगृह्यन्ते प्रवर्त्यन्तेऽनेन तथा। ऋषभौ श्रेष्ठौ॥ ६०॥ इतीति युग्मम्। कृष्णौ कृष्णार्जुनौ। ओमिति तदाज्ञामङ्गीकृत्य दारकान् बालान् आदाय यथा आगतं तथा स्वकं धाम न्यवर्ततामित्यन्वयः॥ ६१॥ ६२॥ धाम महाकालपुरं निशाम्य दृष्ट्वा यत् किञ्चित् पौरुषं तत्सर्वं कृष्णानुकम्पाजनितमेव मेने॥६३॥ वीर्याणि चरितानि। ग्राम्यान् लौकि-कान्। ऊर्जितैः समृद्धैः॥ ६४॥ यथाकालं कामान् प्रववर्ष सम्पादयामास यथा इन्दो वर्षति तथा। श्रैष्ठ्यं सर्वावतारेभ्यः श्रैष्ठ्यमाधिक्यं कर्मज्ञानोपदेशयुद्धादिकमाश्रित्य स्थितः॥ ६५॥ अञ्जसा अनायासेन धर्मं प्रवर्तयामास। आदिना जरासन्धिसहदेवादयः॥ ६६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्या संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां नवाशीतितमोऽध्यायः॥ ८९॥

## अथ नवतितमोऽध्यायः

### श्रीशुकउवाच

सुखं स्वपुर्यां निवसन् द्वारकायां श्रियः पतिः । सर्वसम्पत्समृद्धायां जुष्टायां वृष्णिपुङ्गवैः ॥१॥

स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः । कन्दुकादिभिर्हर्म्येषु क्रीडन्तीभिस्तडिद्द्युभिः ॥२॥

नित्यं संकुलमार्गायां मदच्युद्भिर्मतङ्गजैः । स्वलङ्कृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥३॥

उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु । निर्विशद्भृङ्गविहगैर्नादितायां समन्ततः ॥४॥

रेमे षोडशसाहस्रपत्नीनामेकवल्लभः । तावद्विचित्ररूपोऽसौ तद्गृहेषु महर्द्धिषु ॥५॥

प्रोत्फुल्लोत्पलकह्लारकुमुदाम्भोजरेणुभिः । वासितामलतोयेषु कूजद्द्विजकुलेषु च ॥६॥

विजहार विगाह्याम्भो ह्रदिनीषु महोदयः । कुचकुङ्कुमलिप्ताङ्गः परिरब्धश्च योषिताम् ॥७॥

उपगीयमानो गन्धर्वैर्मृदङ्गपणवानकान् । वादयद्भिर्मुदा वीणां सूतमागधवन्दिभिः ॥८॥

सिच्यमानोऽच्युतस्ताभिर्हसन्तीभिः स्म रेचकैः । प्रतिषिंचन् विचिक्रीडे यक्षीभिर्यक्षराडिव ॥९॥

ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः सिंचन्त्य उद्धृतबृहत्कबरप्रसूनाः ।
कान्तं स्म रेचकजिहीरषयोपगुह्य जातस्मरोत्सवलसद्वदना विरेजुः ॥१०॥

---

अध्याये चरमे स्त्राभिः क्रीडा तत्प्रेमसूक्तयः ।
यादवानां च लीलानामानन्त्यं चात्र वर्ण्यते ॥ १ ॥

सुखमिति षट्कम् । असौ श्रियः पतिः द्वारकायां निवसन् पत्नीनामेकवल्लभोऽपि तावद्विचित्ररूपः सन् तद्गृहेषु ताभिः सह रेमे इति पञ्चमेनान्वयः । कथंभूतायां द्वारकायाम् । वृष्णिपुङ्गवैः यदुवंशीयैः स्त्रीभिश्च जुष्टायां सेवितायाम् । पुनश्च । मदच्युद्भिः मतङ्गजैः भटादिभिश्च व्याप्तमार्गायाम् । पुनश्च । पुष्पितद्रुमपङ्क्तिषु निर्विशद्भिः भृङ्गैः विहगैश्च समन्तात् नादितायाम् । कथंभूताभिः स्त्रीभिः । नवयौवनेन कान्तिर्यासां ताभिः पुनश्च । तडितामिव द्यौः द्युतिर्यासां ताभिः । कन्दुकादिभिः हर्म्येषु क्रीडन्तीभिः । कथंभूतेषु गृहेषु । ऋद्धिसिद्धियुक्तेषु । पुनश्च । प्रोत्फुल्लानां विकसितानामुत्पलादीनां रेणुभिः परागैः वासितानि निर्मलतोयानि येषु तेषु । पुनश्च । कूजन्ति पक्षिकुलानि सरःसम्बन्धीनि येषु तेषु । उत्पलेति । क्रमेण सन्ध्यारात्रिदिनविकासीनि कमलानि ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ किञ्च कृष्णः ह्रदिनीषु[1] नदीषु अम्भो जलं निगाह्य आलोड्य विजहार । गाहू विलोडने धातुः । योषितां योषिद्भिः आलिङ्गितः । उदयः उत्कर्षः ॥ ७ ॥ उपेति युग्मम् । मृदङ्गादीन् तथा वीणां च वादयद्भिः सूतादिभिः उपगीयमानः स्त्रीभिश्च रेचकैः सिच्यमानः अच्युतः स्वयमपि ताः प्रतिसिञ्चन् चिक्रीडे इति द्वयोरन्वयः । यक्षराट् कुबेरो यथा यक्षीभिः क्रीडति । कर्मव्यतिहारे तङ् । स्म अप्यर्थे ॥ ८ ॥ ९ ॥ सिञ्चन्त्यः ताः स्त्रियः विरेजुः स्मेति सम्बन्धः । कथंभूताः स्त्रियः । क्लिन्नानि आर्द्राणि वस्त्राणि यासाम् अत एव विवृता प्रकटिता दृष्टिगोचरीभूता ऊरुकुच प्रदेशाः यासा ताश्च ताश्च ताः । पुनश्च । उद्धृतानि विगलितानि बृहत्केशपाशेभ्यः प्रसूनानि यासां ताः । पुनश्च । रेचकजिहीर्षया कान्तमुपगुह्य-आलिङ्ग्य जातस्मरेण य उत्सवः आनन्दः तेन लसन्ति शोभमानानि मुखानि यासां ताः । स्म विस्मये ॥१०॥

---

१. ह्रदिनी तरिनी नदी । इत्युत्पलोक्तेः ।

कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक् क्रीडाभिषङ्गधुतकुन्तलवृन्दबन्धः ।
सिञ्चन् मुहुर्युवतिभिः प्रतिषिच्यमानो रेमे करेणुभिरिवेभपतिः परीतः ॥११॥

नटानां नर्तकीनां च गीतवाद्योपजीविनाम् । क्रीडालंकारवासांसि कृष्णोऽदात्तस्य च स्त्रियः॥१२॥

कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः । नर्मक्ष्वेलिपरिष्वङ्गैः स्त्रीणां किल हृता धियः॥१३॥

ऊचुर्मुकुन्दैकधियोऽगिर उन्मत्तवज्जडम् । चिन्तयन्त्योऽरविन्दाक्षं तानि मे गदतः शृणु ॥१४॥

महिष्य ऊचुः

कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः ।
वयमिव सखि कच्चिद् गाढनिर्भिन्नचेता नलिननयनहासोदारलीलेक्षितेन ॥१५॥

नेत्रे निमीलयसि नक्तमदृष्टबन्धुस्त्वं रोरवीषि करुणं बत चक्रवाकि ।
दास्यं गता वयमिवाच्युतपादजुष्टां किं वा स्रजं स्पृहयसे कबरेण वोढुम् ॥१६॥

---

युवतिभिः मुहुः प्रतिषिच्यमानः कृष्णस्तु स्वयं ताः सिञ्चन् सन् रेमे इत्यन्वयः । यथा करेणुभिः गजीभिः परीतो वेष्टित इभपतिः गजेन्द्रो रमते तथा । कथंभूतः कृष्णः । तासां स्तनेभ्यः विषज्जिता संस्पृष्टा अत एव कुंकुम-रागयुक्ता स्रक् यस्य । पुनश्च । क्रीडाया अभिषङ्गेण आसक्त्या धुतः कम्पितः शिथिलो वा केशकलापबन्धो यस्य सः ॥ ११ ॥ नटानामिति चतुर्थ्यर्थे षष्ठ्यः । नटादिभ्यः क्रीडाकालिकानि वस्त्रादीनि । अप्यर्थे चकारः स्त्रियोऽपि ददुरिति वचनव्यत्ययेनान्वयः ॥ १२ ॥ कृष्णस्य गत्यादिभिः स्त्रीणां धियः आकृष्टा इत्यन्वयः । आलापो रतिसम्बन्धी ईक्षितं कटाक्षपातः तत्पूर्वकं स्मितं च तैः । नर्म दूरतः परिहासः । क्ष्वेलिः[1] आकृष्य चुम्बनपूर्वकं हास इति भेदः । परिष्वङ्गः आलिङ्गनं तैः ॥ १३ ॥ प्रत्यक्षमपि कृष्णं प्रेमावेशात् परोक्षमिव चिन्तयन्त्यः क्षणमगिरः धृतमौनाः सत्यः पुनः उन्मत्तवत् जडमसंबद्धमिव वाक्यानि ऊचुः तानि मे मत्तः सकाशात् शृणु ॥ १४ ॥ हे कुररि । ईश्वरः श्रीकृष्णः रात्र्यां गुप्तबोधः निवृत्तबाह्यज्ञानः सन् स्वपिति । त्वं तु वीतनिद्रा सती विलपसि निद्राभंगं करोषि न च शेषे अनुचित[2]मेतत् । अथवा हे सखि वयमिव त्वमपि कच्चित् गाढमत्यन्तं विद्धचित्ता असि किम् । केन । नलिननयनस्य श्रीकृष्णस्य सहासमुदारं तीव्रं यत् लीलेक्षितं कटाक्षपातस्तेन । जगति त्वमेवेत्यत्र सम्बध्यते नान्या काचिदिति । अगुप्तो वा पदच्छेद. । मालिनीवृत्तम् ॥ १५ ॥ हे चक्रवाकि ! नक्तं रात्रौ त्वमदृष्टप्रियतमा सती नेत्रे निमीलयसि । करुणं यथा स्यात्तथा रोरवीषि भृशमार्तनादं करोषि । बत खेदे । किं वा वयमिव त्वमपि दास्यं गता सती अच्युतपादसेवितां स्रजं कबरेण केशपाशेन वोढुं धर्तुं स्पृहयसे न च प्राप्नोषि अतो व्यग्रचित्ताऽसीत्युचितमेतत् । वंशस्थवृत्तम् ॥ १६ ॥ हे

---

१. क्ष्वेलिर्हास्योक्तिरुच्यते ।

२. निद्राभंगः कथोच्छेदः दम्पत्योः प्रीतिभेदनम् ।
शिशुमातृविभेदश्च ब्रह्महत्यासमः स्मृतः । इति स्मृतेः ।

भो भोः सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः ।
किं वा मुकुन्दापहृतात्मलाञ्छनः प्राप्तां दशां त्वं च गतो दुरत्ययाम् ॥१७॥
त्वं यक्ष्मणा बलवतासि गृहीत इन्दो क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ।
कच्चिन्मुकुन्दगदितानि यथा वयं त्वं विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥१८॥
किं वाचरितमस्माभिर्मलयानिल तेऽप्रियम् । गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम् ॥१९॥
मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं श्रीवत्साङ्कं वयमिव भवान् ध्यायति प्रेमबद्धः ।
अत्युत्कण्ठः शबलहृदयोऽस्मद्विधो बाष्पधाराः स्मृत्वा स्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः ॥२०॥
प्रियरावपदानि भाषसे मृतसंजीविकयाऽनया गिरा ।
करवाणि किमद्य ते प्रियं वद मे वल्गितकण्ठ कोकिल ॥२१॥
न चलसि न वदस्युदारबुद्धे क्षितिधर चिन्तयसे महान्तमर्थम् ।
अपि बत वसुदेवनन्दनाङ्घ्रिं वयमिव कामयसे स्तनैर्विधर्तुम् ॥२२॥

---

हे उदन्वन् समुद्र । त्वं प्राप्तजागरणः अथापि अलब्धनिद्रः सन् सदा निष्टनसे शब्दं करोषि । ष्टन् शब्दे धातुः । किं वा अस्माभिः प्राप्तां दशां त्वमपि गतोऽसि । यथा संभोगेन वयं मुकुन्दापहृतकुचकुंकुमादिलाञ्छनास्तथा त्वमपि अपहृतश्रीकौस्तुभादिलाञ्छनः प्रतीयसे । दुरत्ययां दुर्लंघ्याम् । भो भो इति खेदाधिक्यात् वीप्सा ॥ १७ ॥ हे इन्दो त्वं यक्ष्मणा क्षयरोगेण गृहीतोऽसि अत एव त्वं क्षीणः सन् निजदीधितिभिः किरणैः तमो न क्षिणोषि न विनाशयसि । कच्चित् किं वा मुकुन्दस्य गदितानि विश्लेषारम्भे समयनिर्देशादीनि विस्मृत्य तद्विरहेण स्थगितगीः निरुद्धवाक् सन् तिष्ठसि यथा वयम् । नोऽस्माभिः तथैव त्वं लक्ष्यसे प्रतीयसे स्थगिता आच्छादिता गीर्यस्य । 'स्थगे आच्छादने' धातुः ततः क्ते रूपसिद्धिः ॥१८॥ हे मलयानिल कामोद्दीपक नु अहो ते किम् अप्रियमाचरितं कृतं न किमपि अथापि त्वं नोऽस्माकं हृदि कामम् ईरयसि प्रेरयसि उद्बोधयसीत्यर्थः । तद्विरहे तु नोचितम् । कथम्भूते हृदि । गोविन्दस्य अपाङ्गैः कटाक्षपातैर्नितरां भिन्ने विदीर्णे । वा न्वर्थे ॥ १९ ॥ हे मेघ आतपार्तिहरणश्यामत्वादिसाम्यात् त्वमपि श्रीकृष्णस्य दयितः प्रियः सखा असि । अतो भवान् प्रेमबद्धः सन् तं ध्यायति यथा वयम् । ध्याने लिङ्गान्याहुः । अत्युत्कण्ठः दर्शनोत्सुकः । कुतः । शबलहृदयः विह्वलहृदयः अस्मत्सदृशो भवान् अश्रुधारा मुञ्चति । किं कुर्मः सुखदोऽपि तत्प्रसङ्गः विरहे दुःखप्रदो भवतीति । मन्दाक्रान्तावृत्तम् ॥२०॥ हे वल्गितकण्ठ सुन्दरकण्ठ कोकिल अनया मधुरया गिरा प्रियरावस्य प्रियंवदस्य कृष्णस्य पदानीव मधुरशब्दान् भाषसे । यद्वा । हे प्रियराव कोकिलविशेषणम् । पदानि[1] दुःखत्राणोपायानेव वदसि । अतस्ते किं प्रियं करवाणीति निःसंकोचं वद । प्रियं रौतीति प्रियरावः । मृतान् संजीवयतीति तया । वल्गुशब्दात् तत्करोतीति णिजन्तात् क्तः । 'वल्गितं प्लुतरम्ययोः' इति कोशात् । अत्र विरहे कोकिलशब्दस्य दुःखप्रदत्वात् प्रियरावेत्याद्याः सर्वा एव विपरीतलक्षणया वक्रोक्तय एव ज्ञेयाः तेन स्वशब्देन मां ज्वालयतस्तव किं प्रियं करवाणि तव तुण्डमेव धक्ष्यामीति भावः । पद्यद्वये वैतालीयं वृत्तम् ॥ २१ ॥ उदारा परोपकारनिष्ठा बुद्धिर्यस्य । हे क्षितिधर । त्वं न चलसि न च किञ्चित् वदसि अतो नूनं त्वं कमपि महान्तमर्थं चिन्तयसे । अपि किं वयमिव भगवदङ्घ्रिं स्तनतुल्यैः शिखरैः विधर्तुं कामयसे । तथा सति त्वमपि तप्यसे

---

१. 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरात् ।

शुष्यद्ध्रदाः कृशतरा बत सिन्धुपत्न्यः सम्प्रत्यपास्तकमलश्रिय इष्टभर्तुः ।
यद्वद् वयं मधुपतेः प्रणयावलोकमप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्म ॥२३॥
हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां ।
दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा ॥
किं वा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं ।
क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम् ॥२४॥

इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे । क्रियमाणेन माधव्यो लेभिरे परमां गतिम् ॥२५॥
श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः । उरुगायोरुगीतो वा पश्यन्तीनां कुतः पुनः ॥२६॥
याः सम्पर्यचरन् प्रेम्णा पादसंवाहनादिभिः । जगद्गुरुं भर्तृबुद्धया तासां किं वर्ण्यते तपः ॥२७॥
एवं वेदोदितं धर्ममनुतिष्ठन् सतां गतिः । गृहं धर्मार्थकामानां मुहुश्चादर्शयत् पदम् ॥२८॥
आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम् । आसन् षोडशसाहस्रं महिष्यश्च शताधिकम् ॥२९॥
तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः । रुक्मिणीप्रमुखा राजंस्तत्पुत्राश्चानुपूर्वशः ॥३०॥
एकैकस्यां दश दश कृष्णोऽजीजनदात्मजान् । यावत्य आत्मनो भार्या अमोघरतिरीश्वरः ॥३१॥

---

इत्यर्थः ॥ २२ ॥ हे सिन्धुपत्न्यो नद्यः । यद्वत् यथा वयं यदुपतेः श्रीकृष्णस्य प्रेमावलोकमप्राप्य मुष्टहृदयाः हृतचेतसः अत एव पुरु अधिकं कर्शिता जाताः तथा किं यूयमपि सम्प्रति ग्रीष्मे इष्टस्य भर्तुः सिन्धोः प्रणयावलोकं मेघद्वारा वर्षाजलमप्राप्य कृशतराः[1] जाताः स्थ । कथंभूताः । शुष्यन्तो ह्रदाः तटानि यासां ताः । पुनश्च । अपास्ता नष्टा कमलश्रीः यासां तास्तथाभूताः ॥ २३ ॥ तदानीमेव दैवादागतं हंसं दूतं कल्पयित्वाऽऽहुः । अङ्ग हे हंस ते स्वागतम् । अत्र आस्यतामुपविश्यताम् । पयः क्षीरं पिब । शौरेः श्रीकृष्णस्य कथां वार्तां ब्रूहि । नु अहो त्वां तु दूतं विद्मः । अतः अजितः श्रीकृष्णः स्वस्ति कुशलमास्ते कच्चित् । नोऽस्मान् प्रति पुरा संभोगादौ यदुक्तम् न त्वादृशी प्रणयिनीमित्यादि तत् किं स्मरति नैव यतश्चलसौहृदः । अतो वयमपि कस्मात् भजामः । हे क्षौद्र क्षुद्रस्य कृष्णस्य दूत । यदि तस्य इच्छाचेत्तर्हि तमेव कामदं रतिप्रदम् आलापय आकारय श्रियमृते न वयं यास्यामः । सा तदेकनिष्ठा कथं परिहर्तुं शक्यते चेत् तत्राहुः । स्त्रियां स्त्रीषु मध्ये सैव एकनिष्ठा न वयं किम् अतः समत्वेन व्यवहर्तव्यमिति त्वया कथनीयमिति भावः । स्त्रियामिति जातावेकवचनम् । शार्दूलविक्रीडितं छन्दः ॥२४॥ माधव्यः माधवस्य स्त्रियः इति ईदृशेन निरुपमेन । परमां गतिं सामीप्यमुक्तिम् ॥२५॥ उरुभिर्गायैः गानप्रबन्धैः उरु बहुधा गीतस्तु यः कृष्णः प्रसह्य मनः आकर्षते साक्षात्पश्यन्तीनां मनः आकर्षते इति किं पुनर्वक्तव्यमित्यर्थः ॥ २६ ॥ या संपर्यचरन् सेवितवत्यः तासां तपः किं वर्ण्यते कथं वक्तुं शक्यते । संवाहनं मर्दनम् ।२७। धर्मादीनां पदं स्थानं गृहं गृहस्थमेवेति अदर्शयत् लोकेभ्य इति शेषः॥२८॥ अष्टोत्तरशताधिकं पत्न्यः आसन्निति शेषः ॥ २९ ॥ तत्पुत्रा अपि उदाहृता पूर्वं कथिता इत्यन्वयः ॥ ३० ॥ ईश्वरः कृष्णः आत्मनो यावत्य भार्याः तासु एकैकस्यां दश दश पुत्रान् अजीजनदित्यन्वयः । दशास्यां पुत्रानाधेहि इति श्रुतेः । एवं सर्वस्त्रीणां पुत्रसंख्या एकलक्षमशीत्युत्तरैकषष्टिसहस्राणि च संख्या भवन्ति । १६१०८० इति । अमोघरतिः इति पाठः न तु गतिरिति ॥ ३१ ॥ उद्दामवीर्याणां महापराक्रमाणाम् ॥ ३२ ॥ प्रद्युम्न इति

---

१. कृशतरा इत्येव प्राचीनपाठः ।

तेषामुद्दामवीर्याणामष्टादश महारथाः । आसन्नुदारयशसस्तेषां नामानि मे श्रृणु ॥३२॥
प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान् भानुरेव च । सम्बो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः ॥३३॥
पुष्करो वेदबाहुश्च श्रुतदेवः सुनन्दनः । चित्रबाहुर्विरूपश्च कविर्न्यग्रोध एव च ॥३४॥
एतेषामपि राजेन्द्र तनुजानां मधुद्विषः । प्रद्युम्न आसीत् प्रथमः पितृवत् रुक्मिणीसुतः ॥३५॥
स रुक्मिणो दुहितरमुपयेमे महारथः । तस्मात् सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥३६॥
स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः । वज्रस्तस्याभवद् यस्तु मौसलादवशेषितः ॥३७॥
प्रतिबाहुरभूत्तस्मात् सुबाहुस्तस्य चात्मजः । सुबाहोः शान्तसेनोऽभूच्छतसेनस्तु तत्सुतः ॥३८॥
नह्येतस्मिन् कुले जाता अधना अबहुप्रजाः । अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥३९॥
यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् । संख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप ॥४०॥
तिस्रः कोटयः सहस्राणामष्टाशीतिशतानि च । आसन् यदुकुलाचार्याः कुमाराणामिति श्रुतम् ॥
संख्यानं यादवानां कः करिष्यति महात्मनाम् । यत्रायुतानामयुतलक्षेणास्ते स आहुकः ॥४२॥
देवासुराहवहता दैतेया ये सुदारुणाः । ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥४३॥
तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले । अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥४४॥
तेषां प्रमाणं भगवान् प्रभुत्वेनाभवद्धरिः । ये चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥४५॥
शय्यासनाटनालापक्रीडास्नानादिकर्मसु । न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥४६॥

---

युग्मम् । अनिरुद्धनामा कश्चिदन्यः पुत्रः एव तदैवाष्टादशसंख्यापूर्तिरनिरुद्धस्य प्रद्युम्नपुत्रत्वात् ॥३३॥ ३४ ॥ मधुद्विषः कृष्णस्य तनुजानां पुत्राणां मध्ये । रूपेण गुणैश्च पितृवत् ॥ ३५ ॥ रुक्मिणो मातुलस्य दुहितरम् उपयेमे विवाहितवान् । नागानां गजानामयुतं दशसहस्रं तस्य बलेन अन्वितः ॥ ३६ ॥ स चापि अनिरुद्धः रुक्मिणोऽपि दौहित्रोऽपि तस्यैव पौत्रीं जगृहे उपयेमे । यस्तु वज्रो मौसलात् मुसलनिमित्तकयदुकुलक्षयात् भगवता अवशेषितः ॥ ३७ ॥ ३८ ॥ ३९ ॥ बद्धमुकुटा राजान एव यादवाः षट्पञ्चाशत्कोटय आसन् ॥ ४० ॥ सहस्राणामनन्तानां कुमाराणामित्यत्राग्वेति । श्रुतं श्रुतमात्रं न तु ज्ञायते ॥ ४१ ॥ यत्र येषु मध्ये । आहुकः उग्रसेनः आस्ते । अत्रायुतानामिति बहुत्वे संख्या त्रित्वे पर्यवस्यति कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद्यथोच्यते इति न्यायात् । तेन अयुतानामयुतलक्षेण बिन्दुत्रयोदशयुक्तेनाङ्कत्रयेण शखत्रयेणेत्यर्थः । ३०००००००००००००॥ ४२ ॥ देवासुराहवे देवासुरसंग्रामे ये हताः ते मनुष्येषु प्रत्येकं बहुभिः रूपैरुत्पन्नाः दृप्ता गर्विताश्च ते प्रजाः कर्मभूता बबाधिरे पीडयामासुः ॥ ४३ ॥ तेषां निग्रहाय विनाशाय । कुलशतं कुलस्यैव संख्या कृता न तु व्यक्तीनामसंख्यत्वात् ॥ ४४ ॥ ये अनुवर्तिनः ते ववृधुः । तेषां संख्यायाः प्रमाणं ज्ञाता प्रभुत्वेन स्वामित्वेन भगवान् हरिरेव अभवत् नान्यः कश्चित् ॥ ४५ ॥ वृष्णयः शय्यासनादिषु सन्तं जाग्रतमपि आत्मानं स्वदेहमपि न विदुः । भगवत्प्रेरणयैव सर्वं कुर्वन्ति यतः कृष्णचेतसः

तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं
विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ।
यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः
कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥४७॥

जयति जननिवासो देवकीजन्मवादो यदुवरपर्षत्स्वैर्दोर्भिरस्यन्नधर्मम् ।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्धयन् कामदेवम् ॥४८॥

इत्थं परस्य निजवर्त्मरिरक्षयाऽऽत्तलीलातनोस्तदनुरूपविडम्बनानि ।
कर्माणि कर्मकषणानि यदूत्तमस्य श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥४९॥

---

॥ ४६ ॥ हे नृप यदुषु यत् अजनि जातं कृष्णरूपं तीर्थं तत् कर्तृ पादशौचं पादप्रक्षालनरूपं स्वःसरित् गङ्गाख्यं तीर्थम् ऊनं न्यूनमल्पं चक्रे । इत्येकं चित्रम् । विद्विषः शत्रवः स्निग्धा भक्ताश्च स्वरूपं ययुः इति द्वितीयं चित्रम् । यस्या लक्ष्म्या अर्थे अन्येषां ब्रह्मादीनां यत्नो भवति सा श्रीः अजितपरा कृष्णसेवापरायणा इति तृतीयम् । तथा श्रुतम् अथवा गदितमुच्चारितं यस्य नाम अमङ्गलनाशकम् इति चतुर्थम् । तथा गोत्रेषु तत्तदृषिवंशेषु धर्मः यत्कृतो येन प्रवर्तितो भवति इति पञ्चमम् । यद्वा । गां पृथ्वीं त्रायते गोत्री धर्मः चतुष्पात् यत्कृतो भवति तस्य क्षितेर्भारहरणं चित्रमसंभावितमाश्चर्यकरं न भवति । कथंभूतस्य । कालचक्रं सुदर्शनमायुधं यस्य । स्रग्धरावृत्तम् ॥ ४७ ॥ अत्र विशेष्यमध्याहार्यम् । श्रीकृष्णो जयति । कथंभूतः । देवक्यां जन्मेति वादमात्रं यस्य । वस्तुतोऽजन्मा । पुनश्च । जनानां निवासः आधारभूतः । जनेषु अन्तर्यामितया निवासो यस्येति वा । पुनश्च । यदुवराः पर्षत् सभा सेवकरूपा यस्य । पुनश्च । स्थिरचराणां स्थावरजङ्गमानां सर्वेषामेव प्राणिजातानाम् अधिकारिविशेषानपेक्षमेव वृजिनं संसारदुखं हन्तीति तथा । किं कुर्वन् सन् जयति । स्वैः दोर्भिः भुजैः अधर्मम् अस्यन् निराकुर्वन् । 'असु क्षेपणे' धातुः शत्रन्तः । पुनश्च । सुस्मितेन श्रीमुखेन वनितानां कामं वर्धयन् । यद्वा । दीव्यति विजिगीषति संसारमिति देवः कामश्चासौ देवस्तं वर्धयन् । दमयंश्च जयति भोगद्वाराऽपि मोक्षप्रदत्वमित्यैश्वर्यमस्य व्यञ्जितमित्यर्थः ॥ ४८ ॥ इत्थममुष्य पदयोरनुवृत्तिमासक्तिमिच्छन् जनः परस्य परमेश्वरस्य कर्माणि चरितानि श्रूयादित्यन्वयः । कथंभूतस्य । निजवर्त्म वेदमार्गः तस्य रिरक्षया आत्ता गृहीता लीलातनुर्येन तस्य । कथंभूतानि चरितानि । तदनुरूपाणि लीलातनुयोग्यानि विडम्बनानि अन्यातिक्रमीणि च तानि । पुनश्च । कर्मकषणानि पापनिवर्तकानि ॥ ४९ ॥

मर्त्यस्तयानुसवमेधितया मुकुन्दश्रीमत्कथाश्रवणकीर्तनचिन्तयैति ।
तद्धाम दुस्तरकृतान्तजवापवर्गं ग्रामाद् वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥५०॥

इति श्रीमद्भागवते महापुराणे वैयासिक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे श्रीकृष्णचरितानुवर्णनं नाम नवतिमोऽध्यायः ॥ ९० ॥



## इति दशमस्कन्धोत्तरार्धः समाप्तः

---

मर्त्यः तया पदयोः अनुवृत्या प्रेमासक्त्या तत् धाम एति प्राप्नोतीत्यन्वयः । कथंभूतया तया । मुकुन्दस्य श्रीमत्कथायाः श्रवणकीर्तनयोः चिन्तया अनुसवमनुक्षणम् एधितया वर्धितया । कथंभूतं धाम । दुस्तरस्य कृतान्तजवस्य कालवेगस्य अपवर्गो निवृत्तिर्यस्मात् तत् । यदर्थाः यद्धामेच्छवः क्षितिभुजोऽपि ग्रामात् ग्रामं राज्यं परित्यज्य वनं ययुरित्यन्वयः । ल्यब्लोपे पञ्चमीयम् । यत् धामैव अर्थः प्रयोजनं येषां ते तथोक्ताः ॥'५०॥

राधाकृष्णाङ्घ्र्यनुध्यानात्कृता सन्देहभञ्जनी । सद्भिरासेव्यतामेषा बुधैर्गूढार्थदीपिनी ॥ १॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्द्धे सनाढयवंशावंतसपंडितप्रवरश्रीराममूर्तिशास्त्रिपौराणिक विरचितायां गूढार्थदीपिन्यां नवतितमोऽध्यायः ।

## समाप्तोऽयं दशमस्कन्धः



श्रीकृष्णार्पणमस्तु



# श्रीमद्भागवतम्

## एकादशः स्कन्धः

### अत्र मुक्ति वर्णनम्

### अथ प्रथमोऽध्यायः

श्रीबादरायणिरुवाच

कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः। भुवोऽवतारयद् भारं जविष्ठं जनयन् कलिम् ॥१॥
ये कोपिताः सुबहु पाण्डुसुताः सपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान्।
कृत्वा निमित्तमितरेतरतः समेतान् हत्वा नृपान् निरहरत् क्षितिभारमीशः ॥२॥
भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः।
मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं यद् यादवं कुलमहो अविषह्यमास्ते ॥३॥
नैवान्यतः परिभवोऽस्य भवेत् कथंचिन्मत्संश्रयस्य विभवोन्नहनस्य नित्यम्।
अन्तःकलिं यदुकुलस्य विधाय वेणुस्तम्बस्य वह्निमिव शान्तिमुपैमि धाम ॥४॥

---

श्रीकृष्णं राधिकानाथं भक्तानां कल्पपादपम्।
प्रणम्यैकादशस्कन्धे कुर्वे गूढार्थदीपिनीम् ॥ १ ॥
प्रथमे मुनिशापेन साम्बस्त्रीवेशतो रुषा।
यदुवंशविनाशार्थं मुसलोत्पत्तिरीर्यते ॥ २ ॥

कर्षति अरीन् इति कृष्णः। जविष्ठं वेगवत्तरम्। सद्योनाशकरमित्यर्थः। कलिं कलहम्। अवातारयत्। बाहुल्यकादडभावः ॥१॥ सपत्नैर्दुर्योधनादिभिः दुर्द्यूतादिभि सुबहुः बहुवारान् कोपिता ये पाण्डुसुतास्तान् निमित्तं कृत्वा इतरेतरतः समेतान् उभयपक्षीयान् मिलितात् नृपान् हत्वा श्रीकृष्णः भूभारं निःशेषेण जहार। ये कोपिता यैश्च कोपितास्तानितरेतरतः परस्परं निमित्तं कृत्वेत्यन्वयो वा। कपटद्यूतम् हेलनमवज्ञा। द्रौपद्याः केशाकर्षणं च इत्यादिभिः सुशब्देनावृत्तिः सूच्यते ॥ २ ॥ स्वबाहुभि गुप्तैः रक्षितैर्यदुभिः भुवो भारभूता राज्ञां पृतनाः सेनाः। राज्ञस्तेष पृतनाश्चेति वा निरस्य हत्वा। अप्रमेयः प्रमातुं ज्ञातुमशक्यः। अवनेः पृथिव्या भारो लोकदृष्टया गतोऽपि अहम् अगतमेव मन्ये। यत् यस्मात् यादवं कुलमास्ते। ननु वितर्के। हि निश्चये ॥३॥ अस्य यदुकुलस्य अन्यत. देवादिभ्योऽपि परिभवो नैव भवेत्। मत्संश्रयस्य। अहमेवसंश्रय आश्रयो यस्य। मां संश्रयते इति वा तस्य। विभवोन्नहनस्य। विभवैरैश्वर्यादिभिः उन्नहनस्य उद्दण्डस्य मिथः संघर्षणाद् वेणुगुल्मस्य वह्निमिव शान्ति नाशहेतुमन्तः कलहं विधाय धाम वैकुण्ठमुपयामि। यद्वा। शान्ति ततो धाम। शान्तिं मङ्गलं

एवं व्यवसितो राजन् सत्यसंकल्प ईश्वरः । शापव्याजेन विप्राणां संजह्रे स्वकुलं विभुः ।।५।।
स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् । गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः
आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यञ्जसा नु कौ । तमोऽनया तरिष्यन्तीत्यगात् स्वं पदमीश्वरः

राजोवाच

ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनां । विप्रशापः कथमभूद् वृष्णीनां कृष्णचेतसाम् ।।८।।
यन्निमित्तः स वै शापो यादृशो द्विजसत्तम । कथमेकात्मनां भेद एतद् सर्वं वदस्व मे ।।९।।

श्रीशुक उवाच

बिभ्रद् वपुः सकलसुन्दरसन्निवेशं कर्माचरन् भुवि सुमङ्गलमाप्तकामः ।
आस्थाय धाम रममाण उदारकीर्तिः संहर्तुमैच्छत कुलं स्थितकृत्यशेषः ।।१०।।
कर्माणि पुण्यनिवहानि सुमङ्गलानि गायज्जगत्कलिमलापहराणि कृत्वा ।
कालात्मना निवसता यदुदेवगेहे पिण्डारकं समगमन् मुनयो निसृष्टाः ।।११।।

विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरङ्गिराः । कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः ।१२।
क्रीडन्तस्तानुपव्रज्य कुमारा यदुनन्दनाः । उपसंगृह्य पप्रच्छुरविनीता विनीतवत् ।
ते वेषयित्वा स्त्रीवेषैः साम्बं जाम्बवतीसुतम् ।।१३।।

---

धामेति वा । शान्तौ प्रशमङ्गले इति यादवः ।। ४ ।। एवं व्यवसितः कृतनिश्चयः । संजह्रे विनाशितवान् ।।५।। [1]लोकेभ्यो लावण्यस्य निर्मुक्तिः दानं यया स्वमूर्त्या नृणां लोचनमाच्छिद्य अपहृत्य ईश्वरः स्वं पदमगात् । स्वमधुरगीर्भिर्नृणां ता गिर आच्छिद्य । तत्र तत्र चिह्नितैः स्वपदैस्तानि पदानि ईक्षमाणामन्यतो गमनादिकाः क्रियाश्च एवं सर्वस्वमपहृत्य महाचौर इव सोऽगात् कस्तं दयालुं वदेदिति व्याजस्तुतिः । अग्रे संसार तरणाय कौ पृथिव्यां कीर्तिं वितत्य विस्तार्य अनया कीर्त्या अञ्जसा सुखेन नु निश्चितं तमः संसाराख्यं तरिष्यन्ती त्यभिप्रेत्य अगात् ।। ६ ।। ७ ।। वदान्यानाम् उदाराणाम् वृष्णीनां यदूनाम् कथमभूदित्यत्र भगवदिच्छैव हेतुर्ज्ञेयः[2] ।। ८ ।। स वै लोकप्रसिद्धः । यन्निमित्तो यत्कारणकः । यादृशो यत्प्रकारकः । भेदः कलहः । मे मह्यम् । यत्नेन वदस्व । 'भासनोपसंभाषा'—इत्यात्मनेपदम् ।। ९ ।। सुन्दरवस्तूनां सन्निवेशो रचनाविशेषो-यस्मिंस्तद् वपुर्बिभ्रत् प्रकटयन् । आप्तकामोऽपि भुवि सुमङ्गलं कर्म आचरन् सन् कुलं संहर्तुमैच्छदित्यन्वयः धाम द्वारकाख्यम् आस्थाय रममाणः । स्थितः कृत्ये भूभारहरणरूपे स्वकुलसंहाररूपः शेषो यस्य सः ।। १० ।। पुण्यनिवहानि पुण्यप्रापकाणि । गायतो जगतः प्राणिमात्रस्य । पूर्वं कर्मार्थमाहूताः पश्चाद् दक्षिणादिभिः प्रीणयित्वा तेन निसृष्टाः प्रस्थापिता मुनयः पिण्डारकं द्वारकासमीपवर्ति तीर्थं समगमन् । यदुषु दीव्यति द्योतते कृष्णपितृत्वेनेति यदुदेवो वसुदेवः । यद्वा । यदुदेव उग्रसेनस्तस्य गेहमिव रक्ष्यमाणे द्वारकानगरे ।। ११ ।। आदिना गौतमादिग्रहः ।। १२ ।। क्रीडन्त इति सार्द्धम् । तान् मुनीन् । उपसंगृह्य पादग्रहणं कृत्वा ।। १३ ।।

---

१. स्वमूर्त्येति युग्मम् ।

२. गुह्या गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः ।
पूजिता प्रतिपूज्यन्ते निर्दहन्त्यपमानिताः ।। १ ।।
इति स्मृतेः ।

एषा पृच्छति वो विप्रा अन्तर्वत्न्यसितेक्षणा । प्रष्टुं विलज्जती साक्षात् प्रब्रूतामोघदर्शनाः ॥
प्रसोष्यन्ती पुत्रकामा किं स्वित् संजनयिष्यति ॥१४॥
एवं प्रलब्धा मुनयस्तानूचुः कुपिता नृप । जनयिष्यति वो मन्दा मुसलं कुलनाशनम् ॥१५॥
तच्छ्रुत्वा तेऽतिसंत्रस्ता विमुच्य सहसोदरम् । साम्बस्य ददृशुस्तास्मिन् मुसलं खल्वयस्मयम्१६॥
किं कृतं मन्दभाग्यैर्नः किं वदिष्यन्ति नो जना । इति विह्वलिता गेहानादाय मुसलं ययुः ॥१७॥
तच्चोपनीय सदसि परिम्लानमुखश्रियः । राज्ञ आवेदयाञ्चक्रुः सर्वयादवसन्निधौ ॥१८॥
श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुसलं नृप । विस्मिता भयसंत्रस्ता बभूवुर्द्वारकौकसः ॥१९॥
तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः । समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम् ॥२०॥
कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः । उह्यमानानि वेलायां लग्नान्यासन् किलैरकाः२१
मत्स्यो गृहीतो मत्स्यघ्नर्जालिनान्यैः सहार्णवे । तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत् ॥२२॥
भगवाञ्ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा । कर्तुं नैच्छद् विप्रशापं कालरूप्यन्वमोदत ॥२३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

---

एषेति सार्द्धम् । अमोघेति संबोधनम् । अन्तर्वत्नी गर्भिणी । प्रसोष्यन्ती आसन्नप्रसवा । वो युष्मान् । स्विदिति-वितर्के किं जनयिष्यति कन्यां पुत्रं वा तद् ब्रूत ॥१४॥ प्रलब्धा उपहसिताः तान् कुमारान् ऊचुः । वो युष्माकम् ॥१५॥ तत् शापात्मकं वाक्यम् । विमुच्य तत्र वेष्टितं वस्त्रादि पृथक्कृत्य । तस्मिन् उदरे । अयस्मयं लोहमयम् । अयस्मयादित्वाद्भत्वेन रुत्वाद्यभावः ॥१६॥ नोऽस्माभिः । नोऽस्मान् प्रति । विह्वलिता व्याकुलाः मुसलमादाय ॥ १७ ॥ तत् मुसलम् । राज्ञे उग्रसेनाय न तु कृष्णाय तदिच्छयैव ॥१८॥ अमोघम् अपरिहार्यम् । द्वारकौकसः द्वारकावासिनः ॥१९॥ स आहुक उग्रसेनः । प्रास्यत् प्रक्षिप्तवान् । अस्य चूर्णीक्रियमाणस्य मुसलस्य अवशेषितम् अल्पं लोहं च प्रास्यत् अकिञ्चित्करं मत्वा ॥ २० ॥ अग्रसीत् निगिलितवान् । बाहुलकात् तङभावः । ततो घर्षण स्थानात् तरलैस्तरङ्गैरुह्यमानानि इतस्ततश्चाल्यमानानि वेलायां समुद्रतटे लग्नानि तान्येव एरका पटेरेति ख्यातास्तृणविशेषा आसन् ॥ २१ ॥ अन्यैः मत्स्यैः सह । येन मत्स्यो गृहीतः स लुब्धको व्याधो जरानामकः । शल्ये वाणाग्रे अकरोत् ॥२२॥ विप्रशापम् अन्यथा कर्तुमीश्वरः समर्थोऽपि तत् अन्यथाकरणं नैच्छत् किन्तु सुष्ठु जातमित्यन्वमोदत यतः कालरूपी संहारेच्छावत्वात् ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां प्रथमोऽध्यायः ॥ १ ॥

## अथ द्वितीयोऽध्यायः

### श्रीशुक उवाच

गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह । अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ॥ १ ॥

---

द्वितीये शौरिदेवर्षिसंवादोपक्रमे निमिम् ।
कविर्भागवतं धर्मं ब्रूते भक्तं तथा हरिः ॥ १ ॥

भुजगुप्तत्वेनैव एकत्राऽवासरूपो दक्षशापोऽत्र न प्रभवति । उपासने । यद्वा । कृष्णस्य उप समीपे आसने स्थितौ

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम् । न भजेत् सर्वतोमृत्युरुपास्यममरोत्तमैः ॥ २ ॥

तमेकदा तु देवर्षि वसुदेवो गृहागतम् । अर्चितं सुखमासीनमभिवाद्येदमब्रवीत् ॥ ३ ॥

वसुदेव उवाच

भगवन् भवतो यात्रा स्वस्तये सर्वदेहिनाम् । कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥४॥

भूतानां देवचरितं दुःखाय च सुखाय च । सुखायैव हि साधूनाम् त्वादृगामच्युतात्मनाम् ॥ ५ ॥

भजन्ति ये यथा देवान् देवा अपि तथैव तान् । छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ६ ॥

ब्रह्मंस्तथापि पृच्छामो धर्मान् भागवतांस्तव । यान्छ्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात् ॥७॥

अहं किल पुरानन्तं प्रजार्थो भुवि मुक्तिदम् । अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥

यथा विचित्रव्यसनाद् भवद्भिर्विश्वतोभयात् । मुच्येमह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ॥९॥

श्रीशुक उवाच

राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता । प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥

नारद उवाच

सम्यगेतद् व्यवसितं भवता सात्वतर्षभ । यत् पृच्छसे भागवतान् धर्मांस्त्वं विश्वभावनान् ॥११॥

श्रुतोऽनुपठितो ध्यात आदृतो वानुमोदितः । सद्यः पुनाति सद्धर्मो देव विश्वद्रुहोऽपि हि ॥१२॥

त्वया परमकल्याणः पुण्यश्रवणकीर्तनः । स्मारितो भगवानद्य देवो नारायणो मम ॥१३॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् । आर्षभाणां च संवादं विदेहस्य महात्मनः ॥१४॥

---

लालसा यस्य सः ॥१॥ इन्द्रियवान् को नु प्राणी । एतेन वर्णाश्रुभापेक्षाऽपि निरस्ता । अमरोत्तमैः ब्रह्मादिभिः ॥ २ ॥ ३ ॥ यथा पित्रोर्यात्रा अपत्यानां स्वस्तये यथा च उत्तमश्लोकवर्त्मनां भगवन्मार्गप्रदर्शकानां महतां यात्रा कृपणानां गेहासक्तानां स्वस्तये तथा भवतो यात्रा सर्वेषां स्वस्तये इति योज्यम् । स्वस्तये इति । अव्ययानां शब्दनिर्देशे विभक्तेर्लुग्नेत्युक्तं शब्दशास्त्रे ॥ ४ ॥ देवचरितम् अतिवृष्टिसुवृष्ट्यादिरूपं भूतानां प्राणिनाम् । त्वत्सदृशानां तु चरितं सुखायैव भवति किमुत तवेति योज्यम् ॥५॥ भजन्ति कर्मानुसारेणैव फलं प्रयच्छन्ति । यतः कर्मसचिवाः कर्मणैव सचिवा सहायकाः फलदातारो देवाः । साधवस्तु कर्मानिपेक्ष्यैव फलं ददतीति ततो वैशिष्टयम् ॥ ६ ॥ यद्यपि भवद्दर्शनेनैव कृतार्थास्तथापि तव त्वाम् । यद्वा । तवेति संबन्धे षष्ठी । त्वत्संबन्धिनो धर्मानिति योज्यम् ॥ ७ ॥ प्रजार्थः सन्तानार्थः सन् अपूजयम् । किलेति सूतिकागृहोक्तमनुस्मरति ॥ ८ ॥ हे सुव्रत ! नारद ! विचित्राणि नानाविधानि दुःखानि यस्मिंस्तस्मात् विश्वतो भयात् संसारात् मुच्येमहि तथा नोऽस्मान् शाधि शिक्षय । अञ्जसा अनायासेन । अद्धा साक्षात् ॥९॥ तं वसुदेवमाह । गुणैः सहितो हरिः सम्यक् स्मारितः स्मरणविषयोकारितः । अधीगर्थेति कर्मणि षष्ठी ॥ १० ॥ हे सात्वतर्षभ ! हे यदुश्रेष्ठ ! यत् पृच्छसे तदेतत् सम्यक् व्यवसितं निश्चितम् । विश्वं भावयन्ति शोधयन्तीति तान् ॥११॥ श्रुतो गुरुमुखात् । ध्यातो मनसा । आदृत आस्तिक्यबुद्ध्या । सन् श्रेष्ठश्चासौ धर्मः सद्धर्मः भागवतो धर्मः । हे देव ! वसुदेव ! एकपदं वा ॥१२॥ परमेत्यत्र बहुव्रीहिः । पुण्ये पुण्यप्रापके श्रवणकीर्तने यस्य ॥१३॥ अत्रापि भागवतधर्मेऽपि । आर्षभाणाम् ऋषभपुत्राणां नवानां विदेहस्य निमेश्च संवादरूपम् ॥१४॥ स्वयंभूर्ब्रह्मा

प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः । तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः १५
तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया । अवतीर्णं सुतशतं तस्यासीत् ब्रह्मपारगम् ॥१६॥
तेषां वै भरतो ज्येष्ठो नारायणपरायणः । विख्यातं वर्षमेतद् यन्नाम्ना भारतमद्भुतम् ॥१७॥
स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् । उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥१८॥
तेषां नव नवद्वीपपतयोऽस्य समन्ततः । कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः ॥१९॥
नवाभवन् महाभागा मुनयो ह्यर्थशंसिनः । श्रमणा वातरशना आत्मविद्याविशारदाः ॥२०॥
कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः । आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ २१ ॥
त एते भगवद्रूपं विश्वं सदसदात्मकम् । आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन् महीम् ॥२२॥

अव्याहतेष्टगतयः सुरसिद्धसाध्यगन्धर्वयक्षनरकिन्नरनागलोकान् ।
मुक्ताश्चरन्ति मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि कामम् ॥२३॥

त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया । वितायमानमृषिभिरजनाभे महात्मनः ॥२४॥
तान् दृष्ट्वा सूर्यसंकाशान् महाभागवतान् नृप । यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥२५॥
विदेहस्तानभिप्रेत्य नारायणपरायणान् । प्रीतः संपूजयाञ्चक्र आसनस्थान् यथार्हतः ॥२६॥
तान् रोचमानान् स्वरुचा ब्रह्मपुत्रोपमान् नव । पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥२७॥

---

तत्पुत्रस्य मनोः ॥ १५ ॥ तम् ऋषभम् । विवक्षया प्रवर्तनेच्छया । ब्रह्मपारगं वेदपारगम् । ब्रह्मशब्द उभयब्रह्मपरः ॥ १६ ॥ एतत् वर्षम् अजनाभखण्डम् । अद्भुतमिति कर्मभूमित्वात् ॥ १७ ॥ स भरतः इमां पृथ्वीम् । गृहात् निर्गतः त्रिभिः क्षत्रमृगविप्ररूपैः तस्य हरेः पदवीं मार्गं मोक्षम् । यद्वा । तत्पदाभ्यां हरिचरणाभ्यां वीयते प्राप्यते तत्पदवी भक्तिलभ्या मुक्तिः ॥ १८ ॥ अस्य भारतस्य समन्ततः नव पुत्राः । नव द्वीपा ब्रह्मावर्तादिभूखण्डाः । कर्मतन्त्रप्रणेतारः कर्मकाण्डप्रवर्तकाः ॥ १९ ॥ अर्थशंसिनः तत्त्वोपदेष्टारः श्रमणाः आत्माभ्यासे कृतश्रमाः । वातरशनाः दिगम्बराः । विशारदाः पारङ्गताः ॥ २० ॥ कौति उपदिशति आत्मतत्त्वमिति कविः ॥ १ ॥ हरति अज्ञानमिति हरिः ॥ २ ॥ अन्तश्चेतसि ईक्षते आत्मानमित्यन्तरिक्षः ॥ ३ ॥ प्रकर्षेण बुद्धमात्मतत्त्वं येन ॥ ४ ॥ पिप्पलो विष्णुः अयनमाश्रयो यस्य । पिप्पलं जलं वा तपश्चर्यास्थलं यस्य । 'पिप्पलं सलिले वृक्षे' इति कोशात् ॥ ५ ॥ आविः प्रकटं होत्रं कर्म होमो यस्य ॥६॥ चमन्ति वेदतीर्थमिति चमा वैदिकास्तान् सरति मुख्यत्वेन प्राप्नोतीति चमसः वैदिकोत्तमः । सरतेर्डः ॥ ७ ॥ द्रुषु वृक्षेषु वनेषु वा मिल्यते प्राप्यते इति द्रुमिलः 'द्रुद्रुमौ वृक्षौ' इति कोशात् ॥ ८ ॥ भां प्रकाशं जनयतीति भाजनं वेदार्थज्ञानं करे हस्तामलकवत् यस्य । इत्येवमन्वर्थनामानो नव सिद्धेश्वरा ज्ञेयाः ॥ २१ ॥ सदसदात्मकं स्थूलसूक्ष्मात्मकम् । अव्यतिरेकेण अभेदेन ॥ २२ ॥ अव्याहता अप्रतिहता इष्टा मनोऽभीष्टा गतिर्येषान्ते मुक्ता अनासक्ताः सन्तः सुरादिलोकान् मुन्यादिलोकांश्च कामं यथेच्छं विचरन्ति । भूतनाथो भैरवः । द्विजा गरुडादयः ॥ २३ ॥ अजनाभे वर्षे । महात्मना निमेः सत्रं यज्ञम् । वितायमानम् अनुष्ठीयमानम् ॥ २४ ॥ सूर्यसंकाशान् सूर्यसदृशान् । अग्नयः कुण्डस्था मूर्तिधारिणः सन्तः ॥ २५ ॥ तान् मुनीन् । अभिप्रेत्य ज्ञात्वा । यथार्हतः यथोचितम् ॥ २६ ॥ नृपो निमिः । स्वरुचा ब्रह्मतेजसा । ब्रह्मपुत्राः सनकादयः । नवसंख्याकान् ॥ २७ ॥

विदेह उवाच

मन्ये भगवतः साक्षात् पार्षदान् वो मधुद्विषः । विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि २८
दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः । तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥२९॥
अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः । संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम्३०
धर्मान् भागवतान् ब्रूत यदि नः श्रुतये क्षमम् । यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥३१॥

श्रीनारद उवाच

एवं ते निमिना पृष्टा वसुदेव महत्तमाः । प्रतिपूज्याब्रुवन् प्रीत्या ससदस्यर्त्विजं नृपम् ॥३२॥

कविरुवाच

मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावाद् विश्वात्मना यत्र निवर्तते भीः ॥३३॥

ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये । अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान् ३४
यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित् । धावन् निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥३५॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वानुसृतस्वभावात् ।
करोति यद् यत् सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ ३६ ॥
भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः ।
तन्माययातो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥ ३७ ॥

---

वो युष्मान् । भूतानि भक्ताः ॥ २८ ॥ तत्रापि मानुषत्वेऽपि । वैकुण्ठेति षष्ठीसमासो बहुव्रीहिर्वा ॥ २९ ॥ हे अनघाः पापनिवारकाः । भवतो युष्मान् । आत्यन्तिकं क्षेमं मोक्षसाधनम् । शेवधिः निधिवत्सुखदः ॥ ३० ॥ श्रुतये श्रवणाय क्षमं योग्यं यदि नोऽस्माकं श्रोत्रेन्द्रियं मन्यसे इति शेषः तर्हि ब्रूत । यैर्धर्मैः प्रसन्नः अजो भगवान् प्रपन्नाय शरणागताय ॥ ३१ ॥ प्रतिपूज्य प्रशंस्य ॥ ३२ ॥ अत्र संसारे असदात्मभावात् देहाभिमानात् नित्यम् उद्विग्नबुद्धेः पुंसः अच्युतस्य पादाम्बुजोपासनमेव अकुतश्चिद्भयं मोक्षसाधनं मन्ये[1] । यत्र उपासने सर्वात्मना भीः मृत्युभयमपि निवर्तते । 'मृत्युरस्मादपैति' इत्युक्तेः ॥३३॥ अविदुषां तत्त्वमजानतां पुंसां भगवता गीतायां आत्मप्राप्तये अञ्जः सुखेन ये उपाया प्रोक्तास्तान् वै तानेव धर्मान् विद्धीत्यन्वयः । हि प्रसिद्धौ ॥३४॥ यान् भागवतधर्मान् आस्थाय अनुष्ठाय न प्रमाद्येत विघ्नाक्रान्तो न भवेत् । इह धर्मेषु नेत्रे निमील्य श्रुतिस्मृती अज्ञात्वाऽपि धावन् आचरन् न स्खलेत् न प्रत्यवायी स्यात् न च फलात् भ्रश्येत । 'श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते'[2] इत्युक्तेः । नर इति मनुष्यमात्रस्यात्राधिकार इति सूचयति ॥ ३५ ॥ कायेन गमनादि वाचा भाषणं मनसा संकल्पम् इतरैरिन्द्रियैर्दर्शनादि बुद्ध्या निश्चयम् आत्मना चित्तेन ध्यानादि अहङ्कारेण वा अनुसृतस्वभावात् स्वानुगतराजसादिस्वभावाच्च समर्पयेदिति यत् तत् सकलमपि कर्म भागवतो धर्म एवेति योज्यम् । यद्वा । यत् यत् करोति तन्नारायणार्थमेव नारायणं सेवितुं समर्पयेत् विनियोजयेत् । तादर्थ्ये तुमर्थे वा चतुर्थी ॥ ३६ ॥ ईशात् अपेतस्य विमुखस्य पुंसः तन्मायया अस्मृतिः स्वरूपविस्मृतिर्भवति ततो विपर्ययः देहोऽस्मीति विपरीतज्ञानं ततो द्वितीयाभिनिवेशः द्वैतासक्तिस्ततो मृत्युभयं भवति । अतो यन्मायया

---

१. न कुतोऽपि भयं यस्मात् तत् ।

२. एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तितः ।

अविद्यमानोऽप्यवभाति हि द्वयो र्ध्यातुर्धिया स्वप्नमनोरथौ यथा ।
तत् कर्मसङ्कल्पविकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात् ॥ ३८ ॥
शृण्वन् सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि गायन् विलज्जो विचरेदसङ्गः ॥ ३९ ॥
एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ ४० ॥
खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।
सरित् समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यः ॥ ४१ ॥
भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ ४२ ॥
इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति साक्षात् ॥ ४३ ॥

राजोवाच

अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् । यथाऽऽचरति यद् ब्रूते यैर्लिङ्गैर्भगवत्प्रियः ॥४४॥

---

एतद्भवति तमीशम् आ मोक्षमभिवाप्य भजेदित्यन्वयः । एकया अनन्यया । गुरुरेव देवता आत्मा प्रेष्ठश्च यस्य तथादृष्टिः सन् ॥ ३७ ॥ अविद्यमानोऽपि खपुष्पायमाणोऽपि द्वयः द्वैतप्रपञ्चः ध्यातुर्बहिर्दृष्टेः धिया मनसा अवभाति प्रत्यक्षो भवति । तत् तस्मात् मनो निरुन्ध्यात् । कथंभूतम् मनः । कर्माणि संकल्पयति सामान्यतः विकल्पयति विशेषतस्तत् । ततो मनोनिरोधादभयम् ॥ ३८ ॥ गीतानि प्रसिद्धानि यानि जन्मानि कर्माणि नामानि च तानि वक्तरि सति शृण्वन् श्रोतरि सति गायन् लज्जामकुर्वन् सन् विचरेदित्यन्वयः । तान्येव जन्मानि कर्माणि च अर्थो येषां तानि तदर्थकानि जन्मार्थकानि देवकीनन्दनादीनि कर्मार्थकानि मधुसूदनादीनि । यद्वा । स भगवानेव अर्थोऽभिधेयो येषां तानि ॥ ३९ ॥ एवंव्रतः एवंनियमः । स्वप्रियस्य श्रीकृष्णस्य । यद्वा । स्वप्रियं यन्नाम । सुष्ठु सुन्दरम् अनाम वासुदेवनामेति वा तस्य कीर्तनेन । अकारो वासुदेवः । जातानुरागः उत्पन्नप्रेमा । कुतः । द्रुतचित्त आर्द्रहृदयः । अथो क्वचित् नानाविधभावावेशात् उच्चैर्हसतीत्यादिक्रियाजालमनुभवति । रौति भक्तिद्वेषिणं प्रतिशपति । एवं लोकलज्जादिशून्यो भवति । सैषा भक्तेः पराकाष्ठा दर्शिता । ॥ ४० ॥ खम् आकाशम् । ज्योतींषि चन्द्रादीनि । सत्त्वानि जीवान् । 'सत्त्वं स्याद् गुणजीवयोः' इति कोशात् । किं बहुना यत्किं च भूतं प्राणिजातं तत्सर्वं हरेः शरीरमिति मत्वा अनन्यः सन् प्रणमेत् । संभावनायां लिङ् । आदिना लतादिग्रहः ॥ ४१ ॥ प्रपद्यमानस्य हरिं भजतः पुंसः एष त्रिक एककालिको भवति यथा अश्नतः भुञ्जानस्य पुंस तुष्टिः पुष्टिः क्षुन्निवृत्तिश्च अनुघासं प्रतिग्रासं भवति तथा । भक्तिरित्यत्र हेतुः परेशानुभवः । तत्र हेतुः । विरक्तिः अन्यत्र विषयेषु ॥ ४२ ॥ इत्येवम् अनुवृत्त्या नैरन्तर्येण[1] भजतो भागवतस्य त्रयोऽपि भवन्ति । ततो भक्त्यादेः साक्षात् भगवत्प्राप्तिरूपां परां शान्तिं मुक्तिं प्राप्नोति । भक्तिरिति । अत्रापि यथेष्टं हेतुहेतुमद्भावो ज्ञेयः ॥ ४३ ॥ यद्धर्मः यद्धर्मनिष्ठः । बाहुलकादनिजभावः । यादृशो यत्स्वभावः ॥ ४४ ॥

---

१. तत्परतया वा ।

## हरिरुवाच

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥४५॥
ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च । प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥४६॥
अर्चायामेव हरये पूजां यः श्रद्धयेहते । न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥४७॥
गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति । विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः ॥४८॥
देहेन्द्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ।
संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ ४९ ॥
न कामकर्मबीजानां यस्य चेतसि सम्भवः । वासुदेवैकनिलयः स वै भागवतोत्तमः ॥५०॥
न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः । सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः ॥५१॥
न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा । सर्वभूतसमः शान्तः स वै भागवतोत्तमः॥५२॥
त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् ।
न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्रयः ॥ ५३ ॥
भगवत उरुविक्रमाङ्घ्रिशाखानखमणिचन्द्रिकया निरस्ततापे ।
हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः ॥ ५४ ॥
विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

---

आत्मनः स्वस्य प्रियो यो-भगवान् तस्य भावं सतां भूतेषु पश्येत् । भूतानि च आत्मनि स्वमनसि स्फुरिते भगवतोत्यन्वयः ॥४५॥ ईश्वरे प्रेम हरिभक्तेषु मैत्रीम् अज्ञेषु कृपां शत्रुषु उपेक्षां यः करोति स मध्यमः इत्यन्वयः । द्वितीयाबहुवचनम् ॥४६॥ अर्चायां प्रतिमायाम् । ईहते करोति । अन्येषु गोब्राह्मणादिषु न । प्राकृतः कृतभक्त्यारम्भः । "प्रारम्भे प्रकृतिः कृतो"—इति निरुक्तिः ॥४७॥ इदं विश्वम् ॥४८॥ यो हरेः स्मृत्या संसारधर्मैरविमुह्यमानः चानश् स भक्तेषु मुख्यः । कीदृशैः धर्मैः जन्मदिभिः । देहस्य जन्मनाशौ प्राणस्य क्षुत्पिपासादि मनसो भयम् । बुद्धेस्तृष्णा इन्द्रियाणां श्रमस्तैः ॥ ४९ ॥ पूर्वं कामः भोगेच्छा ततः कर्माणि ततो बासनास्ताभि संभव उत्पत्तिर्यस्य चेतसि न भवति स एव इत्यन्वयः । एकनिलय एकाधारः । एतेन यथाऽऽचरतीत्यस्योत्तरमुक्तं भवति ॥ ५० ॥ यैर्लिङ्गैरित्यस्योत्तरमाह नेति । यस्य अहंभावोऽङ्कारः न लिप्तो भवति स हरेः प्रियः । जन्म सत्कुले । कर्म तप आदि ॥ ५१ ॥ वित्तेयु स्वकीयं परकीयमिति । आत्मनि स्वकीयः परकीय इति भेदः ॥ ५२ ॥ यः त्रिभुवनविभवहेतवे त्रैलोक्यराज्यप्राप्त्यर्थमपि अकुण्ठस्मृतिः न कुण्ठा न प्रलोभयितुं शक्या स्मृतिर्मतिर्यस्य स भगवत्पदारविन्दात् न विचलति स वैष्णवमुख्य इत्यन्वयः । कथंभूतात् । अजिते श्रीकृष्णे आत्मा चित्तं येषां तैः सुरादिभिर्विमृग्यात् ॥ ५३ ॥ उपसीदतां भजतां पुंसां हृदि कथं तापः प्रभवति न कथमपि । कीदृशे हृदि । भगवतः उरुविक्रमयोर्महापराक्रमयोः अङ्घ्र्योश्चरणयोः शाखानामङ्गुलीनां या नखमणिचन्द्रिका तया निवारितः तापो यस्मिन् ॥ ५४ ॥ साक्षात् स्वयं हरिरेव यस्य हृदयं न मुञ्चति स भक्तेषु मुख्य । मुख्यतया वाच्यो भवति । कुतो न विसृजति । प्रेमरज्जवा धृतं हृदये निबद्धम् अङ्घ्रिपद्मं यस्य सः । कथंभूतः । अवशेन नाऽपि श्रद्धाराहित्येनोच्चारितमात्र एव अघौघं पापसमूहं नाशयतीति तथा । यद् ब्रूते इत्यस्योत्तरं हरिनामानोति ज्ञेयम् । त्रिषु पुष्पिताग्रावृत्तम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां द्वितोयोऽध्यायः ॥२॥

## अथ तृतीयोऽध्यायः

### राजोवाच

परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् । मायां वेदितुमिच्छामो भगवन्तो ब्रुवन्तु नः ।।१।।
नानुतृप्ये जुषन् युष्मद्वचो हरिकथामृतम् । संसारतापनिष्टप्तो मर्त्यस्तत्तापभेषजम् ।।२।।

### अन्तरिक्ष उवाच

एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज । ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये ।।३।।
एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः । एकधा दशधाऽऽत्मानं विभञ्जुषते गुणान् ।।४।।
गुणैर्गुणान् स भुञ्जान आत्मप्रद्योतितैः प्रभुः । मन्यमान इदं सृष्टमात्मानमिह सजते ।।५।।
कर्माणि कर्मभिः कुर्वन् सनिमित्तानि देहभृत् । तत्तत्कर्मफलं गृह्णन् भ्रमतीह सुखेतरम् ।।६।।
इत्थं कर्मगतीर्गच्छन् बह्वभद्रवहाः पुमान् । आभूतसम्प्लवात् सर्गप्रलयावश्नुतेऽवशः ।।७।।
धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् । अनादिनिधनः कालो ह्यव्यक्तायापकर्षति ।।८।।
शतवर्षा ह्यनावृष्टिर्भविष्यत्युल्बणा भुवि । तत्कालोपचितोष्णार्को लोकांस्त्रीन् प्रतपिष्यति ।।९।।

---

मायातत्तरणोपायब्रह्मकर्मचतुष्टये ।
तृतीये ते निमिं प्रोचुरुत्तरं पृथगार्षभाः ।। १ ।।

मायां पृच्छति—परस्येति । परस्य पूर्णस्य । मानं मा ज्ञानं तद् यातुं शीलं येषां ते मायिनः ब्रह्मादयः । यद्वा । मातुं ज्ञातुं शीलं येषां तेषां ज्ञानिनामपीत्यर्थः । हे भगवन्तो भवन्तः । नोऽस्मभ्यम् ।। १ ।। हरिकथारूपममृतं यस्मिंस्तत् युष्मद्वचः जुषन् शृण्वन् मर्त्योऽहं नानुतृप्ये इत्यन्वयः । बाहुलकाच्छनृतङौ ।। २ ।। भूतानामात्मा कारणभूतः आद्यः पुरुषः यथा शक्त्या एभिर्भूतानि ससर्ज एषा मायेति प्रतिश्लोकं संबन्धः । किमर्थं ससर्ज । स्वः स्वीयोऽशभूतो जीवः बुभुक्षुः मुमुक्षुश्च तस्म च क्रमेण मात्राप्रसिद्धये विषयभोगाय आत्मप्रसिद्धये मोक्षाय च । उच्चावचानि देवनृतिर्यगादीनि ।।३ ।। प्रविष्ट ईश्वर एकधा मनोरूपेण दशधा इन्द्रियरूपेण आत्मानं विभक्तं कुर्वन् तत्तद्विषयान् जुषते जोषयति जीवं भोजयतीत्यर्थः । अन्तर्भावितण्यर्थः । यद्वा । आत्मानं जीवं प्रति विषयान् विभजन् ददत् जुषते प्रीयते प्रसन्नो भवति ।।४।। स च प्रभुः जीवः आत्मा अन्तर्यामी तेन प्रकाशितैः गुणैरिन्द्रियैः-गुणान् विषयान् भुञ्जानः इदं सृष्टं शरीरम् आत्मानं मन्यमान इह शरीरादौ सज्जते आसक्तो भवति । प्रकर्षेण तत्तद्योनिषु भवति जायते । प्रभोरंशत्वाद्वा प्रभुः ।।५।। देहभृत् देहाभिमानी जीवः । कर्मभिः कर्मेन्द्रियैः सनिमित्तानि सवासनानि इह संसारे । सुखेतरं सुखदुःखात्मकम् फलम् बाहुलकाददडभावः ।।६।। इत्थं बहुदुःख प्रापका योनीः प्राप्नुवन् सर्गप्रलयौ जन्ममरणे अश्नुते प्राप्नोति । भूतसंप्लवमभिव्याप्य महाप्रलयपर्यन्तमित्यर्थः । अवशः कर्माधीनः ।।७।। धातूनां पञ्चभूतानामुपप्लवे नाशहेतौ प्रलयकाले आसन्ने प्राप्ते सति कालः व्यक्तं जगत् अव्यक्ताय प्रकृतिं प्रति नेतुमपकर्षति । द्रव्यगुणात्मकं स्थूलसूक्ष्मात्मकम् । अनादिनिधनः आद्यन्तशून्यः ।।८।। उल्बणा भयंकरा । तत्कालेन उपचितं प्रवृद्धमुष्णत्वं यस्य स चासौ अर्कश्चेति भावप्रधानो निर्देशः । प्रतपिष्यति

**पातालतलमारभ्य सङ्कर्षणमुखानलः । दहन्नूर्ध्वशिखो विष्वग् वर्धते वायुनेरितः ॥१०॥**

**सांवर्तको मेघगणो वर्षति स्म शतं समाः । धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ॥११॥**

**ततो विराजमुत्सृज्य वैराजः पुरुषो नृप । अव्यक्तं विशते सूक्ष्मं निरिन्धन इवानलः ॥१२॥**

**वायुना हृतगन्धा भूः सलिलत्वाय कल्पते । सलिलं तद्धृतरसं ज्योतिष्ट्वायोपकल्पते ॥१३॥**

**हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते । हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ॥१४॥**

**कालात्मना हृतगुणं नभ आत्मनि लीलते । इन्द्रियाणि मनो बुद्धिः सह वैकारकैर्नृप ।**
**प्रविशन्ति ह्यहङ्कारं स्वगुणैरहमात्मनि ॥ १५ ॥**

**एषा माया भगवतः सर्गस्थित्यन्तकारिणी । त्रिवर्णा वर्णितास्माभिः किं भूयः श्रोतुमिच्छसि।१६**

**राजोवाच**

**यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः । तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ॥१७॥**

**प्रबुद्ध उवाच**

**कर्माण्यारभमाणानां दुःखहत्यै सुखाय च । पश्येत् पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥१८॥**

**नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना । गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥१९॥**

**एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् । सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम् ॥२०॥**

**तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् । शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥२१॥**

---

बाहुलकादिट् ॥ ९ ॥ विष्वक् सर्वतो दहन् वर्धते इत्यन्वयः । ईरित प्रेरितः ॥ १० ॥ संवर्त प्रलयस्तत्र भवः सांवर्तकः प्रलयकर्ता । हस्तिहस्ताभिः गजशुण्डाप्रमाणाभिः । विराट् ब्रह्माण्डम् । स्मेति भूतार्थे ॥ ११ ॥ तत उपाधिलयात् । विराजि ब्रह्माण्डे वर्तते इति वैराजः पुरुषो ब्रह्मा अव्यक्तं कारणम् विशते । उत्सृज्य त्यक्त्वा ॥ १२ ॥ कल्पते सलिले लीपते इत्यर्थः । तत् तेन वायुना ज्योष्ट्वाय तेजस्त्वाय तेजसि लीयते ॥ १३ ॥ तमसा प्रलयकालिकेन हृतरसं अवकाशेन आकाशेन । नभसि आकाशे ॥ १४ ॥ कालेति सार्द्धम् । कालात्मना ईश्वरेण । हृतगुणं हृतशब्दम् नभः आत्मनि कारणे तामसाहङ्कारे । आत्मा कारणब्रह्मणोः इति धरणि. । इन्द्रियाणि बुद्धिश्च राजसाहंकारं प्रविशन्ति । मनो वैकारिकैः देवैः सह सात्त्विकाहंकारम् एवं त्रिविधैः स्वगुणैः स्वकार्यैः सहितोऽहम् अहंकार आत्मनि महति स च महान् प्रकृतौं सा च ब्रह्मणि प्रविशतीति योज्यम् ॥ १५ ॥ स्थितिः पालनम् । त्रिवर्णा त्रिगुणा ॥ १६ ॥ अकृतः अपर्याप्तः अपूर्ण आत्मा येषां तैः अकृतात्मभिः मन्दबुद्धिभिः । 'युगपर्याप्तयोः कृतम् इत्यभरात् । स्थूलधियः कर्मिणः । अञ्जः सुखेन ॥ १७ ॥ दुःखहत्यै दुःखनिवृत्यै । स्त्रिा सह मिथुनीभूय विचरतां नृणां पाकविपर्यासं फलवैपरीत्यम् पश्येत् ॥१८॥ एवंभूतेन वित्तेन सम्पादितैः गृहादिभिः का प्रीतिः किं सुखं न किमपीत्यन्वयः । यतश्चलैः अस्थिरैः । मृत्युना मृत्युरूपेण चौरादिना । आप्ता बन्धुवर्गाः ॥ १९ ॥ यथाऽय एवं परमपीत्यन्वयः । कथंभूतम् । तुल्येन अतिशयेन ध्वंसेन च सहितम् । तत्र तुल्ये स्पर्धा अधिके दोषारोपः ध्वंसे शोकः यथा खण्डभूमण्डलपतीनां मिथः स्पर्द्धादि तद्वत् ॥२०॥ कस्मादैहिकामुष्मिकफलानां दुःखरूपत्वं तस्मात् । उत्तमं श्रेयः स्वात्मज्ञानम् । उपशमाश्रमं क्रोधलोभादिशून्यम्-

तत्र भागवतान् धर्मान् शिक्षेद् गुर्वात्मदैवतः। अमाययानुवृत्त्या यैस्तुष्येदात्माऽऽत्मदो हरिः ॥२२॥
सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु। दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥२३॥
शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम्। ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥२४॥
सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम्। विविक्तचीरवसनं संतोषं येन केनचित् ॥२५॥
श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि। मनोवाक्कर्मदण्डं च सत्यं शमदमावपि ॥२६॥
श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः। जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥२७॥
इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम्। दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनम् ॥
एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम्। परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥२९॥
परस्परानुकथनं पावनं भगवद्यशः। मिथोरतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥३०॥
स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम्। भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनम्३१

क्वचिद् रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः ॥३२॥

इति भागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया। नारायणपरो मायामञ्जस्तरति दुस्तराम् ।३३।

---

शून्यम् ॥ तत्र ततो गुरोः। शिक्षेत्। बाहुलकात्तङभावः। अमायया निष्कपटभावेन सेवया। गुरुरेव आत्मा दैवतं च यस्य। यैर्धर्मैः। आत्मप्रदः बलिप्रभृतीनाम्। इतः परं नवसु सर्वत्र द्वितीयान्तानां शिक्षेदिति क्रियायामन्वयः ॥ २२ ॥ दयां हीनेषु। मैत्री समानेषु। प्रश्रयं विनयम् उत्तमेषु। अद्धा साक्षात् शिक्षेदित्यन्वयः ॥ २३ ॥ तपः स्वधर्मपालनम्। मौनं वृथालापराहित्यम्। आर्जवम् अकौटिल्यम्। द्वन्द्वं शीतोष्णादि ॥ २४ ॥ आत्मान्वीक्षां सत्तारूपेण। ईश्वरान्वीक्षां नियन्तृरूपेण। कैवल्यम् एकान्तशीलत्वम्। अनिकेततां गृहाद्यभिमानराहित्यम्। शुद्धवस्त्रखण्डानां धारणम् ॥२५॥ भागवते भगवत्प्रतिपादके। अन्यत्र तर्कमीमांसादौ। प्राणायामैर्मनसः मौनेन वाचः अनीहया कर्मणः दण्डम् ॥२६॥ जन्मनामवताराणां कर्मणां लीलानां गुणानां वात्सल्यादीनां श्रवणादि। किं बहुना तदर्थे भगवदर्थमेव यत्सकलं कर्म तच्च शिक्षेदित्यन्वयः ॥ २७ ॥ इष्टमित्यादयो भावे निष्ठा। इष्टं यागादि। दत्तं दानम्। वृत्तम् आचारप्राप्तं कर्ममात्रम्। यत् यच्च दारादि तस्य निवेदनमिति व्याख्येयम् अन्यथा क्रुद्योगे षष्ठी स्यात्। परस्मै श्रीकृष्णाय। प्राणान् देहेन्द्रियादीन् ॥ २८ ॥ कृष्ण एव आत्मा नाथश्च आत्मनाथः स्वामी वा येषां तेषु। उभयत्र स्थावरे जङ्गमे च। विशेषतो नृषु तत्रापि साधुषु परकार्यनिरतेषु तत्रापि महत्सु भगवत्परायणेषु ॥ २९ ॥ तैश्च सह संगम्य यत् यशः तस्य कथनं तत् तेन च या रतिः प्रीतिः तुष्टिः सुखं या च दुःखनिवृत्तिस्तां च शिक्षेदित्यन्वयः ॥३०॥ एवं कुर्वतां परमानन्दप्राप्तिः स्यादित्याह—द्वाभ्याम् स्मरन्त इति। भक्त्या श्रवणादिसाधनभक्त्या सञ्जातया प्रेमलक्षणया भक्त्या उत्पुलकाम् उत्पन्नरोमांचाम् तनुम् ॥३१॥ क्वचित् भावावेशात् तदंशोऽप्यहमेतावत्कालपर्यन्तमुपेक्षितोऽस्मीति भावाद् रुदन्ति। नवनीतचौर्ये लीलाकौतुकी नन्दबालः गोपीहस्ते देवरहस्तं दत्त्वा पलायत इति भावाद् हसन्ति। भक्तपराधीनोऽस्मीति भगवद्वात्सल्यात् नन्दन्ति मोदन्ते। रासलीलामनुस्मृत्य नृत्यन्ति गायन्ति च। अजं श्रीकृष्णमनुशीलयन्ति इन्द्रियविषयीकुर्वन्ति। एवं परं ब्रह्म एत्य साक्षात्कृत्य तूष्णीं भवन्ति तद्रसानुभूतिं कुर्वन्ति ॥ ३२ ॥ इति पूर्वोक्तान्। तदुत्थया भागवतधर्मजनितया। अञ्जः सुखेन ॥ ३३ ॥ निष्ठां स्वरूपम्।

राजोवाच

नारायणाभिधानस्य ब्रह्मणः परमात्मनः । निष्ठमर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः ॥३४॥

पिप्पलायन उवाच

स्थित्युद्भवप्रलयहेतुरहेतुरस्य यत् स्वप्नजागरसुषुप्तिषु सद् बहिश्च ।
देहेन्द्रियासुहृदयानि चरन्ति येन सञ्जीवितानि तदवेहि परं नरेन्द्र ॥३५॥
नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथानलमर्चिषः स्वाः ।
शब्दोऽपि बोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः ॥३६॥
सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदन्ति जीवम् ।
ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥३७॥
नात्मा जजान न मरिष्यति नैधतेऽसौ न क्षीयते सवनविद् व्यभिचारिणां हि ।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥३८॥

---

नोऽस्मभ्यम् । ब्रह्मविदः वैदिककर्मनिष्ठाः । ब्रह्मवित्तरा ज्ञाननिष्ठाः । ब्रह्मवित्तमाः साक्षाद्भगवन्निष्ठा इति तृतीयकोटौ तमप्प्रत्ययः ॥३४॥ यः अस्य विश्वस्य स्थित्यादीनां हेतुः स्वयं च अहेतुः कारणरहितः स नारायणः परमेव तत्त्वमवेहि । किञ्च यत् स्वप्नाद्यवस्थात्रये सत् वर्तमानं बहिश्च तुर्यावस्थायामपि यत् सत् तद् ब्रह्मेति परमेव तत्त्वमवेहि । किञ्च देहेन्द्रियप्राणमनांसि येन चेतनीकृतानि चरन्ति स्वस्वकार्ये प्रवर्तन्ते तत्परमात्मेति परमेव तत्त्वमवेहि । एवं नामभेदैरेकमेव तत्त्वं श्रीकृष्णाख्यं नान्यदिति विभावनीयम् । स्थितिः पालनम् । उद्भवः सृष्टिः ॥३५॥ एतद् ब्रह्म प्रति मनो न विशति न विषयीकरोति । वागुत वागपि प्रतिपादयितुं न शक्नोति किं बहुना चक्षुश्च द्रष्टुम् आत्मा बुद्धिश्च निश्चयं कर्तुं प्राणाश्च क्रियाशक्त्या प्राप्तुं ज्ञानेन्द्रियाणि ज्ञातुं कर्मेन्द्रियाणि च प्राप्तुं न शक्नुवन्तीत्यर्थः । यथा स्वा अग्न्यंशभूता अर्चिषः ज्वालाः अग्निकणा वा अग्निं न प्रकाशयन्ति न दहन्ति च तद्वत् । ननु श्रुतौ ब्रह्मण उपनिषत्प्रतिपाद्यत्वं श्रूयते तत् कथं तदाह—शब्दोऽपि वेदोऽपि आत्मनः स्वस्य मूलं ब्रह्म न चक्षुषा पश्यति कश्चनैनम् इति चक्षुरादिबोधकानां निषेधतया अर्थोक्तमाह अर्थत एवोक्तमाह यस्य बोधकं किमपि नास्तीति तत् ब्रह्म इति तात्पर्येणाह न तु शब्दतः इदं तदित्यङ्गुल्या निर्देशेनेत्यर्थः । ननु तर्हि मास्तु ब्रह्मेत्येव मन्तव्यं किमर्थोक्तप्रयासेन तदाह—यदृते यद् अवधिभूतं ब्रह्म विना निषेधसिद्धिर्न स्यात् । नो चेद् ब्रह्म कुतो निषेधः यतो हि सर्वस्य निषेधस्य सावधिकत्वात् ॥३६॥ सत् असत् कार्यं कारणं च तत्सर्वं ब्रह्मैव भाति । कुतः । यत् यस्मात् तयोः सदसतोः परं कारणम् । नन्वेकं कथं बहुविधस्य कारणं तत्राह—उरुशक्तिमत् अनेकशक्तिमत् । यद्वा । उरुर्महती माया शक्तिर्यस्य । बहुधा भानमाह—आदौ यदेकं ब्रह्म तदेव सत्त्वं रजस्तम इति त्रिवृत् त्रिगुणात्मकं प्रधानं प्रकृतिं वदन्ति । ततः क्रियाशक्त्या सूत्रं ज्ञानशक्त्या महान् महत्तत्त्वं ततो जीवम् अहं जीवोपाधिम् अहङ्कारं च तदेव प्रवदन्ति । ततश्च ज्ञानादिरूपतया ब्रह्मैव भातीत्यन्वयः । ज्ञानं देवता क्रिया इन्द्रियाणि अर्था विषयाः फलं सुखदुःखादि । एवं स्वतः सिद्धवस्तुनि न प्रमाणापेक्षेति ॥ ३७ ॥ असौ आत्मा ब्रह्म न जजान न जातः । 'जन जनने' वैदिको धातुः । तथा च जायते अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यति इति षड्विकाररहितं ब्रह्म । हि यस्मात् व्यभिचारिणां बाल्ययुवाद्यवस्थानां सवनवित् तत्तत्कालसाक्षी । किं च तद् ब्रह्म सर्वत्र देशे शश्वत् सदा अनपायि अनुवर्तमानम् । उपलब्धिमात्रं ज्ञानैकस्वरूपं च । अतो यथा प्राणः पश्वादिशरीरेषु अनुवर्तते तथा सत् ब्रह्मरूपमेकमेव ज्ञानमिन्द्रियबलेन विविधं

अण्डेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र ।
सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥३९॥
यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद् गुणकर्मजानि ।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं साक्षाद् यथाऽमलदृशोः सवितृप्रकाशः ॥४०॥

राजोवाच

कर्मयोगं वदत नः पुरुषो येन संस्कृतः । विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परम् ॥४१॥
एवं प्रश्नमृषीन् पूर्वमपृच्छं पितुरन्तिके । नाब्रुवन् ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥४२॥

आविर्होत्र उवाच

कर्माकर्मविकर्मेति वेदवादो न लौकिकः । वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः ॥४३॥
परोक्षवादो वेदोऽयं बालानामनुशासनम् । कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥४४॥
नाचरेद् यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः । विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥४५॥
वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥४६॥

---

कल्पितमित्यन्वयः ॥ ३८ ॥ अण्डजेषु जरायुजेषु उद्भिज्जेषु स्वेदजेषु तत्र तत्र सर्वत्र प्राणो यथा जीवमुपधावति अविकृत एव अनुवर्तते तथैवाऽऽत्मापि सर्वदा निर्विकार एवावतिष्ठते । तस्य सविकारप्रतीतिस्तु जाग्रदवस्थायां देहाध्यासेन स्यात् । यत् यदा सुषुप्तौ इन्द्रियगणे सन्ने लीने अहमि अहङ्कारे च प्रसुप्ते लीने सति कूटस्थो निर्विकार एव आत्मा अवतिष्ठते । कुतः । आशयं विना लिङ्गशरीरोपाधिं विना । जाग्रदवस्थायां सत्यां नोऽस्माकं तस्यात्मनः स्मृतिर्भवति । सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति । अतोऽननुभूतस्य स्मरणाभावादस्त्येव सुषुप्तौ आत्मानुभव इति ॥३९॥ यर्हि एषणाजयं विहाय अब्जनाभस्यैव चरणैषणया चरणकामनया या उरुर्महती भक्तिः प्रेमलक्षणा तया पुमान् गुणकर्मजानि रागद्वेषादीनि चेतोमलानि विधमेत् नाशयेत् तस्मिन् विशुद्धे चेतसि साक्षात् अव्यवधानेन आत्मतत्त्वमुपलभ्यते । यथा अमलयोर्दृशोरेव सत्योः सूर्यप्रकाश उपलभ्यते नत्वन्धस्य तथा सदा प्रकाशमानस्यात्मन उपलब्धिः शुद्धचित्तस्यैव न तु विषयासक्तस्येत्यर्थः । चेतः कर्तृ मलानि विधमेदित्यन्वयो वा ॥ ४० ॥ भक्तेः कर्माधीनत्वात् तत्पृच्छति - कर्मेति । नोऽस्मभ्यम् । संस्कृतः शुद्धचित्तः सन् । इहैव जन्मनि कर्मफलानि निरस्य नैष्कर्म्यं ज्ञानं लभते ॥ ४१ ॥ यथाऽधुना एवं पूर्वम् । प्रश्नं कर्मयोगप्रश्नम् । पितुः इक्ष्वाकोः । ब्रह्मणः पुत्राः सनकादयः । तत्रोत्तरादाने ॥ ४२ ॥ कर्म विहितं सन्ध्यावंदनादि । अकर्म तद्विपरीतं निषिद्धं सुरापानादि । अत्र विरोधे नञ् असुराधर्मवत् । 'अप्राशस्त्यं विरोधश्च' इति कारिकोक्तेः । विकर्म विहिताकरणम् । वादो व्यवहारः । ईश्वरात्मत्वात् ईश्वरनिःश्वसितत्वेनापौरुषेयत्वादित्यर्थः । तत्र कर्मादौ विद्वांसोऽपि मुह्यन्ति किमुतान्ये । अतस्तव तदा बालत्वात्ते नाब्रुवन्नित्याशयः ॥४३॥ परोक्षं गुप्तमात्मतत्त्वं वदतीति परोक्षवादः । यथा बालानामनुशासनं प्रलोभनं भवति तथा कर्माणि विधत्ते । अगदम् औषधम् । यथा पिता पुत्ररोगनिवृत्तये भेषजं पातुं मोदकं दर्शयति तत्र मोदके भेषजे च नाभिप्रायः किन्तु भेषजेन रोगनिवृत्तौ भेषजत्यागे एव तात्पर्यम् एवं वेदोऽप्यवान्तरफलैः प्रलोभयन् बन्धनभूतकर्मनिवृत्तये कर्माणि विधत्ते इत्यर्थः ॥ ४४ ॥ स्वयं नाचरेदित्यन्वयः । विकर्मणा संध्यादिकर्मानाचरणेन । मृत्योरनन्तरं मृत्युमेव प्राप्नोति न स मुच्यत इत्यर्थः । मृत्योः यमात् मृत्युं नरकं वा ॥ ४५ ॥ कुर्वाणः न तु निषिद्धम् । अर्पितं न तु फलोद्देशेन । निःसङ्गः अहं कर्तेत्यभिमानशून्यः । नैष्कर्म्यां ज्ञानरूपाम् । वेदे फलश्रुतिस्तु

य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः । विधिनोपचरेद् देवं तन्त्रोक्तेन च केशवम् ॥४७॥
लब्धानुग्रह आचार्यात् तेन संदर्शितागमः । महापुरुषमभ्यर्चेन्मूर्त्याभिमतयाऽऽत्मनः ॥४८॥
शुचिः सम्मुखमासीनः प्राणसंयमनादिभिः । पिण्डं विशोध्य संन्यासकृतरक्षोऽर्चयेद्धरिम् ॥
अर्चादौ हृदये चापि यथालब्धोपचारकैः ॥ ४९ ॥
द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ।
पाद्यादीनुपकल्प्याथ संनिधाप्य समाहितः । हृदादिभिः कृतन्यासो मूलमन्त्रेण चार्चयेत् ॥५०॥
साङ्गोपाङ्गां सपार्षदां तां तां मूर्तिं स्वमन्त्रतः । पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः॥५१॥
गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः । साङ्गं सम्पूज्य विधिवत् स्तवैः स्तुत्वा नमेद्धरिम् ॥५२॥

---

कर्मसु रुच्युत्पादनार्था अन्यथा तत्राप्रवृत्तेः ॥ ४६ ॥ परात्मनो ब्रह्मांशस्य जीवस्य हृदयग्रन्थिम् ग्रन्थिवत् दुर्भेदमहं ममेत्यध्यासरूपं निर्जिहीर्षुर्दूरीकरणेच्छुः । तन्त्रोक्तेन पञ्चरात्रोक्तेन । चकारात् वैदिकेन च । उपचरेत् पूजयेत् ॥ ४७ ॥ आचार्यात् ब्राह्मणात् लब्धदीक्षः तेन आचार्येण संदर्शित आगमः पूजनादिप्रकारो यस्य स तथाभूतः सन् स्वाभीष्टमूर्त्या विष्णुमर्चयेत् । अत्राचार्यपदेन ब्राह्मणो ग्राह्यः सोऽपि गृहस्थ 'एव तपस्वी सत्यवादी च गृहस्थो गुरुरुच्यते ।' इत्यगस्त्यसंहितोक्तेः । पाद्मेऽपि—'ब्राह्मणो वै गुरुर्नृणाम् । 'श्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुत्युक्तं श्रोत्रियत्वं ब्राह्मण एव पर्यवस्यति । श्रोत्रियो ब्रह्मणो ज्ञेयः इति संहितोक्तेः । यत्तूक्तं—अवैष्णवोपदिष्टेन मन्त्रेण निरयं व्रजेत् । तत्रापि ब्राह्मणा वैष्णवा मुख्या यतो विष्णुमुखोद्भवाः ।' इत्यादिपुराणोक्तवचनात्समाधेयम् ॥ ४८ ॥ शुचिरिति सार्द्धम् । शुचिः स्नानादिना । संमुखं मूर्तेरिति शेषः । प्राणसंयमः प्राणायामः । आदिना भूतशुद्ध्यादिग्रहः । पिण्डं देहम् । सद्भिः श्रेष्ठैः न्यासैः केशवादिभिः कृता रक्षा येन सः । अर्चा प्रतिमा । आदिना स्थण्डिलादिग्रहः । उपचारकैः पूजासाधनैः[1] ॥४९॥ द्रव्येति सार्द्धम् । द्रव्याणि पुष्पादीनि जन्त्वादिशोधनेन क्षितिं सम्मार्जनादिना आत्मानम् अव्यग्रतया मूर्तिमनुलेपादिना एतानि निष्पाद्य पूजायोग्यानि कृत्वा । प्रोक्ष्य जलेन । उपकल्प्य संपाद्य । सन्निधाप्य श्रीविष्णुमावाह्य । मूलमन्त्रः षडक्षरादिः । 'आदावोंकारमुच्चार्य नमोऽन्ते मध्यदेशके । देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्तितः' इति गारुडोक्तेः । यथा 'ॐविष्णवे नमः' इत्यादि ॥ ५० ॥ साङ्गेति युग्मम् । तां तां स्वाभीष्टां मूर्तिं स्वमन्त्रतः पाद्यादिभिः साङ्गं संपूज्य स्तुत्वा च मूर्तिस्थं हरिं दण्डवत् प्रणमेदित्यन्वयः । अङ्गानि चरणादीनि उपाङ्गानि सुदर्शनादीनि । पार्षदाः सुनन्दादयः । अक्षताः तिलकालङ्कारे न तु पूजायाम् । 'नाक्षतैरर्चयेद्विष्णुम्' इति निषेधात् । यद्वा । अक्षता अखण्डिताः स्रजस्ताभिः । उपहारो नैवेद्यम् ॥ ५२ ॥ तन्मयं तदाविष्टम् । शेषं निर्माल्यं शिरसि

---

१. मन्त्रशास्त्रे पञ्च दश षोडशोपचारा वर्णितास्ते क्रमेण निरूप्यन्ते —

गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ।
पाद्यार्घ्याचमनीयं च मधुपर्काचमं तथा ।
गन्धादयो नैवेद्यान्ता उपचारा दश क्रमात् ॥
पाद्यार्घ्याचमनीयं च स्नानं वस नभूषणे ।
गन्ध-पुष्प-धूप-दीप-नैवेद्याचमनं तथा ॥
ताम्बूलमर्चना स्तोत्रं तर्पणं च नमस्क्रिया ।
प्रयोजयेत्प्रपूजायामुपचारांश्च षोडश ॥ इति ॥

आत्मानं तन्मयं ध्यायन् मूर्तिं सम्पूजयेद्धरेः । शेषामाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ।५३।
एवमग्न्यर्कतोयादावतिथौ हृदये च यः । यजतीश्वरमात्मानमचिरान्मुच्यते हि सः ।।५४।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे तृतीयाऽध्यायः ।। ३ ।।

---

धृत्वा सत्कृतं देवं हृदि मूर्तिं स्वस्थाने उद्वास्य स्थापयित्वा पूजाविधिं समापयेदिति शेषः ।। ५३ ।। एवम् अग्न्यादिषु आत्मानं व्यापकमीश्वरं यो यजति स मुच्यते इत्यन्वयः । हि निश्चये ।। ५४ ।।

इति श्रीमद्भागवते महापुराणे परमहंस्यां संहितायां गूढार्थदीपिन्यां तृतीयोऽध्यायः ।।

## अथ चतुर्थोऽध्यायः

### राजोवाच

यानि यानीह कर्माणि यैर्यैः स्वच्छन्दजन्मभिः । चक्रे करोति कर्ता वा हरिस्तानि ब्रुवन्तु नः।।१।।

### द्रुमिल उवाच

यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्यन् स तु बालबुद्धिः ।
रजांसि भूमेर्गणयेत् कथंचित् कालेन नैवाखिलशक्तिधाम्नः ।। २ ।।
भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।
स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ।। ३ ।।
यत्काय एष भुवनत्रयसंनिवेशो यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ।
ज्ञानं स्वतः श्वसनतो बलमोज ईहा सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता ।।४।।

---

तुर्येऽवतारसंप्रश्ने नारायणबलं महत् ।
द्योतयन् द्रुमिलः कांश्चिदवतारानवर्णयत् ।। १ ।।

इह लोके । स्वच्छन्देन भक्तेच्छया जन्मभिः अवतारैः यानि कर्ता करिष्यति वा भविष्यदर्थे लुट् तानि नोऽस्मभ्यम् ।। १ ।। वै एवार्थे । यः अनुक्रमिष्यन् गणयितुमिच्छन् भवति स तु बालबुद्धिः मन्दमतिरेव । कोऽपि महामतिर्गणकः कथंचित् कालेन भूमेः रजांसि परमाणून् गणयेत् । संभावनायां लिङ् । अखिलशक्तीनां धाम्नः आधारभूतस्य भगवतो गुणांश्च नैव गणयेदित्यन्वयः ।।२।। तत्रादौ पुरुषावतारः माह—आत्मसृष्टैः स्वरचितैः भूतैर्विराजं ब्रह्माण्डं पुरं निर्माय यदा तस्मिन् स्वांशेन नियन्तृरूपेण लीलाशक्त्या प्रविष्टः तदा नारायणः पुरुष संज्ञां प्राप्तवानित्यन्वयः ।।३।। अस्य गुणकर्माण्याह द्वाभ्याम् । यत्काय इति प्रथमान्तम् । यद्वा । यस्य काये एव सन्निवेशः लोकत्रयरचना यस्येन्द्रियैः तनुभृतां समष्टिव्यष्टिजीवानाम् उभयेन्द्रियाणि ज्ञानकर्मात्मकानि भवन्ति । यस्य स्वतः स्वरूपभूतसत्त्वात् ज्ञानं भवति सुष्ठु अः स्वः तस्मात् । 'अकारं सत्त्वसम्पन्नम्' इति स्कन्दात् । यस्य श्वसनतः प्राणात् बलं देहशक्तिः ओज इन्द्रियशक्ति ईहा चेष्टा च भवति यश्च सत्त्वादिभिः स्थितिलयोद्भवे आदिकर्ता स आद्यः पुरुष इत्युत्तरेणान्वयः । स्थितिश्च लयश्च उद्भवश्चेति समाहारद्वन्द्वे सप्तम्यन्तपदम् ।।४।।

आदावभूच्छतधृती रजसास्य सर्गे विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः ।
रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिलयाः सततं प्रजासु ॥ ५ ॥

धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर ऋषिप्रवरः प्रशान्तः ।
नैष्कर्म्यलक्षणमुवाच चचार कर्म योऽद्यापि चास्त ऋषिवर्यनिषेविताङ्घ्रिः ॥६॥

इन्द्रो विशङ्क्य मम धाम जिघृक्षतीति कामं न्ययुङ्क्त सगणं स बदर्युपाख्यम् ।
गत्वाप्सरोगणवसन्तसुमन्दवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ॥ ७ ॥

विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय एजमानान् ।
मा भैष्ट भो मदन मारुत देववध्वो गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥ ८ ॥

इत्थं ब्रुवत्यभयदे नरदेव देवाः सव्रीडनम्रशिरसः सघृणं तमूचुः ।
नैतद् विभो त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे ॥ ९ ॥

---

यस्य रजसा अस्य विश्वस्य सर्गे शतघृतिः ब्रह्मा अभूत् । 'शतानन्दः शतधृतिः पङ्कजोद्भव आत्मभूः' इति धरणिः । स्थितौ पालने यस्य सत्त्वेन विष्णुरभूत् । कथंभूतः । क्रतुपतिः यज्ञफलदाता । द्विजानां तद्धर्माणां सेतुः पालकश्च । अप्ययाय संहाराय यस्य तमसा रुद्रोऽभूत् । इत्येतैर्ब्रह्मादिभिर्निमित्तभूतैः सततं प्रतिकल्पं प्रजासु उद्भवादयो यतो भवन्ति स आद्यः पुरुष इत्यन्वयः । सर्गे सर्गार्थम् । निमित्ते सप्तमी ॥ ५ ॥ नरनारायणावतारमाह—धर्मस्येति । धर्मस्य पत्न्यां दक्षस्य पुत्र्यां मूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेन भगवान् अजनिष्ट । स च कर्म भगवद्ध्यानलक्षणं नारदादिभ्य उवाच स्वयमाचचार च । कथंभूतं कर्म । निर्गतं कर्म कर्तृत्वं यस्मात्तत् अकर्तृ आत्मस्वरूपं निष्कर्मेत्युच्यते, ततः स्वार्थे ष्यञ् नैष्कर्म्यं तल्लक्ष्यते ज्ञायतेऽनेन तत् । योऽद्यापि आस्ते बदरिकाश्रमे । ऋषिवर्यैर्निषेवितौ अङ्घ्री यस्य तथाभूतः सन् ॥ ६ ॥ असौ नारायणः मम धाम तपसा ग्रहीतुमिच्छतीति इन्द्रो विशंक्य तत्तपोनाशाय कामं न्ययुङ्क्त प्रेषितवान् । स च अप्सरोगणादिभिः सह बदर्युपाख्यं बदरिकाश्रमं गत्वा स्त्रीणां प्रेक्षणेषुभिः कटाक्षबाणैस्तम् अविध्यत् प्राहरत् । यतो हि अतन्महिज्ञः न तस्य महि महिमानं जानातीति तथाभूतः सः । बदरीभिरुपाख्या प्रसिद्धिर्यस्य तम् ॥ ७ ॥ आदिदेवो नारायण इन्द्रकृतमपराधं विज्ञाय एजमानान् शापभिया कम्पमानान् तान् कामादीन् आह । गतिविस्मयः गर्वरहितः । भो मदन ! भो मारुत ! भो अप्सरसः ! यूयं मा भैष्ट नोऽस्माकं बलिमातिथ्यं गृह्णीत कुतः । इमम् आश्रमम् अशून्यं पूर्णं कुरुध्वम् । आतिथ्याभावे शून्यः स्यादिति भावः । यद्वा । भो इति कामसंबोधनम् । भातीति भुस्तत्संबुद्धौ । मदयति कामिन इति मदनो वसन्तस्तत्संबुद्धौ हे वसन्त ! मारयति विरहिणम् इति मरुत् स एव मारुतो मलयानिलः । यद्वा । मदनपदेनैव मारुतस्य ग्रहणात् मा रुत इति क्रियापदम् । यूयमिन्द्रभयात् मा रुत रोदनं मा कुरुत इत्यर्थोऽपि व्याख्येयः ॥ ८ ॥ हे नरदेव ! निमिसंबोधनम् । अभयदे श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सघृणं दयालुं तम् ऊचुः । कथंभूताः । व्रीडया सह नम्राणि शिरांसि येषान्ते । हे विभो ! मायातः परे अत एव अविकृते विकारशून्ये त्वयि एतत् अपराधाचिन्तनमाश्चर्यं नास्ति । कीदृशे । स्वस्मिन् आरामः क्रीडा येषां ते स्वारामा आत्मारामास्ते च धीरा जितेन्द्रियाश्च

त्वां सेवतां सुरकृता बहवोऽन्तरायाः स्वौको विलङ्घ्य परमं व्रजतां पदं ते ।
नान्यस्य बर्हिषि बलीन् ददतः स्वभागान् धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥१०॥

क्षुत्तृट्त्रिकालगुणमारुतजैह्व्यशैश्न्यानस्मानपारजलधीनतितीर्य केचित् ।
क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति ॥११॥

इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः । दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः ॥१२॥

ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः । गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥१३॥

तानाह देवदेवेशः प्रणतान् प्रहसन्निव । आसामेकतमां वृङ्ध्वं सवर्णां स्वर्गभूषणाम् ॥१४॥

ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः । उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥१५॥

इन्द्रयानम्य सदसि शृण्वतां त्रिदिवौकसाम् । ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥१६॥

हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान् पिता नः ।
विष्णुः शिवाय जगतां कलयावतीर्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥१७॥

गुप्तोऽप्यये मनुरिलौषधयश्च मात्स्ये क्रौडे हतो दितिज उद्धरताम्भसः क्ष्माम् ।
कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहात् प्रपन्नमिभराजममुञ्चदार्तम् ॥१८॥

---

तेषां समूहैः आनतं पादपद्मं यस्य तस्मिन् ॥ ९ ॥ त्वां सेवतां सेवमानानाम् । बाहुलकाच्छतृप्रत्ययः । बहवो विघ्ना भवन्ति कुतः । स्वौकः[1] देवस्थानं स्वर्गमतिक्रम्य परमं सर्वोत्कृष्टं ते पदं स्थानं व्रजताम् । अन्यस्य त्वामसेवमानस्य तु अन्तराया न भवन्ति । कुतः । बर्हिषि यज्ञे बलीन् कररूपान् स्वभागान् पुरोडाशादीन् ददतः । तर्हि किं विघ्नैर्भक्तो भ्रश्येत् नेत्याहुः । यदीति हेतौ । यतस्त्वम् अविता रक्षकः अतोऽसौ विघ्नानां मूर्ध्नि पदं धत्ते । कुतस्त्वयि विघ्नशंकेति भावः ॥ १० ॥ केचित् अभक्ताः अपारजलधीन् अस्मान् अतितीर्य विलङ्घ्य गोष्पदे परिमितजले मज्जन्ति । कुतः । यतः विफलस्य तपोनाशकस्य क्रोधस्य वशं यान्ति । किंच दुश्चरं कठोरं तपोऽपि वृथा शापादिना त्यजन्ति । कथंभूतान् अस्मान् । क्षुत् च तृट् च पिपासा च त्रिकाल-गुणाः शीतोष्णवर्षाणि मारुतः प्राणवायुः जैह्वा जिह्वाभोगाः शैश्न्याः जननेन्द्रियभोगाश्च तान् । अत्र यकार-घटितोऽयं पाठः ।११। विभु सर्वसमर्थः इत्थं स्तुवतां तेषां कामादीनाम् अद्भुतदर्शना अदृष्टश्रुतरूपाः स्त्रीः योगनिर्मिताः दर्शयामास । सुष्ठु अर्चिता अलंकृताः ।१२। ते देवानुचराः कामादयः रूपिणीः मूर्तिमतीः श्रीरिव ताः स्त्रीः दृष्ट्वा मोहिता बभूवुः । रूपौदार्येण सौन्दर्यातिशयेन हता श्रीः कान्तिर्येषान्ते । श्रीरिति बाहुलकाद-यङ्भावः ।१३। तान् कामादीन् । सवर्णा समानरूपाम् । वृङ्ग्ध्वं वृणीध्वं स्वीकुरुत 'वृजि' वर्जने इदित् अदादिः । धातूनामनेकार्थत्वाद्वरणार्थता घटते ।१४। ओमित्यङ्गीकारेऽव्ययम् । आदेशम् आज्ञाम् ।१५। इन्द्राय इन्द्रं प्रति नारायणबलमूचुः । तत्र तदा शक्रः विस्मितः आस विस्मितो बभूव । तत्रास त्रासं प्राप्तो वा । 'त्रसी' उद्वेगे इत्यस्माल्लिट् ।१६। हंसस्वरूपी अच्युतः सनकादिभ्यः । दत्तात्रेयः यद् प्रह्लादादिभ्यः । कुमारः नारदाय । अस्माकं पिता ऋषभश्च अस्मभ्यम् ज्ञानभक्तियोगम् उपदिष्टवान् । विष्णुरेव कलया तत्तद्रूपेण अवतीर्णः सन् । तथा हयग्रीवावतारे मधुदैत्यं भिनत्तीति तथा तेन । ततः श्रुतय आहृता वेदा आनीताः ॥१७॥ किं च तेन मात्स्ये मत्स्यावतारे मनुः सत्यव्रतः गुप्तः तथा इला पृथ्वी ओषधयश्च गुप्ता इति वचन व्यत्ययेनान्वयः । चकारात् ऋषयश्च । क्रौडे वाराहावतारे जलात् भूमिम् उद्धरता तेन दितिजो हिरण्याक्षो

---

[1]. स्वेषामस्माकं देवानामोकः स्वौकः ।

संस्तुन्वतोऽब्धिपतिताञ्छ्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ।
देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ॥१९॥
देवासुरे युधि च दैत्यपतीन् सुरार्थे हत्वान्तरेषु भुवनान्यदधात् कलाभिः ।
भूत्वाथ वामन इमामहरद् बलेः क्ष्मां याच्ञाच्छलेन समदाददितेः सुतेभ्यः ॥२०॥
निःक्षत्रियामकृत गां च त्रिःसप्तकृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः ।
सोऽब्धिं बबन्ध दशवक्त्रमहन् सलङ्कं सीतापतिर्जयति लोकमलघ्नकीर्तिः ॥२१॥
भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि ।
वादैर्विमोहयति यज्ञकृतोऽतदर्हान् शूद्रान् कलौ क्षितिभुजो न्यहनिष्यदन्ते ॥२२॥
एवंविधानि कर्माणि जन्मानि च जगत्पतेः । भूरीणि भूरियशसो वर्णितानि महाभुज ॥२३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

---

हृतः । कौर्मे कूर्मावतारे अमृतार्थम् उन्मथने क्षीरसमुद्रमथने निमित्ते । अद्रिः महेन्द्राचलः धृतः । हर्यवतारे आर्तं पीडितम् अत एव प्रपन्नं शरणागतं गजेन्द्रं-ग्राहात् अमोचयत् । अन्तर्भावितण्यर्थं ॥ १८ ॥ कश्यपार्थं: समिदानयने गतान् अब्धिपतितान् अङ्गुष्ठपर्वाकारत्वात् गोष्पदजले निमग्नान् इन्द्रेणोपहसितान् संस्तुवतश्च बालखिल्यान् ऋषीनमोचयदित्यनुषङ्गः । श्रमणान् कृतात्मश्रमान् । तमसि ब्रह्महत्यायां प्रविष्टमिद्रं च । युद्धे देवेषु पलायितेषु असुरैस्तत्स्त्रियः गृहमानीय निरुद्धास्ताश्चामोचयत् । नृसिंहावतारे असुरेन्द्रं हिरण्यकशिपुं जघ्ने । बाहुलकात्तङ् । स्वादेराकृतिगणत्वात् स्तौतेः पाठस्तत्र कल्प्योऽतः स्नुः ततः शतृप्रत्ययः संस्तुन्वत इति ॥ १९ ॥ देवासुरे या युध् युद्धं तत्रेति व्याख्येयम् । अन्यथा देवाश्च असुराश्च योद्धारः सन्ति अत्रेति मत्वर्थीयाजन्तात् युधशब्दविशेषणेऽसुरशब्दे स्त्रीत्वं दुर्निवारं स्यात् युध्शब्दस्य नित्यस्त्रीलिङ्गत्वात् । सुरार्थे इन्द्रार्थं दैत्यपतीन् हत्वा अन्तरेषु मन्वन्तरेषु कलाभिर्मन्वन्तरावतारै[1]र्भुवनानि अपालयत् । अथ वैवस्वतमन्वन्तरे । वामनो भूत्वा बलेः सकाशादिमां पृथ्वीमहरत् तां च देवेभ्योऽददात् ॥ २० ॥ हैहयकुलस्य अप्ययाय नाशाय भार्गवः भृगुवंशे भवः अग्निः अग्निवत् तेजस्वी परशुरामः त्रिःसप्तकृत्वः एकविंशतिवारान् गां पृथ्वीं निःक्षत्रियां चकार । स च रामः सीतापतिः सन् अब्धिं बबन्ध सेतुरूपेण । सलङ्कं रावणं च अहन् स च जयति । लोकस्य मलानि पापानि हन्तीति तथाभूता कीर्तिर्यस्य सः । अत्र लङ्कापदेन लङ्कास्थवीरा ग्राह्या 'मञ्चाः क्रोशन्तीति वत्' 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायात् ॥२१॥ अजन्माऽपि यदुषु जातः सन् दुष्कराणि कालियदमनादीनि कर्माणि । अतदर्हान् यज्ञायोग्यान् यज्ञकृतः यज्ञं कुर्वाणान् शूद्रान् दैत्यान् वादैर्वेदविरुद्धतर्कैर्विमोहयिष्यति यज्ञान्निवारयिष्यति बुद्धः सन् । अन्ते कलियुगान्ते शूद्रान् राज्ञश्च निहनिष्यति कल्किः । शूद्रानित्युभयत्रान्वेति । लृडर्थे लृङ् ॥ २२ ॥ एवंविधानि अन्यान्यपि बहूनि सन्ति तानि कविभिर्वर्णितानि । हे महाभुज ! निमे ! महतो भक्तिनिष्ठान् भुनक्ति सेवनेन पालयतीति तथा ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितामेकादशस्कन्धे गूढार्थदीपिन्यां चतुर्थोऽध्यायः ॥

---

१. विष्वक्सेनादिभिः ।

## अथ पञ्चमोऽध्यायः

### राजोवाच

भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः। तेषामशान्तकामानां का निष्ठाऽविजितात्मनाम् ॥१॥

### चमस उवाच

मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह। चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥२॥

य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम्। न भजन्त्यवजानन्ति स्थानाद् भ्रष्टाः पतन्त्यधः ॥३॥

दूरेहरिकथाः केचिद् दूरे चाच्युतकीर्तनाः। स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥४॥

विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदान्तिकम्। श्रौतेन जन्मनाथाऽपि मुह्यन्त्याम्नायवादिनः ॥

कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः। वदन्ति चाटुकान् मूढा यया माध्व्या गिरोत्सुकाः

---

पञ्चमे भक्तिशून्यानां दुर्गतिं चमसोऽवदत्।
युगावतारं वर्णार्चाविधिं च करभाजनः ॥ १ ॥

भक्ता विघ्नमूर्ध्नि पदं दत्त्वोत्तमां गतिं यान्ति तर्हि अभक्तानां का गतिरिति पृच्छति निमिः भगवन्तमिति। ये हरिं न भजन्ति तेषां का निष्ठा का स्थितिरित्यन्वयः। निष्ठा स्यात् स्थितिनाशयोः' इति निरुक्तिः। कथंभूतानाम्। अविजितात्मनाम् अजितेन्द्रियाणाम् अत एव अशान्तेति अनिवृत्तवासनानाम्। हे आत्मवित्तमाः। 'वेदो नारायणः साक्षात्' इत्युक्तेरात्मशब्दोऽत्र वेदपरः। पदक्रमादिभिर्वेदज्ञा आत्मविदः। अर्थज्ञत्वात् आत्मवित्तराः पदक्रमादिभिर्वेदतात्पर्यज्ञा आत्मवित्तमा इति विवेकः ॥ १ ॥ आश्रमैः सहेत्यन्वये तु आश्रमाणामपि मुखादिभ्य एवोत्पत्तिः प्रसज्येत सा च नोपयुक्ता गृहाश्रमोजघनतः इत्यादिविरोधात्। अतो हृदयजघनवक्षोमस्तकेभ्य इति पूर्वशेषो बोध्यः। तथा च हृदयादिभ्यः मुखादिभ्यश्च आश्रमैः सह क्रमेण वर्णा जज्ञिरे इत्यन्वयः। गुणैः। सत्त्वेन विप्रः। सत्त्वरजोभ्यां क्षत्रियः। रजस्तमोभ्यां वैश्यः। तमसा शूद्र इति ॥ २ ॥ एषां वर्णानां मध्ये ये ईश्वरं न भजन्ति प्रत्युत अवजानन्ति तदवज्ञां कुर्वन्ति ते स्थानात् भ्रष्टाः सन्तः अधो नरके पतन्तीत्यन्वयः। कीदृशम्। आत्मन. प्रभवो जन्म यस्मात्तम् साक्षात् आदिपितरमित्यर्थः। पुरुषम् अन्तर्यामिणं च। स्थानं वर्णाश्रमलक्षणम् ॥ ३ ॥ दूरे हरिकथा इति सत्संगहीनाः। दूरे अच्युतकीर्तना बधिरा इत्यर्थः। यद्वा। अच्युतस्य कीर्तनं येषां ते भक्ता येषां दूरे सन्ति ते। ये च स्त्रीशूद्रादयस्तेऽपि अप्यर्थे चकारः भवादृशैः अनुकम्प्याः शिक्षणीयाः। भवादृशाम् इत्यत्र कृत्यानाम् इति कर्तरि षष्ठी ॥ ४ ॥ विप्रादयः श्रौतेन जन्मना उपनयनपूर्वकवेदाध्ययनेन पदान्तिकं चरणप्राप्तियोग्यतां यद्यपि प्राप्ताः तथापि मुह्यन्ति कर्मफलेषु सज्जन्ते न च त्वां भजन्ति। कुतः आम्नायेषु वेदेषु ये अर्थवादास्ते मोहकतया विद्यन्ते येषां ते तथा ॥ ५ ॥ अकोविदाः कर्म बन्धकं न स्यात्तथाऽजानन्तः। न चाभिज्ञान् पृच्छन्ति। यतः स्तब्धा अनम्राः। तत्कुतः। यतो मूर्खाः अथापि पण्डिता वयमित्यभिमानवन्तः। अतो यथा माध्व्या श्रोत्रप्रियया गिरा अक्षय्यं ह वै 'अपाम सोम' इत्यादिकया उत्सुकाः सन्तः चाटुकान् प्रियशब्दान् अप्सरोभिः सह विहरिष्याम इत्यादीन् वदन्ति। यतो मूढा भ्रान्तचित्ताः ॥ ६ ॥ घोरो हिंसा-

---

१. विष्वक्सेनादिभिः।

रजसा घोरसंकल्पाः कामुका अहिमन्यवः । दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥७॥

वदन्ति तेऽन्योन्यमुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः ।
यजन्त्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ८ ॥

श्रिया विभूत्याऽभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा ।
जातस्मयेनान्धधियः सहेश्वरान् सतोऽवमन्यन्ति हरिप्रियान् खलाः ॥ ९ ॥

सर्वेषु शश्वत्तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्वरम् ।
वेदोपगीतं च न शृण्वतेऽबुधा मनोरथानां प्रवदन्ति वार्तया ॥१०॥

लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चोदना ।
व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥११॥

---

विषयकः । कामुका विषयलोलुपाः । मन्युः क्रोधः । पापाः पापिनः । पापानि सन्ति येषामिति । अर्श आद्यजन्तः । अच्युतेति षष्ठीसमासो बहुव्रीहिर्वा । विहसन्ति तेषु दोषानारोप्य निन्दन्ति ॥ ७ ॥ ते कामुकाः मैथुनप्रधानेषु गृहेषु परस्परम् आशिष एव इदमद्य मया लब्धम् इत्यादीन् वदन्ति । एवार्थे चकारः । कीदृशाः । उपासिताः स्त्रियो न तु वृद्धा यैस्ते । किं च न सृष्टा न संपादिता अन्नविधानदक्षिणा यथा स्यात्तथा अन्नदक्षिणारहितमित्यर्थः यज्ञं कुर्वन्ति । परं केवलं वृत्यै जीविकार्थं पशून् मारयन्ति । यतः । अतद्विदः वेदनिषिद्धहिंसानभिज्ञाः ॥ ८ ॥ श्र्यादिना यो जातस्मयः उत्पन्नगर्वस्तेन । खलाः सतो भक्तान् अवमन्यन्ते तदनादरं कुर्वन्ति । बाहुलकात्तङभावः । कथंभूतान् । हरिः प्रियो येषाम् । हरेः प्रियान् वा । सहेश्वरानित्युक्तेस्तदिष्टदेवानपि निन्दन्तीत्यर्थः । यतोऽन्धधियः नष्टविवेकाः । विभूत्या ऐश्वर्येण । अभिजनेन परिवारमदेन । दानेन रूपेण सौन्दर्येण कर्मणा यागेन च ॥ ९ ॥ सर्वेषु तनुभृत्सु जीवेषु शश्वत् सर्वदैव खं यथा आकाशमिव अवस्थितं 'सर्वं खल्विदं ब्रह्म' इति रूपेण वेदोपगीतं च भगवन्तं ते अबुधा न शृण्वन्तीत्यन्वयः । साहुलकात्तङ् । कुतः । यतस्ते मनोरथानां मैथुनमांसमद्यविषयाणां वार्तया प्रवदन्ति निवृत्तिपरं वेदं प्रवृत्तिपरं वर्णयन्ति । यद्वा । भगवत्कथायां प्रवर्तितायामपि तत्र विषयभोगवार्तां बलात्पातयन्तीत्यर्थः । केन रूपेण अवस्थितम् । आत्मानं व्यापकरूपेण । ईश्वरं नियन्तृरूपेण च । पुनः अभीष्टम् । अभितः सर्वतः इष्टाः पदार्थाः परमात्तम् भुक्तिमुक्तिदातारम् । अथापि न शृण्वतेऽतोऽबुधा एव ते ॥ १० ॥ ननु व्यवायादीनामपि विहितत्वान्निन्दा नोचितेत्याह—लोक इति । व्यवायो मैथुनम् आमिषमद्ययोर्मांसमदिरयोः सेवा भक्षणानि ताश्च जन्तोः प्राणिमात्रस्य नित्या रागत एव नित्यं प्राप्ताः । व्यवाये मैथुने स्वभावतो रागः । आमिषमद्ययोः कुलाचारप्राप्तत्वात् दुःसङ्गत्वाद्वा । अतस्तत्र तासु चोदना शास्त्रीयविधिर्नास्ति । अप्राप्तप्रापणस्यैव विधित्वात् । विधिरत्यन्तमप्राप्तौ इत्युक्तेः । तुनाऽरुचिर्दर्शिता । अस्य चर्चाऽपि मयावहा किमुत भक्षणवार्तेति । किन्तु पामराणामुच्छृङ्खलप्रवृत्तिवारणार्थं तेषु व्यवायादिषु विवाहादिभिः व्यवस्थितिः शास्त्रेण व्यवस्था क्रियते । स्त्रीमांसमद्येषु यद् यद् विना स्थातुं न शक्यते तत्र तत्रैवं कार्यम् । विवाहविषये एव व्यवायः कार्यः । ऋतौ भार्यामुपेयात् इत्युक्तेः । यज्ञ एवाऽऽमिषसेवा । हुतशेषं भक्षयेत् इत्युक्तेः । सौत्रामणियाग एव मद्यसेवा । सौत्रामण्यां सुराग्रहान् गृह्णाति इत्युक्तेः । वस्तुत आसु व्यवायामिषमद्यसेवासु विवृत्तिरेवेष्टा अभिमता शास्त्रकारैः निवृत्तिरेव शास्त्रस्य तात्पर्यं नान्यथेति । इयमेव निवृत्तिः शास्त्रे परिसंख्याविधिरुच्यत इति दिक् । सेव-सेवाशब्दौ घञन्ताद प्रत्ययान्तौ अत एव पुंस्त्रीलिङ्गयोः क्रमेण तेषु आसु इत्युभयथा निर्देशः ॥११॥ आत्मानं तु ते शृण्वन्त्येव नहि

धनं च धर्मैकफलं यतो वै ज्ञानं सविज्ञानमनुप्रशान्ति ।
गृहेषु युञ्जन्ति कलेवरस्य मृत्युं न पश्यन्ति दुरन्तवीर्यम् ।।१२।।

यद् घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ।
एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मम् ।।१३।।

ये त्वनेवंविदोऽसन्तः स्तब्धाः सदभिमानिनः ।
पशून् द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान् ।।१४।।

द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् । मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः ।।१५।।
ये कैवल्यमसम्प्राप्ता ये चातीताश्च मूढताम् । त्रैवर्गिका ह्यक्षणिका आत्मानं घातयन्ति ते ।।१६।।
एत आत्महनोऽशान्ता अज्ञाने ज्ञानमानिनः । सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ।।१७।।
हित्वाऽत्यायासरचिता गृहापत्यसुहृच्छ्रियः । तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ।।१८।।

---

धनस्यापि तेषां दुरुपयोगाज्ज्ञानशून्या एवेत्याह—धनमिति । धनं च धर्मैकप्रयोजनम् । यतो धर्मात् अनुभवसहितं शास्त्रीयं ज्ञानं भवति । कीदृक् तत् । अनु अनन्तरमेव प्रकृष्टा मोक्षलक्षणा शान्तिर्यस्मात्तत् । एवंभूतं धर्मार्थं धनं गृहेषु देहाद्यर्थम् उपयुञ्जन्ति मृत्युं च न पश्यन्ति । दुरन्तमप्रतिहतं वीर्यं यस्य तम् । कलेवरस्येति सम्बन्धसामान्यविवक्षया चतुर्थ्यर्थे षष्ठी ।। १२ ।। पूर्वोक्तव्यवस्थाया अपि रहस्यमाह—यदिति । यत् यस्मात् सुराया घ्राणेनैव भक्षो विहितो न तु पानम् । तथा पशोरपि आलभनं स्पर्शमात्रं विहितं न तु हिंसा प्राणवियोगानुकूलो व्यापारः । पामरा एते तथा कुर्वन्तोऽपि हिंसां न मन्यन्ते हं हो कीदृशं तेषां शास्त्रं कीदृशो तेषां बुद्धिरिति त एव जानन्तु अस्माभिस्तु तदर्थं केवलं हरिः प्रार्थ्यते किमधिकं मांसलोलुपानां शास्त्रविशेषपरिचयेनेति दिक् । एवं व्यवायोऽपि प्रजया पुत्रोत्पत्तिनिमित्तेनैव न रतिसुखार्थम् । इमं विशुद्धं हिंसादिशून्यम् ।। १३ ।। भगवद्विमुखानां दुर्गतिमाह—ये त्विति पञ्चभिः । अनेवंविदः हिंसादोषानभिज्ञा ये तु असन्तः पशून् हिंसन्ति तान् ते पशवोऽपि प्रेत्य परलोकं गत्वा तान् खादन्तीत्यन्वयः । स्तब्धा दयारहिताः । सदभिमानिनः स्वयमसन्तोऽपि वयं सन्त इत्यभिमानवन्तः । विस्रब्धाः फलश्रुतिषु विश्वस्ताः । 'स्रम्भु' विश्वासे इत्यस्मान्निष्ठा ।। १४ ।। ये पशून् द्रुह्यन्ति ते परकायेषु सुष्ठुतया आत्मानं व्यापकरूपेण स्थितं हरिमेव द्विषन्तस्तेन दोषेण अधो नरके पतन्तीत्यन्वयः । कथंभूताः । सानुबन्धे पुत्रादिसहितेऽस्मिन् मृतके देहे बद्धः स्नेहो यैस्ते तथाभूताः ।। १५ ।। ये कैवल्यं तत्त्वज्ञानमसंप्राप्ता ये च मूढतां जडतामतिकान्ता अतो नात्यन्तम् मूढाः न च तत्त्वज्ञाः किन्तु त्रिशंकुवन्मध्ये लम्बमानाः तिष्ठन्ति ते आत्मानं घातयन्ति नोद्धर्तुं शक्नुवन्तीत्यर्थः । कुतः । त्रैवर्गिकाः त्रिवर्गासक्ताः । अक्षणिका श्रवणाद्यवसररहिताश्च ।। १६ ।। एते आत्महनः आत्मघातिनः । कुतः । न कृतं कृत्यं कर्तुं योग्यमात्मचिन्तनं यैस्ते । तत्कुतः । अज्ञाने कर्मणि यागादौ इदमेव ज्ञानमित्यभिमानवन्तः । अथापि अशान्ताः । कुतः । सीदन्ति क्लिश्यन्ति । यतः कालेन ध्वस्ता नष्टाः मनोरथाः अप्सरोभिः सह विहरिष्याम इत्याद्या येषां ते । वै एवार्थे स च अज्ञाने इत्यत्रान्वेति । अत्र श्रुतिः प्रमाणम् । अदृढा एते प्लवा यज्ञरूपा एतान् श्रेयो येऽभिनन्दन्ति मूढाः । इति ।। १७ ।। अत्यायासेन अतिपरिश्रमेण रचिताः संपादिता या गृहापत्यसुहृच्छ्रियस्ता हित्वा तमो नरकं विशन्ति । यतो वासुदेवविमुखाः ।

## राजोवाच

कस्मिन् काले स भगवान् किं वर्णः कीदृशो नृभिः। नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम्

## करभाजन उवाच

कृतं त्रेता द्वापरं च कलिरित्येषु केशवः। नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥२०॥
कृते शुक्लश्चतुर्बाहुर्जटिलो बल्कलाम्बरः। कृष्णाजिनोपवीताक्षान् बिभ्रद् दण्डकमण्डलू ॥२१॥
मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः। यजन्ति तपसा देवं शमेन च दमेन च ॥२२॥
हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः। ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥२३॥
त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः। हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥२४॥
तं तदा मनुजा देवं सर्वदेवमयं हरिम्। यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥२५॥
विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः। वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते ॥२६॥
द्वापरे भगवाञ्छ्यामः पीतवासा निजायुधः। श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥२७॥
तं तदा पुरुषं मर्त्या महाराजोपलक्षणम्। यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ॥२८॥

---

अनिच्छन्तः तमःप्रवेशम् ॥ १८ ॥ तदेवं भक्तिरेव कर्तव्येति तत्र विशेषं पृच्छति कस्मिन्निति। चतुर्युगं लक्षयति। योऽनादिनिधनः स भगवान्। कीदृक् वर्णवान्। कीदृगाकारवान्। केन नाम्ना केन वा विधिना। इह अत्र यद् रहस्यं तदुच्यताम्। नृभिः साधारणैरपि ॥१९॥ नानाप्रकारा वर्णा अभिधा नामानि आकाराश्च यस्य सः। विधिना मार्गेण पूज्यते ॥ २० ॥ कृते कृतयुगे। शुक्ल इति शुक्लवर्णः शुक्लनामा च। कृष्णाजिनं कृष्णसारमृगचर्म। अक्षो जपमाला। एतेन ब्रह्मचारिवेषः सूचितः ॥ २१ ॥ तुर्वैलक्षण्ये। तदा कृतयुगे। शान्ताः इत्यधिकारिलक्षणम्। कुतः। निर्वैराः। तत्कुतः सुहृदः। तत्कुतः। समा समदर्शिनश्च[१]। तपसा ध्यानेन। शमो मनोनिग्रहः। दम इन्द्रियनिग्रहः ॥ २२ ॥ इति नामभिः। कस्मिन् काले इत्यस्योत्तरं कृत इति। किम् इत्यस्य शुक्ल इति। कीदृश इत्यस्य चतुर्बाहुरित्यादि। केन नाम्नेत्यस्य हंस इत्यादि। केन विधिनेत्यस्य तपसेत्यादि ॥ २३ ॥ असौ भगवान् रक्तनामा च। त्रिगुणा गुणत्रययुता मेखला कटिसूत्रं यस्य सः यज्ञमूर्तिः। पिङ्गकेशः। त्रयी वेदत्रयी तत्प्रतिपाद्य आत्मा मूर्तिर्यस्य सः। स्रुक् जुहूः स्रुवः खादिरो होमसाधनम् आदिना स्फ्याद्यग्रहस्तैरुपलक्ष्यते ज्ञायते तथा यज्ञरूपोऽयमिति ॥ २४ ॥ तदा त्रेतायाम्। सर्वदेवमयं सर्वदेवप्रधानम् त्रय्या विद्यया वेदत्रयोक्तकर्मभिः ॥ २५ ॥ प्रश्निनाम्नी सुतपसः प्रजापतेर्भार्या तत्पुत्रः। सर्वे देवा यस्मिन्। उरुर्महान् क्रमः पराक्रमो यस्य। वर्षति कामानिति वृषः आकम्पयति दुष्टानित्याकपिः स चासौ स च। जयति सर्वमिति जयः। उरुः बहुधा शास्त्रेषु गीयते। इति नामभिः ईर्यते कथ्यते ॥ २६ ॥ श्यामो वर्णस्तन्नामा च। निजानि सुदर्शनादीनि आयुधानि यस्य। श्रीवत्सः भगवते दक्षिणवक्षःस्थले प्रदक्षिणावर्तरूपा रोमावलिः। अङ्कैर्देहिकैश्चिह्नैः। लक्षणैर्बाह्यैः कौस्तुभादिभिः ॥२७॥ तदा द्वापरे। तं हरिम्। महाराजोपलक्षणानि छत्रचामरादीनि तानि विद्यन्तेऽस्येति तथा। मत्वर्थीयोऽच् प्रत्ययः। तन्त्रम् आगमः। परमीश्वरं ज्ञातुमनुभवितुमिच्छवः। हे नृप! हे निमे ॥ २८ ॥ चतुर्व्यूहतां दर्शयति नमस्त

---

१. इति यथेष्टं हेतुहेतुमद्भवः।

नमस्ते वासुदेवाय नमः संकर्षणाय च। प्रद्युम्नायाऽनरुद्धाय तुभ्यं भगवते नमः ॥२९॥
नारायणाय ऋषये पुरुषाय महात्मने। विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥३०॥
इति द्वापर उर्वीश स्तुवन्ति जगदीश्वरम्। नानातन्त्रविधानेन कलावपि यथा शृणु ॥३१॥
कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम्। यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥३२॥

ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्।
भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् ॥३३॥
त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम्।
मायामृगं दयितयेप्सितमन्वधावद् वन्दे महापुरुष ते चरणारविन्दम् ॥३४॥

एवं युगानुरूपाभ्यां भगवान् युगवर्तिभिः। मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः ॥३५॥
कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः। यत्र संकीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥३६॥

---

इति। वासुदेवाय चित्ताधिष्ठात्रे। संकर्षणाय अहंकाराधिष्ठात्रे। प्रद्युम्नाय बुद्ध्यधिष्ठात्रे। अनिरुद्धाय मनोऽधिष्ठात्रे इत्यन्तःकरणचतुष्टयाधिष्ठातृभ्यो नमः ॥ २९ ॥ नारा जलानि अयनमाश्रयो यस्य। ऋषये सर्वज्ञाय। पुरुषाय अन्तर्यामिणे। महात्मनेऽपरिच्छिन्नाय। अतएव विश्वेषामीश्वराय। विश्वरूपाय। सर्वभूतानामात्मने स्वरूपाय ॥ ३० ॥ हे उर्वीश हे राजन् निमे! इतीत्थम्। कलौ नानातन्त्रोक्तप्रकारेण यथा यजन्ति तं शृणु ॥ ३१ ॥ कृष्णवर्णत्वेऽपि त्विषा कान्त्या अकृष्णम् इन्द्रनीलमणिवद् देदीप्यमानम्। यद्वा। त्विषा निजतेजसा आकर्षति वशीकरोति ब्रह्मेन्द्रादीनिति त्विषाकृष्णो नन्दनन्दनस्तम्। आङ् पूर्वकात्कृषेर्नक् सन्दर्भस्तु कृष्णं वर्णयति उपदिशतीति तथा त्विषा कान्त्या योऽकृष्णो गौरस्तमित्याह। अङ्गानि हृदयादीनि उपाङ्गानि कौस्तुभादीनि अस्त्राणि सुदर्शनादीनि पार्षदाः सुनन्दादयः तत्सहितम्। प्रायैः प्रधानैः। प्रायो बाहुल्यप्राधान्यामरणानशनेषु च। इति धरणिः। यज्ञैः पूजनैः सुमेधसो विचारशीलाः हीति प्रसिद्धम् ॥ ३२ ॥ हे प्रणतपाल। हे महापुरुष। ते चरणारविन्दं वन्दे। कथंभूतम्। सदा ध्येयं ध्यानयोग्यम् नात्र देशकालादिनियमः। ध्येयत्वे सप्त हेतवः। तत्र सदेति पदं प्रत्येकमपि संबध्यते। सदा परिभवघ्नम्। परिवारादिभिर्जायमानं परिभवं हन्तीति। किञ्च सदा अभीष्टदोह मनोरथपूरकम्। सदा तीर्थास्पदं गंगोद्गमस्थानत्वेन परमपावनम्। सदाचारमाह शिवविरिंचाभ्यां स्तुतम्। सुखसेव्यत्वमाह-शरण्यमाश्रययोग्यम् भक्तवात्सल्यमाह-यस्य कस्यापि भृत्यमात्रस्यार्तिहंतृ। न केवलमागन्तुकज्वरादिपीडाहन्तृ। किन्तु भवाब्धेः पोतवत्तारकं च ॥ ३३ ॥ त्रेतास्थो राम एव कृष्णावतारतामापन्न इति स्मृतेः श्रीरामं स्तौति-त्यक्त्वेति। पित्राज्ञापालनात् धर्मिष्ठो यत् यो रामः अन्यैः सुदुस्त्यजा सुरैरीप्सिता च या राज्यलक्ष्मीस्तां त्यक्त्वा आर्यस्य पितुर्वचसा अरण्यमगात्। सीतया ईप्सितं मायामृगं च योऽन्वधावत् तस्य इत्यन्वयः। यद्वा हे धर्मिष्ठेति संबोधनम्। प्लुतत्वात्सन्धिर्न। यत् अरण्यमगात् यच्च मायाभृगमन्वधावत् तत्ते चरणारविन्दमित्यन्वयः। अन्यत्समानम्। असुभ्यः प्राणेभ्योऽपि दुस्त्यजेति श्लेषोऽपि व्याख्येयः ॥ ३४ ॥ एवं युगवर्तिभिः तत्तद्युग जातैर्मनुजैः युगानुरूपाभ्यां नामरूपाभ्यामिति शेषः हरिः पूज्यते।[1] कथंभूतः। श्रेयसां सर्वपुरुषार्थाना मीश्वरो दाता ॥ ३५ ॥ आर्या वृद्धाः यतो गुणज्ञाः कलेर्गुणान् जानन्ति। तत्कुतः। सारभागिनः मुख्यगुण-

---

१. वेदतन्त्रोक्त प्रकाराभ्यां वा।

न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह । यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥३७॥
कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम् । कलौ खलु भविष्यन्ति नारायणपरायणाः ॥३८॥
क्वचित् क्वचिन्महाराज द्रविडेषु च भूरिशः । ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥३९॥
कावेरी च महापुण्या प्रतीची च महानदी । ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ।
प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ॥४०॥

देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम् ॥४१॥
स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म यच्चोपतितं कथंचिद् धुनोति सर्वं हृदि संनिविष्टः ॥४२॥

नारद उवाच

धर्मान् भागवतानित्थं श्रुत्वाथ मिथिलेश्वरः । जायन्तेयान् मुनीन् प्रीतः सोपाध्यायो ह्यपूजयत् ४३
ततोऽन्तर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः । राजा धर्मानुपातिष्ठन्नवाप परमां गतिम् ॥४४॥

---

ग्राहिणः[1] । समाजयन्ति प्रशंसन्ति । यत्र कलौ । स्वार्थः स्वाभिमतोऽर्थः ॥ ३६ ॥ इह संसारे देहाध्यासवताम् । अतः संकीर्तनादन्यः परमः लाभो न । यतः संकीर्तनात् । परमां शान्तिं ज्ञानलक्षणाम् बिन्दते । ततः संसृतिर्जन्म मरणरूपा ॥ ३७ ॥ कृतेति सार्द्धम् । कृतं कृतयुगम् । संभवं जन्म । कलौ क्वचित् क्वचित् देशेषु भक्ता भविष्यन्ति द्रविणेषु च भूरिशो भविष्यन्तीत्यन्वयः चकारात् गौडान्ध्रयोः ॥ ३८ ॥ यत्र दविडेषु । प्रतीची महानदी सा च नाम्ना वेत्रवती वराहक्षेत्रात्सह्यगिरिं भित्त्वा पश्चिमसमुद्रं स्यन्दमाना वर्तते ॥ ३९ ॥ तासां नदीनाम् । प्राय इति । तेषु भक्तेष्वपराधिनोविनेत्यर्थः । अमलाशया निर्मलान्तःकरणाः सन्तः ॥४०॥ भक्तस्य विधिनिषेधातीतत्वेन कृतार्थतामाह देवेति । यः कर्तं कृत्यं भेदमहङ्कारं वा परिहृत्य त्यक्त्वा मुकुन्दं शरणं गतः स चायं देवादोनाम् ऋणी किंकरश्च नास्तीत्यन्वयः । आप्ता पोष्याः कुटुम्बिनः । इतरे देवादयः । पञ्चयज्ञदेवताः । क्रियते इति कर्तम् । करोते रौणादिकस्तप् प्रत्ययः । यद्वा । कृतीं छेदने इत्यस्माद् घञ् ततो णिजन्तादच् ॥४१॥ विधेर्निवृत्तिमुक्त्वा निषिद्धकर्मणोऽपि प्रायश्चित्ताभावमाह स्वेति । स्वस्य भगवतः । यद्वा । सुष्ठु सुन्दरः ओ वासुदेवस्तस्य पादमूलं भजतः । कुतः । त्यक्तोऽन्येषु विषयेषु भावः प्रेम येन । अत एव प्रियस्य भक्तस्य निषिद्धहिंसादिकर्मणि यद्यपि प्रवृत्तिर्न संभवति अथापि कथंचित् बलवददृष्टवशात् यच्च विकर्म उत्पतितं उपस्थितं भवेत् तत्सर्वं हरिर्धुनोति नाशयतीत्यन्वयः । कुतः । हृदि सन्निविष्टोपि तद्भक्त्या तत्राविर्भूतः सन् बन्धनभूतरजस्तमोवासना नाशयतीति सूचनार्थं सन्नीत्युपसर्गद्वयम् । ननु यम एतन्न सहेत तत्राह परेशः । परेशां ब्रह्मादीनामपीशो नियन्ता सः किमुत नियम्यस्य यमस्य तद्वचवस्थोल्लङ्घने सामर्थ्यमिति भावः । स्वभावत एव भक्तानां सर्वदोषान् हरतीति सूचनार्थं हरिरित्युक्तम् ॥४२॥ इत्थम् अथ मङ्गलमयान् धर्मानित्यत्रान्वेति । जयन्ती ऋषभपत्नी तत्पुत्रान् जायन्तेयान् नवसिद्धेश्वरान् अपूजयत् सोपाध्याय इत्युक्तेस्तत्संगिनामपि कृतार्थता व्यञ्जिता ॥४३॥ ततः पूजनानन्तरम् । सिद्धाः कविप्रभृतयः । राजा निमिः । आतिष्ठिन् अनुतिष्ठन् ।

---

१. कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः । कीर्तनादेव कृष्णस्य मुक्तसंगः परं व्रजेत् ॥

त्वमप्येतान् महाभाग धर्मान् भागवताञ्छ्रुतान् । आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ।

युवयोः खलु दम्पत्योर्यशसा पूरितं जगत् । पुत्रतामगमद् यद् वां भगवानीश्वरो हरिः ॥४६॥

दर्शनालिङ्गनालापैः शयनासनभोजनैः । आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ॥४७॥

वैरेण यं नृपतयः शिशुपालपौण्ड्रशाल्वादयो गतिविलासविलोकनाद्यैः ।

ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम् ॥४८॥

माऽपत्यबुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे । मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये ॥४९॥

भूभारासुरराजन्यहन्तवे गुप्तये सताम् । अवतीर्णस्य निर्वृत्यै यशो लोके वितन्यते ॥५०॥

श्रीशुक उवाच

एतच्छ्रुत्वा महाभागो वसुदेवोऽतिविस्मितः । देवकी च महाभागा जहतुर्मोहमात्मनः ॥५१॥

इतिहासमिमं पुण्यं धारयेद् यः समाहितः । स विधूयेह शमलं ब्रह्मभूयाय कल्पते ॥५२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥

---

परमां गतिं वैकुण्ठम् ॥ ४४ ॥ त्वमपि श्रद्धया धर्मान् आस्थितः अनुतिष्ठन् निःसंगः निष्कामो भूत्वा परं मोक्षं यास्यसे प्राप्स्यसि । बाहुलकात्तङ् ॥ ४५ ॥ युवयोः देवकीवसुदेवयोः । वां युवयोः । पुत्रतां पुत्रभावम् । यत् यस्मात् ॥ ४६ ॥ मत्पुत्रोऽयमिति स्नेहं प्रकुर्वतो प्रकुर्वद्भ्यां वां युवाभ्यामात्मा पावितः शोधितः । यद्वा । दर्शनादिभिः कर्तृभिः वां युवयोः । अतो भवतोर्नान्यत्किंचित्कर्तव्यमवशिष्यते इति भावः ॥ ४७ ॥ शिशुपाला-दयो नृपतयः शयनासनादौ वैरेणापि यं ध्यायन्तः तत्सारूप्यं प्रापुः । अनुरक्तधियां तत्साम्यं भवतीति किं पुनर्वक्तव्यम् । कीदृशाः । गत्यादिभिः आकृता तदाकाराकारिता धीः चित्तवृत्तिर्येषां ते तादृशाः । आदिना कंसादयः । आद्येन नर्मादयः । पुनरादिना भोजनादिग्रहः । पौण्ड्रः पौण्ड्रकः मिथ्यावासुदेवः ॥ ४८ ॥ अपत्यबुद्धिं पुत्रसामान्यमतिम् मा कृथाः मा कुरु । मूले दबाहुलकादट् । माया कृपा । माया दम्भे कृपायां च इति कोशः । गूढं दुर्ज्ञेयमैश्वर्यं यस्य तस्मिन् । केचित्तु अपत्यवदेन या बुद्धिस्तां मा कृथा किन्तु मदपत्यमेवाय-मिति बुद्धिं कुरु ॥ ४९ ॥ भुवो भारभूता ये असुरराजन्यास्तेषां हन्तवे तान् हन्तुम् । बाहुलकात् षष्ठीसमासः तुमर्थे तवे प्रत्ययश्च । सतां रक्षणाय निर्वृत्यै मोक्षाय च अवतीर्णस्य कृष्णस्य यशो वितन्यते । कर्मकर्तरि लट् ॥ ५० ॥ एतत् नारदोक्तम् आत्मनः संबन्धि मोहमज्ञानम् जहतुः तत्यजतुः ॥ ५१ ॥ इमं पूर्वोक्तम् । पुण्यं पुण्यजनकम् । पुण्यमस्ति अस्मिन्नित्यर्थे मत्वर्थीयोऽच् । स इह अस्मिन्नेव जन्मनि शमलं मोहं विधूय दूरीकृत्य ब्रह्मत्वाय ब्रह्मभावाय कल्पते समर्थो भवति जीवन्मुक्तः स्यादिति भावः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे गूढार्थदीपिन्यां नारदवसुदेवसंवादे नवसिद्धेश्वर गमनं नाम पञ्चमोऽध्यायः ॥

## अथ षष्ठोऽध्यायः

श्रीशुक उवाच

अथ ब्रह्माऽऽत्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् । भवश्च भूतभव्येशो ययौ भूतगणैर्वृतः ॥१॥

इन्द्रो मरुद्भिर्भगवानादित्या वसवोऽश्विनौ । ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः ॥२॥

गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः । ऋषयः पितरश्चैव सविद्याधरकिन्नराः ॥३॥

द्वारकामुपसंजग्मुः सर्वे कृष्णदिदृक्षवः । वपुषा येन भगवान् नरलोकमनोरमः ।
यशो वितेने लोकेषु सर्वलोकमलापहम् ॥ ४ ॥

तस्यां विभ्राजमानायां समृद्धायां महर्द्धिभिः । व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम् ॥ ५ ॥

स्वर्गोद्यानोपगैर्माल्यैश्छादयन्तो यदूत्तमम् । गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ॥ ६ ॥

देवा ऊचुः

नताः स्म ते नाथ पदारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः ।
यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ॥ ७ ॥

---

वैकुण्ठप्रयाणार्थं षष्ठे कृष्णः स्तुतः सुरैः ।
नय मामपि तत्रैवेत्युद्धवेनापि याचितः ॥ १ ॥

इतः परमतिविस्तरेणात्मविद्यां निरूपयितुं तदुपक्रममाह-अथेति । अथ नारदोपदेशानन्तरम् । ब्रह्मा अभ्यगात् द्वारकामिति चतुर्थेनान्वेति । कथंभूतः । आत्मनो मनसो जातैः सनकादिभिः देवैः इन्द्रादिभिः प्रजेशैर्मरीच्यादिभिश्च आवृतः । भवश्च भवोऽपि ययौ द्वारकाम् । कथंभूतः । भूतानां पिशाचादीनां भव्यस्य कल्याणस्य ईशो दाता ॥१॥ इन्द्र इति सार्धं युग्मकम् । मरुद्भिर्मरुद्गणैः सह । आदित्या द्वादश । वसवोऽष्टौ । अश्विनोकुमारौ । ऋभुसंज्ञकदेवाः । रुद्रा एकादश । इन्द्रादयः सर्वेऽपि कृष्णं दिदृक्षवः द्वारकामुपसंजग्मुरित्यन्वयः । कृष्णेति लुप्तद्वितीयान्तं पृथक् पदम् । सुपां सुलुक् इत्यनुशासनात् ॥ २ ॥ ३ ॥ येन वपुषा भगवान् सर्वलोकेषु यशो वितेने तदतिसुन्दरं वपुर्दिदृक्षव उपसंजग्मुरित्यनुषङ्गः । मनोरमः चित्ताकर्षकः सन् । मलमविद्यावासनादि । वपुषः सकाशाज्जीवस्य यथा भेदस्तथेश्वरस्य नेति सूचनार्थं येन वपुषा वितेने तत्कृष्णमित्यन्वयः । अभेदोक्तिः । 'देहदेहिविभागोऽयं नेश्वरे विद्यते क्वचित्' इत्युक्तेः ॥ ४ ॥ दिव्यर्द्धिभिः पूर्णायां तस्यां द्वारकायां ते कृष्णं विशेषेण सतृष्णदृष्टयेत्यर्थः अचक्षत अपश्यन्निति व्युपसर्गस्य स्वारस्यम् । कथंभूतम् । दृश्यत इति दर्शनं रूपम् अद्भुतं स्वस्यापि विस्मापनं दर्शनं श्रीविग्रहो यस्य तम् ॥ ५ ॥ स्वर्गोद्याने उपगच्छन्तीति तैः नन्दनवनस्थैः माल्यैः पुष्पैः यदूत्तमं श्रीकृष्णमाच्छादयन्तस्तं गीर्भिः तुष्टुवुः । चित्राणि चित्रकाव्योक्तशृङ्खलाबन्धग्रथितानि पदानि अर्थाश्च यासु ताभिः ॥ ६ ॥ एकादशभिः स्तुवन्ति-नताः स्मेति । स्मेति विस्मये । हे नाथ ! बुद्ध्यादिभिस्ते पदारविन्दं वयं नताः स्म । किं तत् । कर्ममयात् दृढपाशात् मुमुक्षुभिः अन्तर्हृदि यत्केवलं चिन्त्यते न तु दृश्यते तत् । अहोभाग्यमित्यर्थः । यद्वा । कर्ममया उरवो बहवः पाशा यस्मिंस्तस्मात् संसारादित्यर्थः । बुद्ध्या हृदयेन तदधिष्ठानत्वात् । इन्द्रियैः दृग्भ्यां दोर्भ्यां पद्भ्यां चेति । प्राणेन प्राणवता देहेनेति जान्वादिग्रहः । मनसा चिन्तनेन । न च सा उच्चारणे नेत्यष्टांग प्रणामो वर्णितः । यथाहुः-दोर्भ्यां पदाभ्यां जानुभ्यामुरसा शिरसा दृशा । मनसा वचसा चेति प्रणामोऽष्टांग ईरितः

त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः ।
नैतैर्भवानजित कर्मभिरज्यते बै यत् स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥ ८ ॥
शुद्धिर्नृणां न तु तथेड्य दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः ।
सत्त्वात्मनामृषभ ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसम्भृतया यथा स्यात् ॥ ९ ॥
स्यान्नस्तवाङ्घ्रिरशुभाशयधूमकेतुः क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः ।
यः सात्वतैः समविभूतय आत्मवद्भिर्व्यूहेऽर्चितः सवनशः स्वरतिक्रमाय ॥१०॥
यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा ।
अध्यात्मयोग उत योगिभिरात्ममायां जिज्ञासुभिः परमभागवतैः परीष्टः ॥११॥

---

ईरितः इति । अस्मिन् पद्येऽन्तिमवर्णतकारस्य अग्रिमपद्याद्यतकारेण शृङ्खलाबन्धः ॥ ७ ॥ ननु ममापि कर्मकरणात् किमस्य चिन्तनेनेति तत्राह-त्वमित्ति । न केनापि भक्तादतिरिक्तेन जितः इत्यजितः तत्संबुद्धौ हे अजित त्वं मायया इदं व्यक्तं जगत् सृजसि पासि संहरसि च । तदप्यात्मन्येव अधिष्ठाने न पृथक् । दुर्विभाव्यं मनसाऽप्यवितर्क्यम् । तस्या मायाया गुणेषु नियन्तृत्वेन स्थितः सन् । अत एव तैः सृष्ट्यादिकर्मभिर्भवान् नाज्यते न लिप्यते । कुतः । अनवद्यः शुद्धः । यत् यस्मात् अव्यवहिते उपाध्यावरणशून्ये स्वे स्वस्वरूपभूते सुखेऽभिरतः अतः कर्म कुर्वन्नपि त्वमात्माराम एवेति कृत्वा चिन्त्यसे इति सुष्ठूक्तम् । अत्र पद्यान्तेऽनवद्य इत्यस्य शुद्धार्थतामादाय यकारशकारयोस्तालुस्थानीयत्वेन साम्याद्वा अग्रिमपद्येन शृङ्खलाबन्धः ॥ ८ ॥ ननु चेदात्मारामस्तर्हि तस्य किं कर्मकरणेन तत्राहुः—शुद्धिरिति । हे ईड्य स्तुतियोग्य । कुतः । सत्त्वात्मनां शुद्धसत्त्वावताराणां मध्ये हे ऋषभ ! श्रेष्ठ भगवन् । ते तव यशसि चरित्रे प्रवृद्धा या सच्छ्रद्धा तया नृणां यथा शुद्धिः स्यात् तथा विद्यादिभिर्न स्यादित्यन्वयः । विद्या उपासना । दुराशयानां विषयदूषितान्तःकरणानाम् । कीदृश्या । श्रवणेन कथाश्रवणेन संभृतया परिपुष्टया । अत्र पद्यान्ते स्यादिति अग्रेऽपि तथैव । एतेन परमपावनयशोविस्ताराय ते कर्माचरणं नान्यथेति ॥ ९ ॥ हे भगवन् । तव अङ्घ्रिः नोऽस्माकम् अशुभवासनानां धूमकेतुः अग्निरिव तद्दाहकः स्यात् । धूमःकेतुरुपलक्षको यस्य सः । कथंभूतः । यः क्षेमाय मोक्षाय मुनिभिः मुमुक्षुभिः प्रेमार्द्रहृदा उह्यमानः चिन्त्यमानो भवति । किं च यः सात्वतैः साधकभक्तैः समविभूतये त्वत्समानैश्वर्याय [1]वासुदेवादिचतुर्व्यूहेऽर्चितो भवति । तेष्वेव कैश्चित् आत्मवद्भिः जितमनस्कैः एकान्तिभिः भक्तैः स्वरतिक्रमाय स्वर्गमतिक्रम्य वैकुण्ठप्राप्तये सवनशःत्रिकालं योऽर्चितो भवति सोऽङ्घ्रिरित्यन्वयः । अत्रान्तिमो यकारो एवमग्रेऽपि यकारः ॥ १० ॥ किञ्च हे ईश ! प्रयतपाणिभि र्बद्धाञ्जलिभिर्हविर्गृहीत्वा अध्वराग्नौ आहवनीयादौ याज्ञिकैर्यश्चिन्त्यते । केन । वेदत्रय्या निरुक्तेन विधिना इन्द्रादिरूपेणैव 'स चेन्द्रः स बृहस्पतिः इत्यादिश्रुतेः । किञ्च अध्यात्मयोगे आत्मज्ञाननिमित्तम् आत्ममायां त्वन्मायां जिज्ञासुभिः योगिभिरपि यश्चिन्त्यते । अप्यर्थे उतशब्दः । यद्वा । आत्मनस्तव या माया अणिमादिसिद्धिस्ताम् । किं च परमभागवतैर्नित्यमुक्तैरपि यः परितः सर्वतः इष्टः पूजितो भवति स तवाङ्घ्रिर्नोऽशुभाशयधूमकेतुः स्यादिति पूर्वेणान्वयः । आत्मनीति अध्यात्मं तत्र योगे चित्तवृत्तिनिरोधात्मके वा । निमित्ते सप्तमीयम् । अग्नयस्त्रयः आहवनीयाग्निः गार्हपत्याग्निः दक्षिणाग्निरिति भेदात् ॥ ११ ॥

---

१. वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपे चतुर्व्यूहे ।

पर्युष्टया तव विभो वनमालयेयं संस्पर्धिनी भगवती प्रतिपत्निवच्छ्रीः ।
यः सुप्रणीतममुयार्हणमाददन्नो भूयात् सदाङ्घ्रिरशुभाशयधूमकेतुः ॥१२॥
केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः ।
स्वर्गाय साधुषु खलेष्वितराय भूमन् पादः पुनातु भगवन् भजतामघं नः ॥१३॥
नस्योतगाव इव यस्य वशे भवन्ति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः ।
कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥१४॥
अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ।
सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् ॥१५॥
त्वत्तः पुमान् समधिगम्य ययाऽस्य वीर्यं धत्ते महान्तमिव गर्भममोघवीर्यः ।
सोऽयं तयानुगत आत्मन आण्डकोशं हैमं ससर्ज बहिरावरणैरुपेतम् ॥१६॥

---

हे विभो ! अहं यत्र वसामि तत्रैव वक्षसि पर्युषितापीयं वनमाला वसतीति तया सह श्रीः सपत्नीवत् स्पर्धमाना भवति तामनादृत्य यो भवान् अमुया मालया सह भक्तैरर्पितेयमिति प्रीत्या सुप्रणीतं सुष्ठु समर्पितमर्हणं पूजामाददत् स्वीकृतवान् यो भवान् तस्य तवाङ्घ्रिः नोऽशुभाशयधूमकेतुः सदा भूयात् । यद्यपि मालाया दिव्यत्वात् न तत्र पर्युषितत्वं न वा प्रेष्ठभूषणत्वात् लक्ष्म्या अपि स्पर्धा तत्र घटते अथापि प्रेमावेशादुत्प्रेक्षामुखेन भक्तमनोरञ्जनी लीलेयमित्यनुसन्धेयम् । पर्युष्टेति । यद्यपि 'वस' निवासे धातुर्निष्ठायां सेट् अथापि बाहुलकादनिट् । यद्वा 'वश' कान्तावित्यस्मात् । परितः सर्वाङ्गे उष्टया कान्तया शोभितयेत्यर्थः ॥ १२ ॥ हे भूमन् हे अपरिच्छिन्नमहिमन् ते पादः भजतां भक्तानाम् नः अघं पापं दुःखं वा पुनातु शोधयतु निवर्तयतु । कथंभूतः । त्रिभिर्विक्रमैः पादविन्यासैर्युतः । बलिबन्धने प्रथमविक्रमे पातालं गतः । द्वितीयविक्रमे सत्यलोकं गतः विजयध्वज इव जातः । तृतीयविक्रमे बलिशिरसि जातः । त्रिषु लोकेषु पतन्ती गंगारूपा पताका यस्य । मन्दाकिनीति दिवि भोगवतीति चाधो गंगेति चेह चरणाम्बु पुनाति विश्वम् इत्युक्तेः । किंच यः साधुषु स्वर्गाय सुखाय खलेषु इतराय नरकाय च भवति स पाद इत्यन्वयः । तथा असुरदेवचम्वोः उभयसेनयोः क्रमेण भयकरोऽभयकरश्च । इतरायेति । बाहुलकात्स्मै इत्यादेशो न ॥१३॥ मिथुरित्यव्ययं मिथोऽर्थे । ते चरणः नः अस्माकं शं सुखं तनोतु । परस्परं युद्धादिभिरर्द्यमानाः पीडयमाना तनुभृतो दिव्य शरीरधारिणो ब्रह्मादयोऽपि यस्य वशे भवन्ति ननु ते स्वतन्त्राः । के इव । नसि नासिकायाम् ओताः प्रोताः बद्धा बलीवर्दा इव । कुतः । कालस्य चालयितुः । तदेव कुतः । उभयोरपि परस्य । तस्य ते पाद इत्यन्वयः ॥ १४ ॥ हे भगवन् । त्वम् अस्य जगतः उदयादीनां हेतुरसि । कुतः । अव्यक्तं प्रकृतिः जीवः पुरुषः महत्तत्त्वं च तेषामपि कालं नियन्तारं त्वामाहुः । किं च अयं संवत्सरात्मको यः कालः सोऽपि त्वमेव । अतस्त्वमुत्तमपूरुष उच्यते इत्यर्थः । कीदृशः कालः । त्रिणाभिः त्रीणि चातुर्मास्यानि नाभयोऽवस्था यस्य । अखिलस्य जगतः संहारे प्रवृत्तः । गभीररयोऽलक्षितवेगः । उदयः सृष्टिः स्थितिः पालनम् । संयमः संहारः ॥१५॥ केन प्रकारेण सृष्टयादिहेतुस्तत्राह-त्वत्त इति । पुमान् पुरुषः त्वत्त वीर्यं शक्तिं समधिगम्य प्राप्य यया मायया सह यस्यां मायायामित्यर्थः महान्तं महत्तत्त्वं धत्ते उत्पादयामास । कमिव । अस्य विश्वस्य गर्भमिव बीजमिव । सोऽयं महान् तयैव मायया अनुगतो व्याप्तः सन् आत्मनः सकाशात् अण्डकोषं ससर्ज । कथंभूतम् । हैमं प्रकाशबहुलम् । कुतः । बहिरावणैः बाह्यैरष्टावरणैरुपेतं च । तत्त्वानां पञ्च महदहङ्कारेयोर्द्वे प्रकृतेरनन्तमित्येवमष्टावरणानि ॥ १६ ॥ ननु

तत्तस्स्थुशश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् ।
अर्थाञ्जुषन्नपि हृषीकपते न लिप्तो येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म ॥१७॥
स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न विभ्व्यः ॥१८॥
विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हन्तुम् ।
आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥१९॥

बादरायणिरुवाच

इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम् । अभ्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः ॥२०॥

ब्रह्मोवाच

भूमेर्भारावताराय पुरा विज्ञापितः प्रभो । त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितम् ॥२१॥
धर्मश्च स्थापितः सत्सु सत्यसंधेषु वै त्वया । कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥२२॥

---

ममेदमीश्वरत्वं कुतो ज्ञातं तत्राह—तत् तस्मात् भवान् तस्थुषःस्थावरस्य जङ्गमस्य च अधीशो नियन्ता अस्ति । कुतः । यत् यस्मात् मायया उत्था उत्पादिता या गुणविक्रिया इन्द्रियवृत्तिस्तया उपनीतान् समीपं प्रापितान् अर्थात् विषयान् जुषमाणः सेवमानोऽपित्वं न लिप्त. नासक्तः अतः । बाहुलकाच्छत् प्रत्ययः । हे हृषीकपते इन्द्रियनियन्तः । ये तु अन्ये जीवा योगिनो वा स्वतः परिहृतात् योगवलात् त्यक्तादपि विषयसेवनात् बिभ्यति । ते च वासनामात्रेण बध्यन्त इत्यर्थः । स्मेत्याश्चार्ये ॥१७॥ अलिप्तत्वं दर्शयन्ति-स्मायेति । अनङ्गस्य वाणैरिव संमोहनै अनङ्गवाणरूपैर्वा करणैः कामकलाभिः षोडशसहस्रमपि पत्न्यः यस्येन्द्रियं मनः विमथितुं क्षोभयितुं न विभ्व्यः न समर्था स भवान् न लिप्तः इति पूर्वेणान्वयः । क्रियते वशीक्रियते नायक एभिरिति करणानि तैः । किमात्मकैः । स्मायावलोक ईषद्धास्यपूर्वको योऽवलोकस्तस्य लवः कटाक्षस्तेन दर्शितो यो भावोऽभिप्रायः रमणरूपस्तेन मनोहारि यद् भ्रूमण्डलं तेन प्रहिताः प्रयुक्ता ये सौरतमन्त्राः सुरतसंवन्धिगुप्तभाषणानि ते च ते शौण्डाः प्रगल्माश्च तैः तथोक्तैः । विमथितुमित्यत्र विशब्देन ब्रजसुन्दर्यइव विशेषेण मथितुं न किन्तु यावांस्तत्र प्रेमांशस्तावदेवेत्यर्थः ॥१८॥ यद्यपि त्वमलिप्तस्तथापि तव कथामृतं चरणामृतं च संसारबन्धान्मोचयत्येवेत्याहुः-विभ्व्य इति । तव अमृतरूपा या कथास्ता एव उदवहाः कथाकीर्तिनद्यः पादावनेजनसरितः पादप्रक्षालितजलरूपाः श्रीगंगाद्याः त्रिलोक्याः पापानि हन्तुं समर्थाः । यतस्ते तीर्थद्वयं शुचिसदः निर्मलचित्ता उपस्पृशन्ति सेवन्ते । केन प्रकारेण । गुरोरुच्चारणमनु पश्चात् श्रूयते इत्यनुश्रवो वेदस्तत्र भवम् आनुश्रवं कथातीर्थं श्रुतिभिः श्रवणेन्द्रियैः अङ्घ्रिजं गंगात्मकं च अंगसंगैः । शुचये आत्मविशुद्धये सीदन्ति क्लिश्यन्ति ये ते शुचिषदः । उदकं वहन्तीति उदवहाः । उदकस्योदः संज्ञायाम् इत्युदादेशः ॥ १९ ॥ बादरायणिः । बदरीणां समूहो बादरं बदरिकाश्रमस्तदेव अयनं निवासस्थानं यस्य स वादरायणः श्रीव्यासः तस्यापत्यं पुमान् वादरायणिः श्रीशुक उवाचेत्यर्थः । सेशः सशिवः शतधृतिः ब्रह्मा विबुधैः सह एवं हरिभष्टुत्य प्रणम्य च अभ्यभाषतेत्यन्वयः । अम्बरं गगनमाश्रित इत्युक्तेर्नहि देवा भुवं स्पृशन्तीति नियमो दर्शितः । अभिष्टूयेति । दीर्घोऽपि वैदिको धातुः ॥ २० ॥ हे अशेषात्मन् सर्वात्मन् । अस्माभिस्त्वं विज्ञापितोऽभूः । तत् अस्मद्विज्ञापितं यथा तत् तथैव संपादितमित्यन्वयः ॥ २१ ॥ सत्यसंधेषु सत्यप्रतिज्ञेषु । विक्षिप्ता विस्तारिता ॥ २२ ॥ अनुत्तमं सर्वोत्तमम् ।

अवतीर्य यदोर्वंशे बिभ्रद् रूपमनुत्तमम् । कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः ।।२३।।

यानि ते चरितानीश मनुष्याः ताधवः कलौ । शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः।।२४।।

यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम । शरच्छतं व्यतीताय पञ्चविंशाधिकं प्रभो ।।२५।।

नाधुना तेऽखिलाधार देवकार्यावशेषितम् । कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ।।२६।।

ततः स्वधाम परमं विशस्व यदि मन्यसे । सलोकाँल्लोकपालान् नः पाहि वैकुण्ठकिङ्करान् ।।२७।।

श्रीभगवानुवाच

अवधारितमेतन्मे यदात्थ विबुधेश्वर । कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ।।२८।।

यदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् । लोकं जिघृक्षद् रुद्धं मे वेलयेव महार्णवः ।।२९।।

यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् । गन्तास्म्यनेन लोकोऽयमुद्वेलेन विनङ्क्ष्यति ।।३०।।

इदानीं नाश आरब्धः कुलस्य द्विजशापतः । यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ ।।३१।।

श्रीशुक उवाच

इत्युक्तो लोकनाथेन स्वयम्भूः प्रणिपत्य तम् । सह देवगणैर्देवः स्वधाम समपद्यत ।।३२।।

अथ तस्यां महोत्पातान् द्वारवत्यां समुत्थितान् । विलोक्य भगवानाह यदुवृद्धान् समागतान् ३३

श्रीभगवानुवाच

एते वै सुमहोत्पाता व्युत्तिष्ठन्तीह सर्वतः । शापश्च नः कुलस्यासीद् ब्राह्मणेभ्यो दुरत्ययः ।।३४।।

न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यका । प्रभासं सुमहत्पुण्यं यास्यामोऽद्यैव मा चिरम् ।।:३५।।

---

उद्दामानि अनुपमानि वृत्तानि चरितानि येषु तानि कर्माणि त्वम् अकृथाः कृतवानसि ।। २३ ।। यानि ते तव चरितानि तानि शृण्वन्तः अञ्जसा सुखेन तमः संसाराख्यं तरिष्यन्तीत्यन्वयः ।। २४ ।। पंचविंशत्यधिकं शरच्छतं वर्षशतं व्यतीयाय व्यतीतमभूत । तिलोपश्छन्दोऽनुरोधात् । तीर्थस्तु पञ्चविंशत्यूत्वधिकमित्याह । वत्सराणां शतं चैव ऋतूनां पञ्चविंशकम् इति पुराणान्तरात् ।। २५ ।। देवकार्येऽवशेषितं नास्ति । यदुकुलम वशिष्टमित्यपेक्ष्यापि न स्थेयमित्याह-कुलं चेति ।। २६ ।। ततो देवकार्यस्य सम्पन्नत्वात् । हे वैकुण्ठ ! स्वधाम वैकुण्ठं विश । स्वेति पृथक् पदं संबोधनम् । नोऽस्मान् ।। २७ ।। यत् आत्थ ब्रवीषि तदेतत् मे अवधारितं ममापि निश्चितम् । वो युष्माकं कार्यं कृतम् । कुतः । यतो भूमेरिति ।।२८।। यत् कुलं तदिदं मे मया निरुद्ध-मस्ति । वीर्यं बलिष्ठत्वं शौर्यं युद्धोत्साहः तयोः श्रिया सम्पत्या उद्धतमवध्यमित्यर्थं । हतात् हननादुद्गतम् उद्धतम् । जिघृक्षत् ग्रसनेच्छु । वेलया तटेन ।। २९ ।। दृप्तानां गर्वितानाम् । यदि गन्तास्मि गमिष्यामि । तर्हि उद्वेलेन लङ्घितमर्यादेन अनेन यदुकुलेन ।। ३० ।। एतस्य यदुकुलसंहारस्य अन्ते । वैकुण्ठं यास्यन् तव भवनमपीति योज्यम् ।। ३१ ।। तं श्रीकृष्णम् । स्वयम्भूः देवो ब्रह्मा । स्वधाम सत्यलोकं समगात् ।। ३२ ।। अथ ब्रह्मादिप्रार्थनोत्तरम् । महोत्पातान् धूमकेतूल्कापातत्रयोदशदिनपक्षभूकम्पादीन् । "त्रयोदशदिने पक्षे यादवा निधनं गताः" । इत्युक्तेः ।। ३३ ।। इह द्वारकायाम् । व्युत्तिष्ठन्ति । बाहुलकात्तङभावः । दुरत्ययः दुर्लङ्घ्यः ।। ३४ ।। हे आर्यकाः श्रेष्ठाः ! जीवितुमिच्छद्भिः अस्माभिः । पुण्यं पुण्यजनकम् । मत्वर्थीयोऽच् । चिरं विलम्बं मा कुरुत । प्रभासं क्षेत्रम् ।। ३५ ।। यत्र प्रभासे । यक्ष्मणा क्षयरोगेण गृहीत उडुराट् चन्द्रः

यत्रस्नात्वा दक्षशापाद् गृहीतो यक्ष्मणोडुराट् । विमुक्तः किल्बिषात् सद्यो भेजे भूयः कलोदयम् ॥
वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितॄन् सुरान् । भोजयित्वोशिजो विप्रान् नानागुणवतान्धसा॥३७
तेषु दानानि पात्रेषु श्रद्धयोप्त्वा महान्ति वै । वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥३८॥

श्रीशुक उवाच

एवं भगवताऽऽदिष्टा यादवाः कुलनन्दन । गन्तुं कृतधियस्तीर्थं स्यन्दनान् समयूयुजन् ॥३९॥
तन्निरीक्ष्योद्धवो राजन् श्रुत्वा भगवतोदितम् । दृष्ट्वारिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ॥४०॥
विविक्त उपसंगम्य जगतामीश्वरेश्वरम् । प्रणम्य शिरसा पादौ प्राञ्जलिस्तमभाषत ॥४१॥

उद्धव उवाच

देवदेवेश योगेश पुण्यश्रवणकीर्तन । संहृत्यैतत् कुलं नूनं लोकं संत्यक्ष्यते भवान् ।
विप्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः ॥ ४२ ॥
नाहं तवाङ्घ्रिकमलं क्षणार्धमपि केशव । त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ॥४३॥
तव विक्रीडितं कृष्ण नृणां परममङ्गलम् । कर्णपीयूषमास्वाद्य त्यजत्यन्यस्पृहां जनः ॥४४॥
शय्यासनटनस्थानस्नानक्रीडाशनादिषु । कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेम हि ॥४५॥
त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां जयेम हि ॥४६॥
वाताशना य ऋषयः श्रमणा ऊर्ध्वमन्थिनः । ब्रह्माख्यं धाम ते यान्ति शान्ताः संन्यासिनोऽमलाः॥
वयं त्विह महायोगिन् भ्रमन्तः कर्मवर्त्मसु । त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥४८॥

---

किल्विषात् क्षयरोगात् सद्यो मुक्तः सन् भूयः कलावृद्धिं लेभे ॥३६॥ वयमिति युग्मकम् । वयं च वयमपि तस्मिन् प्रभासे आप्लुत्य स्नात्वा उशिजः कमनीयान् आचारसम्पन्नानित्यर्थः। अन्धसा अन्नेन। वश् कान्तौ इत्यस्मादौणादिक इच् सम्प्रसारणं च । तेषु विप्रेषु । उप्त्वा तेभ्यो दत्वा । वृजिनानि दुःखानि तरिष्यामः ॥३७॥३८॥ स्यन्दनान् रथान् समयूयुजन् बद्धाश्वान् चक्रुः ॥३९॥ उद्धवः तत् यात्रोद्यमनं निरीक्ष्य अरिष्टानि उत्पातांश्च दृष्ट्वा विविक्ते एकान्ते तमुपसंगम्य अभाषतेति द्वयोरन्वयः ! उदितं कथितम् 'एते वै' इत्यादि पञ्चकम् ॥ ४० ॥ ४१ ॥ देवेति सार्द्धम् । पुण्ये पुण्यजनके श्रवणकीर्तने यस्य तत्संबुद्धौ । संत्यक्ष्यते बाहुलकात्तङ् । समर्थोऽपि शापं न प्रत्यहन् न प्रतिहतवान् यत ईश्वरः मर्यादारक्षकः भमैव मुखं यद्द्विजदेव कुलम् इत्युक्तेः । नूनमिति वितर्के ॥ ४२ ॥ त्यक्तुं न समुत्सहे इत्यन्वयः ॥४३॥ तवेति युग्मकम् । विक्रीडितं लीलाचरितं भावे निष्ठा । कर्णयोः पीयूषममृतमिव मधुरम् । अन्यस्पृहां विषयाशक्तिम् त्यजति । शय्यादिषु त्वां भक्ताः सेवितवन्तो वयं कथं त्यजेम । कर्मणोऽविवक्षया कर्तरि क्तः । अटनं भ्रमणम् । अशनं भोजनम् । आदिपदेन नानाकृत्यादिग्रहः ॥४४॥४५॥ चर्चिता अलङ्कृताः । 'चर्व' अलङ्कारे इत्यस्मात् । हि निश्चितम् ॥४६॥ ये संन्यासिनस्ते क्लेशेन धाम यान्ति वयं तु अनायासेन तरिष्याम इति तुना सूचितम् । वातरशना इति पाठे वाता त्यक्ता रशना कौपीनबन्धनसूत्रं यैस्ते दिगम्बराः। 'वातस्त्यागेऽथपवने' रशना कटि सूत्रे च इति कोशात् । श्रमणा भिक्षावृत्तयः । ऊर्ध्वमन्थिन ऊर्ध्वरेतसः ॥ ४७ ॥ वयमिति युग्मकम् । वयं तु कर्मवर्त्मसु नानायोनिषु भ्रमन्तः तावकैर्भक्तैः सह या त्वद्वार्ता त्वत्कथा तयैव अनायासेन तमः संसारं तरिष्यामः । किं

स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च । गत्युत्स्मितेक्षणक्ष्वेलि यन्नृलोकविडम्बनम् ॥४९॥

श्रीशुक उवाच

एवं विज्ञापितो राजन् भगवान् देवकीसुतः । एकान्तिनं प्रियं भृत्यमुद्धवं समभाषत ॥५०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

---

कुर्वन्तः । ते कृतानि कर्माणि गदितानि उपदिष्टवाक्यानि तानि । किञ्च यत् गत्यादि यच्च नृलोकविडम्बनं तत्तत्समये लोकानुकरणं तच्च तच्च स्मरन्तः कीर्तयन्तश्च । गत्यादीनां द्वन्द्वैक्यम् । उत्स्मितेक्षणं सस्मित-वीक्षणम्। क्ष्वेलिः सौरतपरिहासः ॥ ४८ ॥ ॥४९॥ विज्ञापितः प्रार्थितः । एकस्मिन् हरावेव अन्तो निश्चय एकान्तः सोऽस्यास्तीति तम् एकान्तिनम् ॥५०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां एकादशस्कन्धे गूढार्थदीपिन्यां ब्रह्मादि प्रार्थनानिरूपणं नाम षष्ठोऽध्यायः ।

## अथ सप्तमोऽध्यायः

श्रीभगवानुवाच

यदात्थ मां महाभाग तच्चिकीर्षितमेव मे । ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकाङ्क्षिणः ॥१॥

मया निष्पादितं ह्यत्र देवकार्यमशेषतः । यदर्थमवतीर्णोऽहमंशेन ब्रह्मणार्थितः ॥ २ ॥

कुलं वै शापनिर्दग्धं नङ्क्ष्यत्यन्योन्यविग्रहात् । समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ॥३॥

यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमंगलः । भविष्यत्यचिरात् साधो कलिनापि निराकृतः ॥४॥

न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले । जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ॥५॥

---

सप्तमे ज्ञानवैराग्यप्राप्तये हरिरुद्धवम् ।
प्राहावधूतवृत्तेन सोऽष्टगुर्वनुशिक्षितम् ॥१॥

मदाश्रितज्ञानभागित्वात् हे महाभाग ! उद्धव । यत् संहृत्यैतत्कुलमित्यादि कुलसंहारपूर्वकं लोकत्यागादि आत्थ ब्रवीषि तन्ममापि कर्तुमिष्टमेव । यतः सर्वेऽपि मे स्वर्वासं वैकुण्ठवासं प्रति अभिकाङ्क्षिणः सन्ति । तदर्हमिति ज्ञापकाद्वा द्वितीया ॥१॥ अत्र लोके । अशेषतः साकल्येन देवकार्यं भूभारहरणरूपम् निष्पादितम् । अंशेन रामेण सह । अर्थितः प्रार्थितः ॥ २ ॥ एतां द्वारकाम् । प्लावयिष्यति अन्तर्धापयिष्यतीति व्याख्येमम् । अन्यथा "अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः" । अद्यापि श्रूयते राजन् द्वारकायामहर्निशम् इति पुराणान्तरं वाक्यं व्याकुप्येत । शापनिर्दग्धमित्यप्यनुकरणाभिप्रायं वस्तुतस्तु शापेऽपि निर्गतं दग्धं देहो यस्मात्तथाभूतं सत् नङ्क्ष्यति अदर्शनमेव यास्यतीत्यर्थः॥ ३ ॥ यर्ह्येव अयं त्यक्तः तदैव अयं निराकृतः नितरामा क्रान्तः सन् नष्टमंगलो भविष्यति अतो न पौनरुक्त्यम् । अचिरादिति पदं देहलीदीपकन्यायेनोभयत्रान्वेति ॥४॥ मया त्यक्ते कलिप्रवेशात् जनोऽधर्मरुचिः अतस्त्वया साधुत्वात् न वस्तव्यम् ॥ एकत्रेति शेषः । समदृग् विचरस्व

त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु । मय्यावेश्य मनः सम्यक् समदृग् विचरस्व गाम् ॥६॥
यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः । नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥७॥
पुंसोऽयुक्तस्य नानार्थो भ्रमः स गुणदोषभाक् । कर्माकर्मविकर्मेति गुणदोषधियो भिदा ॥ ८ ॥
तस्माद् युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् । आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥ ९ ॥
ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् । आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे ॥१०॥
दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते । गुणबुद्ध्या च विहितं न करोति यथार्भकः ॥११॥
सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः । पश्यन् मदात्मकं विश्वं न विपद्येत वै पुनः ॥१२॥

श्रीशुक उवाच

इत्यादिष्टो भगवता महाभागवतो नृप । उद्धवः प्रणिपत्याह तत्त्वजिज्ञासुरच्युतम् ॥१३॥

उद्धव उवाच

योगेश योगविन्यास योगात्मन् योगसम्भव । निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥१४॥

---

गाम् इत्यग्रिमोक्तेः ॥ ५ ॥ स्वधामनयनं तु किञ्चिद्विलम्बेन करिष्यामीत्यत आह त्वमिमिति । तुर्वैलक्षण्यार्थः । समं मामेवैकं पश्यतीति तथा सति मम तव विच्छेदाभाव एव । स्वेति पृथक् पदं संबोधने । हे स्व आत्मीय ! नोद्धवोण्वपि मन्न्यूनः इत्युक्तेः । गां पृथ्वीं विचर । सम्यक् निर्वासनं मनः ॥६॥ विषमे लोके कथं समदर्शित्वमत-आह-यदिदमिति । यत् मन आदिभिर्गृह्यमाणं तदिदं सर्वं वस्तुजातं मायामयं मनोमयं च विद्धि । प्राधान्ये मयट् । जागरे मायाप्रधानं स्वप्ने मनःप्रधानं च अत एव नश्वरं च विद्धि । स्वामिनस्तु मनोमयत्वान्मायेति तदपि न स्थिरं किन्तु नश्वरमित्याहुः । केचित्तु माया अविद्या तद्युक्ते नमनसा कल्पितमित्याहुः । आदिना रसनादिग्रहः ॥ ७ ॥ मनोमयत्वे हेतुमाह-अयुक्तस्य चञ्चलमनसः पुंसः नानाविधोऽर्थः विषयसमूहः भ्रमः भ्रमकारणं भवति । स च भ्रमः वस्तुनि गुणं दोषं भजति । इदमुत्कृष्टम् इदं निकृष्टमिति भेदबुद्धिं करोति । न च विधिनिषेधद्वारा भेदस्य सत्यत्वं शंक्यं यतो हि भ्रमात्मकगुणदोषमय्या बुद्धेरेव भेदो भवति इदं कर्म इदमकर्म इदं विकर्मेति नान्यथा स्थिरबुद्धेः । कर्म विहितं निषिद्धं विहिताकरणं चेति क्रमेणार्थाः ॥ ८ ॥ यस्मादयुक्तचित्तादेव भ्रमः तस्माद्धेतोः । युक्तो निरुद्धः इन्द्रियसमूहो येन सः । कुतः । निरुद्धचित्तः इदं जगत् आत्मनि स्वस्मिन् जीवे विततं विस्तृतमीक्षेत । आत्मानं च अधीश्वरे परमात्मनि मयि ईक्षस्व पूर्वं जगदात्मनोरभेदः पुनश्च जीवात्मपरमात्मनोरभेदः । तथा सति भ्रमकारणभूतभेदास्फूर्त्या मृत्युभयनिवृत्तौ सुतरामानन्दानुभव इति ॥ ९ ॥ न चैवं निरुद्धचित्तत्वेन कर्माकरणे देवादीनां विघ्नशंकेत्यत आह-ज्ञानेति । ज्ञानामध्यत्मं शास्त्रीयं विज्ञानं तत्प्रतिप्राद्यानुभवः ताभ्यां सम्यक् युक्तः ततश्च आत्मानुभवेनैव तुष्टचित्तः । यतः शरीरिणां देवानामात्मभूतः कृतः । अतस्तत्कृतैरन्तरायैर्न विहन्यसे ॥ १० ॥ न चोत्पन्नज्ञानेऽपि स्वेच्छाचारित्वमत आह—दोषेति । उभयातीतः गुणदोषबुद्धिभ्यामतीतः प्राक्तनसंस्कारवशान्निषेधान्निवर्तत एव किन्तु दोषबुद्ध्या । एवं विहितमपि प्रायशः करोति किन्तु न गुणबुद्ध्या स्वर्गादिफलोद्देशेनेत्यर्थः । यथा बालः संकल्पविकल्परहित एव किञ्चित्करोति कुतश्चिन्निवर्तते तद्वत् ॥ ११ ॥ शान्त इत्यत्र हेतुः सर्वभूतेति । अत्र हेतुः ज्ञानेति । ज्ञानविज्ञानाभ्यां परोक्षापरोक्षानुभवाभ्यामात्मविषयको निश्चयो यस्य सः । मदात्मकं मत्स्वरूपम् विश्वं पश्यन् । पुनर्न विपद्येत जन्ममरणविपत्तिं न प्राप्नुयात् ॥१२॥ तत्त्वजिज्ञासुरिति लोककल्याणार्थम् ॥ १३ ॥ हे योगेश ! योगफलदायिन् । कुतः । योगो विन्यस्यते समर्प्यते वा क्षेत्रेषु बीजमिव यस्मिन् । फलं दर्शयति । योगे आत्मा प्राकट्यं यस्य । किञ्च योगस्य संभवो यस्मात् । चतुर्भिश्चतुर्वर्गप्राप्तिसामर्थ्य-

त्यागोऽयं दुष्करो भूमन् कामानां विषयात्मभिः सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ।१५।

सोऽहं ममाहमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबन्धे ।
तत्त्वञ्जसा निगदितं भवता यथाहं संसाधयामि भगवन्ननुशाधि भृत्यम् ॥१६॥
सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं वक्तारमीश विबुधेष्वपि नानुचक्षे ।
सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥१७॥
तस्माद् भवन्तमनवद्यमनन्तपारं सर्वज्ञमीश्वरमकुण्ठविकुण्ठधिष्ण्यम् ।
निर्विण्णधीरहमहो वृजिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये ॥१८॥

श्रीभगवानुवाच

प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः । समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात् ॥१९॥
आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः । यत् प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ॥२०॥
पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः । आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ॥२१॥

---

दर्शितम् । ये मम निःश्रेयसाय मोक्षाय । त्यागः सर्वं परित्यज्येत्यादिरूपः । संन्यासलक्षणः पुनरग्रहणरूपः । पुनर्ग्रहणेषु वान्ताशित्वेन निन्दाश्रुतेरित्यर्थः ॥१४॥ हे भूमन् ! अपरिच्छिन्नमहिमन् ! कामानां विषयाणां त्यागः विषयासक्तचित्तैः दुष्करः कर्तुमशक्यः । दुःशब्दोऽत्र निषेधे । हे सर्वात्मन् ! त्वद्भक्तैस्तु कथंचित् सुकरो भवेदपि । किन्तु त्वयि अभक्तैस्तु सुतरां दुष्कर इति मे मतिर्निश्चयः ॥ १५ ॥ यं प्रति त्यागाद्युपदिष्टं सोऽहं मूढमतिः । कुतः । सानुबन्धे पुत्रादिसहिते त्वन्मायया विरचिते आत्मनि देहे मम अहमिति कृत्वा विगाढो निमग्न इति देह स्यान्धकूपत्वमारोपितं तेन तदावेशत्याग एव पूर्वं कार्यस्ततो ज्ञानोपदेश इति ध्वनिः अतो हे भगवन् । तत्तु भवता निगदितमञ्जसा सुखेन यथाऽहं सम्पादयामि तथा भृत्यं मामनुशाधि शिक्षय ॥१६॥ हे ईश ! सत्यस्य परमार्थभूतस्य आत्मनः आत्मतत्त्वस्य वक्तारं ते त्वत्तोऽन्यं विबुधेषु देवेष्वपि नानुचक्षे न पश्यामि । कथंभूतात् त्वत्तः । स्वदृशः स्वतो ज्ञानमूर्तेः आत्मनः परमात्मनस्त्वत्तः । पञ्चम्यन्तमेतत् । कुतः । इमे सर्वेऽपि ब्रह्मादयः तव मायाया विमोहितधियः । यतस्तनुभृतो देहाध्यासवन्तः अतो बहिरर्थभावा विषयेष्वर्थबुद्धयः ॥१७॥ यतोऽन्यत्र वक्तैव न लभ्यते तस्माद्धेतोर्वृजिनैर्दुःखैरभितप्तोऽहं ह हर्षेण नारायणं त्वां शरणं प्रपद्ये इत्यन्वयः । कथंभूतः । निर्विण्णधीः । दुखादेव निर्विण्णा विरक्तिमापन्नाधीर्यस्य । कथंभूतम् । नरस्य जीवस्य सखायम् । कीदृशम् । अनवद्यं दोषरहितम् । अन्येतु सदोषाः । पुनः । नास्ति अन्तः कालतः पारो देशतश्च यस्य तथाभूतम् । अन्ये तु-कालकवलिताः परिच्छिन्नाश्च । किं च सर्वज्ञम् । अन्ये तु अल्पज्ञाः । किञ्च । ईश्वरं सर्वसमर्थम् । अन्येतु असमर्थाः । किञ्च । कालादिभिरकुण्ठमविकृतं विकुण्ठधिष्ण्यं वैकुण्ठलोको यस्य तम् । अन्ये नश्वरलोकाः । एवं पञ्चविशेषणैर्वक्तुः सर्वातिशयसामर्थ्यं द्योतितम् । हे भगवन् ! अत्र हकारो गुरुवत्पठनीयः । यद्वा । अहो इति पाठः सुगमः ॥१८॥ लोकतत्त्वे परमार्थे विचक्षणा विचारदक्षा मनुजाविवेकिनः आत्मना विवेकबुद्ध्यैव आत्मानं जीवात्मानं समुद्धरन्ति । कस्मात् । अशुभाशयात् विषयवासनातः । हीति प्रसिद्धमेतत् । प्रायेणेति तेषां विरलत्वं सूचयति ॥ १९ ॥ तदुपपादयति आत्मन इति । पश्चादिशरीरेऽपि आत्मनो जीवात्मन आत्मा अन्तर्यामी गुरुर्हिताहितबोधकः । पुरुषस्य तु विशेषत आत्मा गुरुः गुर्वनुसरणे प्रवर्तक इत्यर्थः । यत् यस्मात् असौ पुरुषः श्रेयस्तत्त्वज्ञानम् अनुविंदते प्राप्नोति ॥ २० ॥ प्रत्यक्षं दर्शयति-पुरुषत्वे चेति । धीराः शमादिसम्पन्नाः पुरुषत्वे पुरुषदेहे माम् आविस्तरा प्रकटतराम् अतिशयेनाविः इत्याविस्तरां पश्यन्ति पुरुषत्वे

एकद्वित्रिचतुष्पादो बहुपादस्तथाऽपदः । बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥
अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् । गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानतः ॥२३॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् । अवधूतस्य संवादं यदोरमिततेजसः ॥२४॥
अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम् । कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ॥२५॥

यदुरुवाच

कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा । यामासाद्य भवाँल्लोकं विद्वांश्चरति बालवत् ॥२६॥
प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः । हेतुनैव समीहन्ते आयुषो यशसः श्रियः ॥२७॥
त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः । न कर्ता नेहसे किंचिज्जडोन्मत्तपिशाचवत् ॥२८॥
जनेषु दह्यमानेषु कामलोभदवाग्निना । न तप्यसेऽग्निना मुक्तो गङ्गाम्भःस्थ इव द्विपः ।२९।

---

चाविस्तरामात्मां इत्यादिश्रुतेः । प्रशब्दः साक्षादर्थकः । उपबृहितं पूर्णम् । कथंभूताः । सांख्यं तत्त्व विचारः योगो निदिध्यासनं तयोर्निपुणाः ॥ २१ ॥ पुरुषत्वं स्तौति-एकेति । एकः पिशाचादेः । द्वौ मनुष्यादेः । त्रयोऽग्नेः । चत्वारो गवादेः । बहुपादः खाजूर्यादेः । अपदः सर्पादेः । विविधाः पुरः शरीराणि सन्ति । तासां मध्ये पौरुषी तनूर्मे प्रिया मत्प्राप्तिसाधनत्वात् ॥ २२ ॥ अनुमानमाह-अत्रेति । अत्र पौरुष्यां पुरि युक्ताः संयतचित्ता ईश्वरं माम् अद्धा साक्षात् मार्गयन्ति अन्वेषयन्ति । कीदृशम् । इन्द्रियैरग्राह्यम् । अन्वेषणे मार्गद्वय-माह–गृह्यन्ते पदार्था एभिरिति गृह्यमाणा गुणा बुद्ध्यादयस्ते एव हेतवस्तैः जडा बुद्ध्यादयश्चेतनं विना न पदार्थ ग्रहणे शक्ता अतश्चेतनशक्तिप्रदाता कश्चन ईश्वरोऽस्तीति लोकैरनुमीयत इत्येको मार्गः । द्वितीयमाह-तथा तैरेव बुद्ध्यादिभिः लिङ्गैर्हेतुभिः अनुमानतः व्याप्तिमुखेनानुमानत ईश्वरं प्रवर्तकं मां मृगयन्ते । तद्यथा बुद्ध्यादिकरणानि कर्तृप्रयोज्यानि करणत्वात् वास्यादिवत् । बुद्ध्यादिकरणानीति पक्षः कर्तृप्रयोज्यत्वं साध्यो धर्मः करणत्वादिति हेतुः, वास्यादिवदिति दृष्टान्तः । यत्र यत्र करणत्वं तत्र तत्र कर्तृप्रयोज्यत्वं यथा वास्यादिरित्यन्वयव्याप्तिः । यत्र कर्तृप्रयोज्यत्वं नास्ति न तत्र करणत्वं यथाऽऽत्मेति व्यतिरेकव्याप्तिस्तथा च स्वतन्त्रः कर्ता परमेश्वर इति सिद्धम् इति द्वितीयो मार्गः । यद्वा । युक्ता भक्ति युक्ता हेतुभिः श्रवणकीर्तनाद्यैः ईश्वरं कृष्णं मां मार्गयन्ति । कीदृशम् । गृह्यमाणैर्गुणैर्बुद्ध्यादिभिर्लिङ्गैर्व्याप्तिमुखेन यदनुमानं तस्मादग्राह्यम् ॥ २३ ॥ अत्रापि अन्वेषणात्सुलभोऽहमित्यर्थे । अवधूतस्य दत्तात्रेयस्य यदोश्च संवादं संवादरूपमितिहासम् उदाहरन्ति दृष्टान्तरूपेण कथयन्ति व्यासादयः । ननु इतिहासः पुरावृत्त इति कोशादि-तिहासपदेनैव पुरातनत्वे सिद्धे पुरातनपदस्य वैयर्थ्यमितिचेन्न 'स कीचकैर्मारुतपूर्णरन्ध्रैः' इतिवद्विशिष्टवाचकानां पदानां सति विशेषणसमवधाने विशेष्यमात्रपरताया अङ्गीकारात् । अमिततेजसः परमतेजस्विनः श्रद्धालोः ॥२४॥ कंचित् अदृष्टपूर्वम् द्विजं दत्तात्रेयम् । चरन्तं विचरन्तम् अकुतोभयं निर्भयम् । मलिनदेहत्वादवधूतवेषम् । धर्मवित् परमहंसधर्मवेत्ता ॥ २५ ॥ अकर्तुः भोजनार्थमपि चेष्टारहितस्य ते इयं बुद्धिः कुतः उपलब्धेति शेषः । सुविशारदा लोकविलक्षणा । यां बुद्धिम् आसाद्य प्राप्य विद्वानपि भवान् बालवत् अज्ञवत् विचरति । लोकं लोके । अत्यन्तसंयोगे द्वितीया ॥२६॥ प्रायो मानवा धर्मादिषु विवित्सायामात्मविचारे च आयुरादे र्हेतुना कामनयैव समीहन्ते प्रवर्तन्ते । प्राय इति पदं निष्कामप्रवृत्ते र्दुर्लभतां सूचयति ॥ २७ ॥ तुर्वैलक्षण्ये । कल्पः समर्थः । कविर्ज्ञानी । दक्षश्चतुरः । सुभगः सुरूपः । अमृतमिव मधुरं भाषत इत्यमृतभाषणः । न कर्ता कस्यचित्कर्मणः निवृत्ताहङ्कारत्वात्, न च किञ्चिदिच्छसि । पिशाचपदेन तद्ग्रस्तो लक्ष्यते ॥ २८ ॥ कामलोभरूपो यो

त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् । ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः॥३०॥

श्रीभगवानुवाच

यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा । पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ॥३१॥

ब्राह्मण उवाच

सन्ति मे गुरवो राजन् बहवो बुद्ध्युपाश्रिताः । यतो बुद्धिमुपादाय मुक्तोऽटामीह ताञ्छृणु ।३२।
पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः । कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद् गजः॥३३॥
मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः । कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत् ॥३४॥
एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः । शिक्षा वृत्तिभिरेतेषामन्वशिक्षमिहात्मनः॥३५॥
यतो यदनुशिक्षामि यथा वा नाहुषात्मज । तत्तथा पुरुषव्याघ्र निबोध कथयामि ते ॥३६॥
भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः । तद् विद्वान् न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥
शश्वत्परार्थसर्वेहः परार्थैकान्तसम्भवः । साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥
प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः । ज्ञानं यथा न नश्येत नावकीर्येत वाङ् मनः॥३९॥

---

दवाग्निर्वनाग्निस्तेन दह्यमानेषु त्वं न तप्यसे । द्विपो गजः ॥२९॥ भवत आत्मनि मनसि यत् आनन्दकारणं तत् नोऽस्माकं ब्रूहीत्यन्वयः । कथंभूतस्य । स्पर्शविहीनस्य विषयभोगरहितस्य । कुतः । केवलात्मनः स्त्रीसङ्गशून्यस्य ॥३०॥ ब्रह्मण्येन ब्राह्मणभक्तेन अत एव सुमेधसा यदुना एवं पृष्टः सभाजितः सत्कृतश्च द्विजस्तं प्राहेत्यन्वयः । प्रश्रयो विनयः ॥ ३१ ॥ बुद्ध्यैव उपाश्रिताः स्वीकृता न तूपदेशेन । यतो येभ्यो गुरुभ्यः बुद्धिं शिक्षावृत्तिम् गृहीत्वा देहाभिमानान्मुक्तः सन् इह लोके पर्यटामि तान् गुरून् श्रृणु ॥ ३२ ॥ अजगरो महासर्पः । अजो नित्यो गरो विषं यस्य । अजस्य छागादेर्गरो निगरणं यस्येति वा । मधु करोति संपादयतीति । मधु कृन्तति पुष्पादिभ्यः छिनत्तीति मधुकृत् भ्रमरः मधुमक्षिका च । मधुहा मधुग्रहीता । पिङ्गला तन्नाम्नी वेश्या । कुरर उत्क्रोशः पक्षी । कुमारी विप्रकन्या । शरकृत् बाणसारल्यकर्ता । ऊर्णा तन्तुनिर्मात्री । सुपेशं सुन्दररूपं कीटस्य करोतीति सुपेशकृत् भृङ्गी । प्रायश्चातुर्मास्ये अस्या उद्भवो भवति ॥३४॥ ये मया अश्रिताः । कर्तरि षष्ठी । एते पृथिव्यादयः । एतेषां वृत्तिभिराचरणैः आत्मनः स्वस्य शिक्षा ग्राह्यानर्थान् अन्वशिक्षम् । अनुशिशिक्षितवान् । बाहुलकात्ताङ्गभावः ॥ ३५ ॥ यतः पृथिव्यादेः यत् अनुशिक्षामि यथा वा अनुशिक्षामि तत्तथा निबोध श्रृणु । ते तुभ्यम् । हे नाहुषात्मज । ययातिपुत्र ॥३६॥ क्षितेः क्षमा शिक्षितेत्याहः दैववशानुगैः राज्ञामनुचरैर्भूतैः प्राणिभिः पीड्यमानोऽपि मार्गात् आत्मानुसन्धानरूपात् न चलेत् । एतत् क्षितेर्व्रतं नियमम् अचलत्वमन्वशिक्षम् । अत एव पृथिव्या अचलेति नाम । साऽपि पादाघातादिभिर्न चलतीति । तद्विद्वान् भूतानां दैववशवर्तित्वं जानन् ॥३७॥ पर्वतवृक्षरूपायाः क्षितेः शिक्षितमाह—शश्वदिति । शश्वत् सर्वदा परार्थाः परोपकारार्थाः सर्वा ईहाश्चेष्टा यस्य । परार्थे एव एकान्ततो मुख्यतः संभवो जन्म यस्य तथाभूतः साधुः सन् भूभृतः पर्वतात् नगशिष्यः सन् नगात् वृक्षाच्च परात्मतां परोपकारितां शिक्षेदित्यन्वयः । परेष्वेव अर्पितः आत्मा येन स परात्मा तस्य भावस्तत्ता ताम् । पर्वतो हि वृक्षतृणनिर्झरादिरूपेण वृक्षो हि पत्रपुष्पफलच्छायादिभिश्च जनतासाहाय्यं करोतिति सुप्रसिद्धम् ॥ ३८ ॥ वायोर्द्वैविध्यादाभ्यन्तरप्राणवायोः प्रथमं शिक्षितमाह प्राणेति । आहारं कांक्षते प्राणः इति नियमात् प्राणस्य वृत्तिराहारमात्रं तयैव सन्तुष्येत् । यावता

विषयेष्वाविशन् योगी नानाधर्मेषु सर्वतः । गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥४०॥
पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः । गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक् ॥४१॥
अन्तर्हितश्च स्थिरजङ्गमेषु ब्रह्मात्मभावेन समन्वयेन ।
व्याप्त्याऽव्यवच्छेदमसङ्गमात्मनो मुनिर्नभस्त्वं विततस्य भावयेत् ॥४२॥
तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः । न स्पृश्यते नभस्तद्वत् कालसृष्टैर्गुणैः पुमान् ॥४३॥
स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणाम् । मुनिः पुनात्यपां मित्रमीक्षोपस्पर्शकीर्तनैः ॥४४॥
तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः । सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥४५॥

---

यथा कथञ्चिद्देहनिर्वाहो भवेत्तावदेव गृह्णीयादित्यर्थः । इन्द्रियप्रियैः इन्द्रियतृप्तिकरैर्विषयैरिन्द्रियाणि न पोषयेत् । यथा आहारेण ज्ञानं न नश्येत । ज्ञानोपकारकं द्वयम् । वाङ्मनश्च न विक्षिप्येत तथा कुर्यात् । नातिरूक्षं नातिस्निग्धमश्नीयादित्यर्थः । आहाराभावेन मनोग्लान्या ज्ञाननाशः, इन्द्रियपोषणेन तु वाङ्मनसयोर्विक्षेपश्च स्यादतस्तथा न कुर्यादित्यर्थः ॥३९॥ बाह्याद्वायोरनासक्तिः शिक्षितेत्याह—विषयेष्विति । नानाधर्मेषु शीतोष्णादिधर्मवत्सु विषयेषु सर्वत्र आविशन् तान् सेवमानोऽपि तत्र न विषज्जेत आसक्तो न भवेत् । कुतः । गुणदोषाभ्यां व्यपेतो निवृत्त आत्मा बुद्धिर्यस्य सः अतः । वायुवत् । यथा वायुर्न कुत्रापि सज्जते वने तद्दहने वा तद्वत् ॥ ४० ॥ वायोरेवान्यच्छिक्षितमाह पार्थिवेष्विति । इह लोके पार्थिवेषु भौतिकेषु देहेषु प्रविष्टस्तद्गुणान् देहधर्मान् स्थूलत्वादीन् आश्रयते च अथापि योगी तैर्गुणैर्नयुज्यते स्थूलोऽहं कृशोऽहमिति नाभिमन्यते । कुतः । आत्मदृक् । आत्मानं पश्यतीति न तु देहम् । यथा वायुः सुरम्यादिगन्धाश्रयत्वेन तद्वान् प्रतीयमानोऽपि वस्तुतो गन्धैर्न युज्यते तद्वत् । यतो हि गन्धादेः पार्थिवावयवाश्रयत्वात् ॥ ४१ ॥ आकाशादसङ्गत्वमपरिच्छिन्नत्वं च शिक्षितमित्याह-अन्तर्हितश्चेति । मुनिर्योगी देहान्तर्गतोऽपि विततस्य सर्वगतस्य परमात्मन इव आत्मनो जीवस्यापि नभस्त्वं नभोधर्मम् असङ्गत्वमत एव अव्यवच्छेदमपरिच्छिन्नत्वं च भावयेत् । न मे देहादेः सङ्गः न चाहं देहादिवत्परिच्छिन्नश्चेत्येवं चिन्तयेदित्यर्थः । कया रीत्या । स्थावरजङ्गमेषु समन्वयेन यत्र यत्र स्थावरं जङ्गमं तत्र तत्र ब्रह्मत्वमिति कृत्वा यो ब्रह्मात्मभावः ब्रह्मस्वरूपभावना तेन या व्याप्तिस्तया । यथा नभसः सर्वगतस्यापि न धरादिभिः संगः न च परिच्छिन्नता एवमात्मनोऽपि । समन्वयः संबन्धः । सम्बन्धेन समन्वयः इति निरुक्तेः ॥४२॥ अन्यदप्यलिप्तत्वमाकाशात् शिक्षितमाह—तेज इति वायुना प्रेरितैर्मेघाद्यैर्यथा नभो न स्पृश्यते तद्वत् कालेन सृष्टैः गुणैः गुणकार्यैर्भावैः देहादिभिः पुमान् जीवोऽपि न स्पृश्यते न लिप्यत इत्यन्वयः । कथंभूतैः । तेजश्च आपश्च अन्नं पृथिवी च तैः । भौतिकैरित्यर्थः ॥ ४३ ॥ अद्भ्यः स्वच्छत्वादिकं शिक्षितमित्याह—स्वच्छ इति । अपां मित्रं गुणग्राही मुनिः ईक्षादिभिर्लोकं पुनाति । कथंभूतः । स्वभावतः स्वच्छः रागादिराहित्यात् । स्निग्धः उपकारकर्तृत्वात् । माधुर्यः मधुरभाषी । माधुर्यमस्ति अस्मिन्नति मत्वर्थीयोऽच् । तीर्थम् तीर्थस्थानम् तीर्थवच्छोधकः । मुनयः सर्वतीर्थानां निवासो हरिचिन्तनात् इत्युक्तेः । स्वच्छत्वादिगुणैरुदकसादृश्यं ज्ञातव्यम् । उपस्पर्श आचमनम् । पक्षे सन्निधियमात्रेण सेवनम् ॥ ४४ ॥ अग्निशिक्षितमाह—तपस्वी ज्ञानातिशयात् । विशेषतस्तपसा । दुर्धर्षोऽक्षोभ्यः पराभवितुमशक्यः स चावुदरभाजनश्च परिग्रहशून्यश्च तथा । युक्तात्मा ज्ञानी सर्वभक्षोऽपि मलं भक्ष्यदोषं नादत्ते न गृह्णाति । यथाऽग्निर्निषिद्धमपि दहन्न दोषभाग् भवतीति तथा मुनिरपि ॥ ४५ ॥ अन्यदप्यग्नेः शिक्षितमाह क्वचिदिति ।

क्वचिच्छन्नः क्वचित् स्पष्ट उपास्यः श्रेय इच्छताम् । भुङ्क्ते सर्वत्र दातॄणां दहन् प्रागुत्तराशुभम्
स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः । प्रविष्ट ईयते तत्तत्स्वरूपोऽग्निरिवैधसि ॥४७॥
विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः । कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ४८
कालेन ह्योघवेगेन भूतानां प्रभवाप्ययौ । नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चिषाम् ४९
गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति । न तेषु युज्यते योगी गोभिर्गा इव गोपतिः॥५०॥
बुध्यते स्वेन भेदेन व्यक्तिस्थ इव तद्गतः । लक्ष्यते स्थूलमतिभिरात्मा चावस्थितोऽर्कवत्॥५१॥
नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् । कुर्वन् विन्देत संतापं कपोत इव दीनधीः॥५२॥
कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ । कपोत्या भार्यया सार्धमुवास कतिचित् समाः॥५३

---

यथाऽग्निः कष्ठेषु क्वच्छन्नः तिरोहितः क्वचिच्च स्पष्टः, तथा मुनिरपि कुसङ्गे छन्नः सज्जनेषु स्पष्टोऽभिव्यक्तः । तथा श्रेयो मोक्षमिच्छतामुपास्यो भवति । कर्तरि षष्ठी । दातॄणाम् आहुतिदातॄणां कर्मिणां प्रागुत्तराशुभं भूतं भविष्यच्च पापं दहन् सर्वत्र परेच्छयैव दत्तं हविर्भुङ्क्ते तथा मुनिरपि । हुत्वाग्नौ मुच्यते पापात् दत्वान्नं ज्ञानिने तथा इत्युक्तेः ॥ ४६ ॥ उच्चनीचत्वादिकं देहोपाधित एव नात्मन इत्यग्नेः शिक्षितमित्याह—इदं सृष्टं देवतिर्यगादिरूपं विप्रशूद्रादिरूपं देहं वा प्रविष्टः विभुः जीवात्मा तत्तत्स्वरूपः स्वोपाध्यनुरूपः सन् प्रतीयते । यथाऽग्निः वक्रवर्तुलादिरूपे काष्ठे तत्तद्रूपः प्रतीयते तद्वत् ॥ ४७ ॥ जन्मादिषड्विकारराहित्यं चन्द्राच्छिक्षितमित्याह विसर्गेति । विसर्गाद्या जन्माद्याः श्मशानान्ता भावा विकाराः देहस्यैव सन्ति न त्वात्मनः । यथा अव्यक्तवर्त्मना अलक्षितवेगेन कालेन चन्द्रस्य कलानामेवोत्पत्त्यादयो भवन्ति न तु चन्द्रस्य तद्वत् । अत्र विशेषो ज्योतिःशास्त्रादवगन्तव्यः । जायते अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यति इति षड्विकारा ज्ञेयाः॥४८। सिंहावलोकन्यायेन पुनरावृत्तदृष्टातेन देहादेः क्षणभंगुरत्वं शिक्षितमित्याह—कालेनेति । ओघवत् नदीप्रहारव द्वेगो यस्य तेन कालेन आत्मनः सम्बन्धिनां भूतानां देहानां प्रभवाप्ययौ जन्मनाशौ प्रवाहरूपेण नित्यावपि[1] न दृश्येते । यथा अग्नेः अर्चिषां ज्वालानामुत्पत्तिनाशौ प्रतिक्षणं भवतः किन्तु न दृश्येते । ओघो योग जलस्य च इति मेदिनी ॥४९॥ आदित्याच्छिक्षितमाह-द्वयेन । गुणैरिति । गुणैरिन्द्रियैर्गुणान् विषयान् शब्दादीन् उपादत्ते गृह्णाति । यथाकालं जिज्ञासुजने आगते सति विमुञ्चति ददाति किन्तु तेषु न युज्यते लब्धं दत्तं वेत्यभिनिवेशं न करोति । यथा गोपतिः सूर्यं गोभिः किरणैः वाः जलानि ग्रीष्मकाले आदत्ते वर्षाकाले विमुञ्चति तद्वत् । गोभिर्लोकं पातीति गोपतिः ॥ ५० ॥ आत्मनो भेदप्रतीतिरुपाधिवशादित्यप्यादित्याच्छिक्षितमित्याह बुध्यत इति । स्वेन रूपेण एकोऽपि आत्मा व्यक्तिस्थः देहोपाधिस्थः तद्गत इव देहस्थ इव स्थूलमतिभिः देहाभिमानिभिः भेदेन बुध्यते । यथाऽर्क एक एव जलोपाधौ प्रतिबिम्बितः उपाधिप्रविष्ट इव भेदेन बुध्यते तद्वत् । स्वामिनस्तु स्वे रूपेऽवस्थित आत्मा भेदेन न बुध्यते । उपाधौ प्रतिबिम्बितस्तु तद्गत उपाधिप्रविष्ट इव भेदेन स्थलमतिभिर्लक्ष्यते । अर्कवदित्यन्वय इत्याहुः । व्यक्तीति व्यक्तिः । क्तिच् । व्यज्यतेऽनया इति वा । क्तिन् । व्यापकत्वादसङ्गत्वाच्च वस्तुतः प्रवेशासंभवादिवेत्युक्तम् ॥ ५१ ॥ कपोतादनासक्तिः शिक्षितेत्याह—नातिस्नेह इति । प्रसङ्गः प्रशब्दोऽत्यर्थकः अत्यासक्तिः स च न कर्तव्यः अति सर्वत्र वर्जयेत् इति न्यायात् । संतापम् । संशब्दोऽत्र नाशद्योतकः । दीनधीः मन्दबुद्धि ॥५२॥ कृतं नीडं स्ववासगृहं येन । सार्धं सह । समाः वर्षाणि ॥५३॥

---

१. प्रतिक्षणं भवन्तावपि ।

कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ । दृष्टिं दृष्टयाङ्गमङ्गेन बुद्धिं बुद्धया बबन्धतुः ॥५४॥
शय्यासनाटनस्थानवार्ताक्रीडाशनादिकम् । मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥५५॥
यं यं वाञ्छति सा राजंस्तर्पयन्त्यनुकम्पिता । तं तं समनयत् कामं कृच्छ्रेणाप्यजितेन्द्रियः॥५६॥
कपोती प्रथमं गर्भं गृह्णती काल आगते । अण्डानि सुषुवे नीडे स्वपत्युः संनिधौ सती ॥५७॥
तेषु काले व्यजायन्त रचितावयवा हरेः । शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः ॥५८॥
प्रजाः पुपुषतुः प्रीतौ दम्पती पुत्रवत्सलौ । शृण्वन्तौ कूजितं तासां निर्वृतौ कलभाषितैः ॥५९॥
तासां पतत्त्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः । प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ॥६०॥
स्नेहानुबद्धहृदयावन्योन्यं विष्णुमायया । विमोहितौ दीनधियौ शिशून् पुपुषतुः प्रजाः ॥६१॥
एकदा जग्मतुस्तासामन्नार्थं तौ कुटुम्बिनौ । परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥६२॥
दृष्ट्वा ताँल्लुब्धकः कश्चिद् यदृच्छातो वनेचरः । जगृहे जालमातत्य चरतः स्वालयान्तिके॥६३॥
कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ । गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥६४॥
कपोती स्वात्मजान् वीक्ष्य बालकाञ्जालसंवृतान् । तानभ्यधावत् क्रोशन्ती क्रोशतो भृशदुःखिता॥
साऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया । स्वयं चाबध्यत शिचा बद्धान् पश्यन्त्यपस्मृतिः।६६।

---

कपोती च कपोतश्च कपोतौ । एकशेषः । स्नेहेन बद्धं हृदयं ययोस्तौ गृहधर्मिणौ मैथुनप्रधानौ ॥ ५४ ॥ शय्या शयनम् । अटनं भ्रमणम् । अशनं भोजनम् । आदिपदेन पानादिग्रहः । विस्रब्धौ कृतविश्वासौ । 'स्रम्भु' विश्वासे अस्मान्निष्ठा । दन्त्यादिरयं न तु तालव्यादिः स च प्रमादार्थक इत्यवधेयम् । वनराजिषु वनपङ्क्तिषु प्रतिवनमित्यर्थः । चेरतुः सहैव चक्रतुः ॥ ५५ ॥ सा यं यमिच्छति तं तं कामम् अभीष्टं वस्तु कृच्छ्रेणापि समनयत् प्रापयत् । यतोऽजितेन्द्रियः कामी । कीदृशी । तर्पयन्ती हासादिना तं प्रसादयन्ती अत एव तेन अनुकम्पिता दयापात्रीकृता ॥ ५६ ॥ काले प्रसवकाले सुषुवे उत्पादयामास । स्वपत्युः । बाहुलकाद् धिसंज्ञाऽभावः ॥ ५७ ॥ तेषु अण्डेषु पक्षिणः व्यजायन्त इति विशेष्यमध्याहार्यम् ।[1] कथंभूताः । हरेः शक्तिभिः कालस्वभावादिभिः रचिता अवयवा येषां ते । कोमलानि अङ्गानि तनूरुहा रोमाणि च येषां ते । दुर्विभाव्याभिः तर्क्यागोचराभिः । कथमेतत्कृतमिति ज्ञातुमशक्याभिरित्यर्थः ॥ ५८ ॥ कलभाषितैः अव्यक्तमधुरालापैः । तासां प्रजानाम् । निवृतौ सुखिनौ ॥५९॥ अदीनानां सनाथानां तासां पितरौ मुदमापतुः । कैः । सुखकरः स्पर्शो येषां तैः पतत्त्रैः पक्षैः । मुग्धचेष्टितैः बालचेष्टाभिः । चञ्चुचालनपूर्वकैः इतस्ततश्चलनादिभिः । प्रत्युद्गमैः सशब्दं संमुखागमनैः ॥ ६० ॥ शिशून् अल्पवयस्कान् प्रजाः पुत्रान् पुपुषतुः । तासां प्रजानाम् । अर्थिनौ अन्नार्थिनौ ॥ ६२ ॥ यदृच्छातः दैवेच्छातः तत्रागतः कश्चित् लुब्धकः तान् कपोतपुत्रान् जालं प्रसार्य जगृहे इत्यन्वयः । कथंभूतान् । स्वालयान्तिके स्वनीडसमीपे चरतः क्रीडतः ॥ ६३ ॥ गतौ तत्पोषणार्थम् । पोषणं भक्ष्यम् ॥६४॥ क्रोशतो मातरं दृष्ट्वा विलापं कुर्वतः तान् बालकान् अभ्यधावत् संमुखभागच्छत् ॥ ६५ ॥ असकृत्स्नेहेन दृढतरस्नेहेन गुणिता बद्धा । दीनं विवशं चित्तं यस्याः सा । पश्यन्ती सती स्वयं शिचा जालेन अबध्यत । अपस्मृतिः शोकेन नष्टचेतना मूर्च्छिता सती ॥ ६५ ॥ कपोतस्तु बद्धान् आत्मजान् बद्धां भार्यां च दृष्ट्वेति

---

१. यद्वा । प्रजा व्यजायन्त ताश्च पुपुषतुरिति योज्यम् ।

कपोतश्चात्मजान् बद्धानात्मनोऽप्यधिकान् प्रियान्। भार्यां चात्मसमां दीनो विललापातिदुःखितः
अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः। अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः ॥६८॥
अनुरूपानुकूला च यस्य मे पतिदेवता। शून्ये गृहे मां संत्यज्य पुत्रैः स्वर्याति साधुभिः॥६९॥
सोऽहं शून्ये गृहे दीनो मृतदारो मृतप्रजः। जिजीविषे किमर्थं वा विधुरो दुःखजीवितः ॥७०॥
तांस्तथैवावृताञ्छिग्भिर्मृत्युग्रस्तान् विचेष्टतः। स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत् ७१॥
तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम्। कपोतकान् कपोतीं च सिद्धार्थः प्रययौ गृहम् ७२॥
एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत्। पुष्णन् कुटुम्बं कृपणः सानुबन्धोऽवसीदति७३॥
यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम्। गृहेषु खगवत् सक्तस्तमारूढच्युतं विदुः ॥७४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

---

शेषः। विललाप शोकाकुलोऽभूत् ॥ ६७ ॥ विलापमाह-त्रयेण। अहो हे जनाः मे अपायं नाशं यूयं पश्यत। अतृप्तस्य मैथुनसुखे। अकृतार्थस्य पारलौकिककृत्यं न कृतवतः। त्रैवर्गिकः त्रिवर्गसाधनभूतः गृहो गृहाश्रमः। वैदिकत्वात्पुंस्त्वम् ।६८। यस्य मे अनुरूपा तं मामित्यन्वयः। पुत्रैः सह स्वः स्वर्गं याति म्रियत इत्यर्थः ॥६९॥ जीवितुमिच्छामि किमर्थं बाहुलकात्सङ्। विधुरो विश्लेषोऽस्यास्तीति मत्वर्थीयोऽच् भार्याहीनः दुःखेन जीवितं जीवनं यस्य सः ॥७०॥ तान् स्त्रीपुत्रान्। यथा चेतनावसरे जालैरावृतास्तथैव स्थितान् न किञ्चिन्निःसृतान्। विचेष्टतः इतस्ततोऽङ्गानि चालयतः। बाहुलकाच्छतृप्रत्ययः। 'शिग्जाले पक्षिणां शिक्ये' इति कोशात्। कपोतः। तानावृतान् तां चावृतां पश्यन्नपि स्वयमपि शिक्षु जालेषु अपतत् ॥७१॥ लुब्धको व्याधः। कपोतकान् कपोतपुत्रान्। ह्रस्वार्थे कन्। सिद्धार्थः सिद्धकार्यः सन् ययौ ॥७२॥ फलितार्थमाह एवमिति। कुटुम्बी कुटुम्बं पुष्णाति चेत्पुष्णातु नात्रापत्तिः किन्तु एवमत्यासक्त्या पतत्रिवत् यदि कुटुम्बं पुष्णन् भवति तर्हि सानुबन्धः सपरिवारो विनश्यति ॥ ७३ ॥ यः अपावृतम् आवरणशून्यं मुक्तेर्द्वारभूतं लोकं मनुष्यदेहं प्राप्य कपोतवदासक्तः तमारूढच्युतं सोपानमारुह्य प्राप्य पतितं विदुः। गृहासक्तिस्तिरश्चामप्यनर्थहेतुः किमुत मनुष्यस्येत्यर्थः ॥७४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां सप्तमोऽध्यायः ॥७॥

## अथाष्टमोऽध्यायः

### ब्राह्मण उवाच

सुखमैन्द्रियकं राजन् स्वर्गे नरक एव च । देहिनां यद् यथा दुःखं तस्मान्नेच्छेत तद् बुधः ॥१॥
ग्रासं समृष्टं विरसं महान्तं स्तोकमेव वा । यदृच्छयैवापतितं ग्रसेदाजगरोऽक्रियः ॥२॥
शयीताहानि भूरीणि निराहारोऽनुपक्रमः । यदि नोपनमेद् ग्रासो महाहिरिव दिष्टभुक् ॥३॥
ओजःसहोबलयुतं बिभ्रद् देहमकर्मकम् । शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि ॥४॥
मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्ययः । अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥५॥
समृद्धकामो हीनो वा नारायणपरो मुनिः । नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥६॥
दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः । प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥७॥

---

अष्टमेऽजगरादिभ्यः शिक्षितं हरिरुद्धवम् ।
प्रोवाच यत्र नैराश्ये पिङ्गलाख्यानमुत्तमम् ॥१॥

प्रारब्धभोगस्यावश्यंभावित्वात्तदर्थं चेष्टा न कार्येत्यजगराच्छिक्षितमित्याह— सुखमिति । ऐन्द्रियकम् इन्द्रियसंबन्धिसुखं स्वर्गे तथा नरके तत्तुल्ये सूकरादिदेहेऽपि भवत्येव । यथा दुःखं प्रयत्नं विनैव लभ्यते तथा । तस्मात् बुधो विवेकी तत् इन्द्रियसुखं नेच्छेत । बाहुलकात्तङ् ॥ १ ॥ आजगरः अजगरवृत्तिः साधकः । कुतः । अक्रियः चेष्टारहितः । यदृच्छया दैवेच्छया प्राप्तं ग्रासं ग्रासोपलक्षितमाहारं ग्रसेत् भुञ्जीत । बाहुलकात्तङभावः । कथंभूतम् । सुमृष्टं सरसम् । मृष्टं सरसशुद्धयोः इति निरुक्तिः । विरसं रसहीनम् कटुतीक्ष्णादि । महान्तं पर्याप्तम् । स्तोकम् अल्पं वा । 'स्तोकस्त्रिष्वल्पचातके' इति धरणिः ॥ २ ॥ यदि ग्रासमाहारं नोपनमेत् न प्राप्नुयात् तर्हि निराहारः अनुपक्रमो निरुद्योग एव बहूनि दिनानि शयीत तूष्णीं तिष्ठेत् । क इव । दिष्टभुक् दैवमेव प्रापकमिति धैर्यवान् महाहिः अजगर इव भवेत् ॥ ३ ॥ ओज इन्द्रियशक्तिः सहो मनःशक्तिः बलं दैहिकशक्तिः तद्युक्तमपि अकर्मकं निर्व्यापारमेव देहं बिभ्रत् शयान एव भवेत् । किन्तु स्वार्थे परमार्थे वीतनिद्रः परमात्मालोचने दत्तदृष्टिश्च भवेत् । अतः किञ्चिदपि नेहेत न चेष्टेत । किं बहुना इन्द्रियवानपि नेहेत दर्शनादि व्यापारमपि न कुर्यादित्यर्थः ॥ ४ ॥ समुद्राच्छिक्षितमाह—मुनिः स्तिमितोदः निश्चलोदकः अर्णव इव भवेत् । कथंभूतः । बहिः प्रसन्नः अन्तर्गम्भीरश्च । दुर्विगाह्यः दुष्प्रवेश्यः दुर्ज्ञेयश्च अलक्ष्याभिप्रायत्वात् । दुरत्ययोऽनतिक्रमणीयः तेजस्वित्वात् । अनन्तपारः कालतो देशतश्च अपरिच्छेद्यः स्वरूपाविर्भावात् । अक्षोभ्योऽविकार्यः रागाद्यभावात् । प्रसन्नत्वादिधर्मानादायैतैर्गुणैः समुद्रतुल्यो भवेदित्यर्थः ॥ ५ ॥ अन्यदपि समुद्रात् शिक्षितमाह समृद्धेति —वर्षासु सरिद्भिः समृद्धोऽपि सागरो यथा नोत्सर्पेत न वर्धेत । ग्रीष्मे च तद्विहीनोऽपि यथा न शुष्येत । तथा समृद्धकामः संप्राप्तभोगस्तद्विहीनो वा मुनिर्नहृष्येत् नवा शोचेदित्यर्थः । अत्र हेतुः । नारायणपरायणः नतु विषयपरः । शुष्येत । बाहुलकात्तङ् ॥ ६ ॥ रूपासक्तिर्नाशहेतुरिति पतङ्गाच्छिक्षितमाह— दृष्ट्वेति । देवस्य विष्णो र्मायां मोहकशक्तिं स्त्रियं दृष्ट्वा तस्या भावैर्हावाद्यैः प्रलोभितः अन्धे तमसि नरके पतति । यतोऽजितेन्द्रियः । रूपगन्धस्पर्शशब्दरसैः पञ्चविषयैः मोहिताः पतङ्गमधुकरगजहरिणमीना हता भवन्ति अतोऽनासक्तौ एते पञ्च गुरवो मया कृता इत्यवधेयम् ॥ ७ ॥ एतत्प्रपञ्चयति-योषिदिति । मायया रचितेषु

योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ।
प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ८ ॥
स्तोकं स्तोकं ग्रसेद् ग्रासं देहो वर्तेत यावता । गृहानहिंसन्नातिष्ठेद् वृत्तिं माधुकरीं मुनिः ॥ ९ ॥
अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः । सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥१०॥
सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षितम् । पाणिपात्रोदरामत्रो मक्षिकेव न संग्रही ॥११॥
सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षुकः । मक्षिका इव संगृह्णन् सह तेन विनश्यति ॥१२॥
पदापि युवतीं भिक्षुर्न स्पृशेद् दारवीमपि । स्पृशन् करीव बध्येत करिण्या अङ्गसङ्गतः ॥१३॥
नाधिगच्छेत् स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः । बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥१४
न देयं नोपभोग्यं च लुब्धैर्यद् दुःखसंचितम् । भुङ्क्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥१५॥
सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः । मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥१६॥

---

योषिदादिद्रव्येषु उपभोगबुद्ध्या सुखसाधनबुद्ध्या प्रलोभितात्मा आसक्तचित्तः अत एव नष्टदृष्टिः लुप्तविवेकः सन् मूढः नश्यति । मायैव क्वचिद्योषिद्रूपा क्वचिद्धिरण्यादिरूपा न च ततोऽन्यक्तिश्चिदित्यर्थः । यद्यपि स्त्रियां पञ्चापि विषया एकत्रैव निहिताः सन्ति तथापि दृष्ट्वा प्रथमं दृष्टिरेव निपतति अतस्तस्यैव प्राधान्यं बोध्यम् ॥ ८ ॥ मधुकराच्छिक्षितमाह स्तोकमिति । यावता आहारेण देहो वर्तेत जीवेत् तावन्तमेव ग्रासमाहारं ग्रसेत् भुञ्जीत । किं कुर्वन् । गृहान् गृहस्थान् अहिंसन् अपीडयन् तेभ्यः स्तोकं स्वल्पं स्वल्पं गृह्णन् सन् । एवं मुनिः माधुकरीम् ईषदीषदन्नग्रहणरूपां वृत्तिमाश्रयेत् । अहिंसन्निन्युक्तेर्हिंसाया असत्त्वे तु एकत्रापि भुञ्जीतेति ज्ञेयम् । अत्र गृहपदेन गृहस्था उच्यन्ते 'मञ्चाः क्रोशन्तीति वत्' तात्स्थ्यात्ताच्छब्द्यम् इति न्यायात् । एकस्माद् ग्रहणे तन्मोहेन बन्धः स्यात् यथा मधुकरो विशिष्टगन्धलोभेन एकस्मिन्नेव पद्मेवसन् सूर्यास्तसमये मुकुलिते तस्मिन् बध्यते-तद्वत् ॥९॥ न केवलमन्ने एव माधुकरी वृत्तिरपितु शास्त्रेऽपीत्याह अणुभ्य इति । कुशलो विवेकी नरः । सर्वतः सर्वेभ्यः । सारं भगवद्भक्तिजनकं वाक्यम् आदद्यात् गृह्णीयात् । बाहुलाकारात्ङ्भावः । षट्पदो भ्रमरः ॥१०॥ मधुकृत् द्विविधो भवति मधु कृन्तति पुष्पादाच्छिनत्तीति मधुकृत् भ्रमरः मधु करोति आहारत्वेन वा मधुकृत् मधुमक्षिका च । तत्राद्याच्छिक्षितं द्वितीयादाह-सायन्तनमिति । इदं सायङ्कालीनभोजनार्थम् । इदं चागामि दिनभोजनार्थमिति कृत्वा भिक्षितमन्नं न संगृह्णीत । किन्तु पाणावेव पात्रं यस्य तन्मात्रग्राही उदरमेव पात्रं यस्य स चासौ स च तथा भवेत् । संग्रही तु मक्षिकेव न भवति नश्यतीत्यर्थः ॥ ११ ॥ एतदेव स्पष्टयति-सायन्तनमिति । तेन संगृहीतेन सहैव विनश्यति ॥ १२ ॥ स्पर्शासक्तिर्नाशहेतुरिति गजाच्छिक्षितमित्याह-पदापीति । भिक्षुः संन्यासी पादेनापि दारवीं काष्ठनिर्मिताम् अपिना चित्रस्थामपि न स्पृशेत् किमुत साक्षात् । स्पृशंस्तु करी हस्ती करिण्या अङ्गस्पर्शात् मोहितः सन् तृणादिपिहितगर्ते निपतन् वध्यते हस्तिजाविभिः ॥१३॥ एतदेव विवृणोति-नाधिगच्छेदिति । प्राज्ञो विवेकी नाधिगच्छेत् नोपगच्छेत् । इयं ममैव भोग्येति विश्वस्तो न भवेत् । किन्तु मृत्युं मृत्युरूपां तां पश्येत् । यतस्तयाऽऽनीतैर्बलाधिकैर्जारैः स स्त्रीगन्ता हन्येत । यथा करिण्यामासक्तो गजोऽन्यैर्हन्यते तद्वत् ॥ १४ ॥ दानभोगहीनं धनमन्यो गृह्णातीत्यत्र मे मधुहा गुरुरस्मादेतच्छिक्षितमित्याह-नेति । लुब्धैर्लोभग्रस्तैः संचितं यत् तदन्यो बलवान् भुङ्क्ते तदपि अन्यः । तच्च अन्यः । यथा मधुहा मक्षिकाभिः सञ्चितं मधु भुङ्क्ते तद्वत् । कथंभूतः । अर्थं धनं मधु वा तत्प्राप्त्युपायं च वेत्तीति अर्थवित् । उभयोर्विशेषणम् ॥ १५ ॥ उद्योगं विनापि भोगप्राप्तिरित्यत्रापि मधुहा गुरुरित्याह-सुदुःखेति । सुदुःखेन

ग्राम्यगीतं न शृणुयाद् यतिर्वनचरः क्वचित् । शिक्षेत हरिणाद् बद्धान्मृगयोर्गीतमोहितात् ।।१७।।
नृत्यवादित्रगीतानि जुषन् ग्राम्याणि योषिताम् । आसां क्रीडनको वश्य ऋष्यशृङ्गो मृगीसुतः १८
जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः । मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु वडिशैर्यथा ।।१९।।
इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः । वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ।।२०।।
तावजितेन्द्रियो न स्याद् विजितान्येन्द्रियः पुमान् । न जयेद् रसनं यावज्जितं सर्वं जिते रसे २१
पिङ्गला नामा वेश्याऽऽसीद् विदेहनगरे पुरा । तस्या मे शिक्षितं किंचिन्निबोध नृपनन्दन ।।२२।।
सा स्वैरिण्येकदा कान्तं संकेत उपनेष्यती । अभूत् काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ।।२३।।
मार्ग आगच्छतो वीक्ष्य पुरुषान् पुरुषर्षभ । ताञ्छुल्कदान् वित्तवतः कान्तान् मेनेऽर्थकामुका ।।
आगतेष्वपयातेषु सा संकेतोपजीविनी । अप्यन्यो वित्तवान् कोऽपि मामुपैष्यति भूरिदः ।।२५।।

---

अतिदुःखेन कृष्यादिना सम्पादितैर्वित्तैः गृहाशिषः गेहीयभोगान् आशासानामिच्छतां गृहस्थानां भोगान् अग्रत एव यतिर्भुङ्क्ते[1] तथाविधानात् । यथा मधुहा मक्षिकाभ्यः प्रथमं मधु भुङ्क्ते । आङः शासु इच्छायाम्' 'इति शानच्' नलोपश्छन्दोऽनुरोधेन ।।१६।। ग्राम्याणां विषयिणां गीतं प्रेमालापम् ग्रामं विषयसमूहं सेवन्ते इति ग्राम्याः । मृगयोर्व्याधस्य । हरिणात् शिक्षेत न शृणुयादित्येतत् ।।१७।। ग्राम्यगीतासक्तेर्दृष्टान्तमाह-नृत्येति । ग्रामे भवानि ग्राम्याणि विषयसम्बन्धीनि जुषन् सेयमानः । बाहुलकाच्छतृप्रत्ययः । आसां योषितां क्रीडनक इव वश्यो वभूवेति शेषः । लुप्तोपमा । यद्वा । वशवर्ती सन् क्रीडनको वभूव । मृग्या जातत्वात् विभाण्डकपुत्रो ऋष्य शृङ्गनामा ।। १८ ।। रसासक्तिर्नाशहेतुरिति मीनाच्छिक्षितमित्याह-जिह्वयेति । असती विषयोन्मुखी बुद्धिर्यस्य सः । जनः अतिप्रमाथिन्या अतिक्षोभिकया दुर्जयया मृत्युम् ऋच्छति प्राप्नोति । यतो रसे विमोहितोऽत्या सक्तः । यथा मत्स्यः बडिशैर्मांसलिप्तलोहकण्टकैस्तद्वत् । एवं शब्दस्पर्शरूपगन्धरसैः पञ्चभिर्विषयैः कुरङ्गमा वङ्गपतङ्गभृङ्गमीनाः पञ्चापि हता भवन्ति । तथा च संगृहीतश्लोकः—कुरङ्गमातंगपतंगभृङ्गमीना हताः पञ्चभिरेव पञ्च इति ।। १९ ।। दुर्जयत्वं दर्शयति-इन्दियाणीति । रसनं रसनेन्द्रियम् । तत् रसनम् ।। २० ।। विजितानि अन्यानि इन्द्रियाणि रसनाव्यतिरिक्तानि येन सः । रसनं रसनेन्द्रियन् । रसे रसनेन्द्रिये जिते सति सर्वं जगदपि जितं स्यात् किमुत इन्द्रियवृन्दम् ।।२१।। पिङ्गलाया नैराश्यं शिक्षितमित्यर्थे कथानकमाह—पिङ्गलेति । तस्याः सकाशात् मे मया किञ्चित् वैराग्यं शिक्षितं तत् त्वं निबोध शृणु । पिङ्गं स्वर्णं लाति गृह्णाति स्वदेहं दत्त्वेति । पिङ्गं पीताम्बरं श्रीकृष्णं लातीति वा पिङ्गलेत्यन्वर्थनाम्नी सा अतो ज्ञानप्रकरणेऽप्यस्याः परमो-पयोगितैव ज्ञेया भक्तिसिक्तपरमवैराग्यप्रदत्वात् ।। २२ ।। स्वैरिणी पुंश्चली सा पिङ्गला संकेते रतिस्थाने कान्तं सुन्दरं पुरुषम् उपनेष्यती उपनेतुम् । हेतौ शतृप्रत्ययः । सायंकाले वहिर्द्वारि द्वारबहिर्भागे अभूत् तस्थावित्यर्थः । उत्तमं प्रतारणोपयोगि ।। २३ ।। तान् वित्तवतो धनिकान् अत एव शुल्कदान् शुल्कं मैथुन्यमूल्यं तत्प्रदान् । कान्तान् सुरतयोग्यान् मेने ।। २४ ।। रत्यर्थमागतेषु पुनश्च रतिं कृत्वा गतेषु सत्सु संकेतोपजीविनी मैथुनोपजीविनी सा पिङ्गला अचिन्तयदिति शेषः । किं तत् । अपि संभावनायाम् । अन्योऽपि कश्चिन्मामु-पैष्यतीत्येतत् । भूरिदः बहुप्रदः । सा इत्येवं दुराशया इत्युत्तरेणान्वयो वा ।। २५ ।। एवं दुराशया निजाङ्ग

---

१. यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नामदत्वा तु भुक्त्वा चान्द्रायणं चरेत् ।।

एवं दुराशया ध्वस्तनिद्रा द्वार्यवलम्बती । निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥२६॥

तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः । निर्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः ॥२७॥

तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम । निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ॥

न ह्यङ्गाऽजातनिर्वेदो देहबन्धं जिहासति । यथा विज्ञानरहितो मनुजो ममतां नृप ॥२८॥

पिङ्गलोवाच

अहो मे मोहवितर्तिं पश्यताऽविजितात्मनः । या कान्तादसतः कामं कामये येन बालिशा ॥२९॥

सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ।
अकामदं दुःखभयादिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा ॥ ३० ॥

अहो मयाऽऽत्मा परितापितो वृथा सांकेत्यवृत्त्यातिविगर्ह्यवार्तया ।
स्त्रैणान्नराद् यार्थतृषोऽनुशोच्यात् क्रीतेन वित्तं रतिमात्मनेच्छती ॥ ३१ ॥

यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचा रोमनखैः पिनद्धम् ।
क्षरन्नवद्वारमगारमेतद् विण्मूत्रपूर्णं मदुपैति कान्या ॥ ३२ ॥

---

दानेन धनाशया द्वारि अवलम्बमाना स्थिता । बहिर्निगच्छन्ती पुनरन्तः प्रविशती निशीथमर्धरात्रं समपद्यत प्राप्तवती ॥ २६ ॥ दीनं किंकर्तव्यमूढं चेतो यस्यास्तस्याः परमः लोकोत्तरः निर्वेदः परितापजन्यविरागः । विषयेषु हेयत्वबुद्धिरित्यर्थः जज्ञे उत्पन्नः । परम इत्यत्र हेतुः । सुखावहः । सुखं श्रीकृष्णविषयकानन्द मावहति प्रापयतीति तथा सः । कथंभूते निर्वेदः । वित्तचिन्ताजन्यः ॥२७॥ निर्विण्णं विरक्तं चित्तं यस्यास्तस्या इति संबन्धसामान्ये षष्ठी ज्ञेया । गीतं यत् यथा यथावत् मम मत्तः सकाशात् त्वं शृणु । हि यस्मात् निर्वेदो वैराग्यमेव पुरुषस्य आशा एव संसारबन्धस्य पाशास्तेषां छेत्ता यथाऽसिः खड्गस्तद्वत् ॥२८॥ तत्र हेतुः ।नहीति । अङ्ग हे राजन् ! अजातनिर्वेदोऽनुत्पन्नवैराग्यः देहबन्धं संसारं न जिहासति न त्यक्तु मिच्छति यथा ममताम् ॥ २९ ॥ अहो आश्चर्यम् । मे मम मोहविस्तारं यूयं पश्यत । न विजित आत्मा मनो यया तस्याः । अत्र हेतुः । येन मोहेन बालिशा विवेकशून्या सती अहम् असतः तुच्छात् कामं रतिधनं कामये ॥ ३० ॥ बालिशत्वं प्रकटयति—सन्तमिति चतुर्भिः । अन्तर्यामित्वात् समीपे हृदये सन्तमिममीश्वरं नित्यं रमणं पतिं विहाय तुच्छं नश्वरमहं भजे अतोऽहमज्ञा एव । अकामदं कामपूर्तिदातुमसमर्थम् । निशि तदङ्गणे स्थितस्य महायोगिनो दत्तात्रेयस्य कृपयैव तस्या भगवत्येतादृशो मतिर्जातेत्यवधेयम् ॥ ३१ ॥ अतो मया आत्मा वृथा परितापितः । कया । सांकेत्यवृत्या मैथुनवृत्या । संकेतेन गृह्यते सांकेत्यं रतिमौल्यद्रव्यं तेन या वृत्तिस्तया । हेतौ तृतीया । 'कित' निवासे इत्यस्मात् संकेतो रतिस्थानं तत्र भवा साकेत्या सा चासौ वृत्तिस्तता मैथुनवृत्त्या । कथंभूतया मया । अतिविगर्ह्या अतीवनिन्द्या देहार्पणरूपा वार्ता चर्चा प्रवृत्तिर्वा यस्यास्तया । यद्वा । बहुव्रीहिणा मयेत्यस्यैव विशेषणद्वयम् । तथाहि —अतिविगर्ह्या वार्ता चर्चा यस्यास्तया । कुतः । सांकेत्येन मैथुने नवृत्तिर्जीविका यस्यास्तया । परितापमाह— या अहं स्त्रैणात् स्त्रीलम्पटात् अथ च अर्थंतृषः लोभग्रस्तात् अत एव अनुशोच्यात् नश्वरात् नरात् रतिं वित्तं च इच्छती अभुवम् । केन । नरेण क्रीतेन स्वयं मया विक्रीतेन आत्मना देहेन । धिङ् मामित्यर्थः । यद्यपि 'आजीवी जीविका वार्ता वृत्तिर्वर्तनजीवने' इत्यमरात् वृत्तिवार्ताशब्दयोः पर्यायवाचकत्वं प्रतीयते तथापि 'वार्ता प्रवृत्तिर्वृत्तान्तः' वार्ताशब्दोऽत्र प्रवृत्तिपरो ग्राह्यस्तेन समानार्थंक

विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः । यान्यमिच्छन्त्यसत्यस्मादात्मदात् काममच्युतात् ॥३३॥
सुहृत् प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् । तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥३४॥
कियत् प्रियं ते व्यभजन् कामा ये कामदा नराः । आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः ३५
नूनं मे भगवान् प्रीतो विष्णुः केनापि कर्मणा । निर्वेदोऽधं दुराशाया यन्मे जातः सुखावहः ॥३६॥
मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः । येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ॥३७॥
तेनोपकृतमादाय शिरसा ग्राम्यसंगताः । त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥३८॥
संतुष्टा श्रद्दधत्येतद् यथालाभेन जीवती । विहराम्यमुनैवाहमात्मना रमणेन वै ॥३९॥
संसारकूपे पतितं विषयैर्मुषितेक्षणम् । ग्रस्तं कालाहिनाऽऽत्मानं कोऽन्यस्त्रातुमधीश्वरः ॥४०॥

---

योरपि परस्परं नासङ्गतिरिति ॥ ३२ ॥ विण्मूत्रपूर्णं विष्ठामूत्रयोः पूर्णं पात्रम् एतत् अगारं नरशरीरं मत् मत्तोऽन्या का वा विवेकवती स्त्री कान्तबुद्ध्या उपैति सेवते न काऽपीत्यन्वयः । कीदृशम् । अस्थिभिरेव निर्मिता वंशादयो यस्मिन् । त्वचा चर्मणा तथा रोमभिः नखैश्च पिनद्धम् आच्छादितम् । किञ्च । क्षरन्ति कफादिकमुद्गिरन्ति नव द्वाराणि छिद्राणि यस्मिन् तत् । नेत्रनासिकाकर्णानां प्रत्येकस्य छिद्रद्वयत्वात् षट्कम् । मुखं गुदलिङ्गे चेत्येवं नवेन्द्रियद्वाराणि । पृष्ठे यत् दीर्घमस्थि मेरुदण्डः सोऽत्र वंशः । पार्श्वास्थीनि वंश्यानि स्थूणा करचरणास्थीनि ॥ ३३ ॥ विदेहानां ज्ञानिनाम् पुरे । मूढधीः अविवेकवती । अविवेकमेवाह-या असती पुंश्चली अहम् अस्मात् अच्युतात् अन्यं कामं भोगमिच्छन्ती अस्मि साऽहमेकैवेत्यन्वयः । यत्रन्तात् ङीप् । आत्मदात् । आत्मानमेव ददाति किमुत नश्वरधनादिकम् । 'धनंजयस्यन्दनभूषणं धनम्' इत्युक्ते स्तस्यैवाविनाशिधनत्वेनाचार्यचरणैरङ्गीकृतत्वात् । अस्मादिति किञ्चित्स्फूर्त्या साक्षादिव निर्देशः ॥ ३४ ॥ अयं हरिः सुहृत् निरपेक्षहितकारित्वात् । प्रेष्ठतमः नित्यानन्दप्रदत्वात् । नाथः कामपूरकत्वात् । कुतः । सर्वेषामात्मा अन्तर्यामित्वात् । अतः आत्मना आत्मनिवेदेन तं परमात्मानं विक्रीय विशेषेण क्रीत्वा । अतः परं तस्यैवायं देहो नान्यस्य कस्यचिदिति भावनयेत्यर्थः । अनेनैव रमे परमसुखमनुभवामि । यथा लक्ष्मी रमते तद्वत् । इयं पिङ्गला न सामान्यवेश्या किन्तु विशिष्टाप्सरःस्वेका रूपसौन्दर्यगर्वितत्वात् रमावेशात्तया जाता अन्यथाऽस्या नैतादृशी बुद्धिरुत्पद्येतेत्यवधेयम् । अनेनैवेत्येवकारेणान्यस्या अभजनीयत्वं सूचितम् ॥ ३५ ॥ तदेवाह-कियदिति । आद्यन्तवन्तो नश्वरा ये कामाः विषया ये वा कामदा नरा देवा वा ते भार्याया मम कियत् प्रियं व्यभजन् अकुर्वन् न किञ्चित् । यतः सर्वेऽपि कालविद्रुताः कालकवलिता अतः स एवैकः सेव्य इत्यर्थः ॥ ३६ ॥ आत्मानमभिनन्दति—नूनमिति । नूनमिदानी मे मम केनापि कर्मणा श्रीदत्तात्रेयसंग लक्षणेन । यद् यतः मे मम अयं निर्वेदो विरागो जातः । सुखावहः भगवत्प्राप्तिजनकत्वात् । कथंभूतायाः । अङ्गार्पणेन धनविषयिणी दुष्टा आशा तृष्णा यस्यास्तस्या मे ॥ ३७ ॥ मन्दभाग्याया मम एवं क्लेशा न स्युः न भवितुमर्हा इत्यर्थः । मम तु जाता अतोऽहं न मन्दभाग्या । निर्वेदहेतवः वैराग्योत्पादकाः । येन निर्वेदेन अनुबन्धं निर्हृत्य गृहादिकं परित्यज्य शमम् ऋच्छति शान्ति प्राप्नोति । यद्वा । शम् आनन्दलक्षणम् अं श्रीवासुदेवम्' 'अकारो वासुदेवः' इत्युक्तेः । अनुबध्नातीति अनुबन्धस्तम् ॥ ३८ ॥ तेन विष्णुना उपकृतं कृत-मुपकारं निर्वेदलक्षणं शिरसा गृहीत्वा ग्राम्येषु विषयेषु संगताः संलग्ना दुराशाः ॥३९॥ कथं व्रजसि सन्तुष्टेति । यथालाभेन सन्तुष्टा तेनैव च जीवन्ती । बाहुलकान्नुमोऽभावः । एतद् अग्रिमपद्योक्तं श्रद्दधती विश्वसती । अमुनैव आत्मना परमात्मना श्रीकृष्णेन रमणेन पत्या सह विहरामि । वै निश्चये ॥ ४० ॥ मुषितेक्षणमप-

आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाखिलात् । अप्रमत्त इदं पश्येद् ग्रस्तं कालाहिना जगत् ४१

ब्राह्मण उवाच

एवं व्यवसितमतिर्दुराशां कान्ततर्षजाम् । छित्त्वोपशममास्थाय शय्यामुपविवेश सा ॥४२॥

आशा हि परमं दुःखं नैराश्यं परमं सुखम् । यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥४३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥

---

हृतविवेकम् । कालसर्पेण ग्रस्तं च आत्मानम् अन्यः कृष्णादन्यः को वा ब्रह्मादिः त्रातुमधीश्वरः समर्थो भवेत् ॥४१॥ तर्हि किमात्मत्राणाय तं भजिष्यसि-नेत्याह । यदा इदं ग्रस्तं जगत् पश्येत् ततश्चाप्रमत्तः सन् अखिलात् ऐहिकामुष्मिकभोगात् निर्विद्येत विरक्तो भवेत् तदा आत्मैव आत्मनो गोप्ता भवेत् । अतो मम रक्षायाः स्वतः सिद्धत्वात्प्रेम्णैव तं भजामीत्याशयः ॥ ४२ ॥ एवमुक्तरीत्या । व्यवसितमतिः निश्चितमतिः । कान्तस्य यस्तर्षोऽभिलाषस्तस्माज्जातां दुराशां धनाशां त्यक्त्वा शान्तिमाश्रित्य सुप्ता अभूत् ॥ ४३ ॥ निष्कर्षमाह-आशेति । दुःखं दुःखहेतुः । सुखं सुखहेतुः । यथा दुःखिता पिङ्गला सुखपूर्वकं सुप्ता अभूत् । यद्वा । सुखम् आनन्दनिधिं श्रीकृष्णमेव यथा सुष्वाप तस्मिन् लीनाऽभूत् । यथा योगे द्वितीया । 'ततोऽन्यत्रापि दृश्यते, इत्यनुशासनात् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायांमेकादशस्कन्धे गूढार्थदीपिन्यामष्टमोऽध्यायः ॥

## अथ नवमोऽध्यायः

ब्राह्मण उवाच

परिग्रहो हि दुःखाय यद् यत् प्रियतमं नृणाम् । अनन्तं सुखमाप्नोति तद् विद्वान् यस्त्वकिंचनः १

सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः । तदामिषं परित्यज्य स सुखं समविन्दत ॥२॥

न मे मानावमानौ स्तो न चिन्ता गेहपुत्रिणाम् । आत्मक्रीड आत्मरतिर्विचरामीह बालवत् ॥३॥

---

नवमे कुररादिभ्यः शरीराच्चोपशिक्षितम् ।

यदुः श्रुत्वाऽतितृप्तोऽभूदिति प्राहोद्धवं हरिः ॥ १ ॥

कुरराच्छिक्षितमाह—परिग्रह इति । यत् यत् प्रियतमं वस्तु तस्य तस्य परिग्रहो दुःखायैव भवति । हि एवार्थे । तत् परिग्रहस्य दुखरूपत्वं विद्वान् जानन् सन् यस्तु अकिञ्चनः परिग्रहशून्यः न तु दरिद्रः सोऽनन्तं सुखमाप्नोतीत्यन्वयः ॥ १ ॥ तदेवाह—सामिषमिति । निरामिषा ये बलिनः श्येनगृध्रादयस्ते सामिषं समांसं कुररं 'चील' इति ख्यातं पक्षिणं जघ्नुः । स कुररः ॥ २ ॥ अर्भकशिक्षितमाह—नेति । मानावमानौ तज्जनित सुखदुःखे । गेहवतां पुत्रवतां च या चिन्ता साऽपि मे नास्ति । आत्मना सह क्रीडा यस्य । कुतः । आत्मनि

द्वावेन चिन्तया मुक्तौ परमानन्द आप्लुतौ । यो विमुग्धो जडो बालो यो गुणेभ्यः परं गतः ॥४॥
क्वचित् कुमारी त्वात्मानं वृणानान् गृहमागतान् । स्वयं तानर्हयामास क्वापि यातेषु बन्धुषु॥५॥
तेषामभ्यवहारार्थं शालीन् रहसि पार्थिव । अवघ्नन्त्याः प्रकोस्ठस्थाश्चक्रुः शङ्खाः स्वनं महत् ।६।
सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः । बभञ्जैकैकशः शङ्खान् द्वौ द्वौ पाण्योरशेषयत्॥७॥
उभयोरप्यभूद् घोषो ह्यवघ्नन्त्याः स्म शङ्खयोः । तत्राप्येकंनिरभिददेकस्मान्नाभवद् ध्वनिः॥८॥
अन्वशिक्षमिमं तस्या उपदेशमरिंदम । लोकाननुचरन्नेताँल्लोकतत्त्वविवित्सया ॥९॥
वासे बहूनां कलहो भवेद् वार्ता द्वयोरपि । एक एव चरेत् तस्मात् कुमार्या इव कङ्कणः ॥१०॥
मन एकत्र संयुज्याज्जितश्वासो जितासनः । वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥११॥

यस्मिन् मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून् ।
सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥१२॥

---

रतिः प्रीतिर्यस्य । इह लोके बालवत् सुखम् ॥ ३ ॥ चिन्तया मानापमानादिजनितया । आप्लुतौ निमग्नौ । विशेषेण मुग्धो मूढ इति विमूढो यः । 'मुग्धः सुन्दरमूढयोः' इति विश्वः । जडः ज्ञानोद्यमरहितश्च । यश्च । गुणेभ्यः गुणत्रयात्मिकायाः प्रकृतेः परमीश्वरं प्राप्तस्तौ द्वावित्यन्वयः ॥४॥ कुमार्याः शिक्षितं वक्तुं कथानकमाह—क्वचिदित्यादिना । क्वचिद् नगरे। तुना दैन्यं सूचितम् । आत्मानं वृणानान् वरितुमागतान् । 'लक्षणहेत्वोः' इति शानच् बन्धुषु पित्रादिषु । क्वापि कार्यार्थं गतेषु तत्सु स्वयं तान् अर्हयामास आतिथ्येन सम्मानयामास ॥५॥ तेषांवरणार्थमागतानामभ्यवहारार्थं भोजनार्थं[1] रहसि एकान्ते शालीन् धान्यानि कुट्टयन्त्यास्तस्याः प्रकोष्ठस्थाः शांखाः शंखवलयाः कङ्कणाकाराः ( चुरियां इति प्रसिद्धाः ) महत् अधिकं यथा स्यात्तथा ध्वनि चक्रुः । स्वनशब्दस्य पुंस्त्वात् महदिति क्रियाविशेषणं कार्यं न तु स्वनमित्यस्य । 'प्रकोष्ठं कलाई इति ख्यातम् ॥ ६ ॥ सा कुमारी । महती कुलीना । अतस्तत् धान्यकुट्टनं जुगुप्सितं निन्दितं दरिद्रताद्योतकत्वात् मत्वा ततः कुट्टनात् व्रीडिता सती एकमेकं कृत्वा शंखं बभञ्ज करात् पृथक् कृतवती । भंजनस्यामङ्गलसूचकत्वाद्धातूनामनेकार्थता स्वीक्रियते ॥ ७ ॥ अवघ्नन्त्याः कुट्टयन्त्यास्तस्याः । बाहुलकान्नुम् । तत्रापि द्वयोरपि मध्ये । एकं निरभिदत् पृथक् कृतवती । लोकान् अनुचरन् जनसमूहेषु विचरन् अहं तस्याः सकाशात् उपदेशम् । 'अत्यन्तसंयोगे द्वितीया । लोकेषु जनेषु यत् तत्त्वं हेयोपादेयवस्तुनः स्वरूपं तस्य ज्ञातुमिच्छया । 'विद्लृ लाभे' इत्यस्मात् । अन्यथेडापत्तिर्दुर्वारा ॥ ९ ॥ वास इति प्रथमान्तपाठे कलहः कलहहेतुः । वार्ता गोष्ठी हेतुर्भवेत् । यत एवं तस्मादेक एवेत्यन्वयः ॥ १० ॥ शरकाराच्चित्तैकाग्रता शिक्षितेत्याह—मन इति । अतन्द्रितो भ्रूमध्य दृष्टिर्योगी[2] वैराग्येण विक्षेपाभावात् जितासनः प्राणाभ्यासेन च जितश्वासः सन् लक्ष्ये स्थिरता ताभ्यां ध्रियमाणं वशीक्रियमाणं मनः एकत्र भगवति संयुज्यात् । 'अभ्यासवैराग्याभ्यां तन्निरोधः । इति पातञ्जलात् 'प्राणवृत्तौ विलीनायां मनोवृत्तिर्विलीयते' इति योगशास्त्राच्च ॥ ११ ॥ एकत्रेति कुत्र—तदाह—यदेतत् मनः सत् तमोरजःस्वभावत्वात् लयविक्षेपात्मकं यस्मिन् आनन्दरूपे भगवति श्रीकृष्णे लब्धास्पदं सत् कर्मरेणून् कर्मवासना मुञ्चति तस्मिन् संयुज्यादिति पूर्वेणान्वयः । विधूय निरस्य । ततो रजस्तमसोरभावे विक्षेपलयाभावात् निर्वाणं मुक्तिस्थानं ब्रह्म उपैति प्राप्नोति ।[3] कुतः । अनिन्धनम् । इन्धनं गुणास्तत्कार्याणि च तै

---

१. 'भोजनेऽभ्यवहारः स्यात्' इति कोशात् ।
२. रागवशादेव मन इतस्ततश्चलति अतः ।　　३. तद्ब्रह्म निर्वाण सुखं विदुर्बुधाः' इत्युक्तेः ।

तदैवमात्मन्यवरुद्धचित्तो न वेद किंचिद् बहिरन्तरं वा।
यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥१३॥

एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः। अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः ॥१४॥

गृहारम्भोऽतिदुःखाय विफलश्चाध्रुवात्मनः। सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥१५॥

एको नारायणो देवः पूर्वसृष्टं स्वमायया। संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥१६॥

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः। कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु।
सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥१७॥

परावराणां परम आस्ते कैवल्यसंज्ञितः। केवलानुभवानन्दसंदोहो निरुपाधिकः ॥१८॥

केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम्। संक्षोभयन् सृजत्यादौ तया सूत्रमरिंदम ॥१९॥

---

रहितम्। यद्वा। अनिन्धनं ज्योतिरिवेति लुप्तोपमा ॥ १२ ॥ ततो न द्वैतप्रतीतिरित्याह—तदेति। यदा एवमात्मनि श्रीकृष्णे निरुद्धचित्तस्तदा बहिर्दर्शनादिना घटादि अन्तरं स्मृत्या सुखादि किञ्चिदपि न वेद। यथा इषुकारः वाणकर्ता भेर्यादिघोषैः सह समीपे ससैन्यं गच्छन्तमपि नृपतिं न वेद। कुतः। इषौ वाणे लक्षणया तस्य ऋजूकरणे गतात्मा संलग्नचितः ॥१३॥ सर्पाच्छिक्षितं निगदति—एकचारीति। यथा सर्पं एकाचारी एकाकी विचरति तथा मुनिरपि एक एव विचरेदित्यन्वयः। उभयोरपि पञ्च विशेषणानि। अनियतः नियतस्थानरहितः। अप्रमत्तः साधने। पक्षे दुर्जनसावधानश्च। गुहायां शेते गुहाशयः। एकान्तवासी। उभयपक्षे। 'रुद्धा गुहा' इत्युक्तेः। यद्वा। 'गुह' संवरणे इत्यस्मात् गुहं निगूढं ब्रह्म तत्राशयोऽन्तः करणं यस्य सः। 'यथा निगूढं पुरुषं कुयोगिनः' इत्युक्तेः। आचारैः गतिभिः सविषो निर्विषो वेति न लक्ष्यते। पक्षे जडवद्योगाचरणैर्विद्वान् अविद्वान् वा न ज्ञायमानः। मितभाषी च ॥ १४ ॥ आरम्भो निर्माणम्। अध्रुवात्मनो नश्वरदेहस्य। मृत्युग्रस्तस्येत्यर्थः। विफलो व्यर्थश्च। परकृतं मूषकादिकृतं वेश्म गृहम्। सुखं यथा स्यात्तथा एधते वर्धते तद्भक्षणं कृत्वेत्यर्थः ॥ १५ ॥ ईश्वरकृतौ सृष्टिसंहारौ मयोर्णनाभेः शिक्षितौ तत्र प्रथमं संहारक्रममाह—एक इति सार्धत्रयेण। निरूपाधिको यो नारायणः स एव सोपाधिक ईश्वरः क्रीडाप्रियत्वात् देवश्च आदावेक एव स्वमायया कल्पादौ सृष्टमिदं जगत् कल्पान्ते प्रलये कालशक्त्या संहृत्य पुनरेव एक एवाद्वितीयोभूदित्यन्वयः। एकः सजातीयविजातीय-भेदरहितः। अद्वितीयः प्रधानादिभेदरहितश्च। आत्माधारः स्वयं निराधारः। अखिलानामन्येषामाधारश्च। कालोऽपि कला यस्यास्तया स्वशक्तिरूपया यया कल्पादौ सृष्टं तयैव कल्पान्ते संहृत्येत्यर्थः ॥ १६ ॥ एतदेव स्पष्टयति कालेनेति द्वयेन। आत्मनः प्रभावरूपेण कालेन शक्त्या कारणभूतासु सत्त्वादिषु शक्तिषु साम्यं प्रधानं प्रति नीतासु सतीषु प्रधानपुरुषयोः ईश्वरः नियन्ता च आदि पुरुषः कैवल्यसंज्ञितः मोक्षशब्दाभिधेय आस्ते। तत्र हेतुः। केवलश्चिद्रूपः अनुभवो ज्ञानम् आनन्दश्च तेषां समूहः चिदानन्दरूपः।[1] कुतः। निरुपाधिकः। परे ब्रह्मादयः अवरे अस्मदादयस्तेषां परमः प्राप्य आस्ते ॥ १७ ॥ १८ ॥ अतः केवलादेव सृष्टिं निरूपयति केवलेनि। केवलेन कालेन स्वमायां संक्षोभयन् तया मायया आदौ सूत्रं क्रियाशक्तिप्रधानं ततो ज्ञानशक्तिप्रधानं महत्तत्त्वं च सृजतीति व्याख्येयम्। जीवसंसार कारणभूते सूत्रे सृष्टेऽपि त्वं मा भैषीरिति संबोधयन्नाह—अरिन्दम! अरीन् रागादीन् दमयितुं त्वमपिसमर्थेऽ-

---

१. यद्वा केवलानां स्वरूपभूतामनुभवानां य आनन्दसंदोहस्तद्रूपः।

तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम् । यस्मिन् प्रोतमिदं विश्वं येन संसरते पुमान्॥२०॥
यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्त्रतः । तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥२१॥
यत्र यत्र मनो देही धारयेत् सकलं धिया । स्नेहाद् द्वेषाद् भयाद् वापि याति तत्तत्सरूपताम् २२
कीटः पेशस्कृतं ध्यायन् कुड्यां तेन प्रवेशितः । याति तत्सात्मतां राजन् पूर्वरूपमसंत्यजन्॥२३॥
एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः । स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो॥२४॥

देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत् स्म सत्त्वनिधनं सततार्त्युदर्कम् ।
तत्त्वान्ययेन विमृशामि यथा तथापि पारक्यमित्यवसितो विचराम्यसङ्गः ॥२५॥
जायात्मजार्थपशुभृत्यगृहाप्तवर्गान् पुष्णाति यत्प्रियचिकीर्षुतया वितन्वन् ।
स्वान्ते सकृच्छ्रमवरुद्धधनः स देहः सृष्ट्वाऽस्य बीजमवसीदति वृक्षधर्मा ॥२६॥

---

सीत्यभिप्रायः ॥ १९ ॥ तां सूत्ररूपां शक्तिं त्रिगुणव्यक्तिं गुणत्रयकार्यमाहुः । अत एव विश्वतोमुखं नानाविधं त्रिगुणात्मकं विश्वम् अहङ्कारद्वारेण सृजन्तीम् । यस्मिन् कारणभूते सूत्रे इदं विश्वमोतप्रोतं ग्रथितम् । येन प्राणरूपेण सूत्रेण पुमान् जीवः संसरते देहयोगवियोगमनुभवति । बाहुलकात्तङ् । सूत्रस्य व्यक्तिशब्देनोच्यमानत्वात् तामिति स्त्रीलिङ्गेन निर्देशः ॥ २० ॥ यथा ऊर्णनाभिर्हृदयादुद्गतामूर्णां वक्त्रतः मुखेन सन्तत्य प्रसार्य तया विहृत्य क्रीडित्वा पुनः तामूर्णां ग्रसते । बाहुलकात्तङ्भावः । एव महेश्वरोऽपि स्वस्माद्विश्वं प्रसार्य तत्र विहृत्य च पुनः स्वस्मिन्नेवोपसंहरति । ऊर्णा तन्तुजालः नाभौ यस्य सः । 'मकड़ी' इति ख्यातः कीटविशेषः॥२१॥ भक्तानां तत्सारूप्यं भवतीति पेशस्कृतो भृङ्गीसंज्ञकाच्छिक्षितमित्याह–यत्रेति । देही जीवः सकलमेकाग्रं मनः यत्र यत्र स्नेहादिना धारयेत् । भरतादौ मृगसारूप्यादेर्दृष्टत्वात् ॥२२॥ तेन पेशस्कृता कुड्यां प्रवेशितो निरुद्धः भयेन तं ध्यायन् तत्सारूप्यं याति । पूर्वरूपमसन्त्यजन् इत्यस्येदं तात्पर्यम् । यदा तेनैव देहेनास्य सारूप्यं दृश्यते तदा किमु वक्तव्यं देहान्तरेण सारूप्यं धटत इति ॥ २३ ॥ स्वदेहाच्छिक्षितमाह—स्वात्मेति । स्वात्मनः स्वदेहात् शिक्षिताम् । वदतो मे मत्तः सकाशात् शृणु ॥ २४ ॥ गुरुत्वे हेतुः । विरक्तिविवेकयोर्हेतुः । विरक्तिहेतुत्वमाह–सत्त्वनिधनं जन्ममरणे बिभ्रत् । स्मेत्यनेन प्रसिद्धमेतत् । किञ्च सततं निरन्तरम् आर्तिर्दुःखं तदेव उदर्कमुत्तरोत्तरफलं च बिभ्रत् । यद्वा । सततार्तिरेव उदर्क उत्तरफलं यस्य तत् सत्त्वनिधनमित्यस्य विशेषणम् । विवेकहेतुत्वमाह–तत्त्वानीति । अनेन देहेन यथा यथावत् तत्त्वानि कति कीदृशानि वा मम तैः सह कुतः संबन्धः कथं वा एषां निवृत्तिः । 'इति त्वमसि श्वेतकेतो' इत्यादिरूपेण विचारयामि । यद्यप्येवं तथापि इदं देहादि सर्वं परकीयं श्वशृगालादिभक्ष्यमित्यवसितो निश्चितवान् असङ्गः अस्मिन्नप्यासक्तिरहित एव विचरामि ॥ २५ ॥ सततार्त्युदर्कतां दर्शयति–जायेति द्वाभ्याम् । यस्य देहस्य प्रियं कर्तुं भोगं सम्पादयितुमिच्छुतया जायादिवर्गान् वितन्वन् विस्तारयन् तान् पुष्णाति स देहोऽपि स्वान्ते स्वस्यायुषोऽन्तेऽवसीदति नश्यतीत्यन्वयः । न च देहनाशेऽपि दुःखसमाप्तिरित्याह–अस्य पुरुषस्य देहान्तरबीजं कर्म सृष्ट्वा अत एव वृक्षस्येव धर्मो यस्य स तथाभूतः । किञ्च सकृच्छ्रं सक्लेशम् अवरुद्धानि सञ्चितानि धनानि येन सः । सदेह इति पुरुषविशेषणं वा । अवसीदतीत्युक्तं तत् विवृणोति–जिह्वेति । अमुं देहासक्तं नरम् तदभिमानिनं पुरुषं वा एकतः रसं प्रति जिह्वा अपकर्षति । कर्हि कदाचित् तर्षा पिपासा जलं प्रति अपकर्षतीति प्रत्येकं संबध्यते । शिश्नोऽन्यतः मैथुनं प्रति त्वक् स्पर्शं प्रति उदरम् अन्नं प्रति । श्रवणं श्रोत्रेन्द्रियं कुतश्चित् शब्दं प्रति ।

जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥२७॥

सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या वृक्षान् सरीसृपपशून् खगदंशमत्स्यान् ।
तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः ॥२८॥

लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते मानुष्यमर्थदमनित्यमपीह धीरः ।
तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥२९॥

एवं संजातवैराग्यो विज्ञानालोक आत्मनि । विचरामि महीमेतां मुक्तसङ्गोऽनहंकृतिः ॥३०॥
न ह्येकस्माद् गुरोर्ज्ञानं सुस्थिरं स्यात् सुपुष्कलम् । ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥३१॥

श्रीभगवानुवाच

इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्य गभीरधीः । वन्दितोऽभ्यर्थितो राज्ञा ययौ प्रीतो यथागतम् ॥

---

घ्राणो घ्राणेन्द्रियम् अन्यतः गन्धं प्रति । चपलदृक् चक्षुरिन्द्रियं रूपं प्रति । कर्मशक्तिः वागादिलक्षणा कर्मेन्द्रियाणि क्वच क्वचित् स्वस्वविषयं प्रति अपकर्षति । यथा बह्व्यः सपत्न्यः एकमेव गेहपतिं स्वं स्वं प्रति लुनन्ति आकृष्य त्रोटयन्ति तद्वत् ॥ २७ ॥ सम्प्रति देहस्य दुर्लभतां दर्शयन् भगवत्प्राप्तियोग्यतां विधत्ते—सृष्ट्वेति-द्वाभ्याम् । देवो भगवान् अजया मायया विविधानि पुराणि शरीराणि वृक्षादीनि सृष्ट्वा तैस्तैरतुष्टहृदयः पुरुषशरीरं निर्माय मुदं प्रापेत्यन्वयः । कीदृशं पुरुषम् । ब्राह्मणोऽवलोकाय ब्रह्मसाक्षात्काराय धिषणा बुद्धिर्यस्मिंस्तम् । ब्रह्मेति पृथक् पदं वा । ब्रह्मा देव इति योज्यम् । अवलोकाय तत्त्वज्ञानाय धिषणा यस्मिन् । शेष पूर्ववत् । सरीसृपः सर्पः । दंशो वनमक्षिका ॥ २८ ॥ बहुसंभवान्ते बहूनां जन्मनामन्ते इदं मानुष्यं जन्म लब्ध्वा । कीदृक् । अनित्यमपि अर्थदं पुरुषार्थप्रापकम् इति धीरः धैर्यवान् सन् यावदिदं न पतेत् विपत्तिग्रस्तं न भवेत् तावत् शीघ्रं मोक्षाय यतेत । न च विषयभोगार्थम् । यतः खलु विषयः विषयभोगस्तु सर्वतः पश्वादि योनिष्वपि स्यात् सुलभ एव । भगवत्कृपां विना कोटिजन्मपुण्यैरप्यनवाप्तत्वात् सुदुर्लभमित्युक्तम् । किञ्च अनुमृत्यु । अनु अनु वारं वारं मृत्युर्यस्य तत् ॥ २९ ॥ यदुक्तं 'त्वं तु कल्पः कविर्दक्ष-' इत्यादि तत्रोत्तरमाह-एवमिति । एवं पञ्चविंशतिगुरुभ्य आत्मनि अन्तःकरणे विज्ञानस्य आलोकः ब्रह्मणः प्रकाशो यस्य सः । सप्तम्यन्तं वा । विज्ञानालोके[1] आत्मनि स्वस्वरूपे स्थित एव महीं विचरामि । अत एव मुक्तसंगः गृहादिषु ममतारहितः । तत्कृतः । अनहङ्कृतिः देहाहङ्काररहितश्च । 'निर्ममो निरहङ्कारः स शान्तिमधिगच्छति' इति गीतोक्तेः ॥ ३० ॥ सुपुष्कलं परिपूर्णम् । यत एतत् अद्वितीयमपि एकमपि ब्रह्म ऋषिभिः बहुधा सगुण-निर्गुणादिभेदेन गीयते तच्छ्रुत्वा मनसि व्यामोहो जायते एव तन्निवृत्यर्थमेव हेयोपादेयतया एते गुरवः कल्पिताः ज्ञानप्रदो गुरुस्तु वस्तुत एक एवेति ॥३१॥ लोकोत्तरः विप्रो दत्तात्रेयः तं यदुम् आमन्त्र्य पृष्ट्वा च तेन राज्ञा अभ्यर्थितः सत्कृतश्च यथाऽऽगतं निरपेक्षत्वेन तथैव यदृच्छया ययौ । यथातथयोर्नित्यसंबन्धात् । गभीरधीः आत्मनिष्ठबुद्धिः ॥३२॥ नोऽस्माकं पूर्वेषां पूर्वजो यदुः । 'निर्दोषं हि समं ब्रह्म इत्युक्तेः समं ब्रह्म तत्र चित्तं

---

१. विज्ञानेन आलोकः साक्षात्कारो यस्य तस्मिन् ।

**अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः। सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ॥३३॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे नवमोऽध्यायः ॥ ९ ॥

---

यस्य स समचित्तो ब्रह्मनिष्ठो बभूव। ह प्रसिद्धमेतत्। अत्र स्वामिनामतीव रमणीया संग्रहश्लोका अस्माभिरिह भिक्षितास्त एव यथाऽविकलमुद्ध्रियन्ते—कपोतमीनहरिणकुमारीगजपन्नगा.। पतङ्गकुररश्वाष्टौ हेयार्थे गुरवो मताः। मधुकृन्मधुहर्ता च पिङ्गला च द्वयोस्त्रयः। उपादेयार्थविज्ञाने शेषाः पृथ्व्यादयो मताः। तदवान्तरभेदश्च तत्र तत्र स्फुटीकृतः। अध्यायत्रितये चाष्ट नवाष्टावीरिताः क्रमात् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां सहितायामेकादशमस्कन्धे नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः

### श्रीभगवानुवाच

**मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः। वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥१॥**

**अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम्। गुणेषु तत्त्वध्यानेन सर्वारम्भविपर्ययम् ॥२॥**

**सुप्तस्य विषयालोको ध्यायतो वा मनोरथः। नानात्मकत्वाद् विफलस्तथाभेदात्मधीर्गुणैः ॥३॥**

---

दशमे जीवसंसारो देहाध्यासान्न वस्तुतः।
इत्येतज्जैमिनीयानामुच्यते मतखण्डनात् ॥ १ ॥

इत. परमुद्धवस्यात्मतत्त्वज्ञानाय भगवान् साधनान्युपदिशति—मयेति। मया उदितेषु कथितेषु स्वधर्मेषु असाधारणभागवतधर्मेषु अवहितः सावधानः आस्तिक्यबुद्धिः सन् वर्णाश्रमप्राप्तं कुलपरम्पराप्राप्तम् आचारप्राप्तं च कर्म समाचरेत् अनुतिष्टेत्। यो मामाश्रयते स मदाश्रयः मद्भक्तः। स कः। अकामात्मा न कामेषु विषयेषु आत्मा चित्तं यस्य स निष्काम इत्यर्थः ॥ १ ॥ विशुद्धात्मा स्वधर्मैर्विशुद्धचित्तः सन् विषयासक्तमनसां देहिनां गुणेषु विषयेषु तत्त्वध्यानेन सत्यत्वाग्रहेण ये सर्वे आरम्भाः कर्माणि तेषां विपर्ययं फलवैपरीत्यं पश्येत्। सुखोद्देशेन क्रियमाणानां तेषां कर्मणां फलं कथं दुःखजनकमिति विचारयेत् एवं सत्यकामः स्यादिति भावः ॥२॥ अकामत्वेऽन्योऽपि हेतुरित्याह—सुप्तस्येति। यथा सुप्तस्य विषयालोकः नानाविधवस्तुदर्शनं यथा वा राज्यादि सौख्यं ध्यायतः पुंसः तद्विषयको मनोरथो विफलोऽर्थशून्यः मिथ्येत्यर्थः। कुतः। नानात्मकत्वात्। एकस्मिन्नेवात्मनि नानात्वारोपात्। तथा गुणैरिन्द्रियैः भेदात्मसु भेदात्मकनानाविषयेषु या धीः र्नानाभेदबुद्धिः पदार्थालम्बिनी कृता साऽपि विफला मिथ्येत्यर्थः। तथा चानुमानम्। इन्द्रियैर्विषयेषु या नानाबुद्धिः सा

निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् । जिज्ञासायां सम्प्रवृत्तो नाद्रियेत् कर्मचोदनाम् ॥४॥
यमानभीक्ष्णं सेवेत नियमान् मत्परः क्वचित् । मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥५॥
अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः । असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥६॥
जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु । उदासीनः समं पश्यन् सर्वेष्वर्थमिवात्मनः ॥७॥
विलक्षणः स्थूलसूक्ष्माद् देहादात्मेक्षिता स्वदृक् । यथाग्निर्दारुणो दाह्याद् दाहकोऽन्यः प्रकाशकः ॥८॥
निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान् गुणान् । अन्तःप्रविष्ट आधत्त एवं देहगुणान् परः ॥९॥
योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि । संसारस्तन्निबन्धोऽयं पुंसो विद्याच्छिदात्मनः ॥१०॥

---

विफला नानात्मकत्वात् इन्द्रियग्राह्यत्वाच्च मनोजन्यस्वप्नमनोरथवत् ॥ ३ ॥ अहमेव परः मुख्यो यस्य स मत्परः मद्भक्तः इति क्रियात्रयेऽपि संबध्यते । निवृत्तं नित्यनैमित्तिकम् । सेवेत आचरेत् । प्रवृत्तं काम्यं कर्म-त्यजेत् । जिज्ञासायांमात्मविचारे सम्यक् प्रवृत्तः निवृत्तकर्मचोदनां विधिमपि नाद्रियेत तत्र अतीव हठं न कुर्यादित्यर्थः । संशब्देन परमवैराग्यपूर्वकमिति सूचयति ॥ ४ ॥ किञ्च यमान् अहिंसादीन् अभीक्ष्णमादरेण । नियमान् शौचादीन् क्वचित् यथाशक्ति आत्मज्ञानाविरोधेन । किञ्च यमेष्वप्यादरं परित्यज्य गुरुमुपासीत । मदात्मकं मद्रूपम् । मदभिज्ञम् । मामभितः तत्वतो जानातीति तम् । अत एव शान्तम् ॥ ५ ॥ गुरुसेवकस्य लक्षणान्याह–अमानीति युग्मेन । अमानी मानरहितः । अमत्सरः तच्छिष्यान्तरास्पर्द्धी । दक्ष आलस्यरहितः । निर्मम इति भावप्रधानो निर्देशः । निर्गतं ममत्वं यस्मात् तथाभूतः । गुरौ तु दृढं सौहृदं प्रेम यस्य सः । असत्वरः लक्ष्यप्राप्तौ त्वरामकुर्वन् । अर्थं तत्त्वं परमार्थं तज्जिज्ञासुः । अनसूयुः गुर्वादौ दोषदृष्टिरहितः । अमोघवाक् व्यर्थालापरहितः एतान्येव साधारणतया नव शिष्यलक्षणानि बोध्यानि ॥६॥ जायादिषु सर्वेषु उदासीनः सन् गुरुमुपासीतेति पूर्वेणान्वयः । किं कुर्वन् । तेषु आत्मनोऽर्थं सुखादि सममेव पश्यन् विचारयन् सन् । एवार्थे इव शब्दः । जायादिदेहेऽस्मिंश्च स्वदेहे आत्मन एकत्वात् सुखादिकं तुल्यमेव कथमेतेष्वेव ममत्वाग्रह इत्येव मुदासीनः स्यादिति भावः ॥ ७ ॥ ननु कोऽसावात्मा यस्यैक्यादर्थः सर्वेषु समः स्यात्तमाह-विलक्षण इति । स्थूलसूक्ष्मदेहद्वयादात्मा विलक्षणः भिन्नः । यतः ईक्षिता द्रष्टा स्वदृक् स्वप्रकाशकश्च । द्रष्टा हि दृश्याद्वि-लक्षणः । स्वप्रकाशकश्च जडाद्विलक्षणो भवत्येव । तयोरन्यत्वे दृष्टान्तः । यथा अग्निर्दाहकः प्रकाशकश्च दाह्यात् प्रकाश्याच्च काष्ठादन्यस्तद्वत् ॥ ८ ॥ अनेनैव दृष्टान्तेनात्मनो नित्यत्वादिकमपि सिध्यतीत्याह-निरोधेति-यथा च दारुष्वन्तःप्रविष्टोऽग्निः तत्कृतान् दारुकृतान् गुणान् निरोधादीन् आधत्ते प्राप्नोति न तु स्वतो नाशादिमान् एवं देहात्परो नित्यादिस्वरूपोऽपि आत्मा देहगुणान् अनित्यत्वादीन् अनुभवति । ततश्च नित्यत्वादिभिरपि आत्मनो देहादन्यत्वं सिद्धम् । निरोधो नाशः दारुनाशादग्नेर्नाशः, तदुत्पत्तेरुत्पत्तिः, तदणुत्वादणुत्वम् तद्बृहत्वात् बृहत्त्वं तन्नानात्वान्नानात्वमित्येवं दारुगुणानग्निः प्राप्नोति स्वतस्तद्रहितोऽपि ॥ ९ ॥ ननु 'असङ्गो ह्ययं पुरुषः' इति श्रुतेरात्मनोऽसङ्गत्वात्कथं देहेन सम्बन्धः कथं च तन्निवृत्तिस्तत्राह योऽसा-विति । पुरुषस्य ईश्वरस्य अधोनैर्मायागुणैर्विरचितः योऽसौ सूक्ष्मो देहः तथाऽयं स्थूलो देहश्च तन्निबन्धनः देहाध्यासनिमित्तकः पुंसो जीवस्य अयं संसारः हि यस्मादेवं तस्मात् आत्मनो विद्या आत्मज्ञानं तस्य संसारस्य छित् छेत्री निवर्तिकेत्यर्थः । छिनत्तीति छित् । छिदेः क्विप् । तं संसारम् आच्छिनत् इति पदच्छेदो वा ॥ १० ॥

तस्माज्जिज्ञासयाऽऽत्मानमात्मस्थं केवलं परम् । संगम्य निरसेदेतद्वस्तुबुद्धिं यथाक्रमम् ॥११॥
आचार्योऽरणिराद्यः स्यादन्तेवास्युत्तरारणिः । तत्संधानं प्रवचनं विद्यासंधिः सुखावहः ॥१२॥

वैशारदी सातिविशुद्धबुद्धिर्धुनोति मायां गुणसम्प्रसूताम् ।
गुणांश्च संदह्य यदात्ममेतत् स्वयं च शाम्यत्यसमिद् यथाग्निः ॥१३॥

अथैषां कर्मकर्तृणां भोक्तृणां सुखदुःखयोः । नानात्वमथ नित्यत्वं लोककालागमात्मनाम् ॥१४॥

---

यस्माद्देहाध्यासादेव संसारस्तस्मात् जिज्ञासया आत्मविचारेण आत्मस्थं शरीरस्थमात्मानं सङ्गम्य सम्यग् ज्ञात्वा एतद् एतस्मिन् देहादौ वस्तुबुद्धिमात्मबुद्धिं यथाक्रमं स्थूलसूक्ष्मक्रमेण निरसेत् दूरीकुर्यात् । आत्मनो-विशेषणद्वयम् । केवलम् उपाधिशून्यम् । कुतः । परं देहाद्भिन्नम् ॥ ११ ॥ अग्न्युत्पत्तिरूपकेणात्मविद्यो-त्पत्तिक्रममाह—आचार्य इति । आचार्यो गुरुः आद्यः अरणिः अधरारणिः अन्तेवासी शिष्यः उत्तरारणिः प्रवचन मुपदेशश्च तत्सन्धानं तयोर्मध्यमं मन्थनकाष्ठं च विद्या ज्ञानं तु सन्धिः सन्धौ भवन्नग्निरिव सुखावहः अविद्यानि-वर्तकत्वेन ब्रह्मानन्दप्रापकः ॥ १२ ॥ अग्निसादृश्यं दर्शयति वैशारदीति । 'शॄ हिंसायाम्' इत्यस्मात् विशरणं विशारः हिंसाप्रधानोऽविद्यामार्गस्तं द्यति खण्डयति ब्रह्मविद्योपदेशेनेति विशारदः गुरुस्तत आगता प्राप्ता इयं बुद्धिः वैशारदी । शिष्यपक्षे । विशिष्टा भगवद्विषयिणी शारदा बुद्धिर्यस्य स विशारदस्तेन गृहीता वा सा लोको-त्तरा अतिविशुद्धा चासौ बुद्धिः आत्मविषयिणी बुद्धिर्मायां मोहिकां संसृतिं धुनोति निवारयति । कीदृशीम् । गुणैः सम्प्रसूतामुत्पन्नाम् गुणकार्यरूपाम् । सृष्टेस्त्रिगुणत्वात् तमसा सूतां रजसा प्रसूतां सत्त्वेन सम्प्रसूतामित्युपसर्ग-द्वयस्य स्वारस्यम् । अत एव च तमोनिवृत्या शुद्धबुद्धिः रजोनिवृत्या विशुद्धबुद्धिः सत्त्वनिवृत्या च अतिविशुद्ध-बुद्धिरित्यत्राप्युपसर्गद्वयमुपात्तम् । किं कृत्वा । यदात्मकं गुणत्रयात्मकम् एतद् विश्वं तान् गुणांश्च सम्यक् दग्ध्वा स्वयं च स्वयमपि शाम्यति ब्रह्मनिष्ठा भवति । अत्रदृष्टान्तः यथा असमित् निरिन्धनोऽग्निः काष्ठादि दग्ध्वा स्वयमपि शान्तो भवति तद्वत् । तस्मात्कार्यकारणव्यवधानाभावात्साक्षात्परमानन्दरूपो भवतीत्यर्थः । यदात्मेत्यत्राव्ययीभावमाश्रित्य 'अनश्चेति' बाहुलकात् टच् ॥ १३ ॥ एवं तावत्स्वप्रकाशज्ञानस्वरूपो नित्य एक एवात्माऽस्तीति निर्विवादं निरीश्वरवादिनो मीमांसकाश्च नैतन्मन्यन्ते तन्मतं खण्डयितुं दर्शयति—अथेति युग्मेन । मीमांसका हि अहं प्रत्ययविज्ञेयो ज्ञातव्यः सर्वदैव हि इत्युक्तेः अहं ब्राह्मण इत्यादिप्रतीत्या ज्ञेय एवात्मा न तु ज्ञानैकस्वरूपः । अत एव प्रतिशरीरं भिन्नः यागादिकर्तृत्वात् तत्फलभोक्तृत्वात् कर्तृभोक्तृ रूपश्चेति मन्यन्ते इति । अत्र अथशब्दः प्रश्ने द्वितीयोऽथशब्दः पुनरर्थे । तथाहि अथ यदि कर्मकर्तृणां तत्फलरूपयोः सुखदुःखयोः भोक्तृणां च एषां जीवानां नानात्वं मन्यसे । अथ पुनश्च भोगस्थानस्वर्गादिलोकानां भोगकालस्य यागादिबोधकशास्त्रस्य वा आत्मनो भोक्तुश्च अनित्यत्वे वैराग्यं स्यादतः लोककालागमात्मनां नित्यत्वं मन्यसे । किञ्च भोग्यवस्तूनां विच्छेदादपि वैराग्यं भवेदतः सर्वभावानां स्रक्चन्दनवनितादीनां संस्था स्थितिः औत्पत्तिकी स्वाभाविकी प्रवाहरूपेण नित्यैवेति मन्यसे । किञ्च 'न कदाचिदनीदृशं जगत्' अर्थात् सर्वदेदृशमेव

**मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी यथा । तत्तदाकृतिभेदेन जायते भिद्यते च धीः ॥१५॥**
**एवमप्यङ्ग सर्वेषां देहिनां देहयोगतः । कालावयवतः सन्ति भावा जन्मादयोऽसकृत् ॥१६॥**
**अत्रापि कर्मणां कर्तुरस्वातन्त्र्यं च लक्ष्यते । भोक्तुश्च दुःखसुखयोः को न्वर्थो विवशं भजेत् ॥१७॥**
**न देहिनां सुखं किंचिद् विद्यते विदुषामपि । तथा च दुःखं मूढानां वृथाहंकरणं परम् ॥१८॥**
**यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः । तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद् यथा ॥१९॥**
**को न्वर्थः सुखयत्येनं कामो वा मृत्युरन्तिके । आघातं नीयमानस्य वध्यस्येव न तुष्टिदः ॥२०॥**
**श्रुतं च दृष्टवद् दुष्टं स्पर्धासूयात्ययव्ययैः । बह्वन्तरायकामत्वात् कृषिवच्चापि निष्फलम् ॥२१॥**

---

जगत्' न च तत्कर्ता कश्चिदीश्वरोऽस्तीति मत्वा सर्वोऽपि व्यवहारः यथा यथावत्सत्य एव न तु कल्पित इति मन्यसे । किञ्च घटपटाद्याकारभेदेन नीलो घटः पीतो घटः इति धीर्ज्ञानं जायतेऽतोऽनित्यं ज्ञानं यज्जन्यं तद्विनाशि इति नियमात् । भिद्यते च ज्ञानमाकारभेदेनानेकं च भवति अतो वेदान्तिमतेऽङ्गीकृतमपि नित्यमेकमात्मस्वरूपभूतं ज्ञानं नास्त्येव किन्तु ज्ञानपरिणामवत् आत्मरूपम् । तव मते देहेन्द्रियादि राहित्येन चित्स्वरूपावस्थितिरेव मुक्तित्वम् । अतो मुक्ताविन्द्रियादिरहितस्य पाषाणादितुल्यतया परिणामासंभवात् जडत्वेन मुक्तिप्राप्तेरपुरुषार्थत्वात्प्रवृत्तिमार्ग एव श्रेयस्करो न निवृत्तिमार्ग इति मन्यसे चेच्छृणु इति पद्यद्वयेन मीमांसकमतानुवादः ॥१४॥१५॥ इतः परं मीमांसकमतं खण्डयन् प्रवृत्तिमार्ग-स्यानर्थकारितां दर्शयति एव —मित्यारभ्य व्यतिकरे सतीत्यन्तेन ग्रन्थेन । एवं मीमांसकमतस्वीकारेऽपि । अङ्ग हे उद्धव । देहिनां देहसम्बन्धात् कालावयवतः संवत्सरादिरूपात् असकृत् पुनः पुनः जन्मादयो भावा विकारा भवन्त्येव अतो न दुःखनिवृत्तिरिति ॥ १६ ॥ अत्रापि जैमिन्यभिमतकर्तृत्वभोक्तृत्वपक्षेऽपि । कर्तुः अस्वातन्त्र्यमेव लक्ष्यते अनिच्छतोऽपि बलात् दुष्कर्मसु प्रवृत्तेः । भोक्तुरपि पारतन्त्र्यम् । अन्यथा दुष्कर्मभोगा-संभवात् । अतो विवशं पराधीनमेनं को नु अर्थो विषयः भजेत् सुखयेत् न कोऽपीत्यन्वयः ॥ १७ ॥ विदुषां कर्माभिज्ञानां दक्षादीनामपि क्वचित् विहितेऽपि काम्यकर्मणि सुखं न विद्यते प्रत्युत दुःखमेव दृश्यते प्रमादादिना कर्मवैगुण्यात् । तथा मूढानां कर्म कर्तुमजानतां सरलानां क्वचित्कर्माकरणेऽपि दुःखं न विद्यते प्रत्युत सुखमेव दृश्यते अकस्मात्तीर्थादिसंबन्धजातपुण्यत्वात् प्रारब्धभोगस्यावश्यंभावित्वाच्च । वस्तुतस्तु सुख-दुःखादेरन्तःकरणधर्मत्वादुभयत्रापि वृथैवाहङ्कारः अहं सुखी अहं दुःखी अहं विद्वान् अहं मूर्ख इति । नहि संसारे सर्वदैव कोऽपि सुखी दुःखी वा दृश्यत इति भावः ॥ १८ ॥ यदि केऽपि सुखस्य प्राप्तिं प्राप्त्युपायं दुःखस्य विघातोपायं च जानन्ति तेऽपि तं योगमुपायं तथा न विदुः यथा अद्धा साक्षान्मृत्युर्न भवेत् ॥१९॥ एवं जीवं को नु अर्थो धनं को नु कामो विषयो वा सुखयति न कोऽपीत्यर्थः । यतोऽस्य अन्तिके पृष्ठे मृत्युर्लग्नः । यथा वध्यस्य वधार्हस्य अत एव आघातं वधस्थानं प्रति नीयमानस्य पुरुषस्य मोदकपायसादिर्न तुष्टिदः न तुष्टिं ददाति तद्वत् ॥ २० ॥ परलोकेऽपि सुखं नास्तीत्याह-श्रुतमिति । श्रुतं च स्वर्गादिसुखमपि दृष्टवत् ऐहिकसुखवत् स्पर्धादिभिः दुष्टं दुःखसंबद्धम् । किञ्च तत्सुखम् बहवोऽन्तराया वैगुण्यादिरूपा विघ्नाः यस्मिन् स चासौ कामः सुखं च तस्य भावस्तत्त्वं तस्मात् दुर्लभं चेति शेषः । कृषिवत् कृषिर्यथा बहुविघ्ना तद्वत् । अत्रापि बह्वन्तरायेति योजनीयम् । तथा च बहुसुखत्वेन श्रुतमपि निष्फलमेव परिणामविरसत्वादित्यर्थः । स्पर्धा परसुखासहनम् । असूया गुणेष्वपि दोषारोपः । अत्ययो भोगान्ते नाशः । व्ययः प्रतिक्षणं क्षयः । यद्वा । अत्ययः अन्यस्यातिशयः । तं दृष्ट्वा तदप्राप्त्या दुःखम् । व्ययो नाशश्च ॥ २१ ॥ विघ्नवैगुण्याद्यभावेऽपि

अन्तरायैरविहतो यदि धर्मः स्वनुष्ठितः । तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु ॥२२॥
इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः । भुञ्जीत देववत्तत्र भोगान् दिव्यान् निजार्जितान्॥
स्वपुण्योपचिते शुभ्रे विमान उपगीयते । गन्धर्वैर्विहरन् मध्ये देवीनां हृद्यवेषधृक् ॥२४॥
स्त्रीभिः कामगयानेन किङ्किणीजालमालिना । क्रीडन् न वेदात्मपातं सुराक्रीडेषु निर्वृतः ॥२५॥
तावत् प्रमोदते स्वर्गे यावत् पुण्यं समाप्यते । क्षीणपुण्यः पतत्यर्वागनिच्छन् कालचालितः ॥२६॥
यद्यधर्मरतः सङ्गादसतां वाऽजितेन्द्रियः । कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः ॥२७॥
पशूनविधिनाऽऽलभ्य प्रेतभूतगणान् यजन् । नरकानवशो जन्तुर्गत्वा यात्युल्बणं तमः ॥२८॥
कर्माणि दुःखोदर्काणि कुर्वन् देहेन तैः पुनः । देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः ॥२९॥
लोकानां लोकपालानां मद्भयं कल्पजीविनाम् । ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुषः ॥३०॥

विनाशजन्यदुःखं त्वपरिहार्यमित्याह-अन्तरायैरिति पञ्चभिः । अन्तरायैरविहतः विघ्नैरनाक्रान्तः । सुष्ठु अनुष्ठितः । तेनापि धर्मेणापि निर्जितं साधितं स्थानं पुमान् यथा गच्छति तन्मत्तः शृणु ॥ २२ ॥ याज्ञिकः यज्ञकर्ता इह लोके देवता इन्द्रादिरूपा इष्ट्वा पूजयित्वा तत्र स्वर्लोके निजार्जितान् स्वधर्मोपार्जितान् दिव्यान् सुखातिशयान् भोगान् भुङ्क्ते । लडर्थे लिङ् ॥ २३ ॥ स्वपुण्यैरुपचिते समृद्धे सर्वभोगसम्पन्ने इत्यर्थः । विमाने देवीनामप्सरसां मध्ये मनोहरवेषधारी सन् ताभिर्विहरन् गन्धर्वैरुपगीयते स्तूयत इत्यन्वयः ॥ २४ ॥ कामेन स्वेच्छया गच्छतीति कामगं गमेर्डोऽसिः । तच्च तद् यानं विमानं तेन सुराक्रीडेषु नन्दनादिवनेषु स्त्रीभिः सह क्रीडन् आत्मनः पातं स्वर्गात्पतनं न वेद । यतो निर्वृतः स्वर्गानन्दमग्नः । कथंभूतेन यानेन । किंकिणीजालेन क्षुद्रघण्टिकासमहेन मालिना शोभिना ॥२५॥ पुण्यं यावत्समाप्यते भोगेन तावत् । ततः क्षीणपुण्यः अनिच्छन्नपि अर्वाक् अधः पतति । यतः कालेन चालितः पातितः ॥ २६ ॥ काम्यकर्मप्रवृत्तेर्गतिं निरूप्याधर्मप्रवृत्तो दुर्गतिमाह यदीति युग्मेन । असतां विषयिणां सङ्गात् यदि अधर्मे रतः यदि वा अजितेन्द्रियः अत एव कामात्मा विषयासक्तचित्तः अतः कृपणो दीनः अतो लुब्धः भोगतृष्णाकुलः अत एव च स्त्रैणः स्त्रीलम्पटः तदर्थं भूतविहिंसको भवति । किं च यदा धनादिलोभात् अविधिना स्वेच्छाचारेण पशून् आलभ्य हत्वा प्रेतादीन् यजति तदाऽयं हिंसानिरतत्वात् जन्तुः पशुतुल्यः विवशः सन् नरकान् प्राप्य उल्बणं घोरं तमः अज्ञानबहुलां-स्थावरयोनिं याति । अप्राप्तौ विधिस्त्वदामिषादेश्च रागतो नित्यं प्राप्तत्वात् तत्र विधिर्नास्तीत्यतः सुष्ठूक्तमविधिनेति ॥२७॥२८॥ एवं काम्यकर्मसु प्रवृत्तस्य न किञ्चित्तो सुखं न च ततो दुःखनिवृत्तिरित्युपसंहरति कर्माणीति । दुःखमेव उदर्कः[1] उत्तरफलं येषां तानि तथाभूतानि कर्माणि देहेन कुर्वन् तैः कृतैः कर्मभिः पुनर्देहमाभजते प्राप्नोति । तत्रैवंविधे संसारे मरणधर्मवतोऽस्य किं सुखं न किञ्चिदित्यर्थः ॥ २९ ॥ ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति श्रुतेः स्वर्गादीनां नित्यत्वात् लोकपालानां चामरत्वात् तेषां नित्यं सुखमस्तीति चेन्नेत्याह——लोकानामिति । चतुर्युगसहस्रात्मकमेकं ब्रह्मदिनं भवति तदेव कल्प उच्यते एष दैनन्दिनः कल्पः इत्युक्तेः । तत्पर्यन्तजीविना लोकपालानामिन्द्रादीनां च मत् मत्तो भयं भवति । किं बहुना एवं मानेन द्वौ परार्द्धौ परमायुर्यस्य तस्य तस्य ब्रह्मणोऽपि मत्तो भयं भवतीति किमुत लोकपालानामिति कैमुत्यं च सूचितम् । शतवर्षं ब्रह्मणः परमायुरुपयुक्तमानेन भवति । तस्यायुषोऽर्द्धौ भागः पूर्वः परार्द्ध उच्यते । अपरो भागः द्वितीयः परार्द्ध उच्यते । पूर्वः परार्द्धस्तु समाप्तः सम्प्रत्यपरः प्रचलति । 'पूर्वः परार्द्धोऽऽक्रान्तो ह्यपरोऽद्य प्रवर्तते'

१. 'उदर्क एष्यत्कालीनफले' इति मेदिनी ।

गुणाः सृजन्ति कर्माणि गुणोऽनुसृजते गुणान् । जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्मफलान्यसौ ॥३१॥
यावत् स्याद् गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत् पारतन्त्र्यं तदैव हि ॥३२॥
यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् । य एतत् समुपासीरंस्ते मुह्यन्ति शुचार्पिताः ॥३३॥
काल आत्माऽऽगमो लोकः स्वभावो धर्म एव च । इति मां बहुधा प्राहुर्गुणव्यतिकरे सति ॥३४॥

उद्धव उवाच

गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः । गुणैर्न बद्ध्यते देही बद्ध्यते वा कथं विभो ॥३५॥

---

इति तृतीयोक्ते द्विपरार्द्धविवरणं बोध्यम् । एवं प्रवृत्तिमार्गस्य महानर्थकारित्वात्ततो विरक्त्या भयनिवृत्त्यर्थं निवृत्तिमार्ग एवाश्रयणीय इति प्रकरणतात्पर्यम् ॥ ३० ॥ अन्यदपि मीमांसकैर्हठेन पूर्वं यदात्मनः कर्तृत्वभोक्तृत्वरूपमङ्गीकृतं तत्खण्डयति—गुणा इति । गुणा गुणकार्याणि इन्द्रियाणि कर्माणि-सृजन्ति न त्वात्मा । गुणः सत्त्वादिः गुणान्–इन्द्रियाणि अनुसृजते प्रवर्तयति न त्वात्मा । बाहुलकात्तङ् । एवं तावदात्मनः कर्तृत्वं नास्ति भोक्तृत्वमपि तस्योपाधिवशादेव न साक्षादित्याह–जीवस्तु गुणैर्देहेन्द्रियादिभिः संयुक्तः तदध्यासापन्नः सन् तेष्वहङ्कारत्वात्कर्मफलानि सुखदुःखानि भुङ्क्ते अनुभवति ॥ ३१ ॥ यच्चोक्त-मात्मनो नानात्वं तदपि खण्डयति–यावदिति । यावत् गुणानां वैषम्यं स्थूलसूक्ष्मदेहरूपेण परिणामस्ताव-त्तत्देहाध्यासेन आत्मनो नानात्वं नानात्वभ्रमः स्यात् । यावत् नानात्वं तदेव तावदेव हि पारतन्त्र्यम् अस्वतन्त्र-त्वम् ॥ ३२ ॥ अस्य आत्मनः । ईश्वरतः कालरूपान्मत्तः भयम् ये मीमांसका एतत् गुणवैषम्यं देहादि तत्कृतं कर्म तत्फलं स्वर्गादि च समुपासीरन् सम्यक् सत्यरूपतया उपासीरन् अभिमन्येरन् ते लोकानां विनाशित्वात् शुचा शोकेन अर्पिता व्याकुलाः सन्तः मुह्यन्ति क्लिश्यन्ति । शुचेति टावन्तं वा शुचासु शोकशूलेषु अर्पिताः प्रोताः सन्तः इति वा । यद्वा । एतत् कर्मैव समुपासीरन् सेवेरन् । एतेन प्रवृत्तिमार्ग एव श्रेयस्कर इति यदुक्तं तत्परास्तम् ॥ ३३ ॥ हे उद्धव ! गुणानां व्यतिकरे क्षोभे सति सृष्टिदशायामित्यर्थः । कालादिरूपेण बहुधाभूतं मामेव प्राहुः व्यासादयः । न त्वेते मद्व्यतिरिक्ताः सन्ति अतो मोक्षार्थमहमेव भजनीय इति मतं साधितम् । एतेन जगत्कर्तृत्वादेः कुत्रचित्कालाधीनत्वं कुत्रचिदीश्वराधीनत्वमित्यादि परस्परविरोधोऽपि परिहृतो भवति । अत्र कालादिचतुष्टयं जैमिन्यभिमतम् 'लोककालागमात्मनाम्' इति पूर्वोक्तेः । स्वभाव इति सांख्याभिमतम् । देवत्वादिपरिणामहेतुत्वात् । धर्म इत्यास्तिकाभिमतम् । प्रकारान्तरेण सर्वाभिमतं वा । यत्किमप्युद्दिश्य प्रवर्तन्ते नास्तिकादयस्तदेव धर्म इति लक्षणनिष्ठ एव भेदो न वस्तुनिष्ठ इति निर्विवादम् । किञ्च कालादीनां भगवद्रूपत्वात्तत्तन्मतावलम्बिभिः स एवाराधनीय इत्यप्यनेन सूचितं भवति । यतो हि–कालो भगवत्स्वरूपम् । 'कालः कलयतामहम्' 'कालोऽस्मि लोकक्षयकृत्प्रवृद्धः' इति गीतोक्तेः । आत्मेति । 'अहमात्मा गुडाकेश । इत्युक्तेः ।' आगमो वेदशास्त्रम् । 'वेदो नारायणः साक्षात्' इति षष्ठोक्तेः । लोक इति । 'पातालमेतस्य हि पादमूलम्' इत्याद्युक्तेः । स्वोऽसाधारणो भावः स्वभावः । भूतकृत् भूतभृद् भावः इति सहस्रनामोक्तेः । 'अजो महार्हः स्वाभाव्यः' इत्युक्तेश्च । धर्मो मद्भक्तिकृत्प्रोक्तः इति श्रीमुखोक्तेश्च निवृत्ति-मार्ग एव श्रेयस्कामैरवलम्बनीयो न प्रवृत्तिमार्ग इति 'निवृत्तं कर्म सेवेत' निवृत्तो मामवाप्नोति । इत्यादिशतशः प्रमाणवचनादित्यलम् ॥ ३४ ॥ तदेवं संसारस्य मिथ्यात्वमात्मज्ञानस्यैव मोक्षहेतुत्वञ्च, तत्र मुक्तेर्निवृत्ति हेतुत्वे गुणानां मायामयत्वाद् गुणेषु वर्तमानइत्यनुपपन्नमतः पृच्छति–गुणेष्विति । हे विभो ! गुणेषु गुणकार्येषु देहादिषु वर्तमानोऽपि देही जीवः देहजेषु कर्मसु सुखदुःखादिषु कथं न बध्यते । वर्तमानत्वेऽपि अनपावृतः अकाशवदावरणशून्यश्च तर्हि गुणैः कथं वा बध्यते इत्यन्वयः । अपशब्देनावरणस्यापकृष्टता सूच्यते । गुणो

कथं वर्तेत विहरेत् कैर्वा ज्ञायेत लक्षणैः । किं भुञ्जीतोत विसृजेच्छयीतासीत याति वा ॥३६॥
एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर । नित्यमुक्तो नित्यबद्ध एक एवेति मे भ्रमः ॥३७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे भगवदुद्धवसंवादे दशमोऽध्यायः ॥१०॥

---

धर्मः सुखदुःखादिः ॥ ३५ ॥ किं च बद्धो मुक्तो वा कथं वर्तेत कथं वा विहरेत् । किं भुङ्क्ते कथं वा भुङ्क्ते । उत अपि कथं मलादिकं विसृजति । कथं शेते कथमास्ते कथं वा याति मार्गे प्रचलति । यतो वर्तनविहरण भोजनमलमूत्रविसर्जनशयनासनगमनानि कर्माणि बद्धस्य मुक्तस्य च तुल्यान्येव दृश्यन्ते तानि किं साभिमानानि निरभिमानानि वा मया कैर्लक्षणैर्ज्ञायेरन्निति ब्रूहीत्युत्तरेणान्वयः । सर्वत्र लडर्थे लिङ् ॥ ३६ ॥ हे अच्युत हे नित्यमुक्त ! एतत् बद्धमुक्तविषयकं मे प्रश्नं प्रति त्वं ब्रूहि । उत्तरमिति शेषः । एतदित्यव्ययम् । किं च अन्योऽपि संदेहस्तमपि निराकुरु । एक एवाऽऽत्मा अनादिगुणसंबन्धान्नित्यबद्धः । आकाशवदनावृतत्वान्नित्य मुक्तश्चेति श्रुत्वा मे भ्रमो भवतीति । नित्यबद्धो देवदत्तयज्ञदत्तादिः । नित्यमुक्तो दत्तात्रेयभरतादिः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां दशमोऽध्यायः ॥ १० ॥

## अथैकादशोऽध्यायः

### श्रीभगवानुवाच

बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः । गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥१॥
शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया । स्वप्नो यथाऽऽत्मनः ख्यातिः संसृतिर्न तु वास्तवी ॥

---

एकादशे तु कृष्णेन लक्षणं बद्धमुक्तयोः ।
साधूनां च निरूप्यान्ते भक्तिसाधनमुच्यते ॥ १ ॥

अत्रात्मेत्यध्याहार्यम् । आत्मा बद्धः मुक्तश्चेति या व्याख्या कथनं सा मे गुणतः मदधीनसत्त्वादिगुणोपाधिनः न तु वस्तुतः । कुतः । गुणस्य मायामूलत्वात् मायायाश्च मिथ्यात्वात् बन्धनं न घटते बन्धाभावान्मोक्षोऽपि न घटते । कस्य । मे मदंशस्य जीवस्यापि किमुत ममेत्यर्थः । ननु कथमेतच्छास्त्रविरुद्धमुच्यते तत्राह इति मे व्याख्या एवं मत्कृतो निर्णयः । अलमति कुतर्कैरित्यर्थः । शेषं समानम् । गुणस्येत्येकवचनं तु सामान्याभिप्रायेण ॥१॥ देहापत्तिर्देहप्राप्तिः देहस्यापत्तिः अपमृत्युर्वा मायया मायिकोपाधिसम्बन्धेनैव भवति न साक्षात् । यथा स्वप्न आत्मनो बुद्धेरेव ख्यातिर्विवर्तः अतात्त्विकी अन्यथाप्रतीतिः यथा च शुक्तौ रजतमिति तद्वत् अतः शोकमोहा लक्षणा संसृतिर्न वास्तवी न सत्या । 'बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः इत्युक्तेः ॥२॥ विद्या अविद्या च

विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ॥३॥
एकस्यैव ममांशस्य जीवस्यैव महामते । बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतरः ॥४॥
अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते । विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि ॥५॥
सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे ।
एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥६॥

---

द्वे मम तनू शक्ती विद्धि । तन्येते मोक्षबन्धौ आभ्यामिति व्युत्पत्त्या तनू । कुतः । मे मायया विनिर्मिते माया-वृत्तिरूपत्वात् तयोः । किं च त एव शरीरिणां जीवानां मोक्षबन्धकर्यौ । आद्ये अनादी च । अतो यावदविद्यां प्रवर्तयामि तावज्जीवानां बन्धः यदा विद्यां ददामि तदा तेषां मोक्षो भवतीति । अत्र विनिर्मिते प्रसारिते इत्येव व्याख्येयमन्यथा जन्यत्वे सति आद्ये इति विशेषणासङ्गतिः स्यादित्यवधेयम् । मायाशक्तिरिव तद्वृत्ती अपि विद्याविद्ये नित्ये एव । तदेवं मायायास्तिस्रो वृत्तयो ज्ञेयाः । प्रधानम् अविद्या विद्या चेति । प्रधाने-नोपाधिः सत्य एव सृज्यते, अविद्यया तदध्यासो मिथ्याभूतः, विद्यया च तन्निवृत्तिरिति तिसृणां कार्यम् । बन्धकरी इति द्वितीयाद्विवचनम् । अस्य साक्षाद्वेदरूपत्वात् 'सुपां सुलुक् पूर्वसवर्णा'—इत्यादिना पूर्व-सवर्णदीर्घः ॥ ३ ॥ ननु 'आत्मैवेदं जगत्सर्वम्' । इति श्रुतेरात्मनोऽभेदे जीवस्य पृथक्सत्तैव नास्ति कथं बन्धमोक्षव्यवस्था तत्राह—एकस्यैवेति । एकस्यैव जीवस्यैवेत्यवधारणद्वयेन मम तु बन्धमोक्षकल्पनैव नास्ति रश्मिस्थानीयस्य ममांशस्य जीवस्य तु अविद्यायां प्रतिबिम्बतत्वात्तदुपाधिना अनादिर्भेदो बन्धश्च भवति विद्यया च तन्निवृत्तौ इतरो तु मोक्षोऽपि तस्य घटते इत्यौपाधिकी व्यवस्था ज्ञेया । वस्तुतस्तु उभावपि अज्ञान कल्पितौ । 'अज्ञानसंज्ञौ भवबन्धनमोक्षौ' इति ब्रह्मोक्तेः । यथैकस्यैव चन्द्रस्य जलादौ प्रतिबिम्बितत्वात्त-दुपाधिना प्रतिबिम्बरूपो भेदो, जलकृताः कम्पादयश्च प्रतिबिम्बस्यैव दृश्यन्ते न तु बिम्बस्य तद्वत् । एतच्च दुरूहतत्त्वं त्वं स्वयमपि बुद्ध्या निश्चिनु इति संबोधयन्नाह—हे महामते ! दुर्मतिर्देहाध्यासवान् बन्धमोक्षभाग् भवति । मतिमांस्तु देहाध्यासशून्यत्वात्तद्रहितो भवति । महामतिस्त्वं तु मत्तोऽन्यूनत्वेन मद्रूपत्वात् बन्धमो-क्षकल्पनाशून्य एवासि किमिह वृथा खिद्यसीति तात्पर्यम् ॥ ४ ॥ तदेवं बन्धमोक्षयोर्व्यवस्थां प्रतिपाद्य कथं वर्तेतेत्यादिप्रश्नस्योत्तरमाह—अथेति । अथेत्यव्ययं हेत्वर्थे । यतो जीवस्यैव बन्धमोक्षौ अथ तस्मात् हेतोः । हे तात प्रिय उद्धव ! ते तुभ्यम् उभयोः वैलक्षण्यं विरुद्धधर्माक्रान्तत्वलक्षणं वदामि । कथंभूतयोः । विरुद्धधर्मिणोः शोकानन्दधर्मवतोः । किं च एकस्मिन् धर्मिणि शरीरे नियम्यनियन्तृरूपेण स्थितयोर्जीवेश्वर-योर्मध्ये बद्धस्य मुक्तस्य चेत्युभयोः ॥ ५ ॥ एतौ जीवेश्वररूपौ सुपर्णौ वृक्षात्पक्षिणाविव देहात्पृथग्भूतौ । सदृशौ चिद्रूपत्वात् । सखायौ अवियोगात् । यदृच्छया बहुः स्यामेति भगवदिच्छाशक्त्या वृक्षे देहे एतौ प्राप्तौ । आङ्पूर्वकेण धातोर्निष्ठा । अत एतच्छब्देन न पौनरुक्त्यम् अत एव च तस्मिन् वृक्षे कृतं नीडं निकेतनं हृदयरूपं याभ्यां तौ तथाभूतौ स्तः । तयोर्मध्ये एको जीवः पिप्पलान्नं कर्मफलं सुखदुःखादिकं खादति भुङ्क्ते । अन्य ईश्वरः निरन्नोऽपि अभोक्ताऽपि स्वानन्दतृप्तत्वात् बलेन ज्ञानादिशक्त्या भूयान् ततोऽधिको वर्तते । तथा च

आत्मानमन्यं स च वेद विद्वानपिप्पलादो न तु पिप्पलादः ।
योऽविद्यया युक् स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥७॥
देहस्थोऽपि न देहस्थो विद्वान् स्वप्नात् यथोत्थितः । अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग् यथा॥
इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च । गृह्यमाणेष्वहं कुर्यान्न विद्वान् यस्त्वविक्रियः ॥९॥
दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा । वर्तमानोऽबुधस्तत्र कर्तास्मीति निबद्ध्यते ॥१०॥
एवं विरक्तः शयने आसनाटनमज्जने । दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥११॥

---

श्रुतिः—द्वा सुपर्णा इत्याद्या । पिप्पलोऽश्वत्थः । नश्वरत्वात् श्वः प्रभातपर्यन्तमपि न स्थास्यतीति-व्युत्पत्त्याऽत्र तेन देह उच्यते तस्मिन्नदनीयं कर्मफलमित्यर्थः । 'ओ वृश्छू छेदने इत्यस्माद् वृक्षः । वृश्च्यते कालेन छिद्यते इति वृक्षो देहः छन्दोभङ्गस्तु श्रुतेरनुकरणताद्योतनार्थः । सुष्ठु पर्णं पतनमागमनं यस्येति सुपर्णः जीव ईश्वरश्च ॥ ६ ॥ बलेन भूयानित्युक्तं तद्दर्शयति—आत्मानमिति । तत्र पिप्पलं कर्मफलं न अत्तीति अपिप्पलादः अत एव विद्वान् ज्ञानवान् यः ईश्वरः स आत्मानम् अन्यं जीवं च वेद । यस्तु पिप्पलादः कर्मफलभोक्ता जीवः स तु आत्मानमेव न वेद कुतोऽन्यमीश्वरम् । अतो योऽविद्यया युक् युक्तः जीवः स तु नित्यबद्धोऽनादिबद्धः । यस्तु विद्याप्रधान ईश्वरः स तु नित्यमुक्तः । प्राचुर्ये प्राधान्ये वा मयट् प्रत्ययः । तु नोभयत्र वैलक्षण्यं सूचितम् ॥ ७ ॥ सम्प्रति बद्धमुक्तजीवानां मिथो वैलक्षण्यमाह—देहस्थोऽपीति दशभिः—विद्वान् जीवन्मुक्तः संस्कारवशेन देहे स्थितोऽपि देहस्थो न भवति । यथा स्वप्नादुत्थितः पुरुषः स्मर्यमाणे स्वप्नदेहे स्थितोऽपि तत्रस्थो न भवति तद्गतसुखदुःखाद्यभावात् तद्वत् । कुमतिरविद्वान् देहाभिमानी वस्तुतः अदेहस्थोऽपि देहस्थो भवति । यथा स्वप्नद्रष्टा स्वप्नदेहगतस्तद्वत् ॥८॥ अन्यदपि वैलक्षण्यमाह—द्वाभ्याम् । इन्द्रियैरिन्द्रियार्थेषु विषयेषु गृह्यमाणेष्वपि यस्तु विद्वान् स अहम् अहंभावं न कुर्यात् । अहं गृह्णामीति मतिं न कुर्यादित्यर्थः । कुतः । गुणैः इन्द्रियैर्गुणेषु विषयेषु गृह्यमाणेषु । 'गुणा गुणेषु वर्तन्ते' इति गीतोक्तेः । अत एव अविक्रियः रागादिशून्यः । गुणैः गुणकार्यैरिन्द्रियैः गुणेषु गुणकार्येषु इन्द्रियार्थेषु विषयेषु गृह्यमाणेषु इत्यन्वयो वा[1] ॥ ९ ॥ अबुधस्तु पूर्वकर्माधीनेऽस्मिन् शरीरे वर्तमानः गुणैरिन्द्रियैर्भाव्येन क्रियमाणेन कर्मणा तत्र देहादौ निबध्यते । कुतः । अहं कर्ताऽस्मीत्यहङ्कारेण । 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते' । इति गीतोक्तेः । एवमेतैस्त्रिभिः श्लोकैः कथं वर्तेतेत्यस्य प्रश्नस्य सुख-दुःख शून्यो निरभिमानश्च देहे वर्तत इत्युत्तरमुक्तं भववति ॥ १० ॥ अन्यदपि वैलक्षण्यं वदन् किं भुञ्जीतेत्यादिप्रश्नानामुत्तरमाह—त्रिभिः । एवमिति युग्मकम् । एवम् अन्यकृतं कर्म मां बध्नातीत्येवं विद्वान् शयनादिषु वर्तमानोऽपि विरक्तः सन् यथाऽबुधस्तथा न बध्यत इत्यन्वयः । कुतः । तत्र तत्र विषयेषु गुणानिन्द्रियाणि आदयन् भोजयन् न तु स्वयमदन् तत्साक्षित्वेन वर्तमानत्वादित्यर्थः । एतदेव कुतः । प्रकृति

---

१. अहमित्यव्ययं द्वितीयार्थे ।

न तथा बद्धयते विद्वांस्तत्र तत्रादयन् गुणान् । प्रकृतिस्थोऽप्यसंसक्तो यथा खं सवितानिलः ॥१२॥
वैशारद्येक्षयाऽसङ्गशितया छिन्नसंशयः । प्रतिबुद्ध इव स्वप्नान्नानात्वाद् विनिवर्तते ॥१३॥
यस्य स्युर्वीतसंकल्पाः प्राणेन्द्रियमनोधियाम् । वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः॥१४॥
यस्यात्मा हिंस्यते हिंस्रैर्येन किंचिद् यदृच्छया । अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः॥१५॥
न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा । वदतो गुणदोषाभ्यां वर्जितः समदृङ् मुनिः ॥१६॥
न कुर्यान्न वदेत् किंचिन्न ध्यायेत् साध्वसाधु वा । आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥
शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि । श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥१८॥

---

स्थोऽपि देहस्थोऽपि असंसक्तः तदध्यासरहितः । यथा खमाकाशं सर्वत्र स्थितमपि यथा सूर्यः जले प्रतिबिम्बितोऽपि यथा वायुः सर्वत्र सञ्चरन्नपि न कुत्रापि सज्जते तद्वत् । संशब्देन सूक्ष्मोऽप्यध्यासो निराकृतः ॥ ११ ॥ १२ ॥ असङ्गो वैराग्यं तेन शितया तीक्ष्णया वैशारद्या अतीवविवेकवत्या ईक्षया सर्वत्र भगवद्दृष्ट्या छिन्नाः संशया विपरीतभावनादयो यस्य स तथाभूतः सन् नानात्वात् देहादिभेदनिष्ठप्रपञ्चात् विशेषेण निवर्तते जीवन्मुक्तो भवतीत्यर्थः । क इव । स्वप्नात् प्रतिबुद्धो जागरणं प्राप्त इव । स यथा स्वाप्निकप्रपञ्चात् मुच्यते तद्वत् ॥ १३ ॥ कथं विहरेदित्यस्योत्तरं वदन् वैलक्षण्यमाह यस्येति । यस्य प्राणादीनां वृत्तयो व्यापाराः संकल्परहिताः स्युः स देहस्थोऽपि तद्गुणैर्देहधर्मैर्जन्मनाशादिभिः सर्वथा मुक्तो भवति । प्राणस्य क्षुत्पिपासाद्याः । इन्द्रियाणां दर्शनश्रवणाद्याः । मनसः संकल्पविकल्पाद्याः । बुद्धेर्निश्चयाद्याश्च वृत्तयः सन्ति ॥१४॥ कैर्वा ज्ञायेत लक्षणैः इत्यस्योत्तरं वदन् परैरपि सुज्ञेयं वैलक्षण्यमाह—यस्येति त्रिभिः । यस्य आत्मा देहः हिंस्रैर्दुर्जनैरन्यैर्वा प्राणिभिः हिंस्यते पीड्यते । येन केनापि यदृच्छया क्वचित् किञ्चिदर्च्यते वा स बुधश्चेत् तत्र तिरस्कारे सत्कारे वा नैव विक्रियते हर्षशोकादिवशो न स्यात् । 'यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति । अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च । इति याज्ञ्यवल्क्योक्तेः ॥ १५ ॥ किञ्च साधु असाधु वा कुर्वतो वदतो वा जनान् न स्तुवीत न च निन्देत । बाहुलकात्तङ् । कुतः । गुणदोषाभ्यां वर्जितः । तत्कुत. । सर्वत्र समं ब्रह्म पश्यतीति समदृक् । अत एव मुनिः मननशीलत्वात् स जीवन्मुक्त उच्यत इत्यर्थः ॥ १६ ॥ अपि च साधु असाधु इष्टम् अनिष्टं वा किञ्चिदपि न कुर्यात् न वदेत् न च ध्यायेत् यत आत्मारामः आत्मन्येव रममाणो न तु बहिः । अतो मुनिः अनया कर्तृत्वाभिमानशून्यया वृत्त्या लोके जडवत् विचरेत् स मुक्त इतरो बद्धः । यद्वा । साधु वैदिकम् असाधु लौकिकम् । तथा च दैहिकव्यापारशून्यो यः स मुक्तः तदितरो बद्धश्चेति बद्ध मुक्तयोर्लक्षणानि ज्ञातव्यानि ॥ १७ ॥ किञ्च यो वेदाख्ये ब्रह्मणि निष्णातः अर्थतः पारङ्गतोऽपि परे ब्रह्मणि श्रीकृष्णाख्ये न निष्णायात् ध्यानादिना तन्निष्ठो न भवेत् तस्य शास्त्राभ्यासजन्यश्रमः श्रमैकफलः व्यर्थ एव न तु पुरुषार्थप्रापकः । यथा दुग्धार्थम् अधेनुं धेनुत्वशून्यां वन्ध्यां गां रक्षतः पुंसो रक्षाजन्यश्रम एव नान्यत्किञ्चित् तद्वत् ॥ १८ ॥ एतदेव नानाविधदृष्टान्तैः स्पष्टयति—गामिति । दुह्यत इति दोहः पयः ।

गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च।
वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी ॥१९॥
यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवप्राणनिरोधमस्य।
लीलावतारेप्सितजन्म वा स्याद् वन्ध्यां गिरं तां बिभृयान्न धीरः ॥२०॥

एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि। उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥२१॥
यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम्। मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥२२॥
श्रद्धालुर्मे कथाः शृण्वन् सुभद्रा लोकपावनीः। गायन्ननुस्मरन् कर्म जन्म चाभिनयन् मुहुः ॥२३॥

दुग्धः दोहः नोत्तरत्र दोहोऽस्ति यस्यास्तां दुग्धदानहीनामित्यर्थः। असतीं पुंश्चलीम् भार्यां असत्प्रजां दुष्टपुत्रम्। ऐहिकपारलौकिकसाधनशून्यत्वादित्यर्थः। तीर्थे उत्तमपात्रे ब्राह्मणे अदत्तं वित्तम्[1]। मया मन्नाम्ना हीनां वाचं च यो रक्षति धारयति स दुःखदुखी भवति। दुःखानन्तरं दुःखमेव भोग्यमस्ति यस्य स तथाभूतो भवतीत्यर्थः। अङ्ग हे उद्धव! दुग्धदोहामिति तु व्यवहारे दृष्टान्तः। परमार्थेतु 'न गोसेवनतो धर्मः परोऽस्ति ह्यनिमित्तकात्' इत्यादिपुराणात्सर्वदैव गोसेवा कल्याणदेत्यवधेयम्। तुना वित्तस्य नान्योपयोगित्वं सूचयति। 'धनं च धर्मैकफलम्' इत्युक्तेः॥ १९ ॥ वाचमिति पदं विवृणोति—। यस्यामिति। अङ्ग हे उद्धव! यस्यां वाचि मे पावनं कर्म अन्तःकरणशोधकं चरित्रं न स्यात्। किं तत्। स्थितिः पालनम्। उद्भवः सृष्टिः प्राणनिरोधः संहार एतदात्मकम्। किञ्च लीलावतारेषु ईप्सितं जगतः प्रेमास्पदं श्रीरामकृष्णादिजन्म वा यस्यां न स्यात् तां बन्ध्यां निष्प्रयोजनां गिरं धीरो विवेकी न धारयेदिति विधिर्दर्शितः। अन्यथा परत्र छुरिकया तत्कर्तनं स्यादित्यवधेयम् ॥ २० ॥ उक्तं ज्ञानमार्गमुपसंहरति —एवमिति। एवं जिज्ञासया बद्धमुक्तत्वलक्षणविचारेण आत्मनि जीवात्मनि नानात्वभ्रमं देवमनुष्यादिदेहाध्यासम् अपोह्य निरस्य विरजं निर्मलं मनः सर्वगे परिपूर्णे मयि भगवति समर्प्य उपारमेत साधनप्रयासाद् विरमेत्। बाहुलकात्ताङ्। अर्प्येति। असमासेऽपि बाहुलकाल्ल्यप् ॥ २१ ॥ यदि अनीशोऽसमर्थस्तर्हि निरपेक्षः निष्कामः सन् सर्वाणि नित्यनैमित्तिकानि कर्माणि मयि मन्निमित्तं समाचर अर्पय। मयीति निमित्ते सप्तमी। तेन कर्मणो बन्धनहेतुकत्वं न स्यात्। एवञ्च मदर्पितनिष्काममकर्मणैवान्तःकरणशुद्धिस्तदधीनमेव सभक्तिकं ज्ञानं तेन च मनसो निश्चलत्वं ततो भक्तिजनितेन शुद्धज्ञानेन भगवत्साक्षात्कार इति क्रमः। मयि ब्रह्मणीत्यन्वयो वा। अत्र पक्षे समाचर अनुतिष्ठ। तत्रापि निरपेक्षः फलानपेक्षः सन् ॥ २२ ॥ मदर्पितकर्मणा शुद्धान्तःकरणस्यान्तरङ्गां भक्तिमाह श्रद्धालुरिति द्वाभ्याम्। प्रथमत एव श्रद्धालुपदोपन्यासेन भक्तावीदृशश्रद्धावानेवाधिकारीति सूच्यते। मे मत्सम्बन्धिनीः सुभद्राः श्रवणादेव मङ्गलकरीः पावनीः पापनाशिनीः कथाः वक्तरि सति शृण्वन् श्रोतरि सति गायन् द्वयोरभावे स्वयमनुस्मरन्। किं च कर्म कालियदमनादिकं जन्म नन्दोत्सवादिकं च मुहुर्मुहुः प्रतिदिनं पर्वादौ वा अभिनयन् स्वयमनुकुर्वन् नाटकीयरीत्या कारयन् वा निश्चलां भक्तिं लभत इत्युत्तरेणान्वयः। किञ्च हे उद्धव! मदर्थे मत्प्रीत्यर्थं धर्मान् नित्यादिकर्माणि।

१. 'पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः' इति सप्तमोक्तेः।

मदर्थे धर्मकामार्थानाचरन् मदपाश्रयः । लभते निश्चलां भक्तिं मय्युद्धव सनातने ।।२४।।

सत्सङ्गलब्धया भक्त्या मयि मां य उपासिता । स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ।।२५।।

उद्धव उवाच

साधुस्तवोत्तमश्लोक मतः कीदृग्विधः प्रभो । भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता ।।२६।।

एतन्मे पुरुषाध्यक्ष लोकाध्यक्ष जगत्प्रभो । प्रणतायानुरक्ताय प्रपन्नाय च कथ्यताम् ।।२७।।

त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः । अवतीर्णोऽसि भगवन् स्वेच्छोपात्तपृथग्वपुः ।।२८।।

श्रीभगवानुवाच

कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् । सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ।।२९।।

---

कामान् वासोऽलङ्कारादीन् अर्थान् धनसंचयान् आचरन् सम्पादयन् तत्रापि मदपाश्रयः मदेकशरणः सन् न तु स्वप्रयत्नाभिमानी । एवंभूतो मयि सनातने आनन्दनिधौ निश्चलां निरतिशयप्रेमलक्षणां भक्तिं लभते । यत्सुखेन भक्तैः मुक्तिरप्यनाद्रियते किमुतान्यत् ।। २४ ।। एवं सत्सङ्गेन लब्धया भक्त्या यो भक्तः मामुपासिता उपास्ते स उपासकः वै निश्चितम् अञ्जसा सुखेनैव मे पदं स्वरूपं विन्दते प्राप्नोति । कीदृक् । सद्भिर्दर्शितम् स्वस्मिन्नेव साक्षाद्बोधितम् । यद्वा । उपासिता ध्याता भवति स च ध्यानशील इति श्रीधरी । अञ्जसेत्यव्ययं सुखार्थे ।। २५ ।। सत्संगलब्धया भक्त्येत्युक्तं तत्र सतां भक्तेश्च वैशिष्टयं पृच्छति । लोके स्वस्वमतिकल्पिता बहवः साधवः सन्ति तव तु कीदृग्विधः मतः किंप्रकारकः सम्मतः । भक्तिरपि लोके बहुविधा तत्र पुनः त्वयि कीदृशी उपयुज्येत उपयुक्ता भवेत् । या सद्भिर्नारदादिभिरादृता । हे उत्तमश्लोक ! उद्गतं निर्गतं तमो यस्मात् तथाभूतः श्लोकः यशो यस्य । पद्ये यशसि च श्लोकः । इति कोशात् । उत्तमैर्नारदादिभिः श्लोक्यते स्तूयते वा तथा ।।२६।। एतच्च साधूनां भक्तेश्चलक्षणं मे मह्यं कथ्यताम् । कथंभूताय । अनुरक्ताय स्निग्धाय श्रद्धालोः । 'ब्रूयुः स्निग्धस्य शिष्यस्य' इत्युक्तेः । कुतः । प्रणताय । तत्कुतः । प्रपन्नाय शरणागताय भक्ताय । इति यथेष्टं हेतुहेतुमद्भावः । भक्तसर्वस्वताद्योतनार्थं स्वामिनोऽपि सम्बुद्धित्रयं साभिप्रायम् । हे पुरुषाध्यक्षेति । पुरुषाणामध्यक्षत्वादिह पुरुषेषु त्वत्तोऽन्यो न कश्चिद्धितोपदेष्टेति सूचयति । लोक्यन्ते यज्ञेषु ये ते लोका देवास्ते वामप्यध्यक्षत्वाद्देवेष्वपि तथाविधो नास्ति । किं बहुना जगतः प्रभुत्वाच्चतुर्दशब्रह्माण्डेष्वपि भक्तसर्वस्व ईदृशो दयालुर्नास्तीत्यतस्त्वमेव ब्रूहीति वाष्पपूरितनयनस्तं प्रार्थयते इति गूढाभिसन्धिः ।। २७ ।। किञ्च हे भगवन् । त्वं साक्षात् परं ब्रह्मैव अवतीर्णोऽसि । किं तत् । व्योम व्योमवत् लुप्तोपमा । आकाशवदसङ्गः इत्यर्थः । कुतः । यतस्त्वं प्रकृतेर्मायातः परः पुरुषोऽसि । तर्हि मायातीतस्य कुतो देहसम्बन्धस्तत्राह—स्वेषां भक्तानामिच्छया पृथक् उपात्तं गृहीतं वपुः सुन्दरमूर्तिर्येन सः । '[१]शुभाकारतनौ वपुः' इति यादवः । 'साधकानां हितार्थं हि ब्रह्मणो रूपकल्पना' इत्युक्तेः ।। २८ ।। साधुभक्त्योर्मध्ये पूर्वं त्रिंशल्लक्षणैः साधुं प्रतिपादयति कृपालुरिति पञ्चभिः—। कृपालुः परदुःखासहिष्णुः । सर्वदेहिनां मध्ये केषाञ्चिदपि अकृतद्रोहः ।

कामैरहतधीर्दान्ती मृदुः शुचिरकिंचनः । अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥३०॥
अप्रमत्तो गभीरात्मा धृतिमाञ्जितषड्गुणः । अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ३१
आज्ञायैवं गुणान् दोषान् मयाऽऽदिष्टानपि स्वकान् ।
धर्मान् संत्यज्य यः सर्वान् मां भजेत स सत्तमः ॥३२॥
ज्ञात्वाऽज्ञात्वाथ ये वै मां यावान् यश्चास्मि यादृशः । भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥

---

तितिक्षुः क्षमाशीलः । सत्यमेव सारः स्थिरं बलं यस्य सः । 'सारो बले स्थिरांशे च' इत्यमरात् । अनवद्यः शुद्धः असूयादिदोषरहित आत्मा चित्तं यस्य सः । शत्रुमित्रादिषु सुखदुःखादिद्वन्द्वेषु वा समः हर्षविषादरहितः । यथाशक्ति सर्वेषामुपकारकः ॥२९॥ कामैर्विषयैः न हता न क्षुभिता धीर्बुद्धिर्यस्य सः । दान्तो निगृहीतेन्द्रियः । मृदुः कोमलचित्तः । शुचिः सदाचारसम्पन्नः । अकिञ्चनः परिग्रहशून्यः । तच्च सर्वथा न संभवति पानपात्रकम्बलादेरप्यग्रहणापत्तेरत एवमर्थो विधेयः । न विद्यते किञ्चन किमिदमिति प्रश्नयोग्यं धनं यस्य स तथा संकुचितपरिग्रह इत्यर्थः । संकोचेऽकिञ्चनव्यर्थे मुधा' इति यादवात् । अनीहः फलेच्छारहितः । मितं परिमितं भुङ्क्ते इति मितभुक् लब्धाहारी । 'लब्धाहारी विशुद्धात्मा पश्यत्यात्मानमात्मनि इति महाभारतात् । लब्धाहारनियमस्तु आयुर्वेदशास्त्रादवगन्तव्यः । 'द्वौ भागौ पूरयेदन्नैर्जलेनैकं प्रपूरयेत् । वायोः सञ्चारणार्थं च चतुर्थमवशेषयेत्' इति । शान्तः संयतान्तःकरणः । स्थिरः भक्तिलक्षणधर्मे । मच्छरणः । अहमेव शरणमाश्रयो रक्षकश्च यस्य तथाभूतः । 'शरणं गृहरक्षित्रोः' इति कोशात् । मुनिर्मननशीलः ॥३०॥ अप्रमत्तः सावधानो भगवत्परिचर्यायाम् । गभीरात्मा विकारशून्यः । धृतिमान् विपदि धैर्यवान् । जिताः स्वायत्तीकृताः षड्गुणा ऊर्मयो येन सः । 'क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः इत्युक्तेः । गुणानामतीव चञ्चलत्वादूर्मिसादृश्यं बोध्यम् । अमानी सम्मानेच्छारहितः । अन्येभ्यो मानदश्च । कल्पः परोद्बोधने समर्थः । 'कृपू' सामर्थ्ये इत्यस्मात् 'कृपो रोलः' । मैत्रोऽवञ्चकः । कारुणिकः । कस्यचिद्दुःखावस्थां दृष्ट्वा करुणयैवोपकारे प्रवृत्तः । कृपालुत्वं मनोधर्मः कारुणिकत्वं चेति देहधर्मः अतो न पुनरुक्तिः । कविः तत्त्ववेत्ता । इत्येवमष्टाविंशतिर्लक्षणान्युक्तानि । अग्रिमपद्यद्वयोक्तं भक्तिविरुद्धधर्मत्यागरूपम् अनन्यभावेन भजनरूपं चेति लक्षणद्वयमादाय त्रिंशत्संख्यापूर्तिरित्यवधेयम् ॥ ३१ ॥ एवं धर्माचरणेऽन्तःकरणशुद्ध्यादीन् गुणान् विपक्षे नरकपातादीन् दोषांश्च ज्ञात्वा मया वेदरूपेण उपदिष्टानपि धर्मान् भक्तिविरुद्धान् सन्त्यज्य यो मां भजेत् सोऽपि पूर्वोक्तवत् सत्तमः अनुत्तमः साधुः । भक्तिनिरुद्धधर्माश्च दशमीविद्धैकादश्यामुपवासः । कृष्णैकादश्यामनुपवासः । अनिवेदितहव्यकव्यादयो ज्ञेयाः । यद्वा । ध्यानबाधकतया स्वधर्मान् वर्णाश्रमधर्मानपि सन्त्यज्य । मद्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयेन भक्तिदार्ढ्यान्निवृत्ताधिकारतया सन्त्यज्येत्यर्थः । अत्र सत्तम इति तृतीयकोटौ तमब्घटितप्रयोगः । कर्ममिश्रभक्तिमान् सत्पदवाच्यः । ज्ञानमिश्रभक्तिमान् सत्तरः । साक्षात्पराभक्तिमान् शुद्धभक्तस्तु सत्तम इति विवेकः ॥ ३२ ॥ किं च अहं यावान् देशकालपरिच्छेदशून्यः । यश्च सर्वव्यापकः । यादृशश्च सच्चिदानन्दघनश्चास्मि तं मां ज्ञात्वा अथवा अज्ञात्वा । यद्वा । ज्ञात्वा सामान्यविशेषविधया

मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम् । परिचर्या स्तुतिः प्रह्वगुणकर्मानुकीर्तनम् ॥३४॥
मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव । सर्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥३५॥
मज्जन्मकर्मकथनं मम पर्वानुमोदनम् । गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥३६॥
यात्रा बलिविधानं च सर्ववार्षिकपर्वसु । वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥३७॥

---

अनन्यभावेन एकनिष्ठया ये भजन्ति ते भक्ततमा मे मताः । मम तु विशिष्टा सम्मतिरत्रैवेति सूचितम् । ईदृशप्रेमातिरेकस्य दुर्लभत्वात् । अत एव प्रकरणप्राप्तमेकवचनमप्यतिक्रम्य गौरवेण मता इति बहुवचनमुपात्तम् ॥ ३३ ॥ साधूनां लक्षणं निरूप्य भक्तेर्लक्षणमाह—मल्लिङ्गेत्यष्टभिः । मम लिङ्गानि मत्प्रतिमाः शालग्रामादयस्तेषां मद्भक्तजनानां च दर्शनादि[1] कर्तव्यमित्यध्याहार्यं विधिप्रकरणत्वात् । भक्तपक्षे स्पर्शनं सङ्गतिः । प्रह्वत्वं शिरसा नतिः ॥ ३४ ॥ अनु निरन्तरम् । सर्वस्य लाभस्य लब्धस्य वस्तुन उपहरणं समर्पणम् । दास्यभावेन आत्मसमर्पणम् ॥ ३५ ॥ पर्वाणि जन्माष्टमीरामनवम्यादीनि तेषामनुमोदनम् अभिनयेन प्रशंसनम् । गीतादिभिर्मन्मन्दिरोत्सवः । ताण्डवं नृत्यम् । वादित्रं वाद्यम् । गोष्ठी भक्तसमाजः ॥ ३६ ॥ यात्रा तीर्थयात्रा । रथयात्रोत्सवो वा । बलिविधानं पुष्पोपहारसमर्पणम् प्रतिदिनम् । बलिः पुष्पोपहारादौ इति कोशात् । सर्वेषु वार्षिकपर्वसु प्रतिवर्षभवेषु उत्सवदिनेषु विशेषतो बलिविधानम् । वैदिकी दीक्षा तु त्रिवर्णस्यैव । तन्त्रमागमः तत्संबन्धिनी दीक्षा तु स्त्रीशूद्रयोरपि सा च प्रणवरहितनामात्मिकैव । अत्र विषये तत्तत्सम्प्रदायगतनानाविधो विवादः स च बुद्धेर्भ्रान्तिकरत्वाद्विवेकिभिर्भक्तैर्नादरणीयः तथा तावदिदमेव तत्त्वं सुधीभिरुपादेयम् । गायत्री वेदजननी इति सिद्धान्तादुपनीतस्य गायत्रीमन्त्रदीक्षितस्य ब्राह्मणस्य यथारुचि सर्वेष्वपि मन्त्रेष्वधिकारसत्त्वान्मुख्यविधया यद्यपि तस्य दीक्षाया आवश्यकता नास्ति तथाऽपि चिरकालीनपरम्परागतमर्यादारक्षणपूर्वकमनस्तुष्टये तीर्थादौ शुभमुहूर्तदिनेऽग्निसन्निधौ लोभानाक्रान्तविद्वद्ब्राह्मणद्वारैवाङ्गवैकल्याकरणपूर्वकं स्वाभिलषितं स मन्त्रग्रहणं कुर्यात् । क्षत्रियवैश्यावपि तथाविधौ भवेताम् । 'गायत्र्या ब्राह्मणमसृजत्, त्रिष्टुभा राजन्यं न केनचिच्छन्दसा शूद्रम्' इति श्रुतेः शूद्रस्य वेदेऽनधिकारात् स तु स्वकुलपरम्परागतपुरोहितेनैव प्रणवरहितनामात्मकमन्त्रेणैव दीक्षितो भवेत् । स्त्रीणां तु पतिशुश्रूषैव मुख्यो धर्मो न च तासां स्वपत्यतिरिक्तान्यपुरुषद्वारा दीक्षाया आवश्यकत्वं तत्रापि विशेषरुचौ तु पतिप्रसादेनैव तत एव ता अपि नानात्मकमन्त्रग्रहणं कुर्युर्न च कथंचित्कुतश्चिदप्यन्यस्मात्पुरुषादन्यथा ताः सर्वा अपि नरकगामिन्यो भवेयुः । संन्यासिभिस्तु दीक्षा न ग्राह्या न च तैर्देयाऽपि अन्यथा तेऽपि तथाविधा भवेयुरिति शास्त्रडिण्डिमः[2]। मदीयव्रतानामेकादश्यादीनां धारणं मुख्यतयाऽऽचरणम् ॥ ३७ ॥ अर्चा मूर्तिः । श्रद्धा कार्या ।

---

१. परिचर्यादिकं च ।

२. पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि । इति भगवद्वचनात् ।

**ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः। उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि ॥३८॥**
**सम्मार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः। गृहशुश्रुषणं मह्यं दासवद् यदमायया ॥३९॥**
**अमानित्वमदम्भित्वं कृतस्यापरिकीर्तनम्। अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥४०॥**
**यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः। तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥४१॥**

---

उद्यानादिकर्मणि तेषां करणे उद्यम-कार्यः। सामर्थ्ये सति स्वतः असति च अन्यैः सह संभूय मिलित्वा। उद्यानं पुष्पप्रधानम्। उपवनं फलप्रधानम्। आक्रीडं क्रीडावनम् ॥ ३८ ॥ दासवत् लौकिकदास इव सम्मार्जनादिभिर्मह्यं मम यत् मन्दिरस्य शुश्रूषणं तच्च कार्यमित्यन्वयः। अमायया अतिप्रेम्णा। वित्तशाठ्यादिराहित्ये न वा। सम्मार्जनं तृणधूल्यादिदूरीकरणम्। उपलेपो गोमयादिभिः ताभ्याम्। सेकः पुष्पोदकैः सेचनम्। मण्डलं सर्वतोभद्रादिकरणम्। वर्तनं प्रदक्षिणगमनं च परिक्रमेत्यर्थः तैः। 'विशेषजीवनं प्रोक्तं वर्तनं गमनं तथा' इति हलायुधः ॥३९॥ न मानित्वमित्यमानित्वमहम्भावं न अदम्भित्वं दम्भभावः न, कृतस्य धर्मस्य परिकीर्तनं न कुर्यादित्यर्थः। 'धर्मः क्षरति कीर्तनात्' इत्युक्तेः। मे मह्यं निवेदितं समर्पितं क्षेत्रारामादि नोपयुञ्ज्यात् स्वोपभोग्यं न कुर्यात्। किं बहुना मे निवेदितं दीपप्रकाशमपि नोपयुञ्ज्यात् स्वार्थं न व्यवहरेत्। यद्वा। मे निवेदितमन्नादिकं साकल्पेन नोपयुञ्ज्यात् किन्तु भक्तेभ्यो दत्त्वा प्रसादरूपेण स्वयमप्युपभुञ्जीतेवेत्यर्थः। तस्यानन्तफलत्वश्रवणात्। यथोक्तम् षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्तितम् विष्णोर्नैवेद्य सिक्थेन पुण्यं तद् भुञ्जतां कलौ ॥४१॥ 'हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः। पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः'। इति। एतदर्थोपपादिका श्रुतिरपि—एक एव नारायण आसीन्न ब्रह्मा नेमे द्यावापृथिव्यौ सर्वे देवाः सर्वे पितरः सर्वे मनुष्या विष्णुनाऽशितमश्नन्ति विष्णुनाऽऽघ्रातं जिघ्रन्ति विष्णुना पीतं पिबन्ति तस्माद्विद्वांसो विष्णूपहृतं भक्षयेयुः। विष्णूपहृतं विष्णवे निवेदितमिति श्रुतिपदार्थः। यद्वा। सकृन्निवेदितं पुनर्न निवेदयेत्। 'स्वोच्छिष्टमपि नैवाद्यात्' इति स्मृतेः। अनिवेदितं तु कदाचिदपि न गृह्णीयात् तस्य दोष श्रवणात्। 'अनर्पयित्वा गोविन्दं यो भुङ्क्ते धर्मवर्जितः। शुनो विष्ठासमं चान्नं नीरं च सुरया समम्' इति पाद्मोक्तेः। यद्वा। अन्यस्मै निवेदितं मे नोपभुञ्ज्यात् मह्यं न निवेदयेदित्यर्थः। उक्तं च—विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्। पितृभ्यश्चैव तद् देयं तदानन्त्याय कल्पते। पितृशेषं तु यो दद्याद्धरये परमात्मने। रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः। पितृपदमुपलक्षणं देवानामपि। रेतोधाः नरशुक्रपातारः। किञ्चान्यदपि—यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम्। तेनैव पिण्डांस्तुलसी विमिश्राना कल्पकोटिं पितरस्तु तृप्ताः। यद्वा। अन्यस्मै निवेदितमुच्छिष्टं दीपावलोकं नीराजनारूपेण मेऽपि नोपयुञ्ज्यात् किन्तु अभिनववर्तिसंयुक्तमेव निवेदयेदित्यर्थः इत्यलं प्रसक्तानुप्रसक्त्या ॥ ४० ॥ अत्र तमब्घटितप्रयोगात् लोके इष्टं तामसम् इष्टतरं राजसम् इष्टतमं सात्त्विकं च तदेव न तु तामसं राजसं चेति 'सात्त्विकान्येव सेवेत' इत्यत्रैवोक्तेः। तत्रापि आत्मनो मनसोऽतिप्रियं च यत् दधिनवनीतपायसादि तदेव मह्यं निवेदयेत्। यतस्तन्निवेदितं वस्तु आनन्त्याय अनन्तसुखाय समर्थं भवति। यद्वा। अनन्तो भगवान्

**सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् । भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ॥४२॥**
**सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् । आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग यवसादिना॥४३॥**
**वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया । वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥४४॥**
**स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि । क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥४५॥**
**धिष्ण्येष्वेष्विति मद्रूपं शंखचक्रगदाम्बुजैः । युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत् समाहितः॥४६॥**
**इष्टापूर्तेन मामेवं यो यजेत समाहितः । लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥४७॥**

---

तत्प्राप्तये भवतीत्यर्थः । एतेन दर्भमञ्जर्यादीनि शास्त्रे विहितान्यपि लोके इष्टतमत्वाभावात् तथा मद्यादीनि संकर्षणप्रियाण्यपि शास्त्रे इष्टतमत्वाभावात्तानि न निवेदयेदिति सूचितं भवति । अत एव लोके शास्त्रे च यदिष्टतमं तत्रापि यदात्मनः प्रियतमं तदेव नान्यत्तामस राजसं चेति ॥ ४ ॥ प्रसङ्गप्राप्तत्वादेकादशपूजास्थानानि निर्दिशति —सूर्य इति । हे भद्र ! मङ्गलमूर्ते ! उद्धव । सूर्यादीनि मे पूजास्थानानि ज्ञेयानि[1] । मरुत् वायुः । आत्मा जीवात्मा 'यद्यपि ब्राह्मणा वैष्णवा मुख्याः' इति पुराणवचनात् ब्राह्मण एव वैष्णवस्तथाप्यत्र पृथग् निर्देशात् 'गृहीतविष्णुदीक्षाकः सदा विष्णुगतान्तरः । सर्वत्र विष्णुसन्दर्शी वैष्णवोऽभिमतो बुधैः' इत्युक्तलक्षणो ग्राह्यः । विष्णुर्देवताऽस्येति व्युत्पत्त्या । स च द्विविधः—'बाह्य आभ्यन्तरश्चैव वैष्णवो द्विविधो मतः । बाह्यस्तु शंखचक्राभ्यां वीतरागस्तु चान्तरः' इति वैष्णवोक्तेः । चक्रादिधारणं च ब्राह्मणेतरपरम् । इति वंशीधरी ॥ ४२ ॥ स्थानभेदेन पूजासाधनान्याह सूर्य इति त्रिभिः— । तु वैलक्षण्यार्थः । विद्यया त्रय्या वेदत्रयोक्तसूक्तैः उपस्थानादिना 'उद्वयम् उदुत्यम्' इत्यादिभिर्मां यजेतेति प्रत्येकं संबध्यते । हविषा घृतादिना । विप्राग्र्ये आचारसम्पन्ने ब्राह्मणे । अग्र्य श्रेष्ठम् । आतिथ्येन अतिथिसत्कारेण । अत्रापि तु जातिवैलक्षण्ये । 'ब्राह्मणो जन्मना श्रेयान्' 'धृता तनूरुशतो मे पुराणी' इत्याद्युक्तेः । यवसं घासादि । आदिना कण्डूयन दंशनिवारणादिग्रहः । अङ्ग हे उद्धव !॥ ४३ ॥ वैष्णवे विष्णुभक्ते बन्धुवत्सत्कारेण । हृदयाकाशे ध्याननिष्ठया ध्यानभावनया । मुख्यधिया 'सर्वदेवोत्तमो वायुः इति ज्ञानेन । वायुज्ञानस्यापि श्रुत्या मोक्षहेतुत्वोपपादनात् । 'तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरयं पुनर्मृत्युं जयति य एवं वेद' इति श्रुतेर्वायौ मुख्यत्वबुद्ध्येत्यर्थः । तोये तोयपूर्वकैर्द्रव्यैस्तिलादिभिस्तर्पणादिना मां यजेतेत्यनुषङ्गः तोयपुरस्कृतैस्तोयादिभिर्वा ॥ ४४ ॥ स्थण्डिले गोमयोपलिप्तभूमौ मन्त्रहृदयैः रहस्यमन्त्रन्यासैः सह तत्र मां यजेतेत्यन्वयः । आत्मनि देहे आत्मानं जीवं मां भोगैरन्नवस्त्रादिभिर्यजेत अयं मम देहोऽपि मत्प्रभोरधिष्ठानमिति बुद्ध्या । ईश्वरो जीवकलया प्रविष्टो भगवानिति इत्युक्ते । सर्वभूतेषु प्राणिमात्रेषु अन्तर्यामिनिरूपेण वर्तमानं क्षेत्रज्ञं सर्वसाक्षिणं मां समत्वेन समदृष्ट्या यजेत ॥४५॥ सर्वस्थानेषु ध्येयमाह-धिष्ण्येष्विति । समाहित एकाग्रचित्तः सन् एषु स्थानेषु इति इत्थं चतुर्भुजं मद्रूपं ध्यायन् अर्चेदित्यन्वयः । कीदृशम् । शंखादिभिर्माङ्गलिकैर्युक्तम् अत एव शान्तम् अभयदम् ॥ ४६ ॥ भक्तेः फलमाह-इष्टेति । एवं साधुसेवया सत्संगेन समाहितः निश्चलचित्तः सन् इष्टापूर्तेन यो मां यजेत स मयि सतीं

---

१. भद्रेत्येकपदं वा भद्राणि मङ्गलमयानि पूजास्थानानि ।

**प्रायेण भक्तियोगेन सत्संगेन विनोद्धव । नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् ॥४८॥**

**अथैतत् परमं गुह्यं शृण्वतो यदुनन्दन । सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखा ॥४९॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यामेकादशोऽध्यायः ॥

---

निश्चलां प्रेमरूपां भक्तिं लभते ततश्च मत्स्मृतिर्मज्जानं भवति । मत्साक्षात्कारो भवतीत्यर्थः । 'भक्तिर्ज्ञानाय कल्पते' भक्त्या कृष्णः पुरः स्थितः' इत्याद्युक्तेः । यद्वा साध्वी चासौ सेवा तया दृढविश्वासेनेत्यर्थः । विश्वनाथस्तु मत्कर्तृका स्मृतिः । यस्तु साधून् आधिक्येन सेवते तं तु सदा अहं स्मरामीत्यर्थमाह— इष्टं वैदिकं कर्म यागादि । पूर्तं स्मार्तं कर्म वाप्यादिनिर्माणरूपं च तयोः समाहारो दीर्घश्च । वापीकूप-तडागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्वमित्यभिधीयते इत्युक्तेः ॥ ४७ ॥ ज्ञानमार्गादपि भक्तिमार्गस्य श्रेष्ठतामाह-प्रायेणेति । हे उद्धव ! सता संगेन यो भक्तियोगस्तेन विना संसारतरणे अन्य उपायः-प्रायेण न विद्यते नैव विद्यते । प्रायेणेत्यवधारणे । 'प्रायोऽवधारणाधिक्ये' इति धरणिः । हि यतः सतामहं परायणं परं मुख्यम् अयनमाश्रयः । अतः सत्संगो मद्भक्तेरन्तरङ्गसाधनमित्यर्थः । स च सर्वदैव कर्तव्यः । 'सत्सङ्गः शेवधिर्नृणाम्' इत्युक्तेः ॥ ४८ ॥ अथ हेतौ । हे यदुनन्दन उद्धव । अथ यतस्त्वं मे भृत्यः भर्तुं योग्यः ज्ञानेन भरणयोग्यः । सु पूजितं श्रद्धायुक्तं हृन्मनो यस्य सः । सुः पूजायम् । सुहृत् श्रद्धालुश्च सखा असि अतः अतिगोप्यमपि एतत् परमं गुह्यं रहस्यं वक्ष्यामि त्वं शृणु इत्यन्वयः । 'ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत' इति वचनात् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यामेकादशोऽध्यायः ॥ ११ ॥

## अथ द्वादशोऽध्यायः

### श्रीभगवानुवाच

**न रोधयति मां योगो न सांख्यं धर्म एव च । न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥१॥**

**व्रतानि यज्ञश्छन्दांसि [1]तीर्थानि नियमा यमाः । यथावरुन्धे सत्संगः सर्वसङ्गापहो हि माम् ॥२॥**

---

द्वादशे बहवो जीवाः सत्सङ्गान्मामुपागताः ।
इत्युपक्रम्य तत्रोक्ता कर्मतत्त्यागपद्धतिः ॥ १ ॥

नेति युग्मकम् । यथा सत्सङ्गो मामवरुन्धे वशीकरोति तथा योगादिकं मां न रोधयति न वशीकरोतीति द्वयोरन्वयः । हि यतः स सत्सङ्गः सर्वसङ्गापहः सर्वसंगं विषयासंगमपहन्तीति तथा । 'अत्यन्तं विषयासंगः सर्वसंग इति स्मृतः' इति निरुक्तेः । तत्र योगोऽष्टाङ्गः । 'यमनियमेति योगसूत्रोक्तः । सांख्यं चतुर्विंशति-तत्त्वविचारः । धर्मः 'धृतिः क्षमेति स्मृत्युक्तो दशविधः । स्वाध्यायो वेदपाठः । तपः कृच्छ्रचान्द्रायणादिः । त्यागः संन्यासः । इष्टमग्निहोत्रादि पूर्तं वापीकूपादिनिर्माणम् । दक्षिणा दानम् । व्रतानि एकादश्यादीनि । यज्ञो देवपूजा । 'यज्' देवपूजा –इत्यस्मात्साधुः । छन्दांसि छन्दोरचनाः । रहस्यमन्त्रानुष्ठानं वा ।[1] नियमा

---

१. तरन्त्येभिरिति तीर्थानि ।

सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः । गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥३॥
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः । रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ॥४॥
बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः । वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५ ॥
सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः । व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ॥६॥
ते नाधीतश्रुतिगणा नोपासितमहत्तमाः । अव्रतातप्ततपसः सत्सङ्गान्मामुपागताः ॥७॥
केवलेन हि भावेन गोप्यो गावो नगा मृगाः । येऽन्येन मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥

---

शौचसन्तोषादयः । यमा अहिंसासत्यास्तेयापरिग्रहाः पातञ्जलोक्ताः ॥१॥२॥ सत्संगेनेति चतुष्कम् । हे अनघ निष्पाप उद्धव ! त्वमपि संगात्पापनिवारकोऽसीत्यभिप्रायः । तस्मिन् तस्मिन् युगे रजस्तमःप्रकृतयोऽपि बहवो मत्पदं प्राप्ता इत्यन्वयः । तत्र दैतेया दितिपुत्राः । यातूनि रक्षांसि दधति पुष्णन्तीति यातुधाना राक्षसाः । 'स्वजातिपोषा रक्षांसि' इति वचनात् । मृगादीनां साक्षाद्भगवत्संगः । 'खगमृगाः सदयावलोकैः' इति दशमोक्तेः । गन्धर्वादीनामपि तथैव । गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः । सविद्याधरकिन्नरा द्वारकामुपसंजग्मुः सर्वे कृष्णादिदृक्षवः' इत्युक्तेः । अन्त्यजाश्च सप्त । 'रङ्कारो नटी व्रातः सखश्च धव एव च । कैवर्तभेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः' इति गारुडोक्तेः । त्वाष्ट्रः त्वष्टुः पुत्रः वृत्रासुरः । कायाधवः प्रह्लादः । माता कयाधुनाम्नी दानवी तस्या पुत्रः । आदिना घण्टाकर्णादयः । वृषपर्वा । जातमात्र एव मात्रा त्यक्तो मुनिना पालितो विष्णुभक्तोऽभूदिति पुराणान्तरे । बलेः प्रह्लादसंगः । बाणस्य श्रीशिवेन संगः । मयस्य सभानिर्माणे पाण्डवसंगः । अथ च विभीषणस्य सुग्रीवस्य च हनुमत्संगः । ऋक्षो जाम्वान् । तस्य भगवत्संगः । गजेन्द्रस्य पूर्वजन्मनि दूर्वाससः संगः परजन्मनि भगवत्संगः । गृध्रो-जटायुः तस्य गरुड-दशरथादिसंगः । वणिक्पथो वैश्यस्तुलाधारसंज्ञकः । तस्य च जाजलिमुनिवर्यप्रसंगे नारदादिसंगः । व्याधो धर्मव्याधः । कश्चित् वसुनामा वैष्णवो राजा आसीत् । तेन मृगभ्रान्त्या कश्चिद् ब्राह्मणो हतः । स च ब्रह्मराक्षसो बभूव । राज्ञः विष्णुलोकगमनसमये स राक्षसस्तद्देहे प्रविष्टोऽभूत् । तद्भोगान्ते पुनरपि राजत्वं प्राप्तस्य तस्य ब्रह्मपराख्यस्तोत्रपाठतेजसा स तद्देहान्निर्गतस्तत्कृतधर्मव्याधसंज्ञकः सन् हिंसाविमुखः नीलाद्रिनाथं दृष्ट्वा प्राप्ततत्संस्पर्शस्तत्सायुज्यं प्रापेति वाराहपुराणीया कथाचात्रानुसन्धेया । कुब्जाया भगवत्संगः । पूर्वजन्मनि नारदसंगश्चेति माथुरहरिवंशे प्रसिद्धम् । गोप्यः पूर्वजन्मनि मुनिवर्यादयः कृतानेकसत्संगा इह जन्मनि नित्यसिद्धगोपीसंगः । यज्ञपत्न्यो दीक्षितभार्याः । तासां व्रजस्य श्रीकृष्णदूतीभिः संगः तथाऽपरे अनुक्ता अपि बहवो मत्पदं प्राप्ता इति संबन्धः ॥३॥४॥५॥६॥ यद्यपि न अधीताः श्रुतिगणा यैस्ते । तदर्थं च न उपासिता महत्तमा ज्ञानिनो यैस्ते । नैकधेतिवत्समासः । न व्रतानि येषान्ते न तप्तानि कृतानि तपांसि यैस्ते ते च ते च तथोक्ताः । तथाऽपि केवलात् सत्संगादेव मामुपागता मत्समीपमागताः ॥ ७ ॥ केवलेन भावेन निरतिशयप्रेम्णैव गोप्यादयः ये चान्ये मूढधियोऽज्ञानबहुला नागादयस्ते सर्वेऽपि सिद्धाः कृतार्थाः सन्तः अञ्जसा सुखेनैव मामीयुः प्रापुरित्यन्वयः । हीति प्रसिद्धिं द्योतयति । तत्र गोप्यः शृङ्गाररसेन । गावो वात्सल्यरसेन । नगाः पर्वता गोवर्धनाद्या सख्यरसेन । नगा वृक्षाः वा यमलार्जुनाद्याः । मृगा अपि मूढधियो नागाः कालियाद्याश्च दास्यरसेन मामीयुः । 'वयं खला सहोत्पत्त्या तमसा मूढयोनयः' इति कालि-योक्तेः । तदानीन्तनानां खगमृगतरुगुल्मादीनामपि भगवति भावोऽस्तीति निश्चीयते । अत्र विषये 'नूनं बताम्ब विहगा मुनयो वनेऽस्मिन्' —'अहो अमी' धन्येयमद्य धरणी इत्यादि दशमोक्तानि पद्यानि अनुस्मर्तव्यानि ॥८॥[1]

---

१. भक्तिं विना स्वप्राप्ते दुर्लभतां द्योतयति-यमिति ।

यं न योगेन सांख्येन दानव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद् यत्नवानपि ॥९॥

रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचिताः ।
विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥१०॥

तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दवनगोचरेण ।
क्षणार्धवत्ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः ॥११॥

ता नाविदन् मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् ।
यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥१२॥

मत्कामा रमणं जारमस्वरूपविदोऽबलाः । ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ॥१३॥

तस्मात्त्वमुद्धवोसृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥१४॥

---

[1]योगादिभिर्यत्नवानपि कृतप्रयत्नोऽपि यं मां न प्राप्नुयात् तं मां केवलेन भावेनैव समीयुरिति पूर्वेणान्वयः । व्याख्या ग्रन्थोपरि टीका । अच च प्रथमं या गोप्यो गवादयो वा श्रीकृष्णेन सह संगतिं प्राप्तास्ते सन्त उच्यन्ते तत्सङ्गश्चान्येषां जातः अतस्तेषां सत्संगोऽभूत् तेन च तेषां भक्तिरिति क्रमोऽवगन्तव्यः ॥ ९ ॥ गोपीनां-प्रेमातिरेकं दर्शयति रामेणेति चतुर्भिः । श्वाफल्किना श्वफल्कपुत्रेण अक्रूरेण कर्त्रा रामेण सह मयि मथुरां प्रणीते सादरं नीते सति गोप्यो मे मत्तोऽन्यं जनं सुखाय न ददृशुः । कुतः । वियोगेन तीव्रो दुःसह आधिर्मानसी व्यथा यासां ताः । अत्र हेतुः । मयि विगाढेन अतिदृढेन भावेन प्रेम्णा मय्येव अनुरक्तानि संलग्नानि चित्तानि यासां तास्तथोक्ताः । प्रणीते इत्यत्र प्रशब्द आदरार्थकः ॥ १० ॥ तीव्राधित्वं प्रकटयति । तास्ता इति । वृन्दावनगोचरेण वृन्दावनविहारिणा प्रियतमेन मया सह या एव क्षपा रात्रयः क्षणार्धवत् याभि र्नीता यापितास्ता एव पुनर्मया हीनास्तासां गोपीनां कल्पसमा बभूवुः । कथंभूताः क्षपाः । तास्ताः वाचा-मगोचरा इत्यर्थः । रतिसंवन्धिपरमसुखप्रदत्वाद्वक्तुमशक्या इति भावः । अङ्ग हे उद्धव प्रेम्णः सप्तमी भूमिकाया एतल्लक्षणम् । कल्पस्य क्षणता योगे वियोगे तद्विपर्ययः इति । श्रीगर्गाचार्येणापि तथैवोक्तम् । 'क्षणो युगत्वं च घटी महामते प्रयाति मन्वन्तरतां व्रजौकसाम् । यामश्च कल्पं च दिनं विना हरिं वियोगदुःखै-र्द्विपरार्द्धतां गतम्' इति । कल्पः एकं ब्रह्मदिनम् ॥ ११ ॥ किञ्च मयि अनुषङ्गेण आसक्त्या बद्धा धियो यामिस्ताः गोप्यः स्वमात्मानं स्वदेहम् अदः दूरस्थमिदं सन्निहितं च नाविदन् । यद्वा । स्वं ममतास्पदं पति पुत्रादि । आत्मानमहंकारास्पदं देहम् । अदः परंलोकम् इदं दृश्यमानमिमं लोकं च न अविदन् । यथा समाधौ स्थिता मुनयः किञ्चिन्न विदुस्तथा । किन्तु नद्यः यथा नामरूपे विहाय अब्धितोये प्रविष्टा भवन्ति तथा ता अपि नामरूपे विहाय मयि प्रविष्टा इत्यन्वयः ॥ १२ ॥ यद्यपि ता अबलाः केवलं मत्कामाः मां कामयन्ते न च मत्स्वरूपं विदन्ति तथापि सत्सङ्गात् परमं ब्रह्म मामेव प्रापुः । शतसहस्रशो लक्षशः इति सामान्यतो निर्देशः । असंख्यश इत्यर्थः । कथंभूतं ब्रह्म । जारम् अवतारसमये मदीयलीलाशक्त्या मोहितत्वात् जार बुद्धिवेद्यमपि रमणं नित्यरतिजनकम् । 'जारस्तूपपतिः समौ' इत्यमरात् । वस्तुतस्तु जरयति संसाररोग-मिति जारः । रमयति नित्यानन्दप्रदानेनेति रमणः इति बुद्धिवर्जितानामपि तासामात्मनि स्वप्रभावेण लयं कृतवानिति तात्पर्यम् ॥ १३ ॥ यस्मादेवंभूतो मद्भजनप्रभावस्तस्मात् हे उद्धव ! चोदनां श्रुतिं प्रतिचोदनां स्मृतिं च । यद्वा । विधिं तत्प्रतिकूलं निषेधं च शास्त्रं किं बहुना प्रवृत्तादिकं सर्वमपि उत्सृज्य त्यक्त्वा एकं केवलं मामेव शरणं याहीत्यन्वयः । एवशब्देन देवतान्तरव्यवच्छेदः सूचितः । केन रूपेण । सर्वात्मभावेन ।

---

१. तस्मादिति युग्मकम् ।

**मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥१५॥**

**उद्धव उवाच**

**संशयः शृण्वतो वाचं तव योगेश्वरेश्वर । न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ॥१६॥**

**श्रीभगवानुवाच**

**स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।**
**मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥१७॥**

---

श्रीकृष्ण एव सर्वेषामात्मेत्यभेदभावनया । तत्कुतः । सर्वदेहिनां चराचरजीवेषु अतति व्याप्नोतीति व्यापक रूपेण स्थितम् । स्थिततत्वादित्यर्थः । एवं मया हि मयैव त्वत्प्रेमास्पदीभूतेन त्वमकुतोभयः निर्भयः स्याः ॥ १५ ॥ हे भगवन् ! तव वाचं शृण्वतोऽपि मम आत्मस्य आत्मविषयकः संशयः आत्मनि कर्तृत्वमस्ति नवेत्येवंरूपः । यद्वा । कर्मत्यागात्यागरूपः । न निवर्तते येन संशयेन मे मनो भ्राम्यति किंकर्तव्यविमूढं भवति अतस्तं निवर्तयेति क्रियाशेषः । अत्र पूर्वं 'मयि सर्वाणि कर्माणि निरपेक्षः समाचर' इति वदता भवता मह्यं कर्माधिकारो दत्तः । तत्पूर्वं तु 'यदिदम्'—विद्धि मायामनोमयम्'—इत्यादिना ज्ञानाधिकारो दत्तः । इदानीं तु सर्वं त्यक्त्वा मां शरणं याहीति भक्त्यधिकारं ददासि न जाने पुनरग्रे कमधिकारं दास्यसीति सख्यरसोद्भूता वक्रोक्तिर्व्यञ्जिता ॥ १६ ॥ उत्तरमाह स इत्यष्टभिः । अयं भगवतोऽभिप्रायः । ईश्वरस्तावत्स्वमायया प्रपञ्चरूपेणाभाति तत्प्रपञ्चाध्यासाच्च जीवानामनाद्यविद्यया कर्तृत्वादि ततश्च विधिनिषेधाधिकार श्चापतति अतोऽन्तःकरणशुद्धये कर्माणि कुरु इत्युक्तम् । शुद्धे चान्तःकरणे कर्मासक्ति परिहाराय भक्ति विक्षेपकारिकर्मादरं परित्यज्य दृढविश्वासेन मां भजेत्युक्तम् । उत्पन्ने ज्ञाने तु न किञ्चित्कर्तव्यमस्तीति । तत्र तावदात्मविषयकसंशयस्य अध्यारोपापवादाभ्यामेव निरसनीयत्वा दीश्वराद्वागादीन्द्रियद्वारा जीव संसृतिकारणभूतां प्रपञ्चोत्पत्तिमध्यारोपेण निरूपयति सार्धैश्चतुर्भिः—। स परोक्षः जीवयति चेतयतीति जीवः परमेश्वरः घोषेण पराख्येण नादवता प्राणेन प्राणरूपेण एव प्रत्यक्षः सन् गुहामाधारचक्रं प्रविष्टोऽभूत् । प्रत्यक्षत्वे हेतुः । विवरेषु आधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य सः । ततश्च नाभिचक्रे विशुद्धिचक्रे च मनोमयं मनोग्राह्यं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च क्रमेण उपेत्य प्राप्य वक्त्रे मात्रा ह्रस्वादिः स्वर उदात्तादिः वर्णः ककारादित्येवं वैखर्याख्यः स्थविष्ठोऽति स्थूलो नानावेदशाखात्मको भवति । तथा च श्रुतिः—। चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति । वाचः परिमितानि चत्वारि पदानि स्थानानि सन्ति परा पश्यन्ती मध्यमा वैखरीति । तानि च ये ब्राह्मणा मनीषिणः निरुद्धमनसो योगिनस्ते विदुः । तेषां मध्ये आदौ त्रीणि पदानि गुहायां शरीर मध्ये आधारनाभिहृदयेषु निहितानि अन्तर्हितानि नेङ्गयन्ति योगिनं विना न केचिज्जानन्ति । तुरीयं चतुर्थं वैखर्याख्यं पदं मनुष्या वदन्ति तदपि साक्षान्न जानन्तीत्यर्थः । केवलं मनुष्याणां वदने वर्तमानोऽर्थ बोधकः शब्दो भवतीति श्रुतिपदार्थः । 'परा वाङ्मूलचक्रस्था पश्यन्ती नाभिमाश्रिता । हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा । वैखर्या च कृतो नादः परश्रवणगोचरः' इत्युक्तेः । अत्रायं प्रकरणोपयोगी श्लोकोऽपि संग्राह्यः साम्बपञ्चाशिकातः । या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानन्तःप्रकटकरणैः प्राणसंगात्प्रसूते । तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये । अस्यार्थश्च तां त्रिविधां भारती प्रपद्ये आश्रये । या सा पराख्या वाणी निष्पन्दरूपा मित्रावरुणसदनात् अग्निसोमस्थानात् आधारचक्रात् प्राणसंगेन उच्चरन्ती स्वयमेव सूक्ष्मरूपमुद्भवन्ती त्रिषष्टिं वर्णान् प्रसूते जनयति । कैः । अन्तःप्रकट करणैः

यथाऽनलः खेऽनिलबन्धुरूष्मा बलेन दारुण्यधिमथ्यमानः ।
अणुः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणी ॥१८॥

एवं गदिः कर्म गतिर्विसर्गो घ्राणो रसो दृक् स्पर्शः श्रुतिश्च ।
संकल्पविज्ञानमथाभिमानः सूत्रं रजःसत्त्वतमोविकारः ॥१९॥

अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको वयसा स आद्यः ।
विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥२०॥

---

अन्तर्मनसा सह प्रकटीभूतैरिन्द्रियैः । अतो नाभिस्थेन मनसा संकल्पविकल्पं कुर्वन्तो प्रथममुत्पन्ना अन्तः पश्यति न तूच्चारयतीत्यन्वर्थनाम्नी सामान्यस्पन्दरूपिणी पश्यन्ती वागित्युच्यते । ततो हृदये निश्चयात्मिकया बुद्धया सह उच्चारयामीति विचारयन्ती स्थिता विशेषस्पन्दरूपिणी नादबिन्दुमयी मध्यमा वागित्युच्यते । ततो मुखे करणैः साधनैः स्थानप्रयत्नादिभिर्निर्मला कण्ठादिस्थानेष्वभिव्यज्यमाना अकारादिवर्णात्मिका वैखरी वागित्युच्यते । तदुक्तमाचार्यैः—मूलाधारात्प्रथममुदितो यस्तु भावः पराख्यः पश्चात्पश्यन्त्यथ हृदयगो बुद्धियुङ् मध्यमाख्यः । वक्त्रे वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्नाबद्धस्तस्माद्भवति पवनप्रेरितो वर्णसंज्ञः । इति । चक्राणि च योगशास्त्रे इत्थमुक्तानि ज्ञेयानि । मूलाधारं स्वाधिष्ठानं मणिपूरकमेव च । अनाहतं विशुद्धयाख्यमाज्ञा षट्चक्रमुच्यते । मूलाधारे लिङ्गमूले नाभौ हृदि च कण्ठके । भ्रुवोर्मध्ये ब्रह्मरन्ध्रे क्रमाच्चक्राणि चिन्तयेत् । इति । त्रिषष्टिर्वर्णा यथा ह्रस्व दीर्घप्लुतभेदेन अ इ उ त्रयो वर्णा नव । ऋ लृ वर्णाश्चत्वारः तेषां दीर्घत्वाभावात् । एचोऽष्टौ तेषां ह्रस्वत्वाभावात् । उदात्तादिस्वरास्तदन्तर्गता एव । विसर्गानुस्वारजिह्वामूलीयोपध्मानीयाश्चत्वारः । एवं पञ्चविंशतिः । कादयो मावसानाः स्पर्शा अपि पञ्चविंशतिः एवं पञ्चाशत् । यवलाः षट् सानुनासिकनिरनुनासिक भेदेन । रेफ एकः । णकारो मूर्धन्य एकः । षशसहाश्चत्वारः । क्षकार एकः । एवं त्रिषष्टिः । त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः इति कारिकाबलात् इति दीपिनी ॥१७॥ इममर्थं दृष्टान्तेन स्पष्टयति-यथेति । यथा अनलोऽग्निः खे काष्ठच्छिद्रे ऊष्मा अव्यक्तोष्मरूपः दारुणि अधिकं मथ्यमानः अनिलबन्धुः वायुसहायः सन् अणुः सूक्ष्मोऽग्निकणो भवति । पुनश्च तूलादिभिः प्रकृष्टो जात उत्तरोत्तरं वृद्धिगतः सन् हविषा घृतेन समिध्यते सम्यक् वर्धते तथैव अग्निवत् इमं चतुर्विधा वाणी ममैव अभिव्यक्तिरित्यन्वयः ॥ १८ ॥ अन्येन्द्रियवृत्तिष्वप्यभिव्यक्ति दर्शयति-एवमिति । यथा च गदिर्गदनं वागिन्द्रियव्यापाररूपं भाषणं मे व्यक्तिरेवं कर्मादिविकारान्तः सर्वोऽपि प्रपञ्चो मे व्यक्तिरिति पूर्वेणैवान्वयः । तत्र कर्म हस्तयोर्वृत्तिः । गतिः पादयोर्वृत्तिः । विसर्गो मलमूत्रत्यागः पायूपस्थयोर्वृत्ती । एवं पञ्च कर्मेन्द्रियाणां वृत्तयः । घ्राणोऽवघ्राणं रसो रसनं दृक् दर्शनं स्पर्शः स्पर्शनं श्रुतिः श्रवणम् इति नासिकादि पञ्च ज्ञानेन्द्रियाणां वृत्तयः । सङ्कल्पो मनसः । विज्ञानं बुद्धिचित्तयोः अथ च अभिमानोऽहंकारस्य । सूत्रं क्रियाशक्तिप्रधानं महत्तत्त्वस्य सूक्ष्मावस्था प्रकृतेर्वृत्तिः । एवं रजआदिविकारः कार्यरूपस्त्रिविधोऽपि प्रपञ्चो मे व्यक्तिः । तत्र रजसः कार्यमिन्द्रियवर्गः । सत्त्वस्य इन्द्रियाधिष्ठातृतत्तद्देवतावर्गः । तमसः पञ्चमहाभूतानि । इति । संकल्पेन सहितं विज्ञानमिति समासः॥१९॥ कार्यस्य कारणाभिन्नत्वात्प्रपञ्चस्येश्वराभेदमाह-अयमिति । जीवयति चेतयति सर्वमिति निरुक्तेः अयं जीव ईश्वरः सृष्टयादौ सूक्ष्मरूपत्वादव्यक्त एक एव । हि एवार्थे । वयसा कालेन विश्लिष्टा विभक्ता वागीन्द्रियरूपाः शक्तयो यस्य । यद्वा । विशेषेण श्लिष्टा आलिङ्गिता मायाशक्तिर्येन सः बहुधेव बहुप्रकार इव आभाति प्रतीयते । यतः स एव आद्यः आदौ भवः कारणान्तररहितः त्रिवृत् त्रिगुणाधारः । त्रयो गुणा वर्तन्तेऽत्रेति व्युत्पत्त्या । अब्जयोनिर्लोकपद्मस्य कारणभूतः । एकस्य बहुधा माने दृष्टान्तमाह-योनिं प्रतिपद्य

यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तन्तुवितानसंस्थः।
य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥२१॥
द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्चरसप्रसूतिः।
दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः ॥२२॥
अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः।
हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदम् ॥२३॥
एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः।
विवृश्च्य जीवाशयमप्रमत्तः सम्पद्य चात्मानमथ त्यजास्त्रम् ॥२४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे द्वादशोऽध्यायः ॥१२॥

---

क्षेत्रं प्राप्य यद्वत् यथा बीजानि बहुधा भान्ति तद्वत्। शास्त्रपित्रा प्रत्यक्षमेव दर्शितत्वादर्यामति इदन्तया निर्देशः। 'शास्त्रस्य पितुरादेशम् इति नारदोक्तेः ॥ २० ॥ तस्मात्तन्मायाविलसितत्वादिदं जगन्न ततः पृथगस्तीति सदृष्टान्तमाह—यस्मिन्निति। यस्मिन् कारणात्मके ईश्वरे ईदं समष्टिव्यष्ट्यात्मकमशेषं जगत् ओतं ब्रह्मादिरूपेण प्रोतं मरीच्यादिरूपेण। यथा पटो दीर्घतन्तुषु ओतः तिर्यक्तन्तुषु प्रोतश्च भवति तद्वत्। कथंभूतः। तन्तुविस्तारे संस्था स्थितिर्यस्य सः। तन्तुषु पटः शाखासु वृक्ष इत्येव व्यवहारो यथा तथा जगदपि ब्रह्माधिकरणकं न ततः पृथगिति तात्पर्यम्। य एष आबालप्रसिद्धः संसारतरुः अध्यासद्वारा संसारस्य कारणत्वात् संसारतरुर्देहात्मकः पुराणोऽनादिः कर्मात्मकः प्रवृत्तिस्वभावः। पुष्पफले भोगमोक्षौ। यद्वा पुष्पं पण्यस्थानीय कर्म तत्फलं सुखदुःखादिकं च ते प्रसूते जनयति ॥ २१ ॥ जगदेव वृक्षरूपकेण दर्शयति द्वे इति। अस्य संसारतरोः द्वे पुण्यपापे बीजे। स च तरुः शतमूलः। शतमपरिमिता मूलानि वासना यस्य। त्रयो गुणा नालानि प्रकाण्डाः स्थूलशाखाधारा यस्य। ''प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः'' इति हैमः। पञ्च महाभूतानि स्कन्धा यस्य। पञ्च रसाः शब्दादिविषयास्तेषां प्रसूतिर्यस्मात्। दश इन्द्रियाणि एकं मनश्च शाखा यस्य। द्वयोः सुपर्णयोर्जीवेश्वरयोर्नीडं वासो यस्मिन्। त्रीणि वल्कलानि वातपित्तकफरूपाणि त्वचो यस्य। द्वे सुखदुःखे फले यस्य सः। अर्कं प्रविष्टः सूर्यमण्डलपर्यन्तं व्याप्तः। तन्निर्भिद्योर्ध्वं गतस्य संसारनिवृत्तित्वेन मोक्षत्वाभ्युपगमात् ॥२२॥ संसारतरोः फलमोक्तॄनाह-अदन्तीति। गृध्यन्ति अभिकाङ्क्षन्ते इति गृध्राः कामिनः ग्रामेचरा गृहस्थाः। ग्रामे इन्द्रियग्रामे विषयसमूहे चरन्तीति व्युत्पत्त्या। अस्य देहरूपवृक्षस्य एकं फलं दुःखरूपमदन्ति परिणामतः स्वर्गादेरपि दुःखरूपत्वात्। हंसा जीवेश्वरविवेचका अरण्वासाः संन्यासिनः एकं फलं सुखरूपमदन्ति। एवं मायामयं मायायाः 'एकोऽहं बहुः स्याम्' इति संकल्परूपाया विकाररूपंबहुरूपं विकारार्थे मयट्। वस्तुत एकमेव परमात्मानं माम् इज्यैः पूज्यैः गुरुभिः कृत्वा तत्कृपयेत्यर्थः यो वेद जानाति स वेदं वेदरहस्यार्थं वेद। मायाया आमयं रोगरूपमिति श्लेषोऽपि व्याख्येयः ॥ २३ ॥ तदेवं वेदार्थं प्रदर्श्य 'तस्मात्त्वमुद्धवोत्सृज्य इत्यादिवाक्यैकार्थेन समन्वेति एवमिति। एवमुक्तप्रकारेण अप्रमत्तः स्वाचारे धीरो जितेन्द्रियश्च इति विशेषणद्वयेन शिष्यलक्षणधर्मवान् सन्। गुरूपासनया या एका प्रेमलक्षणा परा भक्तिस्तया शितेन तीक्ष्णेन विद्याकुठारेण ज्ञानखड्गेन जीवाशयं जीवोपाधि सूक्ष्मशरीरं विवृश्च्य समूलं छित्वा परमात्मानं मां च संपद्य साक्षात्कृत्य अथ अनन्तरमेव अस्त्रं ज्ञानकुठारं वा साधनं भक्तिज्ञानरूपं त्यज। कृतकृत्यस्य साधने प्रयोजनाभावात्। यथा दरिद्र इन्द्रः सन् खननसाधनं कुद्दालादिकं त्यजतीति। 'निपानखनित्रमिन्द्रः इति न्यायेनेति भावः। अत्र एकभक्त्या इत्येव पाठः। एकान्तवत्त्येति स्वामिचरणव्याख्यानात् ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः

### श्रीभगवानुवाच

**सत्त्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः । सत्त्वेनान्यतमौ हन्यात् सत्त्वं सत्त्वेन चैव हि ॥१॥**
**सत्त्वाद् धर्मो भवेद् वृद्धात् पुंसो मद्भक्तिलक्षणः । सात्त्विकोपासया सत्त्वं ततो धर्मः प्रवर्तते ॥२॥**
**धर्मो रजस्तमो हन्यात् सत्त्ववृद्धिरनुत्तमः । आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥३॥**
**आगमोऽपः प्रजा देशः कालः कर्म च जन्म च । ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः ॥४॥**
**तत्तत्सात्त्विकमेवैषां यद् यद् वृद्धाः प्रचक्षते । निन्दन्ति तामसं तत्तद् राजसं तदुपेक्षितम् ॥५॥**
**सात्त्विकान्येव सेवेत पुमान् सत्त्वविवृद्धये । ततो धर्मस्ततो ज्ञानं यावत्स्मृतिरपोहनम् ॥६॥**

---

त्रयोदशे तु सत्त्वस्य वृद्धचा ज्ञानोदयक्रमः ।
मिथश्चेतोगुणत्यागः प्रोक्तो हंसेतिहासतः ॥१॥

ज्ञानखड्गेन लिङ्गशरीरं छित्वा साधनं त्यजेत्युक्तम् । तत्र तम आदि गुणवृत्तीनां प्रतिबन्धे सति कथं ज्ञानोत्पत्तिरित्याशंक्य तन्निवृत्या ज्ञानोत्पत्तिक्रममाह—सत्त्वमिति सप्तभिः । बुद्धेः प्रकृतेरेव एते त्रयो गुणाः सन्ति नत्वात्मन इति । अतः सत्त्वेन अन्यतमौ रजस्तमोभावौ हन्यात् निवारयेत् जयेदित्यर्थः । सत्त्वं च सत्यदयादिवृत्तिरूपम् सत्त्वेन सत्त्वजनितज्ञानेनैव हन्यात् । यद्वा । उपशमात्मकेन सत्त्वेन शान्तस्वभावत्वेन स्थितिरेव सत्त्वजयः स एव तद्धननमित्यर्थः । एव हीत्यवधारणद्वयेन 'द्विर्बद्धं सुबद्धं भवतीति' न्यायः सूचितः ॥ १ ॥ वृद्धात् सत्त्वात् पुंसो धर्मो भवेत् । कथंभूतः । मद्भक्तिं लक्षयतीति तथाभूतो मद्भक्तिजनक इत्यर्थः । धर्मो मद्भक्तिकृत् प्रोक्तः' इति वक्ष्यमाणात् । मद्भक्तिरूपो वा । सत्त्वमेव कथं वर्धते तत्राह सात्त्विकोपासनया सात्त्विकपदार्थसेवनेन सत्त्वं वृद्धं भवति ततो धर्मः ॥२॥ सत्त्वाद् वृद्धिर्यस्य स अत एव न विद्यते उत्तमो यस्मात्सः अनुत्तमः सर्वोत्तमो भक्तिलक्षणो धर्मो रजस्तमश्च हन्यात् । तस्मिन् उभयस्मिन् रजस्तमोद्वये हते सति तन्मूलः रजस्तमोमूलः ज्ञान प्रतिबन्धकः अधर्मोऽपि आशु विनश्यति । ते रजस्तमसी रागद्वेषादिना प्रमादालस्यादिना च मूलं यस्य स तन्मूल इत्यत्र बहुव्रीहिः ॥३॥ सत्त्ववृद्धिकारणभूतानागमादीन् दर्शयितुं तेषां प्रत्येकस्य त्रैविध्यान्न केवल सत्त्वस्यापि तु गुणत्रयस्यापि वृद्धिहेतवस्त एवातस्तान्नामतो निर्दिशति । आगम इति । आगमः शास्त्रम् । आपो जलानि अप इति दीर्घाभावश्छन्दोऽनुरोधेन । अपि मासं मसं कुर्याच्छन्दोभगं कारयेत्' इत्यभियुक्तोक्तेः । प्रजाः जनाः । देशो वाराणस्यादिः । कालो वसन्तादिः । कर्म वर्णाश्रमविहितम् । जन्म उभयकुलविशुद्धादि । ध्यानं देवादि विषयकम् । मन्त्रो द्वादशाक्षरादिः अथ मंगलमयः संस्कारो गर्भाधानादिश्च एते आगमादयो दश गुणत्रयस्य वृद्धिहेतवो ज्ञेयाः प्रत्येकस्य त्रैविध्यात् एतच्चाग्रिमषष्ठश्लोके सोपपत्तिकं व्याख्यास्यते ॥ ४ ॥ एषाम् आगमादीनां मध्ये वृद्धा ज्ञानिनो व्यासादयः यत् यत् प्रचक्षते प्रशंसन्ति तत्तत्सात्त्विकम् । यच्च निन्दन्ति तत्तामसम् । यत्तु तदुपेक्षितं न स्तुतं न च निन्दितं तद्राजसम् ॥ ५ ॥ सात्त्विकान्येवेति । एवकारेण राजसतामसयोर्व्यावृत्तिः । सात्त्विकान्येव सेवेत । ततः सात्त्विकसेवनतो भक्तिलक्षणो धर्मो भवति । ततश्च धर्मात् यावत्स्मृतिः आत्मसाक्षात्कारः यावच्च अपोहनं गुणत्रयापोहः गुणत्रयनिवृत्तिः तावत्पर्यन्तं तत्सम्पादकं ज्ञानं भवति । अतः सात्त्विकसेवनं धर्माचरणं च कर्तव्यमेव । साध्यसिद्धिमन्तरा साधनत्यागायोगादित्यर्थः । यद्वा । ततो धर्माच्च मद्विषयिणी स्मृतिः ज्ञानं

**वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद् वनम् । एवं गुणव्यत्ययजो देहः शाम्यति तत्क्रियः ॥७॥**

**उद्धव उवाच**

**विदन्ति मर्त्याः प्रायेण विषयान् पदमापदाम् । तथापि भुञ्जते कृष्ण तत्कथं श्वखराजवद् ॥८॥**

**श्रीभगवानुवाच**

**अहमित्यन्यथाबुद्धिः प्रमत्तस्य यथा हृदि । उत्सर्पति रजो घोरं ततो वैकारिकं मनः॥९॥**

**रजोयुक्तस्य मनसः संकल्पः सविकल्पकः । ततः कामो गुणध्यानात् दुःसहः स्याद्धि दुर्मते ॥१०॥**

---

मदनुभूतिश्च भवति । कीदृक् ज्ञानम् । यावत् साकल्येन अपोहनं गुणमयदेहस्य संसारस्य वा विस्मारकं नाशक मित्यर्थः । अपोह्यतेऽनेनेति अपोहनं नाशः । करणे ल्युट् । आगमादीनां त्रैविध्यं यथा—सात्त्विकानि निवृत्तिपराण्येव शास्त्राणि सेवेत न प्रवृत्तिपाखण्डपराणि शास्त्राणि । तत्र निवृत्तिशास्त्राणि भक्तिज्ञानपराणि पुराणोपनिषदादीनि सात्त्विकानि । प्रवृत्तिपराणि राजसानि पूर्वमीमांसादीनि । पाखण्डपराणि बौद्धशास्त्राणि तामसानि । आपः तीर्थापः गंगोदकादीनि सात्त्विकानि गन्धोदकादीनि राजसानि । मदिरादीनि तामसानि । प्रजाः जना निवृत्ति निष्ठाः सात्त्विकाः । प्रवृत्तिनिष्ठा राजसाः दुराचारा मद्यमांसादिसेवनपरास्तामसाः । देशः विविक्त एकान्त प्रदेशः सात्त्विकः । रथ्यापणादिस्तु राजसः । द्यूतपानादिदेशस्तामसः । कालः । ब्राह्ममूहूर्तो रात्रेरष्टमो भागः सात्त्विकः । प्रदोषो राजसः । अर्धरात्रस्तामसः । कर्म । नित्यनैमित्तिकं कर्म सात्त्विकम् । अन्तःकरण शुद्धिहेतुत्वात् । काम्यं पुत्रेष्टयादि राजसम् । मारणप्रयोगादि तामसं नरकहेतुत्वात् । जन्म । शैववैष्णवदीक्षालक्षणं जन्म सात्त्विकम् । शाक्तं तु राजसम् । भूतप्रेतादिदीक्षारूपं तामसं परमार्थविघातकत्वात् । ध्यानम् । श्रीहरिहरध्यानं सात्त्विकम् । कामिन्यादिध्यानं राजसम् । शत्रुध्यानं तामसम् । तन्मरणाद्यनिष्टचिन्तनत्वात् । मन्त्रः । प्रणवादिः सात्त्विकः । काम्यमन्त्रो राजसः । भूतप्रेतादिमन्त्रास्तामसाः । संस्कारः । चित्तशोधकः सात्त्विकः । देहगेहादिशोधको राजसः । मांसादिशोधनरूपस्तामसः नरकहेतुत्वात् । अतः सत्त्ववृद्धये सात्त्विकान्येव सेवेत न राजसादीनि ततश्च धर्मो भगवत्साक्षात्कारश्च नान्यथेति दिक् ॥ ६ ॥ वेणुसंघर्षणाज्जातोऽग्नर्यथा वायुसाहाय्यादुत्पन्नाभिर्ज्वालाभिः स्वकारणभूतं तद्वेणुवनं दग्ध्वा पश्चात्स्वयं शाम्यति । एवं गुणक्षोभाज्जातो देहोऽपि धर्मजनितभक्तिसिक्तज्ञानेन देहकारणभूतान् गुणान् अपोह्य स्वयं शाम्यति । कथंभूतो देहः । तत्क्रियः । तस्याग्नेरिव क्रिया व्यपारो यस्य सः ॥७॥ यद्यपि मर्त्या विषयान् आपदां दुःखानां पदं स्थानं जानन्ति तथापि तान् भुञ्जन्ति तत्कथमित्युत्तरं ब्रूहीति वाक्यशेषः । अत्र दृष्टान्तत्रयम् । श्वा च खरश्च अजश्च एतेषां समाहारः श्वखराजं तेन तुल्यम् । श्वा यथा भर्त्स्यमानोऽप्युच्छिष्टग्रासं ग्रसत एव । खरो यथा पद्भ्यां ताडयमानोऽपि खरीमनुधावति । अजो यथा हन्तुमानीतोऽपि अजां प्रति धावति खादति च तद्वत् । प्रायेणेति कश्चिदतिमोहासक्तं विनेत्यर्थः । मीमांसकमभिलक्ष्येति वा अवधारणे वा । 'प्रायोऽवधारणाधिक्ये' इति कोशात् । हे कृष्ण ! कर्षति विषयेभ्यो जीवमिति संबुद्ध्यभिप्रायः । पदमिति अजहल्लिङ्गत्वात्क्लीबत्वम् । एकवचनं च 'वेदाः प्रमाणमितिवत् उद्देश्यविधेयत्वात् । 'यत्रोद्देश्यविधेयत्वं तत्रायं नियमो नहि । रामदाराश्च सीतेयं करुणाभाजनं हरिः' इति ॥ ८ ॥ मिथ्यादेहाभिमानादेव भोगो नान्यथेति सयुक्तिकमाह—अहमिति । प्रमत्तस्य लुप्तविवेकस्य पुंसः प्रथमं देहादौ अहमिति अन्यथाबुद्धिर्मिथ्याबुद्धिर्हृदि यथा यथावत् उत्सर्पति उत्पद्यते । ततोऽहंबुद्धेश्च वैकारिकं सत्त्वप्रधानमपि मनः प्रति घोरं दुःखकारणं रज उत्सर्पति आक्रामति । रजोव्याप्तं भवतीत्यर्थः । वैकारिकः सात्त्विकोऽहंकार इति पारिभाषिकी संज्ञा तत्कार्यत्वान्मनोऽपि वैकारिकमित्युक्तम् ॥ ९ ॥ रजोयुक्तस्य मनसः संकल्पो भवति । अहमिदं भोक्ष्य इत्याकारकः ।

करोति कामवशगः कर्माण्यविजितेन्द्रियः । दुःखोदर्काणि सम्पश्यन् रजोवेगविमोहितः ।।११।।
रजस्तमोभ्यां यदपि विद्वान् विक्षिप्तधीः पुनः । अतन्द्रितो मनो युञ्जन् दोषदृष्टिर्न सज्जते।।१२।।
अप्रमत्तोऽनुयुञ्जीत मनो मय्यर्पयञ्छनैः । अनिर्विण्णो यथाकालं जितश्वासो जितासनः ।।१३।।
एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः । सर्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा ।१४।

उद्धव उवाच

यदा त्वं सनकादिभ्यो येन रूपेण केशव । योगमादिष्टवानेतद् रूपमिच्छामि वेदितुम् ।।१५।।

श्रीभगवानुवाच

पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः । पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीं गतिम् ।।१६।।

सनकादय ऊचुः

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो । कथमन्योन्यसंत्यागो मुमुक्षोरतितितीर्षोः ।।१७।।

श्रीभगवानुवाच

एवं पृष्टो महादेवः स्वयम्भूर्भूतभावनः । ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ।।१८।।
स मामचिन्तयद् देवः प्रश्नपारतितीर्षया । तस्याहं हंसरूपेण सकाशमगमं तदा ।।१९।।
दृष्ट्वा मां त उपव्रज्य कृत्वा पादाभिवन्दनम् । ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति।।२०।।
इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा । यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ।।२१।।

---

पुनश्च स सविकल्पकः 'इदमद्य मया लब्धम्—'इत्यादिगीतोक्तेः विविधकल्पनायुक्तो भवति । ततश्च 'अहो रूप-महो वयः' इति गुणध्यानात् विषयचिन्तनात् दुर्मतेः कामिनः दुःसहः कामः असह्या भोगेच्छा स्यात् । दुष्टेषु विषयेषु मतिः यस्य तस्यैव न तु सुमतेः । हीत्यनेन स्वतः सर्वैरनुभूयमानत्वान्नात्र प्रमाणापेक्षेत्यर्थः ।। १० ।। ततः स विषयान् भोक्तुं कर्माणि करोति । दुःखोदर्काणि दुःखोत्तरफलानि तानि संपश्यन् सम्यक् जानन्नपि । दुःखमेव उदर्कं उत्तरफलं येषां तानि । कुतः । कामवशगः कामवशवर्ती । तत्कुतः । अविजितेन्द्रियः । तदपि कुतः । रजोवेगविमोहित इति यथेष्टं हेतुहेतुमद्भावः । 'उदर्कः फलमुत्तरम्' इत्यमरात् ।।११।। यद्यपि विक्षिप्तधीः मूढधीश्च तथापि विषयेषु दोषदृष्टिः हेयदृष्टिः सन् मनो युञ्जन् निरुन्धन् न सज्जते न बध्यते इत्यर्थः ।। १२ ।। अनिर्विण्णः अनलसः प्रयासमत्यजन् मनोऽनुयुञ्जीत स्थिरीकुर्यात् । कुतः । शनैः मयि अर्पयन् संदधत् ।। १३ ।। सर्वतो विषयेभ्यः मनःआकृष्य अद्धा साक्षात् यथा यथावत् मपि आवेश्यते स्थिरीक्रियते एतावानेव योगो मच्छिष्यैः आदिष्ट इत्यन्वयः ।। १४ ।। एतद्रूपम् एतस्य स्वरूपम् ।। १५ ।। हिरण्यगर्भस्य ब्रह्मणः पुत्राः । योगस्य मनोनिरोधलक्षणस्य ऐकान्तिकीं गतिं मुख्यं साधनम् । सूक्ष्मां दुर्ज्ञेयाम् ।।१६।। गुणेषु विषयेषु चेतः विशते आसक्तं भवति गुणा विषयाश्च वासनारूपेण स्मर्यमाणाः चेतसि विशन्ति अतः उभयोः परस्परं कथं त्यागः । अतितर्तुं संसारपारं कर्तुमिच्छोः मुमुक्षोः ।।१७।। महान् देवो ब्रह्मा प्रश्नबीजं प्रश्नोत्तरं ध्यायमानः विचारयन्नपि नाभ्यपद्यत न ज्ञातवान् । यतः कर्मणा सृष्ट्यादिना विक्षिप्तधीः संकुचितज्ञानः ।१८। स ब्रह्मा प्रश्नस्य पारमुत्तरं तस्य तितीर्षया जिज्ञासया मामचिन्तयत् तस्य ब्रह्मणः सकाशं समीपमगमम् । हंसो यथा नीरं क्षीरं च पृथक् कर्तुं शक्तस्तथा अहमपि गुणान् चेतश्च ।। १९ ।। ते सनकादयः । अहं पृष्ट इति पृथक् वाक्यम् । अहमवोचमिति पृथक् वाक्यम् अतोऽहमित्यस्य न पुनरुक्तिः । यद्वा । अहन्ताया इभ्यः स्वामी नियन्ता अहम् । तत् मे मत्तः सकाशात् त्वं

वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः । कथं घटेत वो विप्रा वक्तुर्वा मे क आश्रयः ॥२२॥
पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः । को भवानिति वः प्रश्नो वाचारम्भो ह्यनर्थकः॥२३॥
मनसा वचसा दृष्टया गृह्यतेऽन्यैरपीन्द्रियैः । अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥२४॥
गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः । जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥२५॥
गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया । गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥२६॥
जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः । तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥२७॥
यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तिदः । मयि तुर्ये स्थितो जह्यात् त्यागस्तद्गुणचेतसाम् ॥२८॥
अहंकारकृतं बन्धमात्मनोऽर्थविपर्ययम् । विद्वान् निर्विद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत् ॥२९॥
यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः । जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥३०॥
असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा । गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥३१॥

---

निबोध शृणु ॥ २१ ॥ हे विप्राः ! अयं युष्मत्प्रश्नः किमात्मविषयकः किं वा देहविषयकः । वस्तुनः परमार्थरूपस्य आत्मनः यदि अनानात्वमेकत्वं तथा सति वो युष्माकमीदृशः प्रश्नः बहुषु निर्धारणरूपः कथं घटेत अतः उत्तरमपि न संभवति । वक्तुर्मे मम क आश्रयः श्रोतृस्थानीयो भवेत् । कं व्यक्तिविशेषमाश्रित्योत्तरं वक्ष्यामीत्यर्थः ॥२२॥ देहविषयकोऽपि प्रश्नः न संगच्छते । मनुष्यादिदेहेषु भौतिकत्वेन समानेषु अभिन्नेषु सत्सु समानत्वादेव पूर्वोक्तजीववदैक्यात् पुनरपि प्रश्नो न घटते । वाङ्मात्रेणारब्धः यतोऽनर्थकः 'मृत्तिकेव सत्यमिति वत् ॥२३॥ मनसा यत् चिन्त्यते वचसा यत् निरूप्यते दृष्टया यत् निरीक्ष्यतेअन्यैरपि इन्द्रियैः यत् किञ्चित् गृह्यते तत्सर्वमहमेवमत्तोऽन्यत् नास्ति इति अञ्जसा तत्त्वविचारेण बुद्ध्यध्वम् एतेन सर्वात्मकोऽहमित्यनेन को भवानित्यस्योत्तरमप्युक्तं भवति ॥२४॥ हे प्रजाः गुणेषु विषयेषु । मदात्मनः मदंशस्य जीवस्य देहे उभयमध्यस्तमुपाधिरेव । उभयमित्यस्य व्याख्या गुणाः चेतश्चेति ॥ २५ ॥ अभीक्ष्णं पुनः पुनः गुणसेवया विषयचिन्तनेन तेषु चित्तम् आविशत् आसक्तं भवति । मद्रूपः तुर्यावस्थापन्नः सन् त्यजेत् । सप्तम्यन्तं वा । तत्रैव समर्पयेत् ॥ २६ ॥ गुणतः[1] हेतोः बुद्धेरेव वृत्तयः अवस्थाविशेषाः न स्वाभाविक्यः । किन्तु जीवः विलक्षणः तदवस्थारहित एव । कुतः । तासामवस्थानां साक्षित्वेन विनिश्चितः । अहं जागर्मि अहं स्वपिमि न किञ्चिदवेदिषमिति रीत्या ॥ २७ ॥ संसृतिः बुद्धिः तया आत्मनो जीवस्य बंधः देहाध्यासरूपः गुणवृत्तीः जाग्रादाद्या ददातीति । यर्हि यस्मात् मयि तुर्ये अवस्थात्रयसाक्षिणि स्थितः सन् संसृतिबन्धं जह्यात् तत् तदा द्वयोः परस्परं त्यागश्च । सम्यक् सृतिः संसरणमनया । संस्रियतेऽनया वा संसृतिः बुद्धिः । यद्वा । मयि सौन्दर्यनिधौ स्थितः नितरामासक्तस्तर्हि स्वत एव त्यागः । अत्र पञ्चम्यर्थे हिल् ॥ २८ ॥ आत्मनो जीवस्य अर्थविपर्ययं दुःखत्वापादकं विद्वान् जानन् संसारचिन्तां संसारहेतुभूतां देहाभिमतिं त्यजेत् । निर्विद्य विषयात् विरज्य ॥ २९ ॥ युक्तिभिः वक्ष्यमाणाभिः अथवा न ममेत्याकारिकाभिः न निवर्तेत तावत् सोऽज्ञः आत्मज्ञानशून्यः यद्यपि जागर्ति अथापि स्वपन् स्वपित्येव । अत्र दृष्टान्तः यथेति ॥ ३० ॥ आत्मनोऽन्येषां देवमनुष्यादिभावानां तत्कृता भिदा वर्णाश्रमादिरूपा गतयः स्वर्गादिफलानि हेतवः कर्माणि च अस्यात्मनो मृषा शशशृङ्गवन्मिथ्यैवेत्यर्थः । कुतः । असत्वात् तेषामस्तित्वाभावात् । यथा स्वप्नद्रष्टुः स्वप्नगतपदार्थाः ॥ ३१ ॥ युक्ति

---

1, सत्त्वाज्जागरणं विद्यात् रजसा स्वप्नमादिशेत् । प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततम् । इति

यो जागरे बहिरनुक्षणधर्मिणोऽर्थान् भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान्।
स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ॥३२॥
एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः।
संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम् ॥३३॥
ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम्।
विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥३४॥
दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवेन्निजसुखानुभवो निरीहः।
संदृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत् स्मृतिरानिपातात् ॥३५॥
देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत् स्वरूपम्।
दैवादपेतमुत दैववशादुपेतं वासो यथा परिकृतं मदिरामदान्धः ॥३६॥
देहोऽपि दैववशगः खलु कर्म यावत् स्वारम्भकं प्रतिसमीक्षत एव सासुः।
तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥३७॥

---

भिरित्युक्तं ता युक्तीराह-यो जागरे जाग्रदवस्थायां बहिरर्थान् बाह्यान् विषयान् समस्तकरणै इन्द्रियैः चक्षुरादिभिः भुङ्क्ते। कथंभूतान् अर्थान् अनुक्षणं धर्मिणः परिणामवतः यश्च स्वप्ने तत्सदृक्षान् वासनामान् हृदि भुङ्क्ते। सुषुप्तौ तु तान् सर्वानुपसंहरते स तिसृष्वपि अवस्थासु एक एव आत्मा। तत्र हेतुः। त्रिगुणवृत्तयः जाग्रदाद्यवस्थाः ताः पश्यतीति अवस्थात्रयद्रष्टा। तत्कुतः। इन्द्रियेशः। इन्द्रियाणामीशः नियन्ता चालकः। ननु इन्द्रियेशा अपि विश्वतैजसप्राज्ञा भिन्ना एव तत्राह। स्मृत्या अनुसन्धानेन तस्यैव सर्वावस्थासु अन्वयात् ॥ ३२ ॥ एवमुक्तरीत्या आत्मैकत्वं विचार्य गुणतः हेतोः मनसः त्र्यवस्था जाग्रदाद्याः मदविद्यया मयि मदंशभूते जीवे कृताः कल्पिताः न तत्त्वतः सन्तीति निश्चित आत्मरूपोऽर्थो यैस्ते तथाभूताः सन्तः यूयम् अखिलसंशयानामाधिमहङ्कारं संछिद्य हार्दं हृदि स्थितं मां भजतेतान्वयः। केन संछिद्य। अनुमानैः सदुक्तिभिः सतामुपदेशैः तीक्ष्णेन ज्ञानखड्गेन च। आधीयन्ते विषया अस्मिन्निति आधिः अहङ्कारः। यद्वा हृद्भवमवस्थात्रयं संच्छिद्य संशयनिवर्तकं मां भजतेत्यन्वयः ॥ ३३ ॥ अनुमान दर्शयति। इदं जगत् विभ्रमम् ईक्षेत। तत्र हेतवः। मनो विलसितत्वात् दृष्टत्वात् विनाशित्वाच्च स्वप्नो यथा स्वप्नवत् अति-लोलमतिचञ्चलत्वात् अलातचक्रवत् अलातचक्रं ज्वलत्काष्ठं यथा तद्वत्। एकमेव विज्ञानमुरुधा विभाति। उरुधा मानमेव दर्शयति—त्रिधा देहेन्द्रियान्तःकरणरूपो योऽयं गुणपरिणामकृतो विकल्पो भेदः स माया अविद्याकल्पित इत्यर्थः ॥ ३४ ॥ यस्मादेवं तस्मात् ततः दृश्यात् दृष्टिं प्रतिनिवर्त्य निजसुखानुभवो भवेत् तत्स्वर्थार्थं निवृत्ततृष्णः तूष्णीं निरीहश्च भवेत्। मनोवाक्कायव्यापाररहितः स्यादित्यर्थः। ननु देहवतः सर्वथा दृष्टिनिवर्तनायोगात्पुनः संसारः स्यात्तत्राह-क्वचिदावश्यकाहारादौ यद्यपीदं जगत् संदृश्यते तथापि पूर्वमवस्तुबुद्ध्या यत् त्यक्तं तत्पुनर्मोहाय न भवेदेव किन्तु आनिपातात् देहपातपर्यन्तं केवलं स्वप्नवत् संस्कारमात्रेण तस्य स्मृतिरेव स्यात् ॥३५॥ एतदेव स्पष्टयति-देहमिति। सिद्धः समाधिनिष्ठः योगी आसनादुत्थितम् उत्थाय च तत्रैव उपविष्टं देहमपि न पश्यति कुतोऽन्यत्। यतो येन देहेन स्वरूपमध्यगमत् ज्ञातवान्। यथा मदिरामदेन अन्धः परिकृतं कटिवेष्टितं वासः उपेतं कटितटे स्थितम् अपेतं पतितं वा यथा न वेत्ति तद्वत् ॥ ३६ ॥ देहोऽपि दैववशगः प्रारब्धकर्माधीनः यावत् स्वारम्भकं शरीरारम्भकं कर्म शेषमस्ति तावत् सासुः प्राणेन्द्रियसहितः सन् प्रतिसमीक्षते तिष्ठत्येव न च नश्यति। किन्तु आरूढः समाधियोगो येन अत एव प्रतिबद्धवस्तुः ज्ञाततत्त्वः स सप्रपञ्चं गृहपुत्रादिसहितं स्वाप्नं

मयैतदुक्तं वो विप्रा गुह्यं यत् सांख्ययोगयोः । जानीत माऽऽगतं यज्ञं युष्मद्धर्मविवक्षया ॥३८॥
अहं योगस्य सांख्यस्य सत्यस्यर्तस्य तेजसः । परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च ॥३९॥
मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासङ्गादयोऽगुणाः ॥४०॥
इति मे छिन्नसंदेहा मुनयः सनकादयः । सभाजयित्वा परया भक्त्याऽगृणत संस्तवैः ॥४१॥
तैरहं पूजितः सम्यक् संस्तुतः परमर्षिभिः । प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ॥४२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

---

स्वप्नतुल्यं देहं पुनर्नभजते अहंममतया न गृह्णाति ॥३७॥ हे विप्राः सांख्यं प्रकृतिपुरुषविवेकः योगोऽष्टाङ्गः तयोर्गुह्यं रहस्यम् । युष्मद्धर्मः मोक्षधर्मः । आगतं मां यज्ञं विष्णुं जानीत ॥ ३८ ॥ हे द्विजश्रेष्ठाः । अहं योगादीनां परम् अयनं मुख्यमधिष्ठानम् । ऋतं च सूनृता वाणी सत्यं च समदर्शनम् ॥३९॥ साम्यासङ्गादयः सर्वे गुणा इत्यत्रान्वेति । कथंभूताः । अगुणा' गुणपरिणामरूपा न भवन्ति किन्तु नित्या इत्यर्थः । सर्वे गुणाः प्रथमस्कन्धे पृथिव्या प्रोक्ताः 'सत्यं शौचम्' इत्यादिना । निर्गुणं मायिकगुणातीतम् । आत्मानं सर्वात्मानम् । परमात्मानं वा ॥ ४० ॥ ये मत्तो हंसरूपात् । सभाजयित्वा पूजयित्वा । अगृणत तुष्टुवुः ॥ परया प्रेमलक्षणया ॥४१॥ तैः सनकादिभिः पूजितः स्वकं धाम वैकुण्ठं प्रति एयाय प्रत्यागच्छम् । प्रत्याङ्पूर्वकादिण् धातोः कर्तरि लिट् उत्तमपुरुषैकवचनम् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितामेकादशस्कन्धे गूढार्थदीपिन्यां त्रयोदशोऽध्यायः ॥ १३ ॥

## अथ चतुर्दशोऽध्यायः

### उद्धव उवाच

वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः । तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥ १ ॥
भवतोदाहृतः स्वामिन् भक्तियोगोऽनपेक्षितः । निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः ॥ २ ॥

### श्रीभगवानुवाच

कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता । मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥३॥
तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा । ततो भृग्वादयोऽगृह्णन् सप्त ब्रह्ममहर्षयः ॥४॥

---

चतुर्दशे महोत्कर्षः सर्वसाधनतोऽधिकः ।
भक्तेरुदीर्यते मुक्तिप्राप्तये ध्यानगर्भितः ॥ १ ॥

ब्रह्मवादिनः वेदज्ञाः श्रेयांसि श्रेयः साधनानि । तेषां विकल्पेन प्राधान्यम् आहोस्वित् एकस्यैव मुख्यता ॥ १ ॥ नास्ति अपेक्षितमपेक्षा यस्मिन् स अनपेक्षितः फलेच्छारहितः । संगं विषयासक्तिम् ॥ २ ॥ आदौ सृष्टेरादौ । मयि आत्मा चित्तं येन स मदात्मकः मद्विषयकः ॥ ३ ॥ मनवे स्वायम्भुवाय । पूर्वजाय पूर्वजत्वं च रुद्रेन्द्रकुमारान् विनेति ज्ञेयम् । रुद्रमिन्द्रं कुमारं च विनैवान्याग्रजो मनुः' इति तीर्थोक्तेः ।

तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः । मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ।
किंदेवाः किन्नरा नागा रक्षःकिम्पुरुषादयः ॥५॥

बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः । याभिर्भूतानि भिद्यन्ते भूतानां मतयो नृणाम् ।
यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥६॥

एवं प्रकृतिवैचित्र्याद् भिद्यन्ते मतयो नृणाम् । पारम्पर्येण केषांचित् पाखण्डमतयोऽपरे ॥७॥

मन्मायामोहितधियः पुरुषाः पुरुषर्षभ । श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ॥८॥

धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् । अन्ये वदन्ति स्वार्थं वा ऐश्वर्यं त्यागभोजनम् ।
केचिद् यज्ञतपोदानं व्रतानि नियमान् यमान् ॥ ९ ॥

आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः । दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानन्दाः शुचार्पिताः ॥

मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः । मयाऽऽत्मना सुखं यत्तत् कुतः स्याद् विषयात्मनाम् ॥

अकिंचनस्य दान्तस्य शान्तस्य समचेतसः । मया संतुष्टमनसः सर्वाः सुखमया दिशः ॥१२॥

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् ॥१३॥

न तथा मे प्रियतम आत्मयोनिर्न शंकरः । न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥१४॥

---

ततः स्वायंभुवात् मनोः ॥ ४ ॥ तेभ्यो भृग्वादिभ्यः स्वस्वपितृभ्यः तत्पुत्राः देवादयः अगृह्णन्निति योज्यम् । गुह्यकाः यक्षाः । किंदेवाः क्लमस्वेददौर्गन्ध्यादिराहित्येन युक्ताः । मनुष्या वेति सन्देहास्पदीभूता द्वीपान्तरमनुष्याः । एवं किन्नरा इव मुखतः शरीरतो वा । किंपुरुषाः किञ्चित्पुरुषा इव वानरादयः ॥ ५ ॥ बह्व्य इति सार्द्धम् । प्रकृतयो वासनाः । रजआदीनि भुवः जन्मस्थानानि यासां ताः । भूतानि देवासुरमनुष्यादीनि भिद्यन्ते स्वरूपसामान्येऽपि भेदेन व्यवह्रियन्ते । सर्वेषां चित्राः वाचः वेदव्याख्यानरूपाः स्रवन्ति मुख्यान्निःसरन्ति ॥६॥ केषाञ्चित् अध्ययनादिशून्यानाम् नृणामुपदेशपारम्पर्येण पाखण्डिनो भवन्ति ॥ ७ ॥ श्रेयः श्रेयःसाधनम् अनेकान्तं नानाविधम् ॥ ८ ॥ धर्ममिति सार्द्धम् । एके मीमांसकाः धर्म एव साधनं स्वर्ग एव फलमिति श्रेयो वदन्तीति प्रत्येकं सम्बध्यते । यशः काव्यालङ्कारकृतः । कामं वात्स्यायनादयः । सत्यादित्रयं पातञ्जलाः योगशास्त्रकृतः । अन्ये दण्डनीतिकृतः ऐश्वर्यमेव स्वार्थं पुरुषार्थम् वदन्ति । त्यागं शास्त्रमर्यादायाः भोजनं च "ऋणं कृत्वा घृतं पिबेत्" इति चार्वाकाः । केचित् वैदिकाः यज्ञादयः श्रेयःसाधनं वदन्ति ॥ ९ ॥ एषां लोका फलानि आद्यन्तवन्तः नश्वराः । तमोनिष्ठा मोहावसानाः । दुःखमेव उदर्कः उत्तरफलं येषां ते तथाभूताः । शुचा शोकेन व्याप्ताः ॥ १० ॥ हे सभ्य । आत्मना परमानन्दरूपेण मया यत् सुखं तद् तेषां कुतः ॥ ११ ॥ अकिञ्चनस्य परिग्रहशून्यस्य । सुखमयाः सुखमय्यः मयट् टित्वात् ङीप् स्यात् ॥ १२ ॥ मयि अर्पितः आत्मा मनो येन सः मत् मत्तो विना अन्यत् पारमेष्ठ्यादिकमपि नेच्छति किं बहुना अपुनर्भवं मोक्षमपि नेच्छतीत्यन्वयः । अप्यर्थे वाशब्दः । परमेष्ठिनः इदं पारमेष्ठ्यं ब्रह्मपदम् । सर्वभूमेरिदमाधिपत्यं चक्रवर्तिपदम् । रसाधिपत्यं पातालाधिपत्यम् । योगसिद्धीः अणिमाद्याः अष्ट ॥ १३ ॥ यथा भवान् प्रियतमः तथा आत्मयोन्यादयोऽपि न प्रियतमा इत्यन्वयः । आत्मयोनिः ब्रह्मा पुत्रोऽपि । शंकरः मत्स्वरूपभूतोऽपि । संकर्षणो भ्राताऽपि श्रीर्जायाऽपि । आत्मा श्रीविग्रहोऽपि । अतिशयोक्तिरियं भक्तोत्कर्षद्योतनार्थं विधेयं स्तोतुं च । अत्र भक्त इति वक्तव्ये

निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥१५॥

निष्किंचना मय्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः ।
कामैरनालब्धधियो जुषन्ति यत् तन्नैरपेक्ष्यं न विदुः सुखं मम ॥१६॥

बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः । प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥१७॥

यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् । तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः॥१८॥

न साधयति मां योगो न सांख्यं धर्म उद्धव । न स्वाधायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥१९॥

भक्त्याऽहमेकया ग्राह्यः श्रद्धयाऽऽत्मा प्रियः सताम् । भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात्

धर्मः सत्यदयोपेतो विद्या वा तपसान्विता । मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि॥२१॥

कथं विना रोमहर्षं द्रवता चेतसा विना । विनाऽऽनन्दाश्रुकलया शुध्येद् भक्त्या विनाऽऽशयः २२

वाग् गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च ।
विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥२३॥

यथाग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपम् ।
आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥२४॥

यथा यथाऽऽत्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् ॥२५॥

---

हर्षोद्रेकात् भवानित्याह ॥ १४ ॥ एवं विशेषणविशिष्टं मुनिमहं नित्यमनुव्रजामि । केन । अस्य चरण रेणुभिः मदन्तर्वर्तिब्रह्माण्डानि पूयेय पवित्रीकुर्यामिति भावेन ॥१५॥ निष्किञ्चनाः परिग्रहशून्याः भक्ताः मम सम्बन्धि अनुभवजन्यं यत्सुखं जुषन्ति अनुभवन्ति तत्सुखमन्ये न विदुः न लभन्ते इत्यन्वयः । कुतः । नास्ति अपेक्ष्यमपेक्षणीयं येषां ते निरपेक्ष्यास्तैरेव लभ्यमिदं नैरपेक्ष्यम् । कथंभूताः । कामैः विषयैः अनालब्धा अस्पृष्टा अनाक्रान्ता वा धीर्येषां ते । शेषाणां यथेष्टं हेतुहेतुमद्भावः ॥१६॥ विषयैर्बाध्यमानः आकृष्यमाणोऽपि मद्भक्तः न परा भूयते अधो न पतति । प्रगल्भया प्रतिक्षणमेधमानया ॥१७॥ सम्यक् इद्धा दीप्ता भक्त्या अर्चिज्वीला यस्य सोऽग्निः एधांसि काष्ठानि भस्मसात् करोति । कृत्स्नशः साकल्येन एनांसि पापानि ॥ १८ ॥ ऊर्जिता प्रवृद्धा मम भक्तिः यथा मां साधयति वशीकरोति तथा योगादयो न साधयन्तीत्यन्वयः ॥ १९ ॥ श्रद्धया श्रद्धापूर्विकया केवलया । मन्निष्ठा मद्विषयिणी भक्तिः । श्वपाकान् चाण्डालादीनपि पुनाति । संभवात् जातिगतदोषादपि मज्ज्ञानं प्रापयतीत्यर्थः । यद्वा । सम्यक् भवः संभवः सुघोरः संसारः तस्मादपि पुनाति ॥ २० ॥ अपेतं रहितम् आत्मानमन्तः करणम् ॥ २१ ॥ रोमहर्षादिकं विना कथं भक्तिर्ज्ञायते भक्त्या विना च आशयः कथं शुद्ध्येदित्यन्वयः ॥ २२ ॥ गद्गदा स्खलिताक्षरा । अभीक्ष्णं पुनः पुनः । भुवनं भुवनस्थं प्राणिजातं किमुत आत्मानम् ॥ २३ ॥ यथा अग्निना ध्मातं तापितमेव हेम सुवर्णम् कर्तृ अन्तर्मलं जहाति स्वमसाधारणं स्वरूपं स्वीयं रूपभौज्ज्वल्यं च भजते प्राप्नोति तथैव आत्मा जीवोऽपि अप्यर्थे चकारः । कर्मानुशयं कर्मवासनात्मकं मलं विधूय अथो अनन्तरं मृत्योः पश्चात् मदीयलोके मां भजति साक्षात् सेवते ॥ २४ ॥ यथा यथा साधनानुसारेण पुण्यकथायाः श्रवणैः अभिधानैः नामोच्चारणैश्च आत्मा परिमृज्यते परिशोध्यते तथा सूक्ष्मं वस्तु सूक्ष्मं तत्त्वं प्रकृतेः सूक्ष्मो जीवः जीवात्सूक्ष्मः परमात्मा तं तं च पश्यति जानातीत्यर्थः आत्मानमन्यं च

**विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते । मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥२६॥**
**तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् । हित्वा मयि समाधत्स्व मनो मद्भावभावितम्॥२७॥**
**स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् । क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः॥**
**न तथास्य भवेत् क्लेशो बन्धश्चान्यप्रसङ्गतः । योषित्सङ्गाद् यथा पुंसो यथा तत्सङ्गिसङ्गतः २९**

**उद्धव उवाच**

**यथा त्वामरविन्दक्ष यादृशं वा यदात्मकम् । ध्यायेन्मुमुक्षुरेतन्मे ध्यानं त्वं वक्तुमर्हसि ॥३०॥**

**श्रीभगवानुवाच**

**सम आसन आसीनः समकायो यथासुखम् । हस्तावुत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः ॥३१॥**
**प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः । विपर्ययेणापि शनैरभ्यसेन्निर्जितेन्द्रियः ॥३२॥**
**हृद्यविच्छिन्नमोङ्कारं घण्टानादं बिसोर्णवत् । प्राणेनोदीर्य तत्राथ पुनः संवेशयेत् स्वरम् ॥३३॥**
**एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत् । दशकृत्वस्त्रिषवणं मासादर्वाग् जितानिलः ॥३३॥**
**हृत्पुण्डरीकमन्तःस्थमूर्ध्वनालमधोमुखम् । ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम् ॥**
**कर्णिकायां न्यसेत् सूर्यसोमाग्नीनुत्तरोत्तरम् ॥३५॥**
**वह्निमध्ये स्मरेद् रूपं ममैतद् ध्यानमङ्गलम् ॥३६॥**

---

सवेद विद्वान् इत्युक्तेः । यथा अञ्जनाक्तं चक्षुः दोषं जहाति रूपग्रहणे समर्थं च भवति तथा ॥ २५ ॥ अत्र यथा तथेति योज्यम् । यथा विषज्जते आसक्तं भवति तथा मय्यैव प्रविलीयते । अत्र तमस्त्यागात् लीयते रजस्त्यागात् विलीयते, सत्त्वस्य च त्यागात् प्रविलीयते इति गुणातीतावस्था सूच्यते तेन उपसर्गद्वयस्य स्वारस्यं च ज्ञेयम् ॥ २६ ॥ यस्मादेवं तस्मात् असतां विषयाणां चिन्तनं हित्वा मनः मयि समाधत्स्व स्थिरीकुरुकथंभूतम् । यथा स्वप्नः मनोरथश्च तद्वत् मिथ्याभूतम् । स्थिरत्वे हेतुः । मद्भावेन मद्भजनेन भावितं शोधितं सत् ॥२७॥ स्त्रीसंगिनां स्त्रीलम्पटानां संगं त्यक्त्वा क्षेमे निर्बाधे विविक्ते एकान्ते मां चिन्तयेत् । अतन्द्रितः निरलसः सन् ॥ २८ ॥ यथा स्त्रीसंगात् यथा च स्त्रीलम्पटानां संगात् अस्य पुंसः बन्धः क्लेशश्च भवेत् तथा अन्य-प्रसंगतः न भवेदित्यन्वयः ॥ २९ ॥ यथेति ध्यानाङ्गप्रश्नः । यादृशमिति ध्येयविग्रहप्रश्नः । यदात्मकमिति ध्येयस्वरूपप्रश्नः । तीर्थस्तु यादृशं कीदृशं यदात्मकं किमात्मकमित्याह । ध्यानं त्वमिति पाठस्तु सुगमः इति वंशीधरी । तत्रैवाग्रहे तु मे मद्योग्यमिति व्याख्येयम् ॥ ३० ॥ सम इति युग्मम् । समे आसने नात्युच्छ्रिते नातिनीचे यथासुखमासीनः सन् प्राणमभ्यसेदिति द्वयोरन्वयः । निर्जितेन्द्रिय इति प्रत्याहर उक्तः । नासाग्रं भ्रूमध्यं तत्र कृतम् ईक्षणं दृष्टिर्येन । भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् इति गीतोक्तेः ॥ ३२ ॥ घण्टानादमिव अविच्छिन्ननादम् । बिसोर्णवत् कमलतन्तुवत् हृदि स्थितम् ओंकारं प्राणेन उदीर्य द्वादशाङ्गुलपर्यन्तं नीत्वा तत्र ओंकारे स्वरं नादं संयोजयेत् ॥ ३३ ॥ त्रिषवणं त्रिकालं दशकृत्वः दशवारान् यः समभ्यसेत् स मासात् अर्वाक् प्रागेव जितानिलः वशीकृतप्राणः स्यात् ॥३४॥ हृदीति सार्द्धम् । अन्तःस्थं हृत्कमलम् ऊर्ध्वनालमधोमुखं मुकुलितं च यदस्ति तत् अष्टपत्रं कर्णिकासहितमूर्ध्वमुखमुन्निद्रं विकसितं ध्यात्वा तस्य कर्णिकायामुत्तरोत्तरं सूर्यादीन् न्यसेत् भावयेत् ॥ ३५ ॥ वह्निमध्ये इत्यर्द्धम् । ध्यानेनैव मङ्गलं मङ्गलप्रदमभीष्टदम् ॥ ३६ ॥

समं प्रशान्तं सुमुखं दीर्घचारुचतुर्भुजम् । सुचारुसुन्दरग्रीवं सुकपोलं शुचिस्मितम् ।।३७।।
समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम् । हेमाम्बरं घनश्यामं श्रीवत्सश्रीनिकेतनम् ।।३८।।
शङ्खचक्रगदापद्मवनमालाविभूषितम् । नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतम् ।।३९।।
द्युमत्किरीटकटककटिसूत्राङ्गदायुतम् । सर्वाङ्गसुन्दरं हृद्यं प्रसादसुमुखेक्षणम् ।।
सुकुमारमभिध्यायेत् सर्वाङ्गेषु मनो दधत् ।।४०।।

इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्यतन्मनः । बुद्धचा सारथिना धीरः प्रणयेन्मयि सर्वतः ।।४१।।
तत् सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् । नान्यानि चिन्तयेद् भूयः सुस्मितं भावयेन्मुखम्।।४२।।
तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् । तच्च त्यक्त्वा मदारोहो न किंचिदपि चिन्तयेत् ।।
एवं समाहितमतिर्मामेवात्मानमात्मनि । विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम्।।४४।।
ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः । संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ।।४५।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे चतुर्दशोऽध्यायः ।। १४ ।।

---

रूपं विशिनष्टि चतुर्भिः । समम् अनुरूपावयवम् । दीर्घाः चत्वारो भुजा यस्मिन् तत् । [1]सुचारुभ्योऽपि सुन्दर ग्रीवा यस्मिन् । शुचि शोभनम् । समानयोः कर्णयोः विन्यस्ते मकराकृती कुण्डले यस्मिन् । हेमवत् पीताम्बरे यस्मिन् । श्रीवत्सो भृगुलता श्रियश्च तयोः निकेतनं निवासस्थानम् । कित् निवासे धातुः । शंखादिभिः विभूषितम् । नूपुरैः विलसन्तौ पादौ यस्मिन् । द्युमद्भिः द्युतिमद्भिः किरीटादिभिः आसमन्तात् युतम् । हृद्यं मनोहरम् । प्रसादेन शोभनं मुखमीक्षणे च यस्मिन् । तत् एवंभूतं सुकुमारं रूपमभिध्यायेत् । सर्वाङ्गेषु पादादिमुखपर्यन्तेषु मनो दधत् स्थिरीकुर्वन् ।।३७।।३८।।३९।।४०।। मनसा हेतुभूतेन इन्द्रियाणि इन्द्रियार्थेभ्यः विषयेभ्यः सर्वतः आकृष्य तत् मनः मयि प्रणयेत् स्थापयेदित्यन्वयः । कया । सारथिना[2] सहायरूपया बुद्धया । केचित्तु सर्वतः सर्वाङ्गयुक्ते मयि । सप्तम्यर्थे तसिरित्याहुः ।। ४१ ।। सर्वव्यापकं सर्वाङ्गाभिनिविष्टम् । एकत्र मुखे धारयेत् अन्यानि अङ्गनानि न चिन्तयेत् । मुखं भावयेत् चिन्तयेत् । ४२ ।। तत्र सुखे लब्धपदं चित्तमाकृष्य व्योम्नि व्योमवत्सूक्ष्मे रूपे । तच्च चित्तमपि त्यक्त्वा मदारोहः मयि आरूढः मया सह एकत्वं प्राप्त सन् किञ्चदपि ध्यातृध्येयध्यानविभागमपि न चिन्तयेत् ।। ४३ ।। एवं निश्चलमतिः आत्मनि माम् आत्मानं च सर्वात्मनि मयि संयुतं विचष्टे पश्यति । यथा ज्योतिः किरणः ज्योतिषि किरणमालिनि सूर्ये मिलितं भवेत् ।। ४४ ।। इत्थं मनः युञ्जतः सन्दधतः योगिनः द्रव्यादिभ्रमः निर्वाणं लयं यास्यति । तत्र द्रव्यभ्रमः देहादौ अहमिति । ज्ञानभ्रमः अहं जानामीति । क्रियाभ्रमः अहंकरोमीति सर्वत्र अध्यासलक्षणः ।। ४५ ।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां चतुर्दशोऽध्यायः ।। १४ ।।

---

१. सुचारु अतिरमणीयं रूपविशेषणं वा । पृथक् पदम् ।
२. 'सहाये सारथिः सूते मित्रे' इति कोशात् ।

## अथ पञ्चदशोऽध्यायः

श्रीभगवानुवाच

जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः। मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः ॥१॥

उद्धव उवाच

कया धारणया कास्वित् कथंस्वित् सिद्धिरच्युत। कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान्॥

श्रीभगवानुवाच

सिद्धयोऽष्टादश प्रोक्ता धारणा योगपारगैः। तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ॥३॥

अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः। प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥४॥

गुणेष्वसङ्गो वशिता यत्कामस्तदवस्यति। एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ॥५॥

अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शनम्। मनोजवः कामरूपं परकायप्रवेशनम् ॥६॥

स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम्। यथासंकल्पसंसिद्धिराज्ञाऽप्रतिहतागतिः ॥७॥

त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता। अग्न्यर्काम्बुविषादीनां प्रविष्टम्भोऽपराजयः ॥८॥

एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः। यया धारणया या स्याद् यथा वा स्यान्निबोध मे॥९॥

---

सिद्धयोऽष्टादश प्रोक्ता धारणाश्च तथाविधाः।
मत्प्राप्तौ विघ्नरूपास्ता हरिः पञ्चदशेऽदिशत् ॥ १ ॥

युक्तस्य स्थिरमनसः। उपतिष्ठन्ति उपस्थिता भवन्ति ॥ १ ॥ स्विदिति वितर्के कास्वित् किन्नाम्नी। कथंस्वित् कीदृशी वा। धारणाश्च कति इति प्रश्नान्तरे वा शब्दः ॥२॥ धारणाश्च अष्टादशेत्यनुषङ्गः। अष्टौ अणिमादयः। अहमेव प्रधानं मुख्यो यासां ताः। दशैव तु अनूर्मिमत्वादयः गुणहेतवः सत्त्वोत्कर्षजन्याः ज्ञेयाः॥३॥ अणिमादयः[1] तिस्रः मूर्तेः देहस्य सिद्धयः। प्राप्तिर्नाम्नी सिद्धिः सर्वप्राणिनामिन्द्रियैः सह तत्तद्विषयप्राप्तिः। श्रुतेषु पारलौकिकेषु ऐहिकेषु भूविवरादिपिहितेष्वपि पदार्थेष्वपि दर्शनसामर्थ्यं प्राकश्या सिद्धिः। अत्र प्राकाम्यं चेति सिद्धिः। तत्रेच्छानभिघातः। एवं षट्। शक्तिप्रेरणं जीवेषु स्वशक्तिसंचारणमीशिता सिद्धिः ॥ ४ ॥ गुणेषु असंगः विषयभोगेऽपि अनासक्तिः वशितानाम्नी सिद्धिः। यत् यत् सुखं कामयते तत् तत् अवस्यति तस्य सीमानं प्राप्नोतीति अष्टमी कामावसायिता नाम्नी सिद्धिः। एता अष्टौ औत्पत्तिक्यः स्वाभाविक्यः। मूले बाहुलकात् क्लीबभावः ॥ ५ ॥ सत्त्वोत्कर्षजन्याः सिद्धीराह-अनूर्मिमत्त्वं[2] क्षुत्पिपासादिराहित्यम्। दूरश्रवणं दूरदर्शनमिति द्वे सिद्धी। मनोवेगवत् देहस्यापि गतिः। कामरूपं यथेष्टरूपधारणम्। कायप्रवेशनमित्येवं षट् ॥६ ॥ स्वच्छन्दमृत्युः स्वेच्छामृत्युः। अप्सरोभिः सह देवानां या क्रीडास्तासामनुदर्शनं प्राप्तिः संकल्पानुसारेण सिद्धिः वस्तुप्राप्तिः। आज्ञा आज्ञापालनमिति दश। कीदृशो। अप्रतिहता आसमन्तात गतिः संचारोऽप्रतिबन्धो यस्याः सा ॥ ७ ॥ पञ्च क्षुद्रसिद्धीराह। अद्वन्द्वं शीतोष्णादिभिरनभिभवः। परचित्तेति। आदिपदेन तच्चेष्टादिसंग्रहः। अग्न्यादीना प्रतिष्टम्भः स्तम्भनम्। 'गोकर्णः स्तम्भनं चक्रे सूर्यवेगस्य वै तदा इति माहात्म्योक्तेः' अपराजयः देवादेरपि ॥८॥ उद्देशतो नामतो लक्षणतश्च प्रोक्ताः। मे मत्तः सकाशात् त्वं निबोध शृणु ॥९॥

---

१. अणिम्ना अणुर्भवति यतः शिलायामपि प्रविशति। महीम्ना महान् भवति यतः सर्वं व्याप्नोति। लघिम्ना लघुर्भवति यतः सूर्यकिरणानाश्रित्य सूर्यलोकं याति। अङ्गुल्येण चन्द्रमसं च स्पृशति।

२. क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः।

भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः । अणिमानमवाप्नोति तन्मात्रोपासको मम ॥१०॥
महत्यात्मन्मयि परे यथासंस्थं मनो दधत् । महिमानमवाप्नोति भूतानां च पृथक् पृथक् ॥११॥
परमाणुमये चित्तं भूतानां मयि रञ्जयन् । कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात् ॥१२॥
धारयन् मय्यहंतत्त्वे मनो वैकारिकेऽखिलम् । सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः॥१३॥
महत्यात्मनि यः सूत्रे धारयेन्मयि मानसम् । प्राकाम्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः॥१४॥
विष्णौ त्र्यधीश्वरे चित्तं धारयेत् कालविग्रहे । स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनाम् ॥१५॥
नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते । मनो मय्यादधद् योगी मद्धर्मा वशितामियात् ॥१६॥
निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः । परमानन्दमाप्नोति यत्र कामोऽवसीयते ॥१७॥
श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि । धारयञ्छ्वेततां याति षडूर्मिरहितो नरः ॥१८॥
मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् । तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ॥१९॥
चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि । मां तत्र मनसा ध्यायन् विश्वं पश्यति सूक्ष्मदृक्॥२०॥

---

भूतसूक्ष्मरूपे मयि तन्मात्रं भूतसूक्ष्माकारं मनो धारयेत् यः स अणिमानं सिद्धिं प्राप्नोति स शिलायामपि प्रवेष्टुं शक्नोति ॥ १० ॥ आत्मन्निति लुप्तसप्तम्यन्तं पदं महति आत्मनि महत्तत्त्वरूपे ज्ञानशक्तिप्रधाने मयि यथासंस्थं महत्तत्त्वाकारं मनो दधत् महिमानं सिद्धिं प्राप्नोति । यत्र तत्र सर्वत्रैवात्मानमेकेनैव विग्रहेण द्रष्टुं शक्नोति । भूतानां च महिमानं तत्तद्रूपधारणसामर्थ्यं च प्राप्नोति ॥ ११ ॥ भूतानां वाय्वादिभूतानां ये परमाणवः तन्मये मयि चित्तं रञ्जयन् योजयन् लघिमानं सिद्धिम् आकाशेऽपि उड्डीयनसामर्थ्यं प्राप्नोति कालसूक्ष्मस्य अर्थतां परमाणुरूपतामिव । लुप्तोपमा । 'स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्' इति तृतीयोक्तेः ॥ १२ ॥ वैकारिके सात्त्विके अहंतत्त्वरूपे मयि अखिलमेकाग्रं सत् मनो धारयन् मन्मना मदुपासकः प्राप्तिं सिद्धिं प्राप्नोति । तेन सर्वेषां प्राणिनां यानि इन्द्रियाणि तेषामधिष्ठातृत्वं प्राप्नोति । सर्वान् प्रतिपक्षिणोऽपि वशीकर्तुं स्वीयकार्यं सम्पादयितुं च समर्थो भवतीत्यर्थः ॥ १३ ॥ क्रियाशक्तिप्रधानं महत्तत्त्वमेव सूक्ष्मरूपं सूत्रं तद्रूपे आत्मनि मयि मानसं धारयेत् यः स मे मम सम्बन्धि पारमेष्ठ्यं सर्वोत्कृष्टं प्राकाम्यं सिद्धिं विन्दते लभते । कथंभूतस्य मे । अव्यक्तात् प्रधानात् प्रकृते र्जन्म यस्य तस्य सूत्रस्य तदुपाधेर्मम । एतेन अव्यक्तवस्तुदर्शनसामर्थ्यं लभते ॥ १४ ॥ त्रयाणां भूतभविष्यवर्तमानामधीश्वरे निर्वाहके अत एव कालविग्रहे कालमूर्तौ मयि चित्तं धारयेत् यः स ईशितां सिद्धिं प्राप्नोति । क्षेत्राणां देहानां क्षेत्रज्ञानां जीवानां च चोदनां शक्तिप्रेरणम् । 'शक्तिप्रेरणमीशिता' इत्युक्तेः ॥ १५ ॥ भगवच्छब्देन शब्दिते कथिते नारायणे मयि मनो धारयन् वशितां विषयानासक्तिमियात् प्राप्नुयात् । तुरीयाख्ये तुर्यसंज्ञके 'तुरीयं त्रिषु संततम्' इत्युक्तेः । मम असंगत्वादिलक्षणो धारणालक्षणो वा धर्मो यस्य स मद्धर्मा । 'धर्मादनिच् केवलात्' इत्यनिच ॥१६॥ विशदं स्वच्छं निर्वासनं सत् मयि मनो धारयन् भवति । यत्र परमानन्दे प्राप्ते कामोऽन्येच्छा अवसीयते समाप्यते । एषा कामावसयिता सिद्धिः । एषैव प्राकाम्य-शब्देनोच्यते 'यथेष्टानन्दसम्प्राप्तिः प्राकाम्यमिति कीर्त्यते' इति तीर्थोक्तेः ॥ १७ ॥ अतः परं सत्त्वोत्कर्षजन्याः सिद्धीराह । श्वेतद्वीपपतौ अनिरुद्धमूर्तौ चित्तं धारयन् श्वेततां शुद्धरूपतां निर्दुःखत्वं गुणपारवश्यराहित्यमित्यर्थः । क्षुत्पिपासादिरहितश्च भवति ॥ १८ ॥ आकाशात्मा आकाशवत् व्यापकः यः प्राणः समष्टिव्यष्टिरूपः तद्रूपे मयि घोषं नादं चिन्तयन् असौ हंसो जीवः तत्र आकाशे उपलब्धा अभिव्यक्ता भूतानां प्राणिनां वाचः दूरतः एव शृणोति ॥ १९ ॥ त्वष्टरि सूर्ये[1] पिङ्गलानाड्यन्तर्गते न तु बाह्ये चक्षुः संयोज्य भावनायुक्तं कृत्वा त्वष्टारं च चक्षुषि । तत्र उभयसंयोगे मां ध्यायन् सूक्ष्मदृष्टिः सन् । दूरस्थमपि विश्वं विश्वस्थप्राणिजातं

---

१. 'इडायां चन्द्रमा ज्ञेयः पिङ्गलायां रविः स्मृतः' । इति योगशास्त्रम् ।

मनो मयि सुसंयोज्य देहं तदनु वायुना । मद्धारणानुभावेन तत्रात्मा यत्र वै मनः ।।२१।

यदा मन उपादाय यद् यद् रूपं बुभूषति । तत्तद् भवेन्मनोरूपं मद्योगबलमाश्रयः ।।२२।।

परकायं विशन् सिद्ध आत्मानं तत्र भावयेत् । पिण्डं हित्वा विशेत् प्राणो वायुभूतः षडङ्घ्रिवत् ।।

पाष्ण्र्याऽऽपीडच गुदं प्राणं हृदुरःकण्ठमूर्धसु । आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत्तनुम् ।।२४।।

विहरिष्यन् सुराक्रीडे मत्स्थं सत्त्वं विभावयेत् । विमानेनोपतिष्ठन्ति सत्त्ववृत्तीः सुरस्त्रियः २५।।

यथा संकल्पयेद् बुद्धचा यदा वा मत्परः पुमान् । मयि सत्ये मनो युञ्जंस्तथा तत् समुपाश्नुते ।।

यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् । कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम ।।२७।।

मद्भक्त्या शुद्धसत्त्वस्य योगिनो धारणाविदः । तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ।।२८।।

अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः । मद्योगश्रान्तचित्तस्य यादसामुदकं यथा ।।२९।।

मद्विभूतीरभिध्यायन् श्रीवत्सास्त्रविभूषिताः । ध्वजातपत्रव्यजनैः स भवेदपराजितः ।।३०।।

उपासकस्य मामेवं योगधारणया मुनेः । सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ।।३१।।

---

पश्यति ।।२०।। प्रथमं मनः तदनुवर्तिना प्राणवायुना सह देहं च सुसंयोज्य संयुक्तं कृत्वा मद्धारणानुभावेन यत्र मनः तत्र देहोऽपि याति ।।२१।। कामरूपमाह–यदेति मनः उपादाय मयि निधाय वशीकृत्य च यत् यत् देवादिरूपं बुभूषति भवितुमिच्छति तत् तत् मनोऽभीष्टं रूपं भवेत् प्राप्नोति । भू प्राप्तौ धातुः । लडर्थे लिङ् । मद्योगबलं धारणाबलमाश्रितः आश्रित्य स्थितः । आश्रित इति पाठः ।।२२।। परकायप्रवेशमाह–परेति विशन् प्रवेष्टुमिच्छन् सिद्धः तत्र परकाये स्थितमात्मानं भावयेत् चिन्तयेत् । ततः पिण्डं स्थूलदेहं हित्वा प्राणः प्राणोपलक्षितलिङ्ग-शरीरोपाधिः सन् वायुभूतः वायुरूपो भूत्वा नासिकारन्ध्रेण परकायं विशेत् । षडङ्घ्रिः भ्रमरो यथा पुष्पात् पुष्पान्तरं गच्छति तद्वत् ।। २३ ।। स्वच्छन्दमृत्युमाह पाष्ण्र्येति । पाष्णिना पादमूलेन गुदं मूलाधारमापीडच प्राणोपलक्षितमात्मानं सूक्ष्मशरीरं क्रमेण नाभिचक्रं निर्भिद्य अनाहतचक्रे विशुद्धाख्यचक्रे आज्ञाचक्रे च आरोप्य ब्रह्मरन्ध्रेण च ब्रह्म नीत्वा प्रापय्य तनुमुत्सृजेत् त्यजेदित्यर्थः ।। २४ ।। देवक्रीडानुदर्शनं निरूपयति विहरिष्यन् सुरा अक्रीडन्ति यस्मिन् तत् सुराक्रीड देवोद्यान तत्र विहर्तुमिच्छन् योगी मत्स्थं मन्मूर्तिरूपं शुद्धसत्त्वं विभावयेत् चिन्तयेत् । तदा सत्त्ववृत्तमः देवाङ्गना विमानेन उपतिष्ठन्ति उपस्थिता भवन्ति ।। २५ ।। मत्परो मद्भक्तः यथा यदा वा यत् वस्तु संकल्पयेत् तत् तथैव समुपाश्नुते प्राप्नोति । कि कुर्वन् । सत्ये सत्यसंकल्पे मयि मनो युञ्जन् धारयन् सन् ।। २६ ।। मत् इति पृथक् पदं पञ्चमी षष्ठयर्थे मम भावं ध्यान-मापन्नः प्राप्तः यः तस्य आज्ञा कुतश्चिदपि न विहन्येत प्रतिहता न भवेत् यथा मम । कथंभूतस्य । ईशितुः नियन्तुः वशितुः सर्वात् वशीकर्तुः ।। २७ ।। मद्भक्त्या शुद्धसत्त्वस्य शुद्धान्तःकरणस्य तस्य त्रैकालिकी त्रिकाल वस्तुविषया बुद्धिर्ज्ञानं भवति किं बहुना स्वजन्ममृत्युभ्यांमुपबृंहिता सहिता तयोरपि बोधिका भवतीत्यर्थः । एतेन परचित्ताद्यभिज्ञताऽपि व्याख्याता भवति ।।२८।। मद्योगेन मद्धारणया शान्तमविकृतं स्थिरं चित्तं यस्य । यादसां जलजन्तूनां यथा उदकमभिघातकं न भवति तथा । अनेन अद्वन्द्वताऽपि व्याख्याता भवति ।। २९ ।। ध्वजादिभिः सहिताः श्रीवत्सादिभिः विभूषिता मम विभूतीः अवतारान् यः ध्यायन् भवति स सर्वत्रैव अपराजितः स्यात् । श्रीवत्सो भृगुलता ।। ३० ।। मां मम । यद्वा । मामुद्दिश्येति योज्यम् । धारणया धारणाभि. । जाताबेकवचनम् । अशेषतः साकल्येन उपतिष्ठन्ति प्राप्ता भवन्ति ।। ३१ ।। जितेन्द्रियत्वे हेतुः

जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः । मद्धारणां धारयतः का सा सिद्धिः सुदुर्लभा ॥ ३२ ॥
अन्तरायान् वदन्त्येता युञ्जतो योगमुत्तमम् । मया सम्पद्यमानस्य कालक्षपणहेतवः ॥ ३३ ॥
जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः । योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥ ३४ ॥
सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः । अहं योगस्य सांख्यस्य धर्मस्य ब्रह्मवादिनम् ॥ ३५ ॥
अहमात्माऽऽन्तरो बाह्योऽनावृतः सर्वदेहिनाम् । यथा भूतानि भूतेषु बहिरन्तः स्वयं तथा ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

---

दान्तस्य जितमनस्कस्य तत्रापि हेतुः जितश्वासात्मनः जितप्राणस्य । धारणां धारयत कुर्वतः । पाकं पचतीतिवन्निर्देशः सा का सिद्धिः या दुर्लभा न कापीत्यन्वयः । अतति व्याप्नोतीति आत्मा श्वासश्चासौ आत्मा श्वासात्मा प्राणः 'सर्वं प्राणमयं जगत्' इत्युक्तेः ॥ ३२ ॥ उत्तमं योगं ध्यानलक्षणं युञ्जतः कुर्वतः अत एव मया संपद्यमानस्य मत्प्रसादं प्राप्तुकामस्य अन्तरायान् वदन्ति । कुतः । कालक्षयणस्य कालविलम्बस्य हेतवः । यद्वा मया सह सं संयोगं पद्यमानस्य प्राप्तुकामस्य ॥ ३३ ॥ जन्मादिभिः यावत्य सिद्धयः इह भवन्ति ताः सर्वाः योगेनैव प्राप्नोति अन्यैः साधनैर्न तस्मात् योगस्य गतिं फलस्वरूपं मामेव व्रजेत् चिन्तयेदित्यर्थः । जन्मना पक्ष्यादीनामाकाशगमनादिः । औषधिसेवया च्यवनादीनाम् । तपसा विश्वामित्रादीनां लोकरचनादिः । मन्त्रैः वशीकरणाद्याः ॥ ३४ ॥ हेतुः दाता । न केवलं हेतुरेव अपि च पतिः पालयिता प्रभुः स्वामी च । न केवलं सिद्धीनामेव हेतुः किन्तु तत्कारणस्य योगस्य ध्यानयोगस्य सांख्यस्य ज्ञानस्य तत्साधनस्य धर्मस्य निष्कामकर्मणोऽपि अहमेव हेतुः ॥ ३५ ॥ अहं सर्वदेहिना जीवानामात्मा यतः आन्तरः अन्तर्यामी तर्हि किं परिच्छिन्नः न बाह्यः व्यापकश्च । तत्र हेतुः । अनावृतः । एतत्सदृष्टान्तमाह यथा भूतेषु चतुर्विधेषु भूतानि आकादीनि अन्तर्बहिश्च ओतप्रोतानि भवन्ति तथा स्वयमहमपि भवामीत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां सहितायामेकादशस्कन्धे गूढार्थदीपिन्यां पञ्चदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः

### उद्धव उवाच

त्वं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम् । सर्वेषामपि भावानां त्राणस्थित्यप्ययोद्भवः ॥ १ ॥
उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः । उपासते त्वां भगवन् याथातथ्येन ब्राह्मणाः ॥ २ ॥

---

षोडशे ज्ञानभक्त्यादेर्वैशिष्टयं यत्र दृश्यते ।
तत्तन्मदंशजं सर्वं विभूतित्वेन वर्ण्यते ॥ १ ॥

त्वं साक्षात् परं ब्रह्मासि । कथंभूतम् । नास्ति आदिः अन्तश्च यस्य तत् अनाद्यन्तम् उत्पत्तिविनाशरहितम् । पुनश्च । अपावृतम् कर्मरूपावरणरहितम् । कथंभूतस्त्वम् । सर्वेषां भावानां चेतनाचेतनानां त्राणादयो यस्मात् सः । त्राणं रक्षणम् । स्थितिर्जीवनम् । अप्ययो नाशः । उद्भवः उत्पत्तिः ॥ १ ॥ उच्चावचेषु उत्कृष्ट निकृष्टेषु भूतेषु सन्तं वर्तमानं त्वां ब्राह्मणाः कर्मनिष्ठाः उपासते इत्वन्वयः । कथंभूतम् । अकृतात्मभिः त्वयि अकृतमनस्कैः दुर्ज्ञेयम् । याथातथ्येन । यत्र यत्र यथा यथा वर्तसे तथा तथा तारतम्येन न्यूनाधिकभावेनेत्यर्थः ॥ २ ॥

येषु येषु च भावेषु भक्त्या त्वां परमर्षयः । उपासीनाः प्रपद्यन्ते संसिद्धिं तद् वदस्व मे ॥ ३ ॥
गूढश्चरसि भूतात्मा भूतानां भूतभावन । न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते ॥४॥
याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते ।
ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम् ॥ ५ ॥

श्रीभगवानुवाच

एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर । युयुत्सुना विनशने सपत्नैरर्जुनेन वै ॥ ६ ॥
ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम् । ततो निवृत्तो हन्ताहं हतोऽयमिति लौकिकः ॥ ७ ॥
स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः । अभ्यभाषात मामेवं यथा त्वं रणमूर्धनि ॥ ८ ॥
अहमात्मोद्धवाऽमीषां भूतानां सुहृदीश्वरः । अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥ ९ ॥
अहं गतिर्गतिमतां कालः कलयतामहम् । गुणानां चाप्यहं साम्यं गुणिन्यौत्पत्तिको गुणः॥१०॥
गुणिनामप्यहं सूत्रं महतां च महानहम् । सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥११॥

---

येषु भावेषु भगवत्प्रतिमादिषु त्वामुपासीनाः चिन्तयन्तः संसिद्धिं भोग मोक्षलक्षणां प्रपद्यन्ते तत् साधनं वदस्व[1]।३॥ भूतानि भावयति उत्पादयति पालयतीति तथा हे भूतभावन । भूतानां प्राणिनां मध्ये गूढः सन् त्वं विचरसि यतो भूतानामात्मा अन्तर्यामी ! तथापि सर्वं पश्यन्तमपि त्वां भूतानि न पश्यन्तीत्यन्वयः । कुतः । ते मायया मोहितानि ॥ ४ ॥ हे महाविभूते । भूम्यादिषु याः काश्चन ते विभूतयः सन्ति ताः मह्यम् आख्याहि । तीर्थानां पदं ते अङ्घ्रिपद्मं नमामीत्यन्वयः । कथंभूताः । ते त्वयैव अनुभाविताः प्रभावयुक्ताः कृताः । रसायां रसातले । तरति अनेनेति तीर्थं श्रीगङ्गा ॥ ५ ॥ एतदिति सामान्ये नपुंसकम् एतदेव प्रश्नं प्रष्टव्यं प्रति अर्जुनेन एवमेव अहं पृष्ट इत्यन्वयः । वै एवार्थे । कथंभूतेन अर्जुनेन । विनशने कुरुक्षेत्रे सपत्नैः शत्रुभिः सह युयुत्सुना योद्धुमिच्छुना । विशेषेण नश्यन्ति पापानि अत्रेति विनशनम् ॥६॥ ज्ञातीनां बधं गर्ह्य[2] निन्द्यमधर्मं च ज्ञात्वा ततो युद्धात् निवृत्तः आसीदिति शेषः । कथंभूतः सन् । अहं हन्ता अयं हत इति लौकिकः लोकवत् विवेकशून्यः सन् ॥ ७ ॥ सोऽर्जुनः युक्त्या गीतोपदेशन प्रतिबोधितः आश्वासितः । यथा त्वं पृच्छसि तथा रणमूर्धनि युद्धारम्भे स मामभ्यभाषत् अपृच्छदित्यन्वयः ॥८॥ ता विभूतीः क्रमेण निर्दिशति । अस्मच्छब्देन समानाधिकरणाः प्रथमान्ताः तथा द्वितीयान्ताश्च सर्वा विभूतयः उपासनार्थं कथ्यन्ते । हे उद्धव । अमीषां भूतानामात्मा अन्तर्यामी ईश्वरश्च नियन्ता च अतोऽहमुपास्य इति शेषेण सर्वत्रान्वयः कार्यः । भूतानि जीवजातानि अहम् । तेषां स्थित्यादयो यतो भवन्ति सोऽप्यहमेव ॥ ९ ॥ गतिमतां प्रशस्तगतिमतां गतिरहम् प्रशंसायां मतुप् । ज्ञानवतां वा गतिः[3] ज्ञानम् प्राप्यफलं वा अहम् । शरणागतिर्वा । कलयतां वशीकुर्वतां संहरतां वा मध्ये । गुणानां सत्त्वादीनां मध्ये साम्यं प्रधानं प्रकृतिः अहम् । गुणिनि धर्मिणि आकाशे औत्पत्तिकः स्वाभाविकः यो गुणः शब्दः सोऽहम् ॥१०॥ गुणिनां कार्याणां मध्ये सूत्रं प्रथमकार्यं क्रियाशक्तिप्रधानं महत्तत्त्वस्य सूक्ष्मावस्था । महत्तत्त्वं च ज्ञानशक्तिप्रधानमित्यवधेयम् । महान् महत्तत्त्वम् । अन्तः करणानां मध्ये महान् चित्तमित्यर्थः । 'चित्तं

---

१. 'भासनोपसंभाषा'—इत्यात्मनेपदम् ।

२. गर्ह कुत्सायां धातुः ।

३. 'ज्ञानं ज्ञानवताहम्' इति गीतोक्तेः ।

हिरण्यगर्भो वेदानां मन्त्राणां प्रणवस्त्रिवृत्। अक्षराणामकारोऽस्मि पदानि च्छन्दसामहम् ॥१२॥
इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट्। आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥१३॥
ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः। देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु ॥१४॥
सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम्। प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा ॥१५॥
मां विद्ध्युद्धव दैत्यानां प्रह्लादमसुरेश्वरम्। सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् ॥१६॥
ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम्। तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम् ॥१७॥
उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम्। यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ॥१८॥
नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम्। आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ ॥१९॥
तीर्थानां स्रोतसां गङ्गा समुद्रः सरसामहम्। आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम् ॥२०॥
धिष्ण्यानामहं मेरुर्गहनानां हिमालयः। वनस्पतीनामश्वत्थ ओषधीनामहं यवः ॥२१॥
पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः। स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ॥२२॥
यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम्। वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः ॥२३॥

योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम्।
आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥२४॥

---

तन्महदात्मकम्' इति श्रीकपिलोक्तेः ॥११॥ वेदानां वेदाध्यापकानां मध्ये हिरण्यगर्भो ब्रह्मा अहम्। प्रणवः ओंकारः। त्रिभिः अकारोकारमकारैः वर्तते इति त्रिवृत्। क्विबन्तः। अक्षराणां वर्णानां मध्ये अकारः छन्दसां वेदानां मध्ये त्रिपदा गायत्री। त्रयः पादाः अष्टाक्षरात्मका यस्याश्चतुर्विंशत्यक्षरा गायत्री। पादस्य पदादेशः। समासान्तप्रत्ययानां तद्धितान्तर्भूतत्वात् ॥ १२ ॥ वसूनाम् अष्टवसूनां मध्ये हव्यवाट् अग्निः। हव्यं वहतीति। 'हव्यकव्ये चरुः पुमान्' इत्यमरः। हव्यं देवान्नं कव्यं पित्रन्नमिति भेदः। आदित्यानां द्वादशानाम्। विष्णुर्वामनः। रुद्राणामेकादशानां मध्ये नीललोहितो नाम रुद्र एकादशः ॥१३॥ ब्रह्मर्षीणां मरीच्यादीनां मध्ये भृगुः। हविर्धानी कामधेनुः। हविर्घृतादिकं धीयते निधीयतेऽस्यामिति। अधिकरणे ल्युट् टित्वात् ङीप् ॥१४॥ सिद्धेश्वराणां योगनिष्ठानामिति षष्ठीचतुष्टयं निर्धारणे। परमोपास्य इति योज्यम्। पतत्रिणां पक्षिणां मध्ये सुपर्णो गरुडः। पितॄणामग्निष्वात्तादीनां मध्ये अर्यमा नाम मुख्यः ॥ १५ ॥ दैत्यानां मध्ये मां विद्धीति सर्वत्र अनुषज्यते। धनेशं कुबेरम् ॥ १६ ॥ यादसां जलजन्तूनाम्। तपतां तापयतां द्युमतां द्युतिमताम् ॥१७॥ संयमतां दण्डयताम्। सर्पाणामेकशिरसाम् ॥ १८ ॥ नागाः अनेकशिरस्काः। तुर्यः संन्यासः। प्रथमो ब्राह्मणः ॥१९॥ स्रोतसां प्रवाहरूपाणां तीर्थानां मध्ये। सरसां स्थिरजलाशयानां मध्ये। धनुष्मतां धनुर्धराणाम्। त्रिपुरघ्नः श्रीरुद्रः ॥ २० ॥ धिष्ण्यानां निवासस्थानानाम्। गहनानां दुर्गमानाम् अगम्यानाम्। वनस्पतीनां वृक्षाणाम्। ओषधीनां धान्यानाम् ॥ २१ ॥ पुरोधसां पुरोहितानाम्। ब्रह्मिष्ठानां वैदिकानाम्। सर्वसेनान्यां सेनापतीनाम्। स्कन्दः कार्तिकेयः। अग्रण्यां धर्मप्रवर्तकानाम्। अजः ब्रह्मा ॥ २२ ॥ यज्ञानां पञ्चयज्ञानां मध्ये ब्रह्मयज्ञः वेदपाठः। अविहिंसनम् अहिंसा। शुचीनां शोधकानां मध्ये वाय्वादिरूपः शुचिः शोधकोऽहम्। वायुश्च अग्निश्च अर्कश्च अम्बु च वाक् एतदात्मा एतद्रूपः। वागपि शोधिका ब्रह्मवचनेन शुद्धिः ॥२३॥ योगानामष्टांगयोगानाम् आत्मसंरोधः समाधिः। विजिगीषतां विजयेच्छूनां मध्ये मन्त्रः। 'षड्गुणा नीतिवेदिनाम्' इत्युक्तेः

स्त्रीणां तु शतरूपाहं पुंसां स्वायम्भुवो मनुः । नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ।२५।
धर्माणामस्मि संन्यासः क्षेमाणामबहिर्मतिः । गुह्यानां सूनृतं मौनं मिथुनानामजस्त्वहम् ॥२६॥
संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ । मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाभिजित् ॥२७॥
अहं युगानां च कृतं धीराणां देवलोऽसितः । द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ॥
वासुदेवो भगवतां त्वं तु भागवतेष्वहम् । किम्पुरुषाणां हनुमान् विद्याध्राणां सुदर्शनः ॥२९॥
रत्नानां पद्मरागोऽस्मि पद्मकोशः सुपेशसाम् । कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविःष्वहम् ३०
व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः । तितिक्षास्मि तितिक्षूणां सत्त्वं सत्त्ववतामहम् ३१
ओजः सहो बलवतां कर्माहं विद्धि सात्वताम् । सात्वतां नवमूर्तीनामादिमूर्तिरहं परा ॥३२॥
विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् । भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ॥३३॥
अपां रसश्च परमस्तेजिष्ठानां विभावसुः । प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः ॥३४॥
ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः । भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसंक्रमः ॥३५॥

---

षड्गुणचिन्तनं मन्त्रः । गुणाश्च सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्या ज्ञेयाः । कौशलानां शुभविचाराणां मध्ये आन्वीक्षिकी आत्मविद्या आत्मानात्मविचारः । ख्यातिवादिनां पञ्चविधानां यो विकल्पः सोऽहमेव एवं वा एवं वा इति कृत्वा । तथाहि—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
तथाऽनिर्वचनख्यातिरित्येतख्यातिपञ्चकम् ॥
विज्ञानशून्यमीमासातर्काऽद्वैतविदां मतम् ।

॥२४॥ मुनीनां साक्षात् नारायणः वदरिकाश्रमस्थः नत्वसौ मद्विभूतिः । कुमारः सनत्कुमारः ॥२५॥ संन्यासोऽमयदानम् । क्षेमाणाममयस्थानानां मध्ये अबहिर्मतिः अन्तर्निष्ठा । गुह्यानां गोपनीयानां । सूनृतं प्रियवचनं मौनं च । नहि प्रियवचने मौने च पुरुषस्याभिप्रायो लक्ष्यते ॥ २६ ॥ अनमिषां कालावयवानां मध्ये । मिष् धातोः क्विबन्तात् षष्ठी । मधुमाधवौ चैत्रवैशाखौ ॥२७॥ कृतं सत्ययुगम् । धीराणां द्वन्द्वसहानाम् मध्ये असितोऽपि मुनिः । व्यासानां वेदविभागकर्तृणाम् । कवीनां तीक्ष्णबुद्धीनाम् । काव्यः शुक्राचार्यः । आत्मवान् ज्ञानी ॥ २८ ॥ किंपुरुषाणां वानराणाम् । विद्याध्राणां यक्षाणाम् ॥ २९ ॥ सुपेशसां सुन्दराणां मध्ये पद्मकोशः । हविःषु घृतेषु गव्यमाज्यं गोघृतम् ॥ ३० ॥ व्यवसायिनामुद्यमवताम् लक्ष्मीः गुणो वा । कितवानां छलयताम् छलग्रहः द्यूतम् तितिक्षूणां क्षमाशीलानां तितिक्षा क्षमा । सत्त्ववतां सात्त्विकानां सत्त्वं धैर्यम् ॥ ३१ ॥ ओजआदिवतां तत्तत्सामर्थ्यरूपोऽहम् । क्रमेण इन्द्रियमनो देहशक्तयः । सात्वतां भक्तानां यत् कर्म सात्त्विकं तन्मां विद्धि । सात्वतां वैष्णवानां नवव्यूहार्चने वासुदेव-संकर्षण-प्रद्युम्न-अनिरुद्ध नारायणहयग्रीव-वराह-नृसिंह-वामना इति मूर्तयः तासामादि मूर्तिः या परा कारणभूता वासुदेवाख्या साऽहम् ॥ ३२ ॥ गन्धर्वाणां मध्ये विश्वावसुः अप्सरसां मध्ये पूर्वचित्तिरिति यथाक्रमेण सम्बन्धः । गन्धमात्रमित्यत्र मात्रपदोपादानात् पुण्यो गन्धः सुगन्धः । पुण्यो गन्धः पृथिव्यां च इति गीतोक्तेश्च दुर्गन्धो निरस्तः । स्थैर्यं स्थिरता ।३३। परमः मधुरः । तेजिष्ठानां तेजस्विनां विभावसुः अग्निः । परः गुणः शब्दोऽहम् । यद्वा । परः पराख्यः परापश्यन्तीमध्यमावैखरीरूपेषु प्रथमः ॥३४॥ ब्रह्मणि ब्रह्मकुले साधवो ब्रह्मण्याः तेषां मध्ये । अर्जुनः पार्थः । भूतानां प्राणिनां स्थित्यादिहेतुरहम् । स्थितिः पालनम् प्रतिसंक्रमः प्रलयः ॥ ३५ ॥ गत्यादयः पञ्च कर्मेन्द्रियव्यापाराः । स्पर्शादयः पञ्च ज्ञानेन्द्रियव्यापाराः

गत्युक्त्युत्सर्गोपादानमानन्दस्पर्शलक्षणम् । आस्वादश्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियम् ॥३६॥
पृथिवी वायुराकाश आपो ज्योतिरहं महान् । विकारः पुरुषोऽव्यक्तं रजः सत्त्वं तमः परम्॥३७॥
अहमेतत्प्रसंख्यानं ज्ञानं तत्त्वविनिश्चयः । मयेश्वरेण जीवेन गुणेन गुणिना विना ।
सर्वात्मनापि सर्वेण न भावो विद्यते क्वचित् ॥३८॥
संख्यानं परमाणूनां कालेन क्रियते मया । न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ॥३९॥
तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः । वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः॥४०॥
एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः । मनोविकारा एवैते यथा वाचाभिधीयते ॥४१॥
वाचं यच्छ मनो यच्छ प्राणान् यच्छेन्द्रियाणि च । आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने
यो वै वाङ्मनसी सम्यगसंयच्छन् धिया यतिः । तस्य व्रतं तपो दानं स्रवत्यामघटाम्बुवत्॥४३॥
तस्मान्मनोवचः प्राणान् नियच्छेन्मत्परायणः । मद्भक्तियुक्तया बुद्धया ततः परिसमाप्यते॥४४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे षोडशोऽध्यायः ॥१६॥

---

ते सर्वेऽपि अहमेव । किञ्च सर्वेन्द्रियाणामिन्द्रियम् इन्द्रियप्रवर्तकोऽप्यहमेव । श्रोत्रं त्वग् घ्राणदृग् जिह्वा इति । पञ्च ज्ञानेन्द्रियाणि । वाग्दोर्मेढ्राङ्घ्रिपायवः । इति पञ्च कर्मेन्द्रियाणि ज्ञेयानि । गत्यादीना समाहारद्वन्द्वः । लक्षणं दर्शनम् ॥ ३६ ॥ पृथिवीति सार्द्धम् । अहम् अहङ्कारः । महान् महत्तत्त्वम् । विकारः षोडशसंख्याकः सेन्द्रियपञ्चभूतानि । पुरुषो जीवः । अव्यक्तं प्रकृतिः । गुणत्रयम् परं ब्रह्म च एतत्सर्वमहमेव । किञ्च एतत्प्रसंख्यानम् एतेषां परिगणनम् एतेषां लक्षणतो ज्ञानं च तत्फलं तत्त्वनिश्चयश्चाहमेव नान्यः कश्चित् ॥ ३७ ॥ ईश्वरेण जीवेन च विना चेतनात्मको भावो न विद्यते । गुणेन सत्त्वादिना गुणिना महदादिना च जडात्मको भावो न, एवं सर्वात्मना जीवेन सर्वेण ईश्वरेण च विना चिज्जडात्मको भावो न स सर्वोऽपि भावो मया विना नास्तीत्यहमेव सर्वमित्यर्थः । भावशब्दोऽत्र सत्तापरः भू सत्तायां धातुः ॥ ३८ ॥ पृथिव्यादिपरमाणूनां परिगणनं महता कालेन कथञ्चित् मया कर्तुं शक्यते कृत्वा च वक्तुमपि शक्यते । यद्यपि एवं तथापीत्यन्वयः । मे विभूतीनां संख्यानं कर्तुं नैव शक्यते । कथंभूतस्य मे । कोटिशः अण्डानि सृजतः ॥ ३९ ॥ यत्र यत्र तेज आदिक मुपलभ्येत तत्तत् मे अंशकः विभूतिः । तेजः प्रभावः । भगो भाग्यम् सौभगं सौन्दर्यम् । वीर्यं बलम् । तितिक्षा क्षमा । विज्ञानं तत्त्वानुभवः ॥ ४० ॥ मनोविकारा मत्संकल्पमात्रजन्याः एते विभूतिभेदाः । यथा यथावत् तत्सर्वं वाचा वेदेन अभिधीयन्ते[1] । तदेक्षत बहु स्यांम प्रजायेय 'तत्तेजोऽसृजत' इत्यादिरूपया । वस्तु तस्तु मनसि विशिष्टकारः कर्तृत्वशक्तिः यासु ताः सर्वा एव विभूतयः वाचां मनसा कायेनापि सम्माननीया न तु तिरस्करणीयाः नावमन्येत कश्चन इत्युक्तेः ॥ ४१ ॥ यच्छ वशीकुरु । आत्मना शुद्धेन निर्वासनेन मनसा आत्मानं बुद्धिम् । अध्वने संसारमार्गाय न कल्पते न समर्थो भवति किन्तु ततो मुक्तो भवतीत्यर्थः । कृपू सामर्थ्ये धातुः ॥४२॥ यो वै यस्तु यतिः असंयच्छन् अवशीकुर्वन् भवति तस्य सर्वं व्रतादिकं स्रवति गलितं भवति आमघटः अपक्वघटः तस्य अम्बु जलं यथा स्रवति तद्वत् ॥४३॥ अहमेव परमयनमाश्रयो यस्य तथाभूतः सन् बुद्धया नियच्छेत् । ततो नियमनात् परिसमाप्यते संसार इति शेषः । यद्वा । कृतकृत्यो भवति न तस्य ज्ञानादिना कृत्यमस्तीत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां षोडशोऽध्यायः ॥१६॥

---

१. एकवचनं समुदायाभिप्रायेण ।

## अथ सप्तदशोऽध्यायः

### उद्धव उवाच

यस्त्वयाऽभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः। वर्णाश्रमाचारवतां सर्वेषां द्विपदामपि ॥१॥
यथानुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत्। स्वधर्मेणारविन्दाक्ष तत् समाख्यातुमर्हसि ॥२॥
पुरा किल महाबाहो धर्मं परमकं प्रभो। यत्तेन हंसरूपेण ब्रह्मणेऽभ्यात्थ माधव ॥३॥
स इदानीं सुमहता कालेनामित्रकर्शन। न प्रायो भविता मर्त्यलोके प्रागनुशासितः ॥४॥
वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते भुवि। सभायामवि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ॥५॥
कर्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन। त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति ॥६॥
तत्त्वं नः सर्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः। यथा यस्य विधीयेत तथा वर्णय मे प्रभो ॥७॥

### श्रीशुक उवाच

इत्थं स्वभृत्यमुख्येन पृष्टः स भगवान् हरिः। प्रीतः क्षेमाय मर्त्यानां धर्मानाह सनातनान् ॥८॥

### श्रीभगवानुवाच

धर्म्य एष तव प्रश्नो नैश्रेयस्करो नृणाम्। वर्णाश्रमाचारवतां तमुद्धव निबोध मे ॥९॥
आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः। कृतकृत्याः प्रजा जात्या तस्मात् कृतयुगं विदुः ॥१०॥
वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक्। उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बषाः ॥११॥

---

हंसोक्तः सर्ववर्णानां ब्रह्मचारिगृहस्थयोः।
कृच्छ्रः सप्तदशेऽन्योऽपि धर्मो भक्त्यर्थमीर्यते ॥ १ ॥

यस्त्वयेति युग्मकम्। वर्णादीनां तथा द्विपदां नरमात्राणामपि यो धर्मः त्वया अभिहितः येन अनुष्ठीयमानेन धर्मेण त्वयि नृणां भक्तिर्भवेत् तत् तं धर्मं मम मां प्रति आख्यातुमर्हसीति द्वयोरन्वयः। त्वद्भक्ति लक्षयतीति तथा ॥१॥२॥ यत् यं ब्रह्मणे अभ्यात्थ तं धर्ममिति योज्यन्। परमं सर्वोत्कृष्टं कं मोक्षसुखं यस्मात् ॥३॥ हे अमित्रकर्षण अविद्यानिवर्तक। प्राक् अनुशासितो यः स धर्मो लोके न विद्यते अग्रेऽपि न भविता न भविष्यति छिन्नभिन्नोऽभूदित्यर्थः यस्त्वमभ्यात्थेति योज्यम् ॥ ४ ॥ हे अच्युत ते त्वत्तः अन्यः धर्मस्य वक्ता ब्रह्मसभायामपि नास्ति यत्र मूर्तिधारिणो वेदा वर्तन्ते तत्र किमुत भुवीत्यन्वयः। कर्ता प्रवर्तकः आचरणकर्ता वा अविता रक्षकश्च ।५। भवता महीतले त्यक्ते सति विनष्टम् उच्छिन्नसम्प्रदायं धर्मं कः प्रवक्ष्यति न कोऽपीत्यन्वयः ।६। तत् तस्मात् नोऽस्माकं मनुष्याणां मध्ये यस्य यथा विधीयेत् विधानं क्रियेत तत् तथैव मे मह्यं वर्णयेत्यन्वयः ॥७॥ सनातनान् अनादिपरम्परागतान् धर्मान्॥८॥ धर्म्यः धर्मादनपेतः। नृणां नैश्रेयस्करः मोक्षसाधनभूतश्च तं मे मत्तः सकाशात् निबोध श्रृणु इत्यन्वयः ॥ ९ ॥ हंसः शुद्धसत्त्वात्मकः ब्राह्मणवर्णसंज्ञक न तु तत्र क्षत्रियादय इत्यर्थः नीरक्षीरविवेकी हंसस्तद्वत् चिज्जडविवेकवान्। स यथा नीरात् क्षीरं प्रथक् करोति तथाऽयमपि जडप्रपञ्चात् चिदंशं प्रथक् कर्तुं शक्नोतीत्यर्थः। जात्या जन्मनैव प्रजाः कृतकृत्या अतः कृतेन कृतकृत्येन जन्मना युज्यते इति कृतयुगम् इति व्युत्पत्तिरप्यनुसन्धेया ॥१०॥ प्रकर्षेण नूयते स्तूयते हरिरनेनेति प्रणवः ओङ्कारः। वृषरूपं धृजतीति धृक् क्विप् धृज -धारणे धातुः। त्रिधा बद्धो वृषभो रोरवीति भाष्यम्। हंसं शुद्धं माम् उपासते ध्यायन्ति।

त्रेतामुखे महाभाग प्राणान्मे हृदयात् त्रयी । विद्या प्रादुरभूत्तस्या अहमासं त्रिवृन्मखः ॥१२॥
विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः । वैराजात् पुरुषाज्जाता य आत्माचारलक्षणाः ॥१३॥
गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम । वक्षःस्थानाद् वने वासो न्यासः शीर्षणि संस्थितः ॥१४॥
वर्णानामाश्रमाणां च जन्मभूम्यनुसारिणीः । आसन् प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमाः ॥१५॥
शमो दमस्तपः शौचं संतोषः क्षान्तिरार्जवम् । मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥१६॥
तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः । स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥१७॥
आस्तिक्यं दाननिष्ठा च अदम्भो ब्रह्मसेवनम् । अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः ॥१८॥
शुश्रूषणं द्विजगवां देवानां चाप्यमायया । तत्र लब्धेन संतोषः शूद्रप्रकृतयस्त्विमाः ॥१९॥
अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः । कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनाम् ॥२०॥
अहिंसा सत्यमस्तेयमकामक्रोधलोभता । भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥२१॥

---

वृषरूपो धर्मः चतुष्पादहमेव न तु क्रियाविशेषो यज्ञादिः ॥११॥ त्रेतामुखे त्रेतारम्भे मे वैराजरूपस्य ब्रह्मणः प्राणात् निमित्तात् त्रयी वेदत्रयी प्रादुरभूत् तस्याः सकाशात् मखः[1] यज्ञरूपोऽहमासम् । कथमूतः । त्रिवृत् त्रिभिर्वर्तते इति त्रिवृत् । क्विप् । होता अध्वर्युः उद्गातेत्येवंरूपः ॥१२॥ वैराजात् ब्रह्मणः सकाशात् । ये विप्रादयः । आत्माचारः स्वस्वधर्मः शमदमादिरूपः स एव लक्षणं ज्ञापको येषां ते ।१३। हृदो वक्षसोऽधस्तात् जाताः । शीर्षणि शिरसि ॥ १४ ॥ अनुसारिणीः अनुसारिण्यः । भूमिः स्थानम् । प्रकृतयः स्वभावाः । नीचैरित्यव्ययम् । नीचैः पादादिभिः नोचा प्रकृतिः उत्तमैः मुखादिभिरुत्तमेति योज्यम् ॥१५॥ तपः तत्त्वविचारः । क्षान्तिः सहनशीलता । क्षमूष सहने धातुः । आर्जवमकौटिल्यम् ॥१६॥ तेजः पराक्रमः । बलं शरीरम् । तितिक्षा अपराधसहनम् । शौर्यम् उत्साहः स्थैर्यं वचसि दृढता । ऐश्वर्यं भगवन्निष्ठा । क्षत्रं क्षत्रियः तस्य ॥१७॥ अर्थोपचयैः धनवृद्धिभिः ॥१८॥ अमायया निष्कपटभावेन । तत्र सेवनेऽपि ॥ १९ ॥ शुष्कविग्रहः अकारणविरोधः । तर्षः तृष्णा । [2]अन्तेवसायिनां चाण्डालादीनाम् ॥ २० ॥ भूतानां प्राणिनां प्रियहितयोः ईहा चेष्टा वाञ्छा वा । सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः इत्येवलक्षणा । सर्ववर्णानामयं सार्ववर्णिकः ॥ २१ ॥ आनुपूर्व्यात् गर्भाधानादिक्रमेण

---

१. 'यज्ञो वै विष्णुः' इति श्रुतेः ।

२. चण्डालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥१॥
ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा ।
शूद्राजातस्तु चण्डालः सर्वधर्मबहिष्कृतः ॥२॥
क्षत्रिया मागधं वैश्यात् शूद्रात्क्षत्तारमेव च ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥३॥
शूद्रायां क्षत्रियाज्जाता कन्योग्रा कीर्त्यते बुधैः ।
उग्रायां क्षत्रतो जातः श्वपचः परिकीर्तितः ॥
( इति धर्मशास्त्रम् )
अन्त्येऽवसायिनामन्त्यजानाम् ।

द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः । वसन् गुरुकुले दान्तो ब्रह्माधीयीत चाहुतः ॥२२॥
मेखलाजिनदण्डाक्षब्रह्मसूत्रकमण्डलून् । जटिलोऽधौतदद्वासोऽरक्तपीठः कुशान् दधत्॥२३॥
स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः । नच्छिन्द्यान्नखरोमाणि कक्षोपस्थगतान्यपि ॥२४॥
रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम् । अवकीर्णेऽवगाह्याप्सु यतासुस्त्रिपदीं जपेत् ॥२५॥
अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुराञ्छुचिः । समाहित उपासीत संध्ये च यतवाग् जपन् ॥२६॥
आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् । न मर्त्यबुद्ध्यासूयेत् सर्वदेवमयो गुरुः ॥२७॥
सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत् । यच्चान्यदप्यनुज्ञातमुपयुञ्जीत संयतः ॥२८॥
शुश्रुषमाण आचार्यं सदोपासीत नीचवत् । यानशय्यासनस्थानैर्नातिदूरे कृताञ्जलिः ॥२९॥
एवंवृत्तो गुरुकुले वसेद् भोगविवर्जितः । विद्या समाप्यते यावद् बिभ्रद् व्रतमखण्डितम् ॥३०॥
यद्यसौ छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपम् । गुरवे विन्यसेद् देहं स्वाध्यायार्थं बृहद्व्रतः ॥३१॥
अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् । अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ॥३२॥
स्त्रीणां निरीक्षणस्पर्शसंलापक्ष्वेलनादिकम् । प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ॥३३॥

---

उपनयनाख्यं द्वितीयं जन्म संस्कारं प्राप्य गुरुकुले वसन् ब्रह्म वेदमधीयेत चकारात्तदर्थं च विचारयेत् । गुरुणा आहूतश्चेत्तदा । दान्तः संयतेन्द्रियः ॥ २२ ॥ कथंभूतः सन् । मेखलादीन् कुशांश्च दधत् धारयन् सन् । पुनश्च । न धौताः दन्ता वासांसि च येन न रक्तं पीठमासनं येन स च स च सः । एतच्च शृङ्गारवर्जने तात्पर्यम् । सामान्यशुद्धिस्तूचितैव । अत्र अधौतेत्यादिपीठान्तमेकपदम् । अजिनं मृगचर्म । अक्षशब्देन अक्षमाला[1] जपमाला विवक्षिता ॥ २३ ॥ जपः उच्चारो मूत्रपुरीषोत्सर्गश्च तयोः समाहारद्वन्द्वः । वाग्यतः मौनी भवेत् । अपिशब्दादन्यान्यपि रोमाणि । एतदपि पूर्ववत् । नखेति पृथक् पदं नखानित्यर्थः 'सुपां सुलुक्' इति द्वितीयालुक् । कक्षगतानि उपस्थगतानीति रोमाणीत्यत्रान्वेति । न छिन्द्यात् किन्तु भूमौ घर्षयेत् नापितस्पर्शे तु व्रतच्युतित्वात् स्वयं छेदनस्य निषिद्धत्वात् रोमच्छेदे तु चिक्कणत्वात्कामोद्वेगः स्यादत एतदुक्तम् ॥ २४ ॥ जातु कदाचिदपि न अवकिरेत् नोत्सृजेत् स्खलितं न कुर्यात् । अवकीर्णे स्खलिते सति अवगाह्य स्नात्वा यतासुः कृतप्राणायामः सन् त्रिपदी गायत्रीं जपेत् । 'संख्यानुक्तौ शतं जपेत्' इति तन्त्रोक्तेः ॥ २५ ॥ पूर्वमुभे सन्ध्ये उपासीत ततोऽग्न्यादीन् ततश्च गायत्रीं जपन् सन् समाहितः स्थिरचित्तो भवेदित्यन्वयः । होमेन अर्घ्येण प्रणामेन तृणादिना च क्रमेणाग्न्यादीनामुपासनं ज्ञेयम् । माध्याह्निकसंध्यानिमित्तमौनाभावात्[2] द्विवचनम् ॥ २६ ॥ न अवमन्येत न असूयेत ॥ २७ ॥ भैक्ष्यं भिक्षान्नम् आनीय । यत् अन्यदपि प्राप्तं तदपि निवेदयेत् । तेन अनुज्ञातं चेत् भुञ्जीत । संयतः प्रसन्नः सन् ॥२८॥ नीचवत् दासवत् अनुद्धत इव ॥२९॥ व्रतं बिभ्रत् धारयन् सन् गुरुकुले वसेदित्यन्वयः ॥ ३० ॥ छन्दसां वेदविदां लोकं महर्लोकं ततः क्रमेण ब्रह्मविष्टपं ब्रह्मलोकम् आरोक्ष्यन् आरोढुमिच्छति चेत् तदा देहं विन्यसेत् समर्पयेत् स्वाधीतस्यानृण्यरूपदक्षिणार्थमित्यर्थः । बृहदिति नैष्ठिकत्वं सूचयति ॥ ३१ ॥ वेदाभ्यासजं तेजो ब्रह्मवर्चं तद्वान् । अपृथग्धीः भेदबुद्धिरहितः ॥३२॥ अगृहस्थः ब्रह्मचारी । मिथुनीभूतान् वानरादीनपि त्यजेत् न पश्येदित्यर्थः अन्यथा सौभरिमुनिवत् विषयासक्तिः

---

१. आदिक्षान्तगतैर्वर्णैर्जपमालाक्षमालिका इति तान्त्रिकाः ।

२. अत्र केवलं वाङ्नियमाभावो ज्ञाप्यते न तु द्वे सन्ध्ये कुर्यात् संध्यात्रयं तु कर्तव्यं द्विजेनात्मविद्दा सदा इत्यत्रिस्मृतेः ।

शौचमाचमनं स्नानं संध्योपासनमार्जवम् । तीर्थसेवा जपोऽस्पृश्याभक्ष्यासम्भाष्यवर्जनम् ॥३४॥
सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन । मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ॥३५॥
एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् । मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥३६॥
अथानन्तरमावेक्ष्यन् यथा जिज्ञासितागमः । गुरवे दक्षिणां दत्त्वा स्नायाद् गुर्वनुमोदितः ॥३७॥
गृहं वनं वोपविशेत् प्रव्रजेद् वा द्विजोत्तमः । आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत् ॥३८॥
गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् । यवीयसीं तु वयसा तां सवर्णामनु क्रमात् ॥३९॥
इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम् । प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम् ॥४०॥
प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम् । अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक् तयोः॥४१॥
ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते । कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥४२॥

शिलोञ्छवृत्त्या परितुष्टचित्तो धर्मं महान्तं विरजं जुषाणः ।
मय्यर्पितात्मा गृह एव तिष्ठन् नातिप्रसक्तः समुपैति शान्तिम् ॥४३॥

समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम् । तानुद्धरिष्ये नचिरादापद्भ्यो नौरिवार्णवात् ॥४४॥
सर्वाः समुद्धरेद् राजा पितेव व्यसनात् प्रजाः । आत्मानमात्मना धीरो यथा गजपतिर्गजान्॥४५।

---

स्यादित्यवधेयम् । क्ष्वेलनं परिहासः ॥ ३३ ॥ आर्जवम् अकौटिल्यम् । अस्पृश्यादीनां स्पर्शादिवर्जनम् । अयं शौचादिनियमः सर्वेषामेव । अस्पृश्या म्लेच्छादयः । अभक्ष्याणि लशुनमांसादीनि । असंभाष्याः मद्यपमहापापातक्यादयः ॥३४॥ मद्भावः मद्भावना । ईश्वरो जीवकलया प्रविष्टो भगवानिति इत्युक्तलक्षणः । मनःसंयमः विषयानभिध्यानम् । वाक्संयमः व्यर्थालापराहित्यम् । कायसंयमः भोगराहित्यम् ॥ ३५ ॥ दग्धः कर्माशयः कर्मवासना यस्य सः अतः अमलः विशुद्धः जीवन्मुक्तो भवतीत्यर्थः ॥ ३६ ॥ अथ अनन्तरं गृहस्थाश्रममावेक्ष्यन् प्रवेष्टुमिच्छन् गुरवे दक्षिणां दत्त्वा स्नायात् समावर्तेतेत्यर्थः । यथा यथावत् जिज्ञासितागमः समाप्तवेदाध्ययनः सन् ॥ ३७ ॥ सकामश्चेत् गृहं निष्कामश्चेत् वनम् । सर्वतो विरक्तश्चेत् ब्राह्मणः प्रव्रजेत् संन्यसेत् । मत्परो भक्तः अन्यथा अनाश्रमी सन् न विचरेत् । अमत्परो वा छेदः । कदापि अमत्परो मद्भक्तिरहितो न भवेत् द्विजोत्तम इत्युक्तेः क्षत्रियवैश्ययोः संन्यासानधिकारं सूचयति ॥ ३८ ॥ सदृशीमनुरूपाम् अजुगुप्सितां कुलीनां समानवर्णां स्वजातीयाम् आत्मनो वयसा यवीयसीं कनिष्ठां न्यूनवयस्कामुद्वहेत् । यामन्यामुद्वहेच्चेत्तर्हि सवर्णामनु प्रथव्यूहाया ब्राह्मण्या अनन्तरमेव तत्रापि अनुक्रमात् वर्णक्रमात् ॥ ३९ ॥ इज्यादयः त्रयः आवश्यका धर्माः त्रैवर्णिकानाम् । प्रतिग्रहादित्रयं तु वृत्तिः सा च ब्राह्मणस्यैव ॥ ४० ॥ तपो नुदं तपआदिघातकम् । अन्याभ्यां याजनाध्यापनाभ्याम् । तयोरपि दोषदृक् शिलैः कणिशैः क्षेत्रपतितैः । उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम् । तत्र उञ्छः आपणपतितकणोपादानम् । क्षेत्रपतितं कणिशम् इत्यनयोर्भेदः । 'कणिशं शस्यमञ्जरी' इत्यमरः ॥ ४१ ॥ क्षुद्रकामाय तुच्छविषयसुखाय । कृच्छ्राय तपसे तपोजन्यक्लेशं सोढुम् । प्रेत्य मृत्वा च मोक्षाय ॥ ४२ ॥ विरजं परानुद्वेजकम् । शान्ति मुक्तिम् । नातिप्रसक्तः पुत्रादिषु नातिप्रेमवान् ॥ ४३ ॥ अहमेव परमयनमाश्रयो यस्य तं सीदन्तं क्लिश्यन्तं विप्रं ये समुद्धरन्ति जीवयन्ति तानित्यन्वयः । अचिरात् शीघ्रमेव सर्वापद्भ्यः ॥४४॥ आत्मना तपसा आत्मानं जीवम् । यथा गजपतिः पङ्कात् गजान् उद्धरति ॥४५॥

एवंविधो नरपतिर्विमानेनार्कवर्चसा । विधूयेहाशुभं कृत्स्नमिन्द्रेण सह मोदते ॥४६॥
सीदन् विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत् । खड्गेन वाऽऽपदाक्रान्तो न श्ववृत्त्या कथंचन॥४७॥
वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययाऽऽपदि । चरेद् वा विप्ररूपेण न श्ववृत्त्या कथंचन ॥४८॥
शूद्रवृत्तिं भजेद् वैश्यः शूद्रः कारुकटक्रियाम् । कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा॥४९॥
वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् । देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत् ॥५०॥
यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा । धनेनापीडयन् भृत्यान् न्यायेनैवाहरेत् क्रतून् ॥५१॥
कुटुम्बेषु न सज्जेत न प्रमाद्येत् कुटुम्ब्यपि । विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥५२॥
पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गमः । अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा ॥५३॥
इत्थं परिमृशन् मुक्तो गृहेष्वतिथिवद् वसन् । न गृहैरनुबध्येत निर्ममो निरहंकृतः ॥५४॥
कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान् । तिष्ठेद् वनं वोपविशेत् प्रजावान् वा परिव्रजेत् ।५५।
यस्त्वासक्तमतिर्गेहे पुत्रवित्तैषणातुरः । स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते ॥५६॥
अहो मे पितरौ वृद्धौ भार्या बालात्मजाऽऽत्मजाः । अनाथा मामृते दीनाः कथं जीवन्ति दुःखिताः
एवं गृहाशयाक्षिप्तहृदयो मूढधीरयम् । अतृप्तस्ताननुध्यायन् मृतोऽन्धं विशते तमः ॥५८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे सप्तदशोऽध्यायः ॥१७॥

---

कृत्स्नं समूलं पापं विधूय सिरस्य । अर्कवत् सूर्यवद्दीप्तिर्यस्य तेन विमानेन गत्वा ॥४६॥ सीदन् क्लिश्यन् पण्यैः[1] क्रयविक्रयादि व्यवहारैः । तत्रापि आपदाक्रान्तश्चेत् खड्गेन क्षत्रियवृत्त्या वा । न तु श्ववृत्त्या नीचवृत्त्या ॥४७॥ राजन्यः क्षत्रियः विप्ररूपेण अध्यापनादिना । प्रतिग्रहस्तु तस्यापद्यपि निषिद्धः । मृगयया आखेटेन ॥४८॥ कारवः प्रतिलोमजविशेषा बुरुडादयस्तेषां वृत्तिं कटशूर्पादिनिर्माणरूपाम् । गर्ह्येण निन्दितेन कर्मणा न लिप्सेत् नेच्छेत् । कृच्छ्रात् आपदः ॥ ४९ ॥ वेदाध्यायादिभिः यथोदयं यथाविभवं यथाशक्ति मद्रूपाणि अन्वहं प्रतिदिनं यजेत् । तत्र वेदाध्यायो वेदपाठः तेन ऋषीन् स्वधाकारेण श्राद्धादिना पितॄन् । स्वाहाकारेण यज्ञेन देवान् । बलिसमर्पणेन भूतानि । अन्नाद्यैः मनुष्यादीन् यजेत ॥ ५० ॥ यदृच्छया उद्यमं विना उपपन्नेन प्राप्तेन न्यायेनैव उपार्जितेन शुद्धेन धनेन क्रतून् यज्ञान् आहरेत अनुतिष्ठेत् । अपीडयन् तेषां वृत्तिमलोपयन् ॥ ५१ ॥ न सज्जेत नासक्तो भवेत् । न प्रमाद्येत भजने प्रमादं न कुर्यात् । दृष्टवत् ऐहिकलोकवत् अदृष्टं परलोकमपि नश्वरं पश्येत् । विपश्चित् विवेकी ॥५२॥प्रपायां पन्थानां सङ्गम इवेति लुप्तोपमा । देहमनु पश्चात् एते वियन्ति वियुक्ता भवन्ति । यथा निद्रानुवर्ती स्वप्नः तद्गतपदार्थः निद्रापाये वियुज्यते तद्वत् ॥ ५३ ॥ परिमृशन् विचारयन् अतिथिवत् उदासीनः सन् हर्षविषादशून्यः सन् । निर्गतं ममत्वं यस्मादिति भावप्रधानो निर्देशः । तत्र हेतुः निरहङ्कृतः ॥ ५४ ॥ गृहमेधो गृहस्थः तत्र भवैः गृहमेधीयैः कर्मभिः मामिष्ट्वा सम्पूज्य गृहे एव तिष्ठेन्नानुबध्येत यतो निर्ममः । प्रजावान् पुत्रवांश्चेत् तदा वनमुपविशेत् परिव्रजेत् संन्यस्तो वा भवेत् ॥ ५५ ॥ स्त्रैणः स्त्रीवश्यः । अहमित्यभिमानेन बध्यते ॥५६॥ बाला अल्पवयस्का एकद्विमासिकाः आत्मजा यस्या सा मे भार्या तथा आत्मजा द्वित्रिवार्षिकाश्च माम् ऋते विना कथं जीविष्यन्तीति भविष्यदर्थे लट् ॥ ५७ ॥ गृहे य आशयो वासना तेन आसमन्तात् क्षिप्तं विक्षिप्तं हृदयं यस्य सः । यद्वा । गृहेषु आशया अतितृष्णया आक्षिप्तमाकृष्टं वशीभूतं हृदयं यस्य सः । तान् पित्रादीन् । अन्धं तमः अन्धतामिस्रं नरकं विशते । अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । तमः श्वसृगालादितामसीयोनिं वा ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां एकादशस्कन्धे गूढार्थदीपिन्यां सप्तदशोऽध्यायः ॥१७॥

---

१. 'पण् व्यवहारे स्तुतौ च' इति धातुः ।

# अथाष्टादशोऽध्यायः

श्रीभगवानुवाच

वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा। वन एव वसेच्छान्तस्तृतीयं भागमायुषः ॥१॥

कन्दमूलफलैर्वन्यैर्मेध्यैर्वृत्तिं प्रकल्पयेत्। वसीत वल्कलं वासस्तृणपर्णाजिनानि च ॥२॥

केशरोमनखश्मश्रुमलानि बिभृयाद् दतः। न धावेदप्सु मज्जेत त्रिकालं स्थण्डिलेशयः ॥३॥

ग्रीष्मे तप्येत पञ्चाग्नीन् वर्षास्वासारषाड् जले। आकण्ठमग्नः शिशिरे एवंवृत्तस्तपश्चरेत् ॥४॥

अग्निपक्वं समश्नीयात् कालपक्वमथापि वा। उलूखलाश्मकुट्टो वा दन्तोलूखल एव वा ॥५॥

स्वयं संचिनुयात् सर्वमात्मनो वृत्तिकारणम्। देशकालबलाभिज्ञो नाददीतान्यदाऽऽहृतम् ॥६॥

वन्यैश्चरुपुरोडाशैर्निर्वपेत् कालचोदितान्। न तु श्रौतेन पशुना मां यजेत वनाश्रमी ॥७॥

अग्निहोत्रं च दर्शश्च पूर्णमासश्च पूर्ववत्। चातुर्मास्यानि च मुनेराम्नातानि च नैगमैः ॥८॥

एवं चीर्णेन तपसा मुनिर्धमनिसंततः। मां तपोममामाराध्य ऋषिलोकादुपैति माम् ॥९॥

यस्त्वेतत् कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत्। कामायाल्पीयसे युञ्ज्याद् बालिशः कोऽपरस्ततः ॥

---

अष्टादशे वनस्थानां धर्माः संन्यासिनां तथा।
साधारणविशेषाभ्यां वर्ण्यन्ते ते यथातथम् ॥ १ ॥

पञ्चाशद्वर्षतः तृतीयं भागं पञ्चसप्ततिवर्षपर्यन्तम् ॥ १ ॥ मेध्यैः पवित्रैः वन्यैः वने भवैः कन्दादिभिः वृत्तिं जीविकां सम्पादयेत्। तृणपर्णनिर्मितानि च वासांसि वसीत धारयेत्। कन्दमूलयोरवान्तरभेदः। यस्य फलं मूलमपि भक्ष्यते तत् मूलकादि मूलम्। यस्य मूलमेव भक्ष्यते तत्सूरणादि कन्द इत्युच्यते। वल्कलं भूर्जपत्रादि। केशादीनां मलं तु तद्वर्धनमेव। दतः दन्तान् न धावेत् न शोधयेत्। अधिकमिति शेषः। मज्जेत स्नायात्। स्थण्डिले भूमौ शेते सप्तम्या अलुक् ॥३॥ सूर्येण सह चतुर्दिक्षु पञ्चाग्नीन् संस्थाप्य तप्येत आत्मानं तापयेदित्यर्थः। अन्तर्भावितण्यर्थः। आसारं धारासम्पातं सहते। वृतं नियमः। जले आकण्ठेति योज्यम् ॥४॥ अग्निपक्वं कन्दमूलादि। कालपक्वं फलम्। उलूखलेन अश्मना वा नीवारादीन् कुट्टयति खण्डयतीति तथाभूतः स्यात् ॥५॥ वृत्तिकारणं जीविकासाधनं कन्दमूलादिकम् संचिनुयात् सञ्चयं कुर्यात् अन्येन आहृतमानीतं न आददीत न स्वीकुर्यात्। देशकालेत्युक्तेरशक्तौ तु नायं नियमः। अन्यानीतमपि स्वीकुर्यात् ॥ ६ ॥ हव्यकव्ये चरुः पुमान् इत्यमरात् चरुशब्दो हव्यकव्यवाची। हव्यं देवान्नं कव्यं पित्रन्नम्। तण्डुलपिष्टनिर्मितकूर्माकारो बलिः पुरोडाश उच्यते। तथा च वन्यैः वनोद्भवैः नीवारादिभिः निष्पन्ना ये चरुपुरोडाशास्तैः कालचोदितान् यथासमयं विहितान् आग्रयणादीन् नवान्नप्राशनार्थं वैदिककर्माणि श्राद्धादीन् निर्वपेत् समन्त्रं कुर्यात् न तु पशुना पशुयागेन। मांसलोलुपानां पामराणां कृते कल्पितोऽयं विधिः कलौ सर्वथा निषिद्धत्वात्। न दद्यादामिषं श्राद्धे इति नारदोक्तेश्चेति परिसंख्यायां तात्पर्यं न त्वयं विधिः स्वतः प्राप्तत्वात्। विधिरत्यन्तमप्राप्तौ इति नियमाच्च ॥ ७ ॥ मुनेः वनस्थस्य अग्निहोत्रादीनि नैगमैर्वेदज्ञैः आम्नातानि विहितानीत्यन्वयः ॥ ८ ॥ एवं चीर्णेन कृतेन तपसा माम आराध्य मुनिर्मामुपैतीत्यन्वयः। ऋषिलोकात् महर्लोकं विहाय ल्यब्लोपे पञ्चमी। धमनीभिः शिराभिः नाडीभिः सन्ततः व्याप्तः ॥ ९ ॥ एतत् पञ्चाग्निरूपं चीर्णं सम्पादितं महत् तपः अल्पीयसे कामाय तुच्छविषयसुखाय युञ्ज्यात् योजयेत् उपयुक्तं कुर्यात् ततोऽन्यः को वा बालिशः मूर्खः नकोऽपीत्यन्वयः।

यदासौ नियमेऽकल्पो जरया जातवेपथुः । आत्मन्यग्नीन् समारोप्य मच्चित्तोऽग्निं समाविशेत् ॥
यदा कर्मविपाकेषु लोकेषु निरयात्मसु । विरागो जायते सम्यङ् न्यस्ताग्निः प्रव्रजेत्ततः॥१२॥
इष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे । अग्नीन् स्वप्राण आवेश्य निरपेक्षः परिव्रजेत् ॥१३॥
विप्रस्य वै संन्यसतो देवा दारादिरूपिणः । विघ्नान् कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात् परम् ॥
बिभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम् । त्यक्तं न दण्डपात्राभ्यामन्यत् किंचिदनापदि ॥१५॥
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम् । सत्यपूतां वदेद् वाचं मनःपूतं समाचरेत् ॥१६॥
मौनानीहानिलायामा दण्डा वाग्देहचेतसाम् । न ह्येते यस्य सन्त्यङ्ग वेणुभिर्न भवेद् यतिः॥१७॥
भिक्षां चतुर्षु वर्णेषु विगर्ह्यान् वर्जयंश्चरेत् । सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता ॥१८॥
बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः । विभज्य पावितं शेषं भुञ्जीताशेषमाहृतम् ॥१९॥

---

निःश्रेयसं मोक्षसाधनीभूतम् ॥ १० ॥ अकल्पः असमर्थः चेत् तदा आत्मनि अग्निं समारोप्य प्राणाहुतिं कृत्वा । ब्रह्माग्नौ ब्रह्मणा हुतम् । प्राणान् प्राणेषु जुह्वति इति गीतोक्तेः पुनश्च अग्निं समाविशेत् । अनिलाग्निधारणया देहं त्यजेदित्यर्थः । दधार गात्रेष्वनिलाग्निधारणामिति चतुर्थोक्तेः । ब्रह्माग्नौ हूयते प्राणो होमकर्म तदुच्यते इति योगशास्त्राच्च । न चानेन बाह्याग्निप्रवेशोऽभिप्रेतः स्वयं शरीरदाहे तु आत्मघातित्वरूपदोषप्रसक्तेः । योगक्रियानभिज्ञैरेव एवंविधाऽसाधीयसी पद्धतिः लोके प्रवर्तिता सा च विज्ञैः नादरणीयेति ॥११॥ यदा कर्मणां विपाकेषु फलस्वरूपेषु स्वर्गादिलोकेषु विरागो जायते ततः तदा त्यक्तयज्ञाग्निः सन् प्रव्रजेत् संन्यसेत्। निरयात्मसु नरकतुल्येषु ॥१२॥ यथोपदेशं यथाशास्त्रं प्राजापत्येष्ट्या मामिष्ट्वा आराध्य सर्वस्वं दत्त्वा परिव्रजेत् इत्यतः हेतोः इयमेव इष्टिः । स्वप्राणे इत्युक्त्या बाह्यहोमं परित्यज्येत्यर्थः ॥ १३ ॥ अस्मान् अतिक्रम्य परं ब्रह्म समियात् ॥ १४ ॥ चेत् यदि वासः बिभृयात् तर्हि परं केवलं कौपीनं गुह्यस्थानमाच्छाद्यते येन तत् तावन्मात्रमेव । प्रैषोच्चारात्पूर्वं यत् त्यक्तं तत् दण्डा पात्राभ्यामन्यत् किमपि न धारयेत् । आपदि तु त्यक्तमपि धारयेत् । प्रैष इति मन्त्रनाम । ते च त्रयो मन्त्राः तेषामुच्चारणं गृहस्थैर्न कार्यम् । व्युत्क्रमोच्चारणे तु न दोष इति वंशीधरी । प्रैषान् दर्शयति । ॐ भूः संन्यस्तं मया । ॐ भुवः संन्यस्तं मया । ॐ स्वः संन्यस्तं मया स्वाहेति प्रथमप्रैषः । ॐ पुत्रैषणायाः वित्तैषणायाः लोकैषणायाश्च व्युत्थितोऽहं स्वाहेति द्वितीयप्रैषः । ओमभयं सर्वभूतेभ्यो मत्तः स्वाहेति तृतीयः प्रैषः ॥ १५ ॥ दृष्टिपूतं हिंसातो निवृत्त्यर्थम् ॥ १६ ॥ वाचो दण्डः मौनम् । देहस्य दण्डः अनीहा सकामकर्मत्यागः । चेतसो दण्डः प्राणायामः । एते दण्डा यस्य न सन्ति स वेणुभिर्धृतैः यतिर्न भवति संन्यासफलं न लभेत । अङ्ग धृतैर्वेणुभिर्वा इति श्लेषोऽपि व्याख्येयः ॥ १७ ॥ विगर्ह्यान् अभिशस्तपतितानिति[1] श्रीधरी । असंक्लृप्तान् पूर्वतोऽनिश्चितान् सप्त गृहान् प्रति भिक्षां चरेत् कुर्यात् । यावत् लब्धं तावतेति योज्यम् ॥१८॥ तत्र जलाशये उपस्पृश्य आचम्य वाग्यतः मौनीभूय पावितं प्रोक्षणादिभिः शोधितमन्नं विभज्य विष्णुब्रह्मार्कभूतेभ्यः विभागं कृत्वा शेषमवशिष्टमशेषमाहृतमानीतं भुञ्जीत । अशेष

---

१. 'सतां वा ह्यसतां वापि ब्रह्महत्यादिना तु यः ।
अभियुक्तो हि लोकेषु सोऽभिशस्तः प्रकीर्तितः ॥ १ ॥
कर्मणा योनितश्चैव देहदोषैश्च कुत्सिताः ।
पतितांस्तान् विजानीयान्महापातकिनस्तथा ॥ २ ॥
इति यमोक्तेः ।

एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः । आत्मक्रीड आत्मरत आत्मवान् समदर्शनः ॥२०॥
विविक्तक्षेमशरणो मद्भावविमलाशयः । आत्मानं चिन्तयेदेकमभेदेन मया मुनिः ॥२१॥
अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया । बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः ॥२२॥
तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः । विरक्तः क्षुल्लकामेभ्यो लब्ध्वाऽऽत्मनि सुखं महत्॥
पुरग्रामव्रजान् सार्थान् भिक्षार्थं प्रविशंश्चरेत् । पुण्यदेशसरिच्छैलवनाश्रमवर्ती महीम् ॥२४॥
वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् । संसिध्यत्याश्वसम्मोहः शुद्धसत्त्वः शिलान्धसा॥२५॥
नैतद् वस्तुतया पश्येद् दृश्यमानं विनश्यति । असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् ॥२६॥
यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम् । सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत् स्मरेत् ॥
ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः । सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ।२८।
बुधो बालकवत् क्रीडेत् कुशलो जडवच्चरेत् । वदेदुन्मत्तवद् विद्वान् गोचर्यां नैगमश्चरेत् ॥२९॥
वेदवादरतो न स्यान्न पाखण्डी न हैतुकः । शुष्कवादविवादे न कंचित् पक्षं समाश्रयेत् ॥३०॥
नोद्विजेत जनाद् धीरो जनं चोद्वेजयेन्न तु । अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
देहमुद्दिश्य पशुवद् वैरं कुर्यान्न केनचित् ॥ ३१ ॥
एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः । यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च ॥३२॥

---

मित्युक्तेरधिकाहरणं निरस्तम् ॥१९॥ आत्मनि परमात्मनि अनुभवविषयीकृते सति रतस्तुष्टः तेनैवात्मना क्रीडा विहारो यस्य सः । आत्मवान् धैर्ययुक्तः ॥ २० ॥ विविक्तमेकान्तं क्षेमं निर्बाधं शरणं स्थानं यस्य सः । मयि भावेन विमलः आशयोऽन्तःकरणं यस्य सः । आत्मानं जीवं मया परमात्मना सह अभेदेन चिन्तयेत् इति सायुज्यार्थम् ॥२१॥ ज्ञाननिष्ठया तत्त्वमसीति महावाक्येन अन्वीक्षेत बन्धमोक्षकारणं पुनः पुनः विचारयेत् । विक्षेपः विषयासक्तिः बन्धहेतु । संयमः मोक्षहेतुः ॥ २२ ॥ षड्वर्गं षडिन्द्रियवृन्दं नियम्य आत्मनि महत् अविनाशिसुखं लब्ध्वा विचरेदित्यन्वयः । क्षुल्लकामेभ्यः तुच्छविषयेभ्यः विरक्तः सन् ॥ २३ ॥ पुरादीन् प्रति भिक्षार्थं प्रविशन् महीं विचरेदित्यन्वयः । पुण्यशब्दः देशादिभिः प्रत्येकं संबध्यते । व्रजा गोष्ठानि सार्थान् यात्रिकजनसमूहान् ॥ २४ ॥ अभीक्ष्णम् आधिकतया । यतः शिलवृत्या प्राप्तेन अन्धसा अन्नेन शुद्धसत्त्वः शुद्धान्तः करणः अत एव अमोहः निवृत्तमोहः सन् आशु संसिध्यति मुक्तो भवति । कणिशाद्यर्जनं शिलम् । कणिशं धान्यमञ्जरी ॥ २५ ॥ दृश्यमानं मिष्टान्नादि भोग्यवस्तु वस्तुतया सत्यत्वेन न पश्येत् । यतो विनश्यति । अतः इह अमुत्र सर्वत्रैव असक्तचित्तः सन् तदर्थं चिकीर्षितात् कर्तुमिष्टात् कर्मजालात् विरमेत् ॥ २६ ॥ एतत् ममतास्पदं जगत् तथा मनआदिभिः संहतं सम्बद्धमहङ्कारास्पदमेतत् शरीरं च तज्जन्यं सुखं च सर्वं मायामात्रमिति तर्केण स्वप्नदृष्टान्तेन त्यक्त्वा पुनस्तान् न चिन्तयेत् ॥२७॥ परमहंसधर्मानाह—ज्ञानेति । ज्ञाननिष्ठः परिपक्वज्ञानवान् वाशब्दौ समुच्चयार्थौ न विकल्पार्थौ । अनपेक्षकः शिष्यसंङ्ग्राद्यनपेक्षः । सलिङ्गान् दण्डादिसहितान् आश्रमान् । विधिर्निषेधस्यापि उपलक्षणम् । विधिनिषेधातीतः सन् विचरेत् ॥ २८ ॥ बालकवत् मानापमानशून्यः सन् । नैगमः वेदार्थज्ञोऽपि गोचर्याम् अनियताचारमिव कुर्यात् । अन्यथा लोकरञ्जनाद्बन्धः स्यात् ॥ २९ ॥ वेदे ये वादा अर्थवादाः तेषु रतः आसक्तो न स्यात् । हैतुकः केवलतर्कनिष्ठः । शुष्के जलताडनवन्निष्प्रयोजने ॥ ३० ॥ नोद्विजेत भीतो न भवेद् । नोद्वेजयेत् भयं नोत्पादयेत् अतिवादान् दुरुक्तानि ॥ ३१ ॥

अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् । लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम् ॥
आहारार्थं समीहेत युक्तं तत्प्राणधारणम् । तत्त्वं विमृश्यते तेन तद् विज्ञाय विमुच्यते ॥३४॥
यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् । तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥३५॥
शौचमाचमनं स्नानं न तु चोदनया चरेत् । अन्यांश्च नियमाञ्ज्ञानी यथाहं लीलयेश्वरः ॥३६॥
न हि तस्य विकल्पाख्या या च मद्वीक्षया हता । आदेहान्तात् क्वचित् ख्यातिस्ततः सम्पद्यते मया
दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् । अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥३८॥
तावत् परिचरेद् भक्तः श्रद्धावाननसूयकः । यावद् ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥३९॥
यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः । ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥४०॥
सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा । अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥४१॥
भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः । गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥४२॥
ब्रह्मचर्यं तपः शौचं संतोषो भूतसौहृदम् । गृहस्थस्याप्यृतौ गन्तुः सर्वेषां मदुपासनम् ॥४३॥

---

भूतेषु प्राणिषु आत्मनि च अवस्थितः । यथा जलपात्रेषु एक एवेन्दुः अवस्थितो भवति तथा भूतानि शरीराण्यपि पाञ्चभौतिकत्वेन एकात्मकानि भवन्ति तस्मात् वैरं न कुर्यादिति । सर्वभूतानां भगवच्छरीरकत्वात् क्वापि भूते कृतवैरे तदन्तर्यामिपुरुषपर्यन्तगामित्वादित्यतो न केनापि तत्कुर्यादिति गूढाभिसन्धिः ॥ ३२ ॥ अशनं भोजनम् । उभयं लाभालाभौ । यतः दैवतन्त्रितं दैवाधीनम् अतो हर्षविषादौ न कार्यावित्यर्थः ॥३३॥ समीहेत चेष्टेत । यतः प्राणधारणमुचितम् । कथम् । तेन प्राणधारणेन तत्त्वं विचार्यते । तेन किं स्यात् । विमुच्यते ॥३४॥ यदृच्छया दैवेच्छया उपपन्नं प्राप्तमन्नमद्यात् भुञ्जीत श्रेष्ठं सरसम् उत अपि अपरं विरसम् । घृताक्तं शुष्कं वा यथा अन्नं तथा वासः वस्त्रादिकं च भजेत् सेवेत इत्यन्वयः ॥ ३५ ॥ ज्ञानी शौचादीनि चरेत् स्वेच्छया कुर्यात् न तु चोदनया विधिकिङ्करत्वेन अन्यान् नियमानपि तथैव कुर्यात् यथाऽहं करोमि लोकसंग्रहार्थम् ॥ ३६ ॥ तस्य ज्ञाननिष्ठस्य पुंसः विकल्पाख्या भेदख्यातिः भेदप्रतीतिः मत्तोऽन्यस्फूर्तिं र्नास्ति । या च पूर्वमासीत् साऽपि मद्वीक्षया ज्ञानेन हता भवति । अथापि आदेहान्तात् मरणपर्यन्तं क्वचित् कदाचित् बाधितैव ख्यातिर्भाति यथा स्वाप्निकी । ततो देहान्ते च स मया सह सम्पद्यते एकीभवति मुक्तो भवतीत्यर्थः ॥३७॥ दुःखमेव उदर्कः उत्तरफलं येषु तेषु कामेषु विषयेषु जातनिर्वेद उत्पन्नवैराग्यः आत्मवान् आत्मजिज्ञासुः गुरुमुपाव्रजेत् । कथंभूतः । न जिज्ञासितो न विचारितो मद्धर्मो मत्प्राप्तिसाधनं येन सः । अत्र जिज्ञासापदस्य स्वाश्रयसमवायसम्बन्धेन विचारे लक्षणा तद्विरहे गुरूपसत्तेर्निरर्थकत्वादिति दीपिनी ॥ ३८ ॥ यावत्कालं ब्रह्म विजानीयात् तावत् आदृतः सन् मामेव मद्दृष्ट्यैव गुरुं परिचरेत् सेवेतेत्यन्वयः । अनसूयकः दोषदृष्टिरहितः ॥ ३९ ॥ न संयतः न वशीकृतः षड्वर्गो येन । प्रचण्डः अत्यासक्तः इन्द्रियसारथिर्बुद्धिः यस्य । त्रिदण्डोपलक्षितं सन्यासम् उपजीवति जीविकासाधनं करोति ॥ ४० ॥ मां च निह्नुते प्रतारयति वञ्चयते । न विपक्वा कषायाः वासना यस्य सः । अस्मात् अमुष्मात् परलोकाच्च विहीयते च्युतो भवति अधः पतति । उभयलोकात् भ्रष्टो भवतीत्यर्थः ॥४१॥ ईक्षा तत्त्वविचारः धर्मः । भिक्षोः संन्यासिनः । वनौकसः वनवासिनः । गृहिणो गृहस्थस्य भूतानां प्राणिनां रक्षा । इज्या पञ्च महायज्ञाश्च । द्विजस्य ब्रह्मचारिणः आचार्यसेवनं धर्मः ॥ ४२ ॥ ऋतौ गन्तुः भार्यासंयोगं कर्तुः गृहस्थस्यापि ब्रह्मचर्यादयो धर्मा भवन्ति । तत्र मदुपासनं तु सर्वेषामेव प्राणिनां मुख्यो

इति मां यः स्वधर्मेण भजन्नित्यमनन्यभाक् । सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते दृढाम् ॥४४॥
भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् । सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥४५॥
इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः । ज्ञानविज्ञानसम्पन्नो न चिरात् समुपैति माम्॥४६॥
वर्णाश्रमवतां धर्म एष आचारलक्षणः । स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥४७॥
एतत्तेऽभिहितं साधो भवान् पृच्छति यच्च माम् । यथा स्वधर्मसंयुक्तो भक्तो मां समियात् परम् ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यामष्टादशोऽध्यायः ॥ ११ ॥

धर्मः ॥ ४३ ॥ न अन्यत् फलं भजतीति । न अन्यस्मै प्रयोजनाय भजतीति तथा । मम भावो भावना यस्य सः । दृढां स्थिरां मद्भक्तिं लभते ॥४४॥ हे उद्धव अनपायिन्या निरवच्छिन्नया भक्त्या स मद्भक्तः सर्वकारणमतं ब्रह्म मा मामुपयातीत्यन्वयः । कथंभूतम् । सर्वस्य जगतः उत्पत्तिः अप्ययः प्रलयश्च यस्मात् तत् । ब्रह्मणो वेदस्यं कारणं ॥ ४५ ॥ स्वधर्मेण निर्णिक्तं[1] शुद्धंसत्त्वमन्तःकरणं यस्य सः । अत एव निःशेषरूपेण ज्ञाता मद्गतिः ऐश्वर्यं येन स ज्ञानं शास्त्रीयं विज्ञानमनुभवः ताभ्यां सम्पन्नः । न चिरात् अस्मिन्नेव जन्मनि मां समुपैति ॥ ४६ ॥ आचारलक्षणः पितृलोकप्रापकः । कर्मणा पितृलोकः इति श्रुतेः । स एव परः मदर्थं कृतश्चेत् निःश्रेयसकरः मोक्षफलको भवति ॥ ४७ ॥ हे साधो भवान् यत् मां पृच्छति । किं तत् । यथा भक्तः मां सम्यक् इयात् प्राप्नुयात् तदेत् ते अभिहितं कथितमित्यन्वयः । परं परमेश्वरम् ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यामष्टादशोऽध्यायः ॥ १८ ॥

## अथैकोनविंशोऽध्यायः

### श्रीभगवानुवाच

यो विद्याश्रुतसम्पन्न आत्मवान् नानुमानिकः । मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत् ॥१॥
ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः । स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥२॥

ज्ञानविज्ञानयोः रूपं भक्तेस्तत्साधनानि च ।
ऊनविंशे यमादींश्च प्राह लक्षणतो हरिः ॥ १ ॥

विद्या ज्ञानं तत्प्रतिपादकश्रुतेन शास्त्रेण सम्पन्नः आत्मवान् अनुभूतत्त्वश्च । न केवलमानुमानिकः तर्कनिष्ठ एवंभूतो ज्ञानी इदं देहदैहिकं सर्वं प्रपञ्चजातं मायामयं मिथ्याभूतमेव रज्जौ सर्पवत् ज्ञात्वा ज्ञानं ज्ञानसाधनं च मयि मत्प्राप्त्यर्थमेव संन्यसेत् त्यजेत् न तस्यावश्यकता सति प्रासादारोहणे यथा निःश्रेणेः । केवलमनुभूतिसुखासक्तो भवेत् अयमेव विद्वत्संन्यासो नाम । ज्ञायतेऽनेनेति ज्ञानं ज्ञानसाधनम् ॥१॥ इष्टः अपेक्षितः । स्वार्थः फलभूतः । हेतुः तत्साधनं च । अतः तस्य मत् ऋते मां विना स्वर्गादिः तथा अन्यो वा कश्चित्

[1]. 'णिजिर शौचे धातुः ।

ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम । ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥३॥

तपस्तीर्थं जपो दानं पवित्राणीतराणि च । नालं कुर्वन्ति तां शुद्धिं या ज्ञानकलया कृता ॥४॥

तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव । ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः ॥५॥

ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽऽत्मानमात्मनि । सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन् ॥६॥

त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो मायान्तराऽऽपतति नाद्यपवर्गयोर्यत् ।
जन्मादयोऽस्य यदमी तव तस्य किं स्युराद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥७॥

उद्धव उवाच

ज्ञानं विशुद्धं विपुलं यथैतत् वैराग्यविज्ञानयुतं पुराणम् ।
आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्विमृग्यम् ॥८॥

तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश ।
पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात् ॥९॥

दष्टं जनं सम्पतितं बिलेऽस्मिन् कालाहिना क्षुद्रसुखोरुतर्षम् ।
समुद्धरैनं कृपयाऽऽपवर्ग्यैर्वचोभिरासिञ्च महानुभाव ॥१०॥

श्रीभगवानुवाच

इत्थमेतत् पुरा राजा भीष्मं धर्मभृतां वरम् । अजातशत्रुः पप्रच्छ सर्वेषां नोऽनुशृण्वताम् ॥११॥

---

पदार्थः तस्य प्रियो नास्तीत्यन्वयः ॥२॥ संसिद्धाः शुद्धान्तःकरणाः पदं स्वरूपं विदुः । असौ ज्ञानेन मां बिभर्ति हृदि धारयति अतो मे प्रियतमः ॥ ३ ॥ ज्ञानस्य कलया लेशेन या शुद्धिः कृता तां शुद्धिं तप आदीनि नालं कुर्वन्ति कर्तुं न शक्नुवन्ति । इतराणि शौचाचमनादीनि । शुद्धिमिति पाठः प्रशस्तः । अत्रालंशब्दः[1] शक्तिवाचकः ॥ ४ ॥ तस्मात् ज्ञानेन सहितं स्वात्मानं जीवमंशरूपं मामंशिरूपं च ज्ञात्वा भक्त्या भावितः वासितः शोधितः सन् मां भज ॥ ५ ॥ आत्मनि स्वान्तःकरणे एव माम् इष्ट्वा ध्यात्वा संसिद्धिं मोक्षरूपामगमन् । सम्यक् समीचीना सिद्धिः मुक्तिः यस्मात् स तथा तमिति तीर्थः ॥६॥ हे उद्धव त्वयि यः त्रिविधः त्रिगुणमयो विकारः देहादिः आश्रयते प्रतीयते स माया मिथ्याभूत एव यत् यतः मध्ये एव आपतति न तु आद्यन्तयोः । अतो यत् यदा अस्य देहादेः अमी जन्मादयः विकाराः स्युः तदा तस्य अधिष्ठानभूतस्य तव किं स्युः न स्युरित्यर्थः । वस्तुतः तस्य देहस्यापि न सन्ति तस्यासत्त्वादित्याह आद्यन्तयोरिति । असतः सर्पादेः आद्यन्तयोर्यदस्ति रज्ज्वादि तन्मध्येऽपि न तु सर्पादि तद्वद्यं विकारोऽपि नास्तीत्यर्थः ॥ ७ ॥ पुराणमनादिवेदसिद्धं विपुलमगाधं विशुद्धं चैतत् ज्ञानं तथा तन्मूलभूतं त्वद्भक्तियोगं च यथावत् आख्याहीत्यन्वयः । कथंभूतम् । महद्भिर्ब्रह्मादिभिः विशेषतो मृग्यमन्वेषणीयमिति उभयोः विशेषणम् । विश्वस्य ईश्वर नियन्तः । तत्कुतः विश्वमूर्ते ॥ ८ ॥ हे ईश घोरे दुर्गमे भवाध्वनि संसारमार्गे सन्तप्यमानस्य जनस्य तवाङ्घ्रिद्वन्द्वमेव आतपत्रं छत्रं तस्मात् अन्यत् शरणं न पश्यामीत्यन्वयः । कथंभूतात् । अमृतमभितो वर्षतीति यत् तस्मात् । तापत्रयेण अभिहतस्य आक्रान्तस्य ।९। अस्मिन् बिले संसारगर्ते पतितं कालाहिना दष्टमेनं जनं कृपया समुद्धर वचोभिः वचनामृतैः आसिञ्च चेत्यन्वयः । कथंभूतैः । आपवर्ग्यैः अपवर्गबोधकैः । कथंभूतं जनम् । क्षुद्रसुखेष्वेव उरुतर्षः अतितृष्णा यस्य तम् ॥ १० ॥ अजातशत्रुः युधिष्ठिरः इत्थमेव

---

१. अलं भूषणपर्याप्ति शक्तिवाचरणवाचकम् इत्यमरात् ।

निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः । श्रुत्वा धर्मान् बहून् पश्चान्मोक्षधर्मानपृच्छत ॥१२॥
तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् । ज्ञानवैराग्यविज्ञानश्रद्धाभक्त्युपबृंहितान् ॥१३॥
नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै । ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥१४॥
एतदेव हि विज्ञानं न तथैकेन येन यत् । स्थित्युत्पत्त्यप्ययान् पश्येद् भावानां त्रिगुणात्मनाम् ॥१५॥
आदावन्ते च मध्ये च सृज्यात् सृज्यं यदन्वियात् । पुनस्तत्प्रतिसंक्रामे यच्छिष्येत तदेव सत् ॥१६॥
श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् । प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते ॥१७॥
कर्मणां परिणामित्वादाविरिञ्च्यादमङ्गलम् । विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥१८॥
भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ । पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥१९॥
श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् । परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥२०॥
आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् । मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः ॥२१॥

---

एतद् भीष्मं पप्रच्छेत्यन्वयः । नोऽस्माकं शृण्वतां सताम् ॥ ११ ॥ १२॥ देवानामिव दृढं व्रतं यस्य स भीष्मः । ज्ञानादिभिः उपबृंहितान् तत्सहितान् तान् धर्मान् श्रवणादीन् । ज्ञानादय उपबृंहिता वर्धिता यैस्तानिति वा ॥ १३ ॥ भावान् अष्टाविंशतितत्त्वानि भूतेषु स्थावरजङ्गमेषु कार्येषु अनुगतानि येन ईक्षेत । अथ पुनश्च एष्वपि तत्त्वेषु अनुगतमेकं परमात्मानमीक्षेत तत् ज्ञानमित्यन्वयः । कार्यकारणात्मकं जगत् पश्यन् परमकारणात्मकमेवैतत् न ततः पृथगिति ज्ञानस्वरूपम् । किञ्च यत् यदा येन एकेन ज्ञानेन परमात्मानुगतान् एकात्मकान् भवान् पूर्वमैक्षत तांस्तथा पूर्ववत् नेक्षेत किन्तु ब्रह्मैव सर्वं न च पृथक् भावादिसत्ताऽस्तीति तदा एतत् ज्ञानमेव विज्ञानं भवतीत्यर्थः । कुतः भवानां तत्त्वानां स्थित्यादीन् पश्यन् तेषामसत्तामेव पश्येत् विचारयेत् भावा उत्पत्त्यादिमन्तः । सावयवत्वात् घटादिवत् इत्येवंरूपेण । प्रकृति पुरुषमहदहङ्कारपञ्चतन्मात्राणि नव । दशेन्द्रियाणि मनश्च एकादश । पञ्चभूतानि त्रयो गुणाश्च अष्ट एवमष्टाविंशतितत्त्वानि भवन्ति ॥ १४ ॥ १५ ॥ सृज्यात् सृज्यं कार्यात् कार्यान्तरं प्रति अर्थात् शरीरात् शरीरान्तरं प्रति आदौ अन्ते मध्ये च यत् अन्वियात् अनुगतं भवेत् । पुनश्च तत्प्रतिसंक्रामे सृज्यनाशे अर्थात् शरीरनाशे च यत् अवशिष्यते एकरूपमवतिष्ठते तदेव सत् परमार्थरूपं ब्रह्मेति पश्येत् चिन्तयेदित्यर्थः । आदौ कारणत्वेन अन्तेऽवधित्वेन मध्ये आश्रयत्वेन ॥ १६ ॥ वैराग्यं दर्शयति—श्रुतिरिति द्वाभ्याम् । विकल्पानस्तित्वे प्रमाणचतुष्टयम् । तत्र श्रुतिः शब्दप्रमाणम् । नेह नानास्ति किञ्चन इति । प्रत्यक्षम् । घटादिकार्यं तन्त्वादि व्यतिरेकेण न दृश्यते । ऐतिह्यं महाजनप्रसिद्धिः विद्वदनुभवः । अनुमानं च विमतं विवादास्पदं विश्वं मिथ्या दृश्यत्वात् शुक्तिरजतादिवत् । अत्र विश्वं पक्षीकृत्य मिथ्यात्वं साध्यते दृश्यत्वं हेतुः यत् दृश्यं तन्मिथ्या यथा शुक्तिरजतादि इत्यन्वयव्याप्तिः । यन्मिथ्या न भवति तन्न दृश्यं यथाऽऽत्मा इति व्यतिरेकव्याप्तिः । एतेषु प्रमाणेषु सत्सु एतैर्विकल्पस्य बाधितत्वात् अनवस्थानात् मिथ्यात्वेन निश्चयाच्च स विवेकी ततो विकल्पात् विरज्यते विरक्तो भवतीत्यर्थः । विविधं कल्प्यते इति विकल्पः प्रपञ्चः ॥१७॥ कर्मणां यज्ञादीनां परिणामित्वात् नश्वरत्वात् आविरिञ्च्यात् ब्रह्मलोकपर्यन्तम् अदृष्टं स्वर्गादिसुखमपि दृष्टवत् ऐहिकसुखवत् अमङ्गलं दुःखरूपं नश्वरं च पश्येदित्यन्वयः । विपश्चित् विवेकी ॥ १८ ॥ प्रीयमाणाय श्रवणे प्रीतिं कुर्वते तुभ्यं भक्तेः परं श्रेष्ठं कारणमुपायं कथयिष्यामीत्यन्वयः ॥१९॥ शश्वदिति पदं प्रत्येकं सम्बध्यते । परिनिष्ठा आसक्तिः ॥२०॥ परिचर्यायां सामग्रीसम्पादने । प्रदक्षिणायां वा । सामग्र्यामर्चने चैव परिचर्या प्रदक्षिणे इति निरुक्तिः । सर्वाङ्गैरिति

मदर्थेष्वङ्गचेष्टा च वचसा मद्‍गुणेरणम् । मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥२२॥
मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च । इष्टं दत्तं हुतं जप्तं मदर्थे यद् व्रतं तपः ॥२३॥
एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते॥२४॥
यदात्मन्यर्पितं चित्तं शान्तं सत्त्वोपबृंहितम् । धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥२५॥
यदर्पितं तद्विकल्पे इन्द्रियैः परिधावति । रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम् ॥२६॥
धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् । गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः॥२७॥

उद्धव उवाच

यमः कतिविधः प्रोक्तो नियमो वारिकर्शन। कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो ॥
किं दानं किं तपः शौर्यं किं सत्यमृतमुच्यते । कस्त्यागः किं धनं चेष्टं को यज्ञः का च दक्षिणा ॥
पुंसः किंस्विद् बलं श्रीमन् भगो लाभश्च केशव । का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च

कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः ।
कः स्वर्गो नरकः कः स्वित् को बन्धुरुत किं गृहम् ॥३१॥
क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ।
एतान् प्रश्नान् मम ब्रूहि विपरीतांश्च सत्पते ॥३२॥

श्रीभगवानुवाच

अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसंचयः । आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥३३॥

---

अष्टाङ्ग[१]प्रणामः सूचितः । अभ्यधिका मत्तोऽपि अधिकेति योज्यम् । मन्मतिः मद्भावना ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥२१॥ मदर्थेषु मन्निमित्तनानाकर्मसु अङ्गचेष्टा लौकिकी क्रिया । यद्वा । गीतनृत्यादिरूपा । मद्‍गुणानामीरणं कथनम् । ईर गतौ कम्पने च धातुः ततो ल्युट् । मनसो मयि अर्पणं निरोधः । सर्वकामाः भजनविरोधिसंकल्पास्तेषां वर्जनम् ॥ २२ ॥ मदर्थे मद्भजनार्थं वित्तव्ययः । भोगस्य तत्साधनस्य स्रक्चन्दनादेः । सुखस्य आसक्त्या पुत्रपोषणादेः परित्यागः । मदर्थे कृतं यदिष्टादिकं तत्सर्वं मद्भक्तेः कारणं भवतीत्यर्थः । इष्टादयो भावे निष्ठा ॥ २३ ॥ भक्तिः प्रेमलक्षणा । ततोऽन्यः अस्य कोऽर्थोऽवशिष्यते न कोऽपीत्यर्थः ॥ २४ ॥ यदेति पदच्छेदः । यदा मयि ईश्वरे अर्पितं तदा धर्मादीन् प्रतिपद्यते प्राप्नोति । सत्त्वोपबृंहितं वर्धितसत्त्वम् ॥२५॥ यत् यदा तत् चित्तमिन्द्रियैः विकल्पे विषये देहगेहादौ अर्पितं सत् विषयेषु परिधावति तदा रजस्वलं रजोव्याप्तमसन्निष्ठं निषिद्धविषयासक्तं च विद्धि । विपर्ययमधर्मादिकं च प्रतिपद्यते इत्यनुषङ्गः ॥ २६ ॥ स्वाभीष्टान् धर्मादीन् व्याख्याति—यो मद्भक्तेः कृत् कारणं स धर्म इति योज्यम् । एकात्मैव ऐकात्म्यं स्वार्थे ष्यञ् । अभेददृष्टिः । गुणेषु विषयेषु अनासक्तिः ॥ २७ ॥ हे अरिकर्शन । यम इति पञ्चभिः । प्रश्नान् प्रष्टव्यार्थान् । मम मह्यम् । विपरीतान् अशमादींश्च ब्रूहीत्यन्वयः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ पतञ्जलिसूत्रे पञ्च यमाः पञ्च नियमाश्च । ते यथा अहिंसासत्याऽस्तेयापरिग्रहा यमाः । शौचसन्तोषतपःस्वाध्यायेश्वर

---

१. दोर्भ्यां पदाभ्यां जानुभ्यामुरसा शिरसा दृशा ।
मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥ इति ।

शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं मदर्चनम् । तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥३४॥
एते यमाः सनियमा उभयोर्द्वादश स्मृताः । पुंसामुपासितास्तात यथाकामं दुहन्ति हि ॥३५॥
शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः । तितिक्षा दुःखसम्मर्षो जिह्वोपस्थजयो धृतिः ॥३६॥
दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम् । स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ॥३७॥
ऋतं च सूनृता वाणी कविभिः परिकीर्तिता । कर्मस्वसंगमः शौचं त्यागः संन्यास उच्यते ॥३८॥
धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः । दक्षिणा ज्ञानसंदेशः प्राणायामः परं बलम् ॥३९॥
भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः । विद्याऽऽत्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु ॥
श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः । दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित् ॥४१॥
मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः । उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ॥४२॥
नरकस्तम उन्नाहो बन्धुर्गुरुरहं सखे । गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥४३॥
दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेन्द्रियः । गुणेष्वसक्तधीरीशो गुणसङ्गो विपर्ययः ॥४४॥
एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः । किं वर्णितेन बहुना लक्षणं गुणदोषयोः ।
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥४५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

---

प्रणिधानानि नियमाः । शौचं द्विविधं बाह्याभ्यन्तरभेदेन तदैव द्वादशसंख्यापूर्तिः । आभ्यन्तरं मैत्र्यादिभिः चित्तमलानां प्रक्षालनम् । उभयोः श्लोकयोः द्वादश-द्वादश । उपासिता अनुष्ठिता एते कामनानुसारेण दुहन्ति मनोरथं पूरयन्ति ॥ ३५ ॥ मन्निष्ठता शमः न तु शान्तिमात्रम् । एतेन अशमादयोऽपि व्याख्याता भवन्ति । इन्द्रियसंयमः दमः न तु चौरादिदमनम् । संमर्षः दुःखसहनमेव तितिक्षा न तु भारादेः सहनम् । जयो वेगधारण धृतिः न तु अनुद्वेगमात्रम् ।३६। दण्डन्यासः भूतद्रोहत्यागः दानं न तु धनार्पणम् । कामत्यागः भोगानपेक्षा तपः न तु कृच्छ्रादिः स्वभावविजयः वासनात्यागः शौर्यं न तु बाह्यशत्रुविजयः । समदर्शनं ब्रह्मालोचनं न तु यथार्थभाषणम् । ३७। ऋतं सूनृता मधुरा सत्या प्रिया च वाक् । 'सूनृतं मङ्गलेऽपि स्यात् प्रियसत्ये वचस्यपि' इति मेदिनी । असङ्गमः अनासक्तिः शौचम् । न तु स्नानादिना मलप्रक्षालनम् । त्यागो ममतात्यागः न तु भोगमात्रत्यागः ॥ ३८ ॥ इष्टम् इष्टसाधनं धर्मः न तु वित्त पश्वादिसाधारणम् । भगवत्तमः परमेश्वरोऽहमेव । मद्बुद्धया यज्ञोऽनुष्ठेयः । न तु क्रियाबुद्धया दक्षिणा ज्ञानोपदेशः न सुवर्णादिदानम् । परं बलं मनोदमनहेतुत्वात् ।३९। भगो भाग्यं तच्च ऐश्वरो भावः षड्विधैश्वर्यं न तु दैवानुकूल्यम् । लाभः न तु पुत्रादिः । विद्या आत्मनि प्रतीतस्य भेदस्य निवृत्तिः । न केवलं शास्त्रीयं ज्ञानम् । भिदा टावन्तः भागुरिमते । अकर्मसु निषिद्धकर्मसु जुगुप्सा हेयत्वबुद्धिः ह्रीः न तु लज्जामात्रम् ॥ ४० ॥ गुणा एव श्रीः भूषणं न मुकुटादिः । अत्ययः अतिक्रमोऽनुसन्धानं न तु भोगः । विषयभोगापेक्षैव दुःखं नाग्निदाहादि । पण्डितः न केवल शास्त्राभ्यासी ।४१। मूर्खः न तु शास्त्रानभिज्ञः । पन्थाः मां नितरां गमयति प्रापयतीति यो निवृत्तिमार्गः स न तु कण्टकादिशून्यः । चित्तविक्षेपः प्रवृत्तिमार्ग एव उत्पथः कुमार्गः न तु चौरादियुक्तः । उदयो वृद्धिः न तु इन्द्रादिलोकः ॥ ४२ ॥ उन्नाहः तमसो वृद्धिः न तु तामिस्रादिः । गुरुरेव बन्धुः न भ्रात्रादिः । मानुष्यं गृहं न तु धनिकभवनम् । आढ्यः न तु धनवान् ॥ ४३ ॥ यस्तु असन्तुष्टः स न तु निर्धनः । योऽजितेन्द्रियः स न तु दीनः रङ्कः । ईशः स्वतन्त्रः न तु राजादिः । विपर्ययः अनीशः ॥४४॥ ते एते सर्वे प्रश्नाः । गुणदोषयोर्दर्शनं दोषः उभयवर्जनं गुणः एतदेव गुणदोषयोर्निर्दुष्टं लक्षण तस्य बहुना वर्णितेन किं न किञ्चित्प्रयोजनमित्यर्थः ।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यामेकोनविंशोऽध्यायः ॥१९॥

## अथ विंशोऽध्यायः

### उद्धव उवाच

विधिश्च प्रतिषेधश्च निगमो ह्रीश्वरस्य ते । अवेक्षतेऽरविन्दाक्ष गुणं दोषं च कर्मणाम् ॥ १ ॥

वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् । द्रव्यदेशवयःकालान् स्वर्गं नरकमेव च ॥ २ ॥

गुणदोषभिदादृष्टिमन्तरेण वचस्तव । निःश्रेयसं कथं नृणां निषेधविधिलक्षणम् ॥ ३ ॥

पितृदेवमनुष्याणां वेदचक्षुस्तवेश्वर । श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥ ४ ॥

गुणदोषभिदादृष्टिर्निगमात्ते न हि स्वतः । निगमेनापवादश्च भिदाया इति ह भ्रमः ॥ ५ ॥

### श्रीभगवानुवाच

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया । ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्६

निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु । तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ७।

यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ८।

तावत् कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ९॥

---

विंशेऽधिकारिणां भेदाद् गुणदोषव्यवस्थया ।
भक्तिज्ञानाक्रियायोगा हरिणा सम्यगीरिताः ॥ १ ॥

ईश्वरस्य ते निगम आज्ञारूपो वेद एव स च कर्मणां विधेयायां प्रतिषेध्यानां च गुणं दोषं च पुण्यपापात्मकं तत्फलं च स्वर्गनरकादि अवेक्षते विधत्ते प्रतिपादयति । किञ्च निगम एव वर्णानामाश्रमाणां च विकल्पं भेदं तथा प्रतिलोमानुलोमजं गुणदोषंचावेक्षते इत्यनुषङ्गः ॥१॥ द्रव्यादीश्च कर्मार्हतानर्हताभ्यां स्वर्गं नरकं च तत्फलरूपतया गुणदोषरूपमवेक्षते । द्रव्यं चरुपुरोडाशादि । देशः तीर्थादिः । वयः तारुण्यम् । देशो वसन्तादिः । प्रतिलोमजा विलोमजाः उत्तमवर्णासु स्त्रीषु हीनवर्णेभ्यो जाताः सूतादयः । अनुलोमजाः उत्तमवर्णेभ्यो हीनवर्णासु जाताः अम्बष्ठादयः ॥२॥ अयं विहितत्वाद् गुणः निषिद्धत्वाच्च दोषः । गुणदोषभेददृष्टिमन्तरेण विना विधिनिषेधात्मकं तव वचः कथं मोक्षप्रतिपादकं स्यात् न कथमपि । विहितस्यैव करणे मोक्षाधिकारी न निषेधस्येत्यर्थः ॥ ३ ॥ किञ्च तव वाक्यरूपो वेद एव पित्रादीनां श्रेयः श्रेष्ठं चक्षुः ज्ञानहेतुः मार्गप्रदर्शक इत्यर्थः । वव । प्रत्यक्षा-दिभिः अनुलब्धे अर्थे स्वर्गादौ मोक्षे च तथा साध्यसाधनयोरपि ज्ञापकं भवति । इदमस्य साध्यं प्राप्यम् इदमस्य साधनमित्यत्रापि ॥ ४ ॥ ते निगमादेव भेददृष्टिः न तु स्वतः । निगमादेव भेददृष्टेरपवादश्च इत्यत ह स्पष्टमेव भ्रमो भवति । कथमेक एव निगमो विरुद्धं वक्ति । भेददृष्टिमपि तन्निषेधमपि अतो मे भ्रमं निवर्तयेति क्रियाशेषः ॥ ५ ॥ श्रेयोविधित्सया श्रेयो विधातुमिच्छया त्रय एव योगाः सन्ति एभ्योऽन्य उपायो नास्ति । कुत्रचित् शास्त्रेषु ॥ ६ ॥ कर्मसु निर्विण्णानां दुःखबुद्धया तत्फलेषु विरक्तानां प्रत्युत न्यासिनां कर्म-त्यागिनां च ज्ञानयोगः कामिनां स्वर्गकामुकानां तेषु कर्मसु अनिर्विण्णचित्तानामुत्साहिनां तु कर्मयोगः सिद्धिद इत्युत्तरेणान्वयः । निर्विण्णत्वे ज्ञाने अत्यासक्तत्वे कर्मणि आसक्तिराहित्ये च भक्तावधिकार इति विवेकः ॥ ७ ॥ यदृच्छया दैवेच्छया मत्कथादौ जातश्रद्धः । तु शब्दः किञ्चेत्यर्थे किञ्च यः नातिविरक्तः नातिसक्तः अस्य भक्तियोगः सिद्धिदः मोक्षप्रदो भवति ॥ ८ ॥ यावत् न निर्विद्येत विरक्तो न भवेत् श्रद्धा न जायेत

स्वधर्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव । न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥१०॥
अस्मिंल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः । ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥११
स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा । साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥१२॥
न नरः स्वर्गतिं कांक्षेन्नारकीं वा विचक्षणः । नेमं लोकं च कांक्षेत देहावेशात् प्रमाद्यति ॥१३॥
एतद् विद्वान् पुरा मृत्योरभवाय घटेत सः । अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥१४॥
छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम् । खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥१५॥
अहोरात्रैश्छिद्यमानं बुद्ध्वाऽऽयुर्भयवेपथुः । मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥१६॥

नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ।
मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा ॥१७॥

यदाऽऽरम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः । अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥१८॥
धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् । अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥१९॥

---

भवेत् तावदेव कर्माणि नित्यनैमित्तिकानि कुर्वीतेत्यन्वयः ॥९॥ सम्प्रति कर्मयोगिनो ज्ञानभक्त्योर्भूमिकामाह—स्वधर्मेति । अनाशीःकामः अफलेप्सुः यज्ञैः मां यजन् तौ स्वर्गनरकौ न याति । यदि अन्यत् निषिद्धं काम्यं च कर्म न कुर्यात् । द्वेधा हि नरकयानं भवति । विहितातिक्रमणात् निषिद्धाचरणाद्वा । तत्र स्वधर्मनिष्ठत्वात् निषिद्धवर्जनात् नरकं न । अफलेप्सुत्वात् स्वर्गमपि न यातीत्यर्थः । आशिषं कामयते आशीःकाम ततो नञ् समासः ॥१०॥ अस्मिन् लोके देहे वर्तमानः जीवत्येव पुमान् । स्वधमस्थः सन् मद्भक्तिं ज्ञानं वा प्राप्नोतीत्यन्वयः । यदृच्छया देवेच्छया । विशुद्धमात्मसाक्षात्कारात्मकम् । अनघः निषिद्धत्यागी अत एव शुचिः ॥ ११ ॥ यथा निरयिणः नारकास्तथा स्वर्गिणोऽपि एतं लोकं मनुष्यदेहमिच्छन्तीत्यन्वयः । साधकं मोक्षस्येति शेषः । अथवा तृतीयार्थे षष्ठी । ज्ञानभक्त्योः । उभयं स्वर्गिनारकिशरीरम् । तत् तयोः ॥ १२ ॥ अत्र वाशब्दः उपमार्थे । नारकीमिव स्वर्गतिं न काङ्क्षेत् पतनहेतुत्वात् । इमं लोकं देहं च । पुनश्च भूयेयमहं स्वराडिति[1] इत्येकम् यतो विचक्षणोऽपि देहाध्यासात् प्रमाद्यति इष्टं हित्वा अनिष्टे निमज्जति ॥ १३ ॥ एतत् मर्त्यशरीरं साधकमिति विद्वान् जानन् अभवाय मोक्षाय घटेत चेष्टेत अप्रमत्तः सन् 'घट चेष्टायां धातुः । मर्त्यं मरणधर्मकमपि अर्थदं मोक्षप्रदम्' ॥ १४ ॥ यमवन्निर्दयैः पुरुषैः छिद्यमानं वनस्पतिं वृक्षं दृष्ट्वा खगः स्वकेतं स्वनिवासस्थानं तमुत्सृज्य क्षेमं सुखं याति । कीदृशं । कृत नीडं यस्मिन् तम् । अलम्पटः अनासक्तः ॥ १५ ॥ निरीहः निर्व्यापारः अत एव मुक्तसंगः परं परमात्मानम् । वेपथुः कम्पः । 'टुवेपृ कम्पने' धातुः ॥ १६ ॥ नृदेहंरूपं प्लवं प्राप्य यो भवाब्धिं न तरेत् स आत्महा भवति । तत्र हेतवः । आद्यं मूलभूतं सर्वसाधनानाम् । दुर्लभमपि सुलभम् अनायासेन प्राप्तत्वात् सुकल्पं कार्यक्षमम् 'कृपू' सामर्थ्ये धातुः । गुरुदेवः कर्णधारो नाविको यस्य । पुनश्च मया ईश्वरेण ईरित प्रेरितम् । केन नभस्वता वायुना । सुषुम्नाचारिप्राणं कुर्वता ॥१७॥ यदा आरम्भेषु कर्मसु निर्विण्णः उद्विग्नः तदा प्राणाभ्यासेन अचलं सत् आत्मनो मनः मयि धारयेत् स्थिरीकुर्यादित्यन्वयः ॥ १८ ॥ यर्हि भ्राम्यत् आश्वेव विषयान्तर गच्छत् अनवस्थितं चञ्चलं भवति तदा अनुरोधेन किञ्चिदिच्छा-

---

१. कर्णधारस्तु नाविक इत्यमरः । पारवर्ती कर्णं नौकादण्डं धारयतीति 'धृञ्' धारणे वक्तव्यम् ।

मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः। सत्त्वसम्पन्नया बुद्ध्या मन आत्मवशं नयेत् ॥२०॥
एष वै परमो योगो मनसः संग्रहः स्मृतः। हृदयज्ञत्वमन्विच्छन् दम्यस्येवार्वतो मुहुः ॥२१॥
सांख्येन सर्वभावानां प्रतिलोमानुलोमतः। भवाप्ययावनुध्यायेन्मनो यावत् प्रसीदति ॥२२॥
निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः। मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥२३॥
यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया। ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥२४॥
यदि कुर्यात् प्रमादेन योगी कर्म विगर्हितम्। योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥२५॥
स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः। कर्मणां जात्यशुद्धानामनेन नियमः कृतः।
गुणदोषविधानेन सङ्गानां त्याजनेच्छया ॥२६॥
जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु। वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः २७।
ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः। जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् २८
प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः। कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥२९॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥३०॥

---

पूरणद्वारा अतन्द्रितः अनलसः सन् वशीकुर्यात ॥ १९ ॥ न विसृजेत् नोपेक्षेत ॥ २० ॥ संग्रहो निग्रहः परमो योगः मुख्यं योगफलम्। यथा दम्यस्य दमनीयस्य अर्वतः अश्वस्य हृदयज्ञत्वं हृदयाभिप्रायमनुसरन् तद्गतिमनुवर्तते पुनश्च तद्गतिं निरुन्धन् आकर्षति एव मनसोऽपि निग्रहः कार्यः ॥ २१ ॥ सांख्येन तत्त्वविवेकेन सर्वभावानां सर्वतत्त्वानाम् अनुलोमतः प्रकृत्यादिक्रमेण भवं सृष्टिक्रमं विलोमतः पृथिव्यादिक्रमेण अप्ययं प्रलयक्रमं च चिन्तयेत्। यावत् मनो प्रसीदति निश्चलं भवेत् ॥ २२ ॥ निर्विण्णस्य संसारादुद्विग्नस्य। उक्तार्थस्य गुरूपदिष्टार्थपर्यालोचकस्य। गुरूपदिष्टस्यैव पुनः पुनः चिन्तया मनः दौरात्म्यं देहाभिमानं विषयासक्तिं त्यजति ॥ २३ ॥ एतैः उपायैः मनः दौरात्म्यं त्यजति अन्यैर्न तस्मात् ध्यानयोग्यं मां स्मरेत्। यद्वा। एतैरुपायैः ध्यानक्षमं मनः कृत्वा मां स्मरेत् ॥ २४ ॥ विगर्हितं निषिद्धं कर्म व्यभिचारादि अंहः तज्जन्यं पापं योगेनं मद्ध्यानयोगेनैव दहेत्। तत्र पापनिमित्तमन्यत् कृच्छ्रादि प्रायश्चित्तं न कुर्यात् ॥ २५ ॥ स्वे इति सार्द्धम्। स्वे स्वे वर्णाश्रमानुरूपे धर्मे या निष्ठा स गुणः। तद्विपर्ययस्तु दोषः स्यात्। उभयोर्गुणदोषयोरेव एष स्वरूपनिर्णयः। यथा शूद्रस्य ब्राह्मणधर्मः दोषः अविरक्तस्य संन्यासधर्मः दोषः किन्तु विरक्तस्य ब्राह्मणस्य तु संन्यासो गुणः। ततः किमत आह—जात्या स्वभावेनैव अशुद्धानामनर्थमूलानां काम्यकर्मणामनेन गुणदोषविधानेन नियमः संकोचः कृतः स च सङ्गानां विषयासक्तीनां त्याजनेच्छया ॥२६॥ भक्तियोगमाह—जातेति नवभिः। अत एव सर्वकर्मसु लौकिकवैदिकेषु निर्विण्णः उद्विग्नः न तु तत्फलेषु। यद्यपि कामान् दुःखोदर्कान्[1] वेद जानन्नपि तत्परित्यागेऽसमर्थः ततः श्रद्धालुर्मद्भक्तः जुषमाणोऽपि सेवमानोऽपि तान् गर्हयन् उपेक्षमाणः प्रीतः प्रसन्नचित्तः सन् मां भजेतेत्यन्वयः। कथंभूतः। मत्त्यैव सर्वं भविष्यतीति दृढनिश्चयः सन् ॥२७॥२८॥ असकृत् निरन्तरं मा मां भजतः मुनेः हृदय्या हृद्गताः सर्वे कामाः कामवासना नश्यन्तीत्यन्वयः ॥ २९ ॥ मयि दृष्टे अनुभूते सति हृदयग्रन्थिः अहंममत्वात्मकः ग्रन्थिवत् दुर्मोचनीयः भिद्यते निवर्तते। संशयाः असंभावनाविपरीतभावनादयः किमहं देहाद्भिन्नः उताभिन्नः। किमहं परतन्त्रः स्वतन्त्रो वा इत्येवंरूपाः। कर्माणि पुण्यपापात्मकानि मत्प्राप्तिप्रतिबन्धकानि क्षीयन्ते। सर्वत्र कर्मकर्तरि लट्। चकारोऽवधारणे।

---

१. दुःखमेव उदर्कः उत्तरोत्तरं फलं येषु तान्।

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥३१॥
यत् कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥३२॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । स्वर्गापवर्गं मद्धाम कथंचिद् यदि वाञ्छति ॥३३॥
न किंचित् साधवो धीरा भक्ता ह्येकान्तिनो मम । वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ३४
नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् । तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥३५॥
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः । साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥३६॥
एवमेतान् मयाऽऽदिष्टाननुतिष्ठन्ति मे पथः । क्षेमं विन्दन्ति मत्स्थानं यद् ब्रह्म परमं विदुः ॥३७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे विंशोऽध्यायः ॥ २० ॥

---

अखिलस्य जगतः अन्तर्यामिणि ॥ ३० ॥ यतो भक्त्यैव कामादिनाशने सति ज्ञानवैराग्यादि स्वतः एव स्यात् तयोः भक्तेरेव पुत्रत्वात् तस्मादेतत् द्वयमपि श्रेयः साधनं भवेत् किमुत कर्मेत्यर्थः । प्रायोऽत्र वितर्के । मयि आत्मा चित्तं यस्य तस्य ॥ ३१ ॥ यदिति युग्मम् । यत् कर्मादिभिः यच्च इतरैः श्रेयोऽभिः श्रेयःसाधनैरपि अवाप्यते तत्सर्वं मद्भक्तो भक्तियोगेन अञ्जसा अनायासेन लभते इत्यन्वयः । मद्धाम वैकुण्ठमपि यदीत्यनेन तस्य वाञ्छा तु नास्तीति सूचितम् ॥ ३२ ॥ ३३ ॥ एकान्तिनोऽनन्यभक्ताः एकस्मिन्नेव अन्तो निष्ठा येषां ते तथाभूताः किञ्चिदपि न वाञ्छन्ति किं बहुना कैवल्यं मोक्षमपि न वाञ्छन्ति तस्य विशेषणम् अपुनर्भवम् । नास्ति पुनर्भवो जन्म यस्मात्तत् ॥३४॥ फलान्तरानपेक्षा निरपेक्षास्तेषां भावो नैरपेक्ष्यमपेक्षाराहित्यमेव निःश्रेयसं मोक्षमाहुः । यस्मिन् कस्यचिदपि अपेक्षा नास्ति तत् निःश्रेयसम् । कीदृशम् । परं सर्वोत्कृष्टम् अनल्पकं महत् जीवनफलम् । यस्मादेवं तस्मात् निरपेक्षस्य मे भक्तिर्भवेत् । भक्त्या ज्ञानं ततो मोक्ष इति । को हि निरपेक्षः यो निराशीः निष्कामः ॥ ३५ ॥ एकस्मिन्नेव अन्तो येषां ते एकान्ता अनन्याः तेषां गुणाः पुण्यपापात्मका न भवन्ति । कुतः । बुद्धेः प्रकृतेः परं तत्त्वं प्राप्तवतां ज्ञानिनामित्यर्थः । बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते इति गीतोक्तेः ॥ ३६ ॥ मया आदिष्टान् उपदिष्टान् एतान् पथः मत्प्राप्तिमार्गान् ये आचरन्ति ते मत्स्थानं विन्दन्ति । यत् परमं ब्रह्म विदुस्तत् । क्षेमं निर्बाधं कालादिभयरहितम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे विंशतितमोऽध्यायः ॥ २० ॥

## अथैकविंशोऽध्यायः

### श्रीभगवानुवाच

य एतान् मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् । क्षुद्रान् कामांश्चलैः प्राणैर्जुषन्तः संसरन्तिते ॥
स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः । विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥२॥

---

एकविंशे तु वस्तूनां द्रव्यादेर्गुणदोषतः ।
शुद्ध्यशुद्धी तथा वेदैः प्रतिपाद्यस्य निर्णयः ॥ १ ॥

मत्पथान् मत्प्राप्तिमार्गान् । चलैः अस्थिरैः प्राणैः इन्द्रियैः कामान् तुच्छविषयान् जुषन्तः सेवमाना भवन्ति ते इहैव संसरन्ति भ्रमन्ति न च मुच्यन्ते इत्यर्थः ॥१॥ पराधिकारे दोषः स्यात् । उभयोर्गुणदोषयोरेव

शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु । द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥३॥
धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ । दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् ॥४॥
भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्च धातवः । आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥५॥
वेदेन नामरूपाणि विषमाणि समेष्वपि । धातुषूद्धव कल्प्यन्ते एतेषां स्वार्थसिद्धये ॥६॥
देशकालादिभावानां वस्तूनां मम सत्तम । गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥७॥
अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् । कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणम् ॥८॥
कर्मण्यो गुणवान् कालो द्रव्यतः स्वत एव वा । यतो निवर्तते कर्म स दोषोऽकर्मकः स्मृतः ॥९॥
द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च । संस्कारेणाथ कालेन महत्वाल्पतयाथवा ॥१०॥

---

स्वरूपनिर्णयः । यथा शूद्रस्य ब्राह्मणधर्मः, दोषः अविरक्तस्य संन्यासिधर्मः दोषः । ब्राह्मणस्य विरक्तस्य च गुणः ॥ २ ॥ भौतिकत्वेन समानेष्वपि वस्तुषु भूम्यादिद्रव्येषु शुद्ध्यशुद्धी विधीयेते । किमर्थम् । एतद् द्रव्यं योग्यमयोग्यं वेति विचिकित्सार्थं सन्देहनिवृत्त्यर्थं मशकार्थो धूम इति वत् । ततः शुद्ध्यादि अग्रेऽपि योज्यम् । गुणदोषौ । अशुद्धत्वेऽपि व्यवहारदर्शनाद् गुणः । अदर्शनात् दोषः । तन्निमित्तमुपादेयत्वमनुपादेयत्वं च । शुभाशुभौ अर्थौ अनर्थौ च विधीयते ॥ ३ ॥ शुभाशुभौ यात्रार्थं देहनिर्वाहार्थं विधीयेते । असत्प्रतिग्रहादेर्दोषत्वेऽपि आपत्सु निर्वाहार्थं शुभमेव । अधिकग्रहण तु अशुभमेव । धर्मरूपां धुरमुद्वहतां पुंसामर्थे मन्वादिरूपेण मया आचारो दर्शितः ॥ ४ ॥ समानेष्वपि वस्तुषु यदुक्तं तत्प्रपञ्चयति-भूमीति त्रिभिः । भूतानां समस्तप्राणिनां शारीराः शरीरारम्भकाः भूम्यादयः पञ्च धातवः कारणरूपा इति देहतः साम्यमुक्तम् । आत्मना जीवेन संयुता इति जीवतः साम्यम् । धारयन्तीति धातवः कारणानि । अतः समानकारणत्वात् सर्वाणि वस्तूनि समानान्येव ॥५॥ धातुषु धात्वारब्धदेहेषु समेष्वपि वेदेन नामरूपाणि वर्णाश्रमादीनि विषमाणि कल्प्यन्ते । किमर्थम् । एतेषां प्राणिनां स्वार्थसिद्धये धर्मादिपुरुषार्थसिद्धये । स्वार्थो भोगमोक्षरूपो वा ज्ञेयः ॥६॥ न केवलं देहेष्वेव अपि तु देशकालादीनामपि । भावाः पदार्थास्तत्सम्बन्धिवस्तूनां व्रीह्यादीनामपि गुणदोषौ विधीयेते । किमर्थम् । नियमार्थं यथेच्छप्रवृत्तिसङ्कोचार्थम् । मुमुक्षुभिः निष्काममेव न तु काम्यं कर्मेति नियमार्थम् ॥ ७ ॥ तत्र देशशुद्ध्यशुद्धी आह अकृष्णेति । कृष्णमृगरहितः तत्रापि अब्रह्मण्योऽत्यन्तमशुचिः । कृष्णेन मृगेण सारः श्रेष्ठः । असौवीरः सत्पुरुषरहितः । कीकटो गयाप्रदेशः अङ्गवंगकलिंगादिः । असंस्कृतः सम्मार्जनादिरहितः । ईरिणम् ऊषरभूमिश्च । सर्वेषां द्वन्द्वे एकवद्भावः । तदन्यः शुचिः । सौवीरादि[1]युक्तस्तु कीकटादिरपि शुचिरित्यर्थादुक्तं भवति ॥ ८ ॥ कालस्य शुद्ध्यशुद्धी आह । द्रव्यतः पुत्रादिद्रव्यसम्पत्त्या कालः कर्मण्यः कर्मार्हः दानकर्मयोग्यः[2] शुद्धः । यश्च पूर्वाह्लादिः स स्वतः कर्मार्हः जपादिकर्मयोग्यः गुणवान् कालः । यतो यस्मिन् द्रव्यालाभेन परस्परं संघर्षादिना वा कर्म निवर्तते न समाप्यते स अकर्मकः कर्मोच्छेदकः दोषः अशुद्ध इत्यर्थः ॥ ९ ॥ वस्तुशब्दोपात्तानां द्रव्याणां शुद्ध्यशुद्धी आह । द्रव्यस्य वस्त्रादेः द्रव्येण जलादिना शुद्धिः मूत्रादिना अशुद्धिः । शुद्धमशुद्धं वेति संदेहे ब्राह्मणवचनेन शुद्धिः विपरीतेन अशुद्धिः । संस्कारेण प्रोक्षणादिना पुष्पादेः शुद्धिः अवघ्राणादिना अशुद्धिः । कालेन दशाहादिना

---

१. 'स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते' इति वचनात् ।

२. पुत्रोत्पन्ने व्यतीपाते दत्तं भवति चाक्षयम् ।

**शक्त्याऽशक्त्याथवा बुद्ध्या समृद्ध्या च यदात्मने । अघं कुर्वन्ति हि यथा देशावस्थानुसारतः ॥११॥**
**धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम् । कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥१२॥**
**अमेध्यलिप्तं यद् येन गन्धं लेपं व्यपोहति । भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते ॥१३॥**
**स्नानदानतपोऽवस्थावीर्यसंस्कारकर्मभिः । मत्स्मृत्या चात्मनः शौचं शुद्धः कर्माचरेद् द्विजः ॥१४**
**मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् । धर्मः सम्पद्यते षड्भिरधर्मस्तु विपर्ययः ॥१५॥**
**क्वचिद्गुणोऽपि दोषः स्याद् दोषोऽपि विधिना गुणः । गुणदोषार्थनियमस्तद्भिदामेव बाधते १६**
**समानकर्माचरणं पतितानां न पातकम् । औत्पत्तिको गुणः सङ्गो न शयानः पतत्यधः ॥१७॥**

---

शुद्धिः विपरीतेनाशुद्धिः । अन्त्यजादिसंस्पृष्टानां तडागादिजलानां महत्त्वेन अल्पत्वेन च शुद्ध्यशुद्धी विधीयेते ।१०॥ ग्रहणादिषु शक्तस्य स्नानादिनैव शुद्धिः । अशक्तस्य तु स्नानं विनाऽपि । बुद्ध्या ज्ञानेन । पुत्रजन्मादौ सूतके दशाहाद् बहिर्ज्ञानेन शुद्धिः अन्तर्ज्ञानेन तु अशुद्धिः । जीर्णमलिनवस्त्रादेः समृद्धं प्रत्यशुद्धिः दरिद्रं प्रति शुद्धिः । विशेषमाह । एते द्रव्यादयः आत्मने जीवाय यत् अघं दोषं कुर्वन्ति तद्देशावस्थाद्यनुसारत एव । यथा यथावत् । निर्भये देशे एव । स्वस्थावस्थायामेव । अन्यच्च । स्वगृहे परमाचारस्तदर्द्धं राजवेश्मनि । तदर्द्धं शूद्रगेहे च पथि शूद्रवदाचरेत् इत्युक्तेः ॥११॥ द्रव्यस्य द्रव्येण शुद्धिरित्युक्तं तद्विवृणोति-धान्येति । धान्यादीनां रसादीनां पार्थिवानां घटादीनां च युतायुतैः कालादिभिः शुद्धिरित्यन्वयः । तत्र धान्यस्य अवघातादिना शुद्धिः । दारूणां दारुपात्रादीनां मृत्तोयाभ्यां तक्षणाद्वा शुद्धिः । अस्थ्नां गजदन्तादीनां वाय्वातपादिना शोषणात् शुद्धिः । तन्तूनां तन्तुनिर्मितवस्त्राणां तोयेन । रसस्य क्षीरघृतादेः पतितकीटादिनिःसारणेन । तैजसस्य कांस्यादेः अग्निना । मृगचर्मणां तैलादिना ऊर्णायाः केवलवायुना पार्थिवानां घटादीनां च दहनाच्छुद्धिः । मृण्मयानां तु पात्राणां दहनाच्छुद्धिरिष्यते' । इति देवलः । युतैः द्वित्रिमिलितैः मृत्तोयाग्निभिः । अयुतैः एकैकजलादिभिर्वा । कालेन शुद्धिः काले मेघोदकं ग्राह्यम् इत्यादिना यद्यप्युक्ता तथापि कालस्य पुनर्ग्रहणं जलवाय्वादिशुद्धौ कालस्य व्यापकत्वेन सर्वशोधकाश्रयत्वात् । जगतामाश्रयः कालः इत्युक्तेः ॥ १२ ॥ लेपविषये शुद्धिमाह । अमेध्येन[1] अशुचिनां मलपङ्कादिना लिप्तं यत् ताम्रवस्त्रादि तत् येन अम्लोदकादिना गन्धं लेपं च व्यपोहति मलं च त्यजति प्रकृतिं स्वरूपं भजते पूर्वरूपं प्राप्नोति तस्य तावदेव तत् शौचं शोधकमिष्यते उचितं भवति ॥ १३ ॥ कर्तृशुद्धिं दर्शयति । द्विजः स्नानादिभिः मत्स्मृत्या च आत्मनः शौचं कृत्वा शुद्धः सन् कर्म आचरेदित्यन्वयः । अवस्था कर्मानुष्ठानयोग्यं वयः । वीर्यं शक्तिः सामर्थ्यं यथा राजादेः । संस्कारः उपनयनादिः । कर्म सन्ध्योपासनादि । दानेन द्रव्यशुद्धिः । तपसा प्रायश्चित्तसिद्धिः । मत्स्मृत्या । अपवित्रः पवित्रो वा इत्यादिना ॥१४॥ गुरुमुखात् ज्ञानं मन्त्रस्य शुद्धिः । षड्भिः अकृष्णसारो देशानाम् इत्यारभ्य कथितैः देशकालद्रव्यकर्तृमन्त्रकर्मभिः शुद्धैः एतैः धर्मः सम्पद्यते । अशुद्धैः एतैः विपर्ययोऽधर्मः ॥ १५ ॥ क्वचिदिति । यथा आपदि प्रतिग्रहः गुणोऽपि अनापदि निषिद्धत्वाद् दोषः परधर्मश्च परस्य गुणोऽपि स्वस्य दोषः । गुणदोषविषयको नियमः नियामकं शास्त्रं कर्तृ तद्भेदमेव बाधतेऽवदति गुणदोषौ न वस्तुनिष्ठौ किन्तु अधिकारिभेदेन कल्पितौ अतो न तस्य वैयर्थ्यमित्येवकारेण सूचयति ॥ १६ ॥ गुणदोषयोरनियमं दर्शयति-समानेति-समानस्यैव कर्मणः सुरापानादेराचरणम् अपतितानां पतनहेतुरपि जात्या कर्मणा

---

१. 'मलमूत्रासृक्पूयास्थिरेतोमज्जावसादयः ।
उक्तान्येतान्यमेध्यानि मुनिभिः शुद्धिदर्शिभिः ॥

यतो यतो निवर्तेत विमुच्येत ततस्ततः । एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥१८॥
विषयेषु गुणाध्यासात् पुंसः सङ्गस्ततो भवेत् । सङ्गात्तत्र भवेत् कामः कामादेव कलिर्नृणाम् १९
कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते । तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम् ॥२०॥
तया विरहितः साधो जन्तुः शून्याय कल्पते । ततोऽस्य स्वार्थविभ्रंशो मूर्छितस्य मृतस्य च २१
विषयाभिनिवेशेन नात्मानं वेद नापरम् । वृक्षजीविकया जीवन् व्यर्थं भस्त्रेव यः श्वसन् ॥२२॥
फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् । श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥२३॥
उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च । आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥२४॥
नतानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि । कथं युञ्ज्यात् पुनस्तेषु तांस्तमो विशतो बुधः २५
एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः । फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि ॥२६॥

---

वा पतितानां पातक्यं अधिकारभ्रंशकं न भवति पूर्वमेव पतितत्वात् । यथा यतेः सङ्गो दोषोऽपि गृहस्थस्यौत्पत्तिकः स्वाभाविको गुणः । उभयत्र दृष्टान्तः । पूर्वमेवाधः शयानो यथा न पतति तत्स्थानस्याभावात् ॥१७॥ अतो गुणदोषनियमविधीनां प्रवृत्तिसंकोचद्वारा निवृत्तावेव तात्पर्यमित्याह—यत इति । यतो यतो विषयात् निवर्तेत ततस्ततो बन्धात् विमुच्यते एष धर्मो निवृत्तिलक्षणः असङ्गरूपो वा । शोकादीन् अपहन्ति निवर्तयतीति तथा ॥ १८ ॥ गुणाध्यासात् रमणीयत्वारोपात् । सङ्ग आसक्तिः । तत्र विषयेषु कामो भोगाभिलाषः । कामात् इच्छाप्रतिघातात् कलिः कलहः ॥ १९ ॥ तं क्रोधं तमः संमोहः । तमसा मोहेन चेतना कार्याकार्यस्मृतिः ग्रस्यते लुप्ता भवति ॥२०॥ तया चेतनया जन्तुः जीवः शून्याय कार्याक्षमाय कल्पते मृतस्य मृतकतुल्यस्य । स्वार्थविभ्रंशः चतुर्विधपुरुषार्थहानिः । च शब्द इवार्थे ॥ २१ ॥ अभिनिवेशेन आसक्त्या अपरमीश्वरं च । वृक्षजीविकया यो जीवन् वर्तते स मूर्छिततुल्यः यो भस्त्रेव श्वसन् स मृततुल्यः अतः स्वार्थनाशः ॥ २२ ॥ स्वर्गकामो यजेत् इति फलश्रुतिः न श्रेयो बोधयति परं केवलं रोचनं कर्मसु रुच्युत्पादनार्थं स्वर्गादिफलं प्रोक्तं तच्च श्रेयोविवक्षया मोक्षोद्देश्येन । यथा भैषज्यमौषधं प्रति रोचनं[1] रुचि जनकं गुडशर्करादिभवति तद्वत्॥२२॥

स्वर्गकामो यजेत् इति फलश्रुतिः न श्रेयो बोधयति परं केवलं रोचनं कर्मसु रुच्युत्पादनार्थं स्वर्गादि फलमेव तच्च श्रेयोविवक्षया मोक्षोद्देश्येन । यथा भैषज्यमौषधं प्रति रोचनं[1] रुचिजनकं गुडशर्करादि भवति । तद्वत् ।

॥ २३ ॥ ननु कर्मकाण्डे मोक्षस्य नामापि न श्रूयते कथमेतदित्याशंक्य परोक्षेण तस्य तत्रैव तात्पर्यमित्याह— उत्पत्त्येति । उत्पत्त्या जन्मनैव मर्त्या अनर्थहेतुषु कामेषु विषयेषु आसक्तमनसो भवन्ति तान् बुधो वेदः कथं पुनस्तेषु युञ्ज्यात् प्रवर्तयेदिति द्वयोरन्वयः । कथंभूतान् । नतानित्येकं पदम् नम्रीभूतान् । वेदो यत् वदति तदेव श्रेय इति विश्वस्तानित्यर्थः । कुतः । स्वार्थं परमसुखमविदुषः अजानतः । तत्कुतः । वृजिनाध्वनि दुःखमार्गे संसारे भ्राम्यतः । तत्रापि तमः स्थावराद्यज्ञानयोनि विशतः । प्राणेषु[2] आयुरिन्द्रियबलादिषु ॥ २४ ॥ २५ ॥ केचित् मीमांसकाः एवं व्यवसितं निश्चितं वेदाभिप्रायम् अविज्ञाय कुसुमितां केवलकुसुममात्रप्रदर्शिकां वेदवाचं फलश्रुतिमुखेन वदन्ति । वेदज्ञाः व्यासादयस्तथा न वदन्ति अत एव ते कुबुद्धयः कुत्सितेषु नश्वरस्वर्गसुखेषु बुद्धिः तत्त्वज्ञानं येषां ते तथाभूता । चक्रवर्ती तु कुसुमान्येव संजातानि न तु फलानि यस्यां

---

१. पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान् ।
पित्रैवमुक्तः पिबति न फलं तावदेव तु । इत्युक्तेः ।

२. प्राणो वीर्येऽनिले जीवे बलायुरिन्द्रियासुषु । इति कोशात् ।

कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः । अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते २७
न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः । उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः ॥२८॥
ते मे मतमविज्ञाय परोक्षं विषयात्मकाः । हिंसायां यदि रागः स्याद् यज्ञ एव न चोदना ॥२९॥
हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया । यजन्ते देवता यज्ञैः पितृभूतपतीन् खलाः ।३०।
स्वप्नोपममम‍ुं लोकमसन्तं श्रवणप्रियम् । आशिषो हृदि संकल्प्य त्यजन्त्यर्थान् यथा वणिक् ३१
रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः । उपासत इन्द्रमुख्यान् देवादीन् न तथैव माम् ॥३२॥
इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि । तस्यान्त इह भूयास्म महाशाला महाकुलाः ॥३३॥
एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् । मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते ।३४
वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे । परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ॥३५॥
शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् । अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥३६॥

---

फलश्रवणं फलयुक्तं किन्तु कुसुमयुक्तमेव कुसुमस्येवाज्ञानेन फलत्वभावनात् अतस्ते कुबुद्धयः वेदतात्पर्यानभिज्ञाः इत्याह ॥ २६ ॥ कुबुद्धितां प्रपञ्चयति—कामिनः इत्यष्टभिः । अग्निना यज्ञकर्माभिनिवेशेन मुग्धा लुप्तविवेकाः धूमेन तान्ता ग्लानिमन्तः । यद्वा । धूमता धूममार्गः अन्ते येषां ते । स्वं लोकमात्मतत्त्वम् । लुब्धाः तृष्णाकुलाः ॥ २७ ॥ कोऽसौ स्वलोकस्तमाह—अङ्ग हे उद्धव ! हृदिस्थमात्मानं मां स्वलोकम् य इदं जगत् यद्व्यतिरिक्तं जगन्नास्ति । यत इदं जगत् जातम् । कुतो न जानन्ति । हि यतः उक्थं कर्मैव शस्त्रं शस्त्रवत् पीडाजनकं येषां ते । शस्त्रं पशुहिंसासाधनं वा । परप्राणैः स्वीयान् प्राणान् तर्पयन्तीति । नीहारं तमः तेन व्याप्तानि चक्षूंषि येषां ते यथा सन्निहितमपि वस्तु न जानन्ति तद्वत् ॥ २८ ॥ परोक्षं स्पष्टतया अप्रतीयमानम् मतमविज्ञाय देवादीन् यजन्ते इत्युत्तरेणान्वयः । मांसलोलुपानां कृते यदि हिंसायां रागः स्यात् तर्हि यज्ञ एवेत्यभ्यनुज्ञाद्वारा परिसंख्येयं निवृत्तौ तात्पर्यं न त्वावश्यकत्वेन चोदना विधिरस्ति । अज्ञत्वादेव हिंसायां विहारो येषां ते । आलब्धैः हिंसितैः पशुभिः साधितैः यज्ञैः यजन्ते ते खला एव । खं शून्यं लान्ति गृह्णन्तीति न किञ्चित् प्राप्नुवन्ति उभयलोकतो भ्रष्टा भवन्तीत्यर्थः ॥ २९ ॥ ३० ॥ अमुं परलोकम् असन्तमनित्यम् । आशिषः कामान् संकल्प्य अर्थान् धनानि त्यजन्ति नानाकर्मसु विनियोजयन्ति । यथा कश्चित् वणिक् बहुधनेच्छया तावत् सिद्धं धनं त्यजन् समुद्रं लिलङ्घयिषुरुभयभ्रष्टो भवति तद्वदित्यर्थः ॥ ३१ ॥ रजआदिस्वभावाः रजआदिस्वभावान् देवादीन् यथा उपासते तथा मां नैव उपासते इत्यन्वयः । रजःसत्त्वतमांस्येव जुषन्ते सेवन्ते तान् । जुषी प्रीतिसेवनयोः धातुः ॥ ३२ ॥ दिवि स्वर्गे रंस्यामहे अप्सरोभिः सह विहरिष्यामः । तस्य भोगस्यान्ते । महती शाला येषां ते महाशाला महागृहस्थाः महाकुलीनाश्च भविष्यामः । 'शाला भवनमिष्यते' इति शाश्वतः ॥ ३३ ॥ पुष्पितया फलशून्यया वेदवाचा अक्षय्यमित्यादिकया । मद्वार्ता मच्चर्चा ॥ ३४ ॥ ब्रह्मात्मविषयाः ब्रह्मस्वरूपप्रतिपादनपराः । त्रिकाण्डविषया कर्मज्ञानभक्तिकाण्डविषयकाः । परोक्षं गुप्तं भगवत्तत्त्वं[1] वदन्तीति परोक्षवादा । मम प्रियमभिमतं वेदरहस्यमित्यर्थः ॥ ३५ ॥ ननु जैमिन्यादयो वेदस्य ब्रह्मपरत्वं किमिति न वर्णयन्तीत्याशंक्य मत्तो विना कोऽपि वेदरहस्यं न जानातीत्याह । शब्दब्रह्मेति यावत्समाप्ति । शब्दब्रह्म स्वरूपतोऽर्थतश्च दुर्ज्ञेयं किञ्च तत् द्विविधं सूक्ष्मं स्थूलं चेति । तत्र सूक्ष्मं तावत्

---

१. 'वेदैश्च सर्वैरहमेव वेद्यः' इति गीतोक्तेः ।

मयोपबृंहितं भूम्ना ब्रह्मणाऽनन्तशक्तिना। भूतेषु घोषरूपेण विसेषूर्णेव लक्ष्यते ॥३७॥

यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात्। आकाशाद् घोषवान् प्राणो मनसा स्पर्शरूपिणा ॥३८॥

छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ओङ्काराद् व्यञ्जितस्पर्शस्वरोष्मान्तःस्थभूषिताम् ॥३९॥

विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः। अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥४०॥

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च। त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद्विराट् ॥४१॥

किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्। इत्यस्या हृदयं लोके नान्यो मद् वेद कश्चन ॥४२॥

---

स्वरूपतोऽपि दुर्ज्ञेयमित्याह—प्राणेति। अत्र सम्बन्धमात्रे मयट्। प्राण मनः सहकृतवागिन्द्रियोच्चार्यमेतत्। तत्र प्रथमं प्राणमयं पराख्यम् आधारचक्रस्थम्। ततो मनोमयं पश्येन्त्याख्यं नाभौ मणिपूरचक्रस्थम्। उपलक्षणमेतत्। बुद्धिमयं मध्यमाख्यं हृदये अनाहतचक्रस्थम्। तत इन्द्रियमयं वैखर्याख्यं[1] तस्या वाग्व्यञ्जकत्वेन वागिन्द्रियप्रधानत्वात्। अनन्तपारं देशकालपरिच्छेदशून्यं सीमारहितम्। समुद्रवत् गम्भीरं गूढार्थम् अत एव दुर्विगाह्यं मतिप्रवेशानर्हम् ॥ ३६ ॥ भूम्ना पूर्णतमेन मया उपबृंहितं विस्तारितम्। भूतेषु प्राणिषु घोषरूपेण कर्णौ पिधाय श्रूयमाणध्वनिरूपेण लक्ष्यते। बिन्दो र्ध्वन्यात्मको नादः नादाच्छब्दो विजायते इत्युक्तेः। विसेषु कमलनालेषु ऊर्णातन्तुरिव ॥ ३७ ॥ यथेति त्रिकम्। ऊर्णनाभिः तन्तुकीटः हृदयात् सकाशात् मुखात् ऊर्णां तन्तुजालमुद्वमते उद्गिरति बहिर्निःसारयति तथा घोषवान् प्राणः ईश्वरः सूक्ष्मादोंकारात् मनसा निमित्तभूतेन आकाशात् हृदयाकाशात् बृहतीं वाचं सृजति प्रकटयति पुनस्तां स्वयमेव आक्षिपते संहरति चेति तृतीयेनान्वयः। कथंभूतेन मनसा। स्पर्शादीन् वर्णान् रूपयति संकल्पयतीति तेन। कथंभूतः प्राणः। छन्दोमयः छन्दःप्रचुरः। प्राचुर्ये मयट्। अमृतमयः उपासनया मोक्षप्रदत्वात्। पुनश्च। प्रभुः सर्वेन्द्रियनायकश्च। कीदृशीं बृहतीम् सहस्रपदवीम्। सहस्रं पदव्यः निगमागममार्गाः यस्यास्ताम्। पुनश्च। ओंकारात् हेतोः व्यञ्जिता अभिव्यक्ताः ये स्पर्शादयस्तैर्भूषिताम्। पुनश्च विचित्राभिः वैदिकलौकिकभाषाभिः विस्तृताम्। पुनश्च। अनन्तपाराम्। नास्ति अन्तः शब्दतः पारः अर्थतश्च यस्यास्ताम्। पुनश्च। चत्वारि चत्वारि अक्षराणि उत्तराणि यथोत्तरमधिकानि येषु तैः गायत्र्यादिभिः उपलक्षिताम्। स्पर्शा कादयोः मानवसानाः पञ्चवर्गाः। स्वराः अचः। ऊष्माण शषसहा। अन्तःस्था यरलवाः ॥ ३८ ॥ ३९ ॥ ४० ॥ तेपु कतिचिच्छन्दांसि निरूपयति गायत्रीति। तत्र चतुर्विंशत्यक्षरा गायत्री। ततश्चतुरक्षरवृद्ध्या उष्णिगादिच्छन्दांसि भवन्ति। अत्यष्टिः अतिजगती अतिविराट् चेति पदच्छेदः ॥ ४१ ॥ वैखरीवाण्या स्वरूपतो दुर्ज्ञेयत्वं प्रदश्य अर्थतोऽपि दुर्ज्ञेयत्वमाह किमिति। कर्मकाण्डे विधिवाक्यैः किं विधत्ते। देवताकाण्डे मन्त्रवाक्यैः किमाचष्टे किं प्रतिपादयति। ज्ञानकाण्डे च निषेधार्थं किमनूद्य विकल्पयेदित्यस्या वेदवाचो हृदयं तात्पर्यं मत्तोऽन्यः कश्चन जैमिन्यादिरपि न वेद ॥ ४२ ॥ तर्हि त्वमेव कथयेत्याह। मामिति सार्द्धम्। कर्मकाण्डे यज्ञरूपं

---

१. तथा च कारिका—परा वाङ् मूलचक्रस्था पश्यन्ती नाभिमाश्रिता।

हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥ १ ॥

वैखर्या च कृतो नादः परश्रवणगोचरः। इति।

मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् । एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदाम्
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति ॥४३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे एकविंशोऽध्यायः ॥२१॥

---

मामेव विधत्ते । मामेव तत्तद्देवतारूपेण प्रतिपादयति न मत्तः पृथक् । ज्ञानकाण्डे च आकाशादि प्रपञ्चजातं 'तस्माद्वा एतस्मादित्यादिना विकल्प्यं नेह नानास्ति किञ्चन' इत्यादिना अपोह्यते निराक्रियते तदप्यहमेव न मत्तः पृथगस्ति आकाशादि । पुनः वेदतात्पर्यं संक्षेपतः कथयति । शब्दो वेदो मां सर्वकारणत्वेन परमार्थरूपमाश्रित्य भिदामाकाशादिमायामात्रमित्यनूद्य नेह नानास्ति किञ्च नेति तद्भिदां प्रतिषिध्य प्रसीदति कृतकृत्यो भवति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यामेकविंशोऽध्यायः ॥२१॥

---

## अथ द्वाविंशोऽध्यायः

### उद्धव उवाच

कति तत्त्वानि विश्वेश संख्यातान्यृषिभिः प्रभो । नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम ॥१॥

केचित् षड्विंशतिं प्राहुरपरे पञ्चविंशतिम् । सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ॥२॥

केचित् सप्तदश प्राहुः षोडशैके त्रयोदश । एतावत्त्वं हि संख्यानामृषयो यद्विवक्षया ।
गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥ ३ ॥

### श्रीभगवानुवाच

युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा । मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥४॥

---

द्वाविंशे सांख्यसिद्धान्तात्तत्त्वसंख्यासमन्वयः ।
पुंप्रकृत्योर्विवेकश्च मृत्युजन्मविधा तथा ॥ १ ॥

हे प्रभो ! ऋषिभिः आगमेषु बहुधा संख्यातानि तेषु कति युक्तानीत्यर्थः । त्वं तु नवादिसंकलनया अष्टाविंशतितत्त्वानि आत्थ ब्रवीषि तानि वयं शुश्रुम तत् यथा प्रकृतिः पुरुषः महदहङ्कारपञ्चभूतानीति नव । तन्मात्राणि पञ्च दशेन्द्रियाणि मनश्चैकादश तथा गुणा एवमष्टाविंशतितत्त्वानि एकोनविंशाध्याये त्वमुक्तवानसि ॥ १ ॥ केचिदिति सार्द्धम् ॥ २ ॥ हे आयुष्मन् नित्यमूर्ते । नित्ययोगे मतुप् । संख्यानाम् एतावत्त्वं नानात्वं यद् विवक्षया यदभिप्रायेण पृथक् गायन्ति तदिदं वक्तुमर्हसीत्यन्वयः । एतावतीनां भावः एतावत्त्वम् ॥३॥ ब्राह्मणा ऋषयः यथा भाषन्ते तत् युक्तमेव । यतः सर्वत्र तत्तन्मते सन्ति युक्तय इति शेषः मायाम् । उद्गृह्य

नैतदेवं यथाऽऽत्थ त्वं यदहं वच्मि तत्तथा । एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः ॥५॥
यासां व्यतिकरादासीद् विकल्पो वदतां पदम् । प्राप्ते शमदमेऽप्येति वादस्तमनु शाम्यति ॥६॥
परस्परानुप्रवेशात् तत्त्वानां पुरुषर्षभ । पौर्वापर्यप्रसंख्यानां यथा वक्तुर्विवक्षितम् ॥७॥
एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च पूर्वस्मिन् वाऽपरस्मिन् वा तत्त्वे तत्त्वानि सर्वशः ।८।
पौर्वापर्यमतोऽमीषां प्रसंख्यानमभीप्सताम् । यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसम्भवात् ॥९॥
अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् । स्वतो न सम्भवादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् ॥१०॥
पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि । तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ॥११॥
प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणाः । सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥१२॥
सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते । गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥१३॥
पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोऽनिलः । ज्योतिरापः क्षितिरिति तत्वान्युक्तानि मे नव ॥१४॥

---

आश्रित्य किन्तु दुर्घटं किमसङ्गतं न किमपि सर्वं संगतं प्रामाणिकमेवेत्यर्थः ॥ ४ ॥ यत् संख्याने त्वं विरुद्धमात्थ ब्रवीषि तदेतत् एवं रीत्या विरुद्धं न । अहं यत् वच्मि तत् तथाऽविरुद्धमेव । हेतुं कारणं प्रति विवदमानानां विदुषां मदीया अविद्याशक्तय एव विवादहेतवः न वस्तुतो विवाद इत्यर्थः । दुरत्यया दुरतिक्रमणीयाः ॥ ५ ॥ यासां सत्त्वादिशक्तीनां व्यतिकरात् क्षोभात् विकल्पः मतभेद अन्तःकरणवृत्तिरूप एव वदतां पदं विषयो भवति । शमदमे मनइन्द्रियनिग्रहे सति विकल्पोऽप्येति लीयते । तं विकल्पमनु वादोऽपि शाम्यति निवर्तते इत्यर्थः ॥ ६ ॥ परस्परानुप्रवेशात् अन्योऽन्यस्मिन् अन्तर्भावात् पौर्वापर्येण न्यूनाधिकभावेन प्रसंख्यानं परिगणनं तत्त्वानां भवति । यथा वक्तुर्वादिनो विवक्षितं तदनुसारेणैव । पूर्वं कारणमपरं कार्यं तयोर्भावः पौर्वापर्यं तेन । यद्वा । पूर्वा अल्पसंख्या अपरा अधिकसंख्या तयो र्भावः ॥७॥ एकस्मिन् कारणे कार्ये वा तत्त्वानि दृश्यन्ते । तदेवाह पूर्वस्मिन् कारणभूते कार्यतत्त्वानि सूक्ष्मरूपेण प्रविष्टानि मृदि घटवत् । अपरस्मिन् कार्यतत्त्वे कारणतत्त्वानि अनुगतत्वेन प्रविष्टानि घटे मृद्वत् ॥८॥ अतो हेतोः अमीषां तत्त्वानां पौर्वापर्यं तत्तत्कारणकार्यभावं न्यूनाधिकं वा परिसंख्यानं च अभीप्सतां वादिनां मध्ये यथा विवक्षया यस्य वक्त्रं प्रवर्तते सत्सर्वं विविक्तं निश्चितं वयं गृह्णीमः सर्वत्र युक्तेः सत्त्वात् ॥ ९ ॥ सामान्यतः चतुर्विंशतितत्त्वानि[1] सन्ति । तत्र अविद्यायुक्तस्य पुरुषस्य जीवस्य आत्मज्ञानं स्वतो न संभवति अन्यतस्तु संभवात् अतोऽन्यः ईश्वरो ज्ञानदो भवितव्य इति षड्विंशतिपक्षः ॥१०॥ अत्र पञ्चविंशतिपक्षे जीवेश्वरयोः अणु अपि वैलक्षण्यं भेदो नास्ति चिद्रूपत्वात् तत् तस्मात् अन्यकल्पना ज्ञानप्रदपरमेश्वरकल्पना अपार्था व्यर्थैव । ज्ञानं कथमिति चेत् प्रकृतेर्गुणः सत्त्वं तस्मात् ज्ञानं जायते एव । सत्त्वात् संजायते ज्ञानम् एवं पञ्चविंशतिपक्षप्रवृत्तिः ॥११॥ गुणानां साम्यावस्था प्रकृतिः । गुणाश्च प्रकृतिरेव नत्वात्मनः ते च स्थित्यादिहेतुभूताः । स्थितिः पालनम् ॥ १२ ॥ सत्त्वं सत्त्ववृत्तिरेव ज्ञानम् । एवमग्रेऽपि योज्यम् । गुणानां व्यतिकरः क्षोभो यस्मात् स ईश्वर एव कालः । स्वभावः प्रकृतेः प्रथमपरिणामः रूपान्तरापत्तिः स च सूत्रमेव क्रियाशक्तिप्रधानं प्रकृतिमहत्तत्त्वयो र्मध्यावस्था । महत्तत्त्वं तु ज्ञानशक्तिप्रधानमित्यनयोर्भेदः ॥१३॥ अथ पूर्वोक्तानि नवैकादशेत्यादितत्त्वानि दर्शयति । व्यक्तं महत्तत्त्वं मे मया ॥ १४ ॥ ज्ञानक्तयः

---

१. पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥

श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः । वाक्प्राण्युपस्थपाय्वङ्घ्रिकर्माण्यङ्गोभयं मनः १५
शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः । गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥१६॥
सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी । सत्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्त ईक्षते ॥१७॥
व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया । लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् ॥१८॥
सप्तैव धातव इति तत्रार्थाः पञ्च खादयः । ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः ॥१९॥
षडित्यत्रापि भूतानि पञ्च षष्ठः परः पूमान् । तैर्युक्त आत्मसम्भूतैः सृष्टवेदं समुपाविशत् २०
चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः । जातानि तैरिदं जातं जन्मावयविनः खलु ॥२१॥
संख्याने सप्तदशके भूतमात्रेन्द्रियाणि च । पञ्च पञ्चैकमनसा आत्मा सप्तदशः स्मृतः ॥२२॥
तद्वत् षोडशसंख्याने आत्मैव मन उच्यते । भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश ॥२३॥
एकादशत्व आत्मासौ महाभूतेन्द्रियाणि च । अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ ॥२४॥
इति नानाप्रसंख्यानं तत्वानामृषिभिः कृतम् । सर्वं न्याय्यं युक्तिमत्वाद् विदुषां किमशोभनम् २५

---

ज्ञानेन्द्रियाणि पञ्च । वागादीनि कर्माणि कर्मेन्द्रियाणि पञ्च । उभयात्मकं ज्ञानकर्मात्मकं मनः एवमेकादश अङ्ग हे उद्धव ॥ १५ ॥ पञ्च दर्शयति । अर्थजातयः विषया भूतसूक्ष्माणि सिद्धयः कर्मेन्द्रियाणां फलानि कार्याणि अतो न तत्त्वान्तराणि एवं पञ्च । तत्र उत्सर्गौ मलत्यागौ पायूपस्थफले ॥ १६ ॥ यद्विवक्षया गायन्तीति यत्पृष्टं तत्तन्मततात्पर्यं दर्शयति । प्रकृतिः अस्य विश्वस्य सर्गादौ गुणैः धत्ते व्यष्टिप्रपञ्चं विधत्ते उपादानकारणत्वात् । अव्यक्तः अपरिणामी पुरुषस्तु निमित्तभूतः सन् केवलमीक्षते अतः परिणामिन्या प्रकृतेः पुरुषो भिन्न इत्यर्थः । कथंभूता प्रकृतिः । कार्याणि षोडशःविकाराः[1] कारणानि महदादीनि[2] सप्त तद्रूपिणी ॥१७॥ प्रकृतेः विकुर्वाणा प्रकृतेः विकारा एते व्यक्तादयो महदादयः धातवः तत्त्वानि पुरुषेक्षया संहता मिलिताः अत एव लब्धवीर्याः सन्तः ब्रह्माण्डं सृजन्ति उत्पादयन्ति । प्रकृतेर्बलात् तामाश्रित्येत्यर्थः । ल्यब्लोपे पञ्चमीयम् ॥ १८ ॥ सप्तैव धातवः तत्त्वानीति मते खादय आकाशादयः पञ्च अर्थाः तत्त्वानि ज्ञानं जीवः परमात्मा च उभयाधारः । आत्मा खादीनां ज्ञानस्य च आधारः अन्तः प्रविश्य धारकः एवं सप्त तत्त्वानि ततः तेभ्य सप्तभ्यः देहेन्द्रियासवः कार्याणि जायन्ते । उपलक्षणमेतत् सर्वं विश्वजातमित्यर्थः ॥ १९ ॥ षडेव तत्त्वानि इत्यत्रापि पक्षे । परः पुमान् ईश्वरः आत्मनः संभूतैः उत्पन्नैः आकाशादिभिः इदं विश्वं सृष्ट्वा नियन्तृत्वेन समुपाविशत् ॥ २० ॥ तत्रापि चत्वारीति पक्षे । अन्नं पृथ्वीति त्रीणि । आत्मनः सकाशात् जातानीति । आत्मा चतुर्थः । तैरेव तत्त्वैः अवयविनः कार्यस्य विश्वस्य जन्म अभूत् ॥२१॥ सप्तदशके संख्याने गणने भूतानि च मात्राणि च इन्द्रियाणि च पञ्च पञ्च एकेन मनसा सह षोडश आत्मा सप्तदशः अत्र द्विरावृत्तोऽपि पञ्चशब्दः त्रिरावृत्तो बोध्यः ॥ २२ ॥ तद्वत् पञ्च पञ्चेत्युक्तवत् । आत्मैव संकल्पयन् मन उच्यते एव षोडश । त्रयोदशपक्षे भूतानि तन्मात्रैरेकीकृतानि पञ्चैव । इन्द्रियाणि पञ्चैव । मनश्च आत्मा च द्विविधः । एवं त्रयोदश ॥ २३ ॥ एकादशत्वे इति पाठः । भूतेन्द्रियाणि पञ्च पञ्च । जीवमनसोरात्मन्यन्तर्भावात् एकादश । नवपक्षे । पञ्च भूतानि मनोबुद्ध्यहङ्काराश्चेत्यष्टौ । पुरुषः ईश्वरश्चेति नव ॥ २४ ॥ प्रसंख्यानं परिगणनं कृतम् ।

---

१. एकादशेन्द्रियाणि पञ्चमहाभूतानि षोडश । २. साहङ्कारपञ्चतन्मात्राणिः ।

उद्धव उवाच

प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ । अन्योन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः ।।२६।।

प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथाऽऽत्मनि । एवं मे पुण्डरीकाक्ष महान्तं संशयं हृदि ।

छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः ।।२७।।

त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः । त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः।२८

श्रीभगवानुवाच

प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ । एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ।।२९।।

ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते ।

वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ।।३०।।

दृग् रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिध्यति यः स्वतः खे ।

आत्मा यदेषामपरो य आद्यः स्वयानुभूत्याखिलसिद्धसिद्धिः ।।३१।।

एवं त्वगादि श्रवणादि चक्षुर्जिह्वादि नासादि च चित्तयुक्तम् ।।३२।।

---

न्याय्यं प्रामाणिकम् ।। २५ ।। प्रकृतिरिति सार्द्धम् । आत्मना जडाजडस्वभावेन विलक्षणौ भिन्नौ किन्तु अन्योन्यापाश्रयत्वात् परस्परसापेक्षत्वात् तयोर्भेदो न दृश्यते । प्रकृतिः पुरुषमपेक्षते पुरुषश्च प्रकृतिं प्रकृतौ तत्कार्ये देहे आत्मा लक्ष्यते तथा आत्मन्येव प्रकृतिश्च तेन विना तस्या अप्रतीतेः ।।२६।। नयनैपुणैः युक्तियुक्तैः । वचोभिः नयस्य तर्कस्य नैपुणं प्राबल्यं येषु तैः । छेत्तुं निवारयितुम् ।।२७।। हि यतः अत्र संसारे जीवाना त्वत्तः त्वत्प्रसादादेव ज्ञानं शक्तितः अविद्यातः ज्ञानप्रमोषः अपहरणं च । मुष स्तेये धातुः । गतिं चेष्टाम् । अपरो न वेद ।। २८ ।। विकल्पः अत्यन्तभेद एष प्रकृतिः देहादिः षड्विकारवान् । पुरुषस्तु आत्मा निर्विकारः । कुतः । एष वैकारिकः विकारवान् सृज्यते इति सर्गः देहादिः गुणव्यतिकरात् गुणक्षोभात् कृतः । क्षुभ संचलने धातुः । गुणसाम्यावस्थायाः प्रकृतेः गुणसंचालनादभूदित्यर्थः ।। २९ ।। अस्य नानात्वं दर्शयति । अङ्ग हे उद्धव । मम माया गुणैः अनेकधा विकल्पं भेदं तद्बुद्धीश्च विधत्ते एव वैकारिकः सर्ग इत्यनुवर्तनीयम् । अनेकविकारवानपि एष सर्गः तावत् त्रिविधः । अन्यत् तृतीयमधिभूतम् ।। ३० ।। त्रैविध्यं विवृणोति । दृगिति । दृक् अध्यात्मं रूपमधिभूतम् । अत्र रन्ध्रे चक्षुर्गोलके प्रविष्टमार्कं वपुरंशोऽधिदैवमस्ति । एतत्त्रयं सापेक्षत्वात् परस्परं सिध्यति कार्यक्षमं भवति यथा चक्षुषा रूपं ज्ञाप्यते तदन्यथानुपपत्त्या चक्षुः सिध्यति तत्प्रवृत्त्यन्यथानुपपत्त्या तदधिष्ठात्री देवता सिध्यति तदधिष्ठानत्वात् चक्षुर्गोलकमित्येवं त्रयं परस्परं सिद्ध्यति । यस्तु खे आकाशे सूर्यः स तु स्वतः सिध्यति निरपेक्षत्वात् । यत् यस्मात् आत्मा एषामध्यात्मादीनामाद्यः कारणभूतः एकरूपोऽभिन्नोऽपि एतेभ्योऽपरो भिन्नश्च । कथंभूतः । स्वस्याऽनुभूत्या स्वप्रकाशस्वरूपेण अखिलसिद्धानां परस्परसापेक्षाणामध्यात्मादीनां सिद्धिः प्रकाशो यस्मात् सः ।। ३१ ।। एवमित्यर्द्धम् । एवं त्वगादिष्वपि त्रैविध्यं ज्ञेयम् । यथा त्वक् इन्द्रियमध्यात्मं स्पर्शोऽधिभूतं वायुरधिदैवम् । श्रोत्रमिन्द्रियमध्यात्मं शब्दोऽधिभूतं दिशोऽधिदैवम् । जिह्वा इन्द्रियमध्यात्मं रसोऽधिभूतमश्विनौ अधिदैवम् । एवमन्तःकरणचतुष्टयमपि त्रिविधं ज्ञेयम् । क्रमेण अध्यात्ममधिभूतम् अधिदैवं च ज्ञेयम् । चित्तं चेतयितव्यं वासुदेवः इति । मनो मन्तव्यं

योऽसो गुणक्षोभकृतो विकारः प्रधान्मूलान्महतः प्रसूतः ।
अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च ॥३३॥
आत्माऽपरिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः ।
व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥३४॥

उद्धव उवाच

त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो । उच्चावचान् यथा देहान् गृह्णन्ति विसृजन्ति च ३५
तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः । न ह्येतत् प्रायशो लोके विद्वांसः सन्ति वञ्चिताः

श्रीभगवानुवाच

मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम् । लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ॥३७॥
ध्यायन्मनोऽनुविषयान् दृष्टान् वानुश्रुतानथ । उद्यत् सीदत् कर्मतन्त्रं स्मृतिस्तदनु शाम्यति॥३८॥
विषयाभिनिवेशेन नात्मानं यत् स्मरेत् पुनः । जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥३९॥

---

चन्द्रः इति बुद्धिः बोद्धव्यं ब्रह्मेति । अहङ्कारोऽहंकर्तव्यं रुद्र इति ॥३२॥ योऽसो अहम् अहङ्कारः स मोहविकल्प-हेतुरित्यन्वयः । कथंभूतः । गुणक्षोभं साम्यत्यागं करोतीति गुणक्षोभकृत् कालस्तस्मात्[1] निमित्तभूतात् महतः महत्तत्त्वात् प्रसूतो विकारः स च त्रिवृत् त्रिविधः वैकारिकः सात्त्विकः । ऐन्द्रियो राजसश्च । कथंभूतात् महतः । प्रधानं प्रकृतिः मूलं कारणं यस्य तस्मात् । 'प्रकृतेर्महान्' इत्युक्तेः । विकल्पो भेदः ॥ ३३ ॥ स कुतो निवर्तते आत्मज्ञानेनेत्याशयेनाह—आत्मेति प्रपञ्चः अस्ति नास्तीतिलक्षणो विवादः आत्मनो यत् अपरिज्ञानं तन्मयः तज्जन्य एव व्यर्थोऽपि जलताडवन्निरर्थकोऽपि[2] पुंसां नैव उपरमेत न निवर्तते इत्यन्वयः । लडर्थे लिङ् । कथंभूतः । भिदार्थनिष्ठः । भिदा विदारणं परमतखण्डनं तदेव अर्थः प्रयोजनं तत्रैव निष्ठा यस्य । कथं-भूतानां पुंसाम् । स्वलोकात् स्वप्रकाशस्वरूपात् मत्तः परावृत्ता विमुखा धीर्येषां तेषां बहिर्मुखानामित्यर्थः॥३४॥ त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः यथा उच्चावचान् उत्कृष्टनिकृष्टान् देहान् गृह्णन्ति त्यजन्ति च तत् जन्ममरणप्रकारं अनात्मभिः अल्पबुद्धिभिः दुर्विभाव्यं दुर्ज्ञेयमतस्त्वं ममाख्याहि ब्रूहीति द्वयोरन्वयः । अत्राल्पार्थे नञ् । 'तदन्यत्वं तदल्पता' इति कारिकोक्तेः । एतत् विद्वांसः ज्ञातारः प्रायशो न सन्ति ये च सन्ति तेऽपि मायया वञ्चिता इत्यर्थः ॥३५॥३६॥ लिङ्गशरीराध्यासेन सर्वं घटते इत्युत्तरमाह मन इति । मनः मनःप्रधानं लिङ्गशरीरमेव लोकात् लोकान्तरं देहात् देहान्तरं प्रति याति । आत्मा जीवोऽन्यः ततो भिन्नोऽपि अध्यासवशात् तत् सूक्ष्मशरीरमनुवर्तते अनुगच्छति । कथंभूतम् । पञ्चभिः पञ्चदशभिर्युतं कर्ममयं कर्मप्रचुरं पञ्चभिरिति भूतसूक्ष्माणामिन्द्रियाणां च उपलक्षणम् । अत्र प्राचुर्ये मयट् । कर्माधीनमित्यर्थः । लोकशब्दोऽत्र देहवाची[3] । सन्दर्भस्तु तदनुवर्तते तदारूढत्वात्तच्चलनेनैव चलतीत्याह ॥ ३७ ॥ कर्मतन्त्रं कर्माधीनं मनः दृष्टान् मर्त्यलोक-स्थान् अनुश्रुतान् देवलोकस्थान् विषयान् ध्यायत् सत् अथ च अनन्तरं तेष्वेव विषयेषु उद्यत् आविर्भवत् पूर्वविषयेषु सीदत् लीयमानं भवति । तदनु तदनन्तरं तस्य स्मृतिः पूर्वपरानुसन्धानं शाम्यति नश्यति ॥३८॥ ततः किमत आह विषयेति । विषयेषु देवयातनादिशरीरेषु अभिनिवेशन अत्यन्तासक्त्या हर्षशोकादिना पुमान् आत्मानं पूर्वदेहं पुनः न स्मरेदिति यत् सा अत्यन्तविस्मृतिरेव जन्तोर्जीवस्य मृत्युरुच्यते न तु देहवत्

---

१. पञ्चम्यन्तम् । २. तस्मात् न पुण्यं न पापं न स्वर्गो न नरकः इत्येवं निष्प्रयोजन इत्यर्थः ।
३. 'लोको भूरादिलोकेषु देहे ज्ञाने जने दृशि' इति निरुक्तिः ।

जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद । विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ॥४०॥
स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ । तत्र पुर्वमिवात्मानमपूर्वं चानुपश्यति ॥४१॥
इन्द्रियायनसृष्टयेदं त्रैविध्यं भाति वस्तुनि । बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद् यथा ॥४२॥
नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च । कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥४३॥
यथार्चिषां स्रोतसां च फलानां वा वनस्पतेः । तथैव सर्वभूतानां वयोऽवस्थादयः कृताः ॥४४॥
सोऽयं दीपोऽर्चिषां यद्वत् स्रोतसां तदिदं जलम् । सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषाम् ४५
मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान् । म्रियते वामरो भ्रान्त्या यथाग्निर्दारुसंयुतः॥४६।
निषेकगर्भजन्मानि बाल्यकौमारयौबनम् । वयोमध्यं जरामृत्युरित्यवस्थास्तनोर्नव ॥४७॥

---

तस्य नाशः । कस्यचित् हेतोरिति प्रारब्धकर्मसमाप्तेरित्यर्थः ॥ ३९ ॥ हे भूरिद । भूरि ज्ञान ददातीति भूरि अज्ञानं द्यति खण्डयतीति वा । पुंसः सर्वभावेन अभेदेन आत्मतया विषयस्य देहस्य स्वीकृतिमेव जन्म प्राहुरित्यन्वयः । तुशब्देन न वस्तुतो जन्म । यथा स्वप्नो मनोरथश्चेति अभिमानमात्रेण जन्ममरणयोः दृष्टान्तद्वयम् । यथा स्वप्नमनोरथशरीरयोरभिमानकरणमेव स्वप्नमनोरथौ भवतः । अत्र 'सर्वोऽपि द्वन्द्वः विभाषयैकवद्भवति इति न्यायेन एकवचनम्' ऊकालोऽज् ह्रस्वदीर्घप्लुतः इति नियमात् पुंस्त्वं च ज्ञेयम् ॥ ४० ॥ दृष्टान्तौ स्पष्टयति । स्वप्नमिति । यथा वर्तमानदेहस्थो जीवः प्राक्तनं स्थूलदेहं न स्मरति एवमसौ पुमान् जीवः वर्तमानस्वप्नस्थो मनोरथस्थो वा प्राक्तनं स्वप्नं मनोरथं च न स्मरति किन्तु पूर्वसिद्धमेवात्मानम पूर्वमिव पश्यति अहं षाड्वार्षिकः साप्तवार्षिक इति । चकारात् पूर्वगृहादिवत् अपूर्वं गृहादिकमपि पश्यति ॥ ४१ ॥ इन्द्रियाणामयनमाश्रयो देहः तस्य सृष्टयैव इदं त्रैविध्यं विश्वतैजसप्राज्ञत्वं उत्तममध्यमाधमत्वं वा वस्तुनि जीवे भाति प्रतीयते एवंभूत आत्मा बाह्याभ्यन्तरभेदहेतुश्च भवति । बाह्यविषयान् शब्दादीन् आन्तरान् सुखदुःखादीश्च पश्यतीत्यर्थः । यथा असज्जनकृत् दुष्टपुत्रोत्पादकः जनः पिता स्वयं समोऽपि पुत्रानुरागतः अरिमित्रोदासीनेषु त्रैविध्यरूपेण भेदहेतुर्भवति तद्वत् ॥४२॥ सूक्ष्मदृष्टयापि जन्ममृत्युस्वरूपं वैराग्यार्थं निरूपयति— अङ्ग हे उद्धव ! भूतानि शरीराणि भवन्ति न भवन्ति च उत्पद्यन्ते नश्यन्ति च कालेन हेतुना तस्य सूक्ष्मत्वात् तत्कृतं भवनमभवनम् उत्पत्तिविनाशश्च न लक्ष्यते ।४३। यथा अर्चिषां ज्वालानां परिणामादिभिः स्रोतसां गत्यादिभिः फलानां रूपादिभिः अवस्थाविशेषाः कालेन कृताः तथैव सर्वभूतानां देहानां वयोऽवस्थादयः कालकृता भवन्ति ॥ ४४ ॥ यथा अर्चिषां ज्वालानां सादृश्यात् सोऽयंदीप इति प्रत्यभिज्ञा यथा च स्रोतसां जलप्रवाहाणां सादृश्यात् तदिदं जलमिति तथा सोऽयं पुमान् बाल इति धीः गीः कथनं च नृणामविवेकिनां मृषा भ्रान्तिमूलो भवति न तु विवेकिनाम् । कथंभूतानाम् । मृषा अस्थिरमायुर्येषां तेषाम् ॥४५॥ वस्तुतस्तु उपाधिसम्बन्धेनैव जीवस्य जन्ममृत्यू भवतः इत्याह । स्वस्य आत्मन कर्मणा बीजेन निमित्तभूतेन अयं पुमान् जीवः मा न जायते न च म्रियते किन्त्वयं भ्रान्त्या देहाध्यासवशात् अजन्मापि जायते अमरोऽपि म्रियते । यथा अग्निः महाभूतरूपेणाकल्पान्तमवस्थितोऽपि काष्ठयोगवियोगाभ्यां जन्मनाशौ प्राप्नोति तद्वत् ॥ ४६ ॥ निषेको वीर्यसेचनं जठरे प्रवेशः[1] । गर्भस्तन्मध्ये वृद्धिः । जन्म बहिर्निष्क्रमणम् । बाल्यकौमारं च पञ्चमाब्दान्तम्[2] । पौगण्डकैशोरमापञ्चदश त् । ततो यौवनमापञ्चाशत् ततो वयोमध्यमाषष्टिवर्षात् । तदुपरि शतान्तं जरा (इयं प्रायश्चित्तावस्था उच्यते) तदुपरि

---

१. शुक्रशोणितयोरेकीभागेन स्थितिर्निषेकः ।

२. कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोरमापञ्चदशात् यौवनं तु ततः परम् ॥ इत्युक्तेः ।

एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः । गुणसङ्गादुपादत्ते क्वचित् कश्चिज्जहाति च ॥४८॥
आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ । न भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः ॥४९॥
तरोर्बीजविपाकाभ्यां यो विद्वाञ्जन्मसंयमौ । तरोर्विलक्षणो द्रष्टा एवं द्रष्टा तनोः पृथक् ॥५०॥
प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् । तत्त्वेन स्पर्शसम्मूढः संसारं प्रतिपद्यते ॥५१॥
सत्त्वसङ्गादृषीन् देवान् रजसाऽसुरमानुषान् । तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥५२॥
नृत्यतो गायतः पश्यन् यथैवानुकरोति तान् । एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्यते ॥५३॥
यथाम्भसा प्रचलता तरवोऽपि चला इव । चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥५४॥
यथा मनोरथधियो विषयानुभवो मृषा । स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः ॥५५॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते । ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥५६॥
तस्मादुद्धव मा भुङ्क्ष्व विषयानसदिन्द्रियैः । आत्माग्रहणनिर्भातं पश्य वैकल्पिकं भ्रमम् ॥५७॥

---

मृत्युः । इत्येवं तनोः नवावस्था उच्यन्ते ॥ ४७ ॥ एताः पूर्वोक्ता अन्यस्य देहस्य तनूः अवस्थाः कश्चित् जीवः गुणसंगात् देहाध्यासात् उपादत्ते गृह्णाति ईश्वरानुग्रहात् जहाति च नासौ अवस्थाद्रष्टा जीवः तदवस्थावान् भवति । कीदृशीः अवस्थाः । मनोरथः मनोवृत्तिः तत आगता मनोरथमयीः ततः आगतः इत्यधिकारे 'मयट् च' इति मयट् टित्वात् ङीप् । उच्चावचाः क्रमागताः ॥४८॥ आत्मनः स्वस्य भवाप्ययौ जन्ममरणे पितृपुत्राभ्यां दृष्टान्ताभ्यामनुमेयौ । पुत्रोत्पत्तिदर्शनात् स्वोत्पत्तिः पितृमरणदर्शनात्स्वमरणं चानुमेयम् । भवाप्ययवतां वस्तूनां देहानामभिज्ञो द्रष्टा द्वयलक्षणः जन्ममरणलक्षणवान् न भवतीत्यर्थः ॥ ४९ ॥ बीजात् तरोः जन्म, विपाकात् अन्त्यपरिणामात् शोषात् तस्य संयमं विनाशं च यो विद्वान् वेत्ति स द्रष्टा तरोर्विलक्षणो भिन्नो यथा भवति एवं तनोर्द्रष्टा जीवोऽपि देहात् पृथक् न तद्धर्मवान् भवतीत्यर्थः ॥ ५० ॥ इत्थं देहाद्भिन्नमात्मानं यो न विविनक्ति स संसरतीत्याह—पञ्चभिः । यः पुमान् अबुधः स्वरूपानभिज्ञः स एवमुक्तप्रकारेण प्रकृतेर्देहात् आत्मानम् अविविच्य अपृथक् कृत्वा संसारं जन्ममरणप्रवाहं प्रतिपद्यते । कुतः । विषयेषु तत्त्वेन परमार्थदृष्ट्या स्पर्शेषु संमूढः आसक्तः । यद्वा । तत्त्वेन तत्त्वविचारेण अविविच्येत्यत्रान्वेति ॥५१॥ कर्मभिः भ्रामितः चालितः तमसा भूतत्वं पिशाचत्वं पशुपक्ष्यादिरूपत्वम् उपलक्षणतया स्थावरत्वं च प्राप्नोति । शेषं स्पष्टम् ॥ ५२ ॥ यथा नृत्यतो गायतश्च जनान् पश्यन्ताननुकरोति एवं बुद्धिगुणान् रागद्वेषादीन् आत्मनि अध्यस्य अनीहोऽपि जीवः गुणैः अनुकार्यते बलात् तत्र प्रवर्त्यते[1] । अनेन दृश्यधर्मो द्रष्टरि स्फुरतीति सूचितम् ॥ ५३ ॥ अम्भसा हेतुभूतेन तीरस्थाः तरवः चलन्त इव दृश्यन्ते । यथा भ्राम्यमाणेन चक्षुषा भूः भ्राम्यतीव दृश्यते एवं बुद्ध्या हेतुना देहधर्मा जन्ममरणादयः आत्मनि प्रतीयन्ते इत्यर्थः । यथा मनोरथधियः तज्जन्यपदार्थाः मृषा यथा च स्वप्नदृष्टाश्च पदार्था मृषा एवंमात्मनो जीवस्य विषयानुभवः संसारोऽपि मृषेत्यन्वयः । हे दाशार्ह उद्धव । दशार्हो नाम कश्चन राजा तद्वंशोद्भवत्वात् दाशार्हः । ॥५४॥५५॥ अर्थे शब्दादिविषये अविद्यमानेऽपि असन्निहितेऽपि संसृतिर्न निवर्तते । कुतः । विषयान् ध्यायतः पुंसः तेषु संग उपजायते । संगत एव संसृतिः । यथा स्वप्ने अनर्थागमः शिरश्छेदादिः सर्पदंशादिः अविद्यमानोऽपि प्रतीयते ।५६। तस्मात् विषयस्यानर्थहेतुत्वात् असद्भिः दुस्तोषैः इन्द्रियैः विषयान् मा भुङ्क्ष्व । कुतः । इमं वैकल्पिकं भ्रमं संसृतिरूपं आत्मनोऽज्ञानेनैव निर्भातं स्फुरितं पश्य न वस्तुतः ॥५७॥ क्षिप्त इति युग्मम् ।

---

१. अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः इति गीतोक्तेः ।

क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथवा । ताडितः संनिबद्धो वा वृत्या वा परिहापितः ॥५८
निष्ठितो मूत्रितो वाज्ञैर्बहुधैवं प्रकम्पितः । श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरेत् ॥५९॥

उद्धव उवाच

यथैवमनुबुध्येयं वद नो वदतां वर । सुदुःसहमिमं मन्ये आत्मन्यसदतिक्रमम् ॥६०॥
विदुषामपि विश्वात्मन् प्रकृतिर्हि बलीयसी । ऋते त्वद्धर्मनिरतान् शान्तांस्ते चरणालयान् ६१

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे द्वाविंशोऽध्यायः ॥२२॥

---

क्षिप्तः भर्त्सितः । प्रलब्धः उपहसितः । असूयितः गुणेष्वारोपितदोषः । वृत्त्या परिहापितः त्याजितः निष्ठितः निष्ठीवनवषयीकृतः । एवमज्ञैः प्रकम्पितः स्वनिष्ठातः चालितः कृच्छ्रं कष्टं गतोऽपि आत्मना विवेकवत्या बुद्धया आत्मानं संसारादुद्धरेत् ॥ ५८ ॥ ५९ ॥ हे वदतां वर असद्भिः कृतमिमम् अतिक्रमम् अपमानादिकं विदुषामपि सुदुःसहं मन्ये किमुत अविदुषाम् अतोऽहं यथा एवं त्वदुक्तम् अनुबुध्येयं सोढुं शक्नुयां तथा नोऽस्मान् वद । न इत्येकत्वे बहुवचनम् अस्मदो द्वयोश्च इति सूत्रात् ॥ ६० ॥ ते शान्तान् भक्तान् ऋते विना विदुषामपि असदतिकमं सुदुःसहं मन्ये इत्यन्वयः । हि यतः प्रकृतिः बलीयसी सा च नोल्लङ्घयितुं शक्यते । प्रकृतिं यान्ति भूतानि । प्रकृतिस्त्वां नियोक्ष्यति इति भगवद्वचनात् । प्रकृतिः स्वभावः ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे द्वाविंशोऽध्यायः ॥२२॥

## अथ त्रयोविंशोऽध्यायः

बादरायणिरुवाच

स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः ।
सभाजयन् भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः ॥ १ ॥

श्रीभगवानुवाच

बार्हस्पत्य स वै नात्र साधुर्वै दुर्जनेरितैः । दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥२॥
न तथा तप्यते विद्धः पुमान् बाणैः सुमर्मगैः । यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥३॥

---

त्रयोविंशेऽपमानादेर्हेतुभूतं मनोरिपुम् ।
सन्निरुध्याद्धियेत्येवं भिक्षुगीतेन वर्ण्यते ॥ १ ॥

इतः परं चतुर्भिरध्यायैस्तिरस्कारसहनोपायानां वर्णनम् । एवमुद्धवेन आशंसितः प्रार्थितः स मुकुन्दः भृत्यवचः सम्मानयन् सन् तम् आबभाषे इत्यन्वयः । कथंभूतः । श्रवणीयं वीर्यं चरितं यस्य । दशार्हो नाम कश्चन राजा तद्वंश्यानां यादवानां मध्ये मुख्यः ॥ १ ॥ हे बार्हस्पत्य बृहस्पतिशिष्य । अत्र लोके स साधुः न नै न वै नास्त्येव नास्त्येव । स कः । यः दुरुक्तैः दुर्वचनैः भिन्नं विदार्ण क्षुभितमात्मानं मनः समाधातुं निरोद्धुमीशः समर्थो भवेत् सः ॥ २ ॥ बाणैः विद्धः पुमान् तथा न तप्यते यथा असतां परुषेषवः कटूक्ति

कथयन्ति महत्पुण्यमितिहासमिहोद्धव । तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥४॥
केनचिद् भिक्षुणा गीतं परिभूतेन दुर्जनैः । स्मरता धृतियुक्तेन विपाकं निजकर्मणाम् ॥५॥
अवन्तिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया । वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ।६।
ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः । शून्यावसथ आत्मापि काले कामैरनर्चितः ।७।
दुःशीलस्य कदर्यस्य द्रुह्यन्ते पुत्रबान्धवाः । दारा दुहितरो भृत्या विषण्णा नाचरन् प्रियम् ।८।
तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः । धर्मकामविहीनस्य चुक्रुधुः पञ्च भागिनः ॥९॥
तदवध्यानविस्रस्तपुण्यस्कन्धस्य भूरिद । अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः ॥१०॥
ज्ञातयो जगृहुः किंचित् किंचिद् दस्यव उद्धव । दैवतः कालतः किंचिद् ब्रह्मबन्धोर्नृपार्थिवात् ११
स एवं द्रविणे नष्टे धर्मकामविवर्जितः । उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥१२॥
तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः । खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत् ॥१३॥
स चाहेदमहो कष्टं वृथाऽऽत्मा मेऽनुतापितः । न धर्माय न कामाय यस्यार्थायास ईदृशः ॥१४॥
प्रायेणार्थाः कदर्याणां न सुखाय कदाचन । इह चात्मोपतापाय मृतस्य नरकाय च ॥१५॥
यशो यशस्विनां शुद्धं श्लाध्या ये गुणिनां गुणाः। लोभःस्वल्पोऽपि तान् हन्ति श्वित्रं रूपमिवेप्सितम्

---

बाणाः मर्मस्थाः सन्तः तुदन्ति व्यथयन्ति । सुमर्मगैः मर्मभेदिभिः ॥ ३ ॥ अत्र विषये वृद्धाः इतिहासं कथयन्ति तं सावधानः सन् त्वं निबोध श्रृणु ॥४॥ परिभूतेन तिरस्कृतेन केनचित् भिक्षुणा । धैर्ययुक्तेन निजकर्मणा विपाकं फलं स्मरता भुञ्जतेत्यर्थः ॥५॥ अवन्तिषु उज्जयिनीप्रान्तेषु आढ्यतमः महाधनी । वार्ता कृष्यादिरूपा वृत्तिः जीविका यस्य । कदर्यः[1] अतीवकृपणः ॥ ६ ॥ शून्यावसथे धर्मकर्महीने गृहे देहे वा आत्मा जीवात्मापि काले भोगावसरे कामैः भोगैः नार्चितः तस्येति कर्तरि षष्ठी ॥७॥ पुत्रादय. भृत्यान्ताः विषण्णाः खिन्नाः सन्तः प्रियं नाचरन् न चक्रुः प्रत्युत तं द्रुह्यन्ते कदाऽयं मरिष्यतीति । कदर्यस्येति शेषे षष्ठी ॥८॥ यक्षाणामिव केवलं रक्षणीयं न तु भोग्यं वित्तं यस्य । पञ्च भागिनः पञ्चयज्ञदेवताः देवर्षिपितृभूतनराख्याः । तस्येति शेषे षष्ठी ॥९॥ तेषां भागिनामवध्यानमनादरः तेन विस्रस्तः नष्टः पुण्यस्कन्धः पुण्यसमूहो यस्य । स्कन्धोऽशे समूहेऽपि । इति कोशः । बह्वायासैः क्लेशपूर्णैः कृष्यादिभिः परिश्रमो यस्मिन् सोऽर्थोऽपि निधनमगच्छत् नाशं प्राप्तः । भूरिदेति उद्धवसम्बोधनं तेन तव कदर्यत्वं नास्तीति सूचितम् । भूरि धनं ददातीति भूरि अज्ञानं द्यति खण्डयतीति वा । दोऽवखण्डने धातुः ॥ १० ॥ दस्यवः चौराः । दैवतः गृहदाहादिना । कालतः निखातधनविस्मृतितः । नरश्च पार्थिवाश्चेति तेषां समाहारो नृपार्थिवं द्वन्द्वश्च्य तस्मात् । ब्रह्मबन्धोः ब्राह्मणाधमस्य सर्वोऽपि अर्थः निधनमगच्छदिति पूर्वेणान्वयः ॥ ११ ॥ दुरत्ययां महतीम् ॥ १२ ॥ नष्टो रा धनं यस्य अत एव तपस्विनः संतप्तस्य । तप सन्तापे धातुः । अश्रुपूर्णकण्ठस्य दीर्घमत्यन्तं ध्यायतः चिन्तयतः तस्य निर्वेदो वैराग्यमभूत् ॥ १३ ॥ मे मया आत्मा देहः । यस्य मम ईदृशः अत्युत्कटः अर्थायास अर्थोपार्जन परिश्रमः स धर्माद्यर्थं नाभूत् वृथैव नष्ट इत्यर्थः ॥ १४ ॥ कदर्याणां मादृशानाम् ॥ १५ ॥ येषां शुद्धं यशः

---

१. 'आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् ।
देवतातिथिभृत्यांश्च स कदर्य इति स्मृतः ।

अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये । नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् १७
स्तेयं हिंसानृतं दम्भः कामः क्रोधः स्मयो मदः । भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च।१८।
एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम् । तस्मादनार्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥१९॥
भिद्यन्ते भ्रातरो दारा पितरः सुहृदस्तथा । एकास्निग्धाः काकिणिना सद्यः सर्वेऽरयःकृताः॥२०॥
अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः । त्यजन्त्याशु स्पृधो घ्नन्ति सहसोत्सृज्य सौहृदम्।२१
लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद् द्विजाग्यताम् । तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम्
स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् । द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि ॥२३॥
देवर्षिपितृभूतानि ज्ञातीन् बन्धूंश्च भागिनः । असंविभज्य चात्मानं यक्षवित्तः पतत्यधः ॥२४॥
व्यर्थयार्थेहया वित्तं प्रमत्तस्य वयो बलम् । कुशला येन सिध्यन्ति जरठः किं नु साधये ॥२५॥
कस्मात् संक्लिश्यते विद्वान् व्यर्थयार्थेहयाऽसकृत् । कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः२६
किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत । मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः ॥२७॥
नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः । येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥२८॥
सोऽहं कालावशेषेण शोषयिष्येऽङ्गमात्मनः । अप्रमत्तोऽखिलस्वार्थे यदि स्यात् सिद्ध आत्मनि२९

---

श्लाघ्याः गुणाश्च तान् स्वल्पोऽपि लोभः हन्ति यथा श्वित्रं श्वेतकुष्ठं ईप्सितं रूपं सौन्दर्यम् ॥ १६ ॥ अर्थस्य साधने सम्पादने तथा सिद्धेऽपि अर्थे तस्य उत्कर्षे वर्धने आयासः श्रमः । रक्षणे उपभोगे च चिन्ता । व्यये त्रासः नाशे च भ्रमः बुद्धिभ्रंशः इति यथायथं योज्यम् । नाशोपभोगयोः समाहारद्वन्द्वं वयम् । नाशे उपभोगे चेत्यर्थः ॥ १७ ॥ स्तेयादयः संस्पर्धान्ता द्वादश । व्यसनानि त्रीणि स्त्रीद्यूतमद्यविषयाणि । एवं पञ्चदश संख्यापूर्तिः । स्मयो गर्वः । मदः परतिरस्कारः । भेदः मिथःकलहोत्पादनम् । संस्पर्धा परोत्कर्षासहनम् । दम्भः परवञ्चनानुरूपवेषधारणम् ॥ १८ ॥ अनर्थं नरकहेतुत्वात् । श्रेयोऽर्थी मुमुक्षुः दूरतः ॥१९॥ भेदवैरस्पर्धां निरूपयति द्वाभ्याम् । एके एकप्राणाश्च ते आस्निग्धा अतिस्नेहिनश्च एते भ्रात्रादयः सुहृदन्ताः काकिणि का मात्रेण सर्वे एव भिद्यन्ते भेदबुद्धयो भवन्ति अरयश्च कृता भवन्ति । विंशतिवराटिका काकिणी कथ्यते। (२० कौड़ी) ॥२०॥ अर्थेनति हेतौ तृतीया । एते भ्रात्रादयः अर्थेन निमित्तेन संरब्धाः क्षुभिताः सन्तः सहसा सौहृदयुत्सृज्य आशु त्यजन्ति घ्नन्ति मारयन्ति च । स्पृधः स्पर्धमानाः ॥२१॥ मानुष्यं जन्म तत्रापि द्विजाग्रयतां ब्राह्मणत्वम् । तत् अनादृत्य उपेक्ष्यये स्वार्थं घ्नन्ति मोक्षं न साधयन्ति ते अशुभां गतिं पश्वादियोनिम् नरकं वा यान्ति ॥२२॥ इमं लोकं मनुष्यदेहं प्राप्य द्रविणे वित्ते कोऽनुषज्जेत् आसक्तिं कुर्यात् न कोऽपीत्यन्वयः । धामनि कारणे । द्वारं साधनम् ॥ २३ ॥ भागिनो भागार्हान् आत्मानं च असंविभज्य असन्तर्प्य यः केवलं यक्षवित्तः रक्षणीयवित्तः स अधो नरके पतति ॥ २४ ॥ व्यर्थया दानभोगशून्यया वयो वलं च गतमिति शेषः । येन वित्तादिना कुशला विवेकिनः सिध्यन्ति मुच्यन्ते । जरठः वृद्धोऽहं किन्नु फलं साधये न किमपि ॥ २५ ॥ कस्मादिति स्वगतं ब्रूते स्वयमेव च उत्तरयति मायया विमोहितः अत एव नूनं संक्लिश्यते इत्यन्वयः ॥ २६ ॥ मृत्युना ग्रस्यमानस्य चतुर्भिः धनादिभिः उत अपि जन्मदैः पञ्चभिः कर्मभिश्च किं प्रयोजनमित्यन्वयः । कर्मणा जायते जन्तुः इत्युक्तेः ॥ २७ ॥ सर्वदेवमयः इति प्राचुर्ये मयट् । येन हरिणा एतां विरक्तिलक्षणाम । निर्वेदो वैराग्यम् आत्मनो मम प्लवः नौकारूपः संसारसिन्धुतरणाय ॥ २८ ॥ यदि स्यात्कालावशेषस्तर्हि तेनैव कालावशेषेण

तत्र मामनुमोदेरन् देवास्त्रिभुवनेश्वराः । मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत् ॥३०॥

इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः । उन्मुच्य हृदयग्रन्थीन् शान्तो भिक्षुरभून्मुनिः॥३१॥

स चचार महीमेतां संयतात्मेन्द्रियानिलः । भिक्षार्थं नगरग्रामानसङ्गोऽलक्षितोऽविशत् ॥३२॥

तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः । दृष्ट्वा पर्यभवन् भद्र बह्वीभिः परिभूतिभिः ॥३३॥

केचित्त्रिवेणुं जगृहुरेके पात्रं कमण्डलुम् । पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन ।
प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः ॥३४॥

अन्नं च भैक्ष्यसम्पन्नं भुञ्जानस्य सरित्तटे । मूत्रयन्ति च पापिष्ठाः ष्ठीवन्त्यस्य च मूर्धनि ।
यतवाचंवाचयन्ति ताडयन्ति न वक्ति चेत् ॥३५॥

तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः । बध्नन्ति रज्ज्वा तं केचिद् बध्यतां बध्यतामिति ॥

क्षिपन्त्येकेऽवजानन्त एष धर्मध्वजः शठः । क्षीणवित्त इमां वृत्तिमग्रहीत् स्वजनोज्झितः ॥३७॥

अहो एष महासारो धृतिमान् गिरिराडिव । मौनेन साधयत्यर्थं बकवत् दृढनिश्चयः ॥३८॥

इत्येके विहसन्त्येनमेके दुर्वातयन्ति च । तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ॥३९॥

एवं स भौतिकं दुःखं दैविकं दैहिकं च यत् । भोक्तव्यमात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत ॥४१॥

परिभूत इमां गाथमगायत नराधमैः । पातयद्भिःस्वधर्मस्थो धृतिमास्थाय सात्त्विकीम् ॥४१॥

---

आत्मनः अङ्गं शोषयिष्ये तपसेति शेषः । कथंभूतः । आत्मनि मनसि संसिद्धः सन्तुष्टः अखिलस्वार्थे मोक्षलक्षणे च अप्रमत्तः सावधानः सन् । कालावशेषेणेति अपवर्गे तृतीया ॥ २९ ॥ तत्र मुक्तिमार्गस्थितौ । माम् अनुमोदेरन् अनुगृह्णन्तु विघ्नं मा कुर्वन्तु । समसाधयत् प्राप्तवान् । मुहूर्तेन[1] ॥ ३० ॥ अभिप्रेत्य निश्चित्य आवन्त्यः अवन्तिवासी स द्विजः हृदयग्रन्थीन् अहन्ताममतालक्षणान् उन्मुच्य परित्यज्य भिक्षुः सन्यासी अभूत् ॥ ३१ ॥ स महीं विचचार । तत्र अलक्षितः सन् भिक्षार्थं नगरग्रामान् अविशदित्यन्वयः । संयता आत्मादयो येन सः । आत्मा मनः अनिलः प्राणः ॥ ३२ ॥ वै एवार्थे । तमेव अवधूतं दृष्ट्वा दुर्जनाः परिभूतिभिः[2] तिरस्कारसाधनैः पर्यभवन् तिरश्चक्रुः । अवधूतं मलिनवेषम् । प्रकृष्टमधिकं वयो यस्य तं प्रवयसं वृद्धम् ॥३३॥ केचिदिति सार्द्धम् त्रिवेणुं त्रिदण्डम् । पात्रं जलपात्रं कमण्डलुमित्यत्रान्वेति । पीठमासनम् । अक्षसूत्रं जपमालाम् । कन्था वस्त्रखण्डनिर्मिता ( गुदड़ी ) चीरं कौपीनम् । आददुः आच्छिद्य जगृहुः ॥ ३४ ॥ भिक्षोः कर्म भैक्ष्यं भिक्षेत्यर्थः तेन सम्पन्नं लब्धमन्नम् ॥ ३५ ॥ यतवाच मिति सार्द्धम् । यतवाचं धृतमौनम् बलात् वाचयन्ति तर्जयन्ति भर्त्सयन्ति । स्तेनः चौरोऽयमतो बध्यतां बध्यतामिति वादिनः सन्तः तं रज्ज्वा बध्नन्तीति योज्यम् ॥ ३६ ॥ अवजानन्तः तिरस्कुर्वन्तः । धर्मध्वजः ध्वजबद्धर्मत्वसूचकत्रिदण्डोपजीवी शठः वञ्चकः । उज्झितः गृहात् निःसारितः । उज्झ उत्सर्गे धातुः ॥ ३७ ॥ अहो इति सार्द्धम् । महासारः महाबलः स्थूलकाय इत्यर्थः । सारो बले स्थिरांशे च इत्यमरः । दुर्वातयन्ति तदुपरि अपानवायुं मुञ्चन्ति ॥३८॥ तमिति अर्द्धम् । क्रीड्यतेऽनेनेति क्रीडनकं क्रीडादिसाधनं शुकादिपक्षिणम् । करणे ल्युट् स्वार्थे कः ॥ ३९ ॥ आधिभौतिकं दुर्जनकृतम् । दैहिकं ज्वरादिजन्यम् आध्यात्मिको । दैविकं शीतोष्णादि जन्यम् आधिदैविकम् । आत्मनो दिष्टं स्वस्य प्रारब्धमेव अतोऽवश्यं भोक्तव्यमेवेति न कस्यापि दोष इत्यबुध्यत ॥ ४० ॥

---

१. मुहूर्तात्सर्वमुत्सृज्य गतवानभयं हरिम् । इत्युक्तेः । २. पाकं पचतीतिवन्निर्देशः ।

द्विज उवाच

नायं जनो मे सुखदुःखहेतुर्न देवतात्मा ग्रहकर्मकालाः ।
मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद् यत् ॥४२॥
मनो गुणान् वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि ।
शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवन्ति ॥४३॥
अनीह आत्मा मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे ।
मनः स्वलिङ्गं परिगृह्य कामान् जुषन् निबद्धो गुणसङ्गतोऽसौ ॥४४॥
दानं स्वधर्मो नियमो यमश्च श्रुतं च कर्माणि च सद्व्रतानि ।
सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः ॥४५॥
समाहितं यस्य मनः प्रशान्तं दानादिभिः किं वद तस्य कृत्यम् ।
असंयतं यस्य मनो विनश्यद् दानादिभिश्चेदपरं किमेभिः ॥४६॥
मनोवशेऽन्ये ह्यभवन् स्म देवा मनश्च नान्यस्य वशं समेति ।
भीष्मो हि देवः सहसः सहीयान् युञ्ज्याद् वशे तं स हि देवदेवः ॥४७॥

---

स्वधर्मात् पातयद्भिः नराधमैः परिभूतोऽपि धृतिमास्थाय गाथामगायतेत्यन्वयः । स्वपरोपदेशमयं वाक्यं गाथा इति दीपिनी । इयमेव गाथा अष्टादशश्लोकी भिक्षुगीतानाम्ना व्यवह्रियते ॥ ४१ ॥ जनादयः षडपि सुखदुःखयो हेतवो न भवन्ति परं केवलं मन एव कारणं वदन्तीत्यन्वय. । यतः मनः कर्तृ संसारचक्रं परिवर्तयेत् । लडर्थे लिङ् परिवर्तयति भ्रामयतीत्यर्थः ॥ ४२ ॥ बलीयः दुर्जयं मनः गुणा न गुणवृत्तीः रागादिरूपाः सृजते जीवस्य सात्त्विकादिभावे निमित्तं भवतीत्यर्थः । ततः तेभ्यः गुणेभ्यः क्रमेण सात्त्विकानि तामसानि राजसानि च पुण्यपापभिश्रितानि कर्माणि भवन्ति तेभ्यश्च कर्मभ्यः सवर्णाः तत्तत्कर्मानुरूपाः सृतयः देवतिर्यङ्नरादियोनयो भवन्ति । विलक्षणानि परस्परविरुद्धानि ॥ ४३ ॥ तर्हि मनस एव संसारः स्यान्नत्वात्मन इत्याह । समीहता चेष्टमानेन संकल्पविकल्पौ कुर्वता मनसा सह नियन्तृत्वेन वर्तमानो मत्सख आत्मा ईश्वरः उद्विचष्टे उत्कृष्टसाक्षित्वेन पश्यति न तु सुखदुःखभाक् भवति । कीदृशः । अनीहः तच्चेष्टाशून्यः यतो हिरण्मय चित्प्रकाशबहुलः विद्याशक्तिप्रधानः । आत्मा इत्यावृत्या अन्वेति असो[1] द्वितीय आत्मा जीवात्मा तु स्वलिङ्गं संसारकारणभूतम् । स्वस्मिन् आत्मनिलिङ्गयति द्योतयति संसारमिति स्वलिङ्गम् । मनः परिगृह्य आत्मत्वेन स्वीकृत्य गुणसंगात् कामान् विषयान् जुषन् सेवमानो निबद्धो भवति मनोऽध्यासात् जीवस्यैव संसारः न तु मनसः तस्य जडत्वेन सुखदुःखानुभवात् ॥ ४४ ॥ दानादयः सर्वे मनोनिग्रहलक्षण एव अन्तः अन्तिमफलं येषां ते तथाभूताः सन्ति । यतः मनसः समाधिः निग्रह एव परः श्रेष्ठः योगः भगवत्प्राप्त्युपायः । नियमः शौचादिः । यमोऽहिंसादिः । श्रुतं पुराणश्रवणम् । सद्व्रतमेकादशी ॥ ४५ ॥ यस्य मनः समाहितं वशीभूतं शान्तं चेत् तस्य दानादिभिः किं कृत्यं किं प्रयोजनमिति वद न किमपि दानादिफलस्य सिद्धत्वात् इति परं प्रत्युपदिशन् स्वयंमुत्तरयति । यस्य मनः असंयतं विक्षिप्तं विनश्यत् आलस्यत्वात्कार्याक्षमं च तस्य दानादिभिः अपरम् उत्तमं साधनं किं न किमपि तदेव कर्तव्यमित्यर्थः ॥४६॥ अन्यदेवा इन्द्रियाणि तदधिष्ठातारो वा मनोवशे अभवन् । भीष्मो भयङ्करो देवः । सहसः[1] बलवतोऽपि सहीयान् बलवान् । यस्तं वशे युञ्ज्यात् कुर्यात् सं देवानामपि देवः आदरणीयो भवति ॥४७॥

---

१. 'सहःस्या द्बलवद्बले इति धरणिः ।

तं दुर्जयं शत्रुमसह्यवेगमरुन्तुदं तन्न विजित्य केचित् ।
कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून् विमूढाः ॥४८॥
देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः ।
एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति ॥४९॥
जनस्तु हेतुः सुखदुःखयोश्चेत् किमात्मनश्चात्र ह भौमयोस्तत् ।
जिह्वां क्वचित् संदशति स्वदद्भिश्चद्वेदनायां कतमाय कुप्येत् ॥५०॥
दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकारयोस्तत् ।
यदङ्गमङ्गेन निहन्यते क्वचित् क्रुध्येत कस्मै पुरुषः स्वदेहे ॥५१॥
आत्मा यदि स्यात् सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः ।
न ह्यात्मनोऽन्यत् यदि तन्मृषा स्यात् क्रुध्येत कस्मान्न सुखं न दुःखम् ॥५२॥
ग्रहा निमित्तं सुखदुःखयोश्चेत् किमात्मनोऽजस्य जनस्य ते वै ।
ग्रहैर्ग्रहस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥५३॥

---

तं मनोरूपं शत्रुम् अविजित्य केचित् अत्र मर्त्यैः सह असद्विग्रहं शुष्कवैरं कुर्वन्ति तत् तस्मात् ते विमूढा इत्यन्वयः विरोधमाह-मित्रादीन् । कथंभूतम् । असह्या रागद्वेषादयो वेगा यस्य । पुनश्च । अरुं मर्महृदयं तुदति व्यथयतीति अरुन्तुदं मर्मभेदिनम् । असंश्वासौ विग्रहः इत्यत्र कर्मधारयसमासः ॥४८॥ मनोमात्रं[२] मनःकल्पितमिमं स्वदेहम् अहमिति गृहीत्वा स्वीकृत्य पुत्रादिदेहं ममेति स्वीकृत्य मनुष्याः एषोऽहमन्योऽयमिति भ्रमेण तमसि अज्ञानकार्ये संसारे भ्रमन्ति यातायातं लभन्ते न च मुच्यन्ते इत्यर्थः । अन्धा विवेकरहिता धीर्येषां ते । दुःशब्दो निषेधार्थकः अनन्तपारे इत्यर्थः ॥ ४९ ॥ जनादीनां षण्णां सुखदुःखयोरकारणत्वं दर्शयति जनस्त्विति । जायते इति जनो देहः । अत्रापि पक्षे आत्मनः किं न किमपि सुखदुःखयोः कर्मत्वं कर्तृत्वं च । ह निश्चितमेतत् । यत [illegible]मयमपि भौमयोः भूविकारयोः देहयोरेव न त्वात्मनः अमूर्तस्य अक्रियस्य च आत्मनः हननादिषु कर्मत्वकर्तृत्वानुपपत्तेः । तथापि दुःखम् आत्मपर्यवसाय्येवेति चेत्तत्राह यदा क्वचित् स्वदन्तैः जिह्वां सन्दशति तदा कतमाय कुप्येत । भूविकारैर्दन्तैः भूविकारभूता जिह्वा दष्टा तदुभयं भूविकारयोरेव । दद्भ्यः कोपे ताडने वा स्वस्यैव पीडा स्यात् । अतो देहाध्यासेन मनस एव सुखदुःखादिहेतुत्वमायाति ॥ ५० ॥ यदि काचित् इन्द्रियाधिष्ठातृदेवता अस्तु अत्रापि पक्षे आत्मनः किं न किमपि यतः तत् कर्तृत्वादिकं सत्त्वगुणविकारभूतयो इन्द्रवह्निदेवयोरेव । अत्र दृष्टान्तः—यदा अङ्गेन हस्तादिना अङ्गं मुखादि निहन्यते चेत् पुरुषः कस्मै क्रुध्येत् । हस्तदेवता इन्द्रः मुखदेवता अग्निः तयोरेव दुःखादिसंभवः न त्वात्मनः ॥ ५१ ॥ यदि आत्मा जीवात्मैव हेतुश्चेत् तर्हि अन्यतः किम् । अन्यः कथं दूषणीयः । यतोऽन्यस्मै कुप्येत् यतो निजस्वभाव एव सः सुखदुःखहेतुः न तु अन्यस्य उचितं चैतत् आत्मनः अन्यत् किञ्चित् नास्ति यदि प्रतीयेत तर्हि तन्मृषैव कस्मात् कुप्येत अतो निमित्ताभावात् न सुखं न दुखं चेत्यर्थः ॥ ५२ ॥ यदि ग्रहाः निमित्तम् अत्रापि पक्षे अजस्य जन्मशून्यस्य आत्मनः किम् । यतस्ते ग्रहा द्वादशाष्टमराशिस्थाः जनस्य देहस्यैव सुखदुःखयोर्निमित्तं भवन्ति । यथा ग्रहैः अन्तरिक्षस्थैः ग्रहैः तत्रस्थस्यैव पीडां वदन्ति दैवज्ञाः । पुरुषः जीवस्तु ततो ग्रहात् देहाच्च अन्यः

---

२. मनसो मात्रा वृत्तय इन्द्रियादयो यस्मिन् तम् ।

कर्मास्तु हेतुः सुखदुःखयोश्चेत् किमात्मनस्तद्धि जडाजडत्वे।
देहस्त्वचित् पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्ममूलम् ॥५४॥
कालस्तु हेतुः सुखदुःखयोश्चेत् किमात्मनस्तत्र तदात्मकोऽसौ।
नाग्नेर्हि तापो न हिमस्य तत् स्यात् क्रुध्येत् कस्मै न परस्य द्वन्द्वम् ॥५५॥
न केनचित् क्वापि कथंचनास्य द्वन्द्वोपरागः परतः परस्य।
यथाहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥५६॥
एतां स आस्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः।
अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥५७॥

श्रीभगवानुवाच

निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम्।
निराकृतोऽसद्भिरपि स्वधर्मादकम्पितोऽमूं मुनिराह गाथाम् ॥५८॥
सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः। मित्रोदासीनरिपवः संसारस्तमसः कृतः ॥५९॥

---

अतः कस्मै क्रुध्येत् ॥५३॥ यदि कर्म हेतुः स्यात् अत्रापि पक्षे आत्मनः किम् हि यतः कर्म तज्जनितं सुखादिकं च सर्वमेकस्य जडचेतनात्मकत्वे सत्येव स्यात्। जडत्वाद्विकारित्वोपपत्तेः अजडत्वात् हिताहितानुसन्धानतः प्रवृत्तिसंभवात् देहस्तु अचित् जडः तस्यानुसन्धानाभावात्। पुरुषः आत्मा तु सुपर्णः शुद्धज्ञानस्वरूपः तस्य विकारित्वासंभवात् सुखदुःखादि तन्मूलभूतं कर्मैव नास्ति अतः केन निमित्तेन कस्मै क्रुध्येत् ॥ ५४ ॥ कालश्चेत् हेतुः तत्रापि पक्षे आत्मनः किम्। यतोऽसौ तदात्मकः आत्मांशभूतः एव स्वांशात् तस्य पीडा न संभवतीत्यत्र दृष्टान्तद्वयम्। यथा स्वांशभूतात् विस्फुलिङ्गादेरग्नेस्तापो न संभवति। यथा च स्वांशात् हिमकणात् हिमस्य तत् शैत्यं न भवति तथा देहात् परस्य स्वरूपतो मायातीतस्य जीवात्मनः स्वांशभूतात् कालात् द्वन्द्वं सुखदुःखादिकं नास्तीति षडेते हेतवो निराकृताः। एवं सुखदुःखयोः मुख्यं कारणं मन एवेति निष्कर्षः ॥ ५५ ॥ फलितार्थमाह—नेति परतः प्रकृतेः परस्य अस्य आत्मनः क्वापि देशे काले च कथञ्चन केनापि प्रकारेण द्वन्द्वोपरागः सुखदुःखादिसम्बन्धो नास्ति। केनचित् कर्त्रा करणेन वा। यथा अहमोऽहङ्कारस्य द्वन्द्वसम्बन्धः तथा आत्मनो न स्यादित्वन्वयः। अहङ्कारनिमित्तोऽसौ बन्धः न वास्तव इत्यर्थः। कथंभूतस्य। संसृतिं संसारबन्धं निरूपयितुं शीलमस्येति एवं प्रबुद्धो विवेकी भूतैः प्राणिभिः कृत्वा न बिभेति ॥ ५६ ॥ सोऽहम् एतां परात्मनिष्ठां भगवन्निष्ठाम् आस्थाय आश्रित्य मुकुन्दस्य अङ्घ्रिनिषेवयैव तमः संसाराख्यं तरिष्यामीत्यन्वयः। कीदृशीम्। पूर्वतमैः चिरन्तनैः महर्षिभिः सनकादिभिः अध्यासितां सम्यगनुष्ठिताम्। यद्वा। परमात्मनः सम्बन्धिनीं निष्ठां विचारलक्षणाम्। अत्र स आस्थाय इत्येव स्वामिसम्मतः पाठः न तु समास्थायेति दीपिनी। दुरन्तेत्यत्र दुःशब्दो निषेधार्थकः अनन्तेति ॥ ५७ ॥ इत्थं नष्टद्रविणः गां पृथ्वीं पर्यटन् असद्भिः तिरस्कृतोऽपि स्वधर्मात् अकम्पितः अप्रचलितः सन् मुनिः अमूं गाथामाहेत्यन्वयः। कथंभूतः। गतक्लमः खेदरहितः। किं कृत्वा। निर्विद्य विषयभोगात् विरज्य गृहात् प्रव्रज्य संन्यस्य च ॥ ५८ ॥ नान्यः मनसोऽन्यो नास्ति। यतः मित्रादयः। कल्पिता एव किं बहुना सर्वोऽपि प्रपञ्चः तमसोऽज्ञानतः कृतः आत्मनो मनसो विभ्रमः[1] एव न तात्त्विकः ॥५९॥ उक्तं

---

१. यथोक्तं योगवासिष्ठे—
दीर्घस्वप्नमिमं विद्धि दीर्घं वा चित्तविभ्रमम्। दीर्घं वापि मनोराज्यं संसारं रघुनन्दन ॥ १ ॥

तस्मात् सर्वात्मना तात निगृहाण मनो धिया । मय्यावेशितया युक्त एतावान् योगसंग्रहः ।।६०।।
य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः । धारयञ्छ्रावयञ्छृण्वन् द्वन्द्वैर्नैवाभिभूयते ।।६१।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे त्रयोविंशोऽध्यायः ।।२३।।

---

द्वन्द्वसहनोपायप्रकरणमुपसंहरति तस्मादिति । तस्मात् संसारदुःखस्य मनोजन्यत्वात् धिया युक्तः सर्वात्मना सर्वप्रयत्नेन मनो निगृहाण समाहितं कुरु । एतावान् योगसंग्रहः योगनिष्कर्षः । नातः परं योगस्य फलमस्तीत्यर्थः । मय्यावेशितया मन्निष्ठया ।।६०।। ब्रह्मणि निष्ठा यया तामेतां गाथामिति शेषः । धारयन् समाहितः स्थिरचित्तः सन् यः शृण्वन् भवेत् स द्वन्द्वैः सुखदुःखादिभिः नाभिभूयते मुक्तो भवतीत्यर्थः ।। ६१ ।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां त्रयोविंशोऽध्यायः ।।२३।।

## अथ चतुर्विंशोऽध्यायः

### श्रीभगवानुवाच

अथ ते सम्प्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम् । यद् विज्ञाय पुमान् सद्यो जह्याद् वैकल्पिकं भ्रमम्
आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम् । यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ।।२।।
तन्मायाफलरूपेण केवलं निर्विकल्पितम् । वाङ्मनोऽगोचरं सत्यं द्विधा समभवद् बृहत् ।।३।।
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका । ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ।।४।।
तमो रजः सत्त्वमिति प्रकृतेरभवन् गुणाः । मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ।।५।।

---

चतुर्विंशे स्वभक्तानां शोकमोहनिवृत्तये ।
भावानित्यत्वबोधेन पुनः सांख्यं निरूप्यते ।। १ ।।

अथो शब्दः कार्त्स्न्ये पूर्वैः कपिलादिभिः निर्णीतं सांख्यं सांख्यशास्त्रोक्तं यथार्थज्ञानं ते तुभ्यं वक्ष्यामि । विकल्पो भेदः देहाध्यासः तज्जन्यं भ्रमम् अहंममाभिलक्षणं जह्यात् ।।१।। ज्ञानं द्रष्टा जीवः तेन दृश्यः कृत्स्नोऽप्यर्थः प्रपञ्चः अविकल्पितं भेदशून्यम् एकं ब्रह्मैव आसीत् । कदा अयुगे युगेभ्यः पूर्वं प्रलये । आदौ यत् कृतयुगं तस्मिंश्च अन्यदापि यदा विवेकनिपुणाः पुरुषा भवन्ति तदापि एकमेवेत्यन्वयः । निर्विकल्पितं भेदशून्यं केवलमेकं तत् बृहत् ब्रह्मैव वाङ्मनोगोचरं यथा भवति तथा द्विधा समभवदित्यन्वयः । केन रूपेण । माया प्रकृतिः फलं पुरुषस्तद्रूपेण ।।३।। तयोः मायाफलयोर्मध्ये एकतरोऽर्थः मायारूपः प्रकृतिः सा च उभयात्मिका कार्यकारणरूपिणी । अन्यतमो भावोऽर्थः ज्ञानं स च पुरुषो जीवः ।। ४ ।। मया कालरूपेण प्रक्षोभ्यमाणायाः प्रकृतेः सकाशात् त्रयो गुणा अभवन्नित्यन्वयः । पुरुषस्य जीवस्य अनुमतेन प्राक्तनकर्मानुसारेण सृष्टेर्जीवादृष्टप्रयुक्तत्वात् ।। ५ ।। तेभ्यः गुणेभ्यः सूत्रं क्रियाशक्तिप्रधानं सूक्ष्मरूपं तेन संयुतो महान् महत्तत्त्वं ज्ञानशक्तिप्रधानम् । एकमेव तत्त्वं द्विधोच्यते न तु तत्त्वद्वयम् । विकुर्वतः ततो महत्तत्त्वात् अहङ्कारो जातः । यो विमोहनः जीवस्य भ्रमहेतुः

तेभ्यः समभवत् सूत्रं महान् सूत्रेण संयुतः । ततो विकुर्वतो जातोऽहंकारो यो विमोहनः ॥६॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् । तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥७॥
अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च । तैजसाद् देवता आसन्नेकादश च वैकृतात् ॥८॥
मया संचोदिता भावाः सर्वे संहत्यकारिणः । अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ॥९॥
तस्मिन्नहं समभवमण्डे सलिलसंस्थितौ । मम नाभ्यामभूत् पद्मं विश्वाख्यं तत्र चात्मभूः ॥१०॥
सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् । लोकान् सपालान् विश्वात्मा भूर्भुवः स्वरिति त्रिधा ॥
देवानामोक आसीत् स्वर्भूतानां च भुवः पदम् । मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात् परम्
अधोऽसुराणां नागानां भूमेरोकोऽसृजत् प्रभुः । त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् १३
योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः । महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥१४॥
मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् । गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥१५॥
अणुर्बृहत् कृशः स्थूलो यो यो भावः प्रसिध्यति । सर्वोऽप्युभयसंयुक्तः प्रकृत्या पुरुषेण च ॥१६॥
यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सन् । विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ।१७।

---

देहाध्यासकरत्वात् ॥६॥ वैकारिकः सात्त्विकः तैजसो राजसः । अहम् अहङ्कारः त्रिवृत् त्रिविधः त्रिभिः रूपैः वर्तते इति त्रिवृत् । मनःशब्दः उपलक्षणं देवानामपि । स्वतो जडोऽपि चिदाभासग्राहकत्वेन जीवोपाधित्वात् चिन्मयोऽपि उभयग्रन्थिरूप ।७। तन्मात्रिकात् शब्दादितन्मात्रकारणात् तामसाहङ्कारात् अर्थः महाभूतरूपः जज्ञे । तैजसात् राजसाहङ्कारात् दशेन्द्रियाणि वैकृतात् सात्त्विकाहङ्कारच्च एकादशदेवताश्च[1] अभवन् चकारात् मनश्च अभूत् ॥ ८ ॥ मया चिद्रूपेण चोदिता दत्तसामर्थ्याः भावा महदादयः संहत्य मिलित्वा कारिणः[2] कार्यकरणे समर्थाः सन्तः मम आयतनं क्रीडास्थानम् अण्डमुत्पादयामासुः ॥९॥ तस्मिन् अण्डे अहं नारायणरूपेण अभवम् । विश्वाख्यं लोककारणभूतम् पद्ममभूत् । तत्र पद्मे आत्मभूः ब्रह्मा अभूत् । आत्मा श्रीनारायणः तस्मात् भवतीति तच्छब्दार्थः ॥ १० ॥ स ब्रह्मा रजसा युक्तः मदनुग्रहात् तपसा त्रिधा लोकान् असृजत् तानाह-भुवोऽन्तरिक्ष-लोकः । विश्वात्मा विश्वस्रष्टा । भूरादित्रयमव्ययम् ॥११॥ स्वः स्वर्गलोकः देवानामोकः स्थानमासीत् । भूतानां प्रेतादीनां भुवः अन्तरिक्षलोकः । सिद्धानां भृग्वादीनां त्रितयात् लोकत्रयात् परं महर्जनादिकं पदम् स्थानम्॥१२॥ प्रभुः असुराणामोकः स्थानं भूमेरधस्तात् अतलादिकमसृजत् । कर्मणां कर्मकर्तॄणाम् इमा गतयः प्राप्यफलानि भवन्ति ॥१३॥ योगिनां तपस्विनां संन्यासिनां च महरादिसत्यन्ता अमला गतयः फलानि । मद्गतिः वैकुण्ठलोकः ॥ १४ ॥ धात्रा कर्मफलप्रदेन मया हेतुभूतेन इदं सृष्टं जगत् प्राणिजातम् एतस्मिन् संसारे उन्मज्जति उत्तम-गतिं प्राप्नोति निमज्जति अधोगतिं च । दधाति कर्मफलमिति धाता । गुणानां प्रवाहो यस्मिन् । गुणैः प्रोह्यते संचाल्यते वा गुणप्रवाहः संसारः ॥१५॥ यो यो भावः कार्यभूतः पदार्थः प्रसिद्धो वर्तते ॥ १६ ॥ यस्य कार्यस्य आदिः कारणम् अन्तो लयस्थानं तस्य मध्यं मध्यावस्थापि स एव वै प्रसिद्धं मृत्सुवर्णादिषु । अत एव अव्य-भिचारित्वात् स एव सन् सत्यः नेतरः सृष्ट्यादिः स च व्यवहारार्थं एव । यथा तैजसा कटककुण्डलादयः ।

---

१. दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः चन्द्रश्च ।

२. आवश्यके णिनिः ।

यदुपादाय पूर्वस्तु भावो विकुरुतेऽपरम् । आदिरन्तो यदा यस्य तत् सत्यमभिधीयते ॥१८॥
प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥१९॥
सर्गः प्रवर्तते तावत् पौर्वापर्येण नित्यशः । महान् गुणविसर्गार्थः स्थित्यन्तो यावदीक्षणम् ॥२०॥
विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः । पञ्चत्वाय विशेषाय कल्पते भुवनैः सह ॥२१॥
अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते । धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥२२॥
अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे । लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ॥२३॥
रूपं वायौ स च स्पर्शे लीयते सोऽपि चाम्बरे । अम्बरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु ।२४।
योनिर्वैकारिके सौम्य लीयते मनसीश्वरे । शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥२५॥
स लीयते महान् स्वेषु गुणेषु गुणवत्तमः । तेऽव्यक्ते सम्प्रलीयन्ते तत् काले लीयतेऽव्यये ॥२६॥
कालो मायामये जीवे जीव आत्मनि मय्यजे । आत्मा केवल आत्मस्थो विकल्पापायलक्षणः २७

---

सुवर्णात् न पृथक् । यथा पार्थिवाः घटशरावादयश्च पृथिव्या न पृथक् ॥१७॥ यत् रूपमुपादाय उपादानकारणतया स्वीकृत्य पूर्वः कारणरूपः महदादिर्भावः अपरम् अहङ्कारादिकं भावं विकुरुते सृजति । यथा पिण्डो मृदमुपादाय स्वयं निमित्तभूतो घटं सृजति तद्वत् स एव सन्निविः पूर्वेण योज्यम् । यत् यदा यस्य आदिः अन्तश्च भवति तदा तत्सत्यमभिधीयते ।१८। अस्य सतः कार्यस्य उपादानं या प्रकृतिः प्रसिद्धा यश्च आधारः अधिष्ठाता परः पुरुषः । गुणक्षोभेण अभिव्यञ्जकः अभिव्यक्तिकरः कालो[1] निमित्तं तत् त्रितयं ब्रह्मरूपोऽहमेव प्रकृतेर्मच्छक्तित्वात् पुरुषस्य मदंशत्वात् कालस्य मच्चेष्टारूपत्वात् त्रयोऽप्यहमेव ॥ १९ ॥ यावत् ईक्षणं तावत् पौर्वापर्येण पितृपुत्रादिक्रमेण सर्गः प्रवर्तते इत्यन्वयः । नित्यशः अविच्छेदेन महान् अतिविस्तृतः किमर्थं प्रवर्तते । गुणेषु गुणकार्येषु देहेषु विविधतया सृज्यते इति विसर्गो जीवः तदर्थः तद्भोगप्रयोजनकः । किंपर्यन्तः । यावत् स्थिते जगन्मर्यादाया अन्तो विनाशः । सोऽपि किमवधिकः । यावत् परमेश्वरस्य ईक्षणं संकल्पः तावत् ॥२०॥ प्रलयं निरूपयति । विराट् ब्रह्माण्डं मया कालात्मना आसाद्यमानः आकृष्यमाणः भुवनैः सह पञ्चत्वाय विनाशाय कल्पते । पञ्चत्वं विवृणोति । विशेषाय विभागाय ऐक्यं त्यक्त्वा पृथक् पृथक् भावाय । पञ्चानां भूतानां भावाय पृथक् भावाय । पञ्चानां भूतानां भावः पृथक् भावः पञ्चत्वमिति तच्छब्दार्थः । कथंभूतो विराट् । लोकानां कल्पाः सृष्टिप्रलया विविधाः कल्प्यन्ते यस्मिन् । यद्वा । पञ्चत्वरूपो यो विशेषः विभागस्तस्मै तं प्राप्तुं कल्पते समर्थो भवति । कृपू सामर्थ्ये धातुः ॥ २१ ॥ मर्त्यं शरीरम् अन्ने प्रलीयते अन्नाभावे शरीरं विलीयते इत्यर्थः । धानासु बीजेषु । धाना भूमौ प्रलीयन्ते उप्ता न प्ररोहन्तीत्यर्थः ॥२२॥ स्वगुणे स्वकारणे तन्मात्रे ॥२३॥ स च वायुः । सोऽपि स्पर्शोऽपि अम्बरे आकाशे । स्वयोनिषु स्वयोनौ स्वकारणे राजसाऽहङ्कारे । तस्यैकत्वेऽपि नानावृत्तित्वात् बहुवचनम् ॥ २४ ॥ योनिः राजसाऽहङ्कारो महति महत्तत्त्वे । प्रभुः समनोदेवगणो वैकारिके सात्त्विकाऽहङ्कारे लीयते एवमीश्वरे नियन्तरि मनसि लीने सति शब्दः शब्दतन्मात्रं भूतादि तामसाहङ्कारमप्येति स च भूतादिः त्रिविधोऽपि अहङ्कारो महति अप्येति लीयते । प्रभुः समर्थः ॥२५॥ स महान् स्वेषु स्वकारणेषु गुणेषु लीयते । स च ज्ञानक्रियाशक्तिमत्वात् गुणवत्तमः । ते गुणाः अव्यक्ते प्रकृतौ लीयन्ते साम्यावस्थां प्राप्नुवन्ति । तत् अव्यक्तं काले सर्वस्य कालाधीनत्वात् तनेकीभूय अवतिष्ठते । अव्यये उपरतव्यापारे ॥ २६ ॥ कालो मायामये मायोपाधौ जीवे लीयते इति पूर्वस्यानुषङ्गः । स जीवः आत्मनि परमात्मनि अजे मयि लीयते । केवलः

---

१. 'प्रलयसर्गयोः ज्ञानस्य संकोचविकासकरः ।

एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः। मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥२८॥

एष सांख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः। प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥२९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे चतुर्विंशोऽध्यायः ॥२४॥

---

निरुपाधिकस्वरूपस्य एव विराजते। कथंभूतः। विकल्पाभ्यां सृष्टिप्रलयाभ्यां लक्ष्यते प्रतीयते जगतः अधिष्ठानत्वेन अवधित्वेन च ॥ २७ ॥ एवमन्वीक्षमाणस्य विचारयतः पुंसः वैकल्पिकः भेदनिमित्तो भ्रमः देहाध्यासलक्षणः कथं स्यात् जातो वा कथं हृदि तिष्ठेदित्यन्वयः। अर्कोदये सति यथा व्योम्नि तमो न तिष्ठति तथेति ॥ २८ ॥ उपसंहरति—सांख्यस्य आत्मानात्मविवेकस्य विधिः प्रकारश्च मया प्रोक्तः। संशया नामसंभावनादीनां ग्रन्थेश्च अहङ्कारस्य च भेदनः निवर्तकः। प्रतिलोमेन संहारः अनुलोमेन सृष्टिः। परावरदृशा सर्वज्ञेन भूतभविष्यज्ज्ञेन वा ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां चतुर्विंशोऽध्यायः ॥ २४ ॥

## अथ पञ्चविंशोऽध्यायः

### श्रीभगवानुवाच

गुणानामसमिश्राणां पुमान् येन यथा भवेत्। तन्मे पुरुषवर्येदमुपधारय शंसतः ॥१॥

शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः। तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः

काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदा सुखम्। मदोत्साहो यशःप्रीतिर्हास्यं वीर्यं बलोद्यमः॥३॥

क्रोधो लोभोऽनृतं हिंसा याच्ञा दम्भः क्लमः कलिः। शोकमोहौ विषादार्ती निद्राऽऽशा भीरनुद्यमः

सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः। वृत्तयो वर्णितप्रायाः संनिपातमथो शृणु ॥५॥

---

पञ्चविंशे गुणातीतस्वरूपानन्दलब्धये।
सत्त्वादिगुणवृत्तीनां भेदास्तत्त्याग उच्यते ॥ १ ॥

हे पुरुषवर्य! असमिश्राणां विभक्तानां गुणानां मध्ये येन गुणेन पुमान् यथा यादृशो भवेत् तदिदं शंसतः कथयत मत्तः सकाशात् त्वम् उपधारय शृणु ॥ १ ॥ तत्र सत्त्ववृत्तीराह शम इति। शमो मनोनिग्रहः। दम इन्द्रियाणाम्। तितिक्षा सहनशीलता। त्यागो व्ययशीलता अस्पृहा वैराग्यम्। ह्रीः दुष्कृत्ये लज्जा। पुनर्दया दानम्। दय दानगतिरक्षणेषु। आदिना आर्जवादिः। स्वनिर्वृतिः आत्मसुखम् ॥ २ ॥ रजसो वृत्तीराह। मदो दर्पः। स्तम्भो अनम्रता। आशीः धनादिलिप्सा। मदेन युद्धोत्साहः। यशःप्रीतिः स्तुतिप्रियता। वीर्यं प्रभावः। बलेन उद्यमः पराभवजनकः। न्यायेन तु सात्त्विक एव ॥ ३ ॥ तमोवृत्तीराह-क्रोध इति। क्लमः श्रमः कलिः कलहः। आर्तिः दैन्यम् ॥ ४ ॥ सन्निपातः अहं शान्तः कामी क्रोधी इत्यादि। तथा मम पुत्रः शान्तः कामः क्रोधी इत्यादि ॥ ५ ॥ या तद्विषयिणी मतिः सा सन्निपात एव। मन आदीनां

संनिपातस्त्वहमिति ममेत्युद्धव या मतिः। व्यवहारः संनिपातो मनोमात्रेन्द्रियासुभिः ॥६॥
धर्मे चार्थे च कामे च यदासौ परिनिष्ठितः। गुणानां संनिकर्षोऽयं श्रद्धारतिधनावहः ॥७॥
प्रवृत्तिलक्षणे निष्ठा पुमान् यर्हि गृहाश्रमे। स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥८॥
पुरुषं सत्त्वसंयुक्तमनुमीयाच्छमादिभिः। कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसा युतम् ॥९॥
यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः। तं सत्त्वप्रकृतिं विद्यात् पुरुषं स्त्रियमेव वा॥१०॥
यदा आशिष आशास्य मां भजेत स्वकर्मभिः। तं रजः प्रकृतिं विद्याद्धिंसामाशास्य तामसम्॥११॥
सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे। चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते ॥१२॥
यदेतरौ जयेत् सत्त्वं भास्वरं विशदं शिवम्। तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥१३॥
यदा जयेत्तमः सत्त्वं रजः सङ्गं भिदा चलम्। तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥१४॥
यदा जयेद् रजः सत्त्वं तमो मूढं लयं जडम्। युज्येत शोकमोहाभ्यां निद्रया हिंसयाऽऽशया॥१५॥
यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः। देहेऽभयं मनोऽसङ्गं तत्सत्त्वं विद्धि मत्पदम् ॥१६॥
विकुर्वन् क्रियया चाधीरनिवृत्तिश्च चेतसाम्। गात्रास्वास्थ्यं मनो भ्रान्तं रज एतैर्निशामय॥१७॥
सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम्। मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ॥१८॥
एधमाने गुणे सत्त्वे देवानां बलमेधते। असुराणां च रजसि तमस्युद्धव रक्षसाम् ॥१९॥

---

सात्त्विकादित्रैविध्यात् अहन्ताममतापूर्वकत्वाच्च तैर्मिलितः सर्वोऽपि व्यवहारः सन्निपातजन्य एव। सन्निपातो हि मिश्रितगुणकार्यम् ॥ ६ ॥ सन्निकर्षः सन्निपातकार्यम्। श्रद्धादीनि सत्त्वरजस्तमोमयानि आवहति प्रापयतीति तथा ॥७॥ प्रवृत्तिलक्षणे रजोमये गृहाश्रमे तमोमये स्वधर्मे सत्त्वमये च यदा अनुतिष्ठेत् तदा समितिः सन्निपातः ॥ ८ ॥ पुमान् येन यथा भवेदित्युक्तं तत् दर्शयति। अनुमीयात् अनुमानेन जानीयात् ॥ ९ ॥ निरपेक्षः फलापेक्षारहितः ॥ १० ॥ आशिषो भोगान् आशास्य सङ्कल्प्य ॥ ११ ॥ जीवस्यैव चित्तो जायन्ते अभिव्यज्यन्ते। यैः गुणै भूतानां प्राणिनां मध्ये सज्जमानः आसक्तिं कुर्वन् निबध्यते। मम तु नियन्तृत्वेन स्वाध्यासक्त्यभावान्न बन्ध इति जीवतो महान् विशेषः ॥१२॥ यदा सत्त्वं गुणःकर्तृ इतरौ रजस्तमोगुणौ जयेत् अभिभवेत्। भास्वरं प्रकाशकं विशदं स्वच्छं शिवं शान्तं क्रमेण ॥ १३ ॥ यदा रजः कर्तृ तमः सत्त्वं च कर्मभूतं जयेत्। कीदृशं रजः। सङ्गं सङ्गहेतुः अतो यशसा श्रिया च युज्येत। भिदा भेदहेतुः अतो दुःखेन। द्वितीयाद् वै भयं भवति। चञ्चलं प्रवृत्तिस्वभावम् अतः कर्मणा युज्येत ॥ १४ ॥ यदा तमः कर्तृ रजः सत्त्वं कर्मभूतं जयेत्। कीदृक् तमः। मूढं विवेकभ्रंशकम्। अतः शोकादिभिः। लयमावरणात्मकम् अतो निद्रया। जडम् अनुद्यमात्मकम् अतः केवलमाशया इदं मे भविष्यतीति तृष्णया ॥ १५ ॥ प्रसीदेत शान्तं भवेत्। निर्वृतिः वैतृष्ण्यम्। अभयं रोगाद्यभावः। तत् तदा वृद्धं सत्त्वं मत्पदं मदुपलब्धिस्थानं विद्धि। पद्यते इति व्युत्पत्त्या पदम् ॥ १६ ॥ क्रियया विकुर्वन् विकारं प्राप्नुवन् आधीः आसमन्तात् विक्षिप्ता धीर्यस्य तथाभूतो भवति। चेतसां ज्ञानेन्द्रियाणाम् अनिर्वृतिः अनुपरतिः। गात्राणां कर्मेन्द्रियाणाम् मनो भ्रान्तं चञ्चलम् ग्रहणे एतैर्लक्षणैः रज उत्कटं निशामय जानीहि ॥१७॥ सीदत् व्याकुलीभवत् विलीयेत कार्याक्षमं भवेत्। चेतसो ज्ञानस्य। अक्षमम् असमर्थम्। नष्टं मननक्रियाशून्यम्। तमोऽज्ञानम्। ग्लानिः हर्षक्षयः तत् तदा एतैर्लक्षणैः तम उत्कटम् उपधारय जानीहि। ग्लै हर्षक्षये धातुः ॥ १८ ॥ एधमाने वर्धमाने। असुरराक्षसयोरवान्तरभेदः। उत्कटं

सत्त्वाज्जागरणं विद्यात् रजसा स्वप्नमादिशेत् । प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु संततम्॥२०॥
उपर्युपरि गच्छन्ति सत्त्वेन ब्राह्मणा जनाः । तमसाधोऽध आमुख्याद् रजसान्तरचारिणः ॥२१॥
सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः । तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ॥२२॥
मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् । राजसं फलसंकल्पं हिंसाप्रायादि तामसम् ॥२३॥
कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च यत् । प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ।२४।
वनं तु सात्त्विको वासो ग्रामो राजस उच्यते । तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥२५॥
सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः । तामसः स्मृतिविभ्रष्टो निर्गुणो मदुपाश्रयः ।
सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥
पथ्यं　　पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् । राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि ।२८॥
सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् । तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥२९॥
द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः । श्रद्धावस्थाऽऽकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि॥३०॥
सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः । दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ॥३१॥

---

रजस्काः विषयिणः असुराः । उत्कटतमस्काः क्रूरकर्मिणः राक्षसाः ॥१९॥ आदिशेत निर्दिशेत् तुरीयं तुर्यावस्था-पन्नमात्मतत्त्वं, त्रिषु जाग्रदादिषु सन्ततमनुगतम् अन्यथा तत्तदवस्थानुभवो न स्यात् ॥२०॥ ब्राह्मणाः कर्मनिष्ठाः । उपरि उपरि लोकानिति शेषः । सत्त्वस्य ईषद्वृद्धौ स्वर्लोकं ततोऽधिकवृद्धौ महरादिलोकं ततोऽपि अधिक-वृद्धौ सत्यलोकमिति उपर्युपरीत्यस्य तात्पर्यम् । तमसा आमुख्यात् । मुख्यान् स्थावरान् अभिव्याप्य अधोलोकान् । रजसा तु अन्तरचारिणः मनुष्या भवन्ति । अन्तरे मध्यमलोके चरितुं शीलं येषां ते । नैर्गुण्येन तु भक्त्या मत्पदं यान्तीति । शेषः ॥२१॥ सत्त्वे प्रवृद्धे सति प्रलीना मृताः । रजसि वृद्धे लयो मरणं येषां ते । निर्गुणा गुणा-तीतास्तु मामेव । लयशब्दानुपादानात् यदि जीवन्तोऽपि निर्गुणास्तर्हि जीवन्तोऽपि मामेव यान्तीत्यर्थः ॥ २२ ॥ निष्फलं फलाकाङ्क्षारहितं यत् तत् सात्त्विकं ज्ञेयम् । फलं संकल्प्यते यस्मिन् तत् राजसम् । हिंसाप्रायं हिंसोद्देशेन कृतं यत् तत् तामसम् । आदिना दम्भयात्सर्यादि कृतं च । मत्कीर्तनादि तु निर्गुणम् ॥२३॥ कैवल्य-मात्मविषयकम् । वैकल्पिकं भेदजन्यं द्वैतविषयकम् । प्रकृत्या स्वभावतः आगतं प्राप्तम् आहारविहारादिविषयकं तामसम् । मन्निष्ठं मद्विषयकम् ॥ २४ ॥ तुर्वैलक्षण्ये । वनमिति एकान्तत्वेन सत्त्ववृद्धिहेतुत्वात् । ग्रामः तत्सम्बन्धिजनसम्पर्कत्वात् । यद्वा । वासः आधारो वनमित्यर्थः । वसन्ति अस्मिन्निति अधिकरणे घञ् । निकेतं साक्षात्तदाविर्भावस्थानत्वात् निकेतनस्यापि निर्गुणत्वं स्पर्शमणिन्यायेनेति सन्दर्भः । कित् निवासे धातुः । ॥ २५ ॥ असङ्गी अनासक्तः कारकः कर्ता । रागान्धो विषयासक्तः । स्मृतिविभ्रष्टः अनुसन्धानशून्यः । मदुपाश्रयः मदेकशरणः । उकारघटितः पाठः प्रशस्तः ॥ २६ ॥ सात्त्विकी स्पष्टम् ॥ २७ ॥ पथ्यं हितकरम् पूतं शुद्धम् अनायस्तम् अनायासतः प्राप्तम् आहार्यं भक्ष्यभोज्यादि । आर्तिदं रोगप्रदम् अशुचि मालिन्यकरम् । च शब्दात् मन्निवेदितं च निर्गुणम् ॥ २८ ॥ आत्मोत्थमनुभवजन्यम् । मोहोत्थं मादकवस्तुजन्यम् । दैन्योत्थं पुत्रकलत्रादिसम्पर्कजन्यम् ॥ २९ ॥ द्रव्यमारभ्य उक्तानुक्तः सर्वोऽपि प्राकृतः पदार्थः त्रैगुण्य. त्रिगुणात्मक एव । स्वार्थे ष्यञ् । द्रव्यं भोज्यवस्तु । आकृतिः देवत्वादिरूपा ॥ ३० ॥ एते भावाः पदार्थाः गुणमयाः गुण-कार्यभूताः । गुणेभ्य आगता इत्यधिकारे मयट् । पुरुषाव्यक्ताभ्यां धिष्ठिता अधिष्ठिता आश्रिताः । किं बहुना

एता संसृतयः पुंसो गुणकर्मनिबन्धनाः । येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ।

भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥३२॥

तस्माद् देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम् । गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः ॥३३॥

निःसङ्गो मां भजेद् विद्वानप्रमत्तो जितेन्द्रियः । ॥३४॥

रजस्तमश्चाभिजयेत् सत्त्वसंसेवया मुनिः । सत्त्वं चाभिजयेद् युक्तो नैरपेक्ष्येण शान्तधीः ।

सम्पद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम् ॥३५॥

जीवो जीवविनिर्मुक्तो गुणैश्चाशयसम्भवैः । मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेद् ॥३६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां सहितायामेकादशस्कन्धे पञ्चविंशोऽध्यायः ॥२५॥

---

बुद्ध्या अनुध्यातं विचारितं च यत् तत्सर्वं गुणमयमेवेति शेषः ॥ ३१ ॥ एता इति सार्द्धम् । एताः संसृतयः देवमनुष्यादियोनयः गुणकर्ममूलका भवन्तीति क्रियाशेषः । गुणकर्मभिः निबध्यन्ते पुंसि संयोज्यन्ते इति तथा । येन जीवेन इमे गुणा निर्जिता स मन्निष्ठः सन् मद्भावाय मोक्षाय प्रपद्यते योग्यो भवति । चित्ते जायन्ते उल्लसन्ते तथा ॥ ३२ ॥ यतस्त्रैगुण्यविषयो मोक्षहेतुस्तस्मात् हेतोः भक्त्यैव गुणत्रयजयात् विचक्षणा विवेकिनः इमं नरदेहं लब्ध्वा मां भजन्तीत्यन्वयः[1] । ज्ञानविज्ञानयोः संभवो यस्मात् तम् । ज्ञानं शास्त्रीयं विज्ञानमनुभवः । गुणसंग विषयासक्ति विनिर्धूय दूरीकृत्य ॥ ३३ ॥ निःसङ्ग इत्यर्द्धम् । निःसङ्गः विरक्तः सन् ॥ ३४ ॥ रज इति सार्द्धम् । सत्त्वसंसेवया सात्त्विकपदार्थसेवया । नैरपेक्ष्येण तृष्णाराहित्येन । जीवो जीवं जीवोपाधिलिङ्गशरीरं विहाय मां प्राप्नोति । यतोगुणैर्मुक्तः ॥ ३५ ॥ जीवो देहाभिमानी जीवेन लिङ्गशरीरेण आशय संभवैः अन्तःकरणोत्थैः गुणैः विषयैः रागद्वेषादिभिश्च निर्मुक्तः सन् बहिर्विषभोगेन आन्तरस्तत्स्मरणेन च न चरेत् न विचरति किन्तु जीवन्मुक्तो भवतीत्यर्थः । यतो मयैव ब्रह्मणा पूर्णः ऐक्यं प्राप्तः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्या संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां पञ्चविंशोऽध्यायः ॥२५॥

## अथ षड्विंशोऽध्यायः

### श्रीभगवानुवाच

मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः । आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥१॥

गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया । गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ।

वर्तमानोऽपि न पुमान् युज्यतेऽवस्तुभिर्गुणैः ॥२॥

---

षड्विंशे कामिनां सङ्गात्पातो निःश्रेयसं सताम् ।
इति स्वभक्तबोधार्थमैलगीतं निरूप्यते ॥ १ ॥

मां लक्षयति बोधयतीति तथाभूतमिमं नरदेहं प्राप्य मद्धर्मे भक्तिलक्षणे स्थितः सन् आनन्दरूपं परमात्मानं मां समुपैति प्राप्नोतीत्यन्वयः । आत्मस्थम् आत्मन्येव नियन्तृत्वेन स्थितम् ॥ १ ॥ गुणेति सार्द्धम् । ज्ञाननिष्ठया विद्यया जीवयोन्या प्रकृत्या विमुक्तः पुमान् गुणेषु गुणकार्येषु देहादिषु वर्तमानोऽपि अवस्तुभिः मिथ्याभूतैः तैः गुणैः सुखदुःखादिभिः न युज्यते न बध्यते इत्यन्वयः । कुतः । अवस्तुतः दृश्यमानेषु मिथ्या-

---

१. भजन्तु इत्यपि पाठः ।

सङ्गं न कुर्यादसतां शिश्नोदरतृषां क्वचित् । तस्यानुगस्तमस्यन्धे पतत्यन्धानुगान्धवत् ॥३॥
ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः । उर्वशीविरहान्मुह्यन् निर्विण्णः शोकसंयमे ॥४॥
त्यक्त्वाऽऽत्मानं व्रजन्तीं तांनग्न उन्मत्तवन्नृपः । विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः॥५॥
कामानतृप्तोऽनुजुषन् धुल्लकान् वर्षयामिनीः । न वेद यान्तीर्नायान्तीरुर्वश्याकृष्ठचेतनः ॥६॥

ऐल उवाच

अहो मे मोहविस्तारः कामकश्मलचेतसः । देव्या गृहीतकण्ठस्य नायुःखण्डा इमे स्मृताः ॥७॥
नाहं वेदाभिनिर्मुक्तः सूर्यो वाभ्युदितोऽमुया । मुषितो वर्षपूगानां बताहानि गतान्युत ॥८॥
अहो मे आत्मसम्मोहो येनात्मा योषितां कृतः । क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥९॥
सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् । यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद् रुदन् ॥१०॥
कुतस्तस्यानुभावः स्यात् तेज ईशत्वमेव वा । योऽन्वगच्छं स्त्रियं यान्तीं खरवत् पादताडितः॥११॥
किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा । किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥
स्वार्थस्याकोविदं धिङ् मां मूर्खं पण्डितमानिनम् । योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥
सेवतो वर्षपूगान् मे उर्वश्या अधरासवम् । न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥१४॥
पुंश्चल्यापहृतं चित्तं को न्वन्यो मोचितुं प्रभुः । आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥१५॥

---

त्वेन प्रतीयमानेषु । तत्कृतः । मायामात्रेषु मायाकार्येषु । जीवस्य योनिः उपाधिः प्रकृतिः ॥ २ ॥ शिश्नोदरे तर्पयन्तीति शिश्नोदरतृपस्तेषां विषयिणां संगम् न कुर्यात् । तस्यानुगामी अन्धे तमसि नरके पतति । अन्धानुगामी यथा अन्धः तद्वत् ॥ ३ ॥ बृहच्छ्रवाः विपुलकीर्तिः सम्राट् चक्रवर्ती ऐलः पुरूरवाः इमां गाथां वक्ष्यमाणामगायत् शोकापगमे सति ततो निर्विण्णः विरक्तः सन् ॥ ४ ॥ प्राक्तनीं मोहावस्थामाह—हे घोरे कठोर हृदये जाये । नग्नः नृपः आत्मानं मां त्यक्त्वा व्रजन्ती तामुर्वशीमन्वगात् । किं कुर्वन् सन् । तिष्ठ तिष्ठेति उन्मत्तवत् विलपन् सन् । विक्लवोऽधीरः ॥ ५ ॥ क्षुल्लकान् तुच्छान् कामान् विषयान् अनुजुषन् अतृप्तः सन् वर्षाणां यामिनी रात्रीः यान्तीर्नवेद तथा आयान्तीश्च न वेदेत्यन्वयः । वर्तमानसामीप्ये लट् । तत्र हेतुः । उर्वश्येति । आकृष्टा चेतना ज्ञानशक्तिः यस्य ॥६॥ कामेन कश्मलं क्षुभितं चेतो यस्य । इमे आयुःखण्डा अहोरात्ररूपा न स्मृताः विस्मृता इत्यर्थः ॥ ७ ॥ बतेति खेदे । अभिनिर्मुक्तः अस्तं गतः न वेद । वर्तमानसामीप्ये भूते लट् । अमुया उर्वश्या मुषितः अपहृतविवेकः । उत अपि वर्षसमूहानां गतानि व्यतीतान्यपि अहानि न वेदेत्यन्वयः ॥ ८ ॥ येन मोहेन आत्मा देहः वशवर्ती क्रीडामृग इव कृतः । लुप्तोपमेयम् ।९। सपरिच्छदं राज्यादिसहितम् ईश्वरं राजानं मां तृणमिव हित्वा यान्तीं तामहम् अन्वगमम् रुदन् सन् ॥ १० ॥ तेजो बलम् । ईशत्वं नियन्तृत्वं च कुतः सर्वमेव नष्टमित्यर्थः । खरो यथा पादताडितोऽपि खरीमनुगच्छति तथा स्त्रियमन्वगच्छमित्यन्वयः ॥ ११ ॥ स्त्रीभिः यस्य मनो हृतं तस्य विद्यादिभिः किं फल न किमपि सर्वं व्यर्थमित्यर्थः । त्यागेन संन्यासेन । विविक्तेन एकान्तवासेन ॥ १२ ॥ स्वार्थस्य आत्मतत्त्वस्य अकोविदम् अज्ञातारम् । ईश्वरतां राजसत्ताम् । गौरिव वृषभ इव वशीकृतः ।१३। वर्षपूगान् बहुवर्षपर्यन्तम् अधरामृतं सेवतोऽपि मे कामो न तृप्यति प्रत्युत वर्धते एव । आत्मनि मनसि भवति जायते इति आत्मभूः ॥ १४ ॥ भगवन्तम् ऋते तया अपहृतं चित्तं मोचयितुं को नाम अन्यः प्रभुः समर्थो भवेत् न कोऽपीत्यन्वयः । आत्मारामाणां योगिनामपि ईश्वरम् । तेऽपि तत्प्रसादं विना न समर्थाः

बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः । मनोगतो महामोहो नापयात्यजितात्मनः ॥१६॥
किमेतया नोऽपकृतं रज्ज्वा वा सर्पचेतसः । रज्जुस्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥१७॥
क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः । क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः
पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः । किमात्मनः किं सुहृदामिति यो नावसीयते
तस्मिन् कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते । अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः ॥२०॥
त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ । विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥२१॥
अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् । विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा ॥२२॥
अदृष्टादश्रुताद् भावान्न भाव उपजायते । असम्प्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः ।२३।
तस्मात् सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः । विदुषां चाप्यविस्रब्धः षड्वर्गः किमु मादृशाम् ॥

श्रीभगवानुवाच

एवं प्रगायन् नृपदेवदेवः स उर्वशीलोकमथो विहाय ।
आत्मानमात्मन्यवगम्य मां वै उपारमज्ज्ञानविधूतमोहः ॥२५॥

---

इति विशेषणेन सूचितम् ॥ १५ ॥ पुरूरवो 'मा मृथा' इति सूक्तवाक्येन बोधितस्यापि मे मनोमोहो नापयाति नापययौ यतो अजितेति । भूते लट् ॥१६॥ नोऽस्माकमेतया उर्वश्या किमपकृतं न किमपि । वा यथार्थे । यथा रज्जुस्वरूपमविदुषः अजानतः प्रत्युत तस्यां सर्पबुद्धे अत एव खिद्यतः पुंसः रज्ज्वा किमपि नापकृतं भवति तथा । यत् यस्मात् योऽहं स्वयमजितेन्द्रियः ।१७। मलीमसः मलिनः अयं कायः कान्तादेहः क्व । सुमनसां पुष्पाणामिने सौमनस्या सुगन्धत्वादयः क्व आत्मगुणाः सौमनस्यं तदाद्याः नित्यत्वनिर्विकारत्वादयः । हि यतः तत्र अविद्यया अध्यासः मिथ्या आरोपः कृतः ॥ १८ ॥ नु वितर्के । नु अहो अयं कायः किं पित्रोः स्वं धनमस्ति जनकत्वात् । भार्याया वा भोगप्रदत्वात् । स्वामिनो वा तदधीनत्वात् । अग्नेर्वा अन्त्येष्ट्यां तदाहुतित्वात् श्वगृध्रयोर्वा भक्ष्यत्वात् आत्मनो जीवस्य वा कर्मफलभोगित्वात् । सुहृदां वा उपकारकर्तृत्वात् इत्येवं यो देहः कस्येति नावसीयते न निश्चीयते सर्वस्यापि न कस्यापीत्यर्थः ॥१९॥ अमेध्ये अपवित्रे तस्मिन् कलेवरे विषज्जते आसक्तो भवति स्त्रियाः सुस्मितं सुखमस्तीति हेतोः । कथंभूते । तुच्छा कृमिविट्भस्मलक्षणा निष्ठा अन्तो यस्य । सुनसं सुनासिकम् । नासिकायाः नसादेशः । सुभद्रं सुखप्रदम् ॥ २० ॥ अत्र विशेष्यमध्याहार्यम् । त्वगादीनां सप्तधातूनां संहतिः संघातो यस्मिन् तस्मिन् देहे रमतां पुंसां विण्मूत्रपूये रमतां कृमीणां च कियदन्तरं न कियदपि उभयोस्तुल्यत्वात् स्नायुः नाडी ॥ २१ ॥ अथापि अतः अर्थवित् विवेकी स्त्रैणेषु स्त्रीलम्पटेषु तासु च नोपसज्जेत सङ्गं न कुर्यात् यतो मनः क्षुभ्यति ॥ २२ ॥ अश्रुतात् भावात् पदार्थात् भावः मनःक्षोभो नोपजायते । प्राणान् इन्द्रियाणि असंप्रयुञ्जतः नियच्छतः पुंसः मनः स्तिमितं निश्चलं सत् शाम्यति ॥ २३ ॥ यस्मात् सङ्ग एव पतनहेतुः तस्मात् इन्द्रियैः तेषु संगो न कर्तव्यः । विदुषां ज्ञानिनामपि अविस्रब्धः अविश्वसनीयः । मादृशामविवेकिनामविश्वसनीय इति किमुत वक्तव्यमित्यर्थः । षड्वर्गः षडिन्द्रियवर्गः ॥ २४ ॥ निष्कर्षमाह—द्वाभ्याम् । अत्र देवशब्दो राजपर्यायः नरदेवानां देवो[1] राजा स पुरूरवा एवं प्रगायन् चिन्तयन् लोकं विहाय अथो अनन्तरम् आत्मनि मनसि आत्मानं परमात्मानम् अवगम्य अनुभूय उपारमत् शरीरं तत्याजेत्यन्वयः । कथंभूतः । ज्ञानेन

---

१. 'नृपदेवदेव' इत्यपि पाठः । नृपेषु देवेषु दीव्यतीति ।

ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् । सन्त एतस्य च्छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥२६॥
सन्तोऽनपेक्षा मच्चित्ताः प्रशान्ताः समदर्शिनः । निर्ममा निरहंकारा निर्द्वन्द्वा निष्परिग्रहाः ॥२७॥
तेषु नित्यं महाभाग महाभागेषु मत्कथाः । सम्भवन्ति हि ता नृणां जुषतां प्रपुनन्त्यघम् ॥२८॥
ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः । मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि ॥
भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते । मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥३०॥
यथोपश्रयमाणस्य भगवन्तं विभावसुम् । शीतं भयं तमोऽप्येति साधून् संसेवतस्तथा ॥३१॥
निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम् । सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥
अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम् । धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग् बिभ्यतोऽरणम्
सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः । देवता बान्धवाः सन्तः सन्त आत्माहमेव च ॥३४॥
वैतसेनस्ततोऽप्येवमुर्वश्या लोकनिःस्पृहः । मुक्तसंगो महीमेतामात्मारामश्चचार ह ॥३५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥

---

विधूतो निवृत्तो मोहो देहाभिमानो यस्य सः ।२५। सज्जेत संगं कुर्यात् । एतस्य जिज्ञासोः मनोव्यासङ्गम् विषयासक्तिं उक्तिभिः उपदेशैः छिन्दन्ति निवारयन्ति ॥२६॥ सतां लक्षणमाह । सन्त इति अत्राष्टविशेषणानां यथेष्टं हेतुहेतुमद्भावो ज्ञेयः । द्वन्द्वं शीतोष्णादि ॥२७॥ तेषु मत्कथाः संभवन्ति प्रवर्तन्ते । ताः कथाः जुषतां सेवमानां पुंसामघं पापं वासनां वा प्रपुनन्ति नाशयन्ति। प्रशब्देन संगमात्रस्यैव पावनत्वं व्यञ्जितं किमुत कथायाः ।२८। ये शृण्वन्ति ते मयि भक्तिं विन्दन्तीत्यन्वयः । आदरणमादृतिः सा विद्यते येषां ते आदृताः । अर्श आदिभ्यो मत्वर्थीयोऽच्प्रत्ययः ॥२९॥ किमन्यदवशिष्यते न किमपि सर्वं सुलभमेवेत्यर्थः ॥३०॥ यथा विभावसुम् अग्निम् उपश्रयमाणस्य सेवमानस्य शीतादि अप्येति नश्यति तथा साधून संसेवतः पुंसः संसारभयं तन्मूलमज्ञानं च नश्यति ॥ ३१ ॥ अप्सु मज्जतां पुसां यथा दृढा नौः तरणसाधनं भवति तथा भवाब्धौ निमज्ज्योन्मज्जतां नीचोच्चयोनीः गच्छतां पुसां सन्त एव परमायनं मुख्यं शरणम् ॥ ३२ ॥ प्राणो जीवनम् । प्रेत्य परलोके यथा धर्म एव वित्तं तथा अर्वाक् संसारपातात् बिभ्यतः पुंसः सन्त एव अरणं[1] शरणं रक्षका इत्यर्थः ॥ ३३ ॥ चक्षूंषि सगुणनिर्गुणज्ञानानि । उत्थितः अर्कस्तु वहिर्विषये एकमेव चक्षुः दिशति । सन्तः देवतावत् आराध्याः । बान्धवा इव सत्काराहाः । आत्मवत् प्रीतिविषयाश्च । किं बहुना सन्तः अहमेव मद्दृष्ट्या सेव्या इत्यर्थः ॥३४॥ सुद्युम्नस्य स्त्रीत्वप्राप्त्यां वीता वैरूप्यं प्राप्ता सेना यस्य वीतसेनः सुद्युम्नः तस्यापत्यं वैतसेनः पुरुरवाः लोकात् अवलोकनात् वा ततः सत्संगादपि हेतोः मुक्तसंगः सन् महीं विचचार । ह हर्षे ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गढार्थदीपिन्यांषड्विंशोऽध्यायः ॥ २६ ॥

---

१. 'अरणं शरणे गतौ' इति निरुक्तिः ।

## अथ सप्तविंशोऽध्यायः

### उद्धव उवाच

क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो । यस्मात्त्वां ये यथार्चन्ति सात्वताः सात्वतर्षभ ॥१॥

एतद् वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् । नारदो भगवान् व्यास आचार्योऽङ्गिरसः सुतः ॥२॥

निःसृतं ते मुखाम्भोजाद् यदाह भगवानजः । पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भवः ॥३॥

एतद् वै सर्ववर्णानामाश्रमाणां च सम्मतम् । श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ॥४॥

एतत् कमलपत्राक्ष कर्मबन्धविमोचनम् । भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥५॥

### श्रीभगवानुवाच

न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव । संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥६॥

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः । त्रयाणामीप्सितेनैव विधिना मां समर्चयेत्॥७॥

यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः । यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥८॥

अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाप्सु हृदि द्विजे । द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ।९।

पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये । उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिना ॥१०॥

संध्योपास्त्यादिकर्माणि वेदेनाचोदितानि मे । पूजां तैः कल्पयेत् सम्यक्संकल्पः कर्मपावनीम् ११

---

सप्तविंशे क्रियायोगं साङ्गं चित्तविशोधनम् ।
गन्तुं स्वधाम सोपानमुद्धवार्थमुपादिशत् ॥ १ ॥

यस्मात्[1] यम् आश्रित्य सात्वता भक्ताः यथा त्वामर्चन्ति तथा क्रियायोगं समाचक्ष्व कथयेत्यन्वयः । सात्वतां यदूनाम ऋषभः श्रेष्ठः ।१। चतुष्कम् । नृणाम् एतत् मदाराधनं मुहुर्मुहुः अनुष्ठितं निःश्रेयसं मुक्तिसाधनं वदन्ति नारदादयः । आचार्यो बृहस्पतिः । ते मुखाम्भोजात् निःसृतमुपदिष्टम् अजः यत् पुत्रेभ्य आह भवश्च पार्वत्यै आह एतच्च सर्ववर्णानां सम्मतं श्रेयसां धर्मादीनामुत्तमं साधनं च भक्ताय मे ब्रूहीत्यन्वयः । विश्वेश्वरा ब्रह्मादयः तेषामीश्वर ॥२॥३॥४॥५॥ नास्ति अन्तः शास्त्रतः पारः अनुष्ठानतश्च यस्य । अनुपूर्वशः क्रमेण अङ्गोपाङ्गादिक्रमेण ॥६॥ तान्त्रिकः पञ्चरात्रोक्तः । न्यासप्रधानपूजा वा । मिश्रः उभययुक्तः । द्वादशाक्षरादिर्वा । मखः पूजा । त्रयाणां मध्ये ।७॥ स्वनिगमेन 'अष्टवर्षं ब्राह्मणमुपनयेत्' इति वेदेन, द्विजत्वमुपनयनम् प्राप्य । मे मत्तः सकाशात् त्वं निबोध शृणु । ८॥ अर्चायां प्रतिमायां स्थण्डिले भूमौ तदादिषु अमायया निष्कपटभावेन द्रव्येण गन्धपुष्पादिना माम् अर्चेत् ॥ ९ ॥ उभयैः वैदिकतान्त्रिकमन्त्रैः । धौतदन्तः कृतदन्तधावनः ॥ १० ॥ वेदेन विहितानि यानि सन्ध्योपासनादिकर्माणि तैः सह पूजां कुर्यात् । कर्मपावनीं कर्मबन्धनमोचनीम् सम्यक् पूजादौ संकल्पो[2] देशकालादिकीर्तनलक्षणो यस्य सः ॥ ११ ॥ लौही स्वर्णादिमयी । लेप्या चन्दनादिमयी । लेख्या

---

१. ल्यब्लोपे पञ्चमीयम् ।

२. संकल्पस्यावश्यकत्वं यथा ।

संकल्पं च सदा कुर्यात् स्नानदानव्रतादिषु ।

अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति हि ॥ इति मार्कण्डेयोक्तेः

शैली दारुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥१२॥
चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् । उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥१३॥
अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद् द्वयम् । स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥
द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः । भक्तस्य च यथालब्धैर्हृदि भावेन चैव हि ॥१५॥
स्नानालंकरणं प्रेष्ठमर्चायामेव तूद्धव । स्थण्डिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः ।
सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः ॥१६॥
श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि ।
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते । गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥१७॥
शुचिःसम्भृतसम्भारः प्राग्दर्भैः कल्पितासनः । आसीनः प्रागुदग् वार्चेदर्चायामथ सम्मुखः ॥१८॥
कृतन्यासः कृतन्यासां मदर्चां पाणिनाऽऽमृजेत् । कलशं प्रोक्षणीयं च यथावदुपसाधयेत् ॥१९॥
तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च । प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् ॥२०॥
पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि दैशिकः । हृदा शीर्ष्णाथ शिखया गायत्र्या चाभिमन्त्रयेत् ॥

---

चित्रपटमयी ॥ १२ ॥ प्रकर्षेण तिष्ठति देवोऽस्यामिति प्रतिष्ठा प्रतिमा । जीवयति चेतयतीति जीवः ईश्वरस्तस्य मन्दिरं निवासस्थानम् । उद्वासो विसर्जनम् ॥१३॥ अस्थिरा सैकतो तस्यां विकल्पः । तत्रापि शालग्रामे तु नैव कुर्यात् ।[1] अविलेप्यायां मृन्मयलेख्यव्यतिरिक्तायाम् । अन्यत्र विलेप्यायां विलेख्यायां दारुमय्यां च मार्जनमेव ॥ १४ ॥ सकामस्य प्रसिद्धैः द्रव्यैः खण्डघृतलडुकापूपादिभिः मद्यागः कर्तव्यः । चस्त्वर्थे निष्काम-भक्तस्य तु भावेन कल्पनया यथोपपन्नैः द्रव्यैरेव हृदि मद्यागः कर्तव्यः इति योज्यम् । यागः पूजनम् ॥ १५ ॥ स्नानेति सार्द्धम् । अर्चायां पाषाणादिप्रतिमायाम् । तु शब्देन शालग्रामेऽपि । प्रेष्टं प्रकर्षेण इष्टमभिमतम् । प्रेष्ठमित्यपि पाठः अतिशयेन प्रियम् । तत्त्वविन्यासः मन्त्रैः तत्तद्देवानां स्थापनम् । अभ्यर्हणम् उपस्थानादि । सलिलादिभिः तर्पणादिभिः पूजनं प्रेष्ठमिति योज्यम् ॥ १६ ॥ श्रद्धयेति सार्द्धम् । उपाहृतं समर्पितं वारि अपि जलमपि प्रेष्ठं भवति यदा तदा गन्धादयः तोषप्रदा भवन्तीति किं पुनर्वक्तव्यमित्यर्थः । आद्यं फलादि । सुमनसः पुष्पाणि ॥ १७ ॥ शुचिः कृतस्नानः सन् प्राङ्मुखः उदङ्मुखो वा आसने आसीनः अथ अथवा अर्चायां प्रतिमायां सम्मुख आसीनः सन् हरिमर्चेदित्यन्वयः । कथंभूतः । प्रागेव संभृतः सम्पादितः संभारः पूजासामग्री येन सः ॥ १८ ॥ मदर्चां मत्प्रतिमाम् आमृजेत् शोधयेत् निर्माल्यापसारणेन । प्रोक्षणीयं प्रोक्षणार्थोदकपात्रम् कलशम् उपसाधयेत् चन्दनपुष्पादिभिः संस्कुर्यात् संयुक्तं कुर्यात् ॥ १९ ॥ तदद्भिः प्रोक्षणीयजलैः पूजास्थानादीनि प्रोक्ष्य त्रीणि पात्राणि पाद्याद्यर्थम् अद्भिः पूरितानि कृत्वा तत्तद् द्रव्यैः साधयेत् संयुक्तं कुर्यात् । पाद्यपात्रे श्यामाकादि अर्घ्यपात्रे गन्धपुष्पाक्षतादि आचमनपात्रे च लवंगजायफलादि निक्षिपेत् ॥ २० ॥ देशे भगवदादेशे तिष्ठतीति दैशिकः अर्चकः ॐ हृदयाय नमः इति पाद्यस्य । ॐ शिरसे स्वाहा इत्यर्घ्यस्य । ॐ शिखायै वषट् इत्याचमनीयस्य । गायत्र्या च सर्वेषां हस्तस्पर्शनाभिमन्त्रणं कुर्यात् ॥ २१ ॥ पिण्डे इति

---

१. शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते ।
शालग्रामार्चने नैवमावाहनविसर्जने ॥
इति स्कान्दोक्तेः ।

पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम । अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम्॥२२॥
तयाऽऽत्मभूतया पिण्डे व्याप्ते सम्पूज्य तन्मयः । आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत्
पाद्योपस्पर्शार्हणादीनुपचारान् प्रकल्पयेत् । धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम ॥२४॥
पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् । उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥२५॥
सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् । मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥२६॥
नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च । महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥२७॥
दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान् : स्वे स्वे स्थाने त्वभिमुखान् पूजयेत् प्रोक्षणादिभिः
चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः । सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥२९॥
स्वर्णधर्मानुवाकेन महापुरुषविद्यया । पौरुषेणापि सूक्तेन सामभी राजनादिभिः ॥३०॥
वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः । अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितम् ॥३१॥
पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान् । धूपदीपोपहार्याणि दद्यान्मे श्रद्धयार्चकः ॥३२॥
गुडपायससर्पींषि शष्कुल्यापूपमोदकान् । संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥३३॥

---

यौगिकी क्रियेयं गुरुगम्या दीक्षितानामेव न सर्वसाधारणगम्येति । अतोऽदीक्षितैः सात्त्विकभावनया भगवद्-ध्यानेनैव पिण्डसंशोधनं कार्यम् । मूलार्थस्तु इत्थम् । वाय्वग्निशब्दौ शोषणदहनपरौ प्लावनस्य उपलक्षणम् । तथाहि वायुना प्राणायामेन शोषणपूर्वकं शोधिते नाभिचक्रस्थेन अग्निना दहनपूर्वकं शोधिते खेचरीमुद्रया ललाटस्थचन्द्रमण्डलाभिनिःसृतामृतेन आप्लाविते पिण्डे शरीरे हृत्कमलस्थाम् अण्वीं सूक्ष्मां जीवकलां श्रीनारायणमूर्ति ध्यायेत् । कीदृशीम् । जीवः कला अंशो यस्यास्ताम् । पुनश्च अश्च उश्च मकारश्च नादो विन्दुश्च पञ्चमः इत्युक्तेः नादो ध्वनिः तदतिक्रमे सति विन्दौ आज्ञाचक्रे सिद्धैः योगेश्वरैः भाविताम् अनुभूताम् । एषा सम्प्रज्ञातसमाध्यवस्था उच्यते । गीतायां भगवतोक्ता ब्राह्मीं स्थितिरपि इयमेवं ॥ २२ ॥ आत्मभूतया चिन्तितया तया मूर्त्या पिण्डे देहे व्याप्ते प्रकाशिते सति तन्मयः सन् तां मानसोपचारैः सम्पूज्य पुनः अर्चादिषु प्रतिमादिषु तामेव आवाह्य स्थापन मुद्रया संस्थाप्य कृतन्यासं मां प्रपूजयेत् ॥२३॥ कथमित्याह–पाद्येति युग्मम् । धर्मादिभिः चतुर्भिः[1] नवभिश्च शक्तिभिः मम आसनं कल्पयित्वा तत्र अष्टदलं पद्मं च कृत्वा वेदतन्त्राभ्यां मह्यं पाद्यादीन् प्रकल्पयेत् सपर्ययेदित्यन्वयः । किमर्थम् । उभयसिद्धये भुक्तिमुक्तिसिद्धये स्वर्गापवर्गसिद्धये वा । उपस्पर्शः आचमनम् । अर्हणम् अर्घ्यम् ॥ २४ ॥ २५ ॥ आयुधादिपूजामाह सुदर्शनमिति–त्रिभिः सुदर्शनादि मुसलान्तान् आयुधानि अष्टदिक्षु पूजयेत् । कौस्तुभादीन् उरसि पूजयेत् । नन्दादीन् पार्षदान् अष्टदिक्षु गरुडं पुरतः दुर्गादीन् कोणेषु गुरुन् वामतः सुरान् इन्द्रादिलोकपालान् पूर्वादिदिक्षु प्रोक्षणपूर्वकमर्घ्यादिभिः पूजयेत् देवस्य अभिमुखे ॥ २६ ॥ २७ ॥ २८ ॥ उपचारान् निर्दिशति–चन्दनेति । उशीरं खस इति प्रसिद्धम् ॥ २९ ॥ मन्त्रा-नाह स्वर्णधर्मेत्यादि । महापुरुषविद्या जितं ते इत्यादि । पौरुषेण सहस्रशीर्षेत्यादिना । राजनादीनि सामानि इन्द्रं नरो–इत्यस्यामृचि गीतानि । आदिशब्देन रोहिणादीनि एतैः स्नापयेत् ॥३०॥ वस्त्रादिभिः मां यथोचितमलङ्कुर्वीत॥३१॥ सुमनसः पुष्पाणि । अक्षतान् तिलके न तु अर्चने । नाक्षतैरर्चयेद्विष्णुम् इति तन्निषेधात् । उपहार्यं

---

१. धर्मज्ञानवैराग्यैश्वर्यैः । विमलोत्कर्षणी ज्ञाना क्रिया योगा प्रह्वी सत्या ईशाना अनुग्रहा इति नवशक्तयः ।

अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् । अन्नाद्यगीतनृत्यादि पर्वणि स्युरुतान्वहम् ॥३४॥
विधिना विहिते कुण्डे मेखलागर्तवेदिभिः । अग्निमाधाय परितः समूहेत् पाणिनोदितम् ॥३५॥
परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि । प्रोक्षण्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत माम् ३६।
तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः । लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥३७॥
स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् । श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥३८॥
ध्यायन्नभ्यर्च्य दारूणि हविषाभिघृतानि च । प्रास्याज्यभागावाघारौ दत्त्वा चाज्यप्लुतं हविः ॥
जुहुयान्मूलमन्त्रेण षोडशर्चावदानतः । धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः ॥४०॥
अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् । मूलमन्त्रं जपेद् ब्रह्म स्मरन् नारायणात्मकम्॥४१॥
दत्त्वाऽऽचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् । मुखवासं सुरभिमत् ताम्बूलाद्यमथार्हयेत् ॥४२॥
उपगायन् गृणन् नृत्यन् कर्माण्यभिनयन् मम । मत्कथाः श्रावयञ्छृण्वन् मुहूर्तं क्षणिको भवेत् ।४३।
स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि । स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥४४॥
शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् । प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥४५॥

---

नैवेद्यम् ॥ ३२ ॥ गुडादीनि सूपान्तानि नैवेद्यं कल्पयेत् । गुडशब्देन गुडमिश्रितधान्यपदार्थाः सामान्यानां कृते । सर्पिः घृतं तत्सिक्तपदार्थाः (सूतफेनी, सोहनपपड़ी) प्रभृतयः । (पूड़ी मालपुआ, लड्डू हलुआ दहीबड़ा) सूपं मुद्गपाकः । एते च समृद्धानां कृते क्रमेणार्थैः विभवे सति ॥ ३३ ॥ अभिषेचनं पञ्चामृतस्नानम् । अन्नं च आद्यं च अन्यदपि भक्ष्यं भोज्यं च यत् किञ्चित अभिप्रेतं तच्च । आदर्शो दर्पणः उत अपि अन्वहम्॥३४॥ विधिना गृह्योक्तसूत्रेण । मेखलादिभिः उपलक्षिते कुण्डे अग्नि निधाय उदितं प्रज्वलितम् अग्नि पाणिना समूहेत् एकत्र कुर्यात् ॥३५॥ अथ पुनस्तं दर्भैः परिस्तीर्य आवृत्य कुशकण्डिकां कृत्वा ततो यथाविधि अन्वाधाय अन्वाधानसंज्ञकं कर्म व्याहृतिभिः समित्प्रेक्षणादिरूपं कृत्वा अग्नेरुत्तरतो होमोपयोगिद्रव्याणि निधाय प्रोक्षणींजलेन च पोक्ष्य अग्नौ मां भावयेत् चिन्तयेत् ॥३६॥ कथंभूतम् । जाम्बूनदप्रख्यं सुवर्णसदृशम् । शंखादिभिः लसन्तः चतुर्भुजा यस्य तम् । पद्मस्य किञ्जल्काः केसराः तद्वत् वाससी यस्य तम् । पुनश्च । स्फुरन्ति किरीटादीनि यस्य तम् ॥३७॥३८॥ एवंभूतं मां ध्यायन् हविषा घृतेन अभिघृतानि संसिक्तानि दारूणि समिधः अग्नौ प्रास्य प्रक्षिप्य आधारौ घृतक्षरणरूपौ आज्य भागौ दत्त्वा आज्यप्लुतं हविः मूलमन्त्रेण अष्टाक्षरेण जुहुयादित्युत्तरेणान्वयः । षोडश ऋचो यस्मिस्तेन तथा पुरुषसूक्तेन च अवदानतः पृथक् पृथक् आहुतिग्रहणेन । तृतीयार्थे तसिः । अवदीयतेऽवखण्डयते इत्यवदानं भेदस्तेन । तथा यथान्यायं पूजाक्रमेण मन्त्रैः स्वाहान्तै नाममन्त्रैः अग्नये स्विष्टकृते स्वाहा इति स्विष्टकृतं च जुहुयात् ॥३९॥४०॥ पार्षदेभ्यः नन्दादिभ्यःबलिं हरेत् समर्पयेत् । ब्रह्म स्मरन् मूलमन्त्रं जपेत् ॥४१॥ अन्ते आचमनं दत्त्वा उच्छेषं नैवशेषं पार्षदाय कल्पयेत समर्पयेत् । अथ पुनरपि अर्हयेत् पूजयेत पुष्पाञ्जलिना । ततः स्वयं भुञ्जीत ॥४२॥ गृणन् मन्नामानि । अभिनयन् स्वयमाविष्कुर्वन् क्षण[1] उत्सवः तेन दीव्यतीति क्षणिकः उत्सवमग्नो भवेत् ॥४३॥ उच्चावचैः बृहद्भिः लघुभिः । प्राकृतैः अनार्षैः स्तोत्रैः। हे भगवन् । प्रसीद इति दण्डवत् प्रणमेत् ॥ ४४ ॥ परस्परं प्रसारिताभ्यां बाहुभ्यां सहितमिति शेषः । मृत्युरेव ग्रहो ग्राहो

---

१. क्षण उद्धव उत्सवः । यद्वा । क्षणोऽस्यास्तीति क्षणिकः मत्वर्थीयष्ठक् ।

इति शेषां मया दत्तां शिरस्याधाय सादरम् । उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत् पुनः ॥४६॥
अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् । सर्वभूतेष्वात्मनि च सर्वात्माऽहमवस्थितः ॥४७॥
एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः । अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥४८॥
मदर्चां सम्प्रतिष्ठाप्य मन्दिरं कारयेद् दृढम् । पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान् ॥४९॥
पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम् । क्षेत्रापणपुरग्रामान् दत्त्वा मत्सार्ष्टितामियात् ॥५०॥
प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् । पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥५१॥
मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति । भक्तियोगं स लभते एवं यः पूजयेत माम् ॥५२॥
यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः । वृत्तिं स जायते विड्भुग् वर्षाणामयुतायुतम् ॥५३॥
कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च । कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम् ॥५४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे सप्तविंशोऽध्यायः ॥२७॥

---

यस्मिन् स संसारः स एव अर्णवः तस्मात् भीतमत एव प्रपन्नं शरणागतं मां पाहि ।४५। शेषां निर्माल्यम् । ज्योतिः प्रतिमास्थमुद्वास्यं नीयं चेत् तत् ज्योतिषि अन्तरात्मनि एव उद्वासयेत् विसर्जयेत् ॥ ४६ ॥ अर्चादिषु प्रतिमादिषु मत्त्वधिष्ठाने एव नियमः यतोऽहं सर्वात्मा सर्वत्रैव अवस्थितः ॥ ४७ ॥ एवं क्रियायोगपथैः कर्ममार्गैः उभयतः अत्र परत्र च सिद्धिं फलं विन्दति लभते ॥ ४८ ॥ मदर्चां मत्प्रतिमाम् । पूजाद्याश्रितान् क्षेत्रादीन् दद्यादिति शेषः ॥४९॥ प्रवाहार्थं निर्वाहार्थम् । मत्सार्ष्टितां मत्समानैश्वर्यमियात् प्राप्नुयात् ॥५०॥ सार्वभौमं चक्रवर्तित्वम् । सद्मना मन्दिरनिर्माणेन भुवनत्रयपतित्वम् । साम्यतां समशब्दात् स्वार्थे ष्यञ् ततस्तल् ॥५१॥ एवं यः पूजयते स भक्तियोगं लभते तेन च मां विन्दतीत्यन्वयः । नैरपेक्ष्येण निष्कामेन ॥ ५२ ॥ अयुतायुतं दशकोटीः । विड्भुक् विष्ठाभोजी कृमिः जायते ॥५३॥ कर्तुर्यत्फलं तदन्येषामपीत्याह-कर्तुरिति । कर्तुः सारथेः सहकारिणः हेतोः प्रेरकस्य अनुमोदकस्य च प्रेत्य मरणानन्तरं तत्फलं पूर्वोक्तं भवतीत्यन्वयः । यतस्ते कर्मणां फलभागिनः तत्रापि भूयसि कर्मणि सारथ्यादौ भूयोऽधिकं फलं भवति ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां सप्तविंशोऽध्यायः ॥२७॥

## अथाष्टाविंशोऽध्यायः

### श्रीभगवानुवाच

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् । विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च ॥१॥

---

अष्टाविंशेऽवदद्भूयो ज्ञानमद्वैतवादिनाम् ।
दर्शयन् तन्मतं कृष्णो युक्तियुक्तमविस्तरात् ॥ १ ॥

परेषां स्वभावान् शान्तघोरविमूढान् न गर्हयेत् न निन्देत् । विश्वम् एकात्मकं भगवद्रूपम् ॥ १ ॥

परस्वभावकर्माणि यः प्रशंसति निन्दति । स आशु भ्रश्यते स्वार्थादसत्यभिनिवेशतः ॥२॥
तैजसे निद्रयाऽऽपन्ने पिंडस्थो नष्टचेतनः । मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक् पुमान् ॥३॥
किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् । वाचोदितं तदनृतं मनसा ध्यातमेव च ॥४॥
छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः । एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥५॥
आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः । त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥६॥
तस्मान्न ह्यात्मनोऽन्यस्मादन्यो भावो निरूपितः । निरूपितेयं त्रिविधा निर्मूला भातिरात्मनि ।
इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥७॥
एतद् विद्वान् मदुदितं ज्ञानविज्ञाननैपुणम् । न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥८॥
प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा । आद्यन्तवदसज्ज्ञात्वा निस्सङ्गो विचरेदिह ॥९॥

उद्धव उवाच

नैवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः । अनात्मस्वदृशोरीश कस्य स्यादुपलभ्यते ॥१०॥
आत्माव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः । अग्निवद् दारुवदचित् देहः कस्येह संसृतिः ॥११॥

---

स्वार्थात् ज्ञानलक्षणात् । असति देहे अभिनिवेशतः अध्यासात् ॥ २ ॥ 'तैजसे राजसाहङ्कारकार्ये इन्द्रियगणे निद्रया आपन्ने ग्रस्ते सति पिण्डस्थो देहस्थो जीवः नष्टज्ञानः सन् मायां स्वप्नं मृत्युं सुषुप्तिं वा यथा प्राप्नोति तथा अयं पुमानपि संसारं मृत्युं च प्राप्नोतीत्यन्वयः । कथंभूतः । नाना र्थंविषयजालं पश्यतीति नानार्थदृक् द्वैताभिनिवेशो ॥ ३ ॥ अवस्तुनः मिथ्याभूतस्य द्वैतस्य मध्ये किमिष्टं कियद्वा अनिष्टं न किमपि न कियदपि । वाचा यत् उदितम् उक्तं मनसा यच्च ध्यातं तत्सर्वमनृतमेवेत्यर्थः ।४। छाया प्रतिबिम्बः । प्रत्याह्वः प्रतिध्वनिः । आभासः शुक्तिरजतादिः एते असन्तोऽपि मिथ्याभूता अपि अर्थकारिणो भवन्ति एवमेते भावा आमृत्युतः भयं प्रयच्छन्ति ।।५।। आत्मैव इदं विश्वं सृजति त्राति हरति इति कर्तृत्वम् । विश्वात्मा स स्वात्मनैव सृज्यते त्रायते ह्रियते इति कर्मत्वम् । ईश्वर इत्येनेन कारकनिरपेक्षत्वं प्रभुरित्यनेन सर्वसामर्थ्यं च द्योतितम् । अन्यस्मात् सृज्यादिव्यतिरिक्तात् आत्मनः अन्यो भावो न निरूपितः।६। आत्मनि जीवात्मनि इयं त्रिविधा आध्यात्मिकादिरूपा भातिः प्रतीतिः निर्मूला भ्रान्तिरूपैव इति विवेकिभिः निरूपिता । इदं गुणमयं गुणकार्यमत एव मायया कृतं विद्धीत्यन्वयः ।।७।। मदुदितं मदुक्तं एतत् नैपुण निष्कर्षं विद्वान् जानन् सूर्यवत् समो भूत्वा विचरति।८। प्रत्यक्षादिभिः प्रमाणैः एतत् विश्वमसत् ज्ञात्वा निःसङ्गः सन् विचरेदित्यन्वयः । तत्र प्रत्यक्षेण घटादीनामाद्यन्तवत्वात् । अनुमानेन यथा पृथिव्यादि आद्यन्तवत् दृश्यत्वात् घटादिवत् । यद्वा । पृथिव्यादि असत् सावयत्वात् घटादिवत् यन्नैवं तन्नैवं यथा आत्मेति । निगमेन वेदेन । नेह नानास्ति किञ्चनेति । तस्माद्वा एतस्मादात्मनः सकाशादाकाशः संभूतः इत्यादिश्रुतेराकाशादीनां जन्यत्वेन अनित्यत्वात् यज्जन्यं तद्विनाशीति व्याप्तेः । आत्मसंविदा आत्मविद्यया स्वानुभवेन सर्वं दृश्यम् आद्यन्तवत् उत्पत्तिविनाशवत् असच्चेति ज्ञात्वा आसक्तिरहितः सन् विचरेत् ॥ ९ ॥ द्रष्टा आत्मा जीवः दृश्यो देहः तयोः द्वयोरपि संसृतिर्न संभवेत् । तत्कुतः । अनात्मस्वदृशोः अनात्मा देहो जडः तस्य संसारदुःखाननुभवात् । स्वदृक् स्वतः सिद्धज्ञानवान् जीवः तस्यापि संसारासंभवात् तर्हि कस्य स्यात् न कस्यापि अथापि उपलभ्यते कोऽत्र हेतुः तं वदेति शेषः ।।१०।। अग्निवत् स्वयंज्योतिः आत्मा मायया अनावृतः । देहस्तु दारुवत् अचित् जडः अतः द्वयोर्मध्ये कस्य संसृतिः न कस्यापीत्यन्वयः ।।११।। यावत् देहादिभिः आत्मनः जीवस्य सन्निकर्षणः संबन्धः तावत् अपार्थः मिथ्याभूतोऽपि संसारः फलवान् स्फुरतीत्यर्थः । कुतः ।

श्रीभगवानुवाच

यावद् देहेन्द्रियप्राणैरात्मनः संनिकर्षणम् । संसारः फलवांस्तावदपार्थोऽप्यविवेकतः ॥१२॥

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते । ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥१३॥

यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् । स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥१४॥

शोकहर्षभयक्रोधलोभमोहस्पृहादयः । अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ॥१५॥

देहेन्द्रियप्राणमनोऽभिमानो जीवोऽन्तरात्मा गुणकर्ममूर्तिः ।
सूत्रं महानित्युरुधेव गीतः संसार आधावति कालतन्त्रः ॥१६॥

अमूलमेतत् बहुरूपरूपितं मनोवचःप्राणशरीरकर्म ।
ज्ञानसिनोपासनया शितेनच्छित्त्वा मुनिर्गां विचरत्यतृष्णः ॥१७॥

ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ।
आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥१८॥

यथा हिरण्यं स्वकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहस्य तद्वत् ॥१९॥

---

अविवेकतः स्वरूपाज्ञानात् । पञ्चम्यन्तः पाठ एव श्रीधरसम्मतः ॥ १२ ॥ अर्थे वस्तुनि अविद्यमानेऽपि संसृतिः न निवर्तते यतो विषयान् ध्यायतः । यथा स्वप्ने मिथ्याभूतेऽपि जनस्य अनर्थागमः व्याघ्रसर्पादिभयानुभवः शिरश्छेदादिर्वा ॥१३॥ यथा अप्रतिबुद्धस्य स्वप्नान् पश्यतः पुंसः प्रस्वापः स्वप्नः बहून् अनर्थान् व्याघ्रभयकम्पादीन् बिभर्तीति । स एव प्रस्वापः प्रतिबुद्धस्य प्राप्तजागरस्य मोहाय क्लेशाय नवै नैव कल्पते ॥ १४ ॥ शोकादयो जन्ममृत्यू च अहङ्कारस्यैव न तु आत्मनः ॥ १५ ॥ तर्हि अहङ्कारस्य संसारस्तस्यैव मुक्तिश्चेत्तत्राह देहेति । देहेन्द्रियादिषु अभिमानो यस्य स जीव एव तेषामन्तरात्मा अन्तर्गतो भूत्वा कालतन्त्रः कालप्रेरितः सन् संसारे आधावति प्रवर्तते इत्यन्वयः । अतस्तस्यैव संसारो मुक्तिश्च । स एव च सूत्रादिशब्दैः उरुधा बहुधा गीतो निरूपितो भवति । यतो गुणकर्ममयी मूर्तिर्यस्य । गुणाः सत्त्वादयः । कर्माणि पुण्यपापात्मकानि तैः आरब्धा मूर्तिर्यस्य सः । सूत्रं क्रियाशक्तिप्रधानम् । महान् महत्तत्त्वं ज्ञानशक्तिप्रधानम् ॥ १६ ॥ एतत् अहङ्करणं वस्तुतो मूलशून्यमेव अज्ञानंतस्तु बहुभिः देवादिरूपैः निरूपितं[1] गुरोः उपासनया भक्त्या शितेन तीक्ष्णीकृतेन ज्ञानखड्गेन छित्त्वा मुनिः गां भूमिं विचरेदित्यन्वयः । लिङर्थे लट् । कथंभूतम् । मन आदिभिः क्रियते संबध्यते तत् । अहं संकल्पयामि अहं वच्मीत्यादिप्रतीतेः । गामिति सप्तम्यर्थे द्वितीया । अतृष्णोऽनासक्तः ॥ १७ ॥ ज्ञानासिनेत्युक्ते तदेव ज्ञानमाह । ज्ञानमिति । तच्च ज्ञानं विवेक एवेत्यन्वयः । साधनानि आह निगमादीनि । निगमः उपनिषदादिश्रवणम् । तपः स्वधर्माचरणम् । मननं वा । प्रत्यक्षं स्वानुभवः । ऐतिह्यमुपदेशः । अनुमानं तर्कः । फलितार्थमाह । अस्य जगतः आद्यन्तयोर्यदस्ति केवलमेकमात्मतत्त्वं तदेव मध्येऽपि न तु जगत् । किं तत् । कालः कलयति प्रकाशयति यः तथा हेतुः कारणं च यत् तदेव । एतदुक्तं भवति । यदस्य विश्वस्य कारणं प्रकाशकं च ब्रह्म तदात्मकमेतत् जगत् न ततः पृथगित्येवं निश्चयकरो निगमादिसाधनैर्जायते यो विवेकस्तद् ज्ञानमिति भावः ॥ १८ ॥ यथा सुकृतं सुष्ठु कुण्डलादिरूपेण विरचितमपि हिरण्यमेव । हिरण्मयस्य कटककुण्डलादेः पुरस्तात् पश्चाच्च वर्तमानं यत् तदेव मध्येऽपि नानापदेशैः । कुण्डलादिनामभिः व्यवहार्यमाणं भवति

---

१. ऐन्द्रजालिकतुल्यं वा ।

विज्ञानमेतत्त्रियवस्थमङ्ग गुणत्रयं कारणकार्यकर्तृ ।
समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥२०॥
न यत् पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम् ।
भूतं प्रसिद्धं च परेण यद् यत्तदेव तत् स्यादिति मे मनीषा ॥२१॥
अविद्यमानोऽप्यवभासते यो वैकारिको राजससर्ग एषः ।
ब्रह्म स्वयंज्योतिरतो विभाति ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ॥२२॥
एवं स्फुटं ब्रह्मविवेकहेतुभिः परापवादेन विशारदेन ।
छित्त्वाऽऽत्मसंदेहमुपारमेत स्वानन्दतुष्टोऽखिलकामुकेभ्यः ॥२३॥
नात्मा वपुः पार्थिवमिन्द्रियाणि देवा ह्यसुर्वायुर्जलं हुताशः ।
मनोऽन्नमात्रं धिषणा च सत्त्वमहंकृतिः खं क्षितिरर्थसाम्यम् ॥२४॥
समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः ।
विक्षिप्यमाणैरुत किं नु दूषणं घनैरुपेतैर्विगतै रवेः किम् ॥२५॥

---

न चान्यत् सुवर्णमेव तद्वत् अहमपि अस्य विश्वस्य पुरस्तात् पश्चान्मध्येऽपि ॥ १९ ॥ आत्मस्वरूपपरिचयमाह— विज्ञानमिति त्रिस्रोऽवस्था[1] यस्य तत् एवंभूतं यत् विज्ञानं बुद्धितत्त्वं तथा तदवस्थाकारणभूतं गुणत्रयं यच्च तत्कार्यभूतं[2] कारणादित्रिविधात्मकं जगत् येन तुर्येण समन्वयद्वारा अनुगतं प्रकाशितं भवति व्यतिरेकतः समाध्यादौ च यदस्ति तदेव सत्यमात्मतत्त्वमित्यन्वयः अङ्गहे ।२०। यत् भूतं कार्यं पुरस्तात् नास्ति उत अपि पश्चात् नास्ति तत् मध्येऽपि नास्ति किन्तु व्यपदेशमात्रं वाचारम्भणमात्रम् । 'मृत्तिकेत्येव सत्यम्' इति न्यायात् । परेण कारणेन यत् भूतं जातं यत् प्रसिद्धं प्रकाशितं च तत् तदेव कारणात्मकमेव स्यात् इति मे मनीषा बुद्धेर्निश्चयः ॥ २१ ॥ योऽयं वैकारिकः सात्त्विकः तथा एष राजसः-तामसश्च सर्गः प्रागविद्यमानोऽपि इदानीमवभासते प्रकाशते कार्यभूतः सन् । ब्रह्म तु स्वयं स्वतः सिद्धं कारणरूपं न तु कार्यम् अतः इन्द्रियादिभिः चित्रं नानाविधं विश्वं ब्रह्मैव भातीत्यन्वयः । अर्थाः शब्दादयः । आत्मा मनः विकाराः पञ्चमहाभूतानि ॥ २२ ॥ एवं विवेक-हेतुभिः निगमादिभिः विशारदेन गुरुणा निमित्तभूतेन च परस्य देहादेरपवादेन आत्मत्वनिरासेन च ब्रह्म स्फुट-मनुभूतं भवतीति योज्यम् । अतः आत्मविषयं सन्देहं देहात् भिन्नोऽभिन्नो वा एको नैको वा स्वतन्त्रः परतन्त्रो वा आत्मा इति छित्वा स्वानन्दतुष्ट सन् कामुकेभ्यः विषयेभ्यः उपारमेत निवृत्तो भवेत् ॥२३॥ परापवादमेव निरूपयति वपुः आत्मा न भवति कुतः पार्थिवत्वात् घटवत् । इन्द्रियाणि तदधिष्ठातारो देवा धिषणा बुद्धिः सत्त्वं चित्तं अहङ्कृतिरित्येते आत्मा न भवन्ति । कुतः । अन्नमात्रम् अन्नापजीव्यत्वात् शरीरवत् । वायुः जलं हुताशः तेजः खं क्षितिरिति पञ्चभूतानि अर्थाः शब्दादयः अर्थसाम्यं प्रकृतिश्च आत्मा न जडत्वात् घटवत्इति हि शब्देन अनुमानान्तराणि सूचितानि तथाहि—देवा आत्मा न भवन्ति सात्त्विकाहङ्कारकार्यत्वात् । वायुर्नात्मा स्पर्श-वत्वात् घटवत् । जलं नात्मा शीतस्पर्शवत्त्वात् शीतलशिलावत् । हुताशो नात्मा उष्णस्पर्शवत्वात् आतपवत् धिषणा

---

१. 'जाग्रत्स्वप्नसुषुप्त्याख्याः । विज्ञायतेऽनेनेति विज्ञानम् । करणे ल्युट् । समन्वयेन तुरीयं त्रिषु संततम्' इति वचनेन । त्रियवस्थम् । व्याडिगालवयोर्मते न यणादेशः । कारणमध्यात्मम् इन्द्रियाणि, कार्यमधिभूतं शरीरम्, कर्तृ अधिदैवम् ।

यथा नभो वाय्वनलाम्बुभूगुणैर्गतागतैर्वर्तुगुणैर्न सज्जते ।
तथाक्षरं सत्त्वरजस्तमोमलैरहंमतेः संसृतिहेतुभिः परम् ॥२६॥
तथापि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु तावत् ।
मद्भक्तियोगेन दृढेन यावद् रजो निरस्येत मनःकषायः ॥२७॥
यथाऽऽमयोऽसाधुचिकित्सितो नृणां पुनः पुनः संतुदति प्ररोहन् ।
एवं मनोऽपक्वकषायकर्म कुयोगिनं विध्यति सर्वसङ्गम् ॥२८॥
कुयोगिनो ये विहितान्तरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ।
ते प्राक्तनाभ्यासबलेन भूयो युञ्जन्ति योगं न तु कर्मतन्त्रम् ॥२९॥
करोति कर्म क्रियते च जन्तुः केनाप्यसौ चोदित आनिपातात् ।
न तत्र विद्वान् प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या ॥३०॥
तिष्ठन्तमासीनमुत व्रजन्तं शयानमुक्षन्तमदन्तमन्नम् ।
स्वभावमन्यत् किमपीहमानमात्मानमात्मस्थमतिर्न वेद ॥३१॥

---

बुद्धिर्नात्मा करणत्वात् इन्द्रियवत् । चित्तं आत्मा न करणत्वात् बुद्धिवत् । अहङ्कृतिः आत्मा न जडत्वात् करणत्वाद्वा इन्द्रियवत् । इत्यनुमानानि बोध्यानि ॥ २४ ॥ मम सुष्ठु विविक्तं ज्ञातं धाम स्वरूपं येन तस्य पुंसः समाहितैः निश्चलैः करणैः इन्द्रियैः को गुणो भवेत् उत अपि विक्षिप्यमाणैः विषयासक्तैः चञ्चलैः किन्नु दूषणं भवेत् न किमपि । कथंभूतैः । गुणात्ममिः विषयाविष्टस्वभावैः । अत्र दृष्टान्तः । घनैः मेघैः उपेतैः समीपगैः आवृतं विगतैः दूरगैश्च अनावृतंश्च खे: किं न गुणदोषौ भवतः ॥ २५ ॥ जीवन्मुक्तस्तु ब्रह्मैव भवेद तस्तत्र न केऽपि गुणदोषा भवन्तीत्याकाशदृष्टान्तेनाह यथेति । यथा गतागतैः आगमापायिभिः वाय्वादिगुणैः ऋतुगुणैः शीतोष्णादिभिश्च नभो न सज्जते तथा अहंमतेः अहङ्कारात्परं अक्षरं ब्रह्मापि संसृतिकारणभूतैः विषयैः न पुज्यते न लिप्यते । वाय्वादीनां गुणाः शोषणदहनक्लेदनरजोधूसरत्वादयः ॥ २६ ॥ यद्यपि ज्ञानिनो विषयसम्बन्धेऽपि न गुणदोषौ भवतः तथापीत्याह । यद्यपि दृढेन भक्तियोगेन यावत् मनकषायः वासनारूपः रजः विषयासक्तिः न निरस्येत न निवर्तेत तावत् गुणेषु विषयेषु संगः परिवर्जनीयः इत्यन्वयः ॥ २७ ॥ यथा नृणाम् आमयो रोग असाधु असम्यक् चिकित्सितः पुनः पुनः प्ररोहन् उद्भवन् देहं सन्तुदति व्यथमति एवं मनः कतृ सर्वसंगं स्त्रीपुत्रादिषु सज्जमानं योगिनं विध्यति योगात् भ्रंशयतीत्यर्थः । कथंभूतं मनः । न पक्वा न दग्धाः कषाया कामादयः तन्मूलानि कर्माणि च यस्य तत् ॥ २८ ॥ त्रिदशोपसृष्टैः देवप्रेरितैः मनुष्यभूतैः शत्रुमित्रा- दिभिः ये कुयोगिनः अन्तरायैः विघ्नैः निहता भ्रंशिताः ते संस्कारबलेन भूयो जन्मान्तरेऽपि योगमेव युञ्जन्ति कुर्वन्ति न तु कर्मविस्तारम् ॥ २९ ॥ असौ जन्तुः जीवः केनापि संस्कारेण चोदितः प्रेरितः सन् आनिपातात् मरणपर्यन्तं कर्म करोति विक्रियते च लाभालाभादिना हर्षविषादादिरूपं विकारं च प्राप्नोति । विद्वांस्तु प्रकृतो देहे स्थितोऽपि देहनिर्वाहकं कर्म करोति न विक्रियते विकारं न प्राप्नोति नच संसरतीत्यर्थ स्वरूपानन्देन निवृत्ततृष्णत्वात् ॥ ३० ॥ ज्ञानी तु देहस्थोऽपि देहं नानुसन्धत्ते इत्याह तिष्ठन्तमिति । आत्मस्थमतिः ज्ञानी तु तत्तदवस्थापन्नम् आत्मानमपि न वेदत्यन्वयः उत अप्यर्थे । उक्षन्तं मूत्रयन्तम् । स्वभावप्राप्तमन्यदपि यत् किञ्चित् ईहमानं कुर्वन्तम् ॥३१॥ यदि कदाचित् समाधिभंगे सति मनीषी ज्ञानी

यदि स्म पश्यत्यसदिन्द्रियार्थं नानानुमानेन विरुद्धमन्यत् ।
न मन्यते वस्तुतया मनीषी स्वाप्नं यथोत्थाय तिरोदधानम् ॥३२॥

पूर्वं गृहीतं गुणकर्मचित्रमज्ञानमात्मन्यविविक्तमङ्ग ।
निवर्तते तत् पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा ॥३३॥

यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न तु सद् विधत्ते ।
एवं समीक्षा निपुणा सती मे हन्यात्तमिस्रं पुरुषस्य बुद्धेः ॥३४॥

एष स्वयंज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः ।
एकोऽद्वितीयो वचसां विरामे येनेषिता वागसवश्चरन्ति ॥३५॥

एतावानात्मसम्मोहो यद् विकल्पस्तु केवले । आत्मन्नृते स्वमात्मानमवलम्बो न यस्य हि ॥३६॥

यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् । व्यर्थेनाप्यर्थवादोऽयं द्वयं पण्डितमानिनाम् ॥३७॥

योगिनोऽपक्वयोगस्य युञ्जतः काय उत्थितैः । उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥३८॥

योगधारणया कांश्चिदासनैर्धारणान्वितैः । तपोमन्त्रौषधैः कांश्चिदुपसर्गान् विनिर्दहेत् ॥३९॥

---

नानाविधम् असदिन्द्रियार्थं विषयजालं पश्यति तथापि कार्यं कारणाभिन्नं पटवत् इत्यनुमानेन विरुद्धं बाधितं सत् अन्यत् आत्मव्यतिरिक्तं वस्तुतया न मन्यते यथा स्वप्नात् उत्थाय पुरुषः स्वाप्नं पदार्थजातं स्फुरितमपि वस्तुतया न मन्यते यतस्तत् स्वयमेव तिरोहितं भवति ॥ ३२ ॥ अङ्ग हे उद्धव । यदा पूर्वम् अज्ञानम् अज्ञानावस्था तदा गुणैः कर्मभिश्च चित्रं नानाविधं गृहीतं यदिदमात्मनि अविविक्तम् अभिन्नत्वेन देहादि तदिदं पुनः ईक्षया आत्मज्ञानेन निवर्तते आत्मा तु न केनापि गृह्यते नापि विसृज्यः विसृज्यते ॥ ३३ ॥ एतदेव दृष्टान्तेन स्पष्टयति । नृचक्षुषामावरकं तमोऽन्धकारं निवारयति न तु सत् घटपटादि विधत्ते रचयति । एवं निपुणा गुरुप्रसादाप्ता अत एव सती निश्चला मे समीक्षा विद्याशक्तिः बुद्धेः तमिस्रमज्ञानावरणं तन्मूलां संसृतिं च हन्यात् नाशयतीत्यर्थः ॥ ३४ ॥ आत्मनो निर्विकारतां दर्शयति । एष आत्मा स्वयंज्योतिः स्वयं प्रकाशवान् । वचसां विरामे शब्दातीतश्चशायां एकोऽद्वितीयः सजातीयविजातीयशून्यश्च येन ईषिता प्रेरिताः सर्वा वाचः असवः इन्द्रियाणि च चरन्ति स्वस्वकार्ये समर्था भवन्ति स आत्मैव अन्वेष्टव्य इति क्रियाशेषः । महती देशकालादिपरिच्छेदशून्या अनुभूतिः ज्ञानं यस्य । सकलं चराचरमनुभूतिविषयकं यस्य । एतेन सर्वज्ञत्वं सूचितम् ॥ ३५ ॥ केवलेऽद्वितीये आत्मन् आत्मनि विकल्पो भेद इति यत् एतावान् सर्वोऽपि आत्मसंमोहः मनसो भ्रम एव हि यतः स्वम् आत्मानम् ऋते विना यस्य विकल्पस्य अवलम्ब आश्रयोऽन्यो नास्ति । शुक्तिमधिष्ठानं विना यथा रजतस्य भ्रमादर्शनात् ॥३६॥ प्रत्यक्षादिसिद्धस्य प्रपञ्चस्य सत्यत्वं येमन्यन्ते तन्मतं निराकरोति । यदिति-नामभिः आकृतिभिः रूपैश्च सहितम् इन्द्रियैर्ग्राह्यं च पञ्चवर्णं पञ्चभूतात्मकं यत् द्वयं द्वैतं तत् अबाधितं सत्यमेवेति पण्डितमानिनां विचारशून्यानामेव मतं न तु पण्डितानां यतो विनापि अर्थेन वस्तुना अयम् अर्थं इति वादः कथनमात्रमेव नहि आद्यन्तवानर्थः सत्यो भवितुमर्हति आद्यन्तवदसज्ज्ञात्वा इति पूर्वोक्तेः ॥ ३७ ॥ योगिकक्रियायां स्थितस्य विघ्नप्रतीकारमाह–युञ्जतः योगाभ्यासं कुर्वतः पुंसः कायः यदि उत्थितैः उपसर्गैः रोगाद्युपद्रवैः विहन्येत आक्रान्तो भवेत् तत्रायं विधिः प्रतीकारो विहितः ॥ ३८ ॥ कांश्चित् सन्तापशैत्यादीन् सूर्यसोमादिधारणया । कांश्चित् वातादिरोगान् वायुधारणायुक्तैः आसनैः । कांश्चित् उपसर्गान् उपद्रवान् वातग्रहादीन् सर्पादिजन्यान् तपोमन्त्रादिभिः विनिर्दहेत् निवर्तयेत् ॥ ३९ ॥

कांश्चिन्ममानुध्यानेन नामसंकीर्तनादिभिः । योगेश्वरानुवृत्त्या वा हन्यादशुभदाञ्छनैः ।।४०।।

केचिद् देहमिमं धीराः सुकल्पं वयसि स्थिरम् । विधाय विविधोपायैरथ युञ्जन्ति सिद्धये ।४१।

नहि तत् कुशलादृत्यं तदायासो ह्यपार्थकः । अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ।।४२।।

योगं निषेवतो नित्यं कायश्चेत् कल्पतामियात् । तच्छ्रद्दध्यान्न मतिमान् योगमुत्सृज्य मत्परः ।४३।

योगचर्यामिमां योगी विचरन् मदपाश्रयः । नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ।।४४।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धेऽष्टाविंशोऽध्यायः ।। २८ ।।

---

कांश्चित् कामक्रोधादीन् । कांश्चित् अशुभदान् पतनोन्मुखान् दम्भमानादीन् योगेश्वरा ज्ञानिनः तेषांमनुवृत्त्या सेवया उपदेशेन वा ।। ४० ।। केचित् योगिनः इमं देहं सुकल्पम् इन्द्रियादिसामर्थ्योपेतं वयसि तारुण्ये स्थिरं विधाय सिद्धये परकायप्रवेशादिसिद्ध्यर्थं युञ्जन्ति मनः कुर्वन्ति ।। ४१ ।। किन्तु कुशलैः विवेकिभिः तत् आदृत्यमादरणीयं न भवति यतः तदायासः नश्वरदेहार्थमायासः अपार्थकः व्यर्थः । तत्र हेतुः । शरीरस्य अन्तवत्त्वात् विनाशित्वात् फलस्येव । वनस्पतिवत्तु आत्मैव स्थायी शरीरं तु फलवन्नश्वरम् । अतः आत्मलाभार्थमेव यत्नो विधेयः ।। ४२ ।। कल्पतां कायकल्पतां जरारोगादिरहिततताम् । तत् न श्रद्दध्यात् नेच्छेत् । योगं योगसिद्धिम् उत्सृज्य उपेक्ष्य मत्परः अहमेव परं मुख्यफलं यस्य तथाभूतो भवेत् ।। ४३ ।। इमाम् उक्तलक्षणां विचरन् कुर्वन् विघ्नैर्न विहन्येत किन्तु निःस्पृहः सन् आत्मसुखमनुभवतीति तथाभूतो भवतीत्यर्थः ।। ४४ ।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यामष्टाविंशोऽध्यायः ।

## अथैकोनत्रिंशोऽध्यायः

### उद्धव उवाच

सुदुश्चरामिमां मन्ये योगचर्यामनात्मनः । यथाञ्जसा पुमान् सिद्ध्येत् तन्मे ब्रूह्यञ्जसाच्युत ।।१।।

प्रायशः पुण्डरीकाक्ष युञ्जन्तो योगिनो मनः । विषीदन्त्यसमाधानान्मनोनिग्रहकर्शिताः ।।२।।

अथात आनन्ददुघं पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन ।
सुखं नु विश्वेश्वर योगकर्मभिस्त्वन्माययामी विहता न मानिनः ।। ३ ।।

---

ऊनत्रिंशे तु तज्ज्ञानं तुच्छीकृत्यात्र पृष्टवान् ।
सुखोपायं तदा प्राह हरिर्भक्तिपथान् शुभान् ।। १ ।।

अनात्मनः विषयासक्तस्य इमामुक्तलक्षणां योगचर्यां ज्ञाननिष्ठाम् सुदुष्करां मन्ये यथा पुमान् अञ्जसा अनायासेन सिद्ध्येत् मुच्येत मोक्षं प्राप्नुयात् तथा अञ्जसा स्फुटं मे मह्यं ब्रूहीत्यन्वयः ।।१।। मनो युञ्जन्तः निगृह्णन्तः असमाधानात् हेतोः विषीदन्ति क्लिश्यन्तीत्यन्वयः । कर्शिताः परिश्रान्ताः । प्रायशः इत्यनेन भक्तिप्रधानतया न विषीदन्तीत्यर्थः ।। २ ।। यस्मात् विषीदन्ति अथातः अत एव हे विश्वेश्वर हंसाः सारासारविवेकिनः सुखं यथा भवति तथा नु निश्चितं ते पदाम्बुजं श्रयेरन् सेवन्ते । अमी तु त्वन्मायया विहता आक्रान्ता भवन्ति । ते के । ये योगकर्मभिः मानिनः सन्तः न श्रयन्ते ते । आनन्ददुघमानन्दपूरकम् । दुह प्रपूरणे धातुः ।। ३ ।।

किं चित्रमच्युत तवैतदशेषबन्धो दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ।
योऽरोचयत् सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः ॥४॥
तं त्वाखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद् विसृजेत को नु ।
को वा भजेत् किमपि विस्मृतयेऽनु भूत्यै किं वा भवेन्न तव पादरजोजुषां नः ॥५॥
नैवोपयन्त्यपचितिं कवयस्तवेश ब्रह्मायुषापि कृतमृद्धमुदः स्मरन्तः ।
योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ॥६॥

श्रीशुक उवाच

इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ।
गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेम मनोहरस्मितः ॥ ७ ॥

श्रीभगवानुवाच

हन्त ते कथयिष्यामि मम धर्मान् सुमङ्गलान् । याञ्छ्रद्धयाऽऽचरन् मर्त्यो मृत्युं जयति दुर्जयम् ।८।
कुर्यात् सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् । मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥९॥
देशान् पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान् । देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥१०॥
पृथक्सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् । कारयेद् गीतनृत्याद्यैर्महाराजविभूतिभिः ॥११॥

---

हे अच्युत । दासेषु तव यत् आत्मसात्त्वं तदधीनत्वं तदेतत् किं चित्रम् आश्चर्यं नेत्यर्थः । यतो यो भवान् रामरूपेण मृगैः सह सख्यमिति शेषः अरोचयत् । स्वयं तु कथंभूतः । ईश्वराणां ब्रह्मादीनां श्रीमद्भिः किरीटतटैः मुकुटाग्रभागैः पीडितमभिष्टुतं पादपीठं यस्य सः । कथंभूतेषु । अनन्यशरणेषु नास्ति त्वत्तोऽन्यत् शरणमाश्रयो येषां तेषु दासेषु ॥ ४ ॥ तमेवंभूतं त्वा त्वां को नु पुमान् विसृजेत् त्यजेत् न कोऽपीत्यन्वयः । कथंभूतः । स्वकृतवित् स्वस्मिन् स्वेषु बलिप्रह्लादादिषु वा कृतमुपकारमनुग्रहं वा वेत्तीति तथा । कथंभूतम् । अखिलस्य जगतः आत्मानं चेतयितारं दयितं प्रियं च । पुनश्च । आश्रितानां भक्तानां सर्वार्थदं चतुर्वर्गप्रदम् । किञ्च । यत् केवलं भूत्यै ऐश्वर्याय भवति अनु अनन्तरं तव विस्मृतये च भवति तत् किमपि देवतान्तरं को वा भजेत् न कोऽपीत्यर्थः । तत्र हेतुमाह—तव पादरजोजुषां नः किं वा न भवेत् सर्वं सुलभमेवेत्यर्थः ॥ ५ ॥ उपकारमेवाह—यो भवान् बहिः आचार्यवपुषा गुरुरूपेण अन्तश्च चैत्यवपुषा अन्तर्यामिरूपेण तनुभृतामन्तर्बहिः स्थित्वा अशुभं विषयवासनां विधुन्वन् निरस्यन् स्वगतिं व्यनक्ति निजं रूपं प्रकटयति तस्य तव अपचितिं प्रत्युपकारमानृण्यमिति यावत् कवयः ब्रह्मायुषापि नैव उपयन्ति नैव प्राप्नुवन्ति । कृतमुपकारं स्मरन्तः । अत एव कृतज्ञत्वात् ऋद्धमुदः बर्धितानन्दाः सन्तः ॥६॥ इति उद्धवेन पृष्टः श्रीकृष्णः उद्धवं प्रति सप्रेम सस्नेहं यथा स्यात्तथा जगादेत्यन्वयः कथंभूतः । जगत् क्रीडनकं क्रीडासाधनं यस्य । पुनश्च । स्वशक्तिभिः रजआदिभिः गृहीतं मूर्तित्रयं ब्रह्मादिरूपं येन सः । ईश्वरा ब्रह्मादयः तेषाम् ईश्वरो नियन्ता । मनोहरं चित्ताकर्षकं स्मितं मन्दहास्यं यस्य सः ॥७॥

हन्तेति सानुकम्पसंबोधने । सुमङ्गलान् सुखसाध्यान् । मृत्युं संसारम् ॥ ८ ॥ मां स्मरन् शनकैरिति चित्ताव्यग्रतया मदर्थं मत्प्रीत्यर्थम् । मयि अर्पितं मनो यैस्तेषु भक्तेषु चित्तं यस्य सः । मद्धर्मेषु भागवतधर्मेषु आत्मनः स्वमनसः रतिः अनुरागो यस्य सः ॥ ९ ॥ मद्भक्ताः प्रह्लादादयः तेषामाचरितानि आचारान् आश्रयेत् अनुसरेत् ॥ १० ॥ पर्व एकादश्यादि, यात्रा विशिष्टसमागमः महोत्सवो होलिकादिः । शक्तिसत्त्वे पृथक् ।

मामेव सर्वभूतेषु बहिरन्तरपावृतम् । ईक्षेतात्मनि चात्मानं यथा खममलाशयः ॥१२॥
इति सर्वाणि भूतानि मद्भावेन महामते । सभाजयन् मन्यमानो ज्ञानं केवलमाश्रितः ॥१३॥
ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके । अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः ॥१४॥
नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् । स्पर्धासूयातिरस्काराः साहंकारा वियन्ति हि ।१५।
विसृज्य स्मयमानान् स्वान् दृशं व्रीडां च दैहिकीम् । प्रणमेद् दण्डवद् भूमावाश्वचाण्डालगोखरम्॥
यावत् सर्वेषु भूतेषु मद्भावो नोपजायते । तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥१७॥
सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया । परिपश्यन्नुपरमेत् सर्वतो मुक्तसंशयः ॥१८॥
अयं हि सर्वकल्पानां सध्रीचीनो मतो मम । मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥१९॥
न ह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि । मया व्यवसितः सम्यङ्निर्गुणत्वादनाशिषः ॥२०॥
यो यो मयि परे धर्मः कल्प्यते निष्फलाय चेत् । तदायासो निरर्थः स्याद् भयादेरिव सत्तम ॥२१॥

---

अन्यथा सत्रेण साहाय्येन मिलित्वेत्यर्थः विभूतयः छत्रचामराद्याः ॥ ११ ॥ अन्तरङ्गां भक्तिमाह त्रिभिः । अमलाशयः शुद्धचित्तः सन् सर्वभूतेषु आत्मनि च मामेव ईक्षेतेत्यन्वयः । कथंभूतम् । आकाशमिव बहिरन्तश्च व्याप्तम् । अपावृतमावरणशून्यं च ॥ १२ ॥ इति इत्थं केवलं वैषम्यरहितं ज्ञानं ज्ञानदृष्टिमाश्रितः सन् सर्वाणि भूतानि मद्भावेन मदभेदेन मन्यमानः सभाजयन् सत्कुर्वंश्च सन् यो वर्तेत स पण्डितो मत इति द्वयोरन्वयः । एतेषु विषमेष्वपि यः समदृक् स पण्डित इति योज्यम् । ब्राह्मणे पुल्कसे इति जातितो वैषम्यम् । स्तेने ब्रह्मस्वहारिणि ब्रह्मण्ये ब्राह्मणेभ्यो दातरि इति कर्मतः । अर्के स्फुलिङ्गके इति प्रकाशरूपगुणतः स्फुलिङ्गोऽग्निकणः । अक्रूरे शान्ते क्रूरके चेति स्वभावतः । समं पश्यतीति समदृक् । पुल्कसोऽन्त्यजः ॥ १३ ॥ ॥ १४ ॥ अभीक्ष्णं नित्यं मद्भावं मद्दृष्टिं भावयतः कुर्वतः पुंसः शीघ्रं स्पर्धादयः वियन्ति नश्यन्ति । समे स्पर्धा । उत्तमे असूया । हीने तिरस्कारः । असूया गुणेषु दोषारोपः ॥ १५ ॥ स्मयमानान् हसतः[1] स्वान् सखीन् दृशमुच्चनीचदृष्टिं तथा दृशा या व्रीडा तां च विसृज्य श्वादीनभिव्याप्य सर्वान् प्रणमेत् दण्डवत् भूमौ पतित्वेति योज्यम् ॥ १६ ॥ मद्भावः मम भावना । वाग्वृत्तिः हरये नम इत्युच्चारणम् । मनोवृत्तिः सर्वत्र ईश्वरान्वीक्षा[2] कायवृत्तिः दण्डवत् प्रणामादिः । यावत् न उप आधिक्येन जायते स्वाभाविको न भवेदित्यर्थः तावदेवमुपासीत ॥ १७ ॥ ततश्च आत्ममनीषया सर्वत्रेश्वरदृष्ट्या या विद्या उपासना तया तस्य सर्वं ब्रह्मात्मकं भवति एव परिपश्यन् सर्वतो ब्रह्मैव पश्यन् मुक्तसंशयः सन् सर्वतः क्रियामात्रात् कायिकव्यापारात् उपरमेत् निवृत्तो भवतीत्यर्थः ॥ १८ ॥ अयं हि अयमेव सर्वकल्पानां सर्वोपासनानां सध्रीचीनः समीचीनो मतः अभिमतः । कः । सर्वत्र मद्भावः मम भावना ॥ १९ ॥ अङ्ग हे । यद्वा । मद्धर्मस्य भक्तिलक्षणस्य अङ्गस्यापि वा उपक्रमे प्रारम्भे सति निर्गुणत्वात् हेतोः अणुरपि सम्यक् पूर्णो भवति वैगुण्याभावात् न च तस्य ध्वंसोऽपि इति अनाशिषो निष्कामभक्तस्यार्थे मयैव व्यवसितः निर्णीतः नात्र प्रमाणं प्रष्टव्यमित्यर्थः ॥२०॥ आस्तां तावत् ध्वंसवार्ता यतो लौकिकोऽपि यो निरर्थक आयासः भोजनगमनादिरूपः मयि निष्फलाय निष्कामतया अर्पितश्चेत् तर्हि सोऽपि धर्म एव स्यात् यथा कंसादौ भयादेरप्यासो व्यर्थो न मोक्षसम्पादकत्वात् । यद्वा । यो मयि अर्पितः सोऽपि अनिष्फलाय फलदानायं कल्पते समर्थो भवतीत्यर्थः । भयादेरिति कंसस्य भयं गोपीनां

---

१. अहो महानपि अयमतिनीचं प्रणमतीति ।
२. 'ईश्वरो' जीवकलया प्रविष्टो भगवानिति ।

एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् । यत् सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम् ॥२२॥
एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रहः । समासव्यासविधिना देवानामपि दुर्गमः ॥२३॥
अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् । एतद् विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥२४॥
सुविविक्तं तव प्रश्नं मयैतदपि धारयेत् । सनातनं ब्रह्मगुह्यं परं ब्रह्माधिगच्छति ॥२५॥
य एतन्मम भक्तेषु सम्प्रदद्यात् सुपुष्कलम् तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना ॥२६॥
य एतत् समधीयीत पवित्रं परमं शुचि । स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ।२७॥
य एतच्छ्रद्धया नित्यमव्यग्रः शृणुयान्नरः । मयि भक्तिं परां कुर्वन् कर्मभिर्न स बध्यते ॥२८॥
अप्युद्धव त्वया ब्रह्म सखे समवधारितम् । अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥२९॥
नैतत्त्वया दाम्भिकाय नास्तिकाय शठाय च । अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥३०॥
एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च । साधवे शुचये ब्रूयाद् भक्तिः स्याच्छूद्रयोषिताम् ॥
नैतद् विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते । पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥३२॥
ज्ञाने कर्मणि योगे च वार्तायां दण्डधारणे । यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः ॥३३॥

---

कामः शिशुपालादीनां द्वेषश्च सफलो जातः॥२१॥ बुद्धिमतां विवेकिनां बुद्धिः विवेकः। मनीषिणां चतुरपुरुषाणां मनीषा चातुर्यम् । मनीषा बुद्धिदाक्ष्ययोः इति निरुक्तिः । यत् यस्मात् अमृतेन अनित्येन मर्त्येन मरणधर्मकेण देहेन अमृतं मरणरहितं मोक्षस्वरूपं मां प्राप्नोति॥२२॥ एष ब्रह्मवादस्य वेदान्तस्य संग्रहः निष्कर्षः ते तुभ्यं कथितः समासः संक्षेपः व्यासो विस्तरः ॥२३॥ एतत् आत्मज्ञानम् । अभीक्ष्णशः पौनःपुन्येन । मुच्यते जीवन्मुक्तो भवतीत्यर्थः । लडर्थे लिङ् ॥ २४ ॥ सुविविक्त सुष्ठु दत्तोत्तरम् । ब्रह्मगुह्यं वेदान्तरहस्यम् । यद्वा । ब्रह्मगुह्यं परब्रह्म मामित्यर्थः । गूढं परंब्रह्म मनुष्यलिङ्गम् इति नारदोक्तेः ॥ २५ ॥ सुपुष्कलं यावत् अपेक्षितं तावत् विस्तृतं वा । यो दद्यात् तस्य ब्रह्मदायस्य ज्ञानोपदेष्टुः चतुर्थ्यर्थे षष्ठी । अहमात्मना स्वयमेव आत्मानं ददामि तद्वशीभवामि । ब्रह्मैव दायः पितृधनमिव दायो भागो यस्य । यद्वा । ब्रह्मद ज्ञानद आयो लाभो यस्य । ब्रह्म ददातीति वा । ब्रह्मणि दायो यस्येति विश्वनाथः ॥२६॥ एतत् ब्रह्मज्ञानं सम्यक् अर्थसहितं यः पठेत् स आत्मानं पूयेत पवित्रीकुर्यात् । किं कुर्वन् सन् । ज्ञानदीपेन ज्ञानोपदेशेन अहरहः प्रतिदिन मां दर्शयन् जनतां प्रति बोधयन् उपदिशन्नित्यर्थः । पवित्रयतीति पवित्रम् । पवित्रशब्दात् तत्करोतीति णिजन्तादच् ॥२७॥ परां प्रेमलक्षणाम् । 'सा परानुरक्तिरीश्वरे इति शाण्डिल्यसूत्रोक्ता ॥ २८ ॥ अपि किं संभावनायाम् । समवधारितं सम्यग्ज्ञातम् । मोहः देहाद्यध्यासलक्षणः । शोकः तापत्रयजन्यः ॥ २९ ॥ दाम्भिकाय धर्मध्वजाय मिथ्यानुष्ठानप्रदर्शकाय । शठाय वञ्चकाय अशुश्रूषवे अश्रद्धया शृण्वते । न दीयतां नोपदेष्टव्यमित्यर्थः ॥ ३० ॥ शूद्राणां योषितां च यदि भक्तिः स्यात् तदा तेभ्यः ताभ्यश्च ब्रूयादेव ॥ ३१ ॥ पीयूषं पीयूषाख्यम् । स्वादु वा । यद्वा । एतत् पीयूषं ज्ञानामृतं पीत्वा अन्यत् अमृतं नावशिष्यते न रोच्यत इत्यर्थः ॥ ३२ ॥ ज्ञानादौ यावानर्थः फलं मोक्षादिः चतुर्विधः तावान् सर्वोऽपि ते तव भक्तस्य अहमेव[1] भवामि तं तमर्थं सर्वमहमेव ददामि । तत्र ज्ञाने मोक्षः कर्मणि विहिते धर्मः योगेऽणिमादिलक्षणः कामः । वार्तायां कृष्यादौ दण्डधारणे च

---

१. यथा मृत्युपलायनं व्यर्थं तस्यावश्यंभावित्वात् यथा च बन्धुमरणे शोकात् आक्रन्दनं व्यर्थं मृतस्य जीवनासंभवात् ।

मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ।
तदामृतत्वं प्रतिपद्यमानो मयाऽऽत्मभूयाय च कल्पते वै ॥३४॥

श्रीशुक उवाच

स एवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचो निशम्य ।
बद्धाञ्जलिः प्रीत्युपरुद्धकण्ठो न किंचिदूचेऽश्रुपरिप्लुताक्षः ॥३५॥
विष्टभ्य चित्तं प्रणयावघूर्णं धैर्येण राजन् बहु मन्यमानः ।
कृताञ्जलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविन्दम् ॥३६॥

उद्धव उवाच

विद्रावितो मोहमहान्धकारो य आश्रितो मे तव संनिधानात् ।
विभावसोः किं नु समीपगस्य शीतं तमो भीः प्रभवन्त्यजाद्य ॥३७॥
प्रत्यर्पितो मे भवतानुकम्पिना भृत्याय विज्ञानमयः प्रदीपः ।
हित्वा कृतज्ञस्तव पादमूलं कोऽन्यत् समीयाच्छरणं त्वदीयम् ॥३८॥
वृक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यन्धकसात्वतेषु ।
प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना ॥३९॥
नमोऽस्तु ते महायोगिन् प्रपन्नमनुशाधि माम् । यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनी ॥४०॥

---

अर्थः ॥ ३३ ॥ यदा मर्त्यः त्यक्तकाम्यकर्मा सन् मे मह्यं निवेदितात्मा भवति तदा मे इत्यावृत्त्यान्वेति विचिकीर्षितो विशिष्टः कर्तुमिष्टो भवति । कुतः । तदा अमृतत्वं प्रतिपद्यमानः मोक्षाधिकारी सन् मया हेतुभूतेन आत्मभूयाय मत्समानैश्वर्याय कल्पते योग्यो भवति ॥३४॥ एवम् आदर्शितः प्रदर्शितः योगमार्गः स्वसंयोगमार्गः भक्तिमार्गो वा यस्मै स उद्धवः श्रीकृष्णवचो निशम्य प्रीत्या प्रेम्णा निरुद्धकण्ठः सन् न किञ्चित् ऊचे तूष्णीं बभूवेत्यर्थः । अश्रुभिः परिप्लुते व्याप्ते अक्षिणी यस्य ॥ ३५ ॥ अत्र उद्धव इति विशेष्यमध्याहार्यम् । उद्धवः शीर्ष्णा तच्चरणारविन्दं स्पृशन् कृताञ्जलिः सन् यदुप्रवीरं श्रीकृष्णं प्राहेत्यन्वयः । किं कुर्वाणः । धैर्येण चित्तं विष्टभ्य निरुध्य आत्मानं बहु कृतार्थं मन्यमानः । प्रणयेन प्रेम्णा अवघूर्णं विह्वलं चित्तविशेषणम् ॥ ३६ ॥ हे अज हे आद्य । यद्वा । अजाद्य ब्रह्मणो जनक । यः पूर्वं मोहरूपी महान्धकारः देहाध्यासलक्षणः मे मया आश्रितः स तव सन्निधानात् उपदेशाद् वाविद्रावितः पलायितः निवृत्त उचितं चैतत् नु अहो विभावसोः अग्नेः समीपगस्य पुंसः किं शीतादयः बाधाय प्रभवन्ति समर्था भवन्ति न भवन्ती त्यर्थः । भीः भयम् ॥३७॥ कथं निवृत्तस्तत्राह——अनुकम्पिना दयालुना भवता भृत्याय मे मह्यं प्रदीपः प्रत्यर्पितः अतः त्वदीयं पादमूलं हित्वा को वा तव कृतज्ञः पुमान् अन्यत् शरणं समीयात् गच्छेत् न कोऽपीत्यन्वयः । कृतमुपकारं जानातीति कृतज्ञः ॥३८॥ सृष्टिविवृद्धये मायया दाशार्हादिषु मे सुदृढः यः स्नेहपाशः प्रसारितः त त्वयैव आत्मसुबोधहेतिना ज्ञानखड्गेन वृक्णः संछिन्नः । ओवृश्चू छेदने धातुः । दशार्हो नाम कश्चन राजा यदुवंशीयः ॥ ३९ ॥ यथा त्वच्चरणाम्भोजे अनपायिनी अवियोगिनी रतिः स्यात् तथा प्रपन्नं शरणागतं माम् अनुशाधि अनुशिक्ष

---

१. या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये ।
तथा विना तदाप्नोति नारायणपरायणः ॥ इत्युक्तेः ।

श्रीभगवानुवाच

गच्छोद्धव मयाऽऽदिष्टो बदर्याख्यं ममाश्रमम् । तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ॥४१॥

ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः । वसानो वल्कलान्यङ्ग वन्यभुक् सुखनिःस्पृहः ॥४२॥

तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः । शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः ॥४३॥

मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन् । मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ।
अतिव्रज्य गती स्तस्रो मामेष्यसि ततः परम् ॥४४॥

श्रीशुक उवाच

स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः ।
शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिञ्चदद्वन्द्वपरोऽप्यपक्रमे ॥४५॥

सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः ।
कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनः पुनः ॥४६॥

ततस्तमन्तर्हृदि संनिवेश्य गतो महाभागवतो विशालाम् ।
यथोपदिष्टां जगदेकबन्धुना तपः समास्थाय हरेरगाद् गतिम् ॥४७॥

---

येत्यन्वयः ॥ ४० ॥ गच्छेति सार्द्धचतुष्कम् । अङ्ग हे उद्धव । मया आदिष्टः त्वं बदरिकाश्रमं गच्छ तत्र मत्पादतीर्थोदे अलकनन्दाजले स्नानादिभिः शुचिर्भूत्वा वल्कलवस्त्राणि धारयन् द्वन्द्वमात्राणां शीतोष्णादिविषयाणां तितिक्षुः सहनशीलः भत्तो यत् ते त्वया शिक्षितं तत् विविक्तमेकान्ते अनुभावयन् चिन्तयन् मद्धर्मनिरतो भव ततः परं मामेष्यसीति चतुर्णामेवान्वयः । तिस्रः गतीः सात्त्विकादीः अतिव्रज्य अतिक्रम्य । कथंभूतः । अलकनन्दा गंगा तस्याः ईक्षया दर्शनेन विधूतं निवृत्तमशेषकल्मषं यस्य । वने भवं वन्यं कन्दमूलादि तत् भुङ्क्ते इति वन्यभुक् । समाहितधिया चित्तैकाग्र्येण अनुभावयन्नित्यत्रान्वेति ॥४१॥४२॥४३॥४४॥ हरिमेधसा भगवता एवमुक्तः उद्धवः प्रदक्षिणं यथा भवति तथा तं परिसृत्य परिक्रम्य अपक्रमे गमनसमये अश्रुबिन्दुभिः तत्पादौ अध्यषिञ्चदित्यन्वयः । तत्पादयोः शिरो विधाय । कथंभूतः । अद्वन्द्वपरोऽपि हर्षविषादरहितोऽपि । हरति यद्विषयिणी मेधाः संसारमिति हरिमेधास्तेन । हरति मेधाः संसारं यस्य चरणनिष्ठा ॥ ४५ ॥ उद्धवः भर्तृपादुके मूर्ध्नि बिभ्रत् पुनः तं नमस्कृत्य कृच्छ्रं क्लेशपूर्वकं यथा स्यात्तथा बदरिकाश्रमं ययौ इत्यन्वयः । किं कुर्वन् सन् । तं परिहातुमशक्नुवन् अत एव आतुरो दीनः सन् । कथंभूतः । सुदुस्त्यजः स्नेहो यस्मिन् तेन भगवता यो वियोगस्तस्मात् कातरो भीतः ॥ ४६ ॥ ततो गमनोत्तरम् । तं श्रीकृष्णं हृदि सन्निवेश्य स्थिरीकृत्य विशालां[1] बदरिकाश्रमं ययौ । तत्र तपः[2] निदिध्यासनं समास्थाय आश्रित्य भगवता यथोपदिष्टां तां हरेः गतिं सामीप्यमुक्तिम् अगात् प्राप्तवान् । मामेष्यसीत्युक्तेः ॥ ४७ ॥ कृष्णेन उद्धवाय

---

१. विशालेन नृपतिना यतस्तप्तं पुरा तपः ।
अतो विशाला सा प्रोक्ता बदरीवनमेदिनी ॥

२. तप् आलोचने धातुः ।

य एतदानन्दसमुद्रसम्भृतं ज्ञानामृतं भागवताय भाषितम् ।
कृष्णेन योगेश्वरसेविताङ्घ्रिणा सच्छ्रद्धयाऽऽसेव्य जगद् विमुच्यते ॥४८॥
भवभयमपहन्तुं ज्ञानविज्ञानसारं निगमकृदुपजह्रे भृङ्गवद् वेदसारम् ।
अमृतमुदधितश्चापाययद् भृत्यवर्गान् पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोऽस्मि ॥४९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

भाषितमुपदिष्टम् एतद् ज्ञानामृतं यः पुमान् श्रद्धया आसेव्य ईषदपि सेवित्वा वर्तते तत्सम्बन्धात् जगद् विमुच्यते किं पुनः स विमुच्यते इत्यर्थः । यद्वा जगत् जङ्गममात्रमपि विमुच्यते किं पुनः विशिष्टो जनः । कथंभूतम् । आनन्दसमुद्रो भक्तियोगः तेन सम्भृतं परिपूर्णम् । 'भवन्त आनन्दसमुद्रमग्नाः' इत्युक्तेः । यद्वा । सम्भृतं परिपुष्टम् । डुभृञ् धारणपोषणयोः धातुः । योगेश्वरैः सनकादिभिः सेवितौ अङ्घ्री यस्य तेन कृष्णेन ॥४८॥ यो निगमकृत् वेदकर्ता भगवान् निवृत्तानां संसारं प्रवृत्ताना च भयं जरारोगादि तद् द्वयम् अपहन्तुं दूरीकर्तुं अमृतद्वयमुपजह्रे उद्धृतवान् तमाद्यं पुरुषऋषभं पुरुषोत्तमं नतोऽस्मीति सम्बन्धः । तदेवाह-वेदसारमेकम् । किं तद् । ज्ञानविज्ञानरूपम् । अत्र दृष्टान्तः भृङ्गवत् यथा भृङ्गः पुष्परसम् । द्वितीयममृतंमुदधितः समुद्राच्च तत् द्वयं क्रमेण भृत्यवर्गान् अपाययत् निवृत्तानां वेदसाररूपम् । प्रवृत्तानां च समुद्रोत्थम् । निगमकृद् यस्य निःश्वसितं वेदाः इति श्रुतेः । आद्यमनादिम् । मालिनीवृत्तम् ।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यामेकोनत्रिंशोऽध्यायः ॥२९॥

## अथ त्रिंशोऽध्यायः

### राजोवाच

ततो महाभागवत उद्धवे निर्गते वनम् । द्वारवत्यां किमकरोद् भगवान् भूतभावनः ॥ १ ॥
ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः । प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥ २ ॥
प्रत्याक्रष्टुं नयनमबला यत्र लग्नं न शेकुः कर्णाविष्टं न सरति ततो यत् सतामात्मलग्नम् ।
यच्छ्रीर्वाचां जनयति रतिं किं नु मानं कवीनां दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥

---

त्रिंशे गन्तुं स्वकं धाम मौसलव्यपदेशतः ।
यादवाऽन्योन्यसंघर्षात् संजहार कुलं हरिः ॥ १ ॥

भूतानि भावयतीति भूतभावनः कर्ता पालकः संहर्ता च ॥ १ ॥ ब्रह्मशापेन उपसंसृष्टे उपसंहृते सति । प्रेयसीं प्रियतमां तनुं स कथमत्यजत् इति तनुत्यागो न व्याख्येयः आदायान्तर्धाद्यस्तु स्वबिम्बं लोकलोचनम् इत्युक्ति र्व्याकुप्येत । तथा च यस्य पृथिवी शरीरमिति श्रुतेः तनुं पृथ्वीं द्वारकाख्यमित्यर्थं इति व्याख्येयम् ॥२॥ यत्र वपुषि लग्नं नयनं प्रत्याक्रष्टुं प्रत्यावर्तयितुमबला न शेकुः न समर्था बभूवुः । यच्च कर्णरन्ध्रे प्रविष्टं सत् आत्मनि लग्नं लिखितमिव तिष्ठति ततो नापगच्छति । यस्य श्रीः शरीरकान्तिः वर्ण्यमाना सती कवीनां व्यासादीनां वाचां रतिमुत्कर्षं जनयति तथा मानं जगत्पूज्यतां जनयतीति किमु वक्तव्यम् । किञ्च यच्च जिष्णोः अर्जुनस्य रथस्थितं दृष्ट्वा ये मृतास्ते तत्सारूप्यमीयुः प्राप्ताः स तद्वपुः कथमत्यजदिति पूर्वेणान्वयः । मन्दाक्रान्ता

ऋषिरुवाच

दिवि भुव्यन्तरिक्षे च महोत्पातान् समुत्थितान् । दृष्ट्वाऽऽसीनान् सुधर्मायां कृष्णः प्राह यदूनिदम्
एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः । मुहूर्तमपि न स्थेयमत्र नो यदुपुङ्गवाः ॥ ५ ॥
स्त्रियो बालाश्च वृद्धाश्च शङ्खोद्धारं व्रजन्त्वितः । वयं प्रभासं यास्यामो यत्र प्रत्यक्सरस्वती ॥६॥
तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः । देवताः पूजयिष्यामः स्नपनालेपनार्हणैः ॥७॥
ब्राह्मणांस्तु महाभागान् कृतस्वस्त्ययना वयम् । गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥८॥
विधिरेष ह्यरिष्टघ्नो मङ्गलायनमुत्तमम् । देवद्विजगवां पूजा भूतेषु परमो भवः ॥ ९ ॥
इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः । तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥१०॥
तस्मिन् भगवताऽऽदिष्टं यदुदेवेन यादवाः । चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम् ॥११॥
ततस्तस्मिन् महापानं पपुर्मैरेयकं मधु । दिष्टविभ्रंशितधियो यद्द्रवैर्भ्रश्यते मतिः ॥१२॥
महापानाभिमत्तानां वीराणां दृप्तचेतसाम् । कृष्णमायाविमूढानां संघर्षः सुमहानभूत् ॥१३॥
युयुधुः क्रोधसंरब्धा वेलायामाततायिनः । धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः ॥१४॥
पतत्पताकै रथकुञ्जरादिभिः खरोष्ट्रगोभिर्महिषैर्नरैरपि ।
मिथः समेत्याश्वतरैः सुदुर्मदा न्यहन् शरैर्दद्भिरिव द्विपा वने ॥१५॥

---

त्तम् ॥ ३ ॥ उत्थितान् महोत्पातान् दृष्ट्वा कृष्णः सुधर्मायां समायासासीनान् यदून् इदं वक्ष्यमाणमाहेत्यन्वयः । दिवि आकाशे सूर्यस्य समन्ततो मण्डलानि । भुवि कम्पादीन् अन्तरिक्षे दिग्दाहादीन् ॥ ४ ॥ एते महोत्पाता दृश्यन्ते इति शेषः । अत्र नोऽस्माभिः मुहूर्तं घटिकाद्वयमपि न स्थातव्यम् यमस्य केतवो ध्वजा इव मृत्युसूचकाः इत्यर्थः । यथा ध्वजदर्शनेन नृपागमनं ज्ञायते तथा एतैरुत्पातैः मृत्योरागमनं सूच्यते इत्यर्थः ॥ ५ ॥ शंखोद्धारं तार्थम् । प्रभासं क्षेत्रम् । प्रत्यक् पश्चिमवाहिनी ॥ ६ ॥ अभिषिच्य स्नात्वा । अर्ह्यंतेऽनेनेति अर्हणं अर्हणानि पूजोपकरणानि फलपुष्पादीनि । समाहिताः परानुद्वेजकाः ॥ ७ ॥ अप्यर्थे तु शब्दः । ब्राह्मणानपि गवादिभिः पूजयिष्याम इत्यत्रान्वेति । तैरेव कृतस्वस्त्ययनाः कृतशान्तिपाठा वयम् । वासोभिः वस्त्रैः वेश्मभिः भवनैः ॥ ८ ॥ एष विधिः ब्राह्मणार्चनरूपः अरिष्टघ्नः अशुभनाशकः । मङ्गलायनं मङ्गलकारी च । देवादीनां पूजा भूतेषु प्राणिषु परमो भवः अभ्युदयहेतुः ॥९॥ मधुद्विषः वाक्यमिति शेषः । तथाऽस्तु इत्यङ्गीकृत्य नौकाभिः समुद्रमुत्तीर्य रथैः प्रभासं क्षेत्रं ययुः ॥१०॥ श्रेयोभिः श्रेयः साधनैः दानादिभिः उपबृंहितं परिपूर्णं कर्म चक्रुः सन्धिरार्षः । तस्मिन् प्रभासे ॥ ११ ॥ तस्मिन् प्रभासे यस्य रसै द्रवैः मतिः भ्रश्यते तत् मैरे[1]यकं मदिराविशेषं मधु मधुरं पपुरित्यन्वयः । पाने हेतुः । दिष्टं भगवदिच्छा तेन विभ्रंशिता धीर्येषां ते । पीयते इति पानं मद्यच्च तत् पानं महापानं मद्यपानं तेन अभितो मत्तानाम् । दृप्तं गर्वितं चेतो येषां तेषाम् । संघर्षः कलहः ॥१२॥१३॥ ततोवेलायांसमुद्रतोरे ते धनुरादिभिः परस्परं युयुधुश्च । क्रोधसंरब्धाः क्रोधविष्टाः । ऋष्टिः उभयतोधारखङ्गः । तोमरः (गड़ासा इति) आततायिनः शस्त्रपाणयः ॥१४॥ सुदुर्मदा मदोन्मत्तास्ते यदवः रथादिभिः मिथः समेत्य

---

१. कदम्बरससम्भूता मदिरा सुरसा भवेत् ।
सैव मैरेयकं प्रोक्तं यत्पानाद् भ्रश्यते मतिः ॥ इति तीर्थः ॥

मिरायां देशविशेषे ओषधिविशेषे भवं मैरेयम् । इक्षुशाकादिजन्यं मद्यम् ।
नद्यादिभ्यो ढक् इत्यमरकोषटीकायाम् ।

प्रद्युम्नसाम्बौ युधि रूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ।
सुभद्रसंग्रामजितौ सुदारुणौ गदौ सुमित्रासुरथौ समीयतुः ॥१६॥
अन्ये च ये वै निशठोल्मुकादयः सहस्रजिच्छतजिद्भानुमुख्याः ।
अन्योन्यमासाद्य मदान्धकारिता जघ्नुर्मुकुन्देन विमोहिता भृशम् ॥१७॥
दाशार्हवृष्ण्यन्धकभोजसात्वता मध्वर्बुदा माथुरशूरसेनाः ।
विसर्जनाः कुकुरा कुन्तयश्च मिथस्ततस्तेऽथ विसृज्य सौहृदम् ॥१८॥
पुत्रा अयुध्यन् पितृभिर्भ्रातृभिश्च स्वस्रीयदौहित्रपितृव्यमातुलैः ।
मित्राणि मित्रैः सुहृदः सुहृद्भिर्ज्ञातींस्त्वहन्ज्ञातय एव मूढाः ॥१९॥
शरेषु क्षीयमाणेषु भज्यमानेषु धन्वसु । शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जह्रुरेरकाः ॥२०॥
ता वज्रकल्पा ह्यभवन् परिघा मुष्टिना भृताः । जघ्नुर्द्विषस्तैः कृष्णेन वार्यमाणास्तु तं च ते ।२१।
प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः । हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥२२॥
अथ तावपि संक्रुद्धावुद्यम्य कुरुनन्दन । एरकामुष्टिपरिघौ चरन्तौ जघ्नतुर्युधि ॥२३॥
ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् । स्पर्धाक्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥२४॥
एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः । अवतारितो भुवो भार इति मेनेऽवशेषितः ॥२५॥

---

न्यहन् न्यघ्नन् । यथा वने दद्भिः दन्तैः गजा युध्यन्ते तद्वत् । पतन्त्यः इतस्ततः चलन्त्यः पताका येषु तैः । अश्वतराः खच्चरसंज्ञकाः गर्दभात् तुरग्यां जाता ॥ १५ ॥ गदौ श्रीकृष्णभ्राता पुत्रश्च । सुमित्रः असुरथश्च परस्परं समीयतुः युयुधाते । मत्सरः परोत्कर्षासहनम् ॥ १६ ॥ अन्येऽपि निशठादयः यादवाः मुकुन्देन विमोहिता सन्तः अन्योन्यमासाद्य जघ्नुरित्यन्वयः । यतस्तेनैव मदजन्यतमसा अन्धवत्कारिताः । यद्वा । मदेन अन्धकारः सञ्जातो येषां ते । तारकादित्वादिच्प्रत्ययः ॥ १७ ॥ ततो दाशार्हादयो ये यादवाः तेऽथ तेऽपि सौहृदम् उत्सृज्य मिथः परस्परं जघ्नुरिति पूर्वेण अमुध्यन्निति परेण वान्वयः कार्यः । दाशार्हाद्यो नव तत्तद्वंशीयाः । अर्बुदादयः तत्तद्देशीयाः अर्बुदादिदेशादागताः । तीर्थस्तु अर्बुदा इति केचित् यादवविशेषा इत्याह ॥ १८ ॥ उत्सृज्येत्युक्तं तदेवाह । स्वस्रीयादिभिः सह क्रमेण मातुलमातामहभ्रातृभागिनेया अयुध्यन् यतो विमूढाः स्वपरानुसन्धानशून्याः ॥१९॥ भज्यमानेषु भग्नीभूतेषु । एरकाः कटनिर्माणसाधनीभूताः मुसलचूर्णोद्भवाः सूचीभूततीक्ष्णतृणानीत्यर्थः । पटेरा इति भाषायां जह्रुः उत्पाट्य जगृहुः ॥२०॥ ता इत्यर्द्धम् । ता एरकाः भृता धृताः वज्रकल्पा वज्रसदृशा परिघा लोहदण्डा इव अभवन् ॥२१॥ जघ्नुरिति सार्द्धम् । ते । यादवाः तैः परिघैः द्विषः शत्रून् जघ्नुः । कृष्णेन वार्यमाणास्तु ते यादवाः कृष्णं बलभद्रं च प्रत्यनीकं प्रतिपक्षं मन्यमानाः आततायिनः शस्त्रपाणयः सन्तः तौ हन्तुमापन्नाः प्रवृत्ता बभूवुः । यतो मोहिता । यद्वा । तौ हन्तुं कृतधियः सन्तः तत्समीप मापन्ना आजग्मुरित्यन्वयो वा । आपन्ना योद्धुं प्राप्ता वा ॥ २२ ॥ तौ रामकृष्णौ अपि एरकामुष्टिरूपौ परिघौ लोहदण्डौ उद्यम्य उत्थाप्य युधि चरन्तौ यादवान् जघ्नतुरित्यन्वयः । यद्वा । एरकामुष्टय एव परिघा ययोस्तौ तथाभूतौ सन्तौ तान् जघ्नतुः ॥२३॥ उपसृष्टानामाक्रान्तानां यदूनां स्पर्धानिमित्तः क्रोधः कुलं क्षयं निन्ये यथा वेणुसंघर्षजोऽग्निः वेणुवनं क्षयं नयति तद्वदिति ॥ २४ ॥ अवशेषितौ भार अवतारितः इति मेने य ज्यम्

रामः समुद्रवेलायां योगमास्थाय पौरुषम् । तत्याज लोकं मानुष्यं संयोज्यात्मानमात्मनि ॥२६॥
रामनिर्याणमालोक्य भगवान् देवकीसुतः । निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥२७॥
बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया । दिशो वितिमिराः कुर्वन् विधूम इव पावकः॥२८॥
श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् । कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम् ॥२९॥
सुन्दरस्मितवक्त्राब्जं नीलकुन्तलमण्डितम् । पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥३०॥
कटिसूत्रब्रह्मसूत्रकिरीटकटकाङ्गदैः । हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥३१॥
वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः । कृत्वोरौ दक्षिणे पादमासीनं पङ्कजारुणम् ॥३२॥
मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरा । मृगास्याकारं तच्चरणं विव्याध मृगशङ्कया ॥३३॥
चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः । भीतः पपात शिरसा पादयोरसुरद्विषः ॥३४॥
अजानता कृतमिदं पापेन मधुसूदन । क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥३५॥

---

समुद्रवेलायां समुद्रतटे योगं ध्यानलक्षणमाश्रित्य आत्मनि स्वस्वरूपे आत्मानं संयोज्य एकीकृत्य लोकं भूर्लोकं तत्याजेत्यन्वयः ॥ २६ ॥ निर्याणं स्वरूपेण महावैकुण्ठं प्रति गमनं स्वांशेन पातालतलगमनं च । धरोपस्थे भूतले पिप्पलवृक्षमाश्रित्य तन्मूले इत्यर्थः । तूष्णीं मौनीभूय निषसाद उपविष्टवान् ॥ २७ ॥ कथंभूतः सन् निषसाद । भ्राजिष्णु प्रकाशमानं रूपं बिभ्रत् सन् । पुनश्च । स्वया प्रभया विधूमः पावक इव वितिमिराः अन्धकारशून्या दिशः कुर्वन् ॥२८॥ तदेव रूपमनुवर्णयति चतुर्भिः । श्रीवत्सो[1] भृगुलता अङ्कः चिह्नं यस्य तत् । तप्तहाटकस्य सुवर्णस्येव वर्चः तेजो यस्य । कौशेयाम्बरं रेशमोसंज्ञकम् । सुमङ्गलमाकर्षकम् मङ्गलावहं वा ॥ २९ ॥ सुन्दरं स्मितयुक्तं मुखाम्बुजं यस्मिन् । नीलकुन्तलैः नीलकेशैः मण्डितम् । पुण्डरीकं कमल तद्वत् अभिरामे सुन्दरे अक्षिणी यस्मिन् । स्फुरती मकराकृती कुण्डले यस्मिन् तत् ॥ ३० ॥ पुनश्च । कटिसूत्रादिभिः विराजितम् । तत्र कटिसूत्रं काञ्ची । ब्रह्मसूत्रं यज्ञोपवीतम् । किरीटं मुकुटम् । अङ्गदं बाहुभूषणम् । मुद्रा अङ्गुलीयकम् ॥ ३१ ॥ वनमालया[2] परीतानि वेष्टितानि अङ्गानि यस्य तत् । आयुधैश्च विराजितम् । दक्षिणे ऊरौ वामं पादं कृत्वा आसीनं तथाभूतं रूपं बिभ्रत् इति पूर्वेण सम्बन्धः । पङ्कजवत् अरुणमिति पादविशेषणम् ॥ ३२ ॥ जरानामकः लुब्धकः तस्य भगवतः चरणं विव्याधेत्यन्वयः । कथंभूतम् । मृगास्यमिव आकारो यस्य तम् । कथंभूतो लुब्धकः । चूर्णितात् मुसलात् अवशेषो योऽयःखण्डः लोहखण्डः तेन कृतः इषुः बाणाग्रं येन सः 'तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत्' इत्युक्तेः । शल्यं बाणाग्रम् । विव्याधेति । मृगो मया विद्ध इति लुब्धकस्याभिमानदृष्टयैव प्रयुक्तं, वस्तुतः तदीयः शरः चरणं केवलं पस्पर्श न तु विव्याध तदङ्गस्य सच्चिदानन्दरूपत्वात् । अन्यथा भीतः पपात शिरसा पादयोरसुरद्विषः' इत्यत्र पादाच्छरं निष्क्रामयामासेत्युक्तं स्यात् इति वंशीधरी । जरेति टाबन्तस्य स्त्रीत्वेऽपि नाम्नि पुंस्त्वादिनियमो नास्तीति वसिष्ठात्मजशक्तिवत् इत्यनेनैव बोधितम् ॥३३॥ शिरसा स्पृशन् सन् असुरद्विषः श्रीकृष्णस्य पादयोः पपात उवाच चेति क्रियाशेषः । भीत इत्यत्र हेतुः । कृतेति ॥३४॥ पापेन पापिना मया इदं अपराधाचरणं कृतं तत् मे क्षन्तुमर्हसि । नास्ति अघं यत्सम्प-

---

१. वक्षसि भृगुपादाङ्कः कश्चित् श्रीवत्स उच्यते ।

२. तुलसीकुन्दमन्दारपारिजातसरोरुहैः ।
पञ्चभिर्ग्रथिता माला वनमाला प्रकीर्तिता ॥१॥
यद्वा । आपादलम्बिनी माला वनमाला प्रकीर्तिता ।

यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् । वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो ॥३६॥

तन्माऽऽशु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम् । यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥३७॥

यस्यात्मयोगरचितं न विदुर्विरिञ्चो रुद्रादयोऽस्य तनयाः पतयो गिरां ये ।
त्वन्मायया पिहितदृष्टय एतदञ्जः किं तस्य ते वयमसद्‌गतयो गृणीमः ॥३८॥

श्रीभगवानुवाच

मा भैर्जरे त्वमुत्तिष्ठ काम एष कृतो हि मे । याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥३९॥

इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा । त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥४०॥

दारुकः कृष्णपदवीमन्विच्छन्नधिगम्य ताम् । वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ ॥४१॥

तं तत्र तिग्मद्युभिरायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिम् ।
स्नेहप्लुतात्मा निपपात पादयो रथादवप्लुत्य स बाष्पलोचनः ॥४२॥

अपश्यतस्त्वच्चरणाम्बुजं प्रभो दृष्टिः प्रणष्टा तमसि प्रविष्टा ।
दिशो न जाने न लभे च शान्तिं यथा निशायामुडुपे प्रणष्टे ॥४३॥

इति ब्रुवति सूते वै रथो गरुडलाञ्छनः । खमुत्पपात राजेन्द्र साश्वध्वज उदीक्षतः ॥४४॥

तमन्वगच्छन् दिव्यानि विष्णुप्रहरणानि च । तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥४५॥

गच्छ द्वारवतीं सूत ज्ञातीनां निधनं मिथः । संकर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥४६॥

द्वारकायां च न स्थेयं भवद्भिश्च स्वबन्धुभिः । मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥४७॥

---

र्कात् तत्सम्बुद्धौ हे अनघ । अज्ञानमेव ध्वान्तं तस्य नाशनं वदन्ति तस्य ते तव मया असाधु अनुचिते कृतम् ॥३६॥ मा माम् । सताम् अतिक्रमम् अपराधम् ॥ ३७ ॥ यस्य तव आत्मयोगेन लीलाशक्त्या रचितम् एतत् चरित्रं ब्रह्मशापादिकं विरिञ्चः अस्य तनया रुद्रादयः ये चान्ये गिरां पतयो वेदद्रष्टारः तेऽपि न विदुः यतस्त्वन्मायया पिहितदृष्टयः लुप्तज्ञानाः तस्य ते तत्त्वम् असद्‌गतयो नीचयो वयं कथं गृणीमः जानीमः अञ्जः साक्षात् । रुद्रः आदिर्येषां ते एव न तु रुद्र इत्यतद्‌गुणसंविज्ञानो बहुव्रीहिरत्र बोध्या ॥ ३८ ॥ हे जरे । त्वं मा भैः भयं मा कुरु । एष मे कामः शापरूपः मदिच्छैव । अतस्त्वं सुकृतिनां पुण्यात्मनां पदं स्थानं स्वर्गं याहि । इच्छेति । इच्छाधीनं शरीरं यस्य तेन तदिच्छयैव तस्याविर्भावो भवति इति तत्र नान्यत्कारणं भाव्यमिति सन्दर्भः । त्रिर्नत्वा इत्यत्रान्वेति न तु परिक्रम्य इत्यत्र । 'चतस्रः केशवस्योक्ताः शिवस्यार्द्धा प्रदक्षिणा इत्युक्तेः । तं नत्वा ययौ ॥ ४० ॥ दारुकः सारथिः पदवीमन्विच्छन् अन्वेषयन् वायुमाघ्राय तत्सम्मुखं ययौ । तुलसिकाया आमोदो गन्धो यस्मिन् तम् ॥ ४१ ॥ स सारथिः तमवलोक्य रथात् अवप्लुत्य स्नेहार्द्रचित्तः सन् तस्य पादयोः निपपातेत्यन्वयः । कथंभूतम् । तिग्मद्युभिः तीव्रप्रकाशैः आयुधैः वृत्तम् । कृतकेतनं कृतनिवासम् । बाष्पमश्रु लोचनयोः यस्य सः ॥ ४२ ॥ प्रणष्टेत्यस्यैव विव णं तमसीति । उडुपे चन्द्रे प्रणष्टे अस्तं गते सति ॥४३॥ गरुडलाञ्छनः गरुडध्वजः । अश्वैः ध्वजेन पताकया च सहितः खमाकाशमगात् । सूतस्य उदीक्षतः सतः । तं रथमनु विष्णो प्रहरणानि आयुधान्यपि अन्वगच्छन् । तेन रथादिगाप्तनेन ॥४५॥ मद्दशां स्वधामगमनोद्यम् ॥ ४६ ॥ प्लावयिष्यति जलमग्नां करिष्यति ॥ ४७ ॥ अविताः रक्ष्यमाणाः सन्तः

स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः । अर्जुनेनाविताः सर्व इन्द्रप्रस्थं गमिष्यथ ॥४८॥
त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः । मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥४९॥
इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः । तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम् ॥५०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥

---

सर्वं यूयम् ॥ ४८ ॥ मद्धर्मं भक्तिलक्षणम् । पुत्रादौ उपेक्षकः । उपशमं शान्तिं लभस्व ॥४९॥ इत्युक्तः दारुकः तं नमस्कृत्य पुरीं द्वारकां प्रययौ । भगवद्वियोगात् दुःखिततमनाः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामेकादशस्कन्धे गूढार्थदीपिन्यां त्रिंशोऽध्यायः ॥३०॥



## अथैकत्रिंशोऽध्यायः

### श्रीशुक उवाच

अथ तत्रागमद् ब्रह्मा भवान्या च समं भवः । महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ।
पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः ॥१॥
चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः । द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ॥२॥
गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च । ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ।
कुर्वन्तः संकुलं राजन् भक्त्या परमया युताः ॥३॥

---

एकत्रिंशेऽर्चितः कृष्णः स्वधामागमदव्ययम् ।
ततोऽनु वसुदेवाद्या रुक्मिण्याद्याश्च तत्प्रियाः ॥ १ ॥

अथेति सार्धद्वयम् । अथ दारुकप्रेषणानन्तरम् । तत्र भगवत्समीपे । ब्रह्मा आगमत् भवश्च आगमत् । तथा भगवतो निर्याणं द्रष्टुकामा सन्तः महेन्द्रादयोऽपि आगमन्नित्यन्वयः । समं सह द्विजाः मैत्रेयादयः ॥१॥२॥ गायन्त इति सार्द्धम् । शौरेः श्रीकृष्णस्य जन्म कर्माणि च गायन्तः गृणन्तः स्तुवन्तश्च पुष्पवर्षाणि ववृषुः चक्रुरित्यन्वयः । किं कुर्वन्तः । विमानावलिभिः नभः संकुलमाच्छन्नं कुर्वन्तः । शूरवंशजत्वात् शौरिः श्रीकृष्णः

भगवान् पितामहं वीक्ष्य विभूतीरात्मनो विभुः । संयोज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ।४।
लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलम् । योगधारणयाऽऽग्नेय्या दग्ध्वा धामाविशत् स्वकम् ५
दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् । सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चानु त ययुः ॥६॥
देवादयो ब्रह्ममुख्या न विशन्तं स्वधामनि । अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥७॥
सौदामन्या यथाऽऽकाशे यान्त्या हित्वाभ्रमण्डलम् । गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ।८।
ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः । विस्मितास्तां प्रशंसन्तः स्वं स्वं लोकं ययुस्तदा ॥९॥

राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य ।
सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिमोपरतः स आस्ते ॥१०॥
मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धम् ।
जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेहम् ॥११॥

---

॥ ३ ॥ विभूतीः इन्द्रादीन् वीक्ष्य आत्मनि लीलातीतस्वरूपे संयोज्य एकीकृत्य समाधिमिव कुर्वन् नेत्रे न्यमीलयत् ॥ ४ ॥ आग्नेय्या तेजोमय्या धारणया स्वतनुं दग्ध्वा धाम वैकुण्ठाख्यम् अविशत् प्रदीप्य अन्तरधात् यथा अग्निः काष्ठादिषु प्रदीप्य अन्तर्हितो भवति सतीशरीरवत् । स्वतनुमदृित एव अविशत् । कथंभूताम् । लोकाभिरामाम् । लोकानामभितो रमणं स्थितिः यस्यां ताम् । किञ्च धारणाध्यानयोर्मङ्गलं विषयं यथा स्यात्तथेति क्रियाविशेषणम् । केचित्तु अकारप्रश्लेषेण अदग्ध्वेत्याहुः अदग्ध्वा तिरोधाय ॥ ५ ॥ खात् आकाशात् सुमनसः पुष्पाणि पेतुः । भूमें, सकाशात् सत्याद्योऽपि तं श्रीकृष्णमनुजग्मुः ॥६॥ विशन्तं न ददृशुः तत्र हेतुः । अविज्ञातगतिम् । अविज्ञाता इतरैः अलक्ष्यमाणा गतिर्यस्य अत एव अतिविस्मिता बभूवुरि इत्यन्वयः ॥ ७ ॥ एतदेव दृष्टान्तेन स्पष्टयति । मेघमण्डलं हित्वा आकाशे यान्त्या स्फुरन्त्या विद्युतः गतिर्मर्त्यैः न लक्ष्यते देवैस्तु लक्ष्यते तथा भूमण्डलं हित्वा गच्छतः श्रीकृष्णस्य गतिः देवैर्नलक्ष्यते किन्तु तत्पार्षदैरेव लक्ष्यते ॥ ८ ॥ योगगतिं योगमायावैभवम् । ९ ॥ परस्य परमेश्वरस्य तनुभृत्सु यादवादिषु जननाप्ययेहा आविर्भावतिरोभावरूपाश्चेष्टा मायया अनुकरणमात्रमवेहि । यथा नटस्य अविकृतस्यैव नानाविधचेष्टाकरणं तथैव विश्वसृष्ट्यादिकमपि लीलामात्रमित्याह । आत्मना स्वयमेवं इदं जगत् सृष्ट्वा अन्तर्यामित्वेन अनुप्रविश्य तत्र विहृत्य अन्ते संहृत्य च स्वमहिम्ना स्वरूपावस्थानेन उपरतः निवृत्तजगद्व्यापारः सन् आस्ते इत्यन्वयः ॥१०॥ यमेन स्वलोकनीतं गुरुसुतं यो मर्त्येन तेनैव शरीरेण आनयत् । शरणदः शरणागतरक्षकः यो ब्रह्मास्त्रदग्धं त्वामपि आनयत् रक्षितवानित्यर्थः । किञ्च योऽन्तकस्यापि अन्तकं मृत्युञ्जयं श्रीरुद्रं बाणासुरसंग्रामे जिग्ये जितवान् । मृगयुं व्याधं च यः सशरीरमेव स्वर्गमनयत् सोऽसौ किं स्वस्य स्वानां यदूनां च अवने अनीशः असमर्थः किम नैवेत्यर्थः ॥११॥ तेन वपुषा भूर्लोके कुतो नावात्सीत् तत्राह तथापीति । यद्यपि भगवान् अशेषस्य जगतः स्थित्यादिषु अनन्यहेतुः निरपेक्ष एव कारणम् अशेषशक्तिधृक् च तथापि अत्र अस्मिन् लोके निजं वपुः शेषितमवशेषितं यथा स्यात्तथा नैच्छत् । अपि तु प्रणेतुं स्वकं लोकं प्रकर्षेण नेतुमैच्छत् । किं कुर्वन् सन् । स्वस्थानां योगिनां दिव्यां गतिं प्रदर्शयन् शिक्षयितुम् । लक्षणहेतोः इति शत्रन्तम् । यतो मर्त्येन मरणशीलेन शरीरेण किं न किञ्चित्

तथाप्यशेषस्थितिसम्भवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ।
नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थगतिं प्रदर्शयन् ॥१२॥
य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम्। प्रयतः कीर्तयेद् भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥१३॥
दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः। पतित्वा चरणावस्रैर्न्यषिञ्चद् कृष्णविच्युतः।
कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ॥१४॥

तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः। तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः।
व्यसवः शेरते यत्र ज्ञातयो घ्नन्त आननम् ॥१५॥
देवकी रोहिणी चैव वसुदेवस्तथा सुतौ। कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम्।
प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ॥१६॥
उपगुह्य पतींस्तात चितामारुरुहुः स्त्रियः। रामपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन् ॥१७॥
वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन् हरेः स्नुषाः।
कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ॥१८॥

अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः। आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः १९
बन्धूनां नष्टगोत्राणामर्जुनः साम्परायिकम्। हतानां कारयामास यथावदनुपूर्वशः ॥२०॥
द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात्। वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥२१॥
नित्यं संनिहितस्तत्र भगवान् मधुसूदनः। स्मृत्याशेषाशुभहरं सर्वमङ्गलमङ्गलम् ॥२२॥
स्त्रीबालवृद्धानादाय हतशेषान् धनंजयः। इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् ॥२३॥
श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः। त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥२४॥
य एतद् देवदेवस्य विष्णोः कर्माणि जन्म च। कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥२५॥

---

प्रयोजनम्। मयि स्थिते योगिनोऽपि दिव्यां गतिमनादृत्य देहसिद्धिं कृत्वाऽत्रैव रन्तुं यतेरन् तन्माभूदित्येदर्थमेव विधिर्दर्शितः ॥ १२ ॥ पदवीं गमनरूपाम्। अनुत्तमां सर्वोत्तमाम् ॥ १३ ॥ दारुकः सारथिः इति सार्द्धम् अस्रैः अश्रुभिः पादौ न्यषिञ्चत्। कृत्स्नशः साकल्येन ॥ १४ ॥ तदिति सार्द्धम्। तत् श्रुत्वा जनाः आननं घ्नन्तः ताडयन्तः तत्र जग्मुः यत्र व्यसवो विगतप्राणा ज्ञातयः शेरते ॥ १५ ॥ देवकीति सार्द्धम्। स्मृतिं चेतनां जहुः मूर्च्छिता जाता ततो प्राणांश्च विजहुः यतो विरहातुरा ॥१६॥ अन्याश्च स्त्रियः पतीन् आलिङ्ग्य चितामारुरुहुः। अप्यर्थे चकारः रामपत्न्योऽपि ॥१७॥ तद्गात्रमालिङ्ग्य हरेः स्नुषाः पुत्रभार्याश्च प्रद्युम्नादीन् आलिङ्ग्य अग्निमाविशन् ॥ १८ ॥ सदुक्तिभिः गीतोपदेशैः ॥ १९ ॥ नष्टगोत्राणां नष्टसन्ततीनाम् साम्परायिकं पारलौकिकम्। अनुपूर्वशः क्रमेण ॥ २० ॥ अप्लावयत् जलमग्नामकरोत् ॥ २१ ॥ सर्वेभ्योऽपि मङ्गलेभ्यो मङ्गलावहेभ्यो मङ्गलं श्रेष्ठंमालयनित्यस्य विशेषणम् ॥ २२ ॥ वज्रमनिरुद्धपुत्रं तत्र इन्द्रप्रस्थसमीपे मथुरायामित्यर्थः मथुरायां तथा वज्रम् इत्युक्तेः ॥२३॥ पितामहा युधिष्ठिरादयः। वंशधरं वंशप्रवर्तके राजानं कृत्वा महापथं हिमालयं

इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शन्तमानि।
अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो भक्तिं परां परमहंसगतौ लभेत ॥२८॥

इति श्रीमद्भागवते महापुराणे वैयासिक्यामष्टादशसाहस्र्यां पारमहंस्यां
संहितायामेकादशस्कन्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

## इत्येकादशः स्कन्धः समाप्तः।

हरिः ॐ तत्सत्

---

जग्मुः ॥ २४ ॥ मर्त्यः मरणधर्मा। चकारोऽनुक्तसमुच्चयार्थः। श्रवणं स्मरणं च। सर्वशब्दो वासनापरः ॥२५॥
इत्थं भगवतोऽवतारसूचकानि बालचरितानि चकारात् पौगण्डाद्यवस्थाचरितानि च यः गृणन् कीर्तयन्
उपदिशन् वा भवति स परमहंसानां गतौ श्रीकृष्णे परां प्रेमलक्षणां भक्तिं लभते इत्यन्वयः। कथंभूतानि। इह
भागवते अन्यत्र पुराणेषु च श्रुतानि। पुनश्च। शन्तमानि परममङ्गलमयानि ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां सनाढ्यवंशावतंसपण्डितप्रवर श्रीराममूर्तिशास्त्रि
पौराणिकविरचितायां गूढार्थदीपिन्यामेकादशस्कन्धे एकत्रिंशत्तमोऽध्यायः।

उद्धवस्यात्मतोषाय हरिणा भावगर्भितः।
सर्ववेदान्तनिष्कर्षः संक्षेपेणात्र वर्णितः ॥ १ ॥
अधश्चोर्ध्वं तथा दिक्षु सान्तरालमनावृतम्।
सर्वत्र भासमानं त्वां भूयो भूयो नमाम्यहम् ॥ २ ॥
दुर्लभं मानुषं जन्म सार्थकं त्वत्प्रसादतः।
तथा कुरुष्व देवेश त्वामहं शरणं गतः ॥ ३ ॥



ॐ श्रीपरमात्मने नमः

# श्रीमद्भागवतम्

## द्वादशः स्कन्धः

### आश्रयतत्त्ववर्णनम्

### अथ प्रथमोऽध्यायः

राजोवाच

स्वधामानुगते कृष्णे यदुवंशविभूषणे । कस्य वंशोऽभवत् पृथ्व्यामेतदाचक्ष्व मे मुने ।।१।।

श्रीशुक उवाच

योऽन्त्यः पुरञ्जयो नाम भाव्यो बार्हद्रथो नृपः । तस्यामात्यस्तु शुनको हत्वा स्वामिनमात्मजम्।।

प्रद्योतसंज्ञं राजानं कर्ता यत् पालकः सुतः । विशाखयूपस्तत्पुत्रो भविता राजकस्ततः ।।३।।

नन्दिवर्धनस्तत्पुत्रः पञ्च प्रद्योतना इमे । अष्टत्रिंशोत्तरशतं भोक्ष्यन्ति पृथिवीं नृपाः ।।४।।

शिशुनागस्ततो भाव्यः काकवर्णस्तु तत्सुतः । क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ।।५।।

विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति । दर्भकस्तत्सुतो भावी दर्भकस्याजयः स्मृतः ।।६।।

नन्दिवर्धन आजेयो महानन्दिः सुतस्ततः । शिशुनागा दशैवैते षष्ट्युत्तरशतत्रयम् ।।७।।

समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः । महानन्दिसुतो राजन् शूद्रीगर्भोद्भवो बली ।।८।।

महापद्मपतिः कश्चिन्नन्दः क्षत्रविनाशकृत् । ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्मिकाः ।।९।।

---

ऋद्धिसिद्धिप्रदं देवं लेखशक्तिविधायिनम् ।
कृष्णप्रतिकृतिं नौमि पार्वतीनन्दनं विभुम् ।। १ ।।
प्रथमे तु जरासन्धवंशजा भाविनो नृपाः ।
कलिप्रभावतो दोषैस्तेषां साङ्कर्यमीर्यते ।। २ ।।

स्वधाम वैकुण्ठम् । यदुवशं विभूषयतीति तथा । मे मह्यम् आचक्ष्व कथय ।। १ ।। य इति त्रयम् सोमवंशशाखासु जरासंन्धस्य पिता बृहद्रथः तस्य वंशे भवोऽन्तिमो राजा रिपुञ्जयोऽभवत् स एव पुरञ्जय उक्तः । तस्यामात्यः शुनको नाम स्वामिनं पुरञ्जयं हत्वा स्वपुत्रं प्रद्योतसंज्ञं राजानं कर्ता करिष्यत यस्य सुतः पालको भविता तस्य विशाखयूपः तस्य राजकः तस्य नन्दिवर्धन इत्येवं पञ्च प्रद्योतसंज्ञा ( १३८ वर्षपर्यन्तं ) पृथ्वी भोक्ष्यन्ति पालयिष्यन्ति अतः 'भुजोऽवने' इत्यनेन परस्मैपदम् ।। २ ।। ३ ।। ४ ।। भाव्यो भविता । आवश्यके यत् ।। ५ ।। तस्य क्षेत्रज्ञस्य ।। ६ ।। नन्दीति सार्द्धम् । आजेयः अजयपुत्र । शिशुनागवंशजा एते दश नृपाः ( ३६० ) समा वर्षाणि ।। ७ ।। बली बलवान् नन्दो नाम भविता क्षत्रियकुलविनाशकर्ता महापद्मसंख्यकसेनाया धनस्य वा पतिर्भविता । अतएव स महापद्मनामापि ।। ८ ।। तत इत्यर्द्धम् । तत आरभ्य तुश्चार्थे ।। ९ ।। महापद्मसंज्ञकः स नन्दः भार्गवः भृगुवंशीयः परशुराम

स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः । शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥१०॥
तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः । य इमां भोक्ष्यन्ति महीं राजानः स्म शतं समाः॥
नव नन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति । तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ १२
स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति । तत्सुतो वारिसारस्तु ततश्चाशोकवर्धनः ॥१३॥
सुयशा भविता तस्य संगतः सुयशःसुतः । शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥१४॥
शतधन्वा ततस्तस्य भविता तद् बृहद्रथः । मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम् ।
समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह ॥ १५ ॥

हत्वा बृहद्रथं मौर्यं तस्य सेनापतिः कलौ । पुष्यमित्रस्तु शुङ्गाह्वः स्वयं राज्यं करिष्यति ।
अग्निमित्रस्ततस्तस्मात् सुज्येष्ठोऽथ भविष्यति । वसुमित्रो भद्रकश्च पुलिन्दो भविता सुतः ॥१६॥
ततो घोषः सुतस्तस्माद् वज्रमित्रोभविष्यति । ततो भागवतस्तस्माद् देवभूतिरिति श्रुतः॥१७॥
शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् । ततः कण्वानियं भूमिर्यास्यत्यल्पगुणान् नृपं ॥१८॥
शुङ्गं हत्वा देवभूतिं कण्वोऽमात्यस्तु कामिनम् । स्वयं करिष्यते राज्यं वसुदेवो महामतिः ॥१९॥
तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः । नारायणस्य भविता सुशर्मा नाम विश्रुतः ॥
काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च । शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे।२०।
हत्वा कण्वं सुशर्माणं तद्भृत्यो वृषलो बली । गां भोक्ष्यत्यन्ध्रजातीयः कंचित् कालमसत्तमः ।२१।
कृष्णनामाथ तद्भ्राता भविता पृथिवीपतिः । श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ॥२२॥
लम्बोदरस्तु तत्पुत्रस्तस्माच्चिबिलको नृपः । मेघस्वातिश्चिबिलकादटमानस्तु तस्य च ॥२३॥
अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः । पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनन्दनः ॥२४॥
चकोरो बहवो यत्र शिवस्वातिररिंदमः । तस्यापि गोमतीपुत्रः पुरीमान् भविता ततः ॥२५॥

---

इव पृथिवीं शासिष्यतीत्यन्वयः ॥१०॥ तस्य नन्दस्य ये सुताः । समाः वर्षाणि । स्म प्रसिद्धे ॥११॥ पित्रा सह नव संख्याकान् प्रपन्नान् विख्यातान् उद्धरिष्यति उन्मूलयिष्यति । द्विजः चाणक्यः । तेषां नवानामभावे । मुरः कैवर्तः तद्वंशजा मौर्याः हीनजातयः ॥१२॥ द्विजः चाणक्यः ॥१३। संगतो नाम ॥१४॥ ततश्चेति चकारात् पञ्चमो दशरथो ग्राह्यः विष्णुपुराणोक्तः तदैव दशसंख्यापूर्तिः (१३७) समा वर्षाणि ॥१५॥ बृहद्रथस्य सेनापतिः शुगंसज्ञः । ततः पुष्यमित्रात् । 'पुष्यमित्रस्तु शुङ्गाख्यः स्वयं राज्यं करिष्यति' इति 'श्लोकोऽपि' क्वचित् दृश्यते प्रसङ्गतः । अथ सुज्येष्ठात् वसुमित्रः ततः ततः इत्यग्रेऽपि योज्यम् पुष्पमित्रादयो देवभूत्यन्ताः शुङ्गवंशजा दश ॥१६॥१७॥ एते दश शुंगवंशजाः (११२) वर्षाणि अधिके द्वादश ॥१८॥ वसुदेवनामा कण्व इति योज्यम् ॥१९॥ तस्येति सार्द्धम् । कण्वानां चतुर्थः सुशर्मा ज्ञेयः । तस्य वसुदेवस्य । इमे वसुदेवादयः काण्वायनाः (३४५) वर्षाणि ॥२०॥ बली नामा वृषलः शूद्रः । कञ्चित्कालमिति । तद्भोगकालस्यात्यल्पत्वादनादरेण संख्या न कृता ॥२१॥ कृष्णेति पद्यद्वयं स्पष्टम् ॥२२॥२३॥ तस्य अटमानस्य पुत्रः अनिष्टकर्मा ॥२४॥ चकोरस्य बहु-संज्ञका अष्ट पुत्राः सर्वेषां कनीयान् शिवस्वातिः गोमतिनः पुत्रः ॥२५॥ विजयस्य द्वौ पुत्रौ चन्द्रविज्ञः लमो-

मेदशिराः शिवस्कन्दो यज्ञश्रीस्तत्सुतस्ततः । विजयस्तत्सुतो भाव्यश्चन्द्रविज्ञः सलोमधिः ।२६॥
एते त्रिंशन्नृपतयश्चत्वार्यब्दशतानि च । षट्पञ्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दन ॥२७॥
सप्ताभीरा आवभृत्या दश गर्दभिनो नृपाः । कङ्काः षोडश भूपाला भविष्यन्त्यतिलोलुपाः ॥२८॥
ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्ककाः । भूयो दश गुरुण्डाश्च मौना एकादशैव तु ॥२९॥
एते भोक्ष्यन्ति पृथिवीं दशवर्षशतानि च । नवाधिकां च नवतिं मौना एकादश क्षितिम् ॥३०॥
भोक्ष्यन्त्यब्दशतान्यङ्ग त्रीणि तैः संस्थिते ततः । किलिकिलायां नृपतयो भूतनन्दोऽथ वङ्गिरिः ३१
शिशुनन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः । इत्येते वै वर्षशतं भविष्यन्त्यधिकानि षट् ॥३२॥
तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः । पुष्यमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ॥३३॥
एककाला इमे भूपाः सप्तान्ध्राः सप्त कोसलाः । विदूरपतयो भाव्या निषधास्तत एव हि ॥३४॥
मागधानां तु भविता विश्वस्फूर्जिः पुरञ्जयः । करिष्यत्यपरो वर्णान् पुलिन्दयदुमद्रकान् ॥३५॥
प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः । वीर्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि ।
अनुगङ्गमाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ॥ ३६ ॥
सौराष्ट्रावन्त्याभीराश्च शूरा अर्बुदमालवाः । व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ३७

धिश्च ॥२६॥ एते पूर्वोक्ता त्रिंशत् नृपतयः (४५६) वर्षाणि ॥ २७ ॥ आवभृतिर्नगरी तद्राजानः आवभृत्या आभीरजातीयाः सप्त गर्दभिसंज्ञका दशः कंकसंज्ञका षोडश ते च सर्वे अतिलोलुपा अतीवविषयासक्ताः ॥२८॥ ततः कंकेभ्यः पश्चात् यवनाः म्लेच्छाः । तुरुष्काः तुर्कसंज्ञकाः पुष्कसा इति पाठे निषादात् शूद्र्यामुद्भूताः । गुरुण्डा गुरुण्डसंज्ञकाः । गुरुगुरुरित्येवं ब्रुवन्ति भाषन्ते इति गुरुण्डाः । डु भाषणे तुदादिः व्याकरणान्तरज्ञेयः, तत औणादिको डख् प्रत्ययः । औणादिका अपरिमिताः प्रयोगमनुसृत्य प्रयोक्तव्या इत्युक्तेः धातूनामप्यनन्तत्वान्नानार्थत्वच्च सर्वथा इत्यनुभूत्युक्तेः डूरप्यूदन्तो धातुः कल्पनीयः इति वंशीधरी ॥ २९ ॥ एते इति त्रिकम् । एते आभीरादयः मौनव्यतिरिक्ता ६५ नृपाः एकोनशताधिकं वर्षसहस्रम् । (१०९९) वर्षाणि । एकादश मौनास्तु त्रीणि अब्दशतानि ( ३०० ) वर्षाणि क्षिति भोक्ष्यन्ति । ततश्च तैः संस्थिते तेषु मृतेषु सत्सु सप्तम्यर्थे तृतीया किलकिलाया नगर्यां नृपतयः भविष्यन्तीत्युत्तरेणान्वयः । भूतादयः १०६ वर्षपर्यन्त पृथ्वी भोक्ष्यन्ति ।। ३० ॥ ३१ ॥ ३२ ॥ तेषां भूतनन्दादीना त्रयोदश पुत्रा भवितारः भविष्यन्ति तं सर्वे बाह्लिकसंज्ञका भवितारः भविष्यन्ति । अच च ततः परं पुष्पमित्रो नाम अन्यो राजन्यो भविष्यति । अस्य पुत्रो दुर्मित्रो नाम ॥ ३३ ॥ ततो वाह्लीकसंज्ञकेभ्यः तत्तदेशनामभिः प्रख्याताः पुत्रा भूपा भविष्यन्ति सप्त अन्ध्रदेशस्य सप्त कोशलदेशस्य तेषु केचित् विदूरभूमे केचित् निवधदेशस्य एककालिका राजानो भविष्यन्ति ॥ ३४ ॥ ततो मगधानां वंशे विश्वस्फूर्जिर्नाम पुत्रो भविता पुर्वोक्तात् अपरः पुरञ्जयः म्लेच्छप्रायान् करिष्यति पुलिन्दादय हीनजातयः तैः ब्राह्मणादिकर्म कारयिष्यति ॥ ३५ ॥ प्रजाश्चेति सार्द्धम् । वीर्यवान् स पुरञ्जयः पद्मवत्यां पुर्या स्थितः क्षत्रं क्षत्रियजातिम् उत्साद्य नाशयित्वा गङ्गाद्वारमारभ्य प्रयागपर्यन्तं गुप्तां पालितां पृथ्वीं भोक्ष्यति ॥३६॥ सौराष्ट्र - अवन्ती - आभीरः - शूरः - अर्बुदः - मालवः-एतद्देशीया ब्राह्मणाः व्रात्याः[1] संस्कारहीना भविष्यन्ति ॥३७॥ अब्रह्मवर्चसः ब्रह्मतेजोहीनाः । वर्चसि तेजसि सेवने । इति निरुक्तिः

१. व्रात्यः संस्कारहीनः स्यात् इत्यमरः ।

सिन्धोस्तटं चन्द्रभागां कौन्तीं काश्मीरमण्डलम् । भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः ।
तुल्यकाला इमे राजन् म्लेच्छप्रायाश्च भूभृतः । एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥३९॥
स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः । उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः ॥४०॥
असंस्कृताः क्रियाहीना रजसा तमसाऽऽवृताः । प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः ४१
तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः । अन्योन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः ।४२।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

---

॥ ३७ ॥ सिन्धुर्नदः तस्य तटवर्तिदेशान् । चन्द्रभागा नदी तत्तटवर्तिनः । कौन्ती पुरीं काश्मीरमण्डलं च शूद्रा भोक्ष्यन्ति ॥३८॥ फल्गुदाः अल्पदातारः तीव्रमन्यवः महाक्रोधिनः ॥ ३९ ॥ परदारधनयोः आदरयुक्ताः । उदितेति अल्पकालावस्थायिनः । सत्त्वं बलम् ॥ ४० ॥ भक्षयिष्यन्ति धनापहारादिना पीडयिष्यन्ति ॥ ४१ ॥ ते उक्तविधा शूद्रा नाथा येषां ते । तेषामिव शीलमाचारवादः कथनं च तद्वन्तः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्यां प्रथमोऽध्यायः ।

## अथ द्वितीयोऽध्यायः

### श्रीशुक उवाच

ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया । कालेन बलिना राजन् नङ्क्ष्यत्यायुर्बलं स्मृतिः ॥१॥
वित्तमेव कलौ नृणां जन्माचारगुणोदयः । धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ २ ॥
दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके । स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥ ३ ॥
लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम् । अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः ॥४॥
अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु । स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥ ५ ॥

---

द्वितीये तु कलेर्दोषान् वीक्ष्य कल्किर्भवन् हरिः ।
हत्वा विधर्मणो भूपान् चक्रे सत्ययुगं पुनः ॥ १ ॥

कलिधर्मान् निरूपयति ततश्चेति–ततः कलिवृद्धितः कालेन निमित्तेन धर्मादयः नङ्क्ष्यन्तीत्यन्वयः ॥१॥ वित्तमेव सत्कुलजन्मनः सदाचारस्य गुणानां च उदयः अभिव्यञ्जकः । बलमेव कारणं न सत्यता ॥२॥ दाम्पत्ये पतिपत्नीसम्बन्धे अभिरुचिरेव न तु कुलगोत्रादिः । व्यावहारिके क्रयविक्रयादौ मायैव वञ्चनमेव हेतुः न निष्कपटता । तयोः श्रेष्ठत्वे रतिकौशलमेव हेतुः न कुलाचारादि । सूत्रमेव न तु सन्तोषादिलक्षणम् ॥३॥ आश्रमख्याती ज्ञाने लिङ्गमेव दण्डाजिनादिकमेव हेतुः नत्वाश्रमाचारः । अन्योऽन्यापत्तौ परस्परशिष्टाचारे नमस्कारादौ लिङ्गमेवेत्यन्वयः । अवृत्त्या धनार्पणासामर्थ्येन न्यायेदौर्बल्यं पराजयः ॥४॥ अनाढ्यता दरिद्रतैव हेतुः न जात्यादिः । दम्भ एव नत्वाचारः । उद्वाहे विवाहे स्वीकार एव न तु शास्त्रविधिः । प्रसाधनमलङ्करणं न तु तीर्थावगा-

दूरे वार्ययनं तीर्थं लावण्यं केशधारणम् । उदरम्भरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ॥ ६ ॥
दाक्ष्यं कुटुम्बभरणं यशोऽर्थे धर्मसेवनम् ॥ ७ ॥

एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले । ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ॥ ८ ॥
प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः । आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् ॥ ९ ॥
शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः । अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीडिताः ॥१०॥
शीतवातातपप्रावृड्हिमैरन्योन्यतः प्रजाः । क्षुत्तृड्भ्यां व्याधिभिश्चैव संतप्स्यन्ते च चिन्तया॥११॥
त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ॥ १२ ॥

क्षीयमाणेषु देहेषु देहिनां कलिदोषतः । वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥१३॥
पाखण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु । चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥१४॥
शूद्रप्रायेषु वर्णेषु च्छागप्रायासु धेनुषु । गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु ॥१५॥
अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु । विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥१६॥
इत्थं कलौ गतप्राये जने तु खरधर्मिणि । धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥१७॥
चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः । धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये ॥१८॥
शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः । भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥१९॥

---

ह्नम् ॥ ५ ॥ वार्ययनं जलाशय एव तीर्थं न तु गंगादि । स्वार्थः परमपुरुषार्थः । धार्ष्ट्यं धृष्टतैव हेतुः ॥६॥ दाक्ष्यमित्यर्द्धम् ॥ ७ ॥ आकीर्णे व्याप्ते । यो बली स नृपो भवितेत्यन्वयः ॥ ८ ॥ लुब्धैः लोभाक्रान्तैः निर्घृणैः निर्दयैः । अच्छिन्ना अपहृता दारा द्रविणानि च यासां ताः । दस्युः चोरः ॥ ९ ॥ अमिषं मांसम् । क्षौद्रं मधु । अष्टिर्बीजम् । पीडिताः प्रजा इति शेषः ॥ १० ॥ शीतादिभिः अन्योन्यतः चिन्तया च प्रजा नङ्क्ष्यन्तीति पूर्वेणान्वयः ॥११॥ त्रिंशदित्यर्द्धम् । यद्वा । त्रिंशता, सह विंशति, त्रिंशद्विंशतिः, पञ्चाशद्वर्षाणीत्यर्थः ॥ १२ ॥ क्षीयमाणेष्विति पञ्चकम् । क्षीयमाणेषु अल्पप्रमाणेषु दुर्बलेष्वित्यर्थः । दस्युप्रायेषु[1] चौरतुल्येषु । चौराद्या नानावृत्तयो जीविका येषां तेषु । शूद्रप्रायेषु शूद्रप्रधानेषु । छागप्रायासु प्रमाणतः क्षीरतश्च अजातुल्यासु । आश्रमेषु संन्यासादिषु गृहप्रायेषु परिग्रहादिना गृहस्थतुल्येषु । योनिसम्बन्धेन सम्बन्धिनो यौनाः श्यालादयः तत्प्रायेषु तत्प्रधानेषु । ओषधीषु यवगोधूमादिषु अणुप्रायासु स्वल्पगुणासु । स्थास्नुषु महावृक्षेषु शमीप्रायेषु शमीवत् ह्रस्वेषु परिमाणतः छायातः फलतश्च । अल्पवृक्षजातिः शमी । यत्काष्ठे यज्ञेऽग्निमन्थनं क्रियते याज्ञिकैः सा शमी । विद्युत्प्रायेषु स्वल्पजलेषु । शून्यत्वं धर्मकर्मादिराहित्यम् गतप्राये समाप्तप्राये सति । खरधर्मिणि पशुधर्मिणि आचारविचारशून्ये । जने तु इति पाठः । सत्त्वेन शुद्धसत्त्वेन वपुषा ॥ १७ ॥ विष्णो र्जन्म कर्तृ साधूनां त्राणाय कर्मणाम् अपनुत्तये मोक्षायेत्यर्थः भवति ॥ १८ ॥ विष्णुयशसः ब्राह्मणस्येति योज्यम् । कल्किः । कलिं कृषति विलिखति भिनत्तीति कल्किः । पृषोदरादिः । कृषतेर्डिप्रत्यये टिलोपे कलेरिकारलोपे च रूपसिद्धेः । यद्वा । कं सुखं लाति ददातीति कलो धर्मः तं कायति उपदिशतीति कल्किः

---

१. 'प्रायो बाहुल्यतुल्ययोः' इति कोषः ।

अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः । असिनासाधुदमनमष्टैश्वर्यगुणान्वितः ॥२०॥
विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः । नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति ॥२१॥
अथ तेषां भविष्यन्ति मनांसि विशदानि वै । वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम् ।
पौरजानपदानां वै हतेष्वखिलदस्युषु ॥ २२ ॥
तेषां प्रजाविसर्गश्च स्थविष्ठः सम्भविष्यति । वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते ॥२३॥
यदावतीर्णो भगवान् कल्किर्धर्मपतिर्हरिः । कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी ॥२४॥
यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती । एकराशौ समेष्यन्ति तदाभवति तत् कृतम् ॥२५॥
येऽतीता वर्तमाना ये भविष्यन्ति च पार्थिवाः । ते त उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः॥२६॥
आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् । एतद् वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥२७॥
सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि । तयोस्तु मध्ये नक्षत्रं दृश्यते यत् समं निशि ॥२८॥
तेनैत ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् । ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः ।२९।
विष्णोर्भगवतो भानुःकृष्णाख्योऽसौ दिवं गतः । तदाविशत् कलिर्लोकं पापे यद् रमते जनः ।३०।
यावत् स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः । तावत् कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत्।३१।

---

इति वंशीधरी ॥ १९ ॥ अश्वमिति युग्मम् । जगत्पतिः कल्किः देवदत्तसंज्ञमाशुगाभिनमश्वमारुह्य तेनैव आशुना हयेन क्षोण्यां पृथिव्यां विचरन् असिना कोटिशः दस्यून् निहनिष्यतीति द्वयोरन्वयः । कथंभूतान् । नृपलिङ्गच्छदः राजवेषेण छन्नान् । कथंभूतमश्वम् । आशु गच्छतीति । पुनश्च । असाधवो दम्यन्ते पीड्यन्ते येन तम् । कथंभूतः कल्किः । अष्टैश्वर्याणि अणिमादीनि गुणाश्च सत्यसंकल्पदयादाक्षिण्यादयः तैः अन्वितः । पुनश्च । अप्रतिमा अनुपमा द्युतिस्तेजः प्रभावो वा यस्य सः देवदत्तमिन्द्रानीतं ॥ २० ॥ २१ ॥ अथेति सार्द्धम् । अथ अनन्तरम् तेषां मनांसि विशदानि निर्मलानि भविष्यन्ति । कथंभूतानाम् । वासुदेवस्य अङ्गरागेण चन्दनादिना योऽतिपुण्यगन्धोऽनिलस्तं स्पृशन्तीति तेषाम् । पौरा नागरिकाः जनपदा अन्यदेशीयाः ॥ २२ ॥ भगवति हृदि स्थिते सति तेषां प्रजाविसर्गः सन्तानोत्पत्तिः स्थविष्ठः स्थूलः विस्तृत इत्यर्थः ॥ २३ ॥ धर्मपतिः धर्मपालकः । कृतं कृतयुगम् । सात्त्विकी सत्त्वगुणप्रधाना सदाचारनिष्ठा ॥ २४ ॥ तिष्यः पुष्यः । यदा चन्द्रसूर्यबृहस्पतीनां पुष्यनक्षत्रे योगस्तदा कृतयुगं भविष्यति । यद्यपि प्रतिद्वादशाब्दं कर्कराशौ बृहस्पतौ वर्तमाने द्वित्रासु अमावास्यासु तेषां त्रयाणामपि पुष्ययोगः संभवति तथापि तेषां सह प्रवेशोऽत्र विवक्षितः समेष्यन्तीति वचनात् ॥ २५ ॥ ये ये ते ते सर्वे उद्देशतः[1] संक्षेपतः प्रोक्ताः ॥ २६ ॥ भवतस्तव जन्म आरभ्य यावन्नन्दाभिषेचनं तावत् समयान्तरे वर्षसहस्रं पञ्चदशवर्षोत्तरं शतं चेति ( १११५ ) वर्षाणि भवन्ति ॥ २७ ॥ सप्तर्षीणां त्विति । उत्तरध्रुवतारानिकटे प्रागग्रं शकटाकारतारासप्तकं सप्तर्षिमण्डलं तत्रोदयसमपूर्वौ प्रथममुदितौ पुलहक्रतुसंज्ञौ यौ निशि दृश्येते तयोर्मध्यगतमश्विन्याद्यन्यतममेकैकं नक्षत्रं तिष्ठति एकैकं शतवर्षं व्याप्य तेन तेनैव युक्ता ऋषयस्तिष्ठन्तीति नियमः । अधुना ते मघाश्रिता वर्तन्ते इति । तेनाश्लेषायां कृष्णप्रादुर्भावः मघाश्रितेषु तेषु श्रीकृष्णान्तर्धानं कलिप्रवेशश्च । ततः पूर्वाषाढां प्राप्तेषु कलेर्वृद्धिरित्युत्तरग्रन्थदृष्ट्याऽवगन्तव्यम् ॥ २८ ॥ २९ ॥ तत्रापि मघास्वेव यदा विष्णो र्भानु र्भातीति भानुः प्रकाशबहुलः श्रीकृष्णाख्यः शुद्धसत्त्वात्मको विग्रहः दिवं गतः तदा कलिर्लोकमविशत् । यत् यस्मात् कलिप्रवेशात् जनः पापे रमते इति कलियुगस्य लक्षणम् । वै निश्चये

---

१. 'समासोद्देशसंक्षेपास्त्रय एकार्थवाचकाः इति शब्दरत्नसंग्रहोक्तेः ।

यदा देवर्षयः सप्त मघासु विचरन्ति हि । तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥३२॥
यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः । तदा नन्दात् प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥३३॥
यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि । प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥३४॥
दिव्याब्दानां सहस्रान्ते चतुर्थे तु पुनः कृतम् । भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥३५॥
इत्येष मानवो वंशो यथा संख्यायते भुवि । तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगे युगे ॥३६॥
एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम् । कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥३७॥
देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः । कलापग्राम आसाते महायोगबलान्वितौ ॥३८॥
ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ । वर्णाश्रमयुतं धर्मं पूर्ववत् प्रथयिष्यतः ॥३९॥
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥४०॥
राजन्नेते मया प्रोक्ता नरदेवास्तथापरे । भूमौ ममत्वं कृत्वान्ते हित्वेमां निधनं गताः ॥४१॥
कृमिविड्भस्मसंज्ञान्ते राजनाम्नोऽपि यस्य च । भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥४२॥
कथं सेयमखण्डा भूः पूर्वैर्मे पुरुषैर्धृता । मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य च ॥४३॥
तेजोऽबन्नमयं कायं गृहीत्वाऽऽत्मतया बुधाः । महीं ममतया चोभौ हित्वान्तेऽदर्शनं गताः ॥४४॥
ये ये भूपतयो राजन् भुञ्जन्ति भुवमोजसा । कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥४५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

---

॥३०॥ यावत् रमापतिः आस्ते तावत् कलिः पृथिवीं पराक्रान्तुं पराभवितुं न समर्थोऽभूत् ॥३१॥ द्वादशाब्दशतात्मकः (१२००) वर्षात्मकः दिव्येन मानेन सन्ध्यासन्ध्यांशाभ्यां सहेत्यर्थ. । मनुष्यमानेन द्वात्रिंशत्सहस्राधिक चतुर्लक्षवर्षाणि ४३२००० वर्षाणि भवन्ति ॥ ३२ ॥ महर्षयः सप्तर्षयः । यदा यास्यन्ति तदा प्रद्योतनात् वृद्धिं गच्छन् नन्दात्प्रभृति कलिः अतिवृद्धिं गमिष्यतीत्यर्थः ॥३३॥ प्रतिपन्नं प्रविष्टं कलिं जातमिति प्राहुः पुराविदः व्यासादयः । तस्मिन्नेव अहनि । तदा तस्मिन्नेव क्षणे ॥ ३४ ॥ दिव्याब्देति दिव्याब्दानां सहस्रस्य अन्तः स्थितिर्यस्मिन् सन्ध्यांशे स सहस्रान्तः तस्मिन् इति तद्गुणसंविज्ञानबहुव्रीहित्वात् द्वादशशताब्दात्मके सन्ध्यांशसहिते कृतयुगापेक्षया चतुर्थे कलाविति शेषेणायमर्थो बोध्यः । 'अन्तो नाशे स्थितावपि इत्यभिधानात् । यद्वा । दिव्याब्दानां सहस्रेण अन्तो नाशो यस्य तस्मिन् चतुर्थेऽतीते सति । अत्र सहस्रपदं सन्ध्यांशरूपशतद्वयस्याप्युपलक्षणम् । चतुर्थे कलियुगे व्यतीते सति पुनः कृतं कृतयुगं भविष्यति । तदा मनः आत्मनः स्वरूपस्य प्रकाशकं बोधकं भविष्यति ॥ ३५ ॥ वैवस्वतमनोर्वंशः यथा संख्यायते कथ्यते तथा विट्शूद्रादीनामपि तास्ता अवस्था ज्ञेयाः । ख्या प्रकथने धातुः ॥ ३६ ॥ एतेषां पूर्वोक्तानां नामैव लिङ्गं ज्ञापकं येषां तेषाम् कथामात्रेणैव अवशिष्टानां कीर्तिरेव स्थिता न तु राज्यं पुत्रादयो वा ॥ ३७ ॥ कलावुत्सन्नानां राजवंशाना पुनः प्रवृत्तिप्रकारमाह देवापिः सोमवंशजः । मरुस्तु सूर्यवंशजः । कलापग्रामः बदरिकाश्रमस्थः ॥ ३८ ॥ एत्य आगत्य प्रथयिष्यतः प्रचारयिष्यतः ॥ ३९ ॥ ४० ॥ अपरे विप्र विट्शूद्राः । अन्ते देहान्ते इमां भूमिं हित्वा मृताः ॥ ४१ ॥ राजेति नाम यस्य तस्य देहस्यान्ते कृम्यादिसंज्ञा भविष्यति । तत्कृते देहार्थेयो भूतध्रुक् भूतभ्यो द्रुह्यति स किं स्वार्थं वेद नैव वेद । यतो भूतद्रोहात् नरको भवति ॥ ४२ ॥ मे मम पूर्वजैः पुरुषैः धृता इयं भूः मत्पूर्वा अस्ति अतः मत्पुत्रादेः कथं स्यादित्यन्वयः ॥ ४३ ॥ कायमात्मतया मही च ममतया गृहीत्वा उभौ महीकायौ हित्वा अदर्शनं मृत्युं गता ॥ ४४ ॥ ये ये ओजसा बलेन भुवं भुञ्जन्ति वे सर्वे कथासु क्रियमाणासु कालेन कथामात्राः कृताः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्यां द्वितीयोऽध्यायः ॥२॥

# अथ तृतीयोऽध्यायः

श्रीशुक उवाच

दृष्ट्वाऽऽत्मनि जवे व्याग्रान् नृपान् हसति भूरियम् । अहो मा विजिगीषन्ति मृत्योः क्रीडनका नृपाः

काम एष नरेन्द्राणां मोघः स्याद् विदुषामपि । येन फेनोपमे पिण्डे येऽतिविस्रम्भिता नृपाः ॥२॥

पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः । ततः सचिवपौराप्तकरीन्द्रानस्य कण्टकान् ॥३॥

एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् । इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम् ॥४॥

समुद्रावरणां जित्वा मां विशन्त्यब्धिमोजसा । कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥५॥

यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह । गता यथागतं युद्धे तां मां जेष्यन्त्यबुद्धयः ॥६॥

मत्कृते पितृपुत्राणां भ्रातॄणां चापि विग्रहः । जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥७॥

ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः । स्पर्धमाना मिथो घ्नन्ति म्रियन्ते मत्कृते नृपाः ॥८॥

पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः । मान्धाता सगरो रामः खट्वाङ्गो धुन्धुहा रघुः ॥९॥

तृणबिन्दुर्ययातिश्च शर्यातिः शंतनुर्गयः । भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥१०॥

हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः । नमुचिः शम्बरो भौमो हिरण्याक्षोऽथ तारकः ॥११॥

अन्ये च बहवो दैत्या राजानो ये महीश्वराः । सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥१२॥

ममतां मय्यवर्तन्त कृत्वोच्चैर्मर्त्यधर्मिणः । कथावशेषाः कालेन ह्यकृतार्थाः कृता विभो ॥१३॥

---

नृपानुद्दिश्य भूहासस्तृतीये युगधर्मता ।
कलेर्दोषानपाकर्तुं प्रोच्यते हरिकीर्तनम् ॥ १ ॥

आत्मनि स्वस्यां यो जयस्तस्मिन् व्यग्रान् दृष्ट्वा इयं भूः अधिष्ठात्री देवी हसति । अहो मां विजेतुमिच्छन्ति मृत्योः क्रीडनकवत् अधीनाः । येन कामेन पिण्डे देहे अतिविस्रम्भिताः विश्वासं नीताः स एष कामः मनोरथः विजिगीषालक्षणः विदुषां नीतिविदामपि मोघः विफलः किमुत मूर्खाणामित्यर्थः । फेनोपमे बुद्बुदोपमे ॥ २ ॥ षड्वर्गमिन्द्रियषट्कम् । मन्त्री बुद्धिसहायः सचिवः कर्मसहायः । पौरा राजहितैषिणः । आप्ताः विश्वस्ता करीन्द्राः हस्तिपा अस्य अपास्य । 'असु क्षेपणे धातुः । कण्टकान् क्षुद्रशत्रून् ॥ ३ ॥ सागरमेखलां सागरवेष्टिताम् । अन्तिके समीपे अन्तकं मृत्युम् ॥ ४ ॥ ओजसा बलेन मां जित्वेति योज्यम् । अब्धिमित्युक्ते द्वीपजयो ध्वनितः । आत्मजयस्य मनोजयस्य फलापेक्षया एतत् भूजयादिकं कियत् फलमतितुच्छमित्यर्थः । आत्मजये सति मुक्तिरेव फलम् ॥ ५ ॥ मन्वादयः यां मां विसृज्य यथा आगतम् आगताः तथा गता मृताः तां मामेते जेष्यन्ति ॥ ६ ॥ मत्कृते मदर्थमेव पित्रादीनां भ्रातॄणां च परस्परं विग्रहो जायते इत्यन्वयः । असतां दुरात्मनाम् । कुतः । राज्ये ममतया बद्धमासक्तं चेतो येषां तेषाम् ॥ ७ ॥ कृत्स्ना सम्पूर्णा । घ्नन्ति अन्यान् मारयन्ति स्वयं म्रियन्ते च ॥ ८ ॥ पृथु रिति । पञ्चकम् अर्जुनः कार्तवीर्यः । रामो नाम कश्चिदन्यो राजा न तु दाशरथिः । लोकं रावयति रोदयतीति लोकरावणः धुन्धुहा धुन्धुमारः । भौमो नरकासुरः । महीश्वराः भूपतयः इति पाठः । सर्वविदः शस्त्रास्त्रकुशलाः सर्वान् जयतीति सर्वजित् क्विबन्तः बहुवचनम् । मयि उच्चैः अधिकां ममतां कृत्वा येऽवर्तन्त ते सर्वे कालेन अकृतार्थाः अपूर्णमनोरथाः कृताः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम् ।
विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम् ॥१४॥
यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममङ्गलघ्नः ।
तमेव नित्यं श‍ृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥१५॥

राजोवाच

केनोपायेन भगवन् कलेर्दोषान् कलौ जनाः । विधमिष्यन्त्युपचितांस्तन्मे ब्रूहि यथा मुने ॥१६॥
युगानि युगधर्मांश्च मानं प्रलयकल्पयोः । कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥१७॥

श्रीशुक उवाच

कृते प्रवर्तते धर्मश्चतुष्पात्तज्जनैर्धृतः । सत्यं दया तपो दानमिति पादा विभोर्नृप ॥१८॥
संतुष्टाः करुणा मैत्राःशान्ता दान्तास्तितिक्षवः । आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥
त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः । अधर्मपादैरनृतहिंसासंतोषविग्रहैः ॥२०॥
तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः । त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥२१॥
तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे । हिंसातुष्टयनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥२२॥

---

॥ १३ ॥ लोकेषु यशः विताय विस्तार्य परेयुषां परलोकगतानां महीयसां याः कथाः ते तुभ्यं कथिताः ता व्यासादीनां वचोविभूतीः वाग्विलासमात्रा जानीहि न तु परमार्थोपयोगि एतत्कथनमस्तीति । किं विवक्षया कथिता विज्ञानवैराग्ययोः विवक्षया ॥ १४ ॥ तुर्वैलक्षण्ये । यस्तु उत्तमश्लोकस्य भगवतो गुणानुवादः तत्तत्स्कन्धेषु दशमे तु सर्वत्रैव संगीयते तमेव नित्यं तत्रापि अभीक्ष्णं पुनः पुनः श‍ृणुयादित्यन्वयः । किं कुर्वाणः सन् । कृष्णेऽमलां भक्तिम् अभीप्समानः इच्छन् सन् । चानश् प्रत्ययान्तोऽयम् । अत्र नित्यमेव अभीक्ष्णमेव अभीप्समान एव श‍ृणुयादेवेति अवधारणचतुष्टयमत्र ज्ञेयमिति चक्रवर्ती । अमङ्गलं पातकं विषयासक्ति वा हन्तीति तथा ॥ १५ ॥ उपचितान् समृद्धान् दोषान् विधमन्ति नाशयिष्यन्ति तत् सायनं मे मह्यं यथा यथावत् ब्रूहीत्यन्वयः । अत्र लृडर्थे लट् ॥ १६ ॥ युगानीति युगस्वरूपप्रश्नः । प्रलयकल्पयोर्मानं तथा कालस्वरूपस्य विष्णोः गतिं स्वरूपं च ब्रूहीत्यनुषङ्गः । महात्मनोऽपरिच्छिन्नमहिम्नः ॥ १७ ॥ कृते कृतयुगे । चत्वारः पादा यस्य सः । तज्जनैः कृतयुगवर्तिभिः । दानं शौचम् 'दैप् शोधने' धातुः । विभोः परिपूर्णस्य ॥ १८ ॥ तदानीतनान् निरूपयति । मित्रस्य भावो मैत्रं मित्रता तदस्ति येषां ते मैत्रा भवार्थाऽणन्तात् मत्वर्थीयोऽच्प्रत्ययः । शान्ता मनोनिग्रहकर्तारःदान्ता इन्द्रियनिग्रहकर्तारः । तितिक्षवः सहनशीलाः । श्रमणा आत्माभ्यासे कृतश्रमाः ॥१९॥ अनृतादिभिः अधर्मपादैः तुर्यांशः हीयते क्षीयते । प्रतिपादं चतुर्थांशः दानलक्षणः । तत्र अनृतेन सत्यं हिंसया दया असन्तोषेण तपः विग्रहेण दानमिति यथासंख्यं योजनीयम् । दानमभयदानम् । विग्रहो भूतविरोधः ॥२०॥ तदा त्रेतायां क्रिया यज्ञादिः । तप उपवासादि । नातिहिंस्राः । पञ्चसूनाया अवश्यंभावित्वादतिशब्दः । न लम्पटा विषयानासक्ताः । त्रैवर्गिकाः धर्मार्थकामनिष्ठाः । त्रयी वेदत्रयी तत्र वृद्धाः कुशलाः । ब्रह्मोत्तराः ब्राह्मणप्रधानाः ॥ २१ ॥ द्वापरे तु अधर्मस्य लक्षणैः द्योतकैः पादैः हिंसादिभिः धर्मपादेषु तप आदिषु अर्धं ह्रसति क्षीयते अनृतेन सत्यं हिंसया दया असन्तोषेण तप विग्रहेण दानमिति यथायोग्यं योजनीयम् । हिंसेत्यत्र-

यशस्विनो महाशालाः स्वाध्यायाध्यने रताः । आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः ॥
कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः । एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥
तस्मिँल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः । दुर्भगा भूरितर्षाश्च शूद्रदाशोत्तरा प्रजाः ॥२५॥
सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः । कालसंचोदितास्ते वै परिवर्तन्त आत्मनि ॥२६॥
प्रभवन्ति यदा सत्त्वे मनोबुद्ध्यिन्द्रियाणि च । तदा कृतयुगं विद्याज्ज्ञाने तपसि यद् रुचिः ।२७॥
यदा धर्मार्थकामेषु भक्तिर्भवति देहिनाम् । तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन्॥२८॥
यदा लोभस्त्वसंतोषो मानो दम्भोऽथ मत्सरः । कर्मणां चापि काम्यानां द्वापरं तद् रजस्तमः॥२९॥
यदा मायानृतं तन्द्रा निद्रा हिंसा विषादनम् । शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः३०॥
यस्मात् क्षुद्रदृशो मर्त्या क्षुद्रभाग्या महाशनाः । कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥
दस्यूत्कृष्टा जनपदा वेदाः पाखण्डदूषिताः । राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः॥३२॥
अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः । तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः३३॥
ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः । शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥३४॥
पणयिष्यन्ति वै क्षुद्राः किराटाः कूटकारिणः । अनापद्यपि मंस्यन्ते वार्तां साधु जुगुप्सिताम्॥३५॥

---

क्रमो न विवक्षितः । क्रमस्तु असन्तोषानृतहिंसाद्वेषैरित्येवंरूपः ॥ २२ ॥ महाशीला यज्ञानुष्ठानशीलाः महाशाला इत्यपि पाठः अर्थस्तु सम एव शालन्ते शोभन्ते इति । आढ्याधनिनः । क्षत्रद्विजोत्तराः क्षत्रियब्राह्मण-प्रधानाः । क्षत्रद्विजा उत्तराः प्रधानाः येषु ते ॥ २३ ॥ धर्महेतूनां धर्मपादानां तुर्यांशः सत्यलक्षणः अवशिष्यते । एधमानैः वर्धमानैः अधर्महेतुभिः अधर्मपादैः प्रतिदिनं क्षीयमाणः सोऽपि विनङ्क्ष्यति ॥ २४ ॥ तस्मिन् कलौ शुष्कवैरिणः निष्कारणवैरकर्तारः । दुर्भगा भाग्यहीनाः भूरितर्षा नानातृष्णाकुलाः । शूद्रा दाशाः कैवर्तादयश्च येषु ते तथाभूताः ॥ २५ ॥ कालप्रेरिताः ते गुणाः आत्मनि अन्तःकरणे परिवर्तन्ते अतस्ते पुरुषे जीवेऽपि दृश्यन्ते ह्रासोल्लासाभ्यां स्वस्वकार्यं कुर्वन्तीत्यर्थः । यथा एकस्यापि ग्रहस्य सूर्यादेर्दशायां सर्वेषां ग्रहाणामन्तर्दशा भवन्ति तथा एकस्यापि युगस्य मध्ये चत्वारि युगानि तिष्ठन्ति ॥ २६ ॥ यदा मन आदीनि सत्त्वे प्रभवन्ति प्रवर्तन्ते यत् यदा च ज्ञानादौ रुचिः तदा कृतयुगं विद्यादित्यन्वयः ॥ २७ ॥ यदा काम्यकर्मसु भक्तिः प्रवृत्तिः तदा रजोवृत्तिप्रधानं त्रेतायुग जानीहि ॥२८॥ यदा लोभादयः भवन्ति काम्यकर्मसु अभिरुचिः चकारादधर्मेष्वपि तदा रजस्तमःप्रधानं द्वापरं जानीहि । मानो गर्वः दम्भः परप्रतारणम् । मत्सरः परोत्कर्षासहनम् ॥ २९ ॥ यदा मायादयः केवलमधर्मेष्वेव प्रवृत्तिः तदा केवलं तमोगुणप्रधानः कलिः स्मृतः । माया कपटम् । तन्द्रा आलस्यम् । विषादनं विषादः ॥ ३० ॥ यस्मात् कले हेतो एवविधा मर्त्या तथा यत्र असती आश्रित्य सत्योऽपि स्त्रियः स्वैरिण्यः पुंश्चल्यो भविष्यन्ति ॥ ३१ ॥ दस्यवः चोरा उत्कृष्टा प्रचुरा येषु ते । यद्वा । दस्युभिः चौरैः उत्कृष्टाः हिंसिताः जनपदा देशवासिनः । कृष् हिंसायां धातुः । इति तीर्थः । भक्षणं बलात् करादानम् ॥ ३२ ॥ वटवः ब्रह्मचारिणः । कुटुम्बिनो गृहस्था भिक्षवः भिक्षाटनपराः । तपस्विनो वनस्था ॥ ३३ ॥ अत्र स्त्रिय इति विशेष्यमध्याहार्यम् । चौर्यं माया कपटम् उरु महत् साहसं च यासां ताः तदाभूताः ॥ ३४ ॥ क्षुद्रा नीचा किराटा[1] बणिजः सन्तः पणयिष्यन्ति क्रयविक्रयादिव्यवहारं करिष्यन्ति । पण् व्यवहारे स्तुतौ च धातुः । यद्वा । पण् शब्दात् तत्करोतीति णिच् । कूटं मानकूटं तुलाकूटं लिपिकूटं च कर्तुं शीलं येषां ते ।

---

१. 'किराटो हिंसके वैश्ये' इति निरुक्तिः ।

पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् । भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥
पितृभ्रातृसुहृज्ज्ञातीन् हित्वा सौरतसौहृदाः । ननान्दृश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः ॥
शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः । धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥३८॥
नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः । निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥३९॥
वासोऽन्नपानशयनव्यवायस्नानभूषणैः । हीनाः पिशाचसंदर्शा भविष्यन्ति कलौ प्रजाः ४०॥
कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः । त्यक्ष्यन्ति च प्रियान् प्राणान् हनिष्यन्ति स्वकानपि
न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि । पुत्रान् सर्वार्थकुशलान् क्षुद्राः शिश्नोदरम्भराः ४२

कलौ न राजञ्जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम् ।
प्रायेण मर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाखण्डविभिन्नचेतसः ॥४३॥
यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन् वा विवशो गृणन् पुमान् ।
विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥४४॥

पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान् । सर्वान् हरति चित्तस्थो भगवान् पुरुषोत्तमः॥४५॥
श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोऽपि वा । नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥

---

कूटकारिणः । किं च सर्वे जना अनापद्यपि जुगुप्सितां निन्दितां वार्तां वृत्तिं साधु श्रेष्ठां मन्स्यन्ते ॥ ३५ ॥ भृत्या निर्द्रव्यं पतिं स्वामिनं पतयश्च कौलं कुलपरम्परागतं विपन्नं रोगग्रस्तम् भृत्यं च त्यक्ष्यन्तीत्यन्वयः । अखिलोत्तमं कुलादिना अपयस्विनीः दुग्धदीना गाश्च त्यक्ष्यन्ति ॥ ३६ ॥ स्त्रैणाः स्त्रीलम्पटा नरा पित्रादीन् हित्वा ननान्द्रादिभिः संवादो येषां ते तथाभूताः भविष्यन्ति । कथंभूताः । सौरतं सुरतनिमित्तं सौहृदं प्रेम येषां ते । ननान्दा भार्याभगिनी । श्यालः भार्याभर्ता ॥३७॥ तपोवेषेण उपजीवन्तीति तथाभूता सन्तः प्रतिग्रहीष्यन्ति दानग्रहणं करिष्यन्ति ॥३८॥ नित्यमिति युग्मम् । स्पष्टम् ॥ ३९ ॥ वासोऽन्नादिभिः हीनाः । सन्दर्शीः सदृश्यः यद्वा । पिशाचानामिव सम्यक् दर्शः दर्शनं यासां ताः प्रजाः ॥ ४० ॥ काकिणिके विंशतिवराटिकामात्रेऽपि अर्थे निमित्ते विगृह्य कलहं कृत्वा स्वकान् स्वीयान् भ्रातृपुत्रादीन् अपिना परकीयानपि हनिष्यन्ति तत्रासमर्थाश्चेत् स्वप्राणानपि त्यक्ष्यन्तीत्यर्थः ॥४१॥ मनुजाः पुत्रा स्थविरौ वृद्धौ पितरौ पितरश्च पुत्रान् न रक्षिष्यन्तिः सर्वार्थेषु सर्वकार्येषु कुशलानपि यतः क्षुद्रा अधमाः क्रूराश्च[1] । तत्कुतः शिश्नेति ॥ ४२ ॥ कलौ मर्त्याः प्रायेण जगता गुरुमच्युतं प्रायेण न यक्ष्यति न पूजयिष्यन्तीत्यन्वयः । कुतः । पाखण्डैः विभिन्नमश्रद्धं चेतो येषां ते । कथंभूतमच्युतम् । त्रैलोक्यनाथैः इन्द्रादिभिः आनतं पादपङ्कजं यस्य तम् । क्वचित् क्वचित् महाराज 'कलौ खलु भविष्यन्ति नारायणपरायणाः इति निर्देशात् प्रायेणेत्युक्तम् ॥ ४३ ॥ पुमान् यस्य नामधेयमातुरः सन् विवशोऽपि गृणन् उच्चारयन् उत्तमां गतिं प्राप्नोति तं जनाः न यक्ष्यन्तीत्यन्वयः । कथंभूतः । विमुक्ताः कर्मरूपा अर्गलाः बन्धनरूपा यस्य सः । अत्र शत्रन्तानि विशेषणानि क्रमेण योज्यानि ॥ ४४ ॥ द्रव्यादिभिः संभवो येषां तान् दोषान् धुनोति नाशयति । तत्र द्रव्यं निषिद्धान्नादिः देशः कीकटादिः म्लेच्छबहुलो वा आत्मा विषयासक्तं मनः । सर्वान् सवासनान् ॥ ४५ ॥ जन्मायुतार्जितमशुभं पापं धुनोति । अयुतं दशसाहस्रम्

---

१. 'क्षुद्रः स्यादधमे क्रूरकृपणाल्पषु वाच्यवत्' इति मेदिनी ।

यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम् । एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥४७॥

विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ।

नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ ४८ ॥

तस्मात् सर्वात्मना राजन् हृदिस्थं कुरु केशवम् । म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥

म्रियमाणैरभिध्येयो भगवान् परमेश्वरः । आत्मभावं नयत्यङ्ग सर्वात्मा सर्वसंश्रयः ॥५०॥

कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः । कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ॥५१॥

कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः । द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥५२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे तृतीयोऽध्यायः ॥३॥

---

उपलक्षणमेतत् अनन्तजन्मार्जितमित्यर्थः ॥४६॥ यथा हेम्नि सुवर्णे धातुजं ताम्रादिजं दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हरति न तु जलादि एवमात्मनि मनसि गतोऽभिव्यक्तो विष्णुः अशुभाशयं पापराशिं हन्ति न तु यमनियमादि ॥४७॥ यथा हृदिस्थे अनन्ते भगवति अन्तरात्मा अत्यन्तशुद्धिं लभते तथा विद्यादिभिर्नेत्यन्वयः । तप इन्द्रियनिग्रहः । प्राणनिरोधः प्राणायामः । मैत्री अहिंसा । जप्यं मन्त्रजपः । अन्तरात्मा । अन्तः करणम् विद्या उपासना ॥४८॥ म्रियमाणः मरणासन्नस्त्वम् अवहितः सावधानः सन् केशवं हृदिस्थं कुरु । ततः हृदिस्थापनात् परां गतिं मुक्तिं यास्यसि । लृडर्थे लट् । सर्वात्मना बाह्यवृत्तित्यागेन ॥ ४९ ॥ अङ्ग हे उद्धव ! आत्मभावं आत्मस्वरूपं नयति प्रापयति । सर्वात्मा अत एव सर्वेषां संश्रयः आश्रयदाता ॥५०॥ कलेरिति स्पष्टम् ॥५१॥ कृते कृतयुगादिषु ध्यानादिभिः यत् यत् फलं भवति तत्सर्वं कलौ हरिकीर्तनादेव भवति । अतोऽयमेव सर्वसाधनतः श्रेष्ठतम उपायः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्यां तृतीयोऽध्यायः ॥३॥



## अथ चतुर्थोऽध्यायः

### श्रीशुक उवाच

कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप । कथितो युगमानं च शृणु कल्पलयावपि ॥ १ ॥

चतुर्युगसहस्रं च ब्रह्मणो दिनमुच्यते । स कल्पो यत्र मनवश्चतुर्दश विशांपते ॥ २ ॥

---

चतुर्थे प्रलयः प्रोक्तः क्रमादेव चतुर्विधः ।

भवाब्धेस्तरणोपायः कृष्णलीलानिषेवणम् ॥ १ ॥

ते तुभ्यं कथितः युगमानं च कथितमिति लिङ्गव्यत्ययेनान्वयः तृतीयस्कन्धे इति शेषः अपिशब्दात् तयोर्मानं च शृणु ॥१॥ यत्र चतुर्दश मनवः प्रवर्तन्ते तत् ब्रह्मणो दिनमित्यन्वयः स एव दैनन्दिनः कल्प उच्यते ॥२॥

तदन्ते प्रलयस्तावान् ब्राह्मी रात्रिरुदाहृता । त्रयो लोका इमे तत्र कल्पन्ते प्रलयाय हि ॥ ३ ॥
एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् । शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चात्मभूः ॥४॥
द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः । तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै ॥ ५ ॥
एष प्राकृतिको राजन् प्रलयो यत्र लीयते । आण्डकोशस्तु संघातो विघात उपसादिते ॥ ६ ॥
पर्जन्यः शतवर्षाणि भूमौ राजन् न वर्षति । तदा निरन्ने ह्यन्योन्यं भक्ष्यमाणाः क्षुधार्दिताः ॥
क्षयं यास्यन्ति शनकैः कालेनोपद्रुताः प्रजाः ॥ ७ ॥
सामुद्रं दैहिकं भौमं रसं सांवर्तको रविः । रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति ॥ ८ ॥
ततः सांवर्तको वह्निः संकर्षणमुखोत्थितः । दहत्यनिलवेगोत्थः शून्यान् भूविवरानथ ॥ ९ ॥
उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः । दह्यमानं बिभात्यण्डं दग्धगोमयपिण्डवत् ॥१०॥
ततः प्रचण्डपवनो वर्षाणामधिकं शतम् । परः सांवर्तको वाति धूम्रं खं रजसाऽऽवृतम् ॥११॥
ततो मेघकुलान्यङ्ग चित्रवर्णान्यनेकशः । शतं वर्षाणि वर्षन्ति नदन्ति रभसस्वनैः ॥१२॥
तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम् । तदा भूमेर्गन्धगुणं ग्रसन्त्याप उदप्लवे ॥१३॥
ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते । अपां रसमथो तेजस्ता लीयन्तेऽथ नीरसाः ॥१४॥
ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा । लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ॥१५॥

---

प्रलयश्चतुर्विधः नैमित्तिकः प्राकृतिकः आत्यन्तिको नित्यश्च । तत्र नैमित्तिकमाह—तदन्ते इति तदन्ते दिनान्ते तावान् चतुर्दशसहस्रप्रमाणः प्रलयः । सैव ब्राह्मी रात्रिरुच्यते ॥ ३ ॥ यत्र यदा विश्वसृक् नारायणः अनन्तासनः[1] शेषासनः सन् विश्वमात्मसात्कृत्य स्वस्मिन् लीनीकृत्य शेते ब्रह्मा च तस्मिन् प्रविश्य शेते अत एव ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानः प्रलयः नैमित्तिक उच्यते स च लोकत्रयात्मकः एष एव दैनन्दिनशब्दवाच्यश्च भवति । अत्र प्रवर्तमानेऽर्थे ठक् प्रत्ययः । आत्मनो नारायणात् भवतीति आत्मभूः । ब्रह्मायुपरिमितश्च महाकल्पो भवति ॥४॥ अतिक्रान्ते आयुःसमाप्तौ सप्त प्रकृतयः प्रलयाय कल्पन्ते प्रलीना भवन्ति । सप्त महदहङ्कारपञ्चतन्मात्राणि ॥ ५ ॥ विघाते विघातकारणे उपसादिते प्रापिते सति सप्तप्रकृतीनां संघातः समूहः कार्यरूप आण्डकोशो ब्रह्माण्डं लीयते मूलप्रकृतौ इति शेषः एष प्रकृतिलयात् प्राकृतः प्रलय उच्यते ॥६॥ पर्जन्य इति सार्द्धम् । कालेन उपद्रुताः पीडिताः सत्यः प्रजाः क्षयं यास्यन्ति ॥ ७ ॥ संवर्तः प्रलयः तत्र भवः सांवर्तकः सूर्यः सर्वं भूमिजं रसं पिबते आकर्षति ॥ ८ ॥ सावर्तकः प्रलयकालिकः । शेषमुखात् उत्थितः निर्गतः अनिलवेगेन उत्थः प्रज्वलितः वह्निः शून्यान् प्राणिरहितान् अथ भूविवरान् पातालादींश्च दहति भस्मीकरोति ॥ ९ ॥ शिखाभिः ज्वालाभिः दह्यमानं अण्डं ब्रह्माण्डम् ॥ १० ॥ सावर्तकः प्रलयवायुः किञ्चिदधिकं वर्षाणां शतं व्याप्य वाति वहति । तदा रजसा आवृतं खमाकाशं धूम्रमाच्छन्नं भवति । परो बलवत्तरः ॥ ११ ॥ अङ्ग हे राजन् । अनेकशः मेघकुलानि रभसस्वनैः तीव्रगर्जितैः सह नदन्ति गर्जन्ति वर्षन्ति च ॥ १२ ॥ ततो ब्रह्माण्डमध्यगतं विश्वम् एकोदकं भवति । एकमुदकमेव यत्र प्रतीयते नान्यत् तदेकोदकम् । ततश्च उदकेन लोके प्लाविते सति गन्धगुणम् आपः ग्रसन्ति । गन्धोऽप्सु लीयते इत्यर्थः ॥ १३ ॥ अपां रसं तेजो ग्रसति । ता नीरसा आपः तेजसि लीयन्ते ॥ १४ ॥ ततः तेजसो रूपं वायुर्ग्रसते । रूपरहितं तेजोऽनिले लीयते । वायोर्गुणं स्पर्शमाकाशो ग्रसते

---

१. अनन्तः शेषः आसनं शय्या यस्य सः ।

स वै विशति खं राजंस्ततश्च नभसो गुणम्। शब्दं ग्रसति भूतादिर्नभस्तमनु लीयते ॥१६॥

तैजसश्चेन्द्रियाण्यङ्ग देवान् वैकारिको गुणैः। महान् ग्रसत्यहंकारं गुणाः सत्त्वादयश्च तम् ॥
ग्रसतेऽव्याकृतं राजन् गुणान् कालेन चोदितम् ॥ १७ ॥

न तस्य कालावयवैः परिणामादयो गुणाः। अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥१८॥

न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी।
न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः ॥१९॥

न स्वप्नजाग्रन्न च तत् सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः।
संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥२०॥

लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा। शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥२१॥

बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम्। दृश्यत्वाव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत् ॥२२॥

दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग् भवेत्। एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् २३॥

---

॥१५॥ एव स्पर्शरहितो वायुः खमाकाशं विशति। ततश्च नभसो गुणं शब्दं भूतादिः तामसाहङ्कारो ग्रसति। तं शब्दमनु नभोऽपि लीयते भूतादाविति शेषः ॥ १६ ॥ तैजस इति सार्द्धम्। तैजसो राजसाहङ्कारो गुणैः वृत्तिभिः सहितानि इन्द्रियाणि ग्रसति। वैकारिकः सात्त्विकाहङ्कारो देवान् इन्द्रियाधिष्ठातॄन् ग्रसते। त्रिविध-महङ्कारं महान् ग्रसते। तं महान्त गुणा ग्रसन्ते। कालेन चोदितमव्याकृतं प्रधानं मूलप्रकृतिः गुणान् ग्रसते साम्यावस्थां प्रापयति। तच्च प्रधानं ब्रह्मणि लीयते इति योज्यम् ॥ १७ ॥ तस्य ब्रह्मणः कालावयवैः अहोरात्रादिभिः विपरिणामादयो गुणा विकाराः न भवन्ति। कीदृशं ब्रह्म। [1]षड्विकाररहितम्। तद्यथा अनाद्यन्तम् आद्यन्तरहितम्। अनादीत्यनेन प्रथमविकारो जन्मलक्षणो न अनन्तमित्यन्तलक्षणो न अव्यक्तमि-त्यस्तित्वलक्षणो न विपरिणाम इति चतुर्थो न नित्यं सदैकरूपमिति। वृद्धिलक्षणो न अव्ययमिति अपक्षयलक्षणो नेति विकारषट्कं निरस्तम्। यद्वा प्रधानब्रह्मणोरैक्यविवक्षया प्रधानस्यैव विशेषणानि योज्यानि शक्तिशक्तिमतोरभेदो पचारात् ॥१८॥ यत्र वागादयो न सन्ति तत् मूलभूतं कारणरूपं ब्रह्म पदं लयस्थानं वदन्तीति द्वयोरन्वयः। वाचो वाग्व्यापाराः मनः मनोव्यापाराः संकल्पादयः। सत्त्वादिगुणत्रयम्। अमी महदादयो विकाराः। इन्द्रियाणि तदधिष्ठातारो देवताश्च न सन्ति किं बहुना लोका भूरादयः कल्प्यन्ते सृज्यन्ते यत्र स सन्निवेशः रचनाविशेषः ब्रह्माण्डरूपः सोऽपि नास्ति। यत्र त्रिस्रोऽवस्थाः पञ्चमहाभूतानि अर्कश्च नास्ति। संसुप्तवत् निष्क्रियम्। शून्यवत् निराकारम् अत एव अप्रतर्क्यं तर्कागोचरं शब्दातीतत्वात्। निर्गुणं निष्क्रियं शान्तं निराकारमयं ध्रुवम्। इत्युक्तेः ।१९।२०। कालेन विद्रुताः चालिता अतएव विवशाः प्रकृतिपुरुषयोः शक्तयः सत्त्वाद्याः यदा संप्रलीयन्ते तदा एव प्राकृतो लय उच्यते ॥ २१ ॥ बुद्ध्यादिरूपेण तेषामाश्रयभूतं ज्ञानात्मकं ब्रह्मैव भाति न ततः पृथक्। कुतः यत् वस्तु प्रपञ्चजातं तत् अवस्तु असत् आद्यन्तवत्त्वात्। अत्र हेतुद्वयम् अपरमपि। दृश्यत्वात् अव्यतिरेकाच्च कारणाव्यतिरेकात् कारणात् पृथक् असत्त्वाच्च कनककुण्डलादिवत् ॥२२॥ कारणाव्यतिरेकं दर्शयति। दीप-चक्षूरूपाणां तेजोविशेषाणां तेजसो न व्यतिरेकः न पृथक् सत्ता एवं धीः कर्त्री खानि इन्द्रियाणि करणानि मात्रा विषयाः ऋतात् सत्यात् ब्रह्मणः पृथक् न स्युः ब्रह्मकार्यत्वात्। नन्वेवं कार्यकारणयोरभेदे कार्यासत्त्वे कारणस्यापि असत्त्वं प्रसज्जेत तत्राह—अन्यतमात् कार्यादत्यन्तव्यतिरिक्तात् ब्रह्मणः। कारणसत्तायाः कार्य-

---

१. षड्विकारास्तु। जायते अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यति इति।

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते । मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि २४॥
यथा जलधरा व्योम्नि भवन्ति न भवन्ति च । ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् ॥२५॥
सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह । विनार्थेन प्रतीयेरन् पटस्यैवाङ्ग तन्तवः ॥२६॥
यत् सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः । अन्योन्यापाश्रयात् सर्वमाद्यन्तवदवस्तु यत् ॥२७॥
विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा । न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥
न हि सत्यस्य नानात्वमविद्वान् यदि मन्यते । नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥२९॥
यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ।
एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥३०॥

---

सत्ता न पृथक् किन्तु कार्यसत्तातः कारणसत्ता तु पृथगस्ति तच्च मृद्घटादौ स्फुटतरमस्तीति ॥ २३ ॥ यदा तु बुद्धेरसत्त्वं तदा तदवस्थानां सुतरामसत्त्वमित्याशयेनाह—बुद्धेरिति जागरणादयः त्रिस्रोऽवस्था बुद्धेरेव इति विवेकिभिः उच्यते । प्रत्यगात्मनि जीवे तु इदमवस्थाप्रयुक्तं नानात्वं विश्वतैजसप्राज्ञरूपं मायामात्रमविद्याकल्पितं मिथ्यैवेत्यर्थः ॥ २४ ॥ यथा व्योम्नि आकाशे जलधरा मेघा भवन्ति उत्पद्यन्ते न भवन्ति विलीयन्ते च तथा ब्रह्मणि अवयविकार्यभूतं मिदं विश्वमपि कदाचित् भवति कदाचिच्च न भवति । कुतः । उदयाप्ययात् आद्यन्तवत्त्वात् यत् सावयवं तत् आद्यन्तवत् घटादिवत् अतोवि श्वं न सर्वदा सत्यमित्यर्थः ॥ २५ ॥ व्यवहारदशायां सर्वेषामपि अवयविनाम् अवयवः कारणं सत्यम् । अर्थेन अवयविना विनापि अवयवाः पृथक् प्रतीयेरन् प्रतीयन्ते । यथा पटस्यावयवाः तन्तवः पटात् पृथक् प्रतीयन्ते तद्वत् ॥ २६ ॥ ननु कार्यस्यासत्त्वे ब्रह्मणः कारणताऽपि कुतो घटेत साऽपि नास्तीव सत्येत्याह । सामान्यं कारणं विशेष कार्यं तद्भेदरूपेण यत् उपलभ्येत स भ्रमः । यतः उभयमपि अन्योन्यापेक्षम् विशेषं विना सामान्यस्य सामान्यं विनाविशेषस्य सत्ता नास्ति अतो यत् आद्यन्तवत् तत् सर्वमवस्तु मिथ्यैवेत्यर्थः । अयं भावः यथा रज्जुरेव अज्ञानेन सर्पत्वेन विवर्तते तत्र रज्जुः कारणं सर्पः कार्यं स तु मिथ्यैव तथैव सामान्यं ब्रह्मैव अज्ञानेन जगद्रूपतया भासते तत्र जगतः कार्यस्याभावे तदपेक्षतया सिद्धं ब्रह्मणः कारणत्वम् ॥ २७ ॥ नन्वेवमनेकहेतुभिः प्रपञ्चस्य मिथ्यात्वं साधितं तत्र शंका जायते । ननु प्रपञ्चस्यापि प्रकाशमानत्वादात्मवत् सत्त्वं कथं न स्यात् तत्राह-विकार इति । ख्यायमानोऽपि[1] व्यवह्रियमाणोऽपि विकारः प्रपञ्चः परमात्मानं विना अणुरपि न निरूप्योऽस्ति स्याच्चेत् निरूप्यः तर्हि सोऽपिचित्समः आत्मवत् एकरूप एव स्यात् ॥२८॥ सत्यस्य चिद्वस्तुनः नानात्वं नहि यदि मन्यते तर्हि अविद्वान् । कथं तयोर्भेदप्रतीतिः उपाधिकृतेत्याह-अत्र दृष्टान्तत्रयम् । यद्वत् यथा छिद्रयोः घटाकाशमहाकाशयोः नानात्वं न वास्तवम् इति अयं परिच्छिन्नापरिच्छिन्नत्वे दृष्टान्तः । ज्योतिषोः सूर्ययो आकाशजलस्थयोरिति उपाधिकृतविकारसदसद्भावे । वातयोरिति बाह्यशरीरस्थवाय्वोरिति क्रियाभेदे च दृष्टान्तः ॥ २९ ॥ यथा हिरण्यमेकमेव व्यवहारवर्त्मसु क्रियाभिः निर्माणप्रकारैः बहुधा कनककुण्डलादिरूपेण नृभिः समीयते प्रतीयते एवं भगवानेक एव जनैः तत्तत्सम्प्रदायविद्भिः[2] कर्तृभिः लौकिकैः वचोभिः स्तोत्रैः वैदिकैः मन्त्रैश्च करणैः बहुधा व्याख्यायते निरूप्यते । अक्षेभ्यो जातमक्षजम् अधःकृतमक्षजमिन्द्रियजन्यं ज्ञानं येन यस्माद्वा इति अधोक्षजशब्दार्थः । यद्वा । बहुधा आकाशादिरूपेण ब्रह्मादिरूपेण च एष ब्रह्मा एष शिवः इत्यादिना वैदिकैः । लौकिकैश्च शास्त्रज्ञानाभावात् घटोऽयं

---

१. ख्यायते इति ख्यायमानः ख्या प्रकथने इत्यस्मात् कर्माणि शानच् ।

२. द्वैत-अद्वैत द्वैताद्वैतविशिष्टाद्वैतवादिभिः ।

यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः ।
एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मबन्धनः ॥३१॥
घनो यदार्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा ।
यदा ह्यहंकार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥३२॥
यदैवमेतेन विवेकहेतिना मायामयाहंकरणात्मबन्धनम् ।
छित्वाच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग सम्प्लवम् ॥३३॥
नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप । उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः सम्प्रचक्षते ॥३४॥
कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा । परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ॥३५॥
अनाद्यन्तवतानेन कालेनेश्वरमूर्तिना । अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव ॥३६॥
नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः । आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ३७॥
एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः ।
लीलाकथास्ते कथिताः समासतः कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥३८॥

---

पटोऽयमित्यादिना । किञ्च स एव देवो नरो वराहः शुक्लः पीतो ह्रस्वोऽणुदीर्घो महानिति विविधाकारेण च प्रकाश्यते इति भावः ॥ ३० ॥ यथा घनो मेघः अर्कप्रभवः तेनैव दर्शितः प्रकाशितश्च अर्कांशभूतस्य[1] चक्षुषस्तमः अन्धकारत्वेन अर्कदर्शनप्रतिबन्धको भवति एवमहम् अहङ्कारः देहात्मकः ब्रह्मणो गुणः कार्यभूतः तेनैव ईक्षितः प्रकाशितश्च ब्रह्मांशभूतस्य आत्मनो जीवस्य आत्मबन्धनः ब्रह्मस्वरूपदर्शनप्रतिबन्धको भवति । मेघस्य अर्कप्रभवत्वं तु आदित्याज्जायते वृष्टिः इति वचनात् । आपो वा अर्कः इति श्रुतेश्च ॥३१॥ यदा घनः वायुना विदीर्यते विशीर्यते तदा चक्षुः कर्तृ स्वरूपभूतं रविमीक्षते । तथा यदैव जिज्ञासया आत्मानात्मविचारेण आत्मनः जीवस्य उपाधिः अहङ्कारो नश्यति तदा आत्मानमनुस्मरेत् । ब्रह्मैवाहमित्यात्मानमनुभवतीत्यर्थः । एवं सर्वोऽप्येवं कुर्यादिति लिङा विधिर्दर्शितः ॥ ३२ ॥ यदा च एतेन विवेकहेतिना ज्ञानखड्गेन मायामयमज्ञानमयमहङ्कारलक्षणमात्मबन्धनं जीवोपाधिं छित्वा अच्युतं परिपूर्णमात्मानमनुभवतीति तथाभूतः सन् यः अवतिष्ठते स्थिरीभवति तदा अङ्ग हे राजन् तमात्यन्तिकं सम्प्लवमाहुः अत्र यथात्म्यविद इति कर्तृपदमध्याहार्यम् । ॥ ३३ ॥ सूक्ष्मज्ञाः सूक्ष्मदृष्टयो योगिनः नित्यदा प्रतिक्षणमेव संप्रचक्षते कथयन्ति ॥ ३४ ॥ कालस्रोतः कालप्रवाहः तस्य वेगेन आशु ह्रियमाणस्य आकृष्यमाणस्य आत्मनः सम्बन्धिनां परिणामिनां देहानां नित्यं या या अवस्थाः बाल्याद्याः तास्ताः जन्मप्रलयहेतवः जन्मप्रलयानुमापकाः । देहाद्याः प्रतिक्षणं जन्मप्रलयवन्तः अवस्थाभेदानां दृश्यमानत्वात् प्रदीपवदित्यनुमानम् ॥ ३५ ॥ अनाद्यन्तवता आद्यन्तरहितेन कालेन प्रतिक्षणं जायमाना अवस्था नैव लक्ष्यन्ते यथा वियति आकाशे गच्छतां ज्योतिषां चन्द्रादीनां गमनावस्था नैव लक्ष्यन्ते तद्वत् । अतो यथा तेषां देशान्तरप्राप्त्या प्रतिक्षणं गत्यवस्थाः कल्प्यन्ते तद्वदत्रापि बाल्यतारुण्यादिदर्शनेन तन्मध्यवर्तिन्यः सूक्ष्मा अप्यवस्थाः कल्प्यन्ते इति न हेतुरसिद्धः ॥ ३६ ॥ ईदृशी दुर्ज्ञेया ॥ ३७ ॥ प्रकरणार्थमुपसंहरति-एता इति । हे कुरुश्रेष्ठ राजन् । नारायणस्य एता लीलाकथाः ते तुभ्यं समासतः संक्षेपतः कथिताः । कार्त्स्न्येन साकल्येन तु अजो ब्रह्मापि अभिधातुं कथयितुं नेशः न समर्थोऽस्ति । ईश सामर्थ्ये धातुः । अखिलानां सत्त्वानां जीवानां

---

१. अर्काधिष्ठितत्वाच्चक्षुषस्तदेशत्वं बोध्यम् । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् । इति श्रुतेश्च ।

संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद् विविधदुःखदवार्दितस्य ॥३९॥

पुराणसंहितामेतामृषिर्नारायणोऽव्ययः । नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥४०॥

स वै मह्यं महाराज भगवान् बादरायणः । इमां भागवतीं प्रीतः संहितां वेदसम्मिताम् ॥४१॥

एतां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिशालये । दीर्घसत्रे कुरुश्रेष्ठ सम्पृष्टः शौनकादिभिः ॥४२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

---

धाम्नः आश्रयस्य आधारस्य । मपि सर्वमिदं प्रोतं सूत्रे मणिगणा इव इति गीतोक्तेः ॥ ३८ ॥ संसारसिन्धुम् उत्तितीर्षोः पारं कर्तुमिच्छोः पुंसः भगवतः चरितामृतनिषेवणमन्तरेण विना अन्यः प्लवः नौका तरणसाधनं नास्तीत्यर्थः । विविधं दुःखमाध्यात्मिकादि तदेव दवो दावानलः तेन पीडितस्य । दवः दुदु उपतापे धातुः । न्युपसर्गः श्रद्धाद्योतनार्थः ॥ ३९ ॥ ऋषिः सर्वज्ञः नारायणः ब्रह्मद्वारा नारदाय स च नारदः व्यासाय प्राह ॥ ४० ॥ यद्वा । ब्रह्मणे इत्यध्याहार्यम् । अन्यथा द्वितीयस्कन्धात् विरोधः स्यादित्यवधेयम् । स एवं बादरायणः व्यासः प्रीतः सन् इमां संहितां मह्यं प्राहेति पूर्वेणान्वयः । वेदसम्मितां वेदतुल्याम् । यद्वा । ब्रह्म सम्यक् मितं ज्ञातं यया ताम् ॥ ४१ ॥ एतां संहितां नैमिषारण्ये तत्रापि दीर्घसत्रे असौ सूतः वक्ष्यति इत्यङ्गुल्या तं निर्दिशति ॥७२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्यां चतुर्थोऽध्यायः ॥४॥

## अथ पञ्चमोऽध्यायः

### श्रीशुक उवाच

अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः । यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥१॥

त्वं तु राजन् मरिष्येति पशुबुद्धिमिमां जहि । न जातः प्रागभूतोऽद्य देहवत्त्वं न नङ्क्ष्यसि २॥

न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् । बीजाङ्कुरवद् देहादेर्व्यतिरिक्तो यथाऽनलः॥३॥

---

पञ्चमे मुनिना राज्ञो ब्रह्मज्ञानोपदेशतः ।
तक्षकात् यद् भयं मृत्योर्वारितं तन्निरूप्यते ॥ १ ॥

यस्य प्रसादो रजोवृत्तिर्हर्षः तस्माज्जातो ब्रह्मा यस्य क्रोधः तमोवृत्तिः तस्मात् समुद्भवो रुद्रः उभावपि यस्य अधीनौ स हरिः अत्र भागवते अभीक्ष्णं पदे पदे अनुवर्ण्यते तं शृण्वतस्ते कुतोऽन्यस्मात् भयशंकेति योजना कार्या ॥ १ ॥ अहं मरिष्ये इति पशुबुद्धिमविवेकं जहि । यथा देहः प्रागभूत एव अद्य इदानीं जातो नङ्क्ष्यति न तथा त्वं, किन्तु पूर्वं नाभूः न चाद्य जातोऽसि अतो न नङ्क्ष्यसीति योज्यम् ॥ २ ॥ त्वं भूत्वा उत्पद्य बीजाङ्कुरवद् पुत्रादिरूपवान् न भविष्यसि । यथा अनलः काष्ठात् व्यतिरिक्तः तथा त्वं देहात् व्यतिरिक्तोऽसि

स्वप्ने यथा शिरश्छेदं पञ्चत्वाद्यात्मनः स्वयम् । यस्मात् पश्यति देहस्य तत आत्मा ह्यजोऽमरः ।।
घटे भिन्ने यथाऽऽकाश आकाशः स्याद् यथा पुरा । एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ।।५।।
मनः सृजति वै देहान् गुणान् कर्माणि चात्मनः । तन्मनः सृजते माया ततो जीवस्य संसृतिः ६।।
स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते । ततो दीपस्य दीपत्वमेवं देहकृतो भवः ।
रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति ।। ७ ।।
न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः । आकाश इव चाधारो ध्रुवोऽनन्तोपमस्ततः ८।।
एवमात्मानमात्मस्थमात्मनैवामृश प्रभो । बुद्धयानुमानगर्भिण्या वासुदेवानुचिन्तया ।।९।।
चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः । मृत्यवो नोपधक्ष्यन्ति मृत्यूनां मृत्युमीश्वरम् १०।।
अहं ब्रह्म परं धाम ब्रह्माहं परमं परम् । एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ११।।
दशन्तं तक्षकं पादे लेलिहानं विषाननैः । न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ।।१२।।
एतत्ते कथितं तात यथाऽऽत्मा पृष्टवान् नृप । हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि१३।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे ब्रह्मोपदेशो नाम पञ्चमोऽध्यायः ।। ५ ।।

---

देहात् देह एव जायते न त्वात्मा ।।३।। यथा स्वप्ने आत्मनः स्वस्य देहस्य शिरश्छेदं पञ्चत्वं मरणम् आदिपदेन सर्पदंशादि च स्वयं पश्यति जागरणेऽपि तथैव न तु आत्मनः यस्मादेवं ततः तस्मात् आत्मा अजरः अमरश्च ।४। घटे भिन्ने आकाशः तदन्तर्वर्ती यथा पूर्वं तथैव आसीत् । मृते लीने सति ।।५।। मनः आत्मनो जीवस्य देहादीन् सृजति माया च तन्मनः सृजते इति आत्मनेपदप्रयोगेण चिन्मिश्रं मन इति सूचयति । ततो मायोपाधितः जीवस्य संसृतिः न स्वतः ।।६।। स्नेहः तैलम् अधिष्ठानं पात्रं वर्तिः अग्निश्च यावत् ईयते प्रतीयते तावत् दीपत्वं ज्वालारूपः परिणामः एवं देहकृतः देहाध्यासनिमित्तः संसारः । अत्र तैलस्थानीयं कर्म अधिष्ठानस्थानीयं मनः वर्तिस्थानीयो देहः अग्निस्थानीयः चिदाभासः दीपस्थानीय संसार इति विवेचनीयम् । अतो रजआदिगुणवृत्त्या अयं जायते विनश्यति च ।७। तत्र देहे जायमाने आत्मा न जायते न च नश्यति यतः व्यक्ताव्यक्तयोः स्थूलसूक्ष्म-देहयोः परः व्यतिरिक्तः । देहादेः आधारः । नास्ति अन्तः उपमा च यस्य सः । यद्वा । अनन्तेन आकाशेन उपमीयत इति आकाशो यथाऽसंगस्तथेत्यर्थः। ततो व्यापकश्च । तनु विस्तारे धातुः इत्यस्मात् क्तः । अनन्तं सुरवर्त्म खम् इत्यमरः ।।८।। एवम् आत्मस्थं देहस्थम् आत्मानं परमात्मानं आमृश विचारय आत्मना स्वयमेव । कया । बुद्धया । कथंभूतया । वासुदेवस्य अनुचिन्ता चिन्तनं यस्यां तया । अनुमीयतेऽनेनेति अनुमानं तद्गर्भेऽस्ति अस्या इत्यनुमानगर्भिणी तया । बुद्धयादीनि प्रवर्तकसापेक्षाणि जडत्वात् चक्रादिवत् इत्यनुमानम् ।।९।। तक्षकः त्वां न धक्ष्यति न भस्मीकरिष्यति; किन्तु देहमेव । दह भस्मीकरणे धातुः । मृत्यवः मृत्युहेतवः कालादयोऽपि न, किमुत तक्षक इति योज्यं यतो मृत्यूनामपि मृत्युमीश्वरमाश्रित्य स्थितस्त्वाम्।।१०।। अहमिति युग्मम् । योऽहं स परं धाम सर्वाश्रयं ब्रह्मैव इति भावनया शोकादिदुःखनिवृत्तिः । ब्रह्मैवाहमिति भावनया साक्षात्कारः । परमं पदं विश्रामस्थानम् । निष्कले निरुपाधौ आत्मनि ब्रह्मणि आत्मानं जीवात्मानम् आधाय एकीकृत्य समीक्षन् त्वं विषाननैः पादे दशन्तं तक्षकं स्वशरीरं विश्वं च आत्मनः पृथक् न द्रक्ष्यसीति द्वयोरन्वयः । लेलिहानं जिह्वाभिः ओष्ठप्रान्तमास्वादयन्तम् । लिह आस्वादने धातुः, यङ्लुगन्तात् शानच् ।। ११ ।। १२ ।। आत्मा त्वं हरेः चेष्टां लीलां प्रति यत् पृष्टवान्, तदेतत् ते तुभ्यं कथितमित्यन्वयः ।। १३ ।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्यां पञ्चमोऽध्यायः ।।५।।

## अथ षष्ठोऽध्यायः

सूत उवाच

एतन्निशम्य मुनिनाभिहितं परीक्षिद् व्यासात्मजेन निखिलात्मदृशा समेन ।
तत्पादमूलमुपसृत्य नतेन मूर्ध्ना बद्धाञ्जलिस्तमिदमाह स विष्णुरातः ।। १ ।।

राजोवाच

सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना । श्रावितो यच्च मे साक्षादनादिनिधनो हरिः २।।
नात्यद्भुतमहं मन्ये महतामच्युतात्मनाम् । अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ।।३।।
पुराणसंहितामेतामश्रौष्म भवतो वयम् । यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ।।४।।
भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् । प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया ।।५।।
अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे । मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ।।६।।
अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया । भवता दर्शितं क्षेमं परं भगवतः पदम् ।।७।।

सूत उवाच

इत्युक्तस्तमनुज्ञाप्य भगवान् बादरायणिः । जगाम भिक्षुभिः साकं नरदेवेन पूजितः ।।८।।
परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना । समाधाय परं दध्यावस्पन्दासुर्यथा तरुः ।।९।।

---

षष्ठे परीक्षितो मोक्षः सर्पयागोऽस्य पुत्रतः ।
वेदशाखाविभागेन याज्ञवल्क्यकथाऽद्भुता ।। १ ।।

व्यासात्मजेन मुनिना श्रीशुकेन अभिहितं कथितमेतत् पुराणं निशम्य विष्णुरातः परिक्षित् बद्धाञ्जलिः सन् तमिदमाहेत्यन्वयः । किं कृत्वा । नतेन मूर्ध्ना तत्पादमूतलमुपसृत्य गत्वा । कथंभूतेन । निखिलस्य विश्वस्य आत्मा श्रीकृष्णः तं पश्यतीति तेन । यद्वा निखिलात्मा कृष्णः दृशि दृष्टौ यस्य । अतः एव समेन समदर्शिना । विष्णुना रातः दत्तः प्राणदानेन रक्षित इत्यर्थः, रा दाने धातुः ।। १ ।। भवता अनुगृहीतः, अत एव सिद्धः कृतार्थोऽस्मि यत् यस्मात् त्वया हरिः श्रावितः चकारात् तत्प्राप्तिसाधनं च श्रावितम् । करुणायुक्त आत्मा स्वभावो यस्य तेन । अनादिनिधनः आद्यन्तहीनः ।।२।। अज्ञेषु भूतेषु प्राणिषु महतामनुग्रह इति यत् एतत् अद्भुतमाश्चर्यं न मन्ये, यतः अच्युते आत्मा येषाम् ।।३।। अश्रौष्म श्रुतवन्तो वयम् भवतः सकाशात् ।। ४ ।। मृत्युभ्यः मृत्युहेतुभ्यः । निर्वाणमानन्दरूपं ब्रह्म प्रविष्टः अधिगतोऽस्मि ।। ५ ।। हे ब्रह्मन् ! वाचं यच्छामि मौनं धारयामि, पुनश्च अधोक्षजे श्रीकृष्णे चेतः प्रवेश्य असून् विसृजामि, तदर्थं माम् अनुजानीहि अनुज्ञां देहि । कथंभूतं चेतः । मुक्ताः कामवासना विषयवासना यस्मात् तत् । काम्यन्ते इति कामा विषयाः ।६। ज्ञानमुपदेशजन्यं विज्ञानमनुभवः, तन्निष्ठया अज्ञानं देहाध्यासलक्षणं निरस्तं चकारात् तत्संस्कारश्च निरस्तः । यतो भवता भगवतः पदं स्वरूपं धाम वा दर्शितम् । क्षेमं मङ्गलमयम् ।७। तं राजानम् अनुज्ञाप्य पृष्ट्वा भिक्षुभिः साकं मुनिभिः सह जगाम ।। ८ ।। आत्मना बुद्ध्या परम् आत्मानं श्रीकृष्णम् आत्मनि मनसि समाधाय स्थिरीकृत्य अस्पन्दासुः तत्रैव लीनप्राणः सन् दध्यौ इत्यन्वयः, निश्चलेन्द्रियो वा । यथा तरुः स्थाणुरिव स्थितः । आत्मना बुद्ध्या आत्मानं

प्राक्कूले बर्हिष्यासीनो गङ्गाकूल उदङ्मुखः । ब्रह्मभूतो महायोगी निःसङ्गश्छिन्नसंशयः ॥१०॥
तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना । हन्तुकामो नृपं गच्छन् ददर्श पथि कश्यपम् ॥११॥
तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् । द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥१२॥
ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना । बभूव भस्मसात् सद्यः पश्यतां सर्वदेहिनाम् ॥१३॥
हाहाकारो महानासीद् भुवि खे दिक्षु सर्वतः । विस्मिता ह्यभवन् सर्वे देवासुरनरादयः ॥१४॥
देवदुन्दुभयो नेदुर्गन्धर्वाप्सरसो जगुः । ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥१५॥
जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् । यथा जुहाव संक्रुद्धो नागान् सत्रे सह द्विजैः ॥१६॥
सर्पसत्रे समिद्धाग्नौ दह्यमानान् महोरगान् । दृष्ट्वेन्द्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥१७॥
अपश्यंस्तक्षकं तत्र राजा पारीक्षितो द्विजान् । उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥१८॥
तं गोपायति राजेन्द्र शक्रः शरणमागतम् । तेन संस्तम्भितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥१९॥
पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः । सहेन्द्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते २०॥
तच्छ्रुत्वाऽऽजुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे । तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता ॥२१॥
इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः । बभूवुः सम्भ्रान्तमतिः सविमानः सतक्षकः २२॥
तं पतन्तं विमानेन सहतक्षकमम्बरात् । विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥२३॥
नैष त्वया मनुष्येन्द्र वधमर्हति सर्पराट् । अनेन पीतममृतमथ वा अजरामरः ॥२४॥

---

मनः आत्मनि श्रीकृष्णे समाधायेत्यन्वयो वा । स्पदी किञ्चिच्चलने धातुः ॥ ९ ॥ महायोगी स परीक्षित् गंगातटे प्राक्कूले प्रागग्रभागे बर्हिषि कुशासने उदङ्मुखः सन् आसीनो बभूवेति शेषः ॥ १० ॥ हे विप्रा इति सम्बोधनम् । द्विजसूनुना शमीकपुत्रेण शृङ्गिणा प्रहितः प्रेषितः तक्षकः नृपं हन्तुकामः सन् पथि कश्यपं तन्नामानं विषहारिणं ब्राह्मणं ददर्शेत्यन्वयः ॥ ११ ॥ तं द्रविणैः तर्पयित्वा निवर्त्य च द्विजरूपेण तिरोहितः सन् निजरूपेण नृपमदशदित्यन्वयः[1] कामरूपः स्वेच्छारूपधारी देवयोनित्वात् ॥ १२ ॥ ब्रह्मेति त्रयम् अहिगरलाग्निना सर्पविषाग्निना सद्यः तत्क्षणमेव । खे आकाशे सर्वतः सर्वासु दिक्षु । ववृषु चक्रुः ॥ १३ ॥ ॥१४॥१५॥ भक्षितं दष्टम् । यथा यथावदेव जुहाव । अमोघमन्त्रैः बलात्सर्पानाकृष्य प्रज्वलदग्निकुण्डे अहौषी-दित्यर्थः ॥ १६ ॥ समिद्धे प्रज्वलिते अग्नौ दह्यमानान् सर्पान् दृष्ट्वा तक्षकः इन्द्रं शरणं ययौ इत्यन्वयः । संविग्नः भयकम्पितः । ओविजी भयचलनयोः धातुः ततः क्तः ॥ १७ ॥ तत्र यज्ञकुण्डाग्नौ । पारीक्षितः परीक्षित्पुत्रः जनमेजयः ॥ १८ ॥ संस्तम्भितः निरुद्धः ॥ १९ ॥ हे विप्रा किं कथं न पात्यते इति ऋत्विजः प्राहेत्यन्वयः ॥ २० ॥ मरुत्वता मरुद्गणयुक्तेन इन्द्रेण सह पतस्व ॥ २१ ॥ ब्रह्मोदितैः ब्राह्मणोक्तैः आक्षेपैः कठोरवाक्यैः । संभ्रान्तमतिः व्यथितचित्तः ॥ २२ ॥ अङ्गिरसः पुत्रो बृहस्पतिः अम्बरात् आकाशात् पतन्तं सतक्षकमेनमिन्द्रं विलोक्य राजानं प्राहेत्यन्वयः ॥ २३ ॥ वधं नार्हति । तत्र हेतुः । अनेन तक्षकेण अमृतं पीतम् अथवा अत

---

१. तक्षको राजानं दक्ष्यतीति श्रुत्वा सर्पशास्त्रोक्तमन्त्रप्रभावेण विषचिकित्सया राजानं निर्विषं कर्तुं द्रव्यार्जनाय गच्छन्तं विषहारिणं कश्यपनामानं स्वदंष्टभस्मीभूतस्य वटवृक्षस्य पुनरङ्कुरादिरूपेणोत्पापनात्तं परीक्ष्य अपेक्षितद्रव्यैः सन्तर्प्य च निवर्तयामासेत्यत्र प्रासङ्गिकी कथानुसन्धेया । स्वामिभिरप्यस्याः संकेतः कृत इति ।

जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा । राजंस्ततोऽन्यो नान्यस्य प्रदाता सुखदुःखयोः ॥२५॥
सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप । पञ्चत्वमृच्छते जन्तुर्भुङ्क्त आरब्धकर्म तत् ॥
तस्मात् सत्रमिदं राजन् संस्थीयेताभिचारिकम् । सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥

सूत उवाच

इत्युक्तः स तथेत्याह महर्षेर्मानयन् वचः । सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥२८॥
सैषा विष्णोर्महामायाऽबाध्ययाऽलक्षणा यया । मुह्यन्त्यस्यैवात्मभूता भूतेषु गुणवृत्तिभिः ॥२९॥

न यत्र दम्भीत्यभया विराजिता मायाऽऽत्मवादेऽसकृदात्मवादिभिः ।
न यद् विवादो विविधस्तदाश्रयो मनश्च संकल्पविकल्पवृत्ति यत् ॥३०॥
न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितस्त्वहम् ।
तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन् विरमेत् स्वयं मुनिः ॥३१॥
परं पदं वैष्णवमामनन्ति तद् यन्नेति नेतीत्यतदुत्सिसृक्षवः ।
विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः ॥३२॥

---

एव न जीर्यते इत्यजरः स चासौ अमरश्चेति तथाभूतः ॥ २४ ॥ जन्तोः जीवस्य गतिः स्वर्गनरकादिः । ततः । कर्मणोऽन्यः प्रदाता नास्ति ॥ २५ ॥ जन्तुः यत् पञ्चत्वं मृत्युमृच्छते प्राप्नोति तत् प्रारब्धकर्मैव भुङ्क्ते ॥२६॥ यस्मादेवं तस्मात् इदं सत्रं संस्थीयेत् समाप्तं भवतु । यतः आभिचारिकं हिंसाफलकम् । अभिचारो मारणप्रयोगः तत्र भवमाभिचारिकम् । भवार्थे ठक् प्रत्ययः । अनागसो निरपराधाः । जनैः दिष्टं प्राक्तनकर्मफलं भुङ्क्ते ॥ २७ ॥ स जनमेजयः तथाऽस्तु इति कृत्वा वचः स्वीकुर्वन् सत्रात् उपरतः निवृत्तोऽभून् ॥ २८ ॥ यया अस्यैव विष्णोः आत्मभूताः अंशभूता जीवा गुणवृत्तिभिः कामक्रोधादिभिः भूतेषु प्राणिषु मुह्यन्ति परस्परं विविदन्ते सैषा विष्णोर्महामायेत्यन्वयः । कथंभूतया यया । अबाध्यया विदुषा मपि बाधितुमशक्यया । कथंभूता महामाया । अलक्षणा न लक्ष्यते इत्यलक्षणा अतर्क्या तर्कागोचरेत्यर्थः ॥२९॥ सर्वं ब्रह्मैव अथापि दम्भी अयमिति कथनमेव माया सा च आत्मवादिभिः असकृत ब्रह्मवादे ब्रह्मविचारे क्रियमाणे सति यत्र स्फुरिते विष्णौ अभया सती न विराजिता किन्तु भीतैव तिष्ठति, किञ्च यत्र मायाश्रयो विवादो न संकल्पादिमत् मनो न सृज्यादिकमपि नास्ति तदेतत् विष्णुस्वरूपं ज्ञात्वेति शेषः ऊर्मीन् कामक्रोधादीन् निषिध्य दूरीकृत्य तत्रैव विरमेत् विशेषतो रमेतेति द्वयोरन्वयः । यद्वा । विरमेत् प्रपञ्चात् उपरमेत् । कथंभूतं रूपम् । उत्सादितौ निरस्तौ बाध्यबाधकभावौ यस्मात् । यद्वा । बाध्या जीवाः बाधका गुणाश्च बाध्यं द्वैतं बाधकं वृत्तिरूपं ज्ञानम् तत्तु पदं ज्ञेयम् इति वंशीधरी । सृजता कारकवर्गेण इन्द्रियवर्गेण सह सृज्यं कर्म पुण्य पापात्मकम् । उभयोः सृज्यस्रष्ट्रोः परं साध्यं श्रेयःफलम् सुखदुःखादि तथा त्रिभिः सत्त्वादिगुणैः अन्वितः जीवः जीवोपाधिः अहङ्कारश्च यत्र नास्ति तत् विष्णुस्वरूपम् । यद्वा । यत्र जीवे अनादितः विराजितापि माया अतोऽयं दम्भी भवितुमर्हति किन्तु आत्मवादिभिः कृत्वा सकृदपि आत्मवादे भगवत्सम्बन्धिगुणानुवादे क्रियमाणे सति स दम्भी न भवति किन्तु साधुरेव भवति । अपि चेत्सुदुराचारो भजते मामनन्यभाक् इति गीतवतेः ॥३०॥ ॥ ३१ ॥ किं तत्परमात्मस्वरूपमत आह—परमिति । अत्र भक्ता इति विशेष्यमध्याहार्यम् । समाहितैः समाधि-निष्ठैः योगिभिः दौरात्म्यं देहात्मभावं विसृज्य हृदा उपगुह्य आश्लिष्य च यत् अवसितं निश्चितमनुभूतं च भक्तास्तदेव वैष्णवपदं विष्णुस्वरूपमामन्ति वर्णयन्तीत्यन्वयः । कथंभूतास्ते भक्ताः तत् ब्रह्म न भवतीति अतत्

त एतदधिगच्छन्ति विष्णोर्यत् परमं पदम् । अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥३३॥
अतिवादांस्तितिक्षेत नावमन्येत कंचन । न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥३४॥
नमो भगवते तस्मै कृष्णायाऽकुण्ठमेधसे । यत्पादाम्बुरुहध्यानात् संहितामध्यगामिमाम् ॥३५॥

शौनक उवाच

पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः । वेदाश्च कतिधा व्यस्ता एतत् सौम्याभिधेहि नः ॥

सूत उवाच

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः । हृद्याकाशादभून्नादो वृत्तिरोधाद् विभाव्यते ॥३७॥
यदुपासनया ब्रह्मन् योगिनो मलमात्मनः । द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम् ॥३८॥
ततोऽभूत्त्रिवृदोङ्कारोऽयोऽव्यक्तप्रभवः स्वराट् । यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥३९॥
शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् । येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः॥४०
स्वधाम्नो ब्रह्मणः साक्षाद् वाचकः परमात्मनः । स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥४१॥
तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह । धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ॥४२॥
ततोऽक्षरसमाम्नायमसृजद् भगवानजः । अन्तस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥४३॥

---

जगत् तत् उत्सिसृक्षवः त्यक्तुमिच्छन्तः सन्तः अनन्यसौहृदाः नास्ति आत्मनोऽन्यस्मिन् देहादौ सौहृदं अहन्ता ममतादि येषां ते । केन प्रकारेण त्यक्तुमिच्छवः नेति नेतीति । देहोऽप्यात्मा न जडत्वात् घटवत् इन्द्रिया अपि आत्मा न तैजसत्वात् दीपादिवदित्येवं प्रकारेण ॥३२॥ येषां देहगेहजं देवगेहसम्बन्धि अहंममेति दौर्जन्यं मिथ्याभिमानः नास्ति ते एव यत् परं पदं तदेतत् अधिगच्छन्ति प्राप्नुवन्ति ।३३। अतिवादान् दुर्वचनानि ।३४। कृष्णाय कृष्णद्वैपायनाय व्यासाय । अकुण्ठमेधसे असंकुण्ठितबुद्धये । अप्रतिहतज्ञानाय अध्यगाम् अधीतवानस्मि ॥३५॥ हे सौम्य सूत । व्यस्ता विभक्ताः नोऽस्मभ्यम् अभिधेहि कथय ॥ ३६ ॥ समाहितात्मनः समाधिनिष्ठस्य ब्रह्मणो हृदि य आकाशः तस्मात् नादः प्राणघोषोऽभूत् यः कर्णपुटपिधाने श्रोत्रवृत्तिनिरोधात् विभाव्यते प्रतीयते श्रूयते इत्यर्थः ॥ ३७ ॥ यस्य नादस्य उपासनया योगिनः आत्मनो मलं जीवोपाधिरूपं धूत्वा नाशयित्वा अपुर्भवं मोक्षं यान्ति प्राप्नुवन्ति । कीदृशम् । द्रव्यादिरूपम् । क्रमेण अधिभूतमध्यात्ममधिदैवमिति त्रिधा आख्या यस्य तम् । यद्वा । द्रव्यं शरीरं क्रियाकारकशब्दाभ्यां बन्धकं कर्म विवक्षितम् ॥ ३८ ॥ ततो नादात् ओङ्कारोऽभवत् स च त्रिवृत् अकारोकारमकारात्मकः त्रिभिरकाराद्यैः वर्तते त्रीन् अकारादीन् वृणोति आदत्ते वा । अव्यक्तः न सुस्पष्टः प्रभवः अभिव्यक्तिः यस्य साधनद्वारा स्वत एव हृदये राजते प्रकाशते इति स्वराट् । यत् योऽयमोंकारः स ब्रह्मणो लिङ्गं बोधकं वाचकमित्यर्थः । यदिति लिङ्गविशेषणत्वात् क्लीबत्वम् ॥ ३९ ॥ स्फोटं स्फुटति अर्थो यस्मात् तम् अव्यक्तमोङ्कारं सुप्तश्रोत्रे पिहितश्रोत्रेऽपि शृणोति शून्येऽपि इन्द्रियवर्गे दृक् ज्ञानं यस्य तथाभूतः येन वाक् वृहती व्यज्यते यस्य ओङ्कारस्य हृदये आत्मनः सकाशात् अभिव्यक्तिः स परमात्मैव ॥ ४० ॥ स ओङ्कारः स्वधाम्नः स्वकारणस्य ब्रह्मणः साक्षात् वाचकः । स एव च सर्वमन्त्रादीनां बीजं बीजत्वेऽपि निर्विकारतामाह—सनातनमेकरूपं तस्य ब्रह्मरूपत्वात् ॥४१॥ वेदबीजत्वं दर्शयति तस्येति । तस्य ओङ्कारस्य । हे भृगूद्वह शौनक यैः वर्णैः त्रयो भावाः वेदा धार्यन्ते प्रकटीक्रियन्ते यैः वैदैः गुणाः सत्त्वादयः नामानि ऋगादीनि अर्था भूरादयो लोकाः । वृत्तयः अवस्था जाग्रदाद्याश्च अभिव्यक्ता भवन्ति ।४२। ततः ओंकारात् तेभ्यः वर्णेभ्यः अजो ब्रह्मा अक्षरसमाम्नायम् अक्षरसमुदायम् अइउणादि चतुर्दशसूत्रात्मकमसृजत् । तमेवाह —यणोऽन्तस्थाः ।

तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः । सव्याहृतिकान् सोङ्कारांश्चातुर्होत्रविवक्षया ॥४४॥
पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन् ब्रह्मकोविदान् । ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥४५॥
ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः । चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥४६॥
क्षीणायुधः क्षीणसत्त्वान् दुर्मेधान् वीक्ष्य कालतः । वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतचोदिताः।
अस्मिन्नप्यन्तरे ब्रह्मन् भगवाल्लोकभावनः । ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥४८॥
पराशरात् सत्यवत्यामंशांशकलया विभुः । अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥४९॥
ऋगथर्वयजुस्साम्नां राशीनुद्धृत्य वर्गशः । चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव ॥५०॥
तासां स चतुरः शिष्यानुपाहूय महामतिः । एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥५१॥
पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह । वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥५२॥
साम्नां जैमिनये प्राह तथा छन्दोगसंतिताम् । अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे ॥५३॥
पैलः स्वसंहितामूचे इन्द्रप्रमितये मुनिः । वाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥
चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव । पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान् ॥५५॥
अध्यापयत् संहितां स्वां माण्डूकेयमृषिं कविम् । तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान् ॥
शाकल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम् । वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥

---

शल ऊष्माणः । अचः स्वराः । स्पर्शाः कादयो मावसानाः । ह्रस्वदीर्घप्लुताश्च आदिशब्दात् जिह्वामूलीयादयः ते एवं लक्षणं बोधकं यस्य तम् ॥ ४३ ॥ तेन अक्षरसमाम्नायेन असौ अजो ब्रह्मा चतुरो वेदान् असृजदिति पूर्वेणान्वयः । तच्च चतुर्होत्रविवक्षया । चतुर्भिः होतृभिः अनुष्ठेयं कर्म चातुर्होत्रं तस्य विवक्षया प्रकाशनेच्छया । व्याहृतिः भूर्भुवः स्वरिति । तांस्तु वेदान् पुत्रान् मरीच्यादीन् अध्यापयत् । ब्रह्माणि वेदोच्चारणे कोविदान् निपुणान् । ते मरीच्यादयः स्वपुत्रेभ्यः समादिशन् उपदिदिशुः ॥ ४५ ॥ चतुर्युगेषु परम्परया प्राप्तास्ते वेदा अथ द्वापरादौ द्वापरान्ते महर्षिभिः व्यस्ता विभक्ताः । द्वापरमादिर्यस्य अंशस्य तस्मिन् । तत्काले एव व्यासावतारप्रसिद्धेः ॥ ४६ ॥ कालतः कलिकालतः क्षीणसत्त्वान् क्षीणबलान् दुर्मेधान् पुरुषान् वीक्ष्य अच्युतेन प्रेरिता ब्रह्मर्षयः वेदान् व्यस्यन् विभक्तवन्तः ॥ ४७ ॥ अस्मिन्निति युग्मम् । अस्मिन् अन्तरे वैवस्वतमन्वन्तरे धर्मगुप्तये अशांशकलया व्यासरूपेण अवतीर्णः सन् वेदं चतुर्विधं चक्रे । अंशो माया तस्या अंशः सत्त्वं तस्य कलया ज्ञानेन । अंशः शक्तिसमावेशः कला ज्ञानप्रबोधनम् इति वचनात् कलावतारोऽयम् । लोकं भावयति पालयतीति तथा ॥ ४८ ॥ ४९ ॥ ऋगादिमन्त्राणां राशीन् समूहान् वर्गशः प्रकरणभेदात् उद्धृत्य पृथक्कृत्य मन्त्रैः संहिताः चक्रे । यथा नानाविधमणिराशेः मणिगणाः पद्मरागादयो विभज्य पृथक् क्रियन्ते तथा ॥ ५० ॥ महामतिः स व्यासः तासां संहितानां मध्ये एकैकस्मै शिष्याय एकैकां संहितां ददौ । बह्वृचाख्याम् ऋक्संहिताम् । ह सुस्पष्टं यथा स्यात्तथा नितरां गद्यते उच्चैरुच्चार्यते तं निगदसंज्ञकम् ॥ ५२ ॥ साम्नां सामवेदसम्बन्धिनी छन्दोभिः मन्त्रैः गीयते इति छन्दोगा तत्संज्ञकाम् । अथर्वणाम् अथर्ववेदीयमन्त्राणां नाम प्रसिद्धां संहितामाङ्गिरसो सुमन्तुनाम्ने शिष्याय । अङ्गिरसा प्रोक्तत्वात् आङ्गिरसी ॥ ५३ ॥ तत्र ऋग्वेदशास्त्रविभागमाह पैल इति त्रयम् । पैलः स्वां संहितां द्वेधा विभज्य इन्द्रप्रमितये वाष्कलाय च ऊचे सोऽपि वाष्कलोऽपि स्वां संहितां चतुर्धा विभज्य बोध्यादिभ्यः चतुर्भ्यः आह । पैलशिष्यः इन्द्रप्रमितिः स्वां संहिता स्वसुतं माण्डूकेयम्

जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् । बलाकपैजवैतालविरजेभ्यो ददौ मुनि ॥५८॥
बाष्कलिःप्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् । चक्रे वालायनिर्भज्यः कासारश्चैव तां दधुः ॥
बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः । श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥६०॥
वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् । यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् ॥६१॥
याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन् क्रियत् । चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम्॥६२॥
इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया । विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥६३॥
देवरातसुतः सोऽपिच्छर्दित्वा यजुषां गणम् । ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥६४॥
यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः । तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः॥६५॥
याज्ञवल्क्यस्ततो ब्रह्मन् छन्दांस्यधिगवेषन् । गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥६६॥

याज्ञवल्क्य उवाच

ॐ नमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिका-

---

॥ ५४ ॥ ५५ ॥ ५६ ॥ तत्सुतः माण्डूकेयसुतः शाकल्यः वात्स्यादिषु पञ्चसु शिष्येषु स्वसंहिताम् अधात् धारयामास उपदिदेश ॥५७॥ तच्छिष्यः शाकल्यशिष्यः जातूकर्ण्यः स्वसंहितां त्रेधा विभज्य स्वकृतेनै व चतुर्थेन निरुक्तेन संहितां बलाकादिचतुर्भ्यः शिष्येभ्यः ददौ पाठयामासेत्यर्थः । निरुक्तं वैदिकशब्दार्थकोशः ॥ ५८ ॥ बाष्कलिः उक्तबाष्कलस्य पुत्रः सर्वशाखाभ्य उद्धृत्या संगृह्य बालखिल्याख्य संहितां चक्रे तां तस्य त्रयः शिष्याः दधुः जगृहुः । वालायनिः भज्यः कासारः इति त्रयः ॥ ५९ ॥ एता बह्वृचाख्या ऋग्वेदसंहिता एभि ब्रह्मर्षिभिः पैलादिभिः धृता अधीताः । व्यासं विभागम् ॥ ६० ॥ चरकाः चरकसंज्ञाः अध्वर्युशाख्याध्ययनात् अध्वर्यवः ऋत्विग्विशेषाः यजुर्वेदविदश्च आसन् । यत् यस्मात् स्वगुरोरनुष्ठेयं व्रतं ब्रह्महत्यारूपपापनिवारकं स्वयं चेरुः कृतवन्तः तस्मात् चरणात् चरका उच्यन्ते ब्रह्महत्यारूपमंहः क्षपयतीति तथाभूतम् ॥ ६१ ॥ तच्छिष्यः वैशम्पायनशिष्यः आह किम्—अल्पसाराणाम् अल्पतपसामेतेषां भवच्छिष्याणां चरितेन व्रताचरणेन कियत्फलं स्यात् अहमेक एवं सुदुष्करं व्रतं चरिष्ये करिष्ये ॥ ६२ ॥ इत्युक्तः गुरुः वैशम्पायनः आह विप्राणामवमन्त्रा अपमानकर्त्रा त्वया शिष्येण अलं न किञ्चित्प्रयोजनम् इतः स्थानात् आशु याहि गच्छ यच्च मत् मत्तः अधीतं तत् त्यज ॥ ६३ ॥ सोऽपि याज्ञवल्क्योऽपि यजुषां यजुर्वेदीयमन्त्राणां गणम् ऋक्समुदायं छर्दित्वा वमनीकृत्य ततः स्थानात् गतः । अथ अनन्तरं मुनयः तान् ऋक्समुदायान् ददृशुः ॥ ६४ ॥ छर्दितस्य विप्ररूपेण ग्रहणानौचित्यात् मुनयः तित्तिरा तित्तिरसंज्ञकाः पक्षिणो भूत्वा यजूंषि यजुर्वेदीयमन्त्रान् तेषु यजुःषु लालसया

---

१. ब्रह्महत्याकारणमुक्तं विष्णुपुराणे । मेरुस्थमुनिसमाजेऽनागमनात् चरणस्पर्शेन स्वस्त्रीयबालघातात् । तद्यथा—

कदाचिज्जाह्नवीतीरे ऋषीणां तु समागमे ।
ऋषयोऽह्यब्रुवन् सर्वे सम्मन्त्र्य च परस्परम् ॥ १ ॥
ऋषिर्योऽद्य महामेरौ समाजे नागमिष्यति ।
तस्य वै सप्तरात्रान्ते ब्रह्महत्या भविष्यति ॥ २ ॥

वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्तदा स्वस्त्रीयं बालकं सोऽथ अज्ञानाच्च पदाऽस्पृशत् । ममार च तदा सोऽथ मातुलः पर्यतप्यत इत्यादि—

यानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिनाऽव्यवधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ६७

यदु ह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जन भगवतः समभिधीमहि तपन मण्डलम् ॥ ६८ ॥

य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइन्द्रियासुगणाननात्मनः स्वयमात्मान्तर्यामी प्रचोदयति ॥ ६९ ॥

य एवेमं लोकमतिकरालवदनान्धकारसंज्ञाजगरग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति । परित आशापालैस्तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः ॥ ७० ॥

---

आददुः जगृहुः । अत एव तैत्तिरीया इति प्रसिद्धाः ताः शाखा आसन् । सुपेशलाः[1] अतीवरमणीयाः ॥ ६५ ॥ ततो वैशम्पायनात् अधिगवेषयन् अधिकानि अन्विष्यन् अर्कं सूपतस्थे सुष्ठु तुष्टाव । गुरोः अविद्यमानानि तेन अनधिगतानि ॥ ६६ ॥ य एक एव लोकानां जीवनयात्रामनुवहति निर्वहति सम्पादयति तस्मै भगवते आदित्याय नम इत्यन्वयः । कथम्भूतः । अखिलजगतामात्मस्वरूपेण अन्तर्यामिरूपेण अन्तर्हृदयेषु कालरूपेण बहिरपि आकाश इव तदुपाधिना अव्यवधीयमानः अनाच्छाद्यमानः । कथंभूतानां जगताम् । ब्रह्मादिस्तम्बपर्यन्तानां जरायुजादि चतुर्विधप्राणिसमूहानाम् । काभ्यामनुवहति । क्षणलवादिघटितसंवत्सरगणेन यत् अपामादानं विसर्गो वृष्टिश्च ताभ्याम् ॥ ६७ ॥ हे विबुधर्षभ । हे सवितः । हे तपन ! यदुह यदपि वाव प्रसिद्धमदस्तव मण्डलं तपति तत् समभिधीमहि सम्यक् ध्यायेम । पुनरेकं सम्बोधनम् । अनुसवनं त्रिकालमहरहः प्रतिदिनम् आम्नायविधिना वैदिकमार्गेण उपतिष्ठमानानां स्तुवतां पुंसां यानि दुरितानि पापानि तत्फलानि वृजिनानि दुःखानि तेषां बीजमज्ञानं च तेषां सर्वेषामवभर्जन विनाशक । भर्जयतीति भर्जनं तद्भर्गस्तेजो यस्येति वा ॥६८॥ यो वाव यश्च इह लोके स्वयमात्मा सूर्यः अन्तर्यामी सन् स्थावरजङ्गमप्राणिजातानां अनात्मनो जडान् मनइन्द्रियादिगणान् स्वस्वकर्मणि प्रचोदयति प्रेरयति प्रवर्तयतीति । कथंभूतानां निजनिकेतनानां स्वनिवासभूतानाम् । कित निवासे धातुः । अत्र गद्यत्रयेण क्रमेण गायत्र्या वरेण्यम् भर्गः धियः इति पादत्रयाणाम् भावो दर्शितः ॥६९॥ य एव इमं लोकं मृतकमिव विचेतनमवलोक्य ईक्षयैव उत्थाप्य अनुसवनं त्रिकालं श्रेयसि साधने प्रवर्तयति यश्च अवनिपतिरिव असाधूनां भयमुदीरयन् जनयन् परितः अटति तमभिधीमहीति योजना कार्या कथंभूतं लोकम् । अतिकरालवदनो योऽन्धकारसंज्ञोऽजगरग्रहः तेन निगिलितम् । कथंभूते श्रेयसि । स्वधर्माख्यं यत् परमात्मनः अवस्थानमुपासनं तस्मिन् । कथंभूतः सूर्यः । तत्र तत्र स्थाने आशापालैः दिक्पालैः इन्द्रवरुणादिभिः कमलकोशयुक्तैः अञ्जलिभिः उपहृतार्हणः दत्तार्घः । अर्ह्यतेऽनेनेति अर्हणं पूजनद्रव्यं फलपुष्पादि उपहृतं समर्पितम् अर्हणं यस्मै तथाभूतः । अवनिपतिः भूपतिः ॥ ७० ॥ यत

---

१. सुरम्ये पेशलः प्रोक्तः शुद्धे मृदुतरे तथा । इत्यभिधानचिन्तामणिः ।

अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वन्दितमहमयातयामयजुःकाम उपसरामीति ॥ ७१ ॥

सूत उवाच

एवं स्तुतः स भगवान् वाजिरूपधरो हरिः । यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥७२॥
यजुर्भिरकरोच्छाखा दश पञ्च शतैर्विभुः । जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः ॥७३॥
जैमिनेः सामगस्यासीत् सुमन्तुस्तनयो मुनिः । सुन्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ७४
सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् । सहस्रं संहिताभेदं चक्रे साम्नां ततो द्विजाः॥७५॥
हिरण्यनाभः कौसल्यः पौष्यञ्जिश्च सुकर्मणः । शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः ७६
उदीच्याः सामगाः शिष्या आसन् पञ्चशतानि वै । पौष्यञ्ज्यावन्त्ययोश्चापि तांश्च प्राच्यान् प्रचक्षते
लौगाक्षिर्माङ्गलिः कुल्यः कुसीदः कुक्षिरेव च । पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम् ॥
कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः । शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ७९

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे वेदशाखाप्रणयनं नाम षष्ठोऽध्यायः ॥६॥

---

एवंभूतस्त्वमथ अत ह स्फुटम् अहम् अयातयामयजुःकामः सन् तव चरणकमलयुगलमुपसरामि शरणं व्रजामीत्यन्वयः । अयातयामानि अमोघानि अगतसाराणि अन्यैरज्ञातानि विस्मरणादिदोषरहितानि यानि यजूंषि तत्कामः । अयातयामः साफल्ये इति कोशः । न यातः न गत एकोऽपि यामः स्मरणं विना येषां तानीति शब्दार्थः । त्रिभुवनगुरुभिः ब्रह्मादिभिः वन्दितम् ॥ ७१ ॥ वाजिरूपधरः सन् मुनये अदात् उपदिदेश ॥७२॥ शतैः अपरिमितैः बहुभिः यजुर्भिः मन्त्रैः याः पञ्चदश शाखास्ताःकाण्वादयः माध्यन्दिनादयश्च शिष्या जगृहुः अधीतवन्तः अतः शाखा अपि तन्नाम्न्यो जाताः । रविणा अश्वरूपेण वाजेभ्यः केसरेभ्यः[1] बाणेन वेगेन वा सन्यस्ताः त्यक्ताः शाखाः । यद्वा । वाजेभ्यः सम्यङ् नयन्तीति वाजसनीसंज्ञाः । तीर्थस्तु वाजसनः सूर्यः तत आगताः शाखा वाजसन्यः ताः शाखाः इत्याह ॥७३॥ साम गायतीति सामगो जैमिनिः तस्य तनयः सुमन्तुर्नाम सुमन्तोः सुन्वान् ताभ्यां पुत्रपौत्राभ्यामेकैकां संहितां प्राह ॥ ७४ ॥ तच्छिष्यः जैमिनिशिष्यः सुकर्माऽपि सामवेदतरोः संबन्धी महान् तीव्रबुद्धिरभूत् ततो हेतोः साम्नां संहिताया भेदं सहस्रं चक्रे । हे द्विजा इति सम्बोधनं शौनकादीनाम् न त्वेकवचनम् ॥ ७५ ॥ कोशलदेशोद्भवः हिरण्यनाभः पौष्यञ्जिश्च सुकर्मण एतौ द्वौ शिष्यौ संहिताभेदं जगृहतुः अन्य आवन्त्योऽपि अवन्तीभवः तच्छिष्यस्तं जग्राह ॥ ७६ ॥ चकारात् हिरण्यनाभस्यापि तावन्त एव शिष्या आसन् ते उदीच्याः तयोस्तु शिष्याः प्राच्या उच्यन्ते इति चक्रवर्ती ॥ ७७ ॥ अन्येऽपि पञ्च पौष्यञ्जिशिष्या आसन् लौगाक्ष्यादयः ॥ ७८ ॥ हिरण्यनाभस्य अन्योऽपि कृतनामकः शिष्यः स्वशिष्येभ्यः ऊचे । शेषाः संहिताश्च आवन्त्य ऊचे । आत्मवान् ज्ञानी ॥ ७९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्यां षष्ठोऽध्यायः ॥ ६ ॥

---

१. जटा सटा केसरयोः इत्यमरः । अश्वस्य लम्बायमानगलस्थकेशाः ।

## अथ सप्तमोऽध्यायः

### सूत उवाच

अथर्ववित् सुमन्तुश्च शिष्यमध्यापयत् स्वकाम् । संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥१॥

शौक्लायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः । वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ॥२॥

कुमुदः शुनको ब्रह्मन् जाजलिश्चाप्यथर्ववित् । बभ्रुः शिष्योऽथाङ्गिरसः सैन्धवायन एव च ।

अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथापरे ॥ ३ ॥

नक्षत्रकल्पः शान्तिश्च कश्यपाङ्गिरसादयः । एते आथर्वणाचार्याः शृणु पौराणिकान् मुने ॥४॥

त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः । वैशम्पायनहारीतौ षड् वै पौराणिका इमे ॥५॥

अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् । एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम्॥६॥

कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः । अधीमहि व्यासशिष्याच्चतस्रो मूलसंहिताः ॥७॥

पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम् । शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥८॥

सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च । वंशो वंश्यानुचरितं संस्था हेतुरपाश्रयः ॥९॥

दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः । केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया ॥१०॥

---

सप्तमेऽथर्ववेदस्य पुराणस्य च विस्तरः ।

लक्षणानि च तस्यैव वर्णितानि दश क्रमात् ॥ १ ॥

स्वशिष्यं कबन्धनामानम्[1] । सोऽपि कबन्धोऽपि तां द्विधा विभज्य शिष्यद्वयाय उक्तवान् ॥ १ ॥ वेददर्शस्य चत्वारः शिष्याः कुमुदादयः पथ्यशिष्यास्त्रयः ॥ २ ॥ आङ्गिरसः अङ्गिरोगोत्रोत्पन्नस्य शुनकस्य द्वौ शिष्यौ द्वे संहिते अधीयेताम्। सावर्ण्याद्याः सैन्धवायनादीनां शिष्याः तथा अपरेऽपि नक्षत्रकल्पादयो द्वयोः शिष्या बभूवुः ॥ ३ ॥ ४ ॥ इमे वै प्रसिद्धाः षट् पौराणिकाः ॥ ५ ॥ एते त्रय्यारुणादयः मत्पितुः रोमहर्षणस्य मुखात् अधीतवन्तः एकैकां पुराणसंहिताम् । एतेषां सर्वेषां शिष्यः सन् अहं तु ताः सर्वाः समध्यगां सम्यक् अधीतवान् ॥ ६ ॥ इतोऽतिरिक्ता अन्या अपि चतस्रो मूलसंहिताः कश्यपादयः चत्वारोऽपि वयं व्यासशिष्यात् श्रीशुकात् अधीमहि । रामशिष्यः परशुरामशिष्यः ॥ ७ ॥ वेद एव शास्त्रं तदनुसारतः यथा वेदे पुराणलक्षणमुक्तं तदनतिक्रम्य इह वर्णयामि ब्रह्मर्षिभिः व्यासादिभिः । बुद्धिमाश्रित्य बुद्धिपूर्वकं सावधानः सन्नित्यर्थः शृणु ॥८॥ अथ शाखाविभागानन्तरम् । अस्य पुराणस्य क्रमेण दश लक्षणानि । अस्य विश्वस्य सर्गादि वा । वृत्तिः स्थानम् । रक्षा पोषणम् । अन्तराणि मन्वन्तराणि । संस्था निरोधः । अनेन मुक्तिरपि गृहीता । वंशो वंश्येत्यनेन ईशानुकथा उक्ताः । हेतुशब्देन वासनाशब्दवाच्या ऊतयो गृहीता ऊतयः कर्मवासनाः जन्मनो वासनाया एव हेतुत्वात्[1] ॥ ९ ॥ पुराणं महापुराणम् । यत्र दशापि लक्षणानि क्रमेण तन्महापुराणम् । पञ्चस्वेव

---

१. अथर्ववेदं सुमतिः सुमन्तुरमितद्युतिः।
शिष्यमध्यापयामास कबन्धं सोऽपि तं द्विधा ।
कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान् ॥ इति विष्णुपुराणे ।

अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः । भूतसूक्ष्मेन्द्रियार्थानां सम्भवः सर्ग उच्यते ॥११॥
पुरुषानुगृहीतानामेतेषां वासनामयः । विसर्गोऽयं समाहारो बीजाद् बीजं चराचरम् ॥१२॥
वृत्तिर्भूतानि भूतानां चराणामचराणि च । कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा ॥१३॥
रक्षाच्युतावतारेहा विश्वस्यानु युगे युगे । तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ॥१४॥
मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः । ऋषयोऽशावतारश्च हरेः षड्विधमुच्यते ॥१५॥
राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः । वंश्यानुचरितं तेषा वृत्तं वंशधराश्च ये ॥१६॥
नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः । संस्थेति कविभिः प्रोक्ता चतुर्धास्य स्वभावतः १७
हेतुर्जीवोस्य सर्गादेरविद्याकर्मकारकः । यं चानुशयिनं प्राहुरव्याकृतमुतापरे ॥१८॥

---

अन्येषामन्तर्भावः तत् अल्पमुपपुराणं चेति महत् अल्पं चेति व्यवस्थया ॥ १० ॥ अव्याकृतस्य प्रकृतेः गुणानां क्षोभात् यो महान् महत्तत्वं तस्मात् यस्त्रिवृत् त्रिविधोऽहङ्कारस्तस्मात् भूतादीनां संभवः सर्गः कारणसृष्टिरित्यर्थः । अर्थशब्देन देवता ग्राह्याः सूक्ष्मा तन्मात्रा ॥ ११ ॥ पुरुषेण ईश्वरेण अनुगृहीनां दत्तशक्तीनाम् एतेषां महदादीनां समाहारः[2] कार्यरूपः विसर्ग उच्यते इत्यनुषङ्गः । कीदृशः । वासनामयः शुभा[3]शुभवासना प्रधानः विविधः सर्ग विसर्गः । तत्र चराचरं स्थावरजङ्गमात्मकमिदं जगत् बीजात् बीजमिव प्रवाहापन्नं भवति । लुप्तोपमेयम् । ॥ १२ ॥ वृत्तिपदेन स्थितिः स्थानं गृह्यते । चराणां जंगमानां सामान्यतः व्रीहिफलादीनि चात् गोमहिष्यादीनि जीविकासाधनं वृत्तिरित्युच्यते न तु अभक्ष्यभक्षणमयी । तत्र सर्वजीवेषु सा वृत्तिः नृणां स्वेन स्वभावेन कामात् रागात् तत्रापि चोदनया शास्त्रविधिना न केवलं रागप्राप्ता शास्त्राविरुद्धा चेति तेषां चराचराणामाश्रयः स्थानरूपा पृथ्वी एव अतः वृत्तिपदेन स्थानं गृह्यते । 'स्थानभ्रष्टा न शोभन्ते पण्डिता वनिता लता' इति न्यायात् ॥ १३ ॥ रक्षेति युग्मम् । रक्षा पोषणम् अजामिलादिभक्तानां षष्ठे । अनुयुगे युगे प्रतियुगं तिर्यगादिषु ये अच्युतावताराः तेषांमीहा चेष्टा लीला विश्वस्य रक्षा उच्यते । यैः अवतारैः त्रयीद्विषः वेदविरोधिनो दैत्या हन्यन्ते ॥ १४ ॥ मन्वन्तरं षड्विधमुच्यते इत्यन्वयः । यत्र मन्वादयः षट् स्वे स्वेऽधिकारे प्रवर्तन्ते स कालः मन्वन्तरमित्युच्यते । हरेः अंशावतारश्च इत्यत्रान्वेति । ॥ १५ ॥ ब्रह्मणः सकाशात् प्रसूतानां राज्ञां योऽन्वयः परम्परागतसम्बन्धः स वंशः तेषां मध्ये ये वंशधरा वंशप्रवर्तकास्तेषां वृत्तं वंश्यानुचरितमुच्यते एतदुभयमीशकथेत्युच्यते । वंशे भवा वंश्याः ॥ १६ ॥ स्वभावतो मायातः यो नैमित्तिकादि चतुर्धा लयः स कविभिः संस्थेत्युच्यते । चक्रवर्ती तु स्वस्य भावेषु कारणेषु पृथिव्यादितत्त्वानां क्रमेण लयः संस्था । यद्वा । स्वभावतः स्वसत्तातः स्वभाविकस्वशक्तित इत्यर्थः । अनेन मुक्तिरपि उक्ता भवति । ष्ठा गतिनिवृत्तौ धातुः । संसारयातायातनिवृत्तिः ॥ १७ ॥ अस्य विश्वस्य सर्गादेर्हेतुर्निमित्तं जीवः सोऽत्र हेतुः वासनामयः अत एव अविद्यया मोहितः सन् कर्मकारकः कर्मकर्ता वासनामनुशेते च इत्यतो वासनाग्रस्तत्वात् यमनुशयिनं बद्धजीवमाहुः । उत अपि

---

१. अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्ति राश्रयः । अतः द्वितीय मस्कन्धेन न विरोधः ।

२. समाहारः समुदायः समष्टिव्यष्टिजीवोपाधिरूपः ।

३, यथा प्रह्लादस्य शुभवासना हिरण्यकशिपोरशुभवासना च ।

व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु । मायामयेषु तद् ब्रह्म जीववृत्तिष्वपाश्रयः ॥१९॥
पदार्थेषु यथा द्रव्यं सन्मात्रं रूपनामसु । बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम् ॥२०॥
विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम् । योगेन वा तदाऽऽत्मानं वेदेहाया निवर्तते ॥२१॥
एवं लक्षणलक्ष्याणि पुराणानि पुराविदः । मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ॥२२॥
ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम् । नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम् ॥२३॥
भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् । वाराहं मात्स्यकौर्मं च ब्रह्माण्डाख्यमिति त्रिषट् ॥
ब्रह्मन्निदं समाख्यातं शाखाप्रणयनं मुनेः । शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम् ॥२५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

---

अपरे अव्याकृतं साक्षात् प्रधानं प्रकृतिं च प्राहुः । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां जीवभूताम् इति गीतोक्तेः । यद्वा । तन्निवृत्तित्वात् प्राकृतप्रपञ्चरहितं शुद्धजीवं च प्राहुः ॥ १८ ॥ आश्रयं निरूपयति— व्यतिरेकेति । मायामयेषु प्रकृतिकार्येषु शरीरेषु जीववृत्तिषु जीवस्य अवस्थासु जाग्रदादिषु च यस्य हेतुतया अन्वयः तेभ्यो व्यतिरेकश्च तौ भवतः तत् ब्रह्म सर्वाधारत्वादपाश्रय इत्युच्यते । अत्र अपशब्दः तस्य स्वाश्रयत्वमेव न तस्याश्रयान्तरमस्तीति सूचनार्थः । अपगतो निवृत्तः अन्यः आश्रयो यस्येति समासः । यद्वा यस्य मायाशक्त्या अन्वयः स्वरूपेण व्यतिरेकश्च तदपाश्रयः ॥१९॥ एतदेव दृष्टान्तेन स्पष्टयति । यथा रूपनामवत्सु पदार्थेषु घटादिषु सन्मात्रं कारणभूतं द्रव्यं मृदादि युतम् अयुतं च बहिरप्यवस्थानात् एवं जन्मादिमरणपर्यन्तासु अवस्थासु युतमयुतं च यत् ब्रह्म तदपाश्रय इति दृष्टान्तेन योजना कार्या । एवं युतायुतपर्यायभूतान्वयव्यतिरेकाभ्यां बोध्यं परमात्मतत्त्वमाश्रयपदवाच्यं भवतीति तात्पर्यम् । बीजं गर्भाधानं जन्म आदिर्यासां पञ्चता मरणमन्तो यासां तासु नवस्वपि[1] अवस्थासु इति समासः ॥२०॥ एवं दशापि लक्षणानि व्याख्याय तैर्लक्ष्यं निर्दिशति । यदा सर्गादीनां मिथ्यात्वानुसन्धानेन प्राक्तनसंस्कारबलात् वृत्तित्रयं जाग्रदाद्यवस्थात्रयं हित्वा वामदेवादेरिव स्वयं चित्तं विरमेत उपरतं भवेत् तदा लक्ष्यभूतमात्मानमाश्रयतत्त्वं वेद अनुभवति । योगेन वा देवहूत्यादेरिव इहैव अनुष्ठितेन उपरतं भवेत् तदेहायाः संसृतेः सकाशात् निवर्तते मुक्तो भवतीत्यर्थः ।२१। एवं लक्षणैः दशभिः पञ्चभिश्च लक्ष्याणि। बोध्यानि । तत्र पञ्चभिर्लक्षणैः क्षुल्लकानि अल्पानि उपपुराणानि दशभि र्महान्ति पुराणानीति योज्यम् । पुराविदः अतीतानागतविदः पराशरादयः ॥२२॥ ब्राह्ममिति । युग्ममिति । क्रमेण पुराणानि निर्दिशति ब्राह्ममिति त्रिगुणिताः षट् त्रिषट् अष्टादशेत्यर्थः मात्स्यकौर्मम् इत्येकपदं समाहारद्वन्द्वः शेषं स्पष्टम् ॥२३॥२४॥ मुनेः व्यासस्य शिष्यादीनां कर्तरि षष्ठी ते यत् शाखाप्रणयनं वेदपुराणसंहिताप्रवर्तनं समाख्यातं तदिदं ब्रह्मतेजो वर्धयतीति तथाभूतम् । शिष्यप्रशिष्येति गुरुपरम्परा सूचिता तयैव तत्त्वज्ञानं भवति नान्यथेति ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्यां सप्तमोऽध्यायः ॥७॥

---

१. निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ।
वयोमध्यं जरामृत्युरित्यवस्थास्तनोर्नव ॥ इत्यत्रैवोक्तेः ।

## अथाष्टमोऽध्यायः

### शौनक उवाच

सूत जीव चिरं साधो वद नो वदतां वर । तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ।। १ ।।
आहुश्चिरायुषमृषिं मृकण्डतनयं जनाः । यः कल्पान्ते उर्वरितो येन ग्रस्तमिदं जगत् ।।२।।
स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः । नैवाधुनापि भूतानां सम्प्लवः कोऽपि जायते ।।
एक एवार्णवे भ्राम्यन् ददर्श पुरुषं किल । वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ।।४।।
एष नः संशयो भूयान् सूत कौतूहलं यतः । तं नश्छिन्धि महायोगिन् पुराणेष्वपि सम्मतः ।।५।।

### सूत उवाच

प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः । नारायणकथा यत्र गीता कलिमलापहा ।।६।।
प्राप्तद्विजातिसंस्कारो मार्कण्डेयः पितुः क्रमात् । छन्दांस्यधीत्य धर्मेण तपस्स्वाध्यायसंयुतः ।।७।।
बृहद्व्रतधरः शान्तो जटिलो वल्कलाम्बरः । बिभ्रत् कमण्डलुं दण्डमुपवीतं समेखलम् ।।८।।
कृष्णाजिनं साक्षसूत्रं कुशांश्च नियमर्द्धये । अग्न्यर्कगुरुविप्रात्मस्वर्चयन् संध्ययोर्हरिम् ।।९।।
सायं प्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः । बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः ।।१०।।

---

अष्टमे वर्ण्यते तीव्रं मार्कण्डेयतपो महत् ।
पराजयश्च कामस्य नरनारायणस्तवः ।। १ ।।

हे वदतां वर ! अपारे दुस्तरे तमसि संसारे भ्रमतां पुंसां त्वं पारं दर्शयतीति तथा तन्मोचकोऽसि ।।१।। मार्कण्डेयपुराणस्य नाम श्रुत्वा तच्चरितं बुभुत्सुः सन् पृच्छति—आहुरिति । येन कल्पान्तेन प्रलयेन इदं जगत् ग्रस्तं लीनं भवति तस्मिन् कल्पान्ते यः उर्वरितः अवशिष्टः तम् ऋषिं चिरायुषमाहुरित्यन्वयः ।। २ ।। स वै स एव अस्मिन् कुले उत्पन्नः किन्तु अधुना अस्मिन् कल्पे कोऽपि सम्प्लवः प्रलयो नवै जायते नैव जातः । अतः संदेहावसरः ।।३।। अर्णवे वटपत्रपुटे शयानम् एकं तोकं बालं पुरुषं मुकुन्दं ददर्श एतच्च कथं घटते नोऽस्माकमेष महान् संशयः तं छिन्धोत्युत्तरेणान्वयः । यतः संशयात् एतत् श्रोतुं कौतूहलम् उत्कण्ठा वर्तते । सम्मतः रहस्यज्ञः ।।४।।५।। लोकस्य भ्रमम् अपहन्ति निवारयतीति तथा । यत्र प्रश्नोत्तरे नारायणकथा गीता आरब्धा भविष्यति । कलिमलापहा सन्देहनिवारिका ।। ६ ।। क्रमात् गर्भाधानादिक्रमात् । पितुः सकाशात् प्राप्तः द्विजातिसंस्कार उपनयनाख्यो येन सः । तप इन्द्रियनिग्रहः वेदाध्ययनं च ताभ्यां संयुतः सम्पन्नोऽभूत् । बृहदिति त्रिकम् । बृहद्व्रतं नैष्ठिकब्रह्मचर्यं व्रतं तद्धरः कमण्डल्वादिकं बिभ्रत् नियमर्द्धये नियमरक्षणाय कुशांश्च बिभ्रत् अग्न्यादिषु पञ्चसु हरिमर्चयन् भैक्षं गुरवे आहृत्य समर्प्य तदनुज्ञातश्चेत् सकृत् एकवारं बुभुजे नो चेदुपोषितोऽभवदित्यन्वयः । आत्मा स्वहृदयम् आत्मार्चनं मानसपूजा अक्षसूत्रम्[1] अक्षमाला ।।७।।८।।९।।१०।। वर्षा-

---

१. 'आदिक्षान्तगतैर्वर्णैर्जपमालाऽक्षमालिका' इति तन्त्रोक्तेः ।
पञ्चाशन्मणिभिर्माला विहिता सर्वकर्मसु ।
अकारादिक्षकारान्ता ह्यक्षमाला प्रकीर्तिता ।। १ ।। इति गौतमीये ।

एवं तपस्स्वाध्यायपरो वर्षाणामयुतायुतम् । आराधयन् हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥११॥
ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च येऽपरे । नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥१२॥
इत्थं बृहद्व्रतधरस्तपस्स्वाध्यायसंयमैः । दध्यावधोक्षजं योगी ध्वस्तक्लेशान्तरात्मना ॥१३॥
तस्यैवं युञ्जतश्चित्तं महायोगेन योगिनः । व्यतीयाय महान् कालो मन्वन्तरषडात्मकः ॥१४॥
एतत् पुरन्दरो ज्ञात्वा सप्तमेऽस्मिन् किलान्तरे । तपोविशङ्कितो ब्रह्मन्नारेभे तद्विघातनम् १५॥
गन्धर्वाप्सरसः कामं वसन्तमलयानिलौ । मुनये प्रेषयामास रजस्तोकमदौ तथा ॥१६॥
ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे । पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो १७॥
तदाश्रमपदं पुण्यं पुण्यद्रुमलताञ्चितम् । पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥१८॥
मत्तभ्रमरसंगीतं मत्तकोकिलकूजितम् । मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥१९॥
वायुः प्रविष्ट आदाय हिमनिर्झरशीकरान् । सुमनोभिः परिष्वक्तो ववावुत्तम्भयन् स्मरम्॥२०॥
उद्यच्चन्द्रनिशावक्त्रः प्रवालस्तबकालिभिः । गोपद्रुमलताजालैस्तत्रासीत् कुसुमाकरः ॥२१॥

---

णामयुतायुतं दशकोटिवर्षपर्यन्तम् । जिग्ये जितवान् ॥ ११ ॥ ये च अपरे गन्धर्वादयः किं बहुना सर्वेऽपि तेन मृत्युजयेन । भवो वीरभद्रः न तु शिवः ॥ १२ ॥ अक्षेभ्यो जातमक्षजम् अधःकृतमक्षजम् इन्द्रियजन्यं ज्ञानं येन यस्माद्वा अधोक्षजः तं दध्यौ । केन । ध्वस्ताः क्लेशा रागादयो वासना वा यस्य तथाभूतेन अन्तरात्मना मनसा ॥१३॥ युञ्जतः सन्धदतः । व्यतीयाय व्यतीतोऽभूत् । मन्वन्तरेति । षडित्यस्य पूर्वनिपाताभावो विशेषण विशेष्यभावव्यत्यासात् ॥१४॥ सप्तमे अन्तरे मन्वन्तरे वैवस्वताख्ये तद्विघातनं तपोविघातनम्॥१५॥ मुनये मुनिं मोहयितुं । तुमर्थे चतुर्थी । गन्धर्वादीन् प्रेषयामास । वसन्तानिलौ कामोद्दीपकौ रजस्तोकः रजोगुणपुत्रो लोभः मदश्च तावपि । एते सर्वे मूर्तिमन्तः सन्तो गता इत्यवधेयम् । रजस्तोक इति कस्यचित् कामगणस्य नामेति केचित् ॥१६॥ उत्तरे पार्श्वे उत्तरभागे तत्रापि यत्र नदी तत्रापि यत्र चित्रा शिला तत्र तदाश्रमं जग्मुरित्यन्वयः । वै प्रसिद्धास्ते मूर्तिमन्तः ॥१७॥ आश्रमं विशिनष्टि द्वाभ्याम् । तदाश्रमपदं प्रविष्टः वायुः ववौ मन्दं मन्दं चचाल । कथंभूतमाश्रमपदम् । पुण्यं सुखकरम् अर्शं आद्यजन्तः । पुण्यैः विश्रामदैः द्रुमैः लताभिश्च अञ्चितं पूजितं भूषितमित्यर्थः । पुनश्च । पुण्यद्विजानाम् ऋषीणां कुलैः समूहैः आकीर्णं व्याप्तम् । पुण्या अमला जलाशया यस्मिन् । पुनश्च । मत्तभ्रमराणां संगीतं गानं यस्मिन् । भावे निष्ठा । मत्तकोकिलानां कूजितं मधुरध्वनिर्यस्मिन् । पुनश्च । मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यविलासो[1] यस्मिन् । मत्तानां द्विजानां पक्षिणां कुलैः समूहैः आकुलं पूर्णम् । एवंभूतमाश्रमपदं प्रविष्टो वायुः मलयानिलः शीतलनिर्झरजलकणान् आदाय स्मरं कामम् उत्तम्भयन् वर्धयन् ववौ प्रससार । सुमनोभिः पुष्पैः परिष्वक्तः आश्लिष्टः । अत्रे वायोः वृक्षेषु प्रवेशात् मान्द्य निर्झरजलकणादानात् शैत्यं पुष्पस्पर्शात् सौगन्ध्यं च निगदितम् । पुण्यद्रुमा अश्वत्थादयः पुण्यलता विष्णुक्रान्तद्याः । पुण्यद्विजा शुकसारसादयः ॥ १८ ॥ १९ ॥ २० ॥ तत्र तदा कुसुमाकारः वसन्त आविरासीत् कथंभूतः : उद्यन् चन्द्रो यस्मिन् तत् निशावक्त्रं रजनी मुखं यस्य सः । कैः सह प्रवालानां पल्लवानां स्तबकानां गुच्छनामालयः श्रेण्यः येषु तैः गोपद्रुमैः लताजालैश्च सह । गां पृथ्वी फलपुष्पादिभिः पान्ति तर्पयन्तीति गोपाः

---

१. बिलासः शोभातिशयः ।

अन्वीयमानो गन्धर्वैर्गीतवादित्रयूथकैः । अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः ॥२२॥
हुत्वाग्निं समुपासीनं ददृशुः शक्रकिंकराः । मीलिताक्षं दुराधर्षं मूर्तिमन्तमिवानलम् ॥२३॥
ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः । मृदङ्गवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥२४॥
संदधेऽस्त्रं स्वधनुषि कामः पञ्चमुखं तदा । मधुर्मनो रजस्तोक इन्द्रभृत्या व्यकम्पयन् ॥२५॥
क्रीडन्त्याः पुञ्जिकस्थल्याः कन्दुकैःस्तनगौरवात् । भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः २६
इतस्ततो भ्रमद्दृष्टेश्चलन्त्या अनु कन्दुकम् । वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥२७॥
विससर्ज तदा बाणं मत्वा तं स्वजितं स्मरः । सर्वं तत्राभवन्मोघमनीशस्य यथोद्यमः ॥२८॥
त इत्थमपकुर्वन्तो मुनेस्तत्तेजसा मुने । दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः २९॥
इतीन्द्रानुचरैर्ब्रह्मन् धर्षितोऽपि महामुनिः । यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥३०॥
दृष्ट्वा निस्तेजसं कामं सगणं भगवान् स्वराट् । श्रुत्वानुभावं ब्रह्मर्षेर्विस्मयं समगात् परम्३१॥
तस्यैवं युञ्जतश्चित्तं तपस्स्वाध्यायसंयमैः । अनुग्रहायाविरासीन्नरनारायणो हरिः ॥३२॥

---

आम्रादयः । यद्वा । गोभ्यः किरणेभ्य : पान्ति रक्षन्तीति गोपास्ते च ते द्रुमास्तैः ॥ २१ ॥ तत्र एवं सति तत्र स्मरः कामोऽपि अदृश्यत दृष्टिगोचरोऽभूत् । कथंभूतः । गीतवाद्यानां मृदङ्गादीनां यूथं समूहोऽस्ति येषां तैः गीतवादित्रयूथवद्भिः यूथिकैः[1] । गायकादिसमुदायिभिर्वा गन्धर्वैः अनुगम्यमानः । पुनश्च । आत्तंग्रहीतं चापमिषवो बाणाश्च येन सः । स्वःस्त्रियोऽप्सरसः तासां यूथस्य पतिः तत्सहितश्च ॥ २२ ॥ दुराधर्षं पराभवितुमशक्यं यतोऽनलमग्निमिव प्रतीयमानम् ॥ २३ ॥ तस्य मार्कण्डेयस्य पुरतः ॥ २४ ॥ कामः स्वधनुषि पञ्चमुखम्[2] स्त्रं संदधे योजयामास । शोषणादीनि पञ्च मुखानि यस्य । मधुर्वसन्तः रजस्तोको रजोगुणपुत्रो लोभः अन्येऽपि इन्द्रभृत्या मदादयः तस्य मुनेः मनः व्यकम्पयन् चालयामासुः ॥ २५ ॥ क्रीडन्त्या इति युग्मम् । कन्दुकैः क्रीडन्त्याः पुञ्जिकस्थल्या अप्सरसः तत्सूक्ष्मं वासः वायुर्जहार देहात् पृथक् कृतवानित्यन्वयः । कथंभूतायाः । कन्दुकम् अनुसृत्य इतस्ततश्चलन्त्या अत एव भ्रमद्दृष्टेः । पुनश्च । स्तनगौरवात् उद्विग्नः चलितुमसमर्थः मध्ययः कटिभागो यस्याः । पुनश्च । केशेभ्यः विस्रंसिता अधः पतिता स्रक् यस्यास्तथाभूतायाः । कथंभूतं वासः । त्रुटिता मेखला बन्धनभूता यस्य तत् ॥२६॥२७॥ स्मरः स्वेनैव जितं तं मुनिं मत्वा तदा नग्नतादशायां बाणं विससर्ज चिक्षेप । किन्तु तत्र मुनौ सर्वं मोघं व्यर्थमभवत् । यथा अनीशस्य भाग्यहीनस्य प्रतिकूलदैवस्य उद्यमो व्यर्थो भवति तथा ॥ २८ ॥ हे मुने इति शौनकसंबोधनम् । मुनेः तेजसा दह्यमानास्ते निववृतुः पलायिता बभूवुः । यथा अर्भका बालाः सर्पं प्रबोध्य लत्तया प्रहारीकृत्य पलायन्ते तद्वत् । अपकुर्वन्तः अपकारं कुर्वन्तः ॥ २९ ॥ धर्षितोऽपि अभिभूतोऽपि यत् अहमोऽहङ्कारस्य भावं विकारं कामक्रोधादि न अगात् न प्राप तत् महत्सु पुरुषेषु चित्रमाश्चर्यं नास्ति ॥ ३० ॥ स्वराट् इन्द्रः निस्तेजसं पीतमुखम् । अनुभावं प्रभावम् ॥३१॥ एवं तपे आदिभिः चित्तं युञ्जतः स्थिरोकुर्वतस्तस्य मुनेः अनुग्रहाय नरेण सहितः नारायणः आविरासीत्

---

१. मत्वर्थीयष्ठन् प्रत्ययः ।

२. उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा ।
सम्मोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः ॥ १ ॥ इति कोशः

तौ शुक्लकृष्णौ नवकञ्जलोचनौ चतुर्भुजौ रौरववल्कलाम्बरौ ।
पवित्रपाणी उपवीतकं त्रिवृत् कमण्डलुं दण्डमृजुं च वैणवम् ॥३३॥
पद्माक्षमालामुत जन्तुमार्जनं वेदं च साक्षात्तप एव रूपिणौ ।
तपत्तडिद्वर्णपिशङ्गरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥३४॥
ते वै भगवतो रूपे नरनारायणावृषी । दृष्ट्वोत्थायादरेणोच्चैर्ननामाङ्गेन दण्डवत् ॥३५॥
स तत्संदर्शनानन्दनिर्वृतात्मेन्द्रियाशयः । हृष्टरोमाश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥३६॥
उत्थाय प्राञ्जलिः प्रह्व औत्सुक्यादाश्लिषन्निव । नमो नम इतीशानौ बभाषे गद्गदाक्षरः॥३७॥
तयोरासनमादाय पादयोरवनिज्य च । अर्हणेनानुलेपेन धूपमाल्यैरपूजयत् ॥३८॥
सुखमासनमासीनौ प्रसादाभिमुखौ मुनी । पुनरानभ्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥३९॥

मार्कण्डेय उवाच

किं वर्णये तव विभो यदुदीरितोऽसुः संस्पन्दते तमनु वाङ्मनइन्द्रियाणि ।
स्पन्दन्ति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबन्धुः ॥४०॥

---

प्रकटोऽभूत् ॥ ३२ ॥ ताविति त्रिकम् । तौ नरनारायणौ ऋषी दृष्ट्वा उत्थाय च उच्चैः महता आदरेण अङ्गेन साष्टाङ्गेन दण्डवत् तौ ननामेत्यन्वयः । कथंभूतौ । तत्र शुक्लौ नरः नारायणः कृष्णवर्णश्च तौ । रुरुः कृष्णमृगोऽपि तस्येदं रौरवं कृष्णजिनं बल्कलवस्त्रं च ययोस्तौ । पवित्रे कुशपवित्रे पाण्योर्ययोस्तौ । त्रिवृत् त्रिगुणं नवतन्तुकं उपवीतकं दधानौ । सर्वत्र द्वितीयान्तानामत्रैव सम्बन्धः । ऋजुमवक्रं वैणवं दण्डं पद्माक्षाणां पद्मबीजानां मालाम् उत अपि जन्तूनां विघ्नकारिणां मार्जनं निवारणं येन तथाविधं वेदं दर्भमुष्टिं[1] च दधानौ । तपत् दीप्यमानं तडिद्वर्णसदृशं विद्युत्संकाशं यत् पिशंगरोचिः शरीरकान्तिस्तेन साक्षात् तप एव रूपिणौ मूर्तिमन्तौ । कुतः । प्रकृष्टा अंशवः किरणा ययोस्तौ उन्नतौ वा । पुनश्च विबुधर्षभैः सुरश्रेष्ठैः ब्रह्मादिभिः अर्चितौ । वै प्रसिद्धार्थे ॥ ३३ ॥ ३४ ॥ ३५ ॥ स मुनिः तौ ईक्षितुमपि न सेहे न समर्थोऽभूत् । कथंभूतः। तयोः सन्दर्शनेन य आनन्दस्तेन निर्वृता आनन्दिता आत्मेन्द्रियाशया देहेन्द्रियमनांसि यस्य सः। पुनश्च हृष्टानि पुलकितानि रोमाणि यस्य । अश्रुभिः पूर्णे अक्षिणी यस्य सः ॥३६॥ औत्सुक्यात् आश्लिषन्निव आलिङ्गयन्निव उत्थाय प्राञ्जलिः सन् तौ ईशानौ नमो नम इति बभाषे इत्यन्वयः । प्रह्वो नम्रः ॥ ३७ ॥ आसनमादाय आनीय पादयोः अवनिज्य पादौ प्रक्षाल्य अर्हणेन अर्घ्यादिना तौ अपूजयत् । अनुलेपेन चन्दनेन माल्यैः पुष्पैः ॥ ३८ ॥ गरिष्ठौ पूज्यतमौ मुनी मुनिवेषधारिणौ तौ पादयोः आनम्य इदमब्रवीत् । प्रसादः प्रसन्नता अभितः सर्वतोभावेन मुखे ययोस्तौ । प्रसादस्तु प्रसन्नता इति कोशः ॥ ३९ ॥ स्तुतावात्मनः सामर्थ्याभावं द्योतयन्नाह—किमिति । हे विभो ! तव वैभवं किं वर्णये । यत् येन त्वयैव उदीरितः प्रेरितः असुः प्राणः संस्पन्दते संचलति तं प्राणमनु वागादीनि इन्द्रियाणि प्रचलन्ति चेष्टन्ते । न केवलं तनुभृतां प्राकृतानामपि तु अजशर्वयोश्च स्वस्य ममापि तथैव यद्यप्येवम् अथापि त्वद्दत्तशक्तिभिरेव भजतां पुंसां त्वं भावेन प्रेम्णा बन्धुरिव बध्यो

---

१. 'सर्वे विघ्ना क्षयं यान्ति कुशप्रक्षिप्तवारिणा । इति पुराणान्तरम् ।

मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै ।
नाना बिभर्ष्यवितुमन्यतनूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ॥४१॥

तस्यावितुः स्थिरचरेशितुरङ्घ्रिमूलं यत्स्थं न कर्मगुणकालरुजः स्पृशन्ति ।
यद् वै स्तुवन्ति निनमन्ति यजन्त्यभीक्ष्णं ध्यायन्ति वेदहृदया मुनयस्तदाप्त्यै ॥४२॥

नान्यं तवाङ्घ्र्युपनयादपवर्गमूर्तेः क्षेमं जनस्य परितोभिय ईश विद्मः ।
ब्रह्मा बिभेत्यलमतो द्विपरार्धधिष्ण्यः कालस्य ते किमुत तत्कृतभौतिकानाम् ॥४३॥

तद् वै भजाम्यृतधियस्तव पादमूलं हित्वेदमात्मच्छदि चात्मगुरोः परस्य ।
देहाद्यपार्थमसदन्त्यमभिज्ञमात्रं विन्देत ते तर्हि सर्वमनीषितार्थम् ॥४४॥

सत्त्वं रजस्तम इतीश तवात्मबन्धो मायामयाः स्थितिलयोदयहेतवोऽस्य ।
लीला धृता यदपि सत्त्वमयी प्रशान्त्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥४५॥

---

भवसि अहो ते कृपालुतेत्यर्थः ॥ ४० ॥ हे भगवन् ! भगवतः तव इमे मूर्ती त्रिलोक्याः क्षेमाय पालनाय तापनिवृत्तये मृत्युजित्यै मोक्षाय च भवतः । अत्र दृष्टान्तयति—यथा इदं विश्वमवितुं रक्षितुं नाना अन्यतनूः मत्स्यादिमूर्तीः बिभर्षि तद्वत् । किञ्च इदं सृष्ट्वा यस्य पालनार्थं तनू बिभर्षि तत्सर्वं पुनर्ग्रससि च ऊर्णनाभिरिवेति अद्भुतं तव लीलावैभवमिति भावः । ऊर्णनाभिः तन्तुकीटः स यथा मुखात् ऊर्णां तन्तुजालमुद्वमति उद्गिरति पुनर्ग्रसति च तथा । ऊर्णा तन्तुजालः नाभौ यस्येति तच्छब्दार्थः ॥ ४१ ॥ स्थिरचराणां स्थावरजङ्गमानामीशितुः नियन्तुः अवितुः रक्षकस्य तस्य तव अङ्घ्रिमूलं भजामीति तृतीयेनान्वयः । यदङ्घ्रिमूलस्थभक्तवृन्दं कर्मादयो रुजः क्लेशा न स्पृशन्ति तत् भजामीति योज्यम् । तत्र कर्म पुण्यपापात्मकं गुणशब्देन तत्कार्यं कामक्रोधादिकं कालशब्देन शीतोष्णादि अपमृत्युक्लेशाश्च । अत एव तत्प्राप्तये मुनयः यत् वै यदेव अङ्घ्रिमूलं स्तुवन्ति नितरां नमन्ति यजन्ति पूजयन्ति ध्यायन्ति च । अभीक्ष्णं पुनः पुनः । वेदो हृदये येषां ते वेदहृदया वेदरहस्यज्ञाः ।४२। हे ईश अपवर्गमूर्तेस्तव अङ्घ्र्युपनयात् चरणप्राप्तेः अन्यं जनस्य क्षेमं न विद्मः । कथम्भूतस्य जनस्य । परितः समन्ततः भीर्भयं यस्य तस्येति एकपदम् । ब्रह्मापि कालस्य ते कालरूपात् ते त्वतः[1] अलं बिभेति यदा ब्रह्मणोऽपि भयं तदा किमु वक्तव्यं तेन ब्रह्मणा कृतानां भौतिकानां प्राणिनां भयमस्तीति । कथंभूतो ब्रह्मा । द्विपरार्द्धं द्विपरार्द्धकालावस्थायि धिष्ण्यं स्थानं यस्य सः । यद्वा । नञ्पूर्वकभीशब्दच्छेदे समस्तमेकपदम् । परित. सर्वत्रैव नोऽस्ति भय यस्मात्तस्य तवेत्यस्य विशेषणम् ॥ ४३ ॥ यस्मादेवं तत् तस्मात् सत्यधियः सत्यसङ्कल्पस्य आत्मनो जीवस्य गुरोः परस्य परमेश्वरस्य तव पादमूलमेव भजामीत्यन्वयः । वै एवार्थे । किं कृत्वा । आत्मच्छदि आत्मावरकम् अपार्थं निष्फलम् असत् मिथ्याभूतमन्त्यं नश्वरं च इदं देहगेहादि हित्वा । एवं सति यः कोऽपि अभिज्ञमात्रं[2] ज्ञानस्वरूपं त्वां भजेत् तर्हि ते त्वत्त एव सर्वमनीषितार्थं वाञ्छितार्थं सर्वाभीष्टं विन्देत ॥ ४४ ॥ हे आत्मबन्धो जीवसखे अस्य विश्वस्य स्थित्यादिहेतवः सत्त्वादयस्त्रयो गुणाः सन्ति यदपि यद्यपि एतैर्लीला स्यादित्येदर्थं त्वया धृताः किन्तु

---

१. अत्र रुज इति पाठः सुगमः ननु रजः इति वंशीधरी । रज इत्येकवचनान्तस्य स्पृशन्तीति बहुवचनान्तक्रियामन्वयानौचित्यात् ।

२. पञ्चम्यर्थे षष्ठीयम् । यद्वा कालस्य ते वेगादिति योज्यम् ।

३. अभितो जानातीति अभिज्ञः सर्वज्ञः स एव अभिज्ञमात्रम् एवार्थे मात्रच्प्रत्ययः ।

तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं स्वदयितां कुशला भजन्ति ।
यत् सात्वताः पुरुषरूपमुशन्ति सत्त्वं लोको यतोऽभयमुतात्मसुखं न चान्यत् ॥४६॥
तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदेवतायै ।
नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ॥४७॥
यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः सन्तं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ।
तन्मायया॰ऽऽवृतमतिः स उ एव साक्षादाद्यस्तवाखिलगुरोरुपसाद्य वेदम् ॥४८॥

---

ते सत्त्वमयी मूर्तिः प्रशान्त्यै मोक्षाय भवति अन्ये ब्रह्मरुद्रमूर्ती न भवत इति न किन्तु भवत एवेति नकार इति आवृत्या योज्यम् यतो हि नृणामुपासकानां वरयाचनासमये तेषां संकल्पानुसारेण याभ्यां मूर्तिभ्यां व्यसनं दुःखं मोहोऽज्ञानं भीश्च भयं च भवति न वस्तुतः ताभ्यामिति व्याख्येयम् । किञ्च त्रयाणामेव सत्त्वतनुत्वात् सत्त्वत्वेन तेषामुपासना श्रेयोहेतुरिति निर्विवादम्[1] ॥ ४५ ॥ एतदेव सदाचारेण दृढयति तस्मादिति । हे भगवन् तस्मात् कुशला निपुणबुद्धयः अथ विचारानन्तरं शुक्लां शुद्धसत्त्वमयीं तनुं मूर्ति भजन्ति उपासते । कीदृशीम् । तावकानां भक्तानां स्वस्य तव च दयिताम् प्रियाम् । यत् यस्मात् सात्वता नारदाद्याः सत्त्वमेव पुरुषस्य विष्णोः रूपमुशन्ति वाञ्छन्ति न तु अन्यत् रजस्तस्तमश्चेति । वशकान्तौ धातुः कान्ति-रिच्छा । यतः सत्त्वात् वैकुण्ठलोकः भवति लोके सत्यपि अभयम् तद्भोगे सत्यपि आत्मसुखम् अविनाशिसुखं च ॥ ४६ ॥ एवंभूतं तं प्रणमति । तस्मै नम इति । तस्मै भगवते पुरुषाय नम इत्यन्वयः । कथंभूताय । भूम्ने व्यापकाय । विश्वाय विश्वनाम्ने अतो न सर्वनामसंज्ञा । यथा सर्वो नाम कश्चित् तस्यै सर्वाय देहीति कौमुदी । गुरवे ज्ञानप्रदाय । ऋषये ऋषिरूपधारिणे नरोत्तमाय नराय नारायणाय इत्यत्रान्वेति । हंसाय नीरक्षीरविवेकवत् आत्मानात्मविवेकदाय । संयतगिरे शब्दातीताय अथापि निगमेश्वराय वेदमार्गप्रवर्तकाय ॥ ४७ ॥ वितथैः कुत्सितैः अक्षपथैः इन्द्रियमार्गैः भ्रमद्धीः भ्रान्तबुद्धिः पुमान् स्वखेषु स्वेन्द्रियेषु असुषु प्राणेषु हृद्यपि नियन्तृ-त्वेन सन्तं वर्तमानं अवतारसमये दृक्पथेषु प्रत्यक्षमपि वर्तमानं यं त्वां न वेद तं त्वां वन्दे इत्युत्तरेणान्वयः । किं बहुना यः आद्यो ब्रह्मा स उ सोऽपि अखिलगुरोस्तव सकाशात् वेदमासाद्यापि साक्षात् त्वां न वेद तं त्वां वन्दे इत्युत्तरेणान्वयः । उरप्यर्थे । न वेद तस्मैनम इति पूर्वेण वान्वयः । न वेदेत्यत्र हेतुः । तस्य तवैव मायया आवृता कुण्ठिता लुप्ता मतिर्यस्य सः ॥ ४८ ॥ यस्य तव दर्शनं ज्ञानं निगमे वेदे भवति । कथमूतं ज्ञानम् । आत्मनस्तव रहो रहस्यं तस्य प्रकाशकम् । अन्यथा तस्य दुर्ज्ञेयतामाह—अजः ब्रह्मा परो मुख्यो येषु ते तथाभूता कवयः कपिलादयोऽपि सांख्ययोगादिभिः यतन्तोऽपि यत्र त्वज्ज्ञाने मुह्यन्ति तं महापुरुषं वन्दे इत्यन्वयः । कथंभूतं

---

१. विशेषविवरणं तु अस्मत्कृतश्रीमद्भागवतसाप्ताहिककथाया प्रथमस्कन्धस्य द्वितीयाध्याये टिप्पण्यां द्रष्टव्यम् ।

यो विष्णुः स च वै रुद्रो यो रुद्रः स पितामहः । एकमूर्तिस्त्रयो देवा रुद्रविष्णुपितामहाः । इति ॥

यद्दर्शनं निगम आत्मरहःप्रकाशं मुह्यन्ति यत्र कवयोऽजपरा यतन्तः।
तं सर्ववादविषयप्रतिरूपशीलं वन्दे महापुरुषमात्मनिगूढबोधम् ॥४९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥

---

पुरुषम्। सर्वेषां सांख्ययोगादिवादाना ये विषयाः मतभेदास्तेषां प्रतिरूपं तत्तदनुसारि शीलं चरित्रं स्वभावो वा यस्य तम्। यो मच्छ्रद्धः स एव सः इत्युक्तेः।[1]पुनश्च। आत्मना देहादिसंघातेन निगूढः बोधः प्रकाशो यस्य तम्। यद्वा। आत्मन्येव गूढो गुप्तीकृतो बोधः स्वतत्त्वं येनतम् प्रदीपस्तु तत्प्रतिरूपं प्रतिकूलं नत्वनुकूलं शीलं यस्येत्याह भेदाविषयत्वात् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां गूढार्थदीपिन्यां द्वादशस्कन्धेऽष्टमोध्यायः ॥८॥

## अथ नवमोऽध्यायः

### सूत उवाच

संस्तुतो भगवानित्थं मार्कण्डेयेन धीमता। नारायणो नरसखः प्रीत आह भृगूद्वहम् ॥ १ ॥

### श्रीभगवानुवाच

भो भो ब्रह्मर्षिवर्योऽसि सिद्ध आत्मसमाधिना। मयि भक्त्याऽनपायिन्या तपस्स्वाध्यायसंयमैः॥२॥
वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया। वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥३ ॥

### ऋषिरुवाच

जितं ते देवदेवेश प्रपन्नार्तिहराच्युत। वरेणैतावताऽलं नो यद् भवान् समदृश्यत ॥ ४ ॥
गृहीत्वाऽजादयो यस्य श्रीमत्पादाब्जदर्शनम्। मनसा योगपक्वेन स भवान् मेऽक्षगोचरः ॥ ५ ॥
अथाप्यम्बुजपत्राक्ष पुण्यश्लोकशिखामणे। द्रक्ष्ये मायां यया लोकः सपालो वेद सद्भिदाम् ॥ ६ ॥

### सूत उवाच

इतीडितोऽर्चितः काममृषिणा भगवान् मुने। तथेति स स्मयन् प्रागाद् बदर्याश्रममीश्वरः ॥ ७ ॥

---

नवमे भगवन्मायां दिदृक्षुः प्रलयार्णवे।
भ्रमन् पर्णपुटे बालं दृष्ट्वाऽभूद्विस्मितो मुनिः ॥ १ ॥

भृगूद्वहं भृगुवंशजं मार्कण्डेयम्। भो भो इत्यादरे वीप्सा। आत्मसमाधिना चित्तैकाग्र्येण अनपायिन्या अविच्छिन्नया भक्त्या तप आदिभिश्च त्वं सिद्धः कृतकृत्योऽसीत्यन्वयः। संयमोऽत्र धैर्यम् ॥ २ ॥ वयमिति बहुवचनं सर्वदेवाभिप्रायेण। वरदेशात् अस्मात् वरं प्रतीच्छ वृणीहि। प्रसंगादेकत्वम् ॥ ३ ॥ प्रपन्नानां शरणागतानामार्ति हरतीति हे अच्युत ते जितं तवोत्कर्षोऽस्त्येव। देवा इन्द्राद्यास्तेषां देवो ब्रह्मा तस्यापि त्वमीशोऽसीति भावः। एतावता वरेण अलं पर्याप्तम् ॥४॥ अजादयोऽपि यस्य दर्शनं गृहीत्वा प्राप्य कृतार्था भवन्ति-स भवानित्यन्वयः। अक्षगोचरः नेत्रविषयीभूतः॥५॥ यद्यपि त्वद्दर्शनमेव वरोऽथापि तव मायां द्रक्ष्ये इत्यन्वयः। यया सर्वोऽपि लोको जनः सत्पादवाच्ये त्वयि भिदां तिर्यङ्मनुष्यादि भेदं वेद जानाति पश्यतीत्यर्थः तामित्यन्वयः

---

१. नाहं प्रकाशः सर्वस्य योगमायासमावृतः इति गीतोक्तेः।

तमेव चिन्तयन्नर्थमृषिः स्वाश्रम एव सः। वसन्नग्न्यर्कसोमाम्बुभूवायुवियदात्मसु ॥ ८ ॥

ध्यायन् सर्वत्र च हरिं भावद्रव्यैरपूजयत्। क्वचित् पूजां विसस्मार प्रेमप्रसरसम्प्लुतः ॥ ९ ॥

तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुनेः। उपासीनस्य संध्यायां ब्रह्मन् वायुरभून्महान् ॥ १० ॥

तं चण्डशब्दं समुदीरयन्तं बलाहका अन्वभवन् करालाः।
अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनन्त उच्चैरभिवर्षधाराः ॥ ११ ॥

ततो व्यदृश्यन्त चतुस्समुद्राः समन्ततः क्ष्मातलमाग्रसन्तः।
समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्तगभीरघोषाः ॥ १२ ॥

अन्तर्बहिश्चाद्भिरतिद्युभिः खरैः शतह्रदाभीरुपतापितं जगत्।
चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् ॥१३ ॥

तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभञ्जनाघूर्णितवार्महार्णवः।
आपूर्यमाणो वरषद्भिरम्बुदैः क्ष्मामप्यधाद् द्वीपवर्षाद्रिभिः समम् ॥१४॥

॥ ६ ॥ इति कामं यथेष्टम् ईडितः स्तुतोऽर्चितश्च स भगवान् तथास्तु मायां द्रक्ष्यसीत्युक्त्वा प्रागादित्यन्वयः। स्मयन्[1] मन्दहासं कुर्वन् ॥ ७ ॥ तमिति युग्मम्। स्वाश्रमे एव वसन् स ऋषिः तमेव अर्थं मायादर्शनरूपं चिन्तयन् अग्न्यादिषु सर्वत्र हरिं ध्यायन् तं भावद्रव्यैरपूजयदिति द्वयोरेकान्वयः। भावैः मनोमयै द्रव्यैः गन्धपुष्पादिभिः। क्वचित् कदाचित्। प्रेमप्रसरः प्रेमोद्रेकः तेन सम्प्लुतः व्याप्तः पूजां विसस्मार विस्मृतवान्। वियत् आकाशम्। आत्मा हृदयम्। अग्न्यादीनां द्वन्द्वः ॥ ८ ॥ ९ ॥ मायादर्शनमुपवर्णयति यावदध्याय समाप्ति। नदीतटे उपासीनस्य मुनेः सतः वायुरभूत्। पुष्पभद्रा नदी ॥१०॥ प्रचण्डशब्दं समुदीरयन्तं तं वायुमनु बलाहका मेघा अभवन् आविर्बभूवुः ते च तडिद्भिः सहिता उच्चैः स्वनन्तः गर्जन्तः अभितो वर्षधारा मुमुचुरित्यन्वयः। अक्षो रथाङ्गं चक्रं तद्वत् स्थविष्ठा अतिस्थूलाः ॥११॥ ततो वृष्ट्यनन्तरम् वायुवेगेनोत्थितैः ऊर्मिभिः तरङ्गैः क्ष्मातलं भूमण्डलमाग्रसन्तः चतुर्दिक्षु आगच्छन्तः चतुःसमुद्रा व्यदृश्यन्त। कथंभूताः। उग्रा नक्रा येषु महाभया भीषणा आवर्ता जलभ्रमा येषु गभीरो घोषो येषु ते च ते च ते च ते तथोक्ता इति त्रिपदबहुव्रीहिः ॥१२॥ आत्मना सह जरायुजादि चतुर्विधं जगत् अन्तर्बहिश्च उपतापितं पीडितं वीक्ष्य क्ष्मां पृथ्वीं च जलाप्लुतां वीक्ष्य मुनिः विमनाः सन् सम्यक् अत्रसत् भयं प्रापेत्यन्वयः। काभिः उपतापितम्। अद्भिः जलैः। कथंभूताभिः। अतिक्रान्ता द्यौर्याभिस्ताभिः। पुनश्च। खरैः तीक्ष्णैः दुःसहैः सूर्यरश्मिभिः शतह्रदाभिः विद्युद्भिश्च ॥ १३ ॥ एवं तस्य मुनेः उद्वीक्षतः सतः स महान् अर्णवः द्वीपैः वर्षैः खण्डैः अद्रिभिश्च समं सह क्ष्मां पृथ्वीम् अप्यधात् छादयामास। कथंभूतोऽर्णवः। प्रभञ्जनेन[1] महावातेन घूर्णितं भ्रामितं वाः जलं यस्य सः अत एव ऊर्मि-भीषणः। पुनश्च। अम्बुदैः आपूर्यमाणः ॥ १४ ॥ किञ्च सर्वं त्रैलोक्यमद्भिः आप्लुतं व्याप्तमासीत् केवलमेक एव मुनिः जटा विक्षिप्य प्रसार्य जडवत् अन्धवत् किंकर्तव्यमूढवत् बभ्रामेत्यन्वयः। कथंभूतं त्रैलोक्यम्। सक्ष्मान्तरिक्षं भूम्यन्तरिक्षप्राणिसहितम्। सदिवं[2] स्वर्गस्थदेवसहितम्। भगण एव भागणः नक्षत्रमण्डलं

१. ष्मिङ् ईषद्धसने धातुः।

१. 'प्रभञ्जनो महावातो झञ्झावातः सवृष्टिकः' इत्यमरः।

२. दिवशब्दोऽदन्तोऽप्यस्ति।

सक्ष्मान्तरिक्षं सदिवं सभागणं त्रैलोक्यमासीत् सह दिग्भिराप्लुतम्
स एक एवोर्वरितो महामुनिर्बभ्राम विक्षिप्य जटा जडान्धवत् ॥ १५ ॥
क्षुत्तृट्परीतो मकरैस्तिमिङ्गिलैरुपद्रुतो वीचिनभस्वता हतः ।
तमस्यपारे पतितो भ्रमन् दिशो न वेद खं गां च परिश्रमेषितः ॥ १६॥
क्वचिद् गतो महावर्ते तरलैस्ताडितः क्वचित् । यदोभिर्भक्ष्यते क्वापि स्वयमन्योन्यघातिभिः ।१७
क्वचिच्छोकं क्वचिन्मोहं क्वचिद् दुःखं सुखं भयम् ।
क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः ॥
अयुतायुतवर्षाणां सहस्राणि शतानि च । व्यतीयुर्भ्रमतस्तस्मिन् विष्णुमायावृतात्मनः ॥ १९ ॥
स कदाचिद् भ्रमंस्तस्मिन् पृथिव्याः ककुदि द्विजः । न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥२०॥
प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम् । शयानं पर्णपुटके ग्रसन्तं प्रभया तमः ॥२१ ॥
महामरकतश्यामं श्रीमद्वदनपङ्कजम् । कम्बुग्रीवं महोरस्कं सुनासं सुन्दरभ्रुवम् ॥ २२ ।
श्वासैजदलकाभातं कम्बुश्रीकर्णदाडिमम् । विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥ २३ ॥
पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम् । श्वासैजद्वलिसंविग्निनिम्ननाभिदलोदरम् ॥ २४ ॥

तत्सहितम् । दिग्भिः दिग्गजैश्च सहितम् ॥ १५ ॥ अपारे तमसि तमोव्याप्तजले पतितो भ्रमन् सन् दिगादिकं किमपि न वेद यतः परिश्रमेण ईष गत्यादौ व्याप्तः । कथंभूतः । क्षुत्तृड्भ्यां परीतो व्याकुलः । मकरादिभिः उपद्रुतः पीडितः । वीचिभिः तरङ्गैः नभस्वता वायुना च हतः । तिमिः शतयोजनमत्स्यः ॥ १६ ॥ महावर्ते महति जलभ्रमे । तरलैः तरङ्गैः । अन्योन्यघातिभिः मुनिभक्षणाय परस्परं युध्यद्भिः यादोभिः जलजन्तुभिः क्वापि भक्ष्यते च । यादांसि जलजन्तवः' इत्यमरः ॥ १७ ॥ १८ ॥ तस्मिन् प्रलयार्णवे भ्रमतस्तस्य बहुवर्षाणि व्यतीयुः । क्षणिकेऽपिकाले तस्यानन्तवर्षप्रतीतिरभूदित्यर्थः । विष्णुमायया आवृत आकृष्टः आत्मा मनो यस्य तस्य ॥ १९ ॥ पृथिव्याः ककुदि उन्नतप्रदेशे न्यग्रोधपोतं कोमलवटवृक्षम्[1] । फलैः पल्लवैश्च शोभितम् ॥ २० ॥ प्रागित्यर्द्धम् । तस्य वटस्य [2]प्रागुत्तरस्यामीशान्यां दिशि या शाखा ,तस्यां शिशुमपि ददृशे इत्यन्वयः ॥ २१ ॥ शयानमित्यादि सार्द्धचतुष्कम् । कथंभूतं शिशुम् । प्रभया स्वशरीरकान्त्या तमो ग्रसन्तं निराकुर्वन्तम् । महामरकतं नीलमणिस्तद्वत् श्यामम् । श्रीमत् रमणीयं मुखपङ्कजं यस्य । कम्बुवत् शंखवद् त्रिरेखाङ्किता ग्रीवा यस्य । महत् विशालमुरो वक्षःस्थलं यस्य । सुष्ठु शोभना नासा यस्य । सुन्दरे भ्रुवौ यस्य । 'घोणा नासा च नासिका' इत्यमरः ॥२२॥ पुनश्च । श्वासैः एजन्तः कम्पमाना ये अलकाः केशास्तैः आभातं शोभितम् । कम्बुवत् अन्तर्वलयेन श्रीः ययोस्तौ एवंभूतौ यौ कर्णौ तयोः दाडिमपुष्पाकारे कर्णभूषणे यस्य । पुनश्च । विद्रुमतुल्यो योऽधरः तस्य भासा ईषत् शोणवत् आचरितं सुधातुल्यं स्मितं यस्य तम् । शोणोऽरुणरागः ॥ २३ ॥ पुनश्च । पद्मगर्भौ इव आ ईषत् अरुणौ अपांगौ नेत्रप्रान्तौ यस्य । हृद्यः हृदयंगमः आकर्षकः हासो यस्मिन् तथाभूतमवलोकनं यस्य । पुनश्च । श्वासैः एजन्त्यः चलन्त्यः या वलयः तिर्यक्रेखास्ताभिः संविग्ना चञ्चला निम्ना गम्भीरा नाभिर्यस्मिन् तथा-

१. 'पोतः शिशौ वहित्रे च गृहे वाससि कोमले' इत्यभिधानात् ।
२. प्रागुत्तरयोर्मध्ये या दिक् सा प्रागुत्तरा तस्याम् ।

चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय चरणाम्बुजम् । मुखे निधाय विप्रेन्द्रो धयन्तं वीक्ष्य विस्मितः ।२५

तद्दर्शनाद् वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोनाम्बुजः ।
प्रहृष्टरोमाद्भुतभावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥ २६ ॥

तावच्छिशोर्वै श्वसितेन भार्गवः सोऽन्तश्शरीरं मशको यथाऽविशत् ।
तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुरा मुह्यदतीव विस्मितः ॥ २७ ॥

खं रोदसी भगणानद्रिसागरान् द्वीपान् सवर्षान् ककुभः सुरासुरान् ।
वनानि देशान् सरितः पुराकरान् खेटान् व्रजानाश्रमवर्णवृत्तयः ॥ २८ ॥

महान्ति भूतान्यथ भौतिकान्यसौ कालं च नानायुगकल्पकल्पनम् ।
यत् किंचिदन्यद् व्यवहारकारणं ददर्श विश्वं सदिवावभासितम् ॥ २९ ॥

हिमालयं पुष्पवहां च तां नदीं निजाश्रमं तत्र ऋषीनपश्यत ।
विश्वं विपश्यञ्छ्वसिताच्छिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥

तस्मिन् पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शयानम् ।
तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपाङ्गनिरीक्षणेन ॥ ३१ ॥

---

भूतं दलवत् अश्वत्थपत्रसदृशं कोमलमुदरं यस्य तम् ॥ २४ ॥ पुनश्च । पाणिभ्यां स्वकीयं चरणाम्बुजम् उन्नीय आकृष्य मुखे निधाय तदंगुष्ठं धयन्तं पिबन्तं वीक्ष्य विस्मितो बभूवेति शेषः । चारवोऽङ्गुलयो ययोस्ताभ्यां पाणिविशेषणम् । धेट् पाने धातुः शत्रन्तम् ॥ २५ ॥ तद्दर्शनात् वीतपरिश्रमः स मुनिः मुदा हर्षेण तं बालकं प्रष्टुं किञ्चिद् वक्तुं पुरः प्रससार तदग्रे जगामेत्यन्वयः । कथंभूतः । प्रोत्फुल्लानि विकसितानि हृत्पद्मनेत्रकमलानि यस्य । प्रहृष्टरोमा रोमाञ्चितशरीरः । भाव्यते चिन्त्यतेऽनेनेति भावो रूपम् अद्भुतरूपेण शंकितः सन् ॥२६॥ यावत् बालसमीपं प्रसरति तावत् स भार्गवः भृगुवंशीयो मार्कण्डेयः शिशोः श्वसितेन श्वासेन मशक इव तस्य अन्तः शरीरे अविशत् । तत्रापि अन्तः शरीरेऽपि अदः इदं विश्वं यथा पुरा प्रलयात्पूर्वं न्यस्तं स्थितं तथैव अचष्ट अपश्यत् । दृष्ट्वा च अतीव विस्मितः सन् अमुह्यत् मोहं प्राप किमपि निश्चेतुं नाशकत् ॥२७॥ खमिति युग्मम् । कृत्स्नशो दर्शनं निरूपयति-खमिति । खमाकाशं तदादोन् तथा आश्रमान् वर्णान् तेषां या वृत्तयः कृष्यादिरूपः ताश्च ददर्शेत्यन्वयः । रोदसीद्यावाभूमी । भगणान् नक्षत्रगणान् । वर्षान् खण्डान् । ककुभो दिग्भागान् । आकरान् रत्नाद्युत्पत्तिस्थानानि । खेटान् कर्षकग्रामान् । व्रजान् गोष्ठान् । भूतानि आकाशादीनि भौतिकानि पञ्च भूतसृष्टान् देवमनुष्यादीन् । नानायुगानि कल्पांश्च कल्पयति सूचयति यः कालः तं च ददर्श । किं बहुना अन्यदपि यत् किञ्चित् व्यवहारकारणं व्यवहारविषयक वस्तुजातं तत् सर्वं विश्वं सदिव अवभासितं नित्यमिव प्रतीयमानमसौ मुनिः ददर्शेत्यन्वयः ॥२८॥ २९॥ तत्र आश्रमे विश्वं विपश्यन् विविधतया पश्यन् असौ मुनिः शिशोः श्वासात् बहिर्निष्कासितः सन् प्रलयार्णवे न्यपतत् ॥३०॥ तस्मिन्निति युग्मम् । ककुदि उन्नतप्रदेशे वटं तत्पर्णपुटे शयानं बालं च वीक्ष्य तस्य भगवतः अपाङ्गनिरीक्षणेन कटाक्षपातेन निरीक्षितः सन् अथ अनन्तरं तं बालकं परिष्वक्तुमालिङ्गितुमभ्ययात् सम्मुखं जगामेति द्वयोरन्वयः[1] । कथंभूतम् । नेत्राभ्यां हृदि

---

१. पुनरपि तदीयश्वासेन सप्तकृत्वः तस्य प्रवेशनिर्गमौ जातौ इति ज्ञेयमत्र ।

अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि। अभ्ययादतिसंक्लिष्टः परिष्वक्तु मधोक्षजम्।३२।।
तावत् स भगवान् साक्षाद् योगाधीशो गुहाशयः । अन्तर्दध ऋषेः सद्यो यथेहानीशनिर्मिता। ३३ ।
तमन्वय वटो ब्रह्मन् सलिलं लोमसम्पल्वः । तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत् स्थितः। ३४ ।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे मायादर्शनं नाम नवमोऽध्यायः ।। ९ ।।

---

धिष्ठितमधिष्ठितं स्थापितमपि अधोक्षज विष्णुर्मूतिम् ।।३२।। यावत् अभ्ययात् तावत् परिष्वङ्गात् पूर्वमेव सद्य एव अन्तर्दधे अर्न्तहितोऽभूत् । तदुद्यमवैफल्ये दृष्टान्तः । यथा अनीशस्य[1] भाग्यहीनस्य निर्मिता कृता ईहा इच्छा निष्फला भवति तथा । गुहाशयः सर्वान्तिर्यामी ।। ३३ ।। तं भगवन्तमनु वटः सलिलं लोकसम्प्लवश्च क्षणात् तिरोधायि अर्न्तहितः अस्य मुनेः पश्यतः सतः स च मुनिः स्वाश्रमे एव पूर्ववत् स्थितोऽभूत् । तिरोधायोति कर्मकर्तरि चिण् ।। ३४ ।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्या नवमोऽध्यायः ।।९।।

## अथ दशमोऽध्यायः

### सूत उवाच

स एवमनुभूयेदं नारायणविनिर्मितम् । वैभवं योगमायास्तमेव शरणं ययौ ।। १ ।।

### मार्कण्डेय उवाच

प्रपन्नोऽस्म्यङ्घ्रिमूलं ते प्रपन्नाभयदं हरे । यन्माययापि विबुधा मुह्यन्ति ज्ञानकाशया ।। २ ।।
तमेवं निभृतात्मानं वृषेण दिवी पर्यटन् । रुद्राण्या भगवान् रुद्रो ददर्श स्वगणैर्वृतः ।। ३ ।।

---

दशमेऽनुग्रहं कर्तु मुनेर्गत्वाश्रमं शिवः ।
सभाजयन् पुनस्तस्मै दुर्लभान् स वरानदात् ।। १ ।।

स मार्कण्डेयः एवं योगमायाया इदं वैभवमुत्कर्ष प्रभावं वा अनुभूय पुनस्तन्निवृत्यर्थं तमेव[2] नारायणं शरणं ययौ।।१।। प्रपन्नेभ्यः शरणागतेभ्यः अभयं ददातीति तथा । यस्य तव मायया विशिष्टा बुधा ज्ञानिनोऽपि मुह्यन्ति । कथंभूतया । ज्ञानकाशया ज्ञाने सत्यपि प्रकाशितुं प्रभावं कर्तु समर्थयेत्यर्थः । यद्वा । ज्ञानिनामपि मोहजनक[3] या इत्यत्राहमेव प्रमाणमिति भावः ।। २ ।। किञ्च पुनर्नारायण एव श्रान्तं तं मुनि शिवरूपेण सान्त्वयामासेत्याह । तमिति । रुद्राण्या सह भगवान् रुद्रः वृषेण दिवि पर्यटन् तं निभृतः निश्चल आत्मा चित्तं

---

१. अनीशो भाग्यरहितेऽसर्वेशे दुर्बलेऽपि च इति निरुक्तिः ।।

२. 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति वचनात् ।

३. 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा' इत्युक्तेः ।

अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत । पश्येमं भगवन् विप्रं निभृतात्मेन्द्रियाशयम् ॥ ४ ॥
निभृतोदझषव्रातं वातापाये यथार्णवम् । कुर्वस्य तपसः साक्षात् संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥

श्रीभगवानुवाच

नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत । भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥ ६ ॥
अथापि संवदिष्यामो भवान्येतेन साधुना । अयं हि परमो लाभो नृणां साधुसमागमः ॥ ७ ॥

सूत उवाच

इत्युक्त्वा तमुपेयाय भगवान् स सतां गतिः । ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥
तयोरागमनं साक्षादीशयोर्जगदात्मनोः । न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च ॥ ९ ॥
भगवांस्तदभिज्ञाय गिरीशो योगमायया । आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥ १० ॥
आत्मन्यपि शिवं प्राप्तं तडित्पिङ्गजटाधरम् । त्र्यक्षं दशभुजं प्रांशुमुद्यन्तमिव भास्करम् ॥ ११ ॥
व्याघ्रचर्माम्बरधरं शूलखट्वाङ्गचर्मभिः । अक्षमालाडमरुककपालासिधनुः सह ॥ १२ ॥
बिभ्राणं सहसा भातं विचक्ष्य हृदि विस्मितः । किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥ १३ ॥
नेत्रे उन्मील्य ददृशे सगणं सोमयाऽऽगतम् । रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः ॥ १४ ॥
तस्मै सपर्यां व्यदधात् सगणाय सहोमया । स्वागतासनपाद्यार्घ्यगन्धस्रग्धूपदीपकैः ॥ १५ ॥

---

यस्य तं निभृतात्मनम् समाधिस्थं मुनिं ददर्शेत्यन्वयः ॥ ३ ॥ निभृता निश्चला आत्मेन्द्रियाशया देहेन्द्रियमनांसि-यस्य तम् इमं विप्र पश्येति ॥ ४ ॥ वातपाये यथा अर्णवस्तथा अयं शान्तः अतोऽस्य तपसः सिद्धिं कुरु फलं प्रयच्छ यतो भवान् सिद्धिदः फलप्रदः । कथंभूतोऽर्णवः । निभृतं निश्चलम् उदकं झषव्रातः मीनसमूहश्च यस्मिन् । उदकस्योदादेशः । यद्वा । उदशब्दोऽपि उदकवाचकोऽस्ति ॥५॥ अयं खलु आशिषो भोगान् अणिमाद्याः सिद्धीश्च नेच्छति किं बहुना मोक्षमपि नेच्छति यतः परां भक्तिं प्रेमलक्षणां लब्धवानित्यन्वयः । उत अप्यर्थे । क्वापि दशायाम् ॥ ६ ॥ यद्यप्ययं न किञ्चिदिच्छति अथापि तथापि एतेन संवदिष्यामः वार्तां करिष्यामः परमो लाभ इति । सत्संगः शेवधिर्नृणाम् इति वचनात् ॥ ७ ॥ तं मार्कण्डेयम् उपेयाय तत्समीपं जगाम । ईशानः प्रवर्तकः उपदेष्टा च ईश्वरः कर्तुमकर्तुमन्यथाकर्तुं समर्थश्च ॥ ८ ॥ तयोरीशयोः आगमनम् आत्मानं विश्वं च न वेदेत्यन्वयः । तत्र हेतुः । रुद्धा निरुद्धाधियोऽन्तःकरणस्य वृत्तयो येन सः ॥ ९ ॥ तत् बाह्याज्ञानमभिज्ञाय गिरीशः तस्य मुनेः गुहाकाशं हृदयाकाशमाविशदित्यन्वयः । छिद्रं घटाकाशम् ॥ १० ॥ आत्मनीति सार्द्धद्वयम् । आत्मनि हृदयेऽपि सहसा अकस्मात् आभातं प्रकाशितं शिवं प्राप्तं विचक्ष्य विस्मितोऽभूदित्यन्वयः । कथंभूतम् । तडित इव पिङ्गा जटा धारयतीति । उद्यन्तं भास्करमिव स्थितम् । प्रांशुं प्रकृष्टा अंशवः तेजोरश्मयो यस्य । पुनश्च । व्याघ्रचर्मैव अम्बरं वस्त्रं यस्य । पुनश्च । शूलादिभिः सह अक्षमालादीन् बिभ्राणम् । अक्षमालादीनां द्वन्द्वैक्यम् । पुंस्त्वमार्षम् । 'सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीति वचनात् साधु वा । इषुः वाणः । चर्म खेटः ( ढाल इति ) ॥ ११ ॥ १२ ॥ किमिति । अद्भुतम् । कुतः आगतः किमित्याश्चर्यसूचकम् ॥ १३ ॥ स उमया इति पदच्छेदः । 'सोऽचिलोपे' इत्येन पादपूर्तौ सुलोपः । स मुनिः उमया सह आगतं रुद्रं ददर्श शिरसा ननामचेत्यन्वयः ॥ १४ ॥ उमया सह तस्मै रुद्राय

आह चात्मानुभावेन पूर्णकामस्य ते विभो। करवाम किमीशान येनेदं निर्वृतं जगत् ॥ १६ ॥

नमः शिवाय शान्ताय सत्त्वाय प्रमृडाय च। रजोजुषेऽप्यघोराय नमस्तुभ्यं तमोजुषे ॥ १७ ॥

सूत उवाच

एवं स्तुतः स भगवानादिदेवः सतां गतिः। परितुष्टः प्रसन्नात्मा प्रहसंस्तमभाषत ॥ १८ ॥

श्रीभगवानुवाच

वरं वृणीष्व नः कामं वरदेशा वयं त्रयः। अमोघं दर्शनं येषां मर्त्यो यद् विन्दतेऽमृतम् ॥ १९ ॥

ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः।
एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः ॥ २० ॥

सलोका लोकपालास्तान् वन्दन्त्यर्चन्त्युपासते। अहं च भगवान् ब्रह्मा स्वयं च हरिरीश्वरः॥२१॥

न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते। नात्मनश्च जनस्यापि तद् युष्मान् वयमीमहि॥ २२ ॥

न ह्यम्मयानि तीर्थानि न देवाश्चेतनोज्झिताः। ते पुनन्त्युरुकालेन यूयं दर्शनमात्रतः ॥ २३ ॥

ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम्। बिभ्रत्यात्मसमाधानतपस्स्वाध्यायसंयमैः ॥२४॥

श्रवणाद् दर्शनाद् वापि महापातकिनोऽपि वः। शुध्येरन्नन्त्यजाश्चापि किमु सम्भाषणादिभिः।२५।

---

स्वागतादिभिः पूजां व्यदधादाह चेत्यन्वयः ॥ १५ ॥ येन त्वयैव इदं जगत् निर्वृतमानन्दितं भवति तस्य ते पूर्णकामस्य अपूर्णा वयं किं करवाम न किमपि। आत्मानुभवेन स्वरूपानन्देन ॥ १६ ॥ प्रकर्षेण मृडयति सुखयतीति प्रमृडः। मृड् पृड् सुखने धातुः। सत्त्वाय सत्त्वाधिष्ठात्रे। रजोजुषे रजोऽधिष्ठाऽत्रे अघोराय तद्वृत्तिरहिताय। तमोजुषे तमोऽधिष्ठात्रेऽपि अमूढायेति शेषः तद्वृत्तिरहिताय ॥ १७ ॥ परितुष्ट इत्यत्र हेतुः प्रसन्नचित्तः ।१८। नोऽस्मत्तः कामं यथेच्छं वरम् वृणीष्व वरदेशा वरदातारः। येषामस्माकम् अमोघं फलवत्। यत् येभ्यः मर्त्यः अमृतं मोक्षं विन्दते लभते ॥ १९ ॥ ये ब्राह्मणाः समदर्शिनः सन्ति तान् लोकपाला प्रणमन्ति पूजयन्ति उपासते ध्यायन्ति च किं बहुना ब्रह्मादयस्त्रयोऽपि वयं वन्दामहे अर्चाम उपास्महे च। अप्यर्थे चकारः द्वितीयो[1] हेतौ। पूर्वश्लोके यथेष्टं हेतुहेतुमद्भावोऽपि ज्ञेयः। ईश्वरः सर्वसमर्थः। ईश सामर्थ्ये धातुः एकस्मिन्नेव अन्तो निर्णयो येषां ते ते च ते भक्ता एकान्तभक्ताः बहुव्रीहिगर्भितकर्मधारयः ॥ २० ॥ २१ ॥ ते ब्राह्मणा मयि चकारात् शिवे च तथा आत्मनः जनस्यापि अण्वपि अणुमात्रमपि भेदं न चक्षते न पश्यन्ति तत् तस्मात् हेतोः वयं युष्मान् ईमहि त्समीपं[2] गच्छाम। भजामेति वा ॥ २२ ॥ अम्मयानि जलमयानि तीर्थानि चेतनोज्झिताः पाषाणमया देवाश्च न पुनन्ति इति न पुनन्त्येव किन्तु ते उरुकालेन बहुकालेन पुनन्ति यूयं तु दर्शनेनैवेति मुनीनां वैशिष्ट्यं दर्शितम्। उज्झ उत्सर्गे धातुः ॥ २३ ॥ ये त्रयीमय वेदत्रयात्मकम् अस्मद्रूपं बिभर्ति तान् ब्राह्मणान् नमस्याम इत्यन्वयः। कैः। आत्मसमाधानं चित्तैकाग्र्यम्। तप आलोचनम् स्वाध्यायो वेदपाठः संयम इन्द्रियनिग्रहः तैः ॥ २४ ॥ येषां वः युष्माकं श्रवणादिभिः अन्त्यजाश्चापि[3]

---

१. यतः समदर्शिनः अतो हेतोः।

२. ईमहि प्रियत्वेन जानीमः। 'ईङ् गतौ धातुः। गत्यर्थानां ज्ञानार्थतापीति वामनादयः।

३. अन्त्यजाः कैवर्तादयः।

सूत उवाच

इति चन्द्रललामस्य धर्मगुह्योपबृंहितम् । वचोऽमृतायनमृषिर्नातृप्यत् कर्णयोः पिबन् ।। २६ ।।

स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम् । शिववागमृतध्वस्तक्लेशपुञ्जस्तमब्रवीत्।।२७।।

ऋषिरुवाच

अहो ईश्वरलीलेयं दुर्विभाव्या शरीरिणाम् । यन्नमन्तीशितव्यानि स्तुवन्ति जगदीश्वराः।। २८ ।।

धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम् ।
आचरन्त्यनुमोदन्ते क्रियमाणं स्तुवन्ति च ।।२९ ।।

नैतावता भगवतः स्वमायामयवृत्तिभिः । न दुष्येतानुभावस्तैर्मायिनः कुहकं यथा ।। ३० ।।

सृष्टेदं मनसा विश्वमात्मनानुप्रविश्य यः । गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग् यथा ।। ३१ ।।

तस्मै नमो भगवते त्रिगुणाय गुणात्मने । केवलायाऽद्वितीयाय गुरवे ब्रह्ममूर्तये ।। ३२ ।।

कं वृणे नु परं भूमन् वरं त्वद् वरदर्शनात् । यद्दर्शनात् पूर्णकामः सत्यकामः पुमान् यवेत्।। ३३ ।।

---

शुद्ध्येरन् किमुत संभाषणादिभिः ।। २५ ।। इति इत्थं शिवस्य अमृतायनम् अमृतस्रावि वचः कर्णाभ्यां पिबन्नपि न अतृप्यत अलमिति नामन्यत । कथंभूतं वचः । धर्मगुह्यं गुह्यधर्मं भक्तिलक्षणं तेन उपबृंहितं परिपूर्णम् । चन्द्रो ललामं शिरोभूषणं यस्येति शिवविशेषणम् ।। २६ ।। स मुनिः तं शिवमब्रवीत् । शिवस्य वागेव अमृतं तेन ध्वस्तो निवृत्तः क्लेशपुञ्जो यस्य । कर्शितः श्रान्तश्च ।। २७ ।। अहो आश्चर्यम् इयमीश्वरस्य चर्या लीला दुर्विभाव्या दुर्ज्ञेया यत् यस्मात् ईशितव्यानि भवद्भिर्नियम्यानि अस्मादृशानि प्राणिजातानि ब्रह्मकुलानि वा जगदीश्वरा अपि नमन्ति स्तुवन्ति च ।। २८ ।। देहिनां प्रवक्तार उपदेष्टारः गुरवोऽपि तान् धर्मं ग्राहयितुं स्वयमाचरन्ति[१] तैः क्रियमाण धर्मं स्तुवन्ति च ।। २९ ।। एतावता धर्मग्राहयित्वेन हेतुना स्वेषु भक्तेषु मायामयवृत्तिभिः कृपामयचेष्टाभिः भगवतस्तव प्रभावो न दुष्येत न विहन्येत यथा मायिनः नटादेः कुहकं नाट्यादिकं कर्तृं तत्प्रभावं न दूषयति प्रत्युत प्रशंसास्पदं भवति तद्वत् । विश्वनाथस्तु केनचिदैन्द्रजालिकेन स्वमुखात् कश्चिद्वानरः निःसार्य स स्तूयते नमस्क्रियते च तेन तस्यानुभावो यथा न दुष्यते तथा । व्यतिरेके दृष्टान्तो वा । मायिनः कुहकिनः कपटं यथा दुष्यते तथा न दुष्यते तथेति ।।३०।। मनसा संकल्पमात्रेण इदं विश्वं सृष्ट्वा आत्मना जीवरूपेण तत्र अनुप्रविश्य च द्रष्टान्तमाह यथा स्वप्नदृक् सृष्टिं कुर्वद्भि गुणैः स्वयमकर्ताऽपि कर्तेव आभाति प्रतीयते तथा यः परमात्मा तथाभूतो भवति कर्तेव अभाति तस्मै ब्रह्ममूर्तये नम इति द्वयोरन्वयः । यः सुप्तेषु जागर्ति तत् ब्रह्म इति श्रुतिप्रसिद्धः परमात्मा स्वप्नादिस्रष्टा भवति भ्रान्त्या तु स्वप्नदृक् जीवस्तत्कर्ता प्रतीयते तद्वदित्यर्थः । गुरवे ज्ञानोपदेष्ट्रे । त्रयो गुणा यस्मिन् त्रिगुणाय प्रधानाय गुणात्मने सगुणाय सृष्टौ । प्रलये केवलाय प्रकृतिसंगशून्याय । पुनश्च । अद्वितीयाय एकरूपाय । एकमेवाद्वितीयम् इति श्रुतेः । यद्वा । अत्रिगुणायेति पदच्छेदः । त्रिगुणविग्रहादिसम्बन्धरहिताय । ब्रह्ममूर्तये ब्राह्मणरूपाय त्वं । देवेषु ब्राह्मणोऽहं मनुष्येषु इति जाबालिश्रुतेः ।।३१।।३२।। हे भूमन् अपरिच्छिन्नमहिमन् । त्वत् त्वत्तः परमन्यं कं नु वरं वृणे न कमपि । यस्य तव दर्शनात् पुमान् पूर्णकामः सत्यकामः सत्यसंकल्पश्च भवति । वरं दर्शनं यस्य तस्मात् । यद्वा । वरः सर्वोत्कृष्टवरो दर्शनं यस्य तस्मात् । तीर्थस्तु बरं वरेण्यं दर्शनं ज्ञानं यस्य तस्मात् । यद्दर्शनाद् येनो-

---

१. प्रायग्रहणेन आवृत्तिरसकृदुपदेशादिति शास्त्राज्ञापालनार्थमप्याचरन्तीति द्योतितम् ।

वरमेकं वृणेऽथापि पूर्णात् कामाभिवर्षणात् । भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि ॥ ३४ ॥

सूत उवाच

इत्यर्चितोऽभिष्टुतश्च मुनिना सूक्तया गिरा । तमाह भगवाञ्छर्वः शर्वया चाभिनन्दितः ॥ ३५ ॥

कामो महर्षे सर्वोऽयं भक्तिमांस्त्वमधोक्षजे । आकल्पान्ताद् यशः पुण्यमजरामरता तथा ॥ ३६ ॥

ज्ञानं त्रैकालिकं ब्रह्मन् विज्ञानं च विरक्तिमत् । ब्रह्मवर्चस्विनो भूयात् पुराणाचार्यतास्तु ते ।३७।

सूत उवच

एवं वरं स मुनये दत्त्वागात् त्र्यक्ष ईश्वरः । देव्यै तत्कर्म कथयन्ननुभूतं पुराऽमुना ॥ ३८ ॥

सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः । विचरत्यधुनाप्यद्धा हरावेकान्ततां गतः ॥ ३९ ॥

अनुवर्णितमेतत्ते मार्कण्डेयस्य धीमतः । अनुभूतं भगवतो मायावैभवमद्भुतम् ॥ ४० ॥

एतत् केचिदविद्वांसो मायासंसृतिमात्मनः । अनाद्यावर्तितं नृणां कदाचित्कं प्रचक्षते ॥ ४१ ॥

य एवमेतद् भृगुवर्य वर्णितं रथाङ्गपाणेरनुभावभावितम् ।
संश्रावयेत् संशृणुयादुताबुभौ तयोर्न कर्माशयसंसृतिर्भवेत् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे दशमोऽध्यायः ॥१०॥

---

पदिष्टज्ञानात् पुमानित्याह । वरं सर्वाभीष्टं मोक्षं दर्शयतीति वा । वरदर्षभात् इत्यपि क्वचित्पाठः स एव साधुः ॥३३॥ कामान् अभितो वर्षतीति तस्मात् त्वत्तः एकं वरं वृणे कम् । भगवति श्रीकृष्णे तत्परेषु तद्भक्तेषु तथा त्वयि च अच्युतां निश्चलां भक्तिम् ।३४। इत्येवं मुनिना सूक्तया मधुरया गिरा अभिष्टुतः अत एव स्वतः वरदानाय प्रवृत्तः शर्वया पार्वत्या च अनुमोदितः शर्वः तं मुनिमाहेत्यन्वयः ॥३५॥ काम इति युग्मम् । हे महर्षे ब्रह्मवर्चस्विनस्ते कामः मनोरथः अस्तु पूर्णोऽस्तु कल्पर्यन्तं पुण्यं पवित्रं यशः अजरामरता त्रैकालिकं ज्ञानं भूयात् तथा ते पुराणाचार्यता अस्तु यतस्त्वमधोक्षजे भक्तिमानिति द्वयोरन्वयः ॥ ३६ ॥३७॥ त्रीणि अक्षीणि नेत्राणि यस्य त्र्यक्षः ईश्वरः शिवः अगात् अन्तर्दधे । तस्य मुनेः कर्म यत्-तप आदि अमुना पुरा यत् अनुभूतं मायावैभवं च तच्च देव्यै कथयन्नित्यन्वयः ॥ ३८ ॥ भार्गवोत्तमः भृगुवंशीयः सोऽपि 'मार्कण्डेयोपि अधुनापि अद्धा साक्षात् विचरति नात्र सन्देह इत्यर्थः । कथंभूतः । अवाप्तः प्राप्तः महायोगस्य भक्तियोगस्य महिमा अणिमादि सिद्धिपूर्वकभगवत्साक्षात्कारलक्षणः येन सः । पुनश्च । एकान्तताम् अनन्यभावं गतः ॥ ३९ ॥ एतच्चरितं तेन अनुभूतं यत् मायावैभवं च ते तुभ्यं मया अनुवर्णितम् ॥४०॥ एतत् मार्कण्डेयदृष्टम् आत्मनः परमात्मनः मायासंसृतिं मायावैभवं सप्तकल्परूपं कादाचित्कं कदाचिद्भवं कादाचित्कमाकस्मिकं क्षणिकं भगवता तत्तोषाय प्रदर्शितं न तु वास्तवम् अथापि नृणां मध्ये ये केचित् अनादि सप्तकल्पपर्यन्तमावर्तितं प्रचक्षते कथयन्ति ते अविद्वांसोऽनभिज्ञा एव । मायाशिशोः श्वासोच्छ्वासाभ्यां सप्तकृत्वस्तदुदरप्रवेशनिर्गमतः क्षणमात्रेणैव सप्तकल्पानुभूतित्वात्सप्तकल्पत्वसंख्यापूर्तेर्न कश्चिद् विरोध इत्यवधेयम् ॥ ४१ ॥ हे भृगुवर्य शौनक । य एतत् मार्कण्डेयचरितं वक्तरि सति शृणुयात् श्रोतरि सति संश्रावयेत् वाचयेत् तौ उभौ कृतार्थौ ज्ञेयौ । फलिमाह तयोः कर्मवासनाजन्या संसृतिः न भवेत् मुक्तौ भवेतामित्यर्थः । कथंभूतम् । रथाङ्गपाणेः चक्रपाणेः भगवतः अनुभावेन प्रभावेण अनुभावितं समर्थितं पूरितमित्यर्थः । उ हर्षे ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्यां दशमोऽध्यायः ॥१०॥

## अथैकादशोऽध्यायः

**शौनक उवाच**

अथेममर्थं पृच्छामो भवन्तं बहुवित्तमम् । समस्ततन्त्रराद्धान्ते भवान् भागवत तत्त्ववित् ॥ १ ॥
तान्त्रिकाः परिचर्यायां केवलस्य श्रियः पतेः । अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति यथा च यैः ।२।
तन्नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम् । येन क्रियानैपुणेन मर्त्यों यायादमर्त्यताम् ॥ ३ ॥

**सूत उवाच**

नमस्कृत्य गुरून् वक्ष्ये विभूतीर्वैष्णवीरपि । याः प्रोक्ता वेदतन्त्राभ्यामाचार्यैः पद्मजादिभिः । ४ ।
मायाद्यैर्नवभिस्तत्त्वैः स विकारमयो विराट् । निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ॥ ५ ॥

एतद् वै पौरुषंरुपं भूः पादौ द्यौः शिरो नभः ।
नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः ॥ ६ ॥

प्रजापतिः प्रजननमपानो मृत्युरीशितुः । तद्बाहवो लोकपाला मनश्चन्द्रो भ्रुवौ यमः ॥ ७ ॥

---

एकादशे हरेः साङ्गोपाङ्गमध्यात्मपूजनम् ।
मासभेदेन चादित्यद्वादशव्यूहवर्णनम् ॥ १ ॥

मार्कण्डेयो हि तन्त्रोक्तभगवत्पूजाविधौ निपुण आसीदतस्तत्पूजाप्रकारं पृच्छति । अथेति । चरित्रश्रवणानन्तरम् इममर्थं वक्ष्यमाणं क्रियायोगं भवन्तं पृच्छामः । यतो भवान् तन्त्रसिद्धान्ते तत्त्ववित् रहस्यज्ञः । मूलज्ञः बहुवित् अर्थज्ञः बहुवित्तरः अनुष्ठानज्ञः बहुवित्तम इति तृतीयकोटौ तमब्घटितप्रयोगः । हे भागवत भगवद्भक्त । स एव विशेषविधया पूजाप्रकारं जानातीत्यभिप्रायः ॥ १ ॥ तान्त्रिका इति युग्मम् । तान्त्रिकाः पञ्चरात्राद्यागमनिपुणाः केवलस्य चैतन्यघनस्य भगवतः परिचर्यायां यथा अङ्गादीनि कल्पयन्ति यैश्च तत्त्वैः तत्कल्पनया तत् ध्यायन्ति तत् तं क्रियायोग बुभुत्सतां बोद्धुमिच्छताम् नोऽस्माकं वर्णयेति द्वयोरन्वयः । अङ्गानि पादादीनि उपाङ्गानि गरुडादीनि आयुधानि सुदर्शनादीनि आकल्पाः कौस्तुभादिभूषणानि तेषां द्वन्द्वैक्यम् । येन मर्त्यः अमर्त्यतां मुक्तिम् अमरतां वा यायात् याति प्राप्नोति । लडर्थे लिङ् ॥ २ ॥ ३ ॥ विभूतीः विराड्विग्रहाद्याः । अपिशब्दो दुष्करतां सूचयति । या विभूतयः आचार्यैः पद्मजादिभिः ब्रह्मादिभिः प्रोक्ताः । आदिना शिवनारदादिग्रहः । गुरूनिति बहुवचनं गुरुत्रयं लक्षयति । विद्यागुरुः, दीक्षागुरुः, इष्टदेवताः च । तन्त्रपूजा न्यासप्रधानपूजा ॥ ४ ॥ नवभिस्तत्त्वैः प्रकृतिसूत्रमहदहङ्कारपञ्चतन्मात्राणि नव । विकारा एकादशेन्द्रियाणि पञ्चमहाभूतानीति षोडश तन्मयो विराट् स प्रसिद्धो निर्मितः । सचित्के चेतनाधिष्ठिते यत्र विराजि भुवनत्रयं दृश्यते । अनेन अङ्गादिकल्पनाकरणे सौकर्यं दर्शितम् ॥ ५ ॥ एतत् प्रत्यक्षसिद्धम् । पुरुषस्य वैराजस्य रूपम् । अङ्गकल्पनामाह-प्रभोः भूः पादौ इत्यादित्रिभिः । भूराद्यनुवादेन भगवतः पादादिकल्पना विधीयते । भगवतो विभूतिर्या भूः तया अस्य पादौ कल्पितौ शेषं स्पष्टम् ॥ ६ ॥ ईशितुः नियन्तुः परमेश्वरस्य प्रजापतिः प्रजननं

लज्जोत्तरोऽधरो लोभो दन्ता ज्योत्स्ना स्मयो भ्रमः ।
रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्धजाः ॥ ८ ॥
यावानयं वै पुरुषो यावत्या संस्थया मितः । तावानसावपि महापुरुषो लोकसंस्थया ॥ ९ ॥
कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः । तत्प्रभा व्यापिनी साक्षात् श्रीवत्समुरसा विभुः ।१०।
स्वमायां वनमालाख्यां नानागुणमयीं दधत् । वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत् स्वरम् ।११।
बिभर्ति सांख्यं योगं च देवो मकरकुण्डले । मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयंकरम् ।१२।
अव्याकृतमनन्ताख्यमासनं यदधिष्ठितः । धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ।१३।
ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधत् । अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ।१४।
नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम् । कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम् ।१५।
इन्द्रियाणि शरानाहुराकूतीरस्य स्यन्दनम् । तन्मात्राण्यस्याभिव्यक्तिं मुद्रयाऽर्थक्रियात्मताम् ।१६।

---

मेढ्रम् । मृत्युः अपानः गुदम् । तत् तस्य ।।७।। भूम्नः व्यापकस्य भगवतः उत्तरः उत्तरोष्ठः । ज्योत्स्ना चान्द्री प्रभा दन्ता दन्तावलिः । भ्रमः भ्रमहेतुः माया स्मयो[1] मन्दहासः । भूरुहा वृक्षा रोमाणि । मूर्धजाः केशाः मेघाः एतावती अङ्गकल्पना ॥ ८ ॥ यावान् सप्तवितस्तिपरिमाणवान् अयं व्यष्टिपुरुषो जीवाख्यः यावत्या संस्थया अवयवरचनया मितः परिमितः तावानसौ समष्टिरूपो महापुरुषोऽपि लोकसंस्थया लोकात्मकपादाद्यवयवविन्यासेनव तावात् परिमाणवान् ॥ ९ ॥ व्यपदेशेन व्याजेन स्वात्मज्योतिः स्वांशभूतं जीवचैतन्यं विभर्ति । कौस्तुभस्य व्यापिनी या प्रभा तामुरसा विभर्ति सा च श्रीवत्स एव वक्षसि दक्षिणावर्तरोमावलिरूपः । तां विभर्ति श्रीवत्सरूपाम् ॥ १० ॥ गुणमयी या स्वमाया सैव बनमालारूपिणी तां दधत् धारयन् सन् वर्तते । छन्दोमयं पीतं वासः पीताम्बरं स्वरमोंकाररूपं ब्रह्मसूत्रं यज्ञोपवीतं च दधत् वर्तते । कथंभूतम् । त्रिभिः अकारोकारमकारैः वर्तते इति त्रिवृत् ।११। सांख्यं ज्ञानं योगं कर्म च एतद्द्वयात्मके मकराकृतिकुण्डले बिभर्ति । पारमेष्ठ्यं पदं ब्रह्मलोकं मौलिं मुकुटरूपं च विभर्ति । अभयं करोतीति अभयङ्करम्[2] ॥ १२ ॥ यत् अधिष्ठायस्थितस्तत् अनन्ताख्यं शेषसंज्ञकं भगवत आसनमुच्यते तच्च प्रधानरूपम् । मूलप्रकृतिरेव शेषशय्येत्यर्थः । धर्म[3] ज्ञानादिभिर्युक्तं सत्त्वं सत्त्वगुण एव पद्ममुच्यते । पद्मशब्दस्य शक्तिः नाभौ च ॥ १३ ॥ ओजआदियुक्तं मुख्यतत्त्वं प्राणतत्त्वं गदां धारयन् वर्तते । 'प्राणो वै मुख्यः' इति श्रुतेः । दरवरं शंखं पाञ्चजन्यम् श्रेष्ठम् । 'दीर्यतेऽस्मात् इति दरः । ॠदोरप् । दृ विदारणे धातुः । ओज आद्याः क्रमेण इन्द्रियमनोदेहशक्तयः ॥ १४ ॥ नभोनिभम् आकाशवन्निर्मलमाकाशतत्त्वमसिं तमोमयं तमोगुणवत् आच्छानकरमावरणकरंचर्म खेटम् । प्राचुर्ये मयट् । कालं रूपयति निरूपयति सूचयति शत्रूणाम् । कर्ममयं कर्मप्रचुरम् इषुधिं तूणीरं चाहुरित्युत्तरेणान्वयः । इषवो वाणाः धीयन्ते स्थाप्यन्तेऽस्मिन्निति इषुधिः ॥ १५ ॥ शरान् वाणान् आकूतीः लक्षणया क्रियाशक्तियुक्तं मनः अस्य स्यन्दनं रथमाहुः । तन्मात्राणि शब्दादयः अस्य भगवतोऽभिव्यक्तिमाहुः । धृतया मुद्रया वरदया अभयदया च अस्य भगवतः अर्थक्रिया लोकव्यवहारः तत्स्वरूपतामाहुः । सन्दर्भस्तु

---

१. ष्मिङ्' ईषद्धसने धातुः । एरच् । 'हासो जनोन्मादकरी च माया' इत्युक्तेः ।

२. 'मेघर्तिभियेषु कृञः' इति खच्प्रत्ययः ।

३. आदिपदेन वैराग्य-ऐश्वर्यं श्रीर्यशो विमला उत्कर्षणी ज्ञाना क्रियायोगा प्रह्वी सत्या ईशाना अनुग्रहाख्याः शक्तयो ग्राह्याः ।

मण्डलं देवयजनं दीक्षा संस्कार आत्मनः। परिचर्या भगवत आत्मनो दुरितक्षयः ॥१७॥
भगवान् भगशब्दार्थं लीलाकमलमुद्वहन्। धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥१८॥
आतपत्रं तु वैकुण्ठं द्विजा धामाकुतोभयम्। त्रिवृद् वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥१९॥
अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः। विष्वक्सेनस्तन्त्रमूर्तिर्विदितः पार्षदाधिपः।
नन्दादयोऽष्टौ द्वाःस्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥२०॥
वासुदेवः संकर्षणः प्रद्युम्नः पुरुषः स्वयम्। अनिरुद्ध इति ब्रह्मन् मूर्तिव्यूहोऽभिधीयते ॥२१॥
स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः। अर्थेन्द्रियाशयज्ञानैर्भगवान् परिभाव्यते ॥२२॥
अङ्गोपाङ्गायुधाकल्पैर्भगवांस्तच्चतुष्टयम्। बिभर्ति स्म चतुर्मूर्तिर्भगवान् हरिरीश्वरः ॥२३॥
द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक् स्वमहिमपरिपूर्णो मायया च स्वयैतत्।
सृजति हरति पातीत्याख्ययाऽनावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलभ्यः ॥ २४॥

---

अर्थक्रियात्मतां वरदाभयदादिरूपतां मुद्रामाहु मुद्रामेव आहुरित्यर्थः। गोत्रेण गार्ग्य इतिवत् तृतीया इत्याह ॥ १६ ॥ मण्डलं सूर्यमण्डलमग्निमण्डलं वा देवस्य भगवतो यजनं पूजास्थानम्। दीक्षा गुरुकृता मन्त्रदीक्षा आत्मनः अन्तःकरणस्य संस्कारः शुद्धिहेतुः। परिचर्या भगवत्सेवा च आत्मनो जीवस्य दुरितक्षयः पापक्षय-हेतुः ॥१७॥ भगशब्दार्थः भगशब्दवाच्यमैश्वर्यादिषाड्गुण्यं लीलार्थं कमलं हस्ते उद्वहन् धारयन् वर्तते। अभजत् प्राप्तवान्। व्यजने इत्यत्र सन्धिरार्षः ॥ १८ ॥ हे द्विजाः। अकुतोभयं निर्भयं वैकुण्ठं धाम लोक एव आत पत्रं छत्रं वहति धारयति। त्रिवृत् ऋग्यजुःसामरूपो वेद एव सुवर्णाख्यः गरुडसंज्ञकः स एव यज्ञं पुरुषं विष्णुरूपं वहति इतस्ततो नयति। यज्ञो वै विष्णुः इति श्रुतेः। सपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरः इति श्रुतेश्च। त्रिभिः ऋगादिभि वर्तते प्रवर्तते इति त्रिवृत्। क्विबन्तः ॥ १९ ॥ अनपायिनीति सार्द्धम्। आत्मनः परमात्मनः या अनपायिनी अवियोगिनी आह्लादिनी शक्तिः सा साक्षात् श्रीः लक्ष्मीरुच्यते। तन्त्रं पञ्चरात्रमागमशास्त्रं तत्रोक्ता मूर्तिः विष्कसेनः विदितः प्रसिद्धः। ये अणिमाद्या अष्टौ गुणा विभूतयस्ते हरेः द्वारपाला विदिता इति वचनव्यत्ययेनान्वयः। विषूची सर्वतः प्रसरन्ती सेना भक्तलक्षणा यस्येति विष्वक्सेनशब्दार्थः ॥ २० ॥ चतुर्व्यूहोपासनामाह-वासुदेव इति। मूर्तिव्यूहः चतुर्मूर्तिसमहः अभिधीयते कथ्यते। वासुदेवादयः क्रमेण चित्ताहङ्कारबुद्धिमनसा मधिष्ठातृदेवता ज्ञेयाः ॥ २१ ॥ स एव भगवान् वृत्तिभिः जाग्रदाद्यवस्थाभिः तासां विश्वादिरूपेण साक्षी सन् जनैः परिभाव्यते अनुभूयते। कुतः। अर्थादिभिः। अर्थो बाह्यविषयज्ञानं जाग्रदव-स्थायां तत्र विश्वसाक्षी। इन्द्रियं मनः तेन अन्तर्विषयज्ञानं स्वप्नावस्थायां तत्र तैजससाक्षी। आशयो वासनात्मिका अज्ञानयुक्ता सुषुप्त्यवस्था[1] तत्र प्राज्ञसाक्षी। तत्त्रितयसाक्षि चैतन्यमात्रं सैव तुरीयावस्था उच्यते। गीतोक्ता ब्राह्मी स्थितिरपि इयमेवसम्प्रज्ञातसमाधिनाम्नाऽपि व्यवह्रियते। पातञ्जलोक्तं तत्स्वरूपावस्थानमपि इदमेव ॥ २२ ॥ अङ्गादिभिर्विशिष्टो भगवान् चतुर्मूर्तिः सन् तत् विश्वादि चतुष्टयं बिभर्ति यतः स भगवान् ईश्वरः सर्वसमर्थः। अतो वाक्यान्तरत्वात् भगवानित्यस्य न पौनरुक्त्यम्। तत्र अनिरुद्धः सृजति प्रद्युम्नः पालयति संकर्षणः संहरति वासुदेवो मोक्षयतीत्यर्थः हरति दुःखं हरिरिति अन्वर्थनामा च ॥ २३ ॥ हे द्विजऋषभ[2]। शौनकसंबोधनम्। योऽस्मिन् पुराणे

---

१. तत्र न किञ्चित् जानाति। 'न किञ्चिदवेदिषम्' इत्युक्तेः।

२. 'ऋत्यकः' इति ह्रस्वे प्रकृतिभावः।

श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ।
गोविन्द गोपवनिताव्रजभृत्यगीततीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान् ॥२५॥
य इदं कल्य उत्थाय महापुरुषलक्षणम् । तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥२६॥

शौनक उवाच

शुको यदाह भगवान् विष्णुराताय शृण्वते । सौरो गणो मासि मासि नाना वसति सप्तकः ॥२७॥
तेषां नामानि कर्माणि संयुक्तानामधीश्वरैः । ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः ॥२८॥

सूत उवाच

अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् । निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्तते ॥२९॥

---

वैराजादिरूपेण प्रतिपादितः स एव तत्परैं तदुपासकैः भक्तैः आत्मनि अन्तःकरणे लभ्यो भवतीत्यन्वयः । आत्मना बुद्धया वा । दृश्यते त्वग्र्यया बुद्धया इति श्रुतेः । कथंभूतः । स्वया मायया एतत् जगत् सृजति याति हरतीति आख्यया ब्रह्मादिसंज्ञया विवृत इव भिन्न इव निरुक्तः शास्त्रेषु न तु भिन्नः । पुनश्च । ब्रह्मयोनिः । ब्रह्मणः चतुर्मुखस्य वेदस्य च योनिः कारणभूतः । तत्र हेतुत्रयम् । अनावृताक्षः अकुण्ठितज्ञानः । पुनश्च । स्वदृक् स्वप्रकाशस्वरूपः । पुनश्च स्वमहिम्ना निजानन्देन परिपूर्णः सर्वदा पूर्णः । 'पूर्णमदः पूर्णमिदम्' इति श्रुतेः । मालिनीवृत्तम् ॥ २४ ॥ पद्येऽस्मिन् अष्टसंबोधनैः सकामभक्तेभ्यो भगवानष्टसिद्धिं वितरति । हे श्रीकृष्ण ! कृष्णस्य अर्जुनस्य सखे । 'टच् प्रत्ययः': वृष्णिषु यादवेषु ऋषभ श्रेष्ठ अवनिद्रुहो ये राजन्यास्तेषां वंशस्य दहन । अनपवर्गमक्षीणं वीर्यं पराक्रमो यस्य । गां वेदलक्षणां वाणीं विन्दते प्रवर्तते इति गोविन्द । गोपवनितानां व्रजैः समूहैः भृत्यैः नारदादिभिश्च गीतं तीर्थभूतं पवित्रं श्रवः यशो यस्य । श्रवणमेव मङ्गलं विघ्ननाशकं यस्येति । अवनिः पृथ्वी । व्रजं गोष्ठसमूहयोः इत्यमरः । अर्थान्तरमपि मननीयम् । तथाहि—कृष्यते निजसमीपं प्राप्यते भक्तजनोऽनेनेति कृष्णः श्रिया राधया सहितः कृष्णः श्रीकृष्णः । हेत्वन्तरमाह यतस्त्वं कृष्णसखोऽसि । कृष्यते विषयैरिति कृष्णो जीवस्तस्य सखा हितैषी अतो मामपि उद्धरेति भावः । पुनश्च । वृष्णवृषभवर्षन्ति भक्ताभिलषितामिति वृष्णयो वदान्या देवास्तेषु श्रेष्ठोऽसि । अतो ममाभिलषितपूरणं न दुर्घटम् । पुनश्च । अवनिध्रुक् राजन्यवंशः कंसभौमासुरादिसमूहस्तस्य दहने अक्षीणप्रभावोऽसि । अतो ममापि अज्ञानासुरं नाशयेति भावः । पुनश्च । गोभिः गीर्भिर्वेदलक्षणाभिर्वाणीर्विन्द्यते विचार्यते इति गोविन्दः 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेस्त्वमेव सर्वशास्त्रप्रतिपाद्योऽसीति भावः । भृत्यान् भरितुं योग्यान् । विश्वम्भरस्य ते सर्वे भृत्यास्तदन्तर्गतोऽहमपि अतो मामपि पाहीति भावः । इति वंशीधरी ॥ २५ ॥ यः पुमान् कल्पे उषः काले उत्थाय इदं प्रकरणं जप्त्वा प्रयतः शुद्धो भवेत् तदा गुहाशयं हृदिस्थं ब्रह्म वेद जानाति पश्यतीत्यर्थः । कथंभूतम् । महापुरुषस्य विष्णोर्लक्षणानि अङ्गोपाङ्गादीनि यस्मिन् तत् ॥ २६ ॥ मूर्तिव्यूहप्रसङ्गेन सूर्यं व्यूहस्यापि जिज्ञासया पृच्छति शुक इति युग्मम् । सौरः सूर्यसम्बन्धी सप्तको गणः नानानामा वसति एकत्र तिष्ठति यत् यं शुकः विष्णुराताय आह तेषां नामानि कर्माणि च इत्येव सूर्यात्मनो हरे व्यूहं समूहं श्रद्दधानानां नोऽस्माकं ब्रूहीति द्वयोरन्वयः । कथंभूतानां तेषाम् । अधीश्वरैः स्वस्वपतिभिः संयुक्तानाम् ॥२७॥२८॥ तत्र तावत् व्यूहं निरूपयितुं प्रथमं सूर्यस्वरूपमाह—अनादिति । सर्वदेहिनां जीवानाम् आत्मनः अन्तर्यामिणः विष्णोः अनाद्यविद्यया मायाशक्त्या निर्मितः अयं सूर्यः लोकेषु परिवर्तते परिभ्रमति । लोकतन्त्रः लोकमर्यादा-

---

१. 'यो ब्रह्माणं विदधाति पूर्वम्' 'यस्य निः श्वसितं वेदाः' इति श्रुत्योश्च ।

एक एव हि लोकानां सूर्य आत्माऽऽदिकृद्धरिः । सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥३०॥
कालो देशः क्रिया कर्ता करणं कार्यमागमः । द्रव्यं फलमिति ब्रह्मन् नवधोक्तोऽजया हरिः॥३१॥
मध्वादिषु द्वादशसु भगवान् कालरूपधृक् । लोकतन्त्राय चरति पृथग् द्वादशभिर्गणैः ॥३२॥
धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने । पुलस्त्यस्तुम्बुरुरिति मधुमासं नयन्त्यमी ॥३३॥
अर्यमा पुलहोऽथौजाः प्रहेतिः पुञ्जिकस्थली । नारदः कच्छनीरश्च नयन्त्येते स्म माधवम् ॥३४॥
मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः । रथस्वन इति ह्येते शुक्रमासं नयन्त्यमी ॥३५॥
वसिष्ठो वरुणो रम्भा सहजन्यस्तथा हूहूः । शुक्रश्चित्रस्वनश्चैव शुचिमासं नयन्त्यमी ॥३६॥
इन्द्रो विश्वावसुः श्रोता एलापत्रस्तथाङ्गिराः । प्रम्लोचा राक्षसो वर्यो नभोमासं नयन्त्यमी ।३७
विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः । अनुम्लोचा शङ्खपालो नभस्याख्यं नयन्त्यमी ॥३८॥
त्वष्टा ऋचीकतनयः कम्बलश्च तिलोत्तमा । ब्रह्मापेतोऽथ शतजिद् धृतराष्ट्र इषम्भराः ॥३९॥

निर्वाहकः । लोकं तन्त्रयति धारयतीति तथा ॥ २९ ॥ यः लोकानामात्मा अन्तर्यामी आदिकृत् सृष्टिकर्ता च स एकः हरिरेव सूर्यः हि यतः स एव सर्ववेदक्रियाणां मूलं मूलभूतः आधारभूतः ऋषिभिः पराशरादिभिः बहुधा द्वादशधा उदितः निरूपितः ॥ ३० ॥ कर्मप्रवृत्त्यर्थं सूर्यरूपः स हरिरेव कालादिरूपेण अजया मायया नवधा उक्तो भवति । तथाहि कालो वसन्तादिः १ देशः समादिः २ समे यजेत् इति श्रुतेः । तीर्थादिर्वा । क्रिया अनुष्ठानम् ३ । कर्ता ब्राह्मणादिः ४ । करणं स्रुगादि ५ । कार्यं यागादि ६ आगमः मन्त्रादिः ७ । द्रव्यं व्रीह्यादि ८ । फलं स्वर्गादि ९ ॥ ३१ ॥ भगवान् हरिः कालरूपधृक् सूर्यरूपधारी सन् मध्वादिषु चैत्रादिषु मासेषु लोकतन्त्राय लोकमर्यादारक्षणाय आकाशे विचरति । कैः सह । पृथक्-पृथक् द्वादशभिर्गणैः सप्तसंख्यैः । द्वन्द्वशः सप्तभिः । पृथक् चतुर्दशभिः ॥ ३२ ॥ धात्रादयः सप्त मधुमासं चैत्रमासं नयन्ति यापयन्ति । तत्र धाता सूर्यः १ । कृतस्थली अप्सराः २ । हेतिः राक्षसः ३ । वासुकिर्नागः ४ । रथकृत् यक्षः ५ । पुलस्त्यः ऋषिः ६ । तुम्बुरुः गन्धर्वः ७ ॥ ३३ ॥एते अर्यमादयः सप्त माधवं वैशाखमासं नयन्ति । तत्र अर्यमा सूर्यः १ । पुलहः ऋषिः २ । अथ ओजा यक्षः ३ । प्रहेतिः राक्षसः ४ । पुञ्जिकस्थली अप्सरा ५ । नारदो गन्धर्वः ६ । कच्छनीरो नागः ७ ॥ ३४ ॥ अमी मित्रादयः सप्त शुक्रमासं ज्येष्ठमासं नयन्ति । तत्र मित्रः सूर्यः १ । अत्रिः ऋषिः २ । पौरुषेयो राक्षसः ३ । तक्षको नागः ४ । मेनका अप्सराः ५ । हहा गन्धर्वः ६ । रथस्वनो यक्षः ७ ॥३५॥ अमी वसिष्ठादयः शुचिमासम् आषाढमासं नयन्ति । तत्र वसिष्ठः ऋषिः १ । वरुणः सूर्यः २ । रम्भा अप्सराः ३ । सहजन्यो यक्षः ४ । हूहूः गन्धर्वः ५ । शुक्रो नागः ६ । चित्रस्वनो राक्षसः ७ ॥३६॥ अमी इन्द्रादयः नभोमासं श्रावणमासं नयन्ति । तत्र इन्द्रः सूर्यः १ । विश्वावसुः गन्धर्वः २ । श्रोता यक्षः ३ । एलापत्रो नागः ४ । अङ्गिरा ऋषिः ५ । प्रम्लोचा अप्सराः ६ । वर्योनाम राक्षसः ७ ॥ ३७ ॥ अमी विवस्वानित्यादयः नभस्याख्यं भाद्रमासं नयन्ति । तत्र विवस्वान् सूर्यः १ । उग्रसेन गन्धर्वः २ । व्याघ्रो राक्षसः ३ । आसारणो यक्षः ४ । भृगुः ऋषिः ५ । अनुम्लोचा अप्सराः ६ । शंखपालो नागः ७ ॥३८॥ एते त्वष्ट्रादयः इषम्भरा[1] आश्विनपोषकाः । तत्र त्वष्टा सूर्यः १ । ऋचीकतनयो जमदग्निः ऋषिः २ । कम्बलो नागः ३ । तिलोत्तमा अप्सराः ४ । ब्रह्मापेतो राक्षसः ५ । शतजित् यक्षः ६ । धृतराष्ट्रो

१. इषमाश्विनं बिभ्रतीति इषम्भराः । 'डुभृञ् धारण पोषणयोः' धातुः । 'आश्विनोऽश्वयुजश्चेषः' इत्यमरमाला ।

विष्णुरश्वतरो रम्भा सूर्यवर्चाश्च सत्यजित् । विश्वामित्रो मखापेत ऊर्जमासं नयन्त्यमी ॥४०॥
अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी । विद्युच्छत्रुर्महाशङ्खः सहोमासं नयन्त्यमी ॥४१॥
भगः स्फूर्जोऽरिष्टनेमिरूर्ण आयुश्च पञ्चमः । कर्कोटकः पूर्वचित्तिः पुष्यमासं नयन्त्यमी ॥४२॥
पूषा धनञ्जयो वातः सुषेणः सुरुचिस्तथा । घृताची गौतमश्चेति तपोमासं नयन्त्यमी ॥४३॥
क्रतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा । विश्व ऐरावतश्चैव तपस्याख्यं नयन्त्यमी ॥४४॥
एता भगवतो विष्णोरादित्यस्य विभूतयः । स्मरतां संध्ययोर्नॄणां हरन्त्यंहो दिने दिने ॥४५॥
द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै । चरन् समन्तात्तनुते परत्रेह च सन्मतिम् ॥४६॥
सामर्ग्यजुर्भिस्तल्लिङ्गैॠषयः संस्तुवन्त्यमुम् । गन्धर्वास्तं प्रगायन्ति नृत्यन्त्यप्सरसोऽग्रतः ४७॥
उन्नह्यन्ति रथं नागा ग्रामण्यो रथयोजकाः । चोदयन्ति रथं पृष्ठे नैॠता बलशालिनः ॥४८॥

बालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः ।
पुरतोऽभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम् ॥४९॥

एवं ह्यनादिनिधनो भगवान् हरिरीश्वरः । कल्पे कल्पे स्वमात्मानं व्यूह्य लोकानवत्यजः ॥५०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे आदित्यव्यूहविवरणं नामैकादशोऽध्यायः ॥११॥

---

गन्धर्वः ७ ॥ ३९ ॥ अमी विष्ण्वादयः ऊर्जमासं कार्तिकमासं नयन्ति । तत्र विष्णुः सूर्यः १ । अश्वतरो नागः २ । रम्भा अप्सराः ३ । सूर्यवर्चाः गन्धर्वः ४ । सत्यजित् यक्षः ५ । विश्वामित्रः ऋषिः ६ । मखापेतो राक्षसः ७ ॥ ४० ॥ अमी अंशवादय सहोमासं[1] मार्गशीर्षमासं नयन्ति । तत्र अंशुः सूर्यः १ । कश्यपः ऋषिः २ । तार्क्ष्यो यक्षः ३ । ऋतसेनो गन्धर्वः ४ । उर्वशी अप्सराः ५ । विद्युच्छत्रुः राक्षसः ६ । महाशंखो नागः ७ ॥४१॥ अमी भगादयः पुष्यमासं पौषमासं नयन्ति । तत्र भगः सूर्यः १ । स्फूर्जो राक्षसः २ । अरिष्टनेमिः गन्धर्वः ३ । ऊर्णो यक्षः ४ । आयुः ऋषिः ५ । कर्कोटको नागः ६ । पूर्वचित्तिः अप्सराः ७ । ॥ ४२ ॥ अमी पूषादयः तपोमासं माघमासं नयन्ति । तत्र पूषा सूर्यः १ । धनञ्जयो नागः २ । वातो राक्षसः ३ । सुषेणो गन्धर्वः ४ । सुरुचिर्यक्षः ५ । घृताची अप्सराः ६ । गौतमः ऋषिः ७ ॥ ४३ ॥ अमी क्रत्वादयः तपस्याख्यं फाल्गुनमासं नयन्ति । तत्र क्रतुः यक्षः १ । वर्चा राक्षसः २ । भरद्वाजः ऋषिः ३ पर्जन्यः सूर्यः ४ । सेनजित् अप्सराः ५ । विश्वो गन्धर्वः ६ । ऐरावतो नागः ७ ॥४४॥ अत्र क्रमेण मासानां निर्देशः कृतः । व्युत्क्रमस्तु लेखकप्रमादाज्जातः क्वचिन्नामव्यत्ययस्तु कल्पभेदेनेत्यवगन्तव्यम् । द्वादशादित्यानां संग्रहस्तु इत्थम् ।

धाताऽर्यमा च मित्रश्च वरुणश्चेन्द्र एव च । विवस्वानथ पूषा च पर्जन्यश्चांशुरेव च ॥
भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः ॥ ४४ ॥

आदित्यस्य आदित्यरूपस्य । अंहः पापं हरन्ति नाशयन्ति ॥४५॥ असौ देवः सूर्यः षड्भिः गन्धर्वादिभिः सह विचरन् अस्य जनस्य सन्मतिं विवेकबुद्धिं तनुते विस्तारयति ॥ ४६ ॥ तल्लिङ्गैः तन्महत्त्वबोधकैः सामादिमन्त्रैः अमुं सूर्यं संस्तुवन्ति । सूर्यस्य विप्रकृष्टत्वाद:शब्दप्रयोगः[2] ॥ ४७ ॥ उन्नह्यन्ति दृढं बध्नन्ति । ग्रामण्यो यक्षा रथयोजका रथं योजयन्ति सुसज्जितं कुर्वन्ति । नैॠता राक्षसा नोदयन्ति प्रेरयन्ति चालयन्तीत्यर्थः । सर्वेऽप्येते निमित्तमात्रं मुधैव लीलया स्वस्वपराक्रमं प्रदर्शयन्ति न च किञ्चित्कर्तुं शक्नुवन्ति महामहिमशालिना सूर्येणैव सर्वं सम्पद्यते न चायं कस्यापि साहाय्यमपेक्षते सर्वसामर्थ्यसम्पन्नत्वादिति ॥ ४८ ॥ बालखिल्या एतन्नामानः । स्तुतिभिः वैदिकमन्त्रैः ॥४९॥ अनादिनिधनः आद्यन्तरहितः अजः सूर्यः कल्पे कल्पे प्रतिकल्पं ब्रह्मदिने आत्मानं व्यूह्य द्वादशरूपेण विभज्य लोकान् अवति रक्षतीत्यर्थः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्यामेकादशोऽध्यायः ॥ ११ ॥

---

१. मार्गशीर्षः सहो मार्गः । इति कोषः । २. 'अदसस्तु विप्रकृष्टे' इति नियमात् ।

## अथ द्वादशोऽध्यायः

### सूत उवाच

नमो धर्माय महते नमः कृष्णाय वेधसे । ब्रह्मणेभ्यो नमस्कृत्य धर्मान् वक्ष्ये सनातनान् ॥ १ ॥

एतद् वः कथितं विप्रा विष्णोश्चरितमद्भुतम् । भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम् ॥ २॥

अत्र संकीर्तितः साक्षात् सर्वपापहरो हरिः । नारायणो हृषीकेसो भगवान् सात्वतां पति ॥ ३ ॥

अत्र ब्रह्म परं गुह्यं जगतः प्रभवाप्ययम् । ज्ञानं च तदुपाख्यानं प्रोक्तं विज्ञानसंयुतम् ॥ ४ ॥

भक्तियोगः समाख्यातो वैराग्यं च तदाश्रयम् । पारीक्षितमुपाख्यानं नारदाख्यानमेव च ॥ ५ ॥

प्रायोपवेशो राजर्षेर्विप्रशापात् परीक्षितः । शुकस्य ब्रह्मर्षभस्य संवादश्च परीक्षितः ॥ ६ ॥

योगधारणयोत्क्रान्तिः संवादो नारदाजयोः । अवतारानुगीतं च सर्गः प्राधानिकोऽग्रतः ॥ ७ ॥

विदुरोद्धवसंवादः क्षत्तृमैत्रेययोस्ततः । पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥ ८॥

---

द्वादशे प्रथमस्कन्धात् द्वादशान्तमविस्तरात् ।
अनुक्रमणिका प्रोक्ता माहात्म्यं चाप्यभीष्टदम् ॥ १ ॥

महते धर्माय भक्तिलक्षणाय तद्वेधसे तद्[1] विधानकर्त्रे कृष्णाय नमः । ब्राह्मणेभ्यः तत्प्रकाशकेभ्यः उपदेश-कर्तृभ्यो व्यासादिभ्यः नमस्कृत्य सनातनान् अनादिपरम्परागतान् भागवतोक्तान् विषयान् अनुक्रमणिकामुखेन वक्ष्ये । ब्राह्मणेभ्यः ब्राह्मणान् । द्वितीयार्थे चतुर्थी ॥ १ ॥ भवद्भिः नराणां सम्बन्धि 'पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसीति' इत्यहं पृष्टः तद्विष्णोश्चरितात्मकमेतत्पुराणं वः युष्मान् प्रति मया कथितमिति सम्बन्धः । पुरुषाय एतच्छ्रवणाद्येवोचितम् अन्यथा पुरुषः पशुरेव ॥ २ ॥ अत्र पुराणे नानाकथानां व्याजेन सर्वचरित्राणां पर्यवसानं भगवत्येवेति अतः साक्षादित्युक्तम् एतेन देवताकाण्डार्थः सूचितः ॥ ३ ॥ अत्र गुह्यं निर्गुणं परंब्रह्म तथा विज्ञानमनुभवस्तत्सहितं ज्ञानं तत् ज्ञानमुपाख्यायते प्रकाश्यते येन तत् ज्ञानसाधनं कर्म च प्रोक्तमि-त्यर्थः । कथंभूतं ब्रह्म । प्रभवति अस्मादिति प्रभवम् अप्येति अस्मिन्निति अप्ययं तच्च तच्च । अनेन आश्रयशब्दार्थो ध्वनितः । यद्वा । जगतः प्रभव उत्पत्तिः अप्ययो लयश्च यस्मात्तत् ॥४॥ उपाख्यानं परीक्षिज्ज-न्मादि तत्प्रस्तावाय नारदाख्यानम् अत्र केषाञ्चिदनुक्तिः क्वचित् व्युत्क्रमोक्तिश्च न दोषावहा प्रसिद्धस्यैव अतिसंक्षेपतो निर्देश्यत्वात् ॥ ५ ॥ प्रायोपवेशः अनशनपूर्वकं गंगातटे परीक्षितः स्थितिः । तस्य श्रीशुकेन सह संवादे म्रियमाणपुरुषाणां कर्तव्यविषये प्रश्नाः । इति प्रथमस्कन्धार्थः ॥ ६ ॥ योगधारणया उत्क्रान्तिः अर्चिरादिमार्गद्वारा शरीरत्यागविधिः । सद्योमुक्तिक्रममुक्तिद्वारा गतिद्वयवर्णनम् । ब्रह्मनारदसंवादे भगवद-वताराणामनुवर्णनम् । पुराणसम्बन्धिनानाविधाः प्रश्नाश्च । सृष्ट्यर्थमसमर्थाय ब्रह्मणे नारायणद्वारा चतुः-श्लोकीभागवतोपदेशः । अन्ते प्राधानिकः प्रकृतिभवः सर्गः विराटशरीरेन्द्रियसृष्टिरूपः । इति द्वितीयस्कन्धार्थः । ॥७॥ तृतीये पूर्वं विदुरोद्धवसंवादः । तत्र भगवत्प्रजानां तत्तन्नामनिर्देशपूर्वकं कुशलसम्बन्धिप्रश्नाः । ततो हरिद्वारे गंगातटे निवसता मैत्रेयेण सह विदुरस्य महत्त्वपूर्णसंवादः । तत्र पुराणसंहितासम्बन्धिनानाविधाः प्रश्नाः ।

---

१. विदधाति धर्मानिति वेधाः ।

ततः प्राकृतिकः सर्गः सप्त वैकृतिकाश्च ये । ततो ब्रह्माण्डसम्भूतिर्वैराजः पुरुषो यतः ॥ ९ ॥
कालस्य स्थूलसूक्ष्मस्य गतिः पद्मसमुद्भवः । भुव उद्धरणेऽम्भोधेर्हिरण्याक्षवधो यथा ॥१०॥
ऊर्ध्वातिर्यगवाक्सर्गो रुद्रसर्गस्तथैव च । अर्धनारीनरस्याथ यतः स्वायम्भुवो मनुः ॥११॥
शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा । संतानो धर्मपत्नीनां कर्दमस्य प्रजापतेः ॥१२॥
अवतारो भगवतः कपिलस्य महात्मनः । देवहूत्याश्च संवादः कपिलेन च धीमता ॥१३॥
नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् । ध्रुवस्य चरितं पश्चात् पृथोः प्राचीनबर्हिषः ॥१४॥
नारदस्य च संवादस्ततः प्रैयव्रतं द्विजाः । नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च ॥१५॥
द्वीपवर्षसमुद्राणां गिरिनद्युपवर्णनम् । ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः ॥ १६॥
दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणां च संततिः । यतो देवासुरनरास्तिङ्नगखगादयः ॥१७॥
त्वाष्ट्रस्य जन्म निधनं पुत्रयोश्च दितेर्द्विजाः । दैत्येश्वरस्य चरितं प्रह्लादस्य महात्मनः ॥१८॥
मन्वन्तरानुकथनं गजेन्द्रस्य विमोक्षणम् । मन्वन्तरावताराश्च विष्णोर्हयशिरादयः ॥१९॥
कौर्मं धान्वतरं मात्स्यं वामनं च जगत्पतेः । क्षीरोदमथनं तद्वदमृतार्थे दिवौकसाम् ॥२०॥
देवासुरमहायुद्धं राजवंशानुकीर्तनम् । इक्ष्वाकुजन्म तद्वंशः सुद्युम्नस्य महात्मनः ॥ २१ ॥
इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च । सूर्यवंशानुकथनं शशादाद्या नृपादयः ॥ २२ ॥

---

महापुरुषस्य विष्णोः संस्थितिः प्रलये तूष्णीभूय सम्यगवस्थानम् ॥ ८ ॥ ततः प्राकृतिकः सर्गः प्रकृतिगुणक्षोभात्मकः सर्गः । ततः ये वैकृतिकाः सप्त सर्गाः महदहङ्कारपञ्चमहाभूतात्मकाः ततः तेभ्यः वैकृतिभ्यः ब्रह्माण्डस्य संभूतिः उत्पत्तिः । यतो यत्र ब्रह्माण्डे वैराजः विराडन्तर्यामी पुरुषोऽस्तीति ॥ ९ ॥ कालस्य गतिः स्वरूपम् । पद्मस्य लोकात्मकपद्मस्य भगवन्नाभेः सकाशात् प्रादुर्भावः । अम्भोधेः सकाशात् भुवः उद्धरणे उद्धारणे तन्निमित्तं यथा वधः कृतस्तथा वर्णित इति शेषः ॥१०॥ ऊर्ध्वेति सार्द्धम् । ऊर्ध्वसर्ग देवसर्गः तिर्यक् सर्गः पश्वादिसर्गः । अवाक्सर्गोऽधःसर्गोऽसुरादिलक्षणः मनुष्यसर्गः । उक्तं च तथैव अर्वाक् सर्गस्तु नवमः क्षत्तरेकविधो नृणाम् । तथैव च चकारात् रुद्रगणसर्गोऽपि । अर्द्धाभ्यां नारी च नरश्च तस्य सर्गः । समाहार द्वन्द्वोऽयम् । यतः यत्र नारीनरे स्वायम्भुवो मनुः शतरूपा च अभूत् । या च स्त्रीणामाद्या प्रकृतिः मूलकारणम् । तत एव स्त्रीसर्गप्रवृत्तेः ॥ ११ ॥ धर्मपत्नीनां कीर्त्यादीनां सन्तान इति नवब्रह्मसमुत्पत्तिरित्यस्यानन्तरं द्रष्टव्यम् कर्दमस्य च यथा सन्तानस्तथा वर्णितः इति तृतीयस्कन्धार्थः ॥ १२ ॥ १३ ॥ चतुर्थे नवभ्यः ब्रह्मभ्यः ब्राह्मणेभ्यो मरीच्यादिभ्यः समुत्पत्तिः तदपत्यसृष्टिः । दक्षयज्ञविनाशनं यज्ञापूर्तिश्चेति शिवविद्वेषफलम् । पृथोश्चरितम् । प्राचीनबर्हिणो नारदस्य च संवादः । इति चतुर्थस्कन्धार्थः । पञ्चमस्कन्धार्थमाह इति प्रैयव्रतं प्रियव्रतचरितम् । हे द्विजा इति शौनकसम्बोधनम् ।१४। नाभ्यादित्रयाणां चरितम् ।१५। नरकस्थितिः नानायातनाश्च ॥ १६ ॥ षष्ठस्कन्धार्थमाह तत्पुत्रीणां दक्षपुत्रीणाम् । यतो याभ्यो दक्षपुत्रीभ्यो देवादयो बभूबुरित्यर्थः ॥ १७ ॥ त्वाष्ट्रस्य त्वष्टुः पुत्रस्य वृत्रासुरस्य जन्म निधनं मरणं च । सप्तमस्कन्धार्थमाह-पुत्रयोश्चेति । दितेः पुत्रयोः जन्म निधनं च । हे द्विजाः । दैत्येश्वरस्य हिरण्यकशिपोः । महात्मनः भगवद्भक्तस्य ॥ १८ ॥ अष्टमस्कन्धार्थमाह ! हयशिरादयः हयग्रीवादयः ॥ १९ ॥ दिवौकसां देवानाममृतार्थं अमृतनिमित्तं समुद्रमथनम् ॥ २० ॥ नवमस्कन्धार्थमाह—राजवंशेति । तद्वंशे इक्ष्वाकुवंशे । सप्तम्यन्तपाठः । सुद्युम्नस्य

सौकन्यं चाथ शर्यातेः ककुत्स्थस्य च धीमतः । खट्वाङ्गस्य च मान्धातुःसौभरेःसगरस्य च ।२३।
रामस्य कोसलेन्द्रस्य चरितं किल्बिषापहम् । निमेरङ्गपरित्यागो जनकानां च सम्भवः ॥ २४ ॥
रामस्य भार्गवेन्द्रस्य निःक्षत्रकरणं भुवः । ऐलस्य सोमवंशस्य ययातेर्नहुषस्य च ॥ २५ ॥
दौष्यन्तेर्भरतस्यापि शन्तनोस्तत्सुतस्य च । ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशोऽनुकीर्तितः ॥ २६ ॥
यत्रावतीर्णो भगवान् कृष्णाख्यो जगदीश्वरः । वसुदेवगृहे जन्म ततो वृद्धिश्च गोकुले ॥ २७ ॥
तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः । पूतनासुपयःपानं शकटोच्चाटनं शिशोः ॥ २८ ॥
तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः । धेनुकस्य सहभ्रातुः प्रलम्बस्य च संक्षयः ॥ २९ ॥
गोपानां च परित्राणं दावाग्नेः परिसर्पतः । दमनं कालियस्याहेर्महाहेर्नन्दमोक्षणम् ॥ ३० ॥
व्रतचर्या तु कन्यानां यत्र तुष्टोऽच्युतो व्रतैः । प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ॥३१॥
गोवर्धनोद्धारणं च शक्रस्य सुरभेरथ । यज्ञाभिषेकं कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥ ३२ ॥
शङ्खचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः । अक्रूरागमनं पश्चात् प्रस्थानं रामकृष्णयोः ॥ ३३ ॥
व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः । गजमुष्टिकचाणूरकंसादीनां च यो वधः ॥ ३४ ॥
मृतस्यानयनं सूनोः पुनः सान्दीपनेर्गुरोः । मथुरायां निवसता यदुचक्रस्य यत् प्रियम् ।
कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ॥ ३५ ॥

---

उपाख्यानमिति शेषः ॥२१॥ तारा बृहस्पतेः पत्नी तस्या उपाख्यानम् ॥ २२ ॥ शर्यातेः कन्या सुकन्यानाम्नी तस्याश्चरितम् ॥ २३ ॥ किल्बिषं पापं हन्तीति तथाविधम् । कोशला अयोध्या देशो वा । जनकानां जनकवंश्यानां राज्ञां संभव उत्पत्तिः ॥२४॥ भार्गवेन्द्रस्य भृगुवंशशिरोमणेः परशुरामस्य सकाशात् भुवः निःक्षत्रकरणम् क्षत्रियहीनकरणम् यथाऽऽसीत् तथा वर्णितम् । क्षतात् त्रायते इति क्षत्रं क्षत्रियकुलम् । सोमवंशस्य सोमवंशोद्भवस्य सोमवंशोऽस्त्यस्येति मत्वर्थीयोऽच्प्रत्ययान्तः ॥ २५ ॥ दौष्यन्तेः दुष्यन्तपुत्रस्य भरतस्य । तत्सुतस्य भीष्मस्य जन्म ॥ २६ ॥ २७ ॥ दशमस्कन्धार्थमाह तस्येति । अपराणि अनन्तानि अनुपमानि वा । पूतना राक्षसी तस्या असुसहितस्य स्तन्यपयसः पानम् । शिशोः सकाशात् । शकटस्यान्तःप्रविष्टत्वात् शकट एवासुरः तस्य उच्चाटनं भेदनं विदारणम् । चट् भेदने धातुः ॥ २८ ॥ निष्पेषः चूर्णीकरणम् हननमिति यावत् शिलायामिति शेषः पिष्लृ पेषणे धातुः । तथैव निष्पेषः । धेनुकस्य गर्दभासुरस्य सहभ्रातुः ज्ञातिसहितस्य संक्षयः विनाशः ॥ २९ ॥ परिसर्पतः सर्वतः प्रसृतस्य दावाग्नेः सकाशात् । दमनं मर्दनम् तत्तन्ममर्द इत्युक्तेः । महाहेः अजगरात् ॥ ३० ॥ व्रतचर्या तु । तुर्वैलक्षण्ये । यत्र यस्यां व्रतचर्यायां व्रतैः अच्युतः तुष्टोऽभूत् । येन यज्ञपत्नीभ्यः प्रसादः भगवदनुग्रहः । अनुतापनं पश्चात्तापश्च ॥ ३१ ॥ शक्रस्य सुरभेश्च शक्रसुरभिभ्यां यज्ञाभिषेकम् । शक्रेण यज्ञः पूजनं सुरभ्या अभिषेकश्च तयोर्द्वन्द्वैक्यम् । स्त्रीभिः स्वपत्नीभिः न तु परकीयाभिः क्रीडा रासलीला कामविजयार्थमिति शेषः ॥ ३२ ॥ दुर्बुद्धेः गोपीहरणात्[1] । अरिष्टस्य वृषभासुरस्य । केशिनः अश्वरूपिणः । पश्चात् अनन्तरम् प्रस्थानं मथुरायामिति शेषः ॥३३॥ गजः कुवलयापीडः मुष्टिक-चाणूरौ मल्लौ तदादीनां यो वधः स च वर्णितः ॥ ३४ ॥ सान्दीपनेर्नाम्नः । मृतस्यानयनं यमलोकादिति शेषः । निवसता भगवता यदुचक्रस्य यदुमण्डलस्य यत् प्रियं कृतं तच्च वर्णितमिति योज्यम् । बहुशः सप्तदशवारान् यवनेन्द्रस्य

---

१. स्त्रीहरणे प्रवृत्तिस्वात् तस्य दुर्बुद्धित्वम् ।

जरासन्धसमानीतसैन्यस्य बहुशो बधः । घातनं यवनेन्द्रस्य कुशस्थल्या निवेशनम् ।। ३६ ।।
आदानं पारिजातस्य सुधर्मायाः सुरालयात् । रुक्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः ।। ३७ ।।
हरस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनम् । प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं च यत्।। ३८ ।।
चैद्यपौण्ड्रकशाल्वानां दन्तवक्त्रस्य दुर्मतेः । शम्बरो द्विविदः पीठो मुरः पञ्चजनादयः ।। ३९ ।।
माहात्म्यं च वधस्तेषां वाराणस्याश्च दाहनम् । भारावतरणं भूमेर्निमित्तीकृत्य पाण्डवान् ।। ४० ।।
विप्रशापापदेशेन संहारः स्वकुलस्य च । उद्धवस्य च संवादो वासुदेवस्य चाद्भुतः ।। ४१ ।।
यत्रात्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः । ततो मर्त्यपरित्याग आत्मयोगानुभावतः ।। ४२ ।।
युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः ।। ४३ ।।
चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा । देहत्यागश्च राजर्षेर्विष्णुरातस्य धीमतः ।। ४४ ।।
शाखाप्रणयनमृषेर्मार्कण्डेयस्य सत्कथा । महापुरुषविन्यासः सूर्यस्य जगदात्मनः ।। ४५ ।।
इति चोक्तं द्विजश्रेष्ठा यत् पृष्टोऽहमिहास्मि वः । लीलावतारकर्माणि कीर्तितानीह सर्वशः।४६।

---

कालयवनस्य घातनं मुचुकुन्दद्वारा कुशस्थल्या द्वारकाया निवेशनं निर्माणम् । कौ पृथिव्यो शेते इति कुशं जलं तदेव स्थलं यस्यां सेति तच्छब्दार्थः । 'अन्तः समुद्रे नगरं कृत्स्नाद्भुतमचीकरदित्युक्तेः ।। ३५ ।। ३६ ।। पारिजातस्य कल्पवृक्षस्य आदानमानयनम् सुरालयात् इन्द्रलोकात् सुधर्मायाश्च आदानम् । 'स्यात्सुधर्मा देव सभा' इत्यमरः । सभाया आनयनं तु तदधिष्ठातृदेवतारूपेण ।। ३७ ।। द्विषतः शत्रून् जरासन्धादीन् प्रमथ्य पराजित्य ह रेः हरिणा हरणं कृतम् । कृन्तनं छेदनम् । कृती छेदने धातुः ।।३८।। प्राग्ज्योतिषपतिं भौमासुरन् । प्राग्ज्योतिषपुरं तस्य राजधानी । यत् हरणं तच्च वर्णितम् । चैद्यः चेदिदेशीयः शिशुपालः । पौण्ड्रको मिथ्यावासुदेवः । शाल्वो महामायावी तदादीनां वधश्च ।। ३९ ।। शम्बरोऽसुरः द्विविदो वानरः । पीठः[1] सेनापतिः भौमासुरस्य । मुरादयो दैत्याः तेषां माहात्म्यमासुरप्रभावश्च । दाहनम् अभिचारप्रयुक्तदोष-निवृत्यर्थम् ।। ४० ।। एकादशस्कन्धार्थमाह-विप्रेति । शापापदेशेन शापव्याजेन निमित्तेन तस्य स्वाभिप्रेतत्वात् । अद्भुतः भक्तिज्ञानामृतेन ओतप्रोतत्वात् ।। ४१ ।। यत्र संवादे आत्मविद्या ब्रह्मविद्या । धर्मविनिर्णयश्च प्रोक्त इति लिङ्गव्यत्ययेनान्वयः । धर्मोऽत्र वर्णाश्रमादिप्रयुक्तः । मर्त्यस्य मर्त्यलोकस्य परित्यागः न तु शरीरस्य । अन्यथा—"आदायान्तर्धाद्यस्तु स्वबिम्बं लोकलोचनम्" । इत्युक्तिविरुध्वेत ।
आत्मयोग आत्मनो योगमाया तस्याः प्रभावतः इति लोकदुर्वितर्कता ध्वनिता ।। ४२ ।। द्वादशस्कन्धार्थमाह युगेति । युगलक्षणं युगस्वरूपं तदनुरूपा नृणां वृत्तिः व्यवहारश्च । यस्मिन् यस्मिन् युगे या या वृत्तिः सेत्युक्तेति भावः । उपप्लवः उपद्रवः नाशो वा धर्मादेरिति शेषः ।।४३।। चतुर्विधः प्राकृतिकः नैमित्तिकः आत्यन्तिकः नित्यश्चेति । त्रिविधा सात्त्विकी राजसी तामसी चेति । देहत्यागः चकारात् दिव्यलोकगमनं च । विष्णुना रातः दत्तः प्राणदानेन रक्षित इत्यर्थः । रा दाने धातुः ततो निष्ठा । धीमतः शुकप्रसादात् प्राप्तज्ञानस्य ।। ४४ ।। ऋषेः व्यासस्य शाखाप्रणयनं वेदशाखाविभाजनम् । महापुरुषस्य विष्णोः विन्यासः अङ्गोपाङ्गादिकल्पना । सूर्यस्य च विन्यासः इति पदं विभज्यान्वेति द्वादशव्यूहकल्पना जगदात्मनः जगदाधारस्य ।। ४५ ।। वः युष्माभिः । कर्माणि चरितानि । हे द्विजश्रेष्ठाः इति सम्बोधनं शौनकादीनाम् ।। ४६ ।।

---

१. 'पीठं पुरस्कृत्य चमूपतिं मृधे इत्युक्तेः ।

पतितः स्खलितश्चार्तः क्षुत्त्वा वा विवशो ब्रुवन् । हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ।।४७।।

संकीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसाम् ।
प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ।। ४८ ।।

मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद् भगवानधोक्षजः ।
तदेव सत्यं तदुहैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम् ।। ४९ ।।

तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ।। ५० ।।

न यद् वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ।
तद् ध्वाङ्क्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ।। ५१ ।।

स वाग्विसर्गो जगताघसम्प्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ।।५२।।

---

पतितः कूपादौ स्खलितः सोपानादेः । आर्तः रोगादिना पीडितः । क्षुत्त्वा छिक्कां गृहीत्वाऽपि तत्तदवस्थायां विवशोऽपि हरये नम इत्युच्चैः ब्रुवन् सर्वपातकात् त्रिविधपातकात् मुच्यते । सर्वशब्दो वासनापरः । सर्वतो-भयात् इत्यपि पाठः ।। ४७ ।। पुसां पुम्भिः संकीर्त्यमानः अथवा श्रुतानुभावो भगवान् पुंसां चित्तं प्रविश्य अशेषं समूलं व्यसनं दुःखं धुनोति नाशयति । अत्र दृष्टान्तद्वयम् । यथा अर्कः तमोऽन्धकारं धुनोति । गुहागतं च न धुनोतीत्यरुचेराह अभ्रमिवातिवातः । महावातो यथा अभ्रं[1] मेघम् । अत्र पुंसामिति पदं देहलीदीप-न्यायेनोभयत्रान्वेति । पूर्वपक्षे पुसांमिति कर्त्रर्थे षष्ठी । श्रुतः[2] अनुभावः प्रभावो यस्य सः । हीत्यनेन सतामनुभवं प्रमाणयति ।। ४८ ।। यत् यासु भगवान् अधोक्षजो न कथ्यते न गीयते ताः गिरः मृषा निरर्थिकाः । कुतः । अंसतीः असत्यः असत्तुल्याः नरकहेतुत्वात् । कथंभूताः गिरः । असतां विषयिणां कथा चर्चा यासु ताः । असती विषयसम्बन्धिनी वा कथा यासु ताः । तदेव वचः सत्यं सार्थकं तदेव मंगलं शुभावहं तदेव पुण्यं पुण्यावहं च यतो, भगवद्गुणानामुदयः आविर्भावो यस्मात् यस्मिन् वा तत् । पुण्य-मित्यत्र मत्वर्थीयोऽच्प्रत्ययः । अत्यादरात् प्रतिपदं तच्छब्दप्रयोगः ।।४९।। यत् यस्मिन् उत्तमश्लोकयशोऽनुगीयते तदेव प्रतिक्षणं नवं नवं सत् अरम्यमपि रम्यमेव भवति । यथा ऋक्षबिलप्रवेशादिकमरम्यमपि मणेः प्राप्ति सत्त्वात् रम्यमेव भवति । सीतापरित्यागादिकमरोचकमपि लोकापवादत्वात् तत् रुचिरं रुचिरमेव । किञ्च सीताहरणादिकं मनसो दुःखकरमपि राक्षसरावणवधे सहायकत्वात् शश्वत् सर्वदा महोत्सवरूपमेव । चरितस्य पतिपुत्रादिषु वैराग्योत्पादकत्वेन वियोगस्थितौ नृणां शोकार्णवकरमपि भगवत्प्राप्तौ निमित्तत्वात् शोकार्णवशोषणमेव भवति ।। ५० ।। न यद्वच इति पद्यत्रयं प्रथमस्कन्धे व्याख्यातचरमपि पुनः किञ्चित् व्याख्यायते । चित्रपदमपि श्लेषानुप्रासयमकादिघटितमपि यद्वचः हरेर्यशः चरित्रं न प्रगृणीत न वर्णयेत् तत् ध्वांक्षतीर्थं काकतुल्यानां कामिनां रतिस्थानं वदन्ति न तु हंसैः परमहंसैः विवेकिभिः सेवितं भवति । अमलाः शुद्धान्तःकरणाः साधवस्तु यत्र अच्युत अच्युतसत्कथा च तत्रैव रमन्ते इति क्रियाशेषः अत्रान्तिमचरणद्वयं किञ्चिद्विपरीत्येनोक्तम् ।।५१।। स एव वाग्विसर्गः वाचं । प्रयोगः जनताया अघं विप्लावयति नाशयतीति तथा । यस्मिन् वाग्विसर्गे अबद्धवत्यपि

---

१. 'अभ्रं मेघो वारिवाह' इत्यमरः ।

२. 'उपलक्षणमेतत्' स्मृतो वा ध्यातो वा इति योज्यम् ।

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे न ह्यर्पितं कर्म यदप्यनुत्तमम् ॥ ५३ ॥
यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु ।
अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ॥ ५४ ॥
अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शमं तनोति च ।
सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥ ५५ ॥
यूयं द्विजाग्रया बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम् ।
नारायणं देवमदेवमीशमजस्रभावा भजताऽऽविवेश्य ॥ ५६ ॥
अहं च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात् ।
प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम् ॥ ५७ ॥
एतद् वः कथितं विप्राः कथनीयोरुकर्मणः । माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ॥ ५८ ॥

---

व्याकरणादिदोषयुक्तेऽपि अनन्तस्य नामानि सन्ति । यत् यानि नामानि साधवः वक्तरि सति शृण्वन्ति श्रोतरि सति गृणन्ति उपदिशन्ति द्वयोरभावे स्वयमेवं गायन्ति ॥ ५२ ॥ निर्गतं कर्म यस्मात् तत् निष्कर्म तदेव नैष्कर्म्यं कर्मबन्धध्वंसकमपि यत् ज्ञानम् अच्युतभक्तिवर्जितं चेत् अलमयतिशयेन न शोभते अपरोक्षज्ञानाय समर्थं न भवति तदा पुनः कर्म कुतः शोभेतेत्यन्वयः । कथंभूतं कर्म । शश्वत् सर्वदा साधनकाले फलकाले च अभद्रं दुःखरूपं न च ईश्वरे अर्पितं च किञ्चं न विद्यते उत्तमं यस्मात् तत् अनुत्तमं मीमांसकैः नवोत्तमतया अभिमतमपि । निरञ्जनम् उपाधिनिवर्तकमिति ज्ञानविशेषणम् ॥ ५३ ॥ वर्णाश्रमादिषु यः परो महान् परिश्रमः स यशोयुक्तायां श्रियामेव पर्याप्तो भवेत् यशःसम्पत्तिसाधकः एव न तु भगवत्प्राप्तिसाधक इत्यर्थः । हरेर्गुणानुवादश्रवणादिभिस्तु यः परिश्रमः स तु श्रीधरपादपद्मयोः अविस्मृतिः स्मृतिकरो भवति । न भवति विस्मृतिर्यस्मात्सः तथाभूतो भवति ॥ ५४ ॥ ततः किमत आह । अविस्मृतिः भगवत्स्मृतिस्तु अभद्राणि पापानि क्षिणोति नाशयति । शमं शान्ति सत्त्वस्य[1] अन्तःकरणस्य शुद्धिं ज्ञानं च तनोति विस्तारयतीत्यर्थः । भक्तिं प्रेमलक्षणाम् । विज्ञानमनुभवस्तत्सहितम् ॥ ५५ ॥ हे द्विजाग्र्याः । यत् यस्मात् आत्मनि अन्तःकरणे श्रीनारायणमावेश्य स्थिरीकृत्य शश्वत् निरन्तरं भजत । संभावनायां लोट् । अतो यूयं भूरिभागाः अतिभाग्यवन्तः । कथंभूतं नारायणम् । अखिलात्मभूतं सर्वान्तर्यामिणम् । अखिलस्य सर्वस्य आत्मनि अन्तःकरणे भूतं प्राप्तम् । भू प्राप्तौ धातुः । अत एव देवं सर्वोपास्यम् । कुतः । अदेवं न देवोऽन्यो दयालुः यस्मात् । कुतः । ईशं सर्वसमर्थम् । यद्वा । यस्मात् यूयं भूरिभागाः तपआदिसम्पन्नाः ततो नारायणं भजतेति विध्यर्थेऽपि लोट् । अजस्रं निरन्तरं भावः प्रेम येषां ते तथाभूता सन्तः यूयमिति योज्यम् ॥ ५६ ॥ पुरा-परीक्षितः प्रायोपवेशे अनशनकाले सदसि ऋषीणां शृण्वतां सतां मे मया यथा परमर्षिवक्त्रात् पुराणं श्रुतं तच्च भवत्प्रश्नेन अहं संस्मारित स्मरणं कारित इत्यहोभाग्यमस्माकमित्यन्वयः । कथंभूतं पुराणम् । आत्मतत्त्व-प्रकाशकम् । यद्वा आत्मनः तत्त्वं वर्णितमस्मिन्निति मत्वर्थीयोऽच्प्रत्ययः ॥५७॥ एतत्पुराणश्रवणकीर्तनादिफलं निरूपयति एतदित्यष्टभिः । हे विप्राः । एतत् माहात्म्यं वः युष्मभ्यं कथितम् । कथनीयानि उरूणि बहूनि

---

१. सत्त्वं द्रव्ये गुणे जीवे धैर्यान्तःकरणे तथा । इति निरुक्तिः।

य एवं श्रावयेन्नित्यं यामक्षणमनन्यधीः । श्रद्धावान् योऽनुशृणुयात् पुनात्यात्मानमेव सः ।५९।

द्वादश्यामेकादश्यां वा शृण्वन्नायुष्यवान् भवेत् । पठत्यनश्नन् प्रयतस्ततो भवत्यपातकी ॥६०॥

पुष्करे मथुरायां च द्वारवत्यां यतात्मवान् । उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥६१॥

देवता मुनयः सिद्धाः पितरो मनवो नृपाः । यच्छन्ति कमान् गृणतः शृण्वतो यत्र कीर्तनात् ।६२

ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविन्दते ।
मधुकुल्या घृतकुल्याःपयःकुल्याश्च तत्फलम् ॥६३॥

पुराणसंहितामेतामधीत्य प्रयतो द्विजः । प्रोक्तं भगवता यत्तु तत् पदं परमं व्रजेत् ॥६४॥

विप्रोऽधीत्याप्नुयात् प्रज्ञां राजन्योदधिमेखलाम् ।
वैश्यो निधिपतित्वं च शूद्रः शुद्ध्येत पातकात् ॥६५॥

कलिमलसंहतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्षणम् ।
इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपदं कथाप्रसङ्गैः ॥६६॥

---

कर्माणि चरितानि यस्य । सर्वाणि सवासनानि अशुभानि विनाशयतीति तथा ॥५८॥ यः पुमान् एवं नियमेन अनन्यधीः स्थिरचित्तः सन् यामक्षणं यामश्च क्षणश्च अनयोः समाहार इति यामक्षणम् । कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । बह्ववकाशे याममात्रम् अल्पावकाशे तु क्षणमात्रं च शृणुयात् । स आत्मानमेव साक्षात् पुनाति शोधयति प्रपश्चात् मोचयतीत्यर्थः न तु स्नानादिवत् देहमात्रम् ॥५९॥ सर्वदा श्रवणानवकाशे तु द्वादश्यामेका-दश्यामेव अवश्यं शृणुयात् । वा शब्द एवार्थे । आयुर्वर्धतेऽनेनेति आयुष्यो धर्मः । धर्मेण वर्धते चायुः इत्युक्ते-स्तद्वान् भवति । सर्वधर्मफलभाग् भवतीति आयुष्यवानित्यस्यार्थः । अनश्नन् भोजनात्पूर्वमित्यर्थः । प्रयतः समाहितचित्तः सन् प्रपूर्वक यम् उपरमे धातुः ततो निष्ठा अनुनासिकलोपश्च ॥ ६० ॥ यतात्मवान् धैर्यवान् । भयात् संसारात् ॥ ६१ ॥ अत्र पुराणे ये देवतादय कीर्तिता वर्णिता तेऽपि कीर्तनात् हेतोः प्रसन्नाः सन्तः अस्य कामान् अभिलाषितपदार्थान् प्रयच्छन्ति ददतीत्यन्वयः । कस्य । यत्र यत् भागवतं गृणतः उपदिशतः शृण्वतश्च पुंसः । वक्तुः श्रोश्चेत्यर्थः । यत्रेति द्वितीयार्थे त्रल् प्रत्ययः इति वंशीधरी ।६२। ऋच इमि द्वयम् । द्विजः ऋगा-दीनधीत्य मधुकुल्यादिदानस्य यत्फलमनुविन्दते लभते तत्फलमेतां पुराणसंहितामधीत्य अनुविन्दते अन्ते च यच्च प्रोक्तं भगवतः पदं तच्च व्रजेत् प्राप्नुयादिति द्वयोरन्वयः । मधुकुल्या मधुनिर्मितकृत्रिमनदी । कुल्याऽल्पा कृत्रिमा सरित् इत्यमरः ॥ ६४ ॥ उदधिमेखलां समुद्रपर्यन्तां पृथ्वीम् । सन्धिरार्षः । पातकात् जातिगनदोषात् ॥६५॥ इह श्रीमद्भागवते अशेषमूर्तिः भगवान् कथाप्रसङ्गैः अनुपदं प्रतिश्लोकं यथा परिपठितः परिगीतस्तथा इतरत्र पुराणान्तरे तु अभीक्ष्णं नैव गीत इत्यन्वयः । कथंभूतो हरिः । कलिमलानां नानाविधदुर्वासनानां संहतिं समूहं नाशयतीति तथा । तीर्थस्तु कलिमलं संसारमित्याह । पुनश्च । अशेषमूर्तिः । अशेषा नारायणादयो

तमहमजमनन्तमात्मतत्त्वं जगदुदयस्थितिसंयमात्मशक्तिम् ।
द्युपतिभिरजशक्रशंकराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मि ॥६७॥
उपचितनवशक्तिभिः स्व आत्मन्युपरचितस्थिरजङ्गमालयाय ।
भगवत उपलब्धिमात्रधाम्ने सुरऋषभाय नमः सनातनाय ॥६८॥
स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ।
व्यतनुत कृपया यस्तत्त्वदीपं पुराणं तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥६९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे द्वादशस्कन्धार्थनिरूपणं
नाम द्वादशोऽध्यायः ॥ १२ ॥

---

मूर्तयोऽवतारा यस्य सः । पुनश्च । अखिलानां देवानामीशः अखिलेशः 'देवेशः । देवेशो देवभृद्गुरुः' इति सहस्रनामपाठात् । अनुपदम् । पदानि सन्ति अत्रेति पदः पद्यं मत्वर्थीयोऽच्प्रत्ययः । पदं पदमनुपदम् । वीप्सार्थकानुपदयोगे द्वितीया । सर्वकथानां मुख्यविषया भगवत्येव पर्यवसानात् परीत्युक्तम् । पुष्पिताग्रावृत्तत्रयेण भगवति पुष्पाञ्जलिः समर्प्यते ॥ ६६ ॥ अजम् अनादिम् अनन्तम् अच्युतं श्रीकृष्णं नतोऽस्मीति सम्बन्धः । कथंभूतम् । आत्मतत्त्वं ज्ञानस्वरूपम् । यद्वा । आत्मनः जीवस्य तत्त्वं तत्त्वज्ञानं यस्मात् । पुनश्च । जगतः उदयस्थितिसंयमेषु सृष्टिस्थितिप्रलयेषु आत्मनः स्वस्य रज आद्या शक्तयो यस्य । पुनश्च । द्युपतिभिः इन्द्रादिभिः अजाद्यैश्च दुरवसितः दुर्ज्ञेयः स्तवो माहात्म्यमनन्तत्वात् यस्य तं तथोक्तम् ॥ ६७ ॥ सुराणाम् ऋषभाय श्रेष्ठाय सनातनाय अनादिपुरुषाय भगवते श्रीकृष्णाय नम इत्यन्वयः । कथंभूताय । उपचिताभिः वृद्धिं गताभिः नवशक्तिभिः स्वे स्वकीये आत्मन्येव उपरचितं यत् स्थावरजङ्गमं प्राणिजातं तस्य आलयाय स्थानभूताय, लयस्थानाय आधारभूताय वा । पुनश्च । उपलब्धिमात्रं ज्ञानमात्रम् आत्मा स्वरूप यस्य तस्मै । नव शक्तयश्च प्रकृतिपुरुषमहदहङ्कारपञ्चतन्मात्रारूपाः ॥ ६८ ॥ स्वगुरुं प्रणमति । स्वसुखेति । यः कृपया तत्त्वदीपं तत्त्वप्रकाशकं तदीयं भगवत्सम्बन्धि पुराणं श्रीमद्भागवतं व्यतनुत प्रकाशितवान् तं व्यासूनुं नतोऽस्मीति सम्बन्धः । कथंभूतं पुराणम् । अखिलानां जीवानां वृजिनानि दुःखानि तन्मूलानि पापानि च हन्तीति । अखिलानि वृजिनानि वा । कथंभूतः । स्वसुखेन ब्रह्मानन्देन निभृतं पूर्णं चेतो यस्य । तेनैव व्युदस्तो निरस्तः अन्यस्मिन् ऐहिकामुष्मिके विषये भावोऽभिलाषो यस्य तथाभूतोऽपि अजितस्य श्रीकृष्णस्य रुचिराभिः लीलाभिः आकृष्टः[1] सारो ब्रह्मस्थिरं मनो यस्य सः । सारो बले स्थिरांशे च इत्यमरः ॥ ६९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे गूढार्थदीपिन्यां द्वादशोऽध्यायः ॥ १२ ॥

---

१. परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया ।
गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ इति प्रथमोक्तेः ।

अथ त्रयोदशोऽध्यायः

सूत उवाच

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ।
पृष्ठे भ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः
यत्संस्कारकलानुवर्तनवशाद् वेलानिभेनाम्भसां यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति २
पुराणसंख्यासम्भूतिमस्य वाच्यप्रयोजने । दानं दानस्य माहात्म्यं पाठादेश्च निबोधत ॥ ३ ॥
ब्राह्मं दश सहस्राणि पाद्मं पञ्चोनषष्टि च । श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ ४ ॥
दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः । मार्कण्डं नव वाह्नं च दशपञ्चचतुःशतम् ॥ ५ ॥

---

त्रयोदशे हरेर्ध्यानं समाप्तौ मङ्गलात्मकम् ।
पुराणश्लोकसंख्यानं माहात्म्यं चास्य वर्ण्यते ॥१॥

ब्रह्मा यं स्तौति वरुणादयश्च यं स्तुवन्ति सामगा वेदैः यं गायन्ति योगिनो मनसा यं पश्यन्ति सुरादयश्च यस्य अन्तमियत्तां न विदन्ति तस्मै देवाय श्रीकृष्णाय नम इत्यन्वयः । श्रीकृष्णस्य प्रधानदेवत्वात् अस्यान्तः प्रविष्टत्वेन तिरोहितत्वाच्च नामनिर्देशो न कृत इत्यवधेयम् । अङ्गपाठः पदपाठः क्रमपाठः उपनिषत्पाठश्च तत्सहितैः वेदैः । 'द्वन्द्वाच्चुदष'—इति टच् प्रत्ययः । ध्यानेन अवस्थितं स्थिरं तद्गतं यन्मनस्तेन ॥१॥ कमठाकृतेः कच्छपाकृतेः भगवतः श्वासानिलाः नः पान्तु इत्यन्वयः । कथंभूतस्य । पृष्ठे भ्राम्यन् यः अमन्दः गुरुतरो मन्दराचलः तस्य ग्रावाग्रैः पाषाणाग्रभागैः कण्डूयनात् कण्डूतिजन्यसुखात् हेतोः निद्रालोः निद्राशीलस्य किञ्च येषां श्वासानिलानां संस्कारकलाः संस्कारलेशास्तासामनुवर्तनवशात् पुनः पुनरावृत्तिवशात् जलनिधेरम्भसां जलतरङ्गाणां यातायातमद्यापि न विश्राम्यति न स्थिरायति तस्य कमठावृतेरिति योज्यम् । ननु समुद्रक्षोभादेव तत् न संस्कारवशात् तत्राह—वेलानिभेन । वेला क्षोभस्तस्य निभेन व्याजेन । 'वेला काले च सीमायामब्धेः कूलविकारयोः' इति मेदिनी ॥ २ ॥ पुराणानां याः संख्याः तासां संभूतिं समाहारं सङ्कलनमित्यर्थः । भागवतस्य दानं तस्य माहात्म्यं पाठादेश्च माहात्म्यं निबोधत शृणुत । वाच्यं विषयः प्रयोजनं च ॥३॥ ब्राह्मं ब्रह्मपुराणम् । पाद्मं पद्मपुराणम् पञ्चभिः ऊना न्यूना षष्टिः श्लोकसहस्राणां संख्या यत्र तत्तथा । उत्तरपदलोपी समासः । एवमग्रेऽपि ज्ञेयम् । त्रिभिरधिका विंशतिः त्रयोविंशतिः । छान्दसत्वात् विंशतेर्विंदादेशः चतुर्विंशति सहस्राणि क्लैब्यमार्षम् । शैवकं शिवपुराणम् ॥ ४ ॥ दश सहस्राणि अष्टौ सहस्राणि च यत्र श्लोकास्तत् श्रीमद्भागवतमित्यर्थः । मार्कण्डं मार्कण्डेयम्, पृषोदरादिः । वह्नेरिदं वाह्नमग्निपुराणम् । दशभिः

---

१. तिरोधाय प्रविष्टोऽहं श्रीमद्भागवतार्णवम् । इत्युक्तेः

चतुर्दश भविष्यं स्यात्तथा पञ्चशतानि च। दशाष्टौ ब्रह्मवैवर्तं लिङ्गमेकादशैव तु ॥ ६॥
चतुर्विंशति वाराहमेकाशीतिसहस्रकम्। स्कान्दं शतं तथा चैकं वामनं दश कीर्तितम् ॥ ७॥
कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश। एकोनविंशत् सौपर्णं ब्रह्माण्डं द्वादशैव तु ॥ ८॥
एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः। तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ॥ ९॥
इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे। स्थिताय भवभीताय कारुण्यात् सम्प्रकाशितम् ॥१०॥
आदिमध्यावसानेषु वैराग्याख्यानसंयुतम्। हरिलीलाकथाव्राताऽमृतानन्दितसत्सुरम् ॥११॥
सर्ववेदान्तसारं यद् ब्रह्मात्मैकत्वलक्षणम्। वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम् ॥१२॥
प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम्। ददाति यो भागवतं स याति परमां गतिम् ॥१३॥
राजन्ते तावदन्यानि पुराणानि सतां गणे। यावन्न दृश्यते साक्षाच्छ्रीमद्भागवतं परम् ॥१४॥
सर्ववेदान्तसारं हि श्रीभागवतमिष्यते। तद्रसामृततृप्तस्य नान्यत्र स्याद् रतिः क्वचित् ॥१५॥
निम्नगानां यथा गङ्गा देवानामच्युतो यथा। वैष्णवानां यथा शम्भुः पुराणानामिदं तथा ॥१६॥

---

संहिताः पञ्च यत्र तत्तथा पुनश्चत्वारि शतानि यत्र तत्तथा। एवमग्रेऽपि ॥ ५ ॥ भविष्यं भविष्यपुराणं चतुर्दशसहस्राणि पञ्चशतानि च। दशाष्टौ अष्टादशसहस्राणि ॥ ६ ॥ वाराहं वराहपुराणम्। स्कान्दं स्कन्दपुराणं शताधिकमेकाशीतिसहस्रम्। वामनं वामनपुराणं दशसहस्राणि ॥७॥ तत्तु मात्स्यपुराणं तु। सौपर्णं गरुडपुराणम् ॥ ८ ॥ पुराणसन्दोहः पुराणसमूहः। चतुर्लक्षसंख्याको निरूपितः भारतरामायणव्यतिरिक्तेन। तत्र महाभारतं तु इतिहासः रामायणम् ऋषिप्रोक्त काव्यमतस्तयोर्न पुराणत्वशंका कार्या पुराणलक्षणानामपि तत्र समावेशाभावात्। इष्यते निश्चीयते ॥ ९ ॥ भगवता प्रोक्तमिति नामनिर्वचनम्। पूर्वं सर्गारम्भे ॥१०॥ वैराग्यमित्युपलक्षणं भक्तिज्ञानादीनाम्। कथंभूतम् भगवतम्। हरेर्लीलाकथानां यो व्रातः समूहः स एव अमृतं तेन आनन्दिताः सन्तर्पिताः सन्तः भक्ताः सुराश्च येन तत् ॥ ११ ॥ वाच्यप्रयोजने आह-सर्वेति। यत् अद्वितीयं वस्तु तन्निष्ठं तद्विषयकमेतत्पुराणमिति सम्बन्धः। कथंभूतं तत्। सर्ववेदान्तेषु सारभूतं यत् ब्रह्मात्मनो ब्रह्म-जीवयोरेकत्व मंशांशिभावत्वं तदेव लक्षयति बोधयतीति तथा। कैवल्यं मोक्ष एव एकं मुख्यं प्रयोजनं यस्य तत्। तथाभूतम् ॥१२॥ एवं कर्तृतः विषयप्रयोजनाभ्यां चास्य श्रेष्ठत्वं दर्शितम्। दानमाहात्म्यकथनेऽप्यस्य श्रेष्ठत्व-माह प्रौष्ठेति। प्रौष्ठ[1]पद्यां भाद्रपद्याम्। नामैकदेशन्यायेन सिंह पदं सिंहासनं बोधयति। परमा गतिः भगवत्पार्ष-दलक्षणा। समन्वितं तदारूढं सत् ॥१३॥ राजन्ते इति। स्वर्णसिंहासनारूढत्वेनास्य राजत्वमेव दर्शितमिति सन्दर्भः ॥ १४ ॥ अन्यत्र शास्त्रान्तरे। तद्रसः भक्तिरस एव अमृतं तेन तृप्तस्य ॥ १५ ॥ निम्नगानां नदीनां मध्ये। यथा शम्भुःपरमवैष्णवः इति व्यासोक्तिरथापि रामानुजीया मुह्यन्ति न च तत्र विश्वसन्ति तेभ्यः आचार्य-चरणा एव सद्बुद्धि वितरन्तु किं बहुना पिष्टपेषणेन सौहार्दादेव प्रसङ्गवशादेतल्लिखितमस्ति ॥ १६ ॥

---

१. अस्यामेव तिथौ श्रीशुकेन कथा समापिता अत एवात्र दानस्य विशेषमहत्त्वम्। किञ्च यथा शम्भुः परम-वैष्णवस्तथा विष्णुरपि परमशैवः 'हरिस्ते साहस्रमित्युक्तेः।' परस्परनुतिप्रियौ। इत्युक्तेश्च।

**क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा। तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ॥१७॥**
**श्रीमद्भागवतं पुराणममलं यद् वैष्णवानां प्रियं यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते।**
**यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः**
**कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा।**
**योगीन्द्राय तदात्मनाथ भगवद्राताय कारुण्यतस्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि १९**

न विद्यते उत्तमं यस्याः सा अनुत्तमा सर्वोत्तमा। व्रातानां समूहानाम्। हे द्विजा इति शौनकादीनां सम्बोधनम् ।१७। अमलं शुद्धसत्त्वात्मकं भगवद्विग्रहत्वात् अत एव पुराणम् अन्तःकरणशोधकम् विष्णुः देवता अस्येति वैष्णवः[1] देवतान्तरानिन्दकः तेषां वैष्णवानां प्रियम् सास्य देवता इत्यण्। यस्मिन् भागवते एकमद्वितीयं परं ज्ञानं परब्रह्म गीयते। कथंभूतम्। पारमहंस्यम्। परमहंसैः भक्तिसिक्तज्ञाननिष्ठैः प्राप्यम्। यद्वा परमहंसेभ्यो हितं पारमहंस्यम्। यदन्तात्स्वार्थेऽण्! किञ्च यत्र नैष्कर्म्यं कर्मबन्धमोचकत्वसाधनमाविष्कृतम्। तत् तेषां ब्राह्मणां मुपदेशकत्वात् प्रियम् भागवतं विपठन् विशेषेण पठन्। भक्त्या न केवलं शुष्कज्ञानेन। भक्त्या मामभिजानाति भक्त्या कृष्णः पुरः स्थितः इत्युक्तेश्च। विमुच्येत विमुच्यते संसारादिति शेषः। लडर्थे लिङ्। शार्दूलविक्रीडितं छन्दः ॥ १८ ॥ ग्रंथसमाप्तौ ध्यानलक्षणं मङ्गलमाचरति कस्मै इति। येन पुरा कल्पादौ अयं श्रीमद्भागवतरूपः ज्ञानप्रदीपः कस्मै काय ब्रह्मणे विभासितः प्रकाशितः। अतुलः निरुपमः। तद्रूपेण ब्रह्मरूपेण येन नारदाय विभासितः। तद्रूपिणा नारदरूपेण कृष्णाय कृष्णद्वैपायनाय व्यासाय विभासितः। तद्रूपिणा व्यासरूपिणा येन योगीन्द्राय शुकाय विभासितः अथ अनन्तरं तदात्मना शुकरूपेण च येन भगवद्राताय परीक्षिते विभासितः तत् परं सत्यं श्रीनारायणाख्यं तत्त्वं वयं धीमहि ध्यायेम। कथंभूतं तत्त्वम्। शुद्धं शुद्धसत्त्वात्मकम्। विमलम् अविद्यामलनिवर्तकम्। विगतः शोको यस्मात्। तरति शोकमात्मवित् इति श्रुतेः। शोकः शोकोपलक्षितसंसारो वा। अमृत मृत्युभयनिवर्तकम्। 'मृत्युरस्मादपैति' इति दशमोक्तेः गायत्र्येव पूर्वमुपक्रान्ताः तथैवान्ते ताम् उपसंहरन् गायत्र्याख्यब्रह्मविद्यरूपमिद श्रीभागवतमित्यवगन्तव्यम्। जन्माद्यस्येति श्लोकव्याख्यायां ब्रह्म वेदं तेने विस्तृतवान्। अनेन बुद्धिप्रवर्तकत्वेन गायत्र्यर्थो दर्शित इति स्वामिचरणैरुक्तम्। तदर्थस्तु इत्थम्। जन्माद्यस्य इत्यनेन सवितुरित्यस्यार्थः। परमित्यनेन वरेण्यमित्यस्यार्थः। धाम्ना स्वेन इत्यनेन भर्गं इत्यस्यार्थः। स्वराट् इत्यनेन देवस्य इत्यस्यार्थः। तेने ब्रह्महृदा इत्यनेन धियो यो नः प्रचोदयात् इत्यस्यार्थः प्रकटितः। इति विद्वद्भिरूह्नीयम्। प्रतिपदव्याख्यानं तु इत्थम्। तथाहि सत्यमिति तत् इत्यस्य व्याख्यानम्। तत्सत्यमित्या चक्षते इति श्रुते। यतः इति सवितुरित्यस्य। परमिति अभिज्ञ इति वरेण्यमित्यस्य। स्वराट् इति धाम्ना इत्यादि च भर्गं इत्यस्य। अस्येति देवस्येत्यस्य धीमहि इत्यस्य च। हृदेति विभक्तिव्यत्येन धिय इत्यस्य य इत्यस्य च। आदिकवये इति नः इत्यस्य। तेने इति प्रचोदयात् इत्यस्येति यथावत् योजनीयम्।

---

१. वैष्णवोऽत्र स विज्ञेयो यो विष्णोर्मुखमुच्यते।
"ब्राह्मणोऽस्य मुखमिति" श्रुतेर्ब्राह्मण एव सः। इति वैष्णवलक्षणम्। कौशिकी संहिता।

नमस्तस्मै भगवते वासुदेवाय साक्षिणे। यः इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे ॥२०॥
योगीन्द्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे। संसारसर्पदष्टं यो विष्णुरातममूमुचत् ॥२१॥
भवे भवे यथा भक्तिः पादयोस्तव जायते। तथा कुरुष्व देवेश नाथस्त्वं नो यतः प्रभो ॥२२॥
नामसंकीर्तनं यस्य सर्वपापप्रणाशनम्। प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥२३॥

इति श्रीमद्भागवते महापुराणे वैयासिक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां द्वादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

इति द्वादशः स्कन्धः समाप्तः

---

॥ १९ ॥ यो वासुदेवः श्रीनारायणः इदं भागवतं कस्मै काय ब्रह्मणे व्याचचक्षे व्याख्यातवान् ॥ २० ॥ योगीन्द्राय श्रीशुकाय। ब्रह्म रूपयितुं निरूपयितुं शीलमस्येति ब्रह्मरूपी। ताच्छील्ये णिनिः संसारसर्पः कालसर्पः तेन दष्टं भक्षितं विष्णुरातं परीक्षितम् अमूमुचत् मोचयामास। विष्णुना रातः दत्तः प्राणदानेन रक्षितः इत्यर्थः ॥ २१ ॥ सर्वान्ते पुनर्नमति। सर्वाणि पापानि प्रकर्षेण नाशयतीति तथा। दुःखं शमयतीति तथा तं हरिं नमामि ॥ २२ ॥

निराश्रयो भ्रमन्नस्मिन् दुस्तरेऽहमनाश्रये।
आश्रयं सर्वभूतानां स्वाश्रयं तमुपाश्रये ॥ १ ॥

यत्कृपालवलेशेन श्रीमद्भागवतार्णवम्।
अतरं तमहं वन्दे नरनारायणं हरिम् ॥ २ ॥

श्रीराममूर्तिविदुषा महता श्रमेण
पौराणिकेन गुरुलब्धधिया कृतेयम्।
खण्डान्वयार्थ-पदसंगति-भाव — पूर्णा
टीका समाप्तिमगमद्धरितुष्टयेऽस्तु ॥ ३ ॥

वदायूं देशवास्तव्यो वसन् काश्यामनारतम्।
सनाढ्यवंशजो धीमानाशिषं कामये सताम् ॥ ४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे पण्डितप्रवरश्रीराममूर्तिशास्त्रि पौराणिकविरचितायां गूढार्थदीपिन्यां त्रयोदशोऽध्यायः ॥

समाप्तोऽयं द्वादशस्कन्धः
समाप्तमिदं श्रीमद्भागवतम्

हरिः ॐ तत्सत्

श्रीकृष्णार्पणमस्तु।

# श्रीमद्भागवत-महत्त्वम्

राधाभक्तिर्हरेर्ज्ञानं ताभ्यां या च समन्विता ।
तां श्रीभागवतीं गाथां वन्दे युगलरूपिणीम् ।।

पाद्मब्राह्मगृहीतचामरयुगो वाराहसंवीजितो ।
ब्रह्माण्डेन धृतातपत्रमुदितः स्कन्धादिभिः संस्तुतः ।।
श्रीमान् वैष्णवसेवकानुगमनः सर्वेप्सितार्थप्रदः ।
श्रीमद्भागवताभिधो विजयते सम्राट् पुराणप्रभुः ।।

श्रीमद्भागवतं साक्षाद्धरेर्वाङ्मयविग्रहः ।
प्रत्यङ्गं तस्य तत्स्कन्धैः क्रमेणात्र निरूप्यते ।।
पादादिजानुपर्यन्तं प्रथमस्कन्ध ईरितः ।
तदूर्ध्वं कटिपर्यन्तं द्वितीयस्कन्ध उच्यते ।। १ ।।
तृतीयो नाभिरित्युक्तश्चतुर्थ उदरं मतम् ।
पञ्चमो हृदयं प्रोक्तं षष्ठः कण्ठः सबाहुकः ।। २ ।।
सर्वलक्षणसंयुक्तं सप्तमो मुखमुच्यते ।
अष्टमश्चक्षुषी विष्णोः कपोलौ भ्रुकुटिः परः ।। ३ ।।
दशमो ब्रह्मरन्धं च मन एकादशः स्मृतः ।
आत्मा[1] तु द्वादशः स्कन्धः श्रीकृष्णस्य प्रकीर्तितः ।। ४ ।।

मनुजदेहमवाप्य सुदुर्लभं यदि न भागवते सुरुचिः कृता ।
भवति तस्य हि जन्म निरर्थकं पुनरयं न सुयोनिमवाप्नुयात् ।।
भगवता कृपया निजलब्धये कृतमिदं भुवि मानवजन्म यत् ।
तदविचिन्त्य नरान् विषयोन्मुखान् रतान् कलिरयं निरयं प्रति नेष्यति ।।
इति धिया सुविविच्य पदे पदे निखिलदृश्यमिदं क्षणभङ्गुरम् ।
शृणुत भागवतं भुवि मुक्तिदं पठत पाठयतार्थपुरःसरम् ।।

## मदीय-प्रार्थना

त्वमंशी भवदंशोऽहं मायया च वियोजितः । तां निवार्य दयासिन्धो जीवनं सार्थकं कुरु ।।१।।
अंशांशिनोरयं नाथ संबन्धः सार्वकालिकः । न कदाप्यन्यथाकर्तुं कोऽपि शक्नोति मानवः ।।२।।

---

१. एषामवयवानां निरूपणे कस्येमे इति जिज्ञासायां श्रीविग्रह एव आयाति । अतएव आत्मपदेन श्रीविग्रहो गृह्यते ।



श्रीकृष्णार्पणमस्तु

अंशादंशी भवेद्योगादंशोऽस्यास्तीति विग्रहात् ।
हित्वा तमंशिनः सत्ता कथं स्यादिति चिन्त्यताम् ॥३॥

ममैवांशस्त्वयैवोक्तं तत्कथं समुपेक्षसे ।
ब्रह्म सत्यं जगन्मिथ्या वागियं न मृषा भवेत् ॥४॥

किं करोमि क्व गच्छामि रक्षितुं कोऽपि न क्षमः ।
कालसर्पभयाद्भीतं रक्ष मां शरणागतम् ॥५॥
शरणागतपरित्यागे महान् दोषो निरूपितः ।
मुञ्चस्यथापि मामीश वच्म्यहं किमतः परम् ॥६॥
त्वन्नाम केवलं नित्यं जपन् सन् मङ्गलायनम् ।
भ्रमन् क्लिश्यन् वियोगात्ते जीवनं यापयाम्यहम् ॥७॥
अथवा किं बहूक्तेन प्रलापेन भवेत् प्रभो ।
स्वामी त्वं सेवकोऽहं ते रक्ष मां त्यज वा स्वयम् ॥८॥



॥ श्रीः ॥

# ॥ सप्ताहपूजनपद्धतिः ॥

लक्ष्मीनारायणं ध्यात्वा वाग्देवीं सद्गुरुं हृदि ।
क्रियते देवपूजार्थं मया सप्ताहपद्धतिः ॥

आचार्यवंशीधर[1]शर्मणा प्राक् साप्ताहिकः सङ्कलितो विधिर्यः ।
तत्सारमादाय विनिर्मितेयं प्रामाणिकी पूजनपद्धतिः सा ॥
ध्यायन्तु शृण्वन्तु पठन्तु सर्वे प्रचारयन्तश्च मिथो वदन्तु ।
अनुत्तमा पद्धतिरर्चनार्थं ग्राह्या सदा वैदिककर्मविज्ञैः ।

अथ शुभे मासि कथाश्रवणदिनात्प्राक् श्री गुरुं पुराणश्च भगवन्नामकीर्तन-वाद्यघोषपुरस्सरं नगरवासिभिः सुवासिनीभिश्च मङ्गलकलशैः सह गजाश्वरथशिविकोपरि समारोप्य मण्डपे नीत्वा पादप्रक्षालनं कृत्वा सुभासने उपवेशयेत् ।

ततः—प्रथमदिवसे सपत्नीको यजमानः प्रायश्चित्तं कुर्यात् । यथा—

ॐ विष्णुः ३ अद्येत्यादि देशकालौ संकीर्त्यामुकगोत्रः अमुकशर्मा ( वर्मा० गुप्तोऽहं वा ) सपत्नीकोऽहं ममेह जन्मनि जन्मान्तरे वा अद्यावधि ज्ञाताज्ञातकामाकामसकृदसकृत् कायिक-वाचिक-मानसिक-सांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातक-गुरु-लघु-स्थूल-सूक्ष्म-पातक, संकलनीकरण-मलिनीकरण-अपात्रीकरण-जातिभ्रंशकर प्रकीर्णपातकानां मध्ये सम्भावितानामेतत्कालपर्यन्तं सकलसञ्चितानां सर्वेषां पापानां परिहार-पूर्वकं श्रीमदनादिपुरुषश्रीकृष्णप्रीतिद्वारा श्रुतिस्मृतिपुराणागमोक्तमोक्षलक्षणनारायणोपासनादिभक्तिफलावाप्तये तथा चास्मत्कुलपूर्वजातानां प्राप्ताप्राप्तशुभगतीनां श्रीवैकुण्ठपदप्राप्तये स्वस्य चान्ते श्रीविष्णुदेवताप्रीत्यर्थम् अन्यत्कामनया वा श्रीमद्भागवतसप्ताहकथाश्रवणाधिकारप्राप्त्यर्थं स्वशरीरसंशुद्ध्यर्थं च द्वादशाब्दं, षडब्दं, त्र्यब्दं वा सर्वप्रायश्चित्तमहं करिष्ये । तदङ्गत्वेन इदं हस्तोपस्थितगोवृषनिष्क्रयीभूतं द्रव्यं नानागोत्रोत्पन्नेभ्यो ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे । इति संकल्प्य पंचगव्यं पिबेत्—

यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ।
प्राशनात्पञ्चगव्यस्य दहत्यग्निरिवेन्धनम् ॥

इति पञ्चगव्यं प्राश्य, आचम्य, गोद्रव्येभ्यो नमः इत्यनेन सर्वोपचारैः सम्पूज्य, हस्तौ सम्पुटीकृत्य प्रार्थयेत् ।

गावो ममाऽग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥

---

१. श्रीमद्भागवतस्य प्रसिद्धटीकाकर्ता ।

यज्ञसाधनभूताया विश्वस्याघौघनाशिनी ।
विश्वरूपधरो देवः प्रीयतामनया गवा ।।

इति सम्प्रार्थ्य हस्ते जलं गृहीत्वा अनेन कर्मणा पापापहारी महाविष्णुः प्रीयताम् न मम ।

।। इति प्रायश्चित्तम् ।।

ततो—यजमानः हस्तपादौ प्रक्षाल्य शुभमुहूर्त्ते रङ्गबलिकादिविभूषिते शुभासने प्राङ्मुख-उत्तरमुखो वा उपविश्य स्वपत्नीं स्वदक्षिणभागे कम्बलाद्यासने चोपवेश्य आचार्याज्ञया रक्षादीपं प्रज्ज्वाल्य यज्ञोपवीताधिकारी नूतनशुद्धसंस्कृतयज्ञोपवीतधारणं कुर्यात्ततः आचार्यो दम्पत्यो-रुत्तरीयवस्त्रस्यान्ते ग्रन्थिबन्धनं कुर्यात्—

ॐ यदा बध्नन्दाक्षायणा हिरण्य६ꣳ शतानीकाय सुमनस्यमानाः ।
तन्मऽआबध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ।।
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ।।

इत्यनेन सफलाक्षतपुष्पद्रव्याणि चादाय ग्रन्थिबन्धनं कृत्वा मङ्गलतिलकं कुर्यात् । यथा—
ॐ स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।

ततः—ॐ केशवाय नमः । ॐ नारायणाय नमः । ॐ माधवाय नमः । इति त्रिराचम्य । ॐ गोविन्दाय नमः इति हस्तौ प्रक्षाल्य, पवित्रधारणं कुर्यात्—

ॐ पवित्रेस्थोव्वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ।
तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ।।

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ।।

इत्यनेन गङ्गोदकेन शुद्धजलेन वा दक्षहस्तेन कुशैः आत्मानं पूजासम्भारांश्च सम्प्रोक्ष्य आसनशुद्धिं कुर्यात् तस्य विनियोगः ।

ॐ पृथ्वीति मन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसने विनियोगः ।
इत्यनेन विनियोगं कृत्वा हस्तौ सम्पुटीकृत्य भूमिं प्रार्थयेत्—

ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।

अथ शिखाबन्धनम्—

ॐ चिद्रूपिणि महामाये दिव्यतेजःसमन्विते ।
तिष्ठ देवि शिखामध्ये तेजोवृद्धिं कुरुष्व मे ।।

अथ भैरवप्रार्थना—

ॐ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ।।

इत्यनेन भैरवं सम्प्रार्थ्य पुष्पाक्षतादीनि च समर्प्य तं नमस्कुर्यात् ।

अथ विष्णुध्यानम्—

ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः।
केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥
सशङ्खचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम्।
सहारवक्षःस्थलकौस्तुभश्रियं नमामि विष्णुं शिरसा चतुर्भुजम्॥
॥ इति ध्यायेत्॥

ततः सपत्नीको यजमानस्तथाऽऽचार्यश्च ब्राह्मणैः सह हस्ते कुंकुमार्चितसाक्षतपुष्पाणि गृहीत्वा सर्वे मिलित्वैव स्वस्त्ययनमन्त्रान् पठेयुः (स्वयं वाचनाशक्तौ आचार्यान्यऋत्विक् ब्राह्मणद्वारा क्रियमाणं स्वस्तिवाचनं बद्धाञ्जलिः सन् यजमानः शृणुयात्)।

अथ स्वस्तिवाचनम्—

ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासोऽअपरीतासऽउद्भिदः।
देवा नो यथा सदमिद्वृधेऽअसन्नप्रायुवो रक्षितारो दिवेदिवे॥१॥

देवानां भद्रा सुमतिर्ऋजूयतान्देवानां ँ रातिरभिनो निवर्त्तताम्।
देवाना ँ सख्यमुपसेदिमा वयन्देवानऽ आयुः प्रतिरन्तु जीवसे॥२॥

तान्पूर्व्वया निविदा हूमहे वयं भगम्मित्रमदितिन्दक्षमस्रिधम्।
अर्य्यमणं वरुण ँ सोममश्विना सरस्वती नः सुभगा मयस्करत्॥३॥

तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः।
तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतन्धिष्ण्या युवम्॥४॥

तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम्।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥५॥

स्वस्ति नऽ इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥६॥

पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः।
अग्निजिह्वा मनवः सूरचक्षसो विश्वेनो देवाऽअवसागमन्निह॥७॥

भद्रङ्कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवा ँ सस्तनूभिर्व्यशेमहि देवहितं यदायुः॥८॥

शतमिन्नु शरदोऽअन्ति देवा यत्रानश्चक्रा जरसन्तनूनाम्।
पुत्रासो यत्र पितरो भवन्ति मानो मद्ध्यारीरिषतायुर्गन्तोः॥९॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता स पिता स पुत्रः।
विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम्॥१०॥

द्यौः शान्तिरन्तरिक्ष ँ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः।
वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व्व ँ शान्तिः शान्तिरेव

शान्तिः सामा शान्तिरेधि ॥११॥ यतो यतः समीहसे ततो नोऽभयं कुरु ।
शन्नः कुरुप्रजाभ्योऽभयन्नः पशुभ्यः ॥१२॥ ॐ सुशान्तिर्भवतु ॥

ॐसुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बिके गौरि नारायणि नमोऽस्तु ते ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥

तदेव लग्नं सुदिनं तदेव, ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव, लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥
अनन्यांश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥
स्मृते सकलकल्याणं भाजनं यत्र जायते । पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥
सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥
विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम् । वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥
वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ । निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥
विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरम् । सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥

ॐ लक्ष्मीनारायणाभ्यां नमः । ॐ उमामहेश्वराभ्यां नमः ।
ॐ वाणीहिरण्यगर्भाभ्यां नमः । ॐ शचीपुरन्दराभ्यां नमः ।
ॐ मातापितृचरणकमलेभ्यो नमः । ॐ इष्टदेवताभ्यो नमः ।
ॐ कुलदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो नमः ।
ॐ वास्तुदेवताभ्यो नमः । ॐ स्थानदेवताभ्यो नमः ।
ॐ सर्वेभ्यो देवेभ्यो नमः । ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः ।

इति सम्प्रार्थ्य ॐ सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः । इति प्रणम्य दूर्वाक्षत पुष्पाणि श्रीगणपतिसमीपे संस्थाप्य दक्षिणहस्ते पुष्पाक्षतजलद्रव्याणि चादाय प्रतिज्ञासंकल्पं कुर्यात्—

अथ प्रतिज्ञासङ्कल्पः—

ॐ विष्णुः ३ अद्येत्यादिदेशकालौ संकीर्त्यामुकगोत्रः अमुकशर्मा ( वर्मा० गुप्तोऽहं वा ) सपत्नीकोऽहं अतीतानेकजन्मार्जिताखिलदुष्कृतनिवृत्तिपुरस्सरैहिकाध्यात्मिकादत्रिविधतापकायिकादित्रिविधपापापनोदार्थं दशाश्वमेधयज्ञजन्यपुण्यसम्यगिष्टराजसूययज्ञसहस्त्रपुण्यसमपुण्यचन्द्रसूर्यग्रहणकालिकबहुब्राह्मणसंप्रदानकसर्वसस्यपूर्णसर्वरत्नोपशोभितमहीदानपुण्यप्राप्तये तथा च चतुर्विधपापक्षयपूर्वकंदीर्घायुरारोग्यैश्वर्याद्यनवच्छिन्नसन्ततिलाभार्थं च स्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टपुण्यफलप्राप्त्यर्थं तथा नवग्रहजनितसकलबाधानिरसनपूर्वकं व्यापारे उतरोत्तरलाभार्थञ्च नित्यकल्याणप्राप्तिपुरस्सममुत्र वैकुण्ठलोकप्राप्तये श्रुतिस्मृतिपुराणोक्तफलप्राप्तिपूर्वकचतुर्विधपुरुषार्थसिद्ध्यर्थं तथा च समस्तपितॄणामुद्धारार्थममुकगोत्रामुकप्रवरामुकशर्मब्राह्मणवदनारविन्दाच्छ्रीकृष्णवाङ्मयमूर्तिभूतस्य साक्षाद्भगवद्रूपस्य श्रीगोविन्दप्रीत्याविर्भूतस्य सर्वविधकामनापूरकस्य श्रीमद्भागवतस्य साप्ताहिकश्रवणविधिना अद्यारभ्य सप्तदिनपर्यन्तं यथासम्भवदिनैर्वा सप्ताहकथाश्रवणमहं करिष्ये ।

तदङ्गत्वेन स्वस्तिवाचनं, पुण्याहवाचनं, षोडशमातृकासप्तघृतमातृकाणां पूजनम् आयुष्यमन्त्रजपं साङ्कल्पिकेन विधिना नान्दीश्राद्धं आचार्यादीनि वरणानि, च करिष्ये तत्रादौ निर्विघ्नतासंसिद्धये गणेशाम्बिकयोः यथालब्धोपचारैः पूजनञ्च करिष्ये ।

---

१— पूर्वजसंबंधिनादिसद्गतीच्छया तु—

स्वीयानन्तदुष्कृतपरिपाकवशात्तनानाविधदुःखक्षेत्रयोनीनां पितॄणामन्यस्य वा कस्यचित्प्रेतत्वनिवृत्तिपूर्वकस्वर्गादिलोकप्राप्तिकाम इति पठेत् ।

२— सन्ततीच्छया तु—

अतीतानन्तजन्मसम्पादितदुष्कृतपरिपाकवशप्राप्तजन्मांगक्रूरग्रहसूचितपत्नीबन्ध्यात्वकाकबन्ध्यात्वमृतवत्सात्वस्रवद्गर्भत्वादिरूपसन्ततिप्रतिबन्धकदोषनिवृत्तिकाम इति पठेत् ॥

३ - रुग्णतानिवृत्यर्थम्—

प्राग्जन्मकृतब्रह्महत्यादिपातकोपलब्धराजयक्ष्मादिरोगनिवृत्तिकाम इति पठेत् ।

४—ग्रहाद्यरिष्टत्वे—

जन्मपत्राद्यनुरोधेन वर्षमासदिनविचारवशेन दशाविदशोपदशासु विषमस्थानस्थग्रहजन्यदुष्टफलदूरीकरणपूर्वकशुभस्थानस्थ ग्रहजन्यसत्फलावाप्तिकाम इति पठेत् ।

# अथ गणेशाम्बिकापूजनम्

अथ ध्यानम्—

उमामहेशाऽङ्क-विभूषणाख्यं गजाननं मूषक-वाहनं त्वाम्।
रक्तोज्ज्वलं दिव्यपटं दधानं, सदा गणेशं हृदि चिन्तयामि ॥

अथ गणेशावाहनम्—

आराध्यमानोऽसि सदा प्रयत्नैः सन्तोष्यमाणो बहुधा च देवः।
तथापि तेऽहं मम चाऽसि त्वं भो ! आवाहये त्वामत एव दीनः ॥

ॐ गणानान्त्वा गणपति ꣳ हवामहे प्रियाणान्त्वा प्रियपति ꣳ हवामहे निधीनान्त्वा निधिपति ꣳ हवामहे व्वसो मम ॥
आहमजानि गर्ब्भधमात्त्वमजासि गर्ब्भधम् ॥

ॐ भूर्भुवः स्वः श्रीमहागणपतये नमः गणपतिम् आवाहयामि स्थापयामि।

अथ अम्बिकावाहनम्—

ॐ हेमाद्रितनयां देवीं वरदां भैरवप्रियाम्।
लम्बोदरस्य जननीं गौरीमावाहयाम्यहम् ॥
ॐ अम्बेऽअम्बिकेऽम्बालिके न मानयति कश्चन।
ससस्त्यश्वकः सुभद्रिकाम्कां पीलवासिनीम् ॥

ॐ भूर्भुवः स्वः श्रीअम्बिकायै नमः अम्बिकामावाहयामि स्थापयामि।

प्रतिष्ठा—

ॐ मनोजूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टं यज्ञ ꣳ समिमन्दधातु।
व्विश्वेदेवा सऽइहमादयन्तामोँ ॥२॥ प्रतिष्ठ ॥

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च।
अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥

गणेशाम्बिके सुप्रतिष्ठिते वरदे भवेताम्।

आसनम्—

गृहं त्वदीयं सफलं त्वदीयमहं त्वदीयस्तव चासनं वै।
स्वीकृत्य देवाऽनुगृहाण दासं त्वदर्थमेवाद्य सुसज्जितं यत् ॥

ॐ पुरुषऽएवेद ꣳ सर्व्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः आसनार्थे अक्षतान् दूर्वाङ्कुरांश्च च समर्पयामि।

पाद्यम्—

त्वया गृहीतं सुर-संघ-दत्तं पाद्यं पवित्रं बहुधाऽद्य यावत् ।
परं न देवेश ! कुतोऽपि लब्धं मोदाश्रुभिर्दुष्टमतो गृहाण ॥

ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोस्य व्विश्वा भूतानि त्रिपादस्यामृतन्दिवि ॥

ॐ भू० गणे० पादयोः पाद्यं समर्पयामि ।

अर्घ्यम्—

मूढोऽस्मि जानामि न चार्घ्यदानं परं न चित्तं मयि तेऽर्घ्यदाने ।
यतो हि त्वं दीन-जनानुकम्पी, गृहाण श्रद्धार्पितमेव देव ॥
ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ।
ततोव्विष्ष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥

ॐ भू० गणे० हस्तयोरर्घ्यं समर्पयामि ।

आचमनम् —

श्रीमन् । गृहाणाचमनीयमेतं मयार्पितं देव ! विसर्पिसन्धम् ।
तवोचितं नास्ति गणेश ! जाने तथापि श्रद्धा-रसपरितं मे ॥
ॐ ततोव्विराडजायतव्विराजोऽअधिपूरुषः ।
सजातोऽअत्यरिच्च्यत पश्चाद्भूमिमथोपुरः ॥

ॐ भू० गणे० अर्घाङ्गमाचमनीयं जलं समर्पयामि ।

स्नानम्—

देवेश ! लम्बोदर ! शुद्धमेतत् तीर्थोदकं यत्नतयार्ऽजितं मे ।
स्नानं कुरु त्वं सफलो यथा स्याच्छ्रमो मदीयः करुणालवात्ते ॥
ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् ।
पशूँस्ताँश्चक्रे व्वायव्व्यानारण्ण्याग्ग्राम्म्याश्चये ।

ॐ भू० गणे० स्नानीयं जलं समर्पयामि स्नानान्ते आचमनीयं जलं समर्पयामि ।

पञ्चामृतस्नानम्—

पंचामृतं मयाऽऽनीतं पयो दधि घृतं मधु ।
शर्करा च समायुक्तं स्नानार्थं प्रतिगृह्यताम् ॥
ॐ पञ्चनद्यः सरस्वतीमपि यन्ति सस्त्रोतसः ।
सरस्वती तु पञ्चधासो देशेऽभवत्सरित् ॥

ॐ भू० गणे० पंचामृतस्नानं समर्पयामि ।

शुद्धोदकस्नानम्—

कावेरी नर्मदा वेणी तुङ्गभद्रा सरस्वती ।
गंगा च यमुना तोयं मया स्नानार्थमर्पितम् ॥

ॐ आपोहिष्ठामयो भुवस्तानऽऊर्ज्जे दधातन । महेरणाय चक्षसे ॥

ॐ भू० गणे० शुद्धोदकस्नानं सम० तदन्ते आचमनीयं जलं समर्पयामि ।

वस्त्रम्--

युवा सुवासाः परिवीतऽआगात्स उश्रेयान् भवति जायमानः ।
तन्धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥

ऊँ सुजातोज्योतिषासहशर्म्मव्वरूथमासदत्स्वः ।
व्वासोऽअग्ने व्विश्वरूप६ंसंव्ययस्वव्विभावसो ॥

ॐ भू० गणे० वस्त्रं सम० तदन्ते आचमनीयं जलं समर्पयामि ।

यज्ञोपवीतम्—

नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।
उपवीतं मया दत्तं गृहाण परमेश्वर ॥

ॐ यज्ञो देवानां प्रत्येति सुम्म्नमादित्यासो भवता मृडयन्तः ।
आ वोऽर्वाची सुमतिर्व्ववृत्त्याद ६० होश्चिद्या व्वरिवोवित्तरासत् ॥

ॐ भू० गणपतये नमः यज्ञोपवीतं समर्पयामि तदन्ते आचमनीयं जलं समर्पयामि ।

उपवस्त्रम्

शीतवातोष्णसन्त्राणं लज्जाया रक्षणं परम् ।
देहालङ्करणं वस्त्रंमतः शान्ति प्रयच्छ मे ॥

ॐ भू० गणे० उपवस्त्रार्थे माङ्गलिकसूत्रं समर्पयामि तदन्ते आचमनीयं जलं समर्पयामि ।

गन्धम्—

श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥

ॐ त्वां गन्धर्व्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ।
त्वामोषधेसोमो राजा व्विद्वान्यक्ष्मादमुच्यत ॥

ॐ भू० गणे० गन्धानुलेपनं समर्पयामि ।

अक्षतान्—

अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः ।
मया निवेदिता भक्त्या गृहाण गणनायक ॥

ॐ अक्षन्नमीमदन्तह्यवऽप्रियाऽअधूषत ।
अस्तोषतस्वभानवोव्विप्रानविष्ठयामतीयोजान्विन्द्रते हरी ॥

ॐ भू० गणे० अक्षतान् समर्पयामि ।

पुष्पाणि ( मालाश्च )—

माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयाऽऽहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥

ॐ ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वाऽइवसजित्वरीर्व्वीरुधः पारयिष्णवः ॥

ॐ भू० गणे० पुष्पाणि पुष्पमालाञ्च समर्पयामि ।

दूर्वाङ्कुरान्—

दूर्वाङ्कुरान्सुहरितानमृतान्मङ्गलप्रदान् ।
आनीतांस्तव पूजार्थं गृहाण गणनायक ॥
ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।
एवानो दूर्व्वे प्रतनु सहस्रेण शतेन च ॥

ॐ भू० गणपतये नमः दूर्वाङ्कुरान्समर्पयामि ।

नानापरिमलद्रव्याणि—

नानापरिमलैर्द्रव्यैर्निर्मितं चूर्णमुत्तमम् ।
अबीरनामकं चूर्णं गन्धं चारु प्रगृह्यताम् ॥
ॐ अहिरिव भोगैः पर्य्येतिबाहुं ज्यायाहेतिं परिबाधमानः ।
हस्तघ्नोव्विश्वाव्वयुनानिव्विद्वान्पुमान्पुमा ॐ सं परिपातु व्विश्वतः ॥

ॐ भू० गणे० नानापरिमलद्रव्याणि समर्पयामि ।

सिन्दूरम्—

सिन्दूरं शोभणं रक्तं सौभाग्यं सुखवर्द्धनम् ।
शुभदं कामदं चैव सिन्दूरं प्रतिगृह्यताम् ॥
ॐ सिन्धोरिवप्राद्ध्वने शूघनासोव्वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धाराऽअरुषोनव्वाजी काष्ठाभिन्दन्नूर्म्मिभिः पिन्वमानः ॥
ॐ भू० गणे० सिन्दूरं समर्पयामि ।

नैवेद्यं पुरतः संस्थाप्य धूपम्—

निजास्य-निश्वास-सुगन्ध-बधुं दिव्यं सुरम्यं किल धूप-जालम् ।
भक्त्या समाराधनमानसेन मयार्ऽपितं स्वीकुरु देवदेव ॥
ॐ धूरसि धूर्व्व धूर्व्वन्तं धूर्व्वतंय्योस्मान्धूर्व्वति तं धूर्व्वयं व्वयं धूर्व्वामः ।
देवानामसि व्वह्नितम ६० सस्नितमं पप्रितमं जुष्टतमन्देव हूतमम् ॥

ॐ भू० गणे० धूपमाघ्रापयामि ।

दीपम्—

दयानिधे ! भास्कर-दीप दर्शनं पुरस्तवेयं किल दीप-मालिका ।
तथापि चाशा मम मानसे विभो ! निराशतां नेयमुरीकरोत्यहो ॥
ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा ।
अग्निर्व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्यो व्वर्च्चो ज्योतिर्वर्च्चः स्वाहा ॥
ज्योतिः सर्यः सूर्य्यो ज्योतिः स्वाहा ॥

ॐ भ० गणे० प्रत्यक्षदीपं दर्शयामि हस्तौ प्रक्षाल्य ।

नैवेद्यम्--

मन्त्वातिदिव्यं परिपाक-सिद्धं नैवेद्यमेतत् किल विघ्न-नाशिन् ।
भक्त्योपनीतं पुरतो मया ते गृहाण देवेश ! दयां कुरुष्व ।।

ॐ नाभ्याऽआसीदन्तरिक्ष ६० शीर्ष्णोद्यौः समवर्त्तत ।
पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथा लोकाँ२ ऽअकल्पयन् ।।

ॐ भू० गणे० नैवेद्यं निवेदयामि। नैवेद्यान्ते ध्यानं ध्यानान्ते आचमनीयं जलं समर्पयामि । मध्ये पानीयं जलं सम० । उत्तरापोशनं सम० । हस्तप्रक्षालनार्थे मुखप्रक्षालनार्थे च जलं समर्पयामि ।।

करोद्वर्त्तनम्—

चन्दनं मलयोद्भूतं कस्तूर्यादिसमन्वितम् ।
करोद्वर्तनकं देव गृहाण परमेश्वर ।।
ॐ अ ६० शुना ते अ६० शुः पृच्यतां परुषा परुः ।
गन्धस्ते सोममवतुमदाय रसोऽअच्युतः ।।

ॐ भू० गणे० करोद्वर्त्तनार्थे गन्धं समर्पयामि ।।

फलानि—

फलेन फलितं सर्वं त्रैलोक्यं सचराचरम् ।
तस्मात्फलप्रदानेन पूर्णाः सन्तु मनोरथाः ।।
ॐ याः फलिनीर्य्याऽअफलाऽअपुष्पायाश्च पुष्पिणीः ।
बृहस्पतिप्प्रसूतास्तानो मुञ्चन्त्व ६० हसः ।।

ॐ भू० गणे० ऋतुकालोद्भवानि फलानि समर्पयामि ।।

ताम्बूलम्—

एला-लवङ्ग-क्रमुकादि-युक्तं हे विश्व-सन्ताप-विनाशकारिन् ।
ताम्बूलमेतन्मम भक्ति-युक्तं गृहाण देवेश ! निवेदितं मे ।।

ॐ यत्पुरुषेण हविषादेवा यज्ञमतन्वत ।
व्वसन्तोस्यासीदाज्यङ् ग्रीष्मऽइध्मः शरद्धविः ।।

ॐ भू० गणे० मुखशुद्ध्यर्थं ताम्बूलपूगीफलम् एलालवङ्गादिकं च समर्पयामि ।।

दक्षिणाद्रव्यम्—

सर्वं त्वदीयं मम नास्ति किञ्चिद् ददामि किं ते वद दक्षिणायाम् ।
तथापि देवेश ! मयार्पितं त्वं स्वकीयमेवाद्य गृहाण नाथ ।।

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
सदाधार पृथिवीन्द्या मुतेमां कस्मै देवाय हविषा व्विधेम ।।

ॐ भू० गणे० कृतायाः पूजायाः साद्गुण्यार्थे द्रव्यदक्षिणां समर्पयामि ।।

कर्पूरनीराजनम्—

दयानिधिं वेत्ति न को जगत्यां लम्बोदरं त्वां वद दीनबन्धो ।
अजानताऽर्चासरणीं ममाऽपि नीराजनाऽतः किल कल्प्यते ते ॥
ॐ इद ँ हविः प्प्रजननम्मेऽअस्तु दशव्वीर ँ सर्व्वगण ꣳ स्वस्तये
आत्मसनि प्प्रजासनि पशुसनि लोकसन्य भयसनि
अग्निः प्प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतोऽअस्म्मासु धत्त ।

ॐ भू० गणे० कर्पूरनीराजनं समर्पयामि ।

प्रदक्षिणा —

पुनाति विश्वं हि परिक्रमा ते सुरासुरैरर्चित-पाद-पद्म ।
अतो दयानाथ ! यथाविधं तां करोमि भक्त्या नतमस्तकोऽहम् ॥
ॐ येतीर्थानि प्प्रचरन्तिसृकाहस्ता निषङ्गिणः ।
तेषाँ ७ सहस्रयोजनेवधन्वानि तन्मसि ॥

ॐ भू० गणे० प्रदक्षिणां समर्पयामि ।

पुष्पाञ्जलिम्—

पुष्पाञ्जलिं नाथ समर्पयामि गृहाण देवेश ! जगन्निवास !!
समर्पितं त्वं किल भक्तिपूर्वं जहासि नो नाथ ! गणेश जाने ॥
ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ।
ते ह नाकम्महिमानः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ॥

ॐ भू० गणे० मन्त्रपुष्पाञ्जलिं समर्पयामि ॥

अथ विशेषार्घ्यः—

( मृण्मयादिपात्रे अथवा अन्यपात्रे जलगन्धपुष्पदूर्वादिद्रव्यं प्रक्षिप्य हस्ताभ्यां गृहीत्वा श्लोकान् पठित्वा विशेषार्घ्यं दद्यात् ) यथा —

ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ।
भक्तानामभयं कर्त्ता त्राता भव भवार्णवात् ॥
द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो ।
वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥
अनेन सफलार्घ्येण सफलोऽस्तु सदा मम ।

ॐ भू० श्री महागणपतये नमः विशेषार्घ्यं समर्पयामि ।

आचार्यः यजमानहस्ते पुष्पाणि दत्वा यजमानः पुष्पाणि गृहीत्वा हस्तौ सम्पुटीकृत्य गणपतिं प्रार्थयेत् ।

अथ प्रार्थना—

ॐ विघ्नेश्वराय वरदाय सुरप्रियाय
लम्बोदराय सकलाय जगद्धिताय ।
नागाननाय श्रुतियज्ञविभूषिताय
गौरीसुताय गणनाथ नमो नमस्ते ।।
भक्तार्तिनाशनपराय गणेश्वराय
सर्वेश्वराय शुभदाय सुरेश्वराय ।
विद्याधराय विकटाय च वामनाय
भक्तप्रसन्न फलदाय नमो नमस्ते ।।

नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमस्ते रुद्ररूपाय करिरूपाय ते नमः ।।
विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे । भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ।।
लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।
त्वां विघ्नशत्रुदलनेति च सुन्दरेति, भक्तप्रियेति सुखदेति फलप्रदेति ।
विद्याप्रदेत्यघहरेति च ये स्तुवन्ति, तेभ्यो गणेश वरदो भवनित्यमेव ।।
गणेश पूजने कर्म यन्न्यूनमधिकं कृतम् । तेन सर्वेण सर्वात्मा प्रसन्नोऽस्तु सदामम ।

अथ यजमानः जलं गृहीत्वा अनया पूजया गणेशाम्बिके प्रियेतां न मम । इति जलं प्रक्षिपेत् ।

।। इति गणेशाम्बिकापूजनम् ।।

## ॥ अथ कलशस्थापनविधिः ॥

ॐ महीद्यौः पृथिवीचनऽइमंयज्ञं मिमिक्षताम्। पिपृताम्नोभरीमभिः ॥

इति कर्त्तादक्षिणहस्तेन भूमिं स्पृशेत्।

ॐ धान्यमसि धिनु हि देवान् प्राणायत्वोदानायत्वा व्यानायत्वा। दीर्घामनु प्रसितिमायुषेधान्देवोवः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषेत्वा महीनां पयोऽसि ॥

इति कलशस्थापनस्य स्थाने सप्तधान्यं विकरेत्।

ॐ आजिघ्रकलशंमह्यात्वा विशन्त्विन्दवः पुनरूर्ज्जा निवर्त्तस्वसानः सहस्त्रं धुक्ष्वोरुधारापयस्वतीपुनर्म्मा विशताद्रयिः ॥

इति तत्र सुसज्जितं कलशं संस्थापयेत्।

ॐ वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्ज्जनीस्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥

इति तस्मिन् कलशे जलं पूरयेत्।

ॐ त्वां गन्धर्व्वाऽअखनँस्त्वामिन्द्रिस्त्वाँ बृहस्पतिः। त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥

इति कलशे गन्धं प्रक्षिपेत्।

ॐ याऽओषधीः पूर्व्वा जातादेवेभ्यस्त्रियुगम्पुरा। मनै नुबभ्रूणामहꣳशतंधामानि सप्त च ॥

इति कलशे सर्वौषधीः निक्षिपेत्।

ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवानो दूर्व्वे प्रतनु सहस्त्रेण शतेन च।

इति कलशे दूर्वाः प्रक्षिपेत्।

ॐ अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता। गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥

इति कलशोपरि पञ्चपल्लवान् प्रक्षिपेत्।

ॐ स्योना पृथिवीनो भवान्नृक्षरानिवेशनी। यच्छानः शर्म्मसप्रथाः ॥

इति कलशे सप्तमृदः प्रक्षिपेत्।

ॐ याः फलिनीर्य्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः। बृहस्पति प्रसूतास्ता नो मुञ्चन्त्वꣳहसः।

इति पूगीफलं प्रक्षिपेत्।

ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानिदाशुषे ॥

इति पञ्चरत्नानि प्रक्षिपेत्।

ॐ हिरण्यगर्भः समवर्त्त ताग्रे भूतस्य जातः पतिरेकऽआसीत्। सदाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥

इति हिरण्यं प्रक्षिपेत् ॥

ॐ सुजातोज्ज्योतिषा सह शर्म्मव्वरूथमासदत्स्वः । व्वासोऽअग्ने व्विश्वरूपᳬसंव्ययस्व व्विभावसो ।

इति नूतनवस्त्रेण कलशं संवेष्टयेत् ।

ॐ पूर्णादर्व्वि परापत सुपूर्ण्णा पुनरापत । व्वस्नेव व्विक्रीणावहाऽइषमूर्ज्जᳬशतक्क्रतो ॥

इति पूर्णपात्रं कलशोपरि संस्थापयेत् ।

ॐ याः फलिनीर्य्याऽअफलाऽअपुष्प्पायाश्च पुष्पिणीः । बृहस्पतिप्प्रसूतास्ता नो मुञ्चन्त्वᳬहसः ।

इति पूर्णपात्रोपरि नारिकेलफलं संस्थापयेत् ।

ॐ तत्त्वायामि ब्रह्मणाव्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः । अहेडमानो व्वरुणेह बोध्युरुशᳬसमानऽआयुः प्प्रमोषीः ॥

इति मन्त्रं पठित्वा वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि स्थापयामि । अपां पतये वरुणाय नमः, इत्यावाह्य तत्रैव देवता आवाहयेत्—

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाःस्मृताः ॥
कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा । अर्जुनी गोमती चैव चन्द्रभागा सरस्वती ॥
कावेरी कृष्णवेणा च गङ्गा चैव महानदी । तापी गोदावरी चैव माहेन्द्री नर्मदा तथा ॥
नदाश्च विविधा जाता नद्यः सर्वास्तथापराः । पृथिव्यां यानि तीर्थानि कलस्थानि तानि वै ॥
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः । अङ्गैश्च सहिताः सर्वे कलशंतु समाश्रिताः ॥
अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा । आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥

इति पठित्वा देवान् आवाह्य, "ॐ मनोज्ज्योतिरिति, मन्त्रेण प्राण प्रतिष्ठां कृत्वा कलशाधिष्ठातृदेवताः सुप्रतिष्ठा वरदा भवन्तु ।

तदनन्तरं पूर्ववत् यथालब्धोपचारैः वरुणं सम्पूज्य, यजमानः हस्ते पुष्पाणि गृहीत्वा हस्तौ सम्पुटीकृत्य प्रार्थयेत् । यथा—

प्रार्थना—

देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः॥
आदित्या वसवो रुद्रा विश्वे देवाः सपैतृकाः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥

नमो नमस्ते स्फटिकप्रभाय, सुश्वेतहाराय सुमङ्गलाय ।
सुपाशहस्ताय झषासनाय, जलाधिनाथाय नमो नमस्ते ॥

पाशपाणे नमस्तुभ्यं पद्मिनी जीवनायक । यावत् कर्म समाप्तिः स्यात् तावत्त्वं सन्निधो भव ॥

यजमानः हस्ते जलं गृहीत्वा अनया पूजया कलशाधिष्ठातृ देवताः प्रीयन्तां न मम इत्यनेन जलं प्रक्षिपेत् ।

॥ इति कलश-वरुण पूजनम् ॥

## ॥ अथ पुण्याहवाचनम् ॥

**अथ यजमानः** अवनिकृतजानुमण्डलः ( वीरासनोभूत्वा ) कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणपाणिना सुवर्णपूर्णकलशं धारयित्वा स्वमूर्ध्ना संयोज्य आशिषः प्रार्थयेत्—

**दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ।**
**तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ॥**
**ॐ त्रीणि पदाविचक्रमे विष्णोर्गोपाऽअदाभ्यः ।** अतो धर्म्माणि धारयन् ।

तेनायुः प्रमाणेन पुण्यं पुण्याहं **दीर्घमायुरस्तु**—इति यजमानो ब्रूयात् । अस्तु **दीर्घमायुः** इति विप्राः प्रतिब्रूयुः । इति वारत्रयं पठेत् । तदनन्तरं कलशं पूर्वस्थाने निधाय—

**अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।**
**ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु ते ॥**

**शिवा आपः सन्तु,** इति यजमानो विप्रहस्तेषु जलं दद्यात् । **सन्तु शिवा आपः** इति ब्राह्मणाः प्रतिवचनं दद्युः । एवं प्रकारेण सर्वत्र वचनोत्तरं दद्युः । यजमानः—

**लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।**
**सा मे वसतु वै नित्यं सौमनस्यं तथाऽस्तु नः ॥**

**सौमनस्यमस्तु इति पुष्पं** दद्यात् **"अस्तु सौमनस्यम्"** इति विप्राः ।

**अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशो बलम् ।**
**यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥**

**अक्षतञ्चारिष्टञ्चास्तु**—इत्यक्षतान् दद्यात् । **अस्त्वक्षतमरिष्टञ्च इति** विप्राः ।

**यजमानः**—गन्धाः **पान्तु इति** गंधं **दद्यात्** । **सुमङ्गल्यञ्चास्तु इति वि० प्रतिब्रूयुः ॥**
,, **पुनरक्षताः पान्तु इति अक्षतान् दद्यात्** । **आयुष्यमस्तु इति वि० प्रतिब्रूयुः ॥**
,, **पुनः पुष्पाणि पान्तु इति पुष्पाणि दद्यात्** । **सौश्रियमस्तु इति वि० प्रतिब्रूयुः ॥**
,, **सफलताम्बूलानि पान्तु इति ताम्बूलानि दद्यात्** । **ऐश्वर्यमस्तु** इति **वि० प्रतिब्रूयुः ॥**
,, **दक्षिणाः पान्तु इति दक्षिणां दद्यात्** । **बहुधनमस्तु इति वि० प्रतिब्रूयुः ॥**
,, **पुनरत्रापः पान्तु इति जलं दद्यात्** । **सकलाराधने स्वर्चितमस्तु इति वि० प्रतिब्रूयुः ॥**
,, **दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यं चास्तु इति विप्रान् प्रार्थयेत्** । **"अस्तु" इति द्विजाः प्रतिब्रूयुः** ।

ततः यं कृत्वा सर्ववेद यज्ञ क्रिया करणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिंकृत्वा ऋग्यजुः सामाथर्वाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः **पुण्यं ( पुण्याह कालं ) वाचयिष्ये**—इति वदेत् । **वाचयताम्** इति विप्राः प्रतिब्रूयुः ।

ॐ द्रविणोदाः पिपीषति जुहोतप्रचतिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ १ ॥
सविता त्वासवाना ᳪ सुवतामग्निर्गृहपतीना ᳪ सोमो व्वनस्पतीनाम् ।
बृहस्पतिर्व्वाचऽइन्द्रोज्येष्ठचायरुद्रः पशुब्भ्योमित्रः सत्योव्वरुणोधर्म्मपतीनाम् ॥२॥
नतद्रक्षा ᳪ सिनपिशाचास्तरन्तिदेवानामोजः प्रथमज ᳪ ह्येतत् ।
योविभर्तिदाक्षायण ᳭ हिरण्य ᳭ सदेवेषुकृणुते दीर्घमायुः समनुष्येषुकृणुते दीर्घमायुः ॥३॥
उच्चातेजातमन्धसो दिविसद्भूम्यादद । उग्र᳭शर्म्म महिश्रवः ॥४॥
उपास्मैगायतानरः पवमानायेन्दवे । अभिदेवाँ २॥ऽ इयक्षते ॥५॥ इति मन्त्रान् पठेयुः ॥

ततः—व्रतजपनियमतपः स्वाध्यायक्रतुशमदमदयादान विशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् समाहितमनसः स्मः इति द्विजाः । प्रसीदन्तु भवन्तः इति वदेत् । प्रसन्नाः स्मः इति विप्राः प्रतिब्रूयुः ।

ततो यजमानो ब्रूयात् शान्तिरस्त्वित्यादि । अस्त्विति द्विजाः वचनं प्रतिवचनं सर्वत्र दद्युः । ( यजमानः वाम हस्ते अक्षतान् गृहीत्वा दक्षहस्तेनप्रथम पात्रे कलशोपरि तथा च द्वितीय पात्रे प्रक्षिपेत् लोकाचारेण वा ) ।

ॐ शान्तिरस्तु । ॐ पुष्टिरस्तु । ॐ तुष्टिरस्तु । ॐ वृद्धिरस्तु ।
ॐ अविघ्नमस्तु । ॐ आयुष्यमस्तु । ॐ आरोग्यमस्तु । ॐ शिवमस्तु ।
ॐ शिवं कर्मास्तु । ॐ कर्मसमृद्धिरस्तु । ॐ धर्मसमृद्धिरस्तु ।

ॐ वेदसमृद्धिरस्तु । ॐ शास्त्र समृद्धिरस्तु । ॐ धनधान्यसमृद्धिरस्तु । ॐ पुत्रपौत्र समृद्धिरस्तु । ॐ इष्टसम्पदस्तु । इति कलशोपरि अक्षतान् प्रक्षिपेत् ।

द्वितीय पात्रे बहिः—अरिष्टनिरसनमस्तु । ॐ यत्पापमरोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु ।

पुनः कलशोपरि—ॐ यच्छ्रेयस्तदस्तु । ॐ उत्तरे कर्मणिनिर्विघ्नमस्तु ।

ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु । ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् । ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसम्पदस्तु । ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे सलग्ने साधिदैवते प्रीयेताम् ॥

ॐ दुर्गापाञ्चाल्यौ प्रीयेताम् । ॐ अग्निपुरोगाः विश्वेदेवाः प्रीयन्ताम् ।
ॐ इन्द्रपुरोगाः मरुद्गणाः प्रीयन्ताम् । ॐ वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् ।

ॐ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् । ॐ अरुन्धतीपुरोगाएकपत्न्यः प्रीयन्ताम् । ॐ विष्णु पुरोगाः सर्वेदेवाः प्रीयन्ताम् । ॐ ब्रह्म पुरोगाः सर्वेवेदाः प्रीयन्ताम् । ॐ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् । ॐ श्री सरस्वत्यौ प्रीयेताम् । ॐ श्रद्धामेधे प्रीयेताम् । ॐ भगवती कात्यायनी प्रीयताम् । ॐ भगवती माहेश्वरी प्रीयताम् । ॐ भगवती ऋद्धिकरी प्रीयताम् ।

ॐ भगवती वृद्धिकरी प्रीयताम् । ॐ भगवतीपुष्टिकरी प्रीयताम् ।
ॐ भगवती तुष्टिकरी प्रीयताम् । ॐ भगवन्तौविघ्नविनायकौ प्रीयेताम् ।
ॐ सर्वाः कुलदेवताः प्रीयन्ताम् । ॐ सर्वाः ग्रामदेवताः प्रीयन्ताम् ।

ॐ सर्वा इष्टःदेवताः प्रीयन्ताम् ।

पुनः बहिः द्वितीयपात्रें—ॐ हताश्च ब्रह्मद्विषः । ॐ हताश्च परिपन्थिनः । ॐ हताश्च विघ्न कर्त्तारः । ॐ शत्रवः पराभवं यान्तु । ॐ शाम्यन्तु घोराणि । ॐ शाम्यन्तु पापानि । ॐ शाम्यन्त्वीतयः । ॐ शाम्यन्तूपद्रवाः ।

पुनः कलशोपरि ॐ शुभानि वर्द्धन्ताम् । ॐ शिवा आपः सन्तु ।
ॐ शिवा ऋतवः सन्तु । ॐ शिवा ओषधयः सन्तु ।
ॐ शिवा वनस्पतयः सन्तु । ॐ शिवा अतिथयः सन्तु ।
ॐ शिवा अग्नयः सन्तु । ॐ शिवा आहुतयः सन्तु ।
ॐ अहोरात्रे शिवे स्याताम् ।
ॐ निकामे निकामे नः पर्ज्जन्यो व्वर्षतु फलवत्यो ।
नऽओषधयः पच्यन्तां योगक्षे मो नः कल्पताम् ।।

शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहितादित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ।

ॐ भगवान् नारायणः प्रीयताम् । ॐ भगवान् पर्जन्यः प्रीयताम् । ॐ भगवान् स्वामी महासेनः प्रीयताम् । ॐपुरोऽनुवाक्या यत्पुण्यं तदस्तु । ॐयाज्या यत्पुण्यं तदस्तु । ॐवषट्कारेण यत्पुण्यं तदस्तु । ॐ प्रातः सूर्योदये यत्पुण्यं तदस्तु । ततः—"एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये" इति यजमान. प्रार्थयेत् । ॐ वाच्यताम् इति विप्राः ब्रुयुः ।

"ॐ ब्राह्मं पुण्यमहर्यच्च सृष्टयुत्पादनकारकम् ।
वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ।।

भो ब्राह्मणाः ! मम सकुटुम्बस्य सपरिवारस्य गृहे समस्त पितॄणामुद्धारणार्थंवा अमुक कामनया संसिद्धयर्थं ) मया क्रियमाणस्य सनवग्रहमखश्रीमद्भागवतसप्ताहकथाश्रवणाख्यस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु इति यजमानः । ॐ पुण्याहम् इति ब्राह्मणाः । ॐ अस्य कर्मणः पुण्याऽहं भवन्तो ब्रुवन्तु, इति यजमानः ॐ पुण्याहं इति ब्राह्मणाः एवं प्रकारेण वचनं प्रतिवचनं च त्रिः पठित्वा ।

ॐ पुनन्तु मा देवजनाः पुनन्तु मनसाधियः ।
पुनन्तु व्विश्वाभूतानि जातवेदः पुनीहि मा ।। इति पठेयुः ।।
पृथिव्यामुद्धृतायान्तु यत्कल्याणंपुराकृतम् ।
ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ।।

भो ब्राह्मणाः ! मम सकुटुम्बस्य सपरिवारस्य गृहे समस्तपितॄणामुद्धारणार्थं (वा अमुक कामनया संसिद्धयर्थं ) मया क्रियमाणस्य सनवग्रहमख श्रीमद्भागवतसप्ताहकथा श्रवणाख्यस्य कर्मणः कल्याणं भवन्तो ब्रुवन्तु इति यजमानः ॐ कल्याणं इति ब्राह्मणाः । एवं प्रकारेण वचनं प्रतिवचनं च त्रिः पठित्वा ।

ॐ यथे मां व्वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्म राजन्यभ्या ᳪ शूद्रायचार्य्याय च स्वायचारणाय च ।। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयम्मे कामः समृद्ध्यतामु-पमादोनमतु। इति पठेयुः ।।

"सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता।
सम्पूर्णा सुप्रभावा च तामृद्धिं प्रब्रुवन्तु नः ।।"

भो ब्राह्मणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे समस्त पितॄणामुद्धारणार्थं (वा अमुक कामनया संसिद्धचर्थं) मया क्रियमाणस्य सनवग्रहमखश्रीमद्भागवतसप्ताहकथाश्रवणाख्यस्य कर्मणः ऋद्धिं भवन्तो ब्रुवन्तु इति यजमानः। ॐ कर्मऋध्यताम् इति ब्राह्मणाः।

ॐ अस्य कर्मणः ऋद्धिं भवन्तो ब्रुवन्तु इति यजमानः। ॐ कर्म ऋध्यताम् इति ब्राह्मणाः। एवं प्रकारेण वचनं प्रतिवचनं च त्रिः पठित्वा।

ॐ सत्रस्यऋद्धिरस्यगन्मज्ज्योतिरमृताऽअभूम। दिवम्पृथिव्याऽअद्ध्यारुहामाविदामदेवा-न्त्स्वर्ज्योतिः ।। इति पठेयुः ।।

"स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा।
विनायकप्रिया नित्यं तां च स्वस्ति ब्रुवन्तु नः ।।"

भो ब्राह्मणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे समस्त पितॄणामुद्धारणार्थं (वा अमुक कामनया संसिद्धचर्थं) मया क्रियमाणाय सनवग्रहमख श्रीमद्भागवतसप्ताहकथाश्रवणाख्य कर्मणे स्वस्ति भवन्तो ब्रुवन्तु इति यजमानः।

ॐ आयुष्मते स्वस्ति इति द्विजाः। अस्मै कर्मणे स्वस्ति भवन्तो ब्रुवन्तु इति यजमानः ॐ आयुष्मते स्वस्ति इति द्विजाः एवं प्रकारेण वचनं प्रतिवचनं च त्रिः पठित्वा।

ॐ स्वस्तिनऽइन्द्रो व्वृद्धश्रवाः स्वस्तिनः पूषा व्विश्ववेदाः। स्वस्ति नस्तार्क्ष्योऽअरिष्ट-नेमिः स्वस्ति नो बृहस्पतिर्द्दधातु ।। इति पठेयुः।

"समुद्रमथनाज्जाता जगदानन्दकारिका।
हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ।।"

भो ब्राह्मणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे समस्त पितॄणामुद्धारणार्थं (वा अमुक कामनया संसिद्धचर्थं) मया क्रियमाणस्य सनवग्रहमख श्रीमद्भागवत सप्ताह कथा श्रवणाख्यस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु इति यजमानः ॐ अस्तु श्रीः इति ब्राह्मणाः। ॐ अस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु इति यजमानः।

ॐ अस्तु श्रीः इति ब्राह्मणाः। एवं प्रकारेण वचनं प्रतिवचनं च त्रिः पठित्वा।

ॐ श्रीश्च ते लक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वेनक्षत्राणिरूपमश्विनौ व्यात्तम्।
इष्णन्निषाणामुम्मऽइषाण सर्व्वं लोकम्मऽइषाण ।। इति पठेयुः।

"मृकण्डसूनोरायुर्यद्ध्रुवलोमशयोस्तथा। आयुषा तेन संयुक्ता जीवेम शरदः शतम् !! इति यजमानः। शतञ्जीवन्तु भवन्तः - इति ब्राह्मणाः ब्रूयुः ।।

"शिवगौरी विवाहे या या श्रीरामे नृपात्मजे।
धनदस्य गृहे या श्रीरस्माकं सास्तु सद्मनि॥

अस्तु श्रीः इति विप्राः॥

ॐ मनसः काममाकूतिं-व्वाचः सत्यमशीय। पशूना ७ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा॥ इति पठेयुः।

"प्रजापतिर्लोकपालो धाता ब्रह्मा च देवराट्।
भगवाञ्छाश्वतो नित्यं स नो रक्षतु सर्वतः॥

भगवान् प्रजापतिः प्रीयताम्। इति ब्राह्मणाः।

अत्र यजमानः इत्युक्त्वा एकस्मिन् पात्रे एकमाचमनीयं जलं क्षिपेत्।

ॐ शतमिन्नु शरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मानोमद्ध्यारीरिषतायुर्गन्तोः॥ इति पठेयुः।

ॐ प्रजापतेनत्वदेतान्यन्यो व्विश्वारूपाणिपरिताबभूव। यत्कामास्ते जुहुमस्तन्नोऽअस्तु व्वय७ स्याम पतयो रयीणाम्॥ इति पठेयुः।

"आयुष्मते स्वस्तिमते यजमानाय दाशुषे।
श्रिये दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः॥
देवेन्द्रस्य यथा स्वस्ति यथा स्वस्ति गुरोर्गृहे।
एकलिङ्गे यथा स्वस्ति तथा स्वस्ति सदा मम॥

आयुष्मते स्वस्ति—
इति विप्राः ब्रूयुः।

ॐ प्प्रति पन्थामपद्महि स्वस्तिगामनेहसम्।
येन व्विश्वाः परिद्विषो वृणक्ति व्विन्दतेव्वसु॥

स्वस्तिवाचनसमृद्धिरस्तु--

इति च ब्राह्मणाः ब्रूयुः इत्यादिभिः सम्पाद्य यजमानः—प्रार्थयेत्—

अस्मिन् पुण्याहवाचने न्युनातिरिक्तो यो विधिरुपविष्टब्राह्मणानां वचनात् श्रीमहागणपतिप्रसादाच्च परिपूर्णोऽस्तु। "ॐ अस्तु परिपूर्णः इति द्विजाः। प्रार्थनान्तरं यजमानः जलाक्षतद्रव्यंचादाय संकल्पं कुर्यात्—

कृतस्य दानखण्डोक्तपुण्याहवाचनकर्मणः साङ्गतासंसिद्धयर्थं तत्सम्पूर्णफलप्राप्त्यर्थञ्च स्वस्तिवाचकेभ्यो ब्राह्मणेभ्यो मनसोद्दिष्टां दक्षिणां विभज्य दातुमहमुत्सृजे—इति दद्यात् "अस्तु" इति द्विजाः ब्रूयुः॥

॥ इति पुण्याहवाचनम्॥

# ॥ अथ अभिषेकः ॥

ततोऽविधुरा ब्राह्मणाः य अन्योऽपि ब्राह्मणः दूर्वाऽऽम्रपल्लवसहितवरुणकलशोदकेन उदङ्-मुखास्तिस्ठन्त उपविष्ट वा वामभागास्थित सपत्नीकसपरिवारं यजमानमभिषिञ्चेयुर्वक्ष्यमाण मन्त्रैः—

ॐ पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥१॥ पञ्चनद्यः सरस्वतीमपि यन्तिसस्त्रोतसः । सरस्वती तु पञ्चधा सोऽदेशे भवत्सरित् ॥२॥ पुनन्तु मा देवजनाः पुनन्तु मनसाधियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥३॥ विश्वानि देवसवितर्दुरितानि परासुव । यद्भद्रं तन्नऽआसुव ॥४॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि ॥

ततो यजमानः अभिषेकजलं गृहीत्वा अक्षिणीस्शेपृशेत् इति कृत्वा "ॐ अमृताभिषेकोऽस्तु" इति वदेयुः । तथास्तु—इति विप्राः । ततः—कृतस्याभिषेककर्मणः साङ्गता सिद्धचर्थं मनसोद्दिष्टां दक्षिणां विभज्य दातुमहमुत्सृजे" इति दद्यात् । पत्नी च सकृदाचम्य दक्षिण स्थाने उपविशेत् ॥

# ॥ अथ षोडशमातृकानां पूजनम् ॥

| | नाम | मन्त्राः |
|---|---|---|
| १. | ॐ भूर्भुवः स्वः गणपतये नमः गणपतिमावाहयामि स्था० | ॐ गणानान्त्वा० |
| २. | ,, ,, ,, गौर्यै नमः गौरीमावाहयामि स्था० | ,, आयङ्गौः पृश्नि० |
| ३. | ,, ,, ,, पद्मायै नमः पद्मावाहयामि स्था० | ,, हिरण्यरूपा उषसो० |
| ४. | ,, ,, ,, शच्यै नमः शचीमावाहयामि स्था० | ,, निवेशनः सङ्गमनो० |
| ५. | ,, ,, ,, मेधायै नमः मेधामावाहयामि स्था० | ,, मेधाम्मे वरुणो० |
| ६. | ,, ,, ,, सावित्र्यै नमः सावित्रीमावाहयामि स्था० | ,, सवितात्वा सवाना० |
| ७. | ,, ,, ,, विजयायै नमः विजयामावाहयामि स्था० | ,, विज्यन्धनुः कपर्द्दिनो० |
| ८, | ,, ,, ,, जयायै नमः जयामावाहयामि स्था० | ,, बह्वीनाम्पिता बहुरस्य० |
| ९. | ,, ,, ,, देवसेनायै नमः देवसेनामावाहयामि स्था० | ,, इन्द्रऽआसान्नेता० |
| १०. | ,, ,, ,, स्वधायै नमः स्वधामावाहयामि स्था० | ,, पितृभ्यः स्वधायिभ्यः० |
| ११. | ,, ,, ,, स्वाहायै नमः स्वाहामावाहयामि स्था० | ,, स्वाहाप्राणेभ्यः० |
| १२. | ,, ,, ,, मातृभ्यो नमः मातृरावाहयामि स्था० | ,, आपोऽअस्मान्मातरः० |
| १३. | ,, ,, ,, लोकमातृभ्यो नमः लोकमातृरावाहयामि स्था० | ,, रयिश्चमेरायश्चमे० |
| १४. | ,, ,, ,, धृत्यै नमः धृतिमावाहयामि स्था० | ,, यत्प्रज्ञानमुतचेतो० |
| १५. | ,, ,, ,, पुष्टयै नमः पुष्टिमावाहयामि स्था० | ,, त्र्यम्बकं यजामहे० |

| | | |
|---|---|---|
| १६. ,, ,, | ,, तुष्टयै नमः तुष्टिमावाहयामि स्था | ॐ अङ्गान्यात्मन्भिषजा॰ |
| १७. ,, ,, | ,, आत्मनः कुलदेवतायै नमः आत्मनः कुलदेवतामावाहयामि स्था॰— | ॐ प्राणायस्वाहा पानाय॰ |

ततः एवं प्रकारेण नाममन्त्रैः वेदमन्त्रैर्वा आवाह्य "ॐ मनोजूतिरिति" प्राणप्रतिष्ठां कृत्वा षोडशोपचारैःसम्पूज्य हस्ते पुष्पाणि गृहीत्वा पार्थयेत् ।

आयुरारोग्यमैश्वर्य्यं ददध्वं मातरो मम ।
निर्विघ्नं सर्वकार्येषु कुरुध्वं स्गणाधिपाः ।।

इति सम्प्रार्थ्य जलं गृहीत्वा अनया पूजया गणेशपूर्वकषोडशमातरः प्रीयन्ताम् न मम ।।

## ।। अथ सप्तघृतमातृकानां पूजनम् ।।

कर्त्ता—सप्तबिन्दून् क्रमेण प्रादेशमात्रस्थले निर्माय अधस्तनेषु सप्तसुबिन्दुषु "ॐ व्वसोः पवित्रमसि" इत्यारभ्य शतधारेण इत्यन्तं घृतादिना सप्तधारा उदक्संस्थाः प्रादेशमात्रीं कृत्वा "सुप्वाकामधुक्षः" इत्यनेन् गुड़ेनैकीकरणं कुर्यात् । ततस्तेषु सप्तसु बिन्दुषु क्रमेण देवता आवाहयेत्—

श्रीर्लक्ष्मीश्चधृतिर्मेधा स्वाहा प्रज्ञा सरस्वती ।
माङ्गल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः ।।

| नाम | मन्त्राः |
|---|---|
| १. ॐ भूर्भुवः स्वः श्रियै नमः श्रियमावाहयामि स्था॰ | ॐ मनसः काममाकूतिम्॰ |
| २. ,, ,, ,, लक्ष्म्यै नमः लक्ष्मीमावाहयाथि स्था॰ | ॐ श्रीश्चते लक्ष्मीश्च॰ |
| ३. ,, ,, ,, धृत्यै नमः धृतिमावाहयामि स्था॰ | ॐ भद्रं कर्णेभिः॰ |
| ४. ,, ,, ,, मेधायै नमः मेधामावाहयामि स्था॰ | ॐ मेधाम्मे वरुणो ददातु॰ |
| ५. ,, ,, ,, स्वाहायै नमः स्वाहामावाहयामि स्था॰ | ॐ प्राणाय स्वाहा पानाय॰ |
| ६. ,, ,, ,, प्रज्ञायै नमः प्रज्ञामावाहयामि स्था॰ | ॐ आयङ्गौः पृश्निरक्रमीद्॰ |
| ७. ,, ,, ,, सरस्वत्यै नमः सरस्वतीमावाहयामि स्था॰ | ॐ पावकानः सरस्वती॰ |

इत्यावाह्य "मनोजूतिरिति" प्राणप्रतिष्ठां कृत्वा यथा लब्धोपचारैः सम्पूज्य पुष्पाणि गृहीत्वा प्रार्थयेत् ।

---

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ।।
धृतिः पुष्टिस्तथा तुष्टिः आत्मनः कुलदेवताः ।
गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ।।

या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः,
पापात्मनां कृतधियां हृदयेषु बुद्धिः।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा,
तां त्वां नताः स्म परिपालय देवि विश्वम् ॥
यदङ्गत्वेन भो देव्यः पूजिता विधिमार्गतः।
कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम् ॥

इति सम्प्रार्थ्य जलं गृहीत्वा अनया पूजया श्र्यादिसरस्वत्यन्त सप्त घृतमातरः प्रीयन्ताम् न मम।

## ॥ अथायुष्यमन्त्र पाठः ॥

यदायुष्यं चिरं देवाः सप्तकल्पान्तजीविषु।
ददुस्तेनायुषायुक्ता जीवेम शरदः शतम् ॥१॥
दीर्घा नागा नगा नद्योऽनन्ताः सप्तार्णवा दिशः।
अनन्तेनायुषा तेन जीवेम शरदः शतम् ॥२॥
सत्यानि पञ्च भूतानि विनाश रहितानि च।
अविनाश्यायुषा तद्वज्जीवेम शरदः शतम् ॥३॥

ॐ आयुष्यं व्वर्चस्य ꣳ रायस्पोषमौद्भिदम्। इद ꣳ हिरण्यं व्वर्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ नतद्रक्षा ꣳसि सिनपिशाचास्तरन्ति देवानामोमोजः प्रथमज ꣳ ह्येतत्। यो बिभर्तिदाक्षायण ꣳ हिरण्य ꣳ सदेवेषुकृणुते दीर्घमायुः समनुष्येषु कृणुते दीर्घमायुः ॥ २ ॥ यदाबध्नन्दाक्षायणा हिरण्य ꣳ शतानीकाय—सुमनस्य मानाः। तन्मऽआबध्नामिशतशारदायायुष्माञ्जर--दष्टिर्यथासम् ॥३॥

ततः यजमानः जलाक्षतद्रव्यश्चादाय दक्षिणासंकल्पं कुर्यात्।

ॐ कृतस्य आयुष्यमन्त्रपाठकर्तृकेभ्यः ब्राह्मणेभ्यः मनसोद्दिष्टां दक्षिणां विभज्य दातुमहमुत्सृजे ॥

## ॥ अथ नान्दीश्राद्धप्रयोगः ॥

कर्त्ता—ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। ॐ गोत्राः मातृपितामही प्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। ॐ गोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। ॐ द्वितीयगोत्राः मातामह-प्रमाता-

मह-वृद्धप्रमाता महाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ।

आसनदानम्—

सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐभूर्भुवः: स्वः इमे आसने वो नमो नमः नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः । ॐ गोत्राः मातृपितामहीप्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः नान्दीश्राद्धे क्षणौ क्रियेतां यथा प्राप्नुवन्त्यो भवन्त्यः तथा प्राप्नुवामः । ॐ गोत्राः पितृपितामह-प्रपितामहाः नान्दीमुखाः ॐभूर्भुवः स्वः इमे आसने—वो नमो नमः, नान्दीश्राद्धे क्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः । ॐ द्वितीयगोत्राः मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः, नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः ।।

गन्धादिदानम्—

अत्रापः पान्तु । इमे वाससी सुवाससी । इमानि यज्ञोपवीतानि । अयं वो गन्धः सुगन्धः । इमे अक्षताः स्वक्षताः । इमानि पुष्पाणि सुपुष्पाणि । अयं वो धूपः सुधूपः । अयं वो दीपः सुदीपः । इदं नैवेद्यं सुनैवेद्यम् । इमानि ऋतुफलानि सुष्ठुऋतुफलानि । इदं ताम्वूलं सुताम्बूलम् । इदं पूगीफलं सुपूगीफलम् । ॐ सत्यवसुसंज्ञकाः विश्वे देवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः । ॐ गोत्राः मातृपितामही-प्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः । ॐ गोत्राः पितृपितामहप्रपितामहाः नान्दी मुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ॐ द्वितीय गोत्राः मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ।

भोजननिष्क्रियदानम्—

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः । ॐ गोत्राः मातृपितामहीप्रपितामह्यः नान्दीमुख्यः, ॐ भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः । ॐ गोत्राः पितृपितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्मब्राह्मण भोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः । ॐ द्वितीय गोत्राः मातामह प्रमातामह-बृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ।

सक्षीरयवमुदकदानम्—

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः प्रीयन्ताम् । ॐ गोत्राः मातृपितामही-प्रपितामह्यः नान्दीमुख्यः प्रीयन्ताम् । ॐ गोत्रा पितृपितामह प्रपितामहा नान्दीमुखाः प्रीयन्ताम् । ॐ द्वितीयगोत्राः मातामह-प्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः प्रीयन्ताम् । ॐ शिवा आपः सन्तु, इति जलम् । ॐ सौमनस्यमस्तु, इति पुष्पम् । ॐ अक्षतं चारिष्टंचास्तु,

इत्यक्षतान् । ॐ अघोराः पितरः सन्तु इत्यनेन यजमानः पूर्वाग्रां जलधारां दद्यात् ।। इति समाचारः ।। केवलपाठमात्रम् । ततः यजमानः अञ्जलिं कृत्वा प्रार्थयेत् । ॐ गोत्रन्नो वर्धतां दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कञ्चन् । एताः सत्या आशिषः सन्तु । द्विजाः कथयन्ति सन्त्वेताः सत्या आशिषः इति ::

**दक्षिणादानम्—**

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फल प्रतिष्ठासिद्धयर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे । ॐ मातृपितामही प्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्धयर्थं द्राक्षामलक-यवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे । ॐ गोत्राः पितृपितामहप्रपितामहाः नान्दी मुखाः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासंसिद्धयर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे । ॐ द्वितीयगोत्राः मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फल प्रतिष्ठा संसिद्धयर्थं द्राक्षामलकयवमूल निष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे ।

**ॐ उपास्मैगायतानरः पवमानायेन्दवे । अभिदेवाँऽइयक्षते ।।१।। इडामग्ने पुरुद ꣳ स ꣳ सनिङ्गोः शश्वत्तम ꣳ हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने साते सुमतिर्भूत्वस्मे ।।२।।**

यजमानः –अनेन नान्दीश्राद्धं सम्पन्नम् । द्विजाः—सुसम्पन्नमिति ।

**ॐ व्वाजेव्वाजेवतव्वाजिनो नो धनेषुव्विप्राऽअमृताऽऋतज्ञाः । अस्यमद्ध्वः पिबतमाद-यद्ध्वं तृप्तायात पथिभिर्द्देवयानैः । आमाव्वाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीव्विश्वरूपे । आमागन्तांपितरामातराचामासोमोऽमृतत्त्वेनगम्यात् ।**

यजमानः—मयाऽऽचरिते साङ्कल्पिकनान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्ट ब्राह्मणानां वचनाच्छ्रीगणपतिप्रसादाच्च परिपूर्णोऽस्तु–इति वदेत् । अस्तु परिपूर्णः – इति ब्राह्मणाः ।।

ततः यजमानः जलं गृहीत्वा अनेन कर्मणा नान्दीमुखदेवताः प्रीयन्ताम् न मम इति जलं प्रक्षिपेत् ।।

## ।। अथ आचार्यवरणम् ।।

ॐ अद्येत्यादिदेश—कालौ संकीर्त्य मम सर्वविधपापक्षयद्वारा तथा च अमुककामना संसिद्धयर्थं श्रीपरमेश्वरप्रीत्यर्थं जन्मजन्मान्तरे श्रीभगवद्भक्तिप्राप्त्यर्थंञ्च श्रीमद्भागवत सप्ताहकथाश्रवणार्थममुकगोत्रममुकशाखाध्यायिनं शुकरूपिणं सप्ताहकथाश्रावयितारं ब्राह्म-णमेभिर्द्रव्यैस्त्वामहं वृणे । ॐ वृतोऽस्मीति प्रतिवचनानन्तरमाचार्यः कथयति । तदनन्तरं यजमानः वरणद्रव्यैः आचार्यं श्री शुकदेवमूर्तये नमः इति पाद्यमित्यादिपञ्चोपचारैरपि सम्पूज्य शुकरूपिणं द्विजं प्रार्थयेत् ।

ॐ शुकरूप प्रबोधज्ञ सर्वशास्त्रविशारद ।
एतत्कथाप्रकाशेन मदज्ञानं विनाशय ।।

ततो वरणद्रव्यमादायोपवाचकं वृणुयात् । ॐ अद्येत्यादि देशकालौ संकीर्त्य मम सकल पापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं पूर्वोक्तसंकल्पसिद्धयर्थं च्च अमुकगोत्रममुकशाखाध्यायिनं गर्गरूपिणम् उपवाचयितारं ब्राह्मणमेभिर्वरणद्रव्यैस्त्वामहं वृणे ।

ॐ वृतोऽस्मीति प्रतिवचनानन्तरं वस्त्रादिभिः सम्पूज्य श्रीगर्गरूपिणं द्विजं प्रार्थयेत् ।—

ॐ विद्वन् भागवते ह्यस्मिन् वाचकेनाखिलीकृते ।
विसर्गबिन्दुमात्राणां कदाचित् स्खलनं यदि ।।
तत्त्वया सावधानेन पूरणीयं प्रयत्नतः ।

अनीर्ष्यया च साहाय्यं देयं देव ! नमो नमः ।। इति सम्प्रार्थ्य प्रणमेत् ।

ततो गायत्रीद्वादशाक्षरादिमन्त्राणां जपकरणार्थं विष्णुसहस्रनामपाठार्थं वा अमुकामुकपाठार्थश्च यथासंख्याकान् ब्राह्मणान् वृणुयात् ।

ॐ अद्येत्यादि सर्वविघ्नपातकनिवृत्तिद्वारा श्रीपरमेश्वर प्रीत्यर्थं करिष्यमाणश्रीमद्भागवत सप्ताहकथायंज्ञकर्मणः साङ्गतासिद्धये अमुकामुकगोत्रममुकामुकशर्माणं ब्राह्मणमेभिर्वरणद्रव्यैःअमुकजपपाठकरणार्थंश्च त्वामहं वृणे । इति वृत्वा वरणद्रव्यैः पूजयित्वा च प्रणमेत् ।

।। इति पञ्चाङ्गपूजनम् ।।

ततो यजमानः वरणानन्तरं मण्डपस्य प्रदक्षिणां कृत्वा मण्डपप्रवेशे मण्डपस्य पश्चिमद्वारे भूमिं सम्पूज्य अर्घ्यं च दत्वा मण्डपाभ्यन्तरं प्रविश्य पंचाङ्गपीठादिदेवान् अग्निकोणे योगिनी पीठसमीपे संस्थाप्य मण्डपस्य मध्यभागे आगत्य आचार्यो वामहस्ते गौरसर्षपान् गृहीत्वा दिग्रक्षणं कुर्यात् ।

ततः पञ्चगव्यकरणं, मण्डपस्य प्रोक्षणं च कृत्वा यजमानः मण्डपस्य मध्यभागे आगत्य तिष्ठन्नेव कृताञ्जलिं कृत्वा "ॐ स्वस्ति नः" इति वैदिकमंत्रं त्रिः पठित्वा भूमौ प्रादेशं कुर्यात् ॐ देवाः आयान्तु । यातुधानाः अपयान्तु । विष्णोर्देवयजनं रक्षस्व इति स्थण्डिले कुण्डोपरि वा पुष्पाक्षतानि निक्षिपेत् ।

तद्यथा नियतमानसो भूत्वा सर्वतोभद्रमण्डलस्य सम्मुखमुपविश्य, आचम्य, प्राणानायम्य, ॐ "अपवित्रः" इत्यात्मानं पूजासम्भारान् च सम्प्रोक्ष्य संकल्पं कृत्वा नाममंत्रैः वैदिकमन्त्रैर्वा सर्वतोभद्रमण्डलदेवतानामावाहन-स्थापन-पूजनपूर्वकं भद्रस्य मध्ये अष्टदलोपरि "ॐ मही द्यौः" इति पूर्ववत् पठित्वा प्रधानकलशं संस्थाप्य, पञ्चोपचारैः सम्पूज्य, तत्र कलशोपरि श्रीविष्णुयन्त्रं संस्थाप्य आवाहन-स्थापनपूजनपूर्वकं पीठादिदेवानां गन्धाक्षतपुष्पैः पीठस्य मध्यमे भागे आवाहन-स्थापन पूजनञ्च कुर्यात् । तदनन्तरं नूतनस्वर्णमयी विष्णुमूर्ति यन्त्रं वा कांस्यादिपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धजलधारया । ॐ समुद्रस्यत्त्वादि इत्यादिभिर्मन्त्रैः अग्न्युत्ता-

रणपूर्वकम् अभिषेकं कृत्वा जलाद् मूर्ति यन्त्रं वा बहिः निष्कास्य नूतनवस्त्रेण सम्प्रोञ्छच वाम-हस्ते आदाय दक्षहस्तेन आच्छाद्य विनियोग-न्यास-ध्यान-पूर्वकं "ॐ आँ ह्रीं क्रों० इत्यादिना पठनपूर्वकं प्राणप्रतिष्ठां कुर्यात् ।

ततः आचमनं प्राणायामं च कृत्वा आसनशुद्धि, शिखाबन्धनं, भैरवं च सम्प्रार्थ्य रक्षादीपं प्रज्ज्वाल्य दीपपूजनं स्ववामभागे पूजाकलशं संस्थाप्य तत्र "ॐ इमम्मेवरुणेति० वरुण मावाह्य, ॐ गङ्गे च यमुनेति तीर्थान् आवाह्य, ॐ कलशस्य मुखे इत्यादिना विष्णवादिदेवानावाह्य सर्वोपचारैः, सम्पूज्य, बहिराभ्यन्तरशंखं पत्रान्तरजलेन प्रक्षाल्य, कलशोदकेन प्रपूर्य शंखं त्रिपादुकां निधाय "ॐ शंखं चन्द्रार्कादिना सम्प्रार्थ्य ॐ "ॐ अग्नि ऋषिः" इति मन्त्रेण सर्वोपचारैः सम्पूज्य ॐ पाञ्चजन्याय० इति पुष्पाञ्जलिं विधाय स्ववामतः आधारे घण्टां प्रक्षाल्य ॐ आग-मार्थं तु इत्यनेन घण्टां निनाद्य "ॐ सुपर्णोसि गरुत्मां० इति मन्त्रेण गन्धादिभिः ॐ घण्टस्थ गरुडाय नमः" इति सम्पूज्य शंखोदकेन प्रधानपीठस्थदेवानामावाहन, स्थापन, पूजनार्थं संकल्पं विधाय पूजाकर्तुं योग्यतासंसिद्धचर्थं षडङ्गन्यासध्यानपूर्वकं देवो भूत्वा देवं यजेत।

## ॥ अथ महाविष्णुपूजनम् ॥

ॐ सहस्रशीर्षेति षोडशर्चस्य पुरुषसूक्तस्य नारायण ऋषिः अनुष्टुप्छन्दः अन्त्यायास्त्रि-ष्टुप्छन्दः पुरुषो देवता सुप्रसन्नार्थं नारायणपूजने विनियोगः ।

**अथ ध्यानम्—**

वैकुण्ठे कमनीयरत्नखचिते कल्पद्रुमूले स्थितं,
नीलेन्दीवरकान्तिसुन्दरतनुं लक्ष्म्या समालिङ्गितम् ।
गंगानीरतरङ्गभूषितपदद्वन्द्वं कृपासागरं,
कोटीरीकृतबर्हिपिच्छमनिशं लक्ष्मीपतिं भावये ॥१॥
शान्ताकारं भुजगशयनं पद्मनाभं शुरेशं,
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं,
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥२॥
ॐ भूर्भुवः स्वः महाविष्णवे नमः ध्यायामि ।

**आवाहनम्—**

ॐ सहस्रशीर्षा० ।
मायासमेतंत्त शशिप्रभं त्वामावाहये पूजनमन्दिरेऽस्मिन् ।
विलोक्य भक्तिं मम किङ्करस्य लक्ष्मीपते ! सन्निधिमाश्रयस्व ॥
ॐ नमो भगवते जगद्बीजाय महाविष्णवे नमः आवाहयामि स्थापयामि ।

**आसनम्—**

ॐ पुरुष एवे० ।
स्फुरत्प्रभं काञ्चनपूरपूरितं शशाङ्कभाबिन्दुसमेतमेतत् ।
हृत्पद्मतुल्यं विधिवन्मयाऽऽहृतं लक्ष्मीपते तुभ्यमिदं वरासनम् ॥

ॐ नमो भ० जग० महाविष्णवे नमः आसनम्, आसनार्थे तुलसीपत्रं समर्पयामि ।

**पाद्यम्—**

ॐ एतावानस्य० ।

औदुम्बरे सुन्दरभाजनेऽमले रेखाङ्किते पद्मदलानुकारिणि ।
संस्थापितं पादमुखावहं शुभं मयार्पितं पाद्यमिदं गृहाण ॥

ॐ नमो भ० जग० महाविष्णवे नमः पादयोः पाद्यं समर्पयामि ।

**अर्घ्यम्—**

( पूर्वस्थापितं शंखमादाय तन्मध्ये गन्धपुष्पतिलश्यामाकदूर्वाकुशतुलसीदलानि प्रक्षिप्य )

ॐ त्रिपादूर्ध्व० ।

पाटीरपूरितमनेकविधैः शुभैश्च दूर्वादलैश्च परिभूषितमेनमीश ।
लक्ष्मीपते ननु गृहाण करार्घमेहि भक्तांश्च पूरय निकामसकामकामैः ॥

ॐ नमो भग० जग० महाविष्णवे नमः हस्तयोरर्घ्यं समर्पयामि ।

**आचमनम् —**

ॐ ततो विराड० ।

आनीतमाचमनवारि परं पुनीतं नाथ त्वदर्थमिदमस्ति दयानिधान ।
लक्ष्मीश भक्तजनमोदविधानदक्ष आचम्य पूरय च भक्तजनाभिलाषम् ॥

ॐ नमो भ० जग० महाविष्णवे नमः अर्घ्याङ्गमाचमनीयं जलं समर्पयामि ।

**स्नानम्—**

ॐ तस्माद्यज्ञात् सर्व्वहुतः सम्भृतं० ।

गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः ।
स्नापितोऽसि मया देव तथा शान्तिं कुरुष्व मे ॥

ॐ नमो भ० जग० महाविष्णवे नमः स्नानीयं जलं समर्पयामि ।

**पञ्चामृतम्—**

ॐ पञ्चनद्यः० ।

दध्ना घृतेन पयसा मधुनाम्बुमिश्रं गङ्गोदकेन तुलसीसहितेन रम्यम् ।
पञ्चामृतं त्रिभुवनाधिप देहशुद्ध्यै स्नानार्हमेतदतिपूततमं गृहाण ॥

ॐ नमो भ० जग० महाविष्णवे नमः पञ्चामृतस्नानं समर्पयामि तदन्ते शुद्धोदकस्नानं तदन्ते आचमनीयं जलं समर्पयामि ।

**शुद्धोदकस्नानम् —**

ॐ शुद्धवालः सर्व्व० ।

एतत्तमालदलमीश कलिन्दजाया आनीतमम्बु नितरां तव मोदकारि ।
हे वैनतेयभुजसंस्थितलक्ष्म्यधीश निर्णजनाय दयया भगवन् गृहाण ॥

ॐ नमो भ० जग० महाविष्णवे नमः शुद्धोदकस्नानं समर्पयामि तदन्ते आचमनीयं जलं समर्पयामि ।

महाभिषेकस्नानम्—

( शंखोदकेन महाभिषेकं कुर्यात् )

ॐ सहस्त्रशीर्षादारभ्य यज्ञेन यज्ञमयजन्त इत्यन्तं पठित्वा वा ॐ इदं विष्णुर्विचक्रमे०, विष्णोः कर्म्माणि० तद्विष्णोः परमं पदम, तद्विप्रासो विपन्यवः इत्यादिभिर्मन्त्रैः अभिषेकं कुर्यात् ।

अघौघविध्वंसकरं नराणाम्
धर्मद्रवादेवनदीभव तु ।
पानीयमानीय निवेदितं ते,
तवाभिषेकाचमनीयमस्तु ।।

ॐ नमो भ० जग० महाविष्णवे नमः महाभिषेकस्नानं समर्पयामि तदन्ते शुद्धोदकस्नानं समर्पयामि तदन्ते आचमनीयं जलं समर्पयामि ।

सुगन्धिद्रव्यस्नानम् —

ॐत्र्यम्बकं यजामहे० ।

ॐ नमो भ० जग० महाविष्णवे नमः पुष्पसारं विलेपयामि

तदन्ते आचमनीयं जलं समर्पयामि ।

वस्त्रम् —

ॐ तस्माद्यज्ञातसर्वहुतऋचः० ।

युवासुवासा इति मन्त्रपूर्वकं-तडित्प्रभं नूतनमम्बरं विभो ।
हरिण्यमयैस्तन्तुभिरेवमिश्रितं शुभं च लक्ष्मीधव ते समर्पितम् ।।

ॐ नमो भ० जग० महाविष्णवे नमः वस्त्रं समर्पयामि तदन्ते आचमनीयं जलं समर्पयामि ।

यज्ञोपवीतम्—

ॐ तस्मादश्वाऽअजा० ।

प्रजापतेरेव समं गृहीतजन्मातिपूतं द्विजचिह्नभूतम् ।
यज्ञोपवीतं भवदर्थमीश संपादितं धारय मोदयास्मान् ।।

ॐ नमो भ० जग० महाविष्णवे नमः यज्ञोपवीतं सम० । तदन्ते आचमनीयं जलं समर्पयामि ।

उत्तरीयवस्त्रम्—

शीतवातोष्णसन्त्राणं लज्जाया रक्षणं परम् ।
देहालङ्करणे वस्त्रमतः शान्तिं प्रयच्छ मे ।।

ॐ नमो भग० जग० महाविष्णवे नमः उत्तरीयवस्त्रं समर्पयामि । तदन्ते आचमनीयं जलं समर्पयामि ।

गन्धम्—

ॐ तं यज्ञं बर्हिषि० ।

पाटीरसंभूतमभूतपूर्वसौगन्ध्यसंबन्धुरमेतदीश ।
लक्ष्मीपते चन्दनचर्चनं ते मोदाय भालेऽर्पितमस्तु वस्तु ॥

ॐ नमो भ० जग० महाविष्णवे नमः गन्धानुलेपनं समर्पयामि ।

अक्षतान्—

ॐ अक्षन्नमीमदन्त० ।

अक्षताश्च सुरश्रेष्ठाऽखण्डिताः सुमनोहरा ।
अक्षतान प्रतिगृह्णीयात् संकटान् मे निवारय ॥

ॐ नमो भग० जग० महाविष्णवे नमः अक्षतान् समर्पयामि ।

पुष्पाणि—

ॐ यत्पुरुषं व्यदधुः० ।

मल्लीभवा मौलितले गले च माला विशाला तुलसीदलानाम् ।
सपुष्पकाणां सुमनोहराणां, मालावराणामहमर्पयामि ॥

[1]ॐ नमो भ० जग० महाविष्णवे नमः पुष्पाणि समर्पयामि ।

तुलसीदलानि —

ॐ इदं विष्णुर्विचक्रमे० ।

या दृष्टा निखिलाङ्घसङ्घशमनी स्पृष्टा च पुष्पावनी ।
रोगाणामभिवन्दिता निरसनी सिक्तान्तकत्रासिनी ॥
प्रत्यासत्तिविधायिनी भगवता कृष्णेन संरोपिता ।
न्यस्ता तच्चरणेषु मुक्तिफलदा तस्यै तुलस्यै नमः ॥
तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम् ।
भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम् ॥

ॐ नमो भ० जग० महाविष्णवेः नमः तुलसीदलानि समर्पयामि ।[1]

नानापरिमलद्रव्याणि—

ॐ अहिरिव भोगैः० ।

अबीरं च गुलालं च हरिद्रादिसमन्वितम् ।
नानापरिमलं द्रव्यं गृहाण परमेश्वर ॥

ॐ नमो भ० जग० महाविष्णवे नमः नानापरिमलद्रव्याणि समर्पयामि ॥

---

१. ॐ मत्स्याय नमः ॥१॥ ॐ कूर्माय नमः ॥२॥ ॐ वराहाय नमः ॥३॥
ॐ नारसिंहाय नमः ॥४॥ ॐ वामनाय नमः ॥५॥ ॐ परशुरामाय नमः ॥६॥
ॐ रामाय नमः ॥७॥ ॐ कृष्णाय नमः ॥८॥ ॐ बौद्धाय नमः ॥९॥
ॐ कल्किने नमः ॥१०॥
इत्यादिभिः दशनाममन्त्रैः तुलसीदलानि समर्पयेत् ॥

सिन्दूरम्—

ॐ सिन्धोरिवप्राद्ध्वने० ।

सिन्दूरं शोभनं रक्तं सौभाग्यं सुखवर्द्धनम् ।
शुभदं चैव माङ्गल्यं सिन्दूरं प्रतिगृह्यताम् ॥

ॐ नमो भ० जग० महाविष्णवे नमः सौभाग्यद्रव्याणि समर्पयामि ।

ततः—केशवादिचतुर्विशतिनामभिः—

ॐ केशवाय नमः ॥१॥ ॐ नारायणाय नमः ॥२॥ ॐ माधवाय नमः ॥३॥
ॐ गोविन्दाय नमः ॥४॥ ॐ विष्णवे नमः ॥५॥ ॐ मधुसूदनाय नमः ॥६॥
ॐ त्रिविक्रमाय नमः ॥७॥ ॐ वामनाय नमः ॥८॥ ॐ श्रीधराय नमः ॥९॥
ॐ हृषीकेशाय नमः ॥१०॥ ॐ पद्मनाभाय नमः ॥११॥ ॐ दामोदराय नमः ॥१२॥
ॐ संकर्षणाय नमः ॥१३॥ ॐ वासुदेवाय नमः ॥१४॥ ॐ अनिरुद्धाय नमः ॥१५॥
ॐ पुरुषोत्तमाय नमः ॥१६॥ ॐ अधोक्षजाय नमः ॥१७॥ ॐ नारसिंहाय नमः ॥१८॥
ॐ अच्युताय नमः ॥१९॥ ॐ जनार्दनाय नमः ॥२०॥ ॐ उपेन्द्राय नमः ॥२१॥
ॐ हरये नमः २२॥ ॐ कृष्णाय नमः ॥२३॥ ॐ प्रणवाय नमः ॥२४॥

इत्यादिभिर्तुलसीदलैः सम्पूजयेत् ।

## अथाङ्गपूजनम्

ॐ दामोदराय नमः पादौ पूजयामि । ॐ माधवाय नमः जानुद्वयं पूजयामि ।
ॐ पद्मनाभाय नमः नाभिं पूजयामि । ॐ विश्वमूर्तये नमः उदरं पूजयामि ।
ॐ ज्ञानगम्याय नमः हृदयं पूजयामि । ॐ श्रीकण्ठाय नमः कण्ठं पूजयामि ।
ॐ सहस्रभानवे नमः बाहू पूजयामि । ॐ योगिने नमः नेत्रे पूजयामि ।
ॐ उरगाय नमः ललाटं पूजयामि । ॐ नाकसुरेश्वराय नमः नासिकां पूजयामि ।
ॐ श्रवणेशाय नमः श्रोत्रे पूजयामि । ॐ सर्वकर्मप्रदाय नमः शिखां पूजयामि ।
ॐ सहस्रशीर्ष्णे नमः शिरः पूजयामि । ॐ सर्वस्वरूपिणे श्रीलक्ष्मीसहितनारायणाय नमः सर्वाङ्गं पूजयामि। इत्यावाह्य अङ्गदेवताभ्यो नमः सर्वोपचारार्थे गन्धाक्षत-पुष्पाणि समर्पयामि ।

हस्ते जलं गृहीत्वा अनेन पूजनाख्येण कर्मणा अङ्गदेवताः प्रीयन्ताम् न मम ।

इत्यङ्गपूजनम्

ततोऽङ्गपूजनानन्तरं आवरणपूजां कुर्यात्—नैवेद्यं पुरतो निधाय

धूपम्—

ॐ ब्राह्मणोऽस्य मुखमासीद० ।

सौरभ्यमानन्दकरं यदीयं यदीयधूपोपि विधूतधूमः ।
एषोस्ति धूपो ज्वलते पुरस्ते, मोदावहो माधव जिघ्र जिघ्र ॥

ॐ नमो भ० जग० महाविष्णवे नमः धूपमाघ्रापयामि ।

दीपम्—

ॐ चन्द्रमा मनसो० ।
सद्वर्तिसंपूरित एष दीप आलोककारी तमसां विदारी ।
प्रज्वालितः स्नेहमये सुपात्रे लक्ष्मीपते तं कृपया गृहाण ।।

ॐ नमो भ० जग महाविष्णवे नमः प्रत्यक्षदीपं दार्शयामि हस्तप्रक्षालनम् ।।

नैवेद्यम्—

ॐ नाभ्याऽआसी० ।
व्यतीतपापं नवनीतमेतद् द्राक्षादिरम्भा सितशर्करा च ।
निधाय रम्यं कनकस्य पात्रे दत्तं तु नैवेद्यमिदं गृहाण ।।

ॐ नमो भ० जग० महाविष्णवे नमः नैवेद्यं निवेदयामि । नैवेद्यान्ते आचमनीयं जलं समर्पयामि ।

ग्रासमुद्रां प्रदर्श्य,
ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा ।
मध्ये मध्ये उत्तरापोशनं समर्पयामि । हस्तप्रक्षालनार्थे मुखप्रक्षालनार्थे जलं समर्पयामि ।

करोद्वर्त्तनम्—

ॐ अर्ठ० शुनातेऽअर्ठ० शुः० ।

कर्पूरदेवकुसुमक्रमुकैलिकाभिः संपूरितामुत विशिष्ट सुगन्धि सिक्ताम् ।
ताम्बूलिकां सुरजनेन निषेवणीयां प्राप्यानिशं भवतु मङ्गलमोददाता ।।

ॐ नमो भ० जग० महाविष्णवे नमः करोद्वर्त्तनार्थे गन्धानुलेपनं समर्पयामि ।

ऋतुफलानि—

ॐ याः फलिनीर्य्या० ।
फलेन फलितं सर्वं त्रैलोक्यं सचराचरम् ।
तस्मात् फलप्रदानेन पूर्णाः सन्तु मनोरथाः ।।

ॐ नमो भ० जग० महाविष्णवे नमः ऋतुकालोद्भवं फलं समर्पयामि ।

ताम्बूलम्—

ॐ यत्पुरुषेण हविषा० ।
पूगीफलादिसहितं कर्पूरेण च संयुतम् ।
ताम्बूलं कोमलं दिव्यं गृहाण परमेश्वर ।।

पूगीसुधैलाघनसारदेवपुष्पैरुपेतं मुखमण्डनं यत् ।
विहारहार्यं नवरङ्गगर्भं गृहाण ताम्बूलमिदं मदर्पितम् ।।

ॐ नमो भ० जग० महाविष्णवे नमः मुखवासार्थं ताम्बूलपूगीफलम् ऐलालवङ्गादिकञ्च
र्पयामि ।।

दक्षिणाद्रव्यम्—

ऊँ हिरण्यगर्भः सम० ।

पूजाषाड्गुण्यसिद्धयर्थं कर्मणां पूर्तिहेतवे ।

दक्षिणां ते प्रदास्यामि दीर्घमायुः प्रयच्छ मे ॥

ऊँ नमो भ० जग० महाविष्णवे नमः दक्षिणाद्रव्यं समर्पयामि ।

कर्पूरारार्तिक्यम्—

ऊँ इदर्ठ० हविः० ।

कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् ।

सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥

ऊँ नमो भ० जग० महाविष्णवे नमः कर्पूरार्तिक्यं समर्पयामि ।

प्रदक्षिणा—

ऊँ सप्तास्यासन्परिधयस्त्रिः० ।

यानि कानि च पापानि जन्मान्तरकृतानि च ।

तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे ॥

ऊँ नमो भ० जग० महाविष्णवे नमः प्रदक्षिणां समर्पयामि ।

मन्त्रपुष्पाञ्जलिः—

ऊँ यज्ञेन यज्ञमयजन्त० ।

ऊँ राजाधिराजाय प्रसह्य साहिने । नमो वयं वैश्रवणाय कुर्महे । स मे कामान् कामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय महाराजाय नमः ।

ऊँ स्वस्ति । साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्, सार्वभौमः सार्वायुष आन्तादापरार्धात्, पृथिव्यै समुद्रपर्यन्ताया एकराडिति । तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आविक्षितस्यकामप्रेर्विश्वेदेवाः सभासद इति ।

ऊँ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् । सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देवऽएकः ॥

ऊँ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥

चराचरं व्याप्तमिदं त्वयैव तवैव भासास्ति जगत् विभातम् ।

त्वय्येव पुष्पाञ्जलिरर्पितोऽयं मोदाय लोकस्य तवापि चास्तु ॥

ऊँ नमो भ० जग० महाविष्णवे नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ॥

ततः पुष्पाणि गृहीत्वा हस्तौ सम्पुटीकृत्य प्रार्थयेत्—

प्रार्थना—

ऊँ जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।

नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥१॥

नमो हिरण्यगर्भाय प्रधानाध्यक्षरुपिणे ।
नमोऽस्तुवासुदेवाय शुद्धज्ञानस्वरुपिणे ॥२॥

सशङ्खचक्रं सकिरीटकुण्डलं, सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहारवक्षःस्थलकौस्तुभश्रियं, नमामि विष्णुं शिरसा चतुर्भुजम् ॥३॥

ऊँ नमो भ० जग महाविष्णवे नमः प्रार्थनापूर्वक नमस्कारं च समर्पयामि ।
जलं गृहीत्वा अनेन पूजनाख्येन कर्मणा महाविष्णुः प्रीयतां न मम ॥

॥ इति महाविष्णुपूजनम् ॥

ततो यजमानः प्रधानपीठपूजानानन्तरं ग्रहपीठस्य समीपे आगत्य सम्मुखे उपविश्य सूर्यादिग्रहणामाधिदैवत-प्रत्यधिदैवत-पञ्चलोकपाल, दशदिक्पालानाञ्च नाममन्त्रेण वेदमन्त्रैर्वा आवाहन, स्थापन, यथोपचारैः पूजनपूर्वक ब्रह्मा मुरारि० इत्यनेन सम्प्रार्थ्य । अनेन पूजनाख्येन कर्मणा सूर्यादयः अनन्तान्त देवाः "प्रीयन्ताम् न मम ।

ततः ग्रहप्रधानयोर्मध्ये अथवा ईशानकोणे कलशस्थापनविधिना रुद्रकलशं संस्थाप्य तत्रोपरि० "ऊँ असङ्ख्याता०" इत्यनेन असङ्ख्यातरुद्रानावाह्य "ऊँ मनोज्योतिरिति" प्रतिष्ठाप्य यथोपचारैः सम्पूज्य, "करणचरणकृतं वा०" इत्यनेन प्रार्थयेत् ।

अनेन पूजनाख्येन कर्मणा वरुणरुद्रौ प्रीयेताम् न मम ।

ततो यजमानः कथावाचकस्य चतुर्दिक्षु चतुर्वेदानां पृथक् पृथक् कलशोपरि ऊँ अग्निमीले० इत्यनेन पूर्वे ऋग्वेदम्, ऊँ इषेत्त्वोर्ज्जेत्त्वा० इत्यनेन दक्षिणे यजुर्वेदम्, ऊँ अग्न-आयाहि० इत्यनेन पश्चिमे सामवेदम्, ऊँ शन्नो देवी० इत्यनेन उत्तरे अथर्ववेदम् आवाहन, स्थापनपूजनपूर्वक नमस्कुर्यात् ।

ततः कथावाचकस्य चतुष्कोणेषु कलशस्यस्थापनविधिना कलशं संस्थाप्य ईशानकोण-मारभ्य ईशानकोणकलशोपरि उद्धवादिसम्पूर्णं भगवद्भक्तानामावाहन स्थापनपूर्वकं "ऊँ उद्धवादि समस्तभगवद्भक्तेभ्यो नमः" इत्यनेन सर्वोपचारैः सम्पूजयेत् ।

अग्निकोणे—वसुदेवादीनां तथा च सम्पूर्णयदुवंशादिकानामावाहन-स्थापन पूर्वकं ॐ वसुदेवादिसमस्तयदुवंशादिकेभ्यो नमः इत्यनेन सर्वोपचारैः सम्पूजयेत् ।

नैर्ऋत्ये—नन्दादिसम्पूर्णगोपानामावाहन-स्थापनपूर्वकं ॐ नन्दादिसमस्तगोपेभ्यो नमः इत्यनेन सर्वोपचारैः सम्पूजयेत् ।

वायव्ये—सुनन्दानादिपार्षदानामावाहन-स्थापन पूर्वकं ॐ सुनन्दादिपार्षदेभ्यो नमः इत्य-नेन सर्वोपचारैः सम्पूजयेत् ।

## अथ सप्तचिरजीविनां पूजनम्

ततो यजमानः सप्ततण्डुलपुटकोपरि अश्वत्थामादिसप्तचिरजिविनामावाहन-स्थापन पूर्वकं नाममन्त्रेण पूजयेत् यथा—

ॐ अश्वस्थाम्ने नमः ।।१।।
ॐ बलये नमः ।।२।।
ॐ व्यासाय नमः ।।३।।
ॐ हनुमते नमः ।।४।।
ॐ विभीषणाय नमः ।।५।।
कृपाचार्याय नमः ।।६।।
ॐ परशुरामाय नमः ।।७।।
ॐ मार्कण्डेयाय नमः ।।८।।

इति सम्पूज्य प्रार्थयेत्—

ॐ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ।।
सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ।।

अनेन पूजनाख्येन कर्मणा अश्वस्थामादिसप्तचिरजीविनः प्रीयन्ताम् न मम ।

ततो यजमानः षट् पौराणिकान् त्रय्यारुणिकश्यपादीन् आवाहनस्थापनपूर्वकं नाममन्त्रेण-सम्पूजयेत् । यथा—

त्रय्यारुणिः कश्यपश्च रामशिष्योऽकृतव्रणः ।
वैशम्पायनहारीतौ षड् वै पौराणिका इमे ।।

इति सम्प्रार्थ्य अनेन पूजनाख्येन कर्मणा षट् पौराणिकाः त्रय्यारुणिकश्यपादमश्च प्रीयन्ताम् न मम ।

ॐ ततः शेषादीन् पूजयेत्
ॐ शेषाय नमः ।।१।।
ॐ सनत्कुमाराय नमः ।।२।।
ॐ सांख्यायनाय नमः ।।३।।
ॐ पराशराय नमः ।।४।।
ॐ बृहस्पतये नमः ।।५।।
ॐ मैत्रेयाय नमः ।।६।।
ॐ उद्धवाय नमः ।।७।।

इत्यनेन सम्पूज्य प्रार्थयेत्—

शेषः सनत्कुमारश्च सांख्यायनपराशरौ ।
बृहस्पतिश्च मैत्रेय उद्धवश्चात्र कर्मणि ।।
प्रत्यूहवृन्दं सततं हरेयुः पूजिता मया ।। इति ।।

ततः पीठमध्ये भूर्लोकादिसप्तदेवलोकदेवान् ॐ इदं विष्णुर्विचक्रमेति मन्त्रेण आवाहन स्थापन पूर्वकं "ॐ भूर्लोकादिसप्तदेवलोकाधिदेवताभ्यो नमः" इत्यनेन सम्पूज्य, तदनन्तरं पीठासने अतलादिसप्तलोकदेवानावाहन-स्थापनपूर्वकं सम्पूजयेत् । मण्डपाच्छादितवस्त्रे वैकुण्ठ-वासादिदेवानावाहन-स्थापन पूर्वकं "ॐ वैकुण्ठवासिदेवताभ्यो नमः" इत्यनेन सम्पूजयेत् । मण्डपस्य ईशानकोणे सप्तग्रन्थियुक्तं वंशं संस्थाप्य तत्रोपरि धुन्धकारिणमावाहन-स्थापन पूर्वकं ॐ धुन्धकारिणे नमः इति सम्पूजयेत् ।

तदनन्तरं पृथक् पृथक् पीठे एकपीठे वा निम्नलिखितानां देवानामावाहन-स्थापन पूर्वकं पूजनं कुर्यात् ।

ॐ शेषाय नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ द्वादशादित्येभ्यो नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ गङ्गादिदेवनदीभ्यो नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ मनुमन्वन्तरदेवताभ्यो नमः आवाहयामि स्था० पूज० ।
ॐ अन्तरिक्षगणदेवताभ्यो नमः आवाहयामि स्था० पूज० ।
ॐ द्वीपाधिष्ठातृदेवताभ्यो नमः आवाहयामि स्था० पूज० ।
ॐ सागरेभ्यो नमः आवाहयामि स्था० पूज० ।
ॐ इन्द्रादिदेवताभ्यो नमः आवाहयामि स्था० पूज० ।
ॐ गरुडाय नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ दिक्पालेभ्यो नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ इष्टदेवताभ्यो नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ कामधेनवे नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ वसिष्ठविश्वामित्रादिभ्यः ऋषिभ्यो नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ रोमहर्षणसूताय नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ तत्पुत्राय उग्रश्रवसे नमः आवाहयामि स्था पूज० ।
ॐ पितृदेवताभ्यो नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ कुलगतविषमगतिस्थपितृदेवताभ्यो नमः आवाहामि स्था० पूज० ।
ॐ ब्रह्माण्डगतसमस्तदेवीदेवताभ्यो नमः आवाहयामि स्था० पूज० ।
ॐ शुकदेवाय नमः आवाहयामि स्थापयामि पूजयामि ।
ॐ गोकर्णाय नमः आवाहयामि स्थापयामि पूजयामि ।

ततो यजमानः गन्धाक्षतपुष्पैः पुराणपुस्तकस्य ॐ नमः पुराणपुरुषोत्तमाय इत्यनेन पूजनं कृत्वा हस्तौ सम्पुटीकृत्य "या कुन्देन्दुतुषारहारेति" सम्प्रार्थ्य कथावाचकस्य पादप्रक्षालनं कृत्वा गन्धाक्षतपुष्पैः सम्पूज्य, सम्प्रार्थ्य आरार्तिक्यं कुर्यात् तदनन्तरं मन्त्रपुष्पाञ्जलिं समर्प्य साष्टाङ् प्रणामं च कृत्वा यजमानः आसने उपविश्य स्वस्थमना कथां शृणुयात् ।

ॐ श्रूयतां देवदेवेश नारायण जगत्पते ।
त्वदीयेनाभिधानेन कथयिष्ये शुभां कथाम् ॥

इत्युच्चार्य कथावाचकः कथारम्भं कुर्यात् ।

ततः कथावाचकस्तु प्रत्येकाध्यायान्ते साक्षतजलं गृहीत्वा ॐ कृतेनानेन अमुकस्कन्धान्तर्गतामुकाध्यायपाठेन श्रीमन्नारायणप्रसादतो यजमानस्यामुकाभीष्टप्राप्तिरस्तु, अथवा कृतेनानेन पाठेन सत्याः सन्तु यजमानस्य कामा इति पठित्वा जलं प्रक्षिपेत् ।

याज्ञिकसम्राट्पण्डितप्रवर श्रीवेणीरामशर्मणः प्रधानशिष्येण वेदाचार्यश्रीमधुकरप्रसाद पाण्डेयेन निर्मितेयं सप्ताह पूजन पद्धतिः समाप्ता ।

श्रीवेणीरामशिष्योऽयं कर्मकाण्डविशारदः ।
श्रीमधुकरपाण्डेयश्चक्रे सप्ताहपद्धतिम् ॥

॥ इति श्रीमद्भागवत सप्ताह पूजन पद्धतिः ॥

## ॥ अथ श्रीमद्भागवत की आरती ॥

आरति अतिपावन पुरान की।

धर्म-भक्ति-विज्ञान-खान की ॥

महापुरान भागवत निरमल।

शुक-मुख-विगलित निगम-कल्प-फल।

परमानन्द-सुधा-रसमय कल ।

लीला-रति-रस रस-निधान की ॥आ०॥

कलि-मल-मथनि त्रिताप,निवारिनि।

जन्म-मृत्युमय भव-भय-हारिनि।

सेवत सतत सकल सुखकारिनि।

सुमहौषधि हरि-चरित-गान की ॥आ०॥

विष-विलास-विमोह-विनाशिनि ।

विमल विराग विवेक विकाशिनि।

भगवत्तत्त्व-रहस्य प्रकाशिनि।

परम ज्योति परमात्म-ज्ञान की ॥आ०॥

परमहंस-मुनि-मन उल्लासिनि।

रसिक-हृदय रस-रास-विलासिनि।

भुक्ति, मुक्ति रति प्रेम-सुदासिनि।

कथा अकिञ्चनाप्रिय सुजान की ॥आ०॥

# आरती

ॐ जय जगदीश हरे, प्रभु जय जगदीश हरे।
भक्त-जनों के सङ्कट छिन में दूर करे ॥ ॐ जय जगदीश०
जो ध्यावै फल पावै, दुख बिनसै मनका। प्रभु०
सुख-सम्पति घर आवै, कष्ट मिटै तनका ॥ ॐ जय जगदीश०
मात-पिता तुम मेरे, शरण गहूँ मैं किसकी। प्रभु०
तुम बिन और न दूजा, आस करूँ मैं किसकी ॥ ॐ जय जगदीश०
तुम पूरन परमात्मा, तुम अन्तर्यामी। प्रभु०
पारब्रह्म परमेश्वर, तुम सबके स्वामी ॥ ॐ जय जगदीश०
तुम करुणा के सागर, तुम पालन-कर्ता। प्रभु०
मैं मूरख खल कामी, कृपा करो भर्ता ॥ ॐ जय जगदीश०
तुम हो एक अगोचर, सबके प्राणपती। प्रभु०
किस विधि मिलूं दयामय! मैं तुमको कुमती ॥ ॐ जय जगदीश०
दीन बन्धु दुख हर्ता, तुम ठाकुर मेरे। प्रभु०
अपने हाथ उठाओ, द्वार पड़ा मैं तेरे ॥ ॐ जय जगदीश०
विषय - विकार मिटाओ, पाप हरो देवा। प्रभु०
श्रद्धा - भक्ति बढ़ाओ, सन्तन की सेवा ॥ ॐ जय जगदीश०

## श्रीमद्भागवत-सप्ताह-सामग्री

रोली २०० ग्राम
मौली १०० ग्राम
धूपवत्ती १० पैकेट
केशर १० ग्राम
कपूर ५० ग्राम
अबीर ५० ग्राम
बुक्का २५ ग्राम
सिन्दूर ५० ग्राम
रुई ५० ग्राम
पान २५ प्रतिदिन
सुपाड़ी १ किलो बड़ी
चावल १० किलो
गोबर
गोमूत्र
दुग्ध २ पाव प्रतिदिन
दधि १ पाव प्रतिदिन
घृत २ किलो
चीनी २ किलो
शहद १ शीशी बड़ी
मीठा १ किलो प्रतिदिन
ऋतुफल २ दर्जन प्रतिदिन
पुष्पमाला १० ,, ,,
पुष्प ,, ,,
दूर्वा ,, ,,
तुलसी ,, ,, (गमला १)
इलायची २० ग्राम
लौंग २० ग्राम
मिश्री ५०० ग्राम
पंचमेवा ५०० ग्राम

इत्र २ शीशी
यज्ञोपवीत १ मुट्ठा
पीली सरसो ५० पैसे
नारियल जलदार ५
गरी गोला ५
लाल रंग १)
काला रंग १)
पीला रंग १)
हरा रंग १)
काला उड़द १ पाव
पापड़ १५
सर्वौषधी—
मुरा ५० पै०
जटामासी ५० पै०
वच ५० पै०
शिलाजीत ५० पै०
आंबाहल्दी ५० पै०
सटी (कचूर) ५० पै०
चम्पा ५० पै०
नागरमोथा ५० पै०
पञ्च पल्लव—
आम्रपत्र
पीपल पत्र
गूलर पत्र
पाकर पत्र
वट पत्र
सप्तधान्य १ किलो
सप्तमृत्तिका—

हाथी के स्थान की मिट्टी
घोड़े के ,, ,,
दीमक ,, ,,
नदी संगम ,, ,,
तालाब की मिट्टी
गोशाला ,,
राजद्वार (चतुष्पथ) ,,
पंचरत्न ५ पुड़िया
गंगाजल
तीर्थ जल
कुशा १)
गेहूँ १ किलो
यव ५०० ग्राम
लक्ष्मीनारायण की मूर्ति स्वर्ण की—
१। तोले की १
चाँदी का या पीतल का सिंहासन १
छत्र सहित
चाँदी की तस्तरी १
चाँदी की कटोरी १
चाँदी की गिलाश १
आचमनी, पंचपात्र १
देवताओं को चढ़ाने के वस्त्र -
पीताम्बर रेशमी धोती १
जनानी रेशमी साड़ी १
चुनरी १
सुगन्धित तेल १ शीशी
दर्पण १
सौभाग्य पिटारी १
धोती मर्दानी ५
अंगोछा ७
सफेद कपड़ा ५ मीटर
लाल कपड़ा २ मीटर
ध्वजा-पताका के लिए कपड़ा
कलश बड़ा ताम्र या पीतल का १
छोटे कलश २ (मिट्टी के कलश ६)
कमण्डलु १

थाली २
काँसे का कटोरा बड़ा १
बघोना ( टोपिया ) बड़े २
**ब्राह्मण वरण सामग्री**
धोती
दुपट्टा
अंगोछा
बनियान
लोटा
गिलास
पंचपात्र
आचमनी
गोमुखीमाला
आसन
कथावाचक-व्यास के लिए वस्त्र—
पीताम्बर रेशमी धोती १
ऊनी या रेशमी चादर १
अंगोछा १
लोटा १
गिलास १
आचमनी पञ्चपात्र १
अगूठी सुवर्ण की १
रुद्राक्षमाला १
आसन ऊनी १
श्रीमद्भागवत के लिए नूतन वस्त्र १
यजमान के लिए नूतन वस्त्र
सर्वतोभद्र के लिए चौकी १ बड़ी
काष्ठ के पाटे (पीढ़ा) ४
कथावाचक के लिए बड़ी चौकी १
दरी १
गद्दा १
मसनद १ बड़ा
चद्दर १
गलीचा १
पुस्तक के लिए चौकी १

पुस्तक के लिए रेशमी कपड़ा
केले के स्तम्भ ६
बांस के खम्भे ८
मंडप सजाने की सामग्री गोटा आदि
शय्यादान-सामग्री—
सुवर्ण की मूर्ति लक्ष्मीनारायण १
पलंग १
गद्दा १
रजाई १
कम्बल १
चदरा १
तकिया १
पहनने के वस्त्र
वर्तन ५
छाता १
घड़ी १
पादुका १
अन्न जो उपलब्ध हो
घृत २। किलो

श्रीमद्भागवत की पुस्तक नूतन १
,, ,, की गीता १
सकोरा ( दिया ) १००
पुरवा ५०
पत्तल १०
हवन सामग्री
तिल काला १० कि०
चावल ५ कि०
यव २।। कि०
चिनी १।। कि०
घी ४ कि०
पंचमेवा ५०० ग्राम
चन्दन चूरा ५०० ग्राम
आम की लकड़ी २५ कि०
नवग्रह की लकड़ी
कण्डा (गोयठा) ५०
बालू ( मिट्टी )

।। इति पूजन सामग्री ।।

[ मननीयम् ]

मनुजदेहमवाप्य सुदुर्लभं यदि न भागवते सुरुचिः कृता ।
भवति तस्य हि जन्म निरर्थकं पुनरयं न सुयोनिमवाप्नुयात् ॥

भगवता कृपया निजलब्धये कृतमिदं भुवि मानवजन्म यत् ।
तद्विचिन्त्य नरान् विषयोन्मुखान् कलिरयं निरयं प्रति नेष्यति ॥

इति धियां सुविविच्य पदे पदे निखिलदृश्यमिदं क्षणभङ्गुरम् ।
शृणुत भागवतं भुवि मुक्तिदं पठत पाठयतार्थपुरःसरम् ॥

[ आचरणीयम् ]



चौखम्बा विद्याभवन

वाराणसी